३३४. अथ यत्रैतत्प्रथमꣳसमिद्धो भवति, धूप्यतऽएव तर्हि हैष भवति रुद्रः । माश २,३,२,९ ।

३३५. अथ यत्रैतत्प्रदीप्ततरो भवति, तर्हि हैष (अग्निः) भवति वरुणः । माश २,३,२,१० ।

३३६. अथ यत्रैतत्प्रदीप्तो भवति, उच्चैर्धूमः परमया जूत्या बल्बलीति, तर्हि हैष (अग्निः) भवतीन्द्रः । माश २,३,२,११ ।

३३७. अथ यत्रैतदङ्गाराश्चाकाश्यन्तऽ इव । तर्हि हैष (अग्निः) भवति ब्रह्म । माश २,३, २,१२ ।

३३८. अथ (अग्निः) यदुच्च ह्रष्यति नि च ह्रष्यति तदस्य मैत्रावरुणं रूपम् । ऐ ३, ४ ।

३३९. अथ योऽग्निर्मृत्युस्सः । जैउ १,८,१,८; २,५,१,२ ।

३४०. अथर्वा त्वा प्रथमो निरमन्थदग्ने । मै २,७,३ ।

३४१. अथ ह वै त्रयः पूर्वेऽग्नय आसुर्भूपतिर्भुवनपतिर्भूतानां पतिः । जै २,४१ ।

३४२. अथाग्नेरष्टपुरुषस्य (महिमा कथ्यते) । तैआ १,८,८,२२ ।

३४३. अथातो दक्षिणः पक्षः सोऽयं लोकः सोऽयमग्निः सा वाक्तद्रथन्तरं स वसिष्ठः । ऐआ १,४,२ ।

३४४. अथैषोऽग्नये वैश्वानराय द्वादशकपालः (पुरोडाशः) । मै ३,३,१० ।

३४५. अथोऽग्निर्वै सुक्षितिरग्निर्ह्येवास्मिँल्लोके सर्वाणि भूतानि क्षियति । माश १४,१, २,२४ ।

३४६. अद्भ्यो वाऽ एष (अग्निः) प्रथममाजगाम । माश ६,७,४,४ ।

३४७. अनाधृष्टाऽसि (°नाधृष्या [तैआ.]) पुरस्तादग्नेराधिपत्या (°त्ये [तैआ.]) आयुर्मे दाः । मै ४, ९,३; तैआ ४,५,३ ।

३४८. अनुष्टुब् वा अग्नेः प्रिया तनूः । काठ १९,५ ।

३४९. अन्नादा (प्रजापतेर्या तनूः) तदग्निः । ऐ ५,२५ ।

३५०. अन्नादोऽग्निः । माश २,१,४,२८;२,४,१ ।

३५१. अन्नादो वा एषोऽन्नपतिर्यदग्निः । ऐ १,८ ।

३५२. अपरिमिता ह्यग्नेस्तन्वोऽग्निना वा अनीकेनेन्द्रो वृत्रमहन् । मै ३,९,५ ।

३५३. अपाꣳ ह्येष गर्भो यदग्निः । तैसं ५,१,५,८ ।

३५४. अप्सुयोनिर्वा अग्निः । तैसं ५,२,२,४ ।

३५५. अप्सुषदसि श्येनसदसीत्याहैतद्वा अग्ने रूपम् । तैसं ५,३,११,२ ।

३५६. अप्स्वग्ने सधिष्टव सौषधीरनुरुध्यसे । तैसं ४,२,११,३ ।

३५७. अमृतो ह्यग्निस्तस्मादाह्वादध्यायविति । माश १,९,२,२० ।

३५८. अयं वाऽअग्निरर्कः (°ग्निरर्कः [माश ८, २, १, ४]) माश ८, ६, २, १९; ९, ४, २, १८; शांआ १,४ ।

३५९. अयं वाऽअग्निर्ऋतमसावादित्यः सत्यं यदि वासावृतमयꣳ सत्यमुभयम्वेतदयमग्निः । माश ६, ४,४, १० ।

३६०. अयं वाऽअग्निर्लोकः (°ग्निर्ब्रह्म च क्षत्रं च [माश ६,६,३,१५] ) । माश १, ९,२,१२ ।

३६१. अयं वाव यः (वायुः) पवते सोऽग्निर्नाचिकेतः । तै ३,११,७,१ ।

३६२. अयं वाव लोकोऽग्निश्चितः । माश १०,१,२,२ ।

३६३. अयं वै (पृथिवी-) लोकोऽग्निः । माश १४, ९,१,१४ ।

३६४. अयं ते योनिर्ऋत्विय इत्यरण्योः समारोहयत्येष वा अग्नेर्योनिः । तैसं ३, ४,१०,४-५ ।

३६५. अयमग्निर्ब्रह्म । माश ९,२,१,१५ ।

३६६. अयमग्निर्वैश्वानरो योऽयमन्तः पुरुषे येनेदमन्नं पच्यते यदिदमद्यते तस्यैष घोषो भवति यमेतत्कर्णावपिधाय शृणोति स यदोत्क्रमिष्यन्भवति नैतं घोषꣳ शृणोति । माश १४, ८,१०,१ ।

३६७. अयमग्निः सहस्रयोजनम् (स्वर्विद् [माश ९,२,१,८]) । माश ९,१,१,२९ ।

३६८. अया ते अग्ने समिधा विधेम । तैसं १,२,१४,६ ।

३६९. अया वै नामैषाग्नेः प्रिया तनूः । मै १,४,८ ।

३७०. अरुणाश्वा इहागताः । वसवः पृथिवीक्षितः । अष्टौ दिग्वाससोऽग्नयः । तैआ १,१२,४,९ ।

३७१. अर्कोऽग्निः । मै ३,१,१;२,४; काठ १९,१; क २९, ८ ।

३७२. अर्को ज्योतिस्तदयमग्निः । मै १,६,२ ।

३७३. अर्को वा (+एष यद् [तैसं ५,३,४,६]) अग्निः । तैसं ५,५,६,३ ।

३७४. अर्चिषम् (प्राणम् [माश.]) अग्नेः (आदित्य आदत्त) । जै २,२६; माश ११,८,३,७ ।

३७५. अवकामनूप दधात्येषा वा अग्नेर्योनिः । तैसं ५,४,२,१ ।

३७६. अशिष्टो ह्यग्निस्तस्मादाहाशीतमेति । माश १,९,२,२० ।

३७७. अश्वो वै भूत्वाग्निर्देवेभ्योऽपाक्रामत् स यत्रातिष्ठत् तदश्वत्थस्समभवत्, तदश्वत्थस्याश्वत्थत्वम् । काठ ८, २ ।

३७८. असा आदित्योऽग्निः । काठसंक १२२ ।

३७९. असौ वाऽआदित्य एषोऽग्निः । माश ६,४,१,१; ३,९;१० ।

३८०. असौ वा आदित्योऽग्निरनीकवान् (॰त्योऽग्निः शुचिः [तै १,१,६,२]) । तै १,६,६,२ ।

३८१. असौ वा आदित्योऽग्निर्वसुमान् (॰ग्निर्वैश्वानरः [मै.]) । मै २,१,२; तैआ ५,७,१० ।

३८२. अस्मिंस्तेन (पृथिवी-) लोके प्रतितिष्ठति, अग्निं ज्योतिरवरुन्द्धे । काठसंक ९ ।

३८३. अह्नोऽग्निः (वत्सः) । ताम्रो अरुणः । तैआ १,१०,५-६ ।

३८४. आकूत्यै प्रयुजे अग्नये स्वाहा, मेधायै मनसे अग्नये स्वाहा, दीक्षायै तपसे अग्नये स्वाहा, सरस्वत्यै पूष्णे अग्नये स्वाहा । तैसं १,२,२,१; मै १,२,२; काठ २,२ ।

३८५. आत्मैव (आत्मा वा [माश ७,३,१,२]) अग्निः । माश ६,७,१,२०; १०,१,२,४ ।

३८६. आदित्योऽग्निः । काठसंक ८३ ।

३८७. आदित्यो वाऽअस्य (अग्नेः) दिवि वर्चः । माश ७,१,१,२३ ।

३८८. आपं त्वाग्ने मनसा ··· तपसा ··· दीक्षया ··· उपसद्भिर् ··· सुत्यया ··· दक्षिणाभिर् ··· अवभृथेन ··· वशया ··· स्वगाकारेण ··· एनमाप्नोति । तैसं ५,५,७,५ ।

३८९. आपो वरुणस्य पत्न्य आसन्, ता अग्निरभ्यध्यायत्, ताः समभवत् । तैसं ५,५,४,१; तै १, १,३,८ ।

३९०. आपो वा अग्निः पावकः । तै १,१,६,२ ।

३९१. आपो वा अग्नेर्योनिः (°स्सपत्नः [मै ३,४,१०]) । मै ३,२,२;४,१०; काठ १९,१२; क ३१,२ ।

३९२. आयुर्दा अग्नेऽस्यायुर्मे देहि । वर्चोदा ······ तनूपा ······ यन्मे तनुवा ऊनं तन्म आ पृण । तैसं १,५,५,३-४ ।

३९३. आयुर्वाऽग्निः । माश ६,७,३,७ ।

३९४. आहुतयो वाऽअस्य (अग्नेः [मै.]) प्रियं धाम । मै १,८,५; माश २, ३,४, २४ ।

३९५. इदमग्न आयुषे वर्चसे कृधि । काठ ३६,१५ ।

३९६. इन्द्रतमेऽग्नौ स्वाहा । मै ४,९,९ ।

३९७. इन्द्रो वा अधृतश्शिथिल इवामन्यत, सोऽग्नौ चैव बृहस्पतौ चानाथत । काठ ११, १ ।

३९८. इमं पशुं पशुपते ते अद्य बध्नाम्यग्ने । तैसं ३,१,४,१ ।

३९९. इमाः प्रजा अर्कमभितो निविष्टा इममेवाग्निम् । ऐआ २,१,१ ।

४००. इमे वै लोका एषोऽग्निः । माश ६,७,१,१६;७,३,१,१३ ।

४०१. इयं (पृथिवी) वाऽअग्निः (+अपन्नगृहः [तै.]) । तै ३,३,९,८; माश ७,३,१,२२ ।

४०२. इयं (पृथिवी) वा अग्निर्बृहन्नाकः । काठ ३१,२; क ४७,२ ।

४०३. इयं वा अग्निर्वैश्वानरः । तैसं ५,६,६,४; मै १,४,१३;२,१,२; तै ३,८,६,२; ३,९,१७,३ ।

४०४. इयं (पृथिवी) वा अग्नेर्योनिः । मै ३,२,१ ।

४०५. इयं (पृथिवी) वावाग्निः । क ३५,३ ।

४०६. इयं वै पृथिव्यग्निर्वैश्वानरः । माश ३,८,५,४ ।

४०७. इयं (पृथिवी) ह्यग्निः । माश ६,१,१,१४;२९ ।

४०८. इय ९ (पृथिवी) ह्यग्नेर्योनिः । काठ ७,४ ।

४०९. ईश्वरो वा एषो (अग्निः) ऽन्तरिक्षसद् (विद्युत्) भूत्वा प्रजा हि९सितोर्यदाह शिवो भव प्रजाभ्या इति, प्रजाभ्य एवैन९(अग्निम्) शिवमकः । मै ३,१,६ ।

४१०. उत्तरत उपचारोऽग्निः । तैसं ५,३,७,५ ।

४११. उत्तरार्धेऽग्नये जुहोति । तैसं २,६,२,१ ।

४१२. उदपुरा नामास्यन्नेन विष्टा······मनुष्यास्ते गोप्तारोऽग्निरधिपतिः । मै २,८,१४ ।

४१३. उदेह्यग्ने अधि मातुः पृथिव्याः । काठ ७,१२ ।

४१४. उपोदको नाम लोको यस्मिन्नयमग्निः। जै १,३३४।

४१५. उभयं वाऽएतदग्निर्देवाना ँ होता च दूतश्च। माश १,४,५,४।

४१६. उलूखलमुप दधात्येषा वा अग्नेर्नाभिः। तैसं ५,२,८,७।

४१७. उशिक् पावको अरतिः सुमेधा मर्तेष्वग्निरमृतो नि धायि। तैसं ४,२,२,२।

४१८. ऊर्ध्वो ह्ययमग्निर्दीप्यते। जै १,२४७।

४१९. ऋग्वेद एवाग्नेः (उदैत्)। जै १,३५७।

४२०. ऋताषाड् ऋतधामाग्निर्गन्धर्वस्तस्यौषधयोऽप्सरस ऊर्जो (°रसो मुदा [मै., क.], ) नाम। तैसं ३,४,७,१; मै २,१२,२; क २९,३।

४२१. ऋषयो ह्येतम् (अग्निम्) अस्तुवन्। तैसं २,५,९,१।

४२२. एतद्वा अग्निधान ँ हस्तस्य यत्पाणिस्तस्मादेतो हस्तस्याग्निर्नतमा ँ विदहति। मै १, ८,२।

४२३. एतद्वा अग्नेः प्रियं (प्रियतमं [माश.]) धाम यद् घृतम् (आज्यम् [तैसं.])। तैसं ५, १,९,५; काठ २०,७; २१,८; माश १,३,२,१७।

४२४. एतद्वा अग्नेस्तेजो यद् घृतम्। तैसं २,५,२,७।

४२५. एतद्वै यजमानस्य स्वं यदग्निः। एतदग्नेर्यद्यजमानः। मै १,५,११।

४२६. एतम् (सूर्यम्) अग्नावध्वर्यवः (मीमांसन्ते)। ऐआ ३,२,३।

४२७. एतानि वै तेषामग्नीनां नामानि यद्भुवपतिर्भुवनपतिर्भूतानां पतिः। माश १,३,३, १७।

४२८. एतामग्नये प्राचीं दिशमरोचयन्। काठ ८,१।

४२९. एतावन्तोऽग्नय[1] आधीयन्ते। तै १, १,१०,४।

४३०. एते वै यज्ञस्यान्त्ये तन्वौ यदग्निश्च विष्णुश्च। ऐ १,१।

४३१. एष (अग्निः) उ वा इमाः प्रजाः प्राणो भूत्वा बिभर्त्ति तस्माद्वेवाह भारतेति (भरतवत् [माश १,५,१,८])। माश १,४,२,२।

४३२. एष उ ह वाव देवानां नेदिष्ठमुपचर्यो (महाशनतमः [जैउ २,५,३,१]) यदग्निः। जैउ २,५,२,१।

४३३. एष (अग्निः) एव महान्। माश १०,४,१,४।

४३४. एष खलु वै देवरथो यदग्निः। तैसं ५,४,१०,१।

४३५. एष रुद्रोः यदग्निः। तैसं २,६,६,६; ३, ५,५,२; तै १,१,५,८-९; १,६; ८,४; ४,३,६।

४३६. एष वा अग्निः पाञ्चजन्यो यः पञ्चचितीकः। तैसं ५,३,११,३।

४३७. एष वा अग्निर्वैश्वानरो य एष (आदित्यः) तपति। जै १,४५।

४३८. एष (+ह [गो.]) वा अग्निर्वैश्वानरो यत् प्रदाव्यः (प्रवर्ग्यः [तैआ.])। गो २, ४, ८; तै ३, ३,८,४; तैआ ५,१०,५।

---

१. १. अन्वाहार्यपचनः, २. गार्हपत्यः, ३. आहवनीयः, ४. सभ्यः, ५. आवसथ्यः।

४३९. एष वा अग्निर्वैश्वानरो यदसा आदित्यः (°नरो यद् ब्राह्मणः [तैसं., तै.])। तैसं ५,२,८,१-२; मै १,६,३;६; तै २,१,४,५; ३,७,३,२ ।

४४०. एष वै तुथो विश्ववेदा यदग्निः । मै ४, ८,२ ।

४४१. एष वै देवाननुविद्वान्यदग्निः । माश १,५,१,६ ।

४४२. एष वै धुर्योऽग्निः (यज्ञो यदग्निः [माश.]) । तै ३,२,४,३; माश २,१,४,१९ ।

४४३. एष वै मृत्युर्यदग्नी रिहन्नेव नाम । जै १,२६ ।

४४४. एष (अग्निः) हि देवेभ्यो हव्यं भरति तस्माद्भरतोऽग्निरित्याहुः । माश १, ४,२,२; ५,१,८ ।

४४५. एष हि यज्ञस्य सुक्रतुर्यदग्निः । माश १,४,१,३५ ।

४४६. एष हि रुद्रो यदग्निः ([अग्निः] वाजानां पतिः [ऐ.]) । मै १,६,७;११; ऐ २,५ ।

४४७. एष हि हव्यवाड् (हव्यवाहनो) यदग्निः । माश १,४,१,३९ ।

४४८. एषा वा अग्नेः पशव्या तनूर्या दधिक्रावती । काठ ७,४ ।

४४९. एषा वा अग्नेः प्रिया तनूर्यच्छन्दा ँ सि (°नूर्यरकुमुकः [मै., तै.]) मै ३,१, ९; काठ २०,१; तै १,४,७,३ ।

४५०. एषा वा अग्नेः प्रिया तनूर्यदजा । तैसं ५,१, ६,२; काठ १९,५; क ३०,३; तैआ ५,२, १३ ।

४५१. एषा वा अग्नेः प्रिया तनूर्यद् घृतम् । मै ३,२,६;७;७,५; काठ २४,५; क ३७,६ ।

४५२. एषा वा अग्नेः प्रिया तनूर्यद् वैश्वानरः (°तनूर्यावैश्वानरी [काठ.]) । तैसं ५,५, १, ५; मै ३, १,१०;३,३; काठ १९,९ ।

४५३. एषा वा अग्नेर्दधिक्रावती प्रिया तनूः पशव्या सर्वसमृद्धा । मै १,५, ६ ।

४५४. एषा वा अग्नेर्भिषज्या तनूर्या सुरभिमती अग्नये सुरभिमतेऽष्टाकपालं निर्वपेद्यं प्रमीत ँ शृणुयुः पूतिर्वा एष श्रूयते यः प्रमीतश्श्रूयते । काठ १०,६ ।

४५५. एषा वा अग्नेर्भेषजा तनूर्यत् सुरभिः । मै २,१,३; १० ।

४५६. एषा वा अस्य (अग्नेः) घोरा तनूर्यद् रुद्रः । तैसं २,२,२,३ ।

४५७. एषा वा अस्य (अग्नेः) जातवेदस्या तनूः क्रूरैतया वा एष पशून्शमायते । मै १,८,६ ।

४५८. एषा वा अस्य (अग्नेः) भेषज्या तनूर्यत् सुरभिमती । तैसं २,२,२,४ ।

४५९. एषा संवत्सरस्य क्रूरा तनूर्या वैश्वानरी तयैतदभितपन्नभिशोचय ँ स्तिष्ठति भागधेय-मिच्छमानस्तामेवास्य (अग्निं) प्रीणाति साऽस्मै प्रीता वृष्टिं निनयति । काठ १०,१ ।

४६०. एषा ह वास्य (अग्नेः) सहस्रं भरता यदेनमेकं सन्तं बहुधा विहरन्ति । ऐ १,२८ ।

४६१. एषोऽग्निर्देवानां ँ सेनानी । काठ ३६,८ ।

४६२. ओजो वा अग्निः । काठ २०,११; क ३१, १३ ।

४६३. ओषधयो वा अग्नेर्भागधेयम् (°वा एतस्य मातरः [क.]) । तैसं ५, १,५,९; क ३०,१ ।

४६४. कामा वा अग्नयः । तैसं ५,१,८,२; काठ १९,८; क ३०, ६ ।

४६५. कृत्तिका नक्षत्रमग्निर्देवता । तैसं ४,४,१०,१; मै २,१३,२० ।

४६६. कृष्णो वै भूत्वाऽग्निरश्वं प्राविशत् । मै ३,१,४ ।

४६७. केतो अग्निः । मै १,९,१; तैआ ३,१,१ ।

४६८. क्षुच्च तृष्णा च । अस्नुक्चानाहुतिश्च । अशनया च पिपासा च । सेदिश्चामतिश्च । एतास्ते अग्ने घोरास्तनुवः । तैआ ४,२२ ।

४६९. गन्धो हैवास्य (अग्नेः) सुगन्धितेजनम् । माश ३,५,२,१७ ।

४७०. गर्भो अस्योषधीनां गर्भो वनस्पतीनाम् । गर्भो विश्वस्य भूतस्याग्ने गर्भो अपामसि । तैसं ४,२,३,३; क २५,१ ।

४७१. गायत्रछन्दा अग्निः (ह्यग्निः [तां ७,८,४]) । तां १६,५,१९ ।

४७२. गायत्री छन्दोऽग्निर्देवता शिरः । माश १०,३,२,१ ।

४७३. गायत्री वा अग्निः । माश १,८,२,१३ ।

४७४. गायत्रोऽग्निः (°त्रो वा अग्निः [कौ., तै.]) । तैसं ५, १,४,९; २,३,५; कौ १,१; ३,२; ९,२; १९,४; तै १,१,५,३ ।

४७५. गायत्रो (°त्र्यो [जै. १,१३८]) ह्यग्निः । मै ३, ९,५; जै १, १४२ ।

४७६. घर्मः शिरस्तदयमग्निः । तैसं १,६,१,२; काठ ७,१४; तैआ ४,१७ ।

४७७. घृताहुतिर्ह्यस्य (अग्नेः) प्रियतमा । तैसं २,५,९,२ ।

४७८. घृतेन त्वं (जातवेदः) तनुवो वर्धयस्व स्वाहाकृतꣳ हविरदन्तु देवाः । तैसं ३,१,४,५ ।

४७९. चत्वारो ह वाऽअग्नयः । आहित उद्धृतः प्रहृतो विहृतः । माश ११,८,१,१ ।

४८०. चमसो ह्येष (अग्निः) देवपानः । तैसं २,५,९,३ ।

४८१. चित्रोऽसीति सर्वाणि हि चित्राण्यग्निः । माश ६,१,३,२० ।

४८२. छन्दाꣳसि खलु वा अग्नेः प्रिया तनूः । तैसं ५,१,५,३; २,१,१ ।

४८३. छन्दाꣳसि वा अग्नेर्योनिः । काठ १९,१०; २०,४ ।

४८४. छन्दाꣳसि वा अग्नेर्वासश् छन्दाꣳस्येष वस्ते (°र्वासश् छन्दोभिरेवैनं परिदधाति [काठ.]) । मै ३,१,५; काठ १९,५ ।

४८५. छन्दोभिर्वा अग्निरुत्तरवेदिमानशे । काठ २०,५ ।

४८६. जुहूर्ह्येष (अग्निः) देवानाम् । तैसं २,५,९,३ ।

४८७. जुहोह्यग्निस्त्वाह्वयति (°यतु [क.]) । तैसं १,१,१२,१; काठ १,१२; क १,१२ ।

४८८. ज्योतिर्वा अग्निः । तैसं १,५,९,५ ।

४८९. तं यद् घोरसंस्पर्शं सन्तं (अग्निं) मित्रकृत्येवोपासते तदस्य (अग्नेः) मैत्रं रूपम् । ऐ ३, ४ ।

४९०. त (अमीन्द्रसूर्याः) इमांल्लोकान् व्युपायन्नग्निरिमम् (पृथिवीलोकम्) । काठ २९, ७ ।

४९१. तऽएते सर्वे पशवो यदग्निः । माश ६,२,१,१२ ।

४९२. ततो वा अग्निरुदतिष्ठत् । सा दक्षिणा दिक् । तैआ १,२३,५,७ ।

४९३. ततोऽस्मिन् (अग्नौ) एतद्वर्चं आस । माश ४,५,४,३ ।

४९४. तदग्निर्वै प्राणः । जैउ ४,११,१,११ ।

४९५. तद् (हिरण्यम्) आत्मन्नेव हृदय्येऽग्नौ वैश्वानरे प्रास्यत् । तै ३,११,८,७ ।

४९६. तदेभ्यः (देवेभ्योऽग्निः) स्विष्टमकरोत्तस्मात् स्विष्टकृतऽइति । माश १,७,३,९ ।

४९७. तद्वाऽएनमेतदग्रे देवानाम् (प्रजापतिः) अजनयत । तस्मादग्निरग्रिर्ह वै नामैतद्यदग्निरिति । माश २,२,४,२ ।

४९८. तं (अग्निं)नैव हस्ताभ्यां स्पृशेन्न पादाभ्यां न दण्डेन । जैउ २,५,२,३ ।

४९९. तपो मे तेजो मेऽन्नम्मे वाङ् मे । तन्मे त्वयि । तन्मे (अग्ने) पुनर्देहि । जैउ ३,५,१,१९ ।

५००, तपो वाऽअग्निः । माश ३,४,३,२ ।

५०१. तमग्निरब्रवीदहमेव त्वेतः पास्यामीति पृथिव्या अहमन्तरिक्षादिति वरुणः । मै ४,३, ४ ।

५०२. तमु त्वा (अग्ने) पाथ्यो वृषा समीधे । मै २,७,३ ।

५०३. तमु हैव पशुषु काम९रोहति य एवं विद्वान् रोहिण्याम् (अग्नी) आधत्ते । माश २,१,२,७ ।

५०४. तयोर् (द्यावापृथिव्योः) एष गर्भो यदग्निः । तैसं ५,१,५,४ ।

५०५. तव छन्दसेत्यग्निमब्रुवन् (देवाः) । जै १,२११ ।

५०६. तस्मादग्नये साय९हूयते सूर्याय प्रातः । तै २,१,२,६ ।

५०७. तस्माद् (प्रजापतेः) अग्निरध्यसृज्यत । सोऽस्य मूर्ध्न ऊर्ध्व उदद्रवत् । क ३,१२ ।

५०८. तस्य (अग्नेः) रथगृत्सश्च रथौजाश्च सेनानीग्रामण्याविति वासन्तिकौ तावृतू । माश ८,६,१,१६ ।

५०९. तस्य (अग्नेः) रेतः पराऽपतत्, तदियम् (पृथिवी) अभवत् । तैसं ५,५,४,१ ।

५१०. तस्य (अग्नेः) रेतः परापतत्तद्धिरण्यमभवत् । तै १,१,३,८ ।

५११. तस्या (श्रियः) अग्निरन्नाद्यमादत्त । माश ११, ४,३,३ ।

५१२. तस्या (गायत्र्यै) अग्निस्तेजः प्रायछत्, सोऽजोऽभवत् । मै १,६,४ ।
तस्य (यज्ञस्य) अग्निर्होताऽऽसीत् । गो १,१,१३ ।

५१३. ता इमाः प्रजा अर्कमभितो निविष्टा इममेवाग्निम् । ऐआ २,१,१ ।

५१४. तान् (पशून्) अग्निस्त्रिवृता स्तोमेन नाप्नोत् । तै २, ७,१४, १ ।

५१५. तान् ( असुरान् ) अग्निस्त्रेधाऽऽत्मानं कृत्वा प्रत्ययततऽग्निरेवास्मिँल्लोके भूत्वा वरुणोऽन्तरिक्षे, रुद्रो दिवि । मै ४,३,४ ।

५१६. तान्यनृतमकर्तेति समन्तं देवान् पर्यविश९स्ते देवा अग्ना एवानाथन्त । काठ १०,७ ।

५१७. तिमश्रृङ्गो वृषभः शोशुचानः······आतन्तुमग्निर्दिव्यं ततान । मै २,१३,२२ ।

५१८. तूर्णिर्हव्यवाडित्याह, सर्वं ह्येष (अग्निः) तरति। तैसं २,५,९,३।

५१९. तेऽङ्गिरस आदित्येभ्यः प्रजिघ्युः श्वःसुत्या नो याजयत न इति तेषां ह्यग्निर्दूत आस त आदित्या ऊचुरथास्माकमद्यसुत्या तेषां नस्त्वमेव (अग्ने) होतासि, बृहस्पतिर्ब्रह्माऽयास्य उद्गाता, घोर आङ्गिरसो अध्वर्युरिति। कौ ३०, ६।

५२०. तेजसाऽग्निम् (आदित्योऽस्तं यन् प्रविशति)। जै १,७।

५२१. तेजोऽग्निः (°ह्यग्निः [मै १,४,७])। मै ३,३,६।

५२२. तेजोऽवा अग्निः (°ऽग्नेर्वायुः [तैसं.])। तैसं ५,५,१,१; मै १,६,८; ४,७,३; काठ १०, १; २१, ६; तै ३,३,४,३; ९,५,२; माश २,५,४,८; ३,९,१, १९।

५२३. ते देवा अब्रुवन्पशुर्वाऽअग्निः। माश ६,३,१,२२।

५२४. ते वाऽएते प्राणा एव यद् अग्नयः (आहवनीयगार्हपत्यान्वाहार्यपचनाख्याः)। माश २,२,२,१८।

५२५. तेऽविदुः (देवाः)। अयं (अग्निः) वै नो विरक्षस्तमः। माश ३,४,३,६।

५२६. तेषां नः (आदित्यानाम् अग्ने) त्वं होताऽसि। गौर् (घोर- [कौ.]) आङ्गिरसोऽध्वर्युः, बृहस्पतिरुद्गाताऽयास्यो ब्रह्मा। कौ ३०,६; जै ३,१८८।

५२७. तौ चक्षुषः प्रदातारौ (अग्निश्च विष्णुश्च)। काठ १०,१।

५२८. त्रयोदशाग्नेश्चितिपुरीषाणि। माश ९,३,३,९।

५२९. त्रयो वा अग्नयो हव्यवाहनो देवानां कव्यवाहनः पितृणाꣳ सहरक्षा असुराणाम्। तैसं २,५,८,६।

५३०. त्रिवृद्वयग्निः (°वृद° [माश.])। मै ३,१,६; २,४; ३,६; माश ६, १,१, १।

५३१. त्रिवृद्वा अग्निः (+ अङ्गारा अर्चिर्धूम इति [कौ.])। काठ १९,५; कौ २८, ५; तैआ ५,९,६।

५३२. त्वमग्ने व्रतपा असि। काठ ६,१०।

५३३. त्वमग्ने सूर्यवर्चा असि (+ सं मामायुषा वर्चसा प्रजया सृज [तैस.])। तैसं १, ५,५,४-५; मै १,५,८।

५३४. त्वं (अग्ने) पूषा विधतः पासि नु त्मना। तै ३,११,२,१।

५३५. त्वामग्ने पुष्करादध्यथर्वा निरमन्थत। मै २,७,३।

५३६. ददा इति ह वा अयमग्निर्दीप्यते। जैउ ३,२,२,१।

५३७. दिशोऽग्निः। माश ६,२,२,३४; ३,१,२१; ८,२,१०।

५३८. दीक्षायै च त्वा (अग्ने) तपसश्च तेजसे जुहोमि। तैसं ३,१,१,१।

५३९. दीदायेव ह्यग्निर्वैश्वानरः। तां १३,११,२३।

५४०. देवपात्रं वाऽएष यदग्निः। माश १,४,२,१।

५४१. देवरथो वा अग्नयः। कौ ५,१०।

५४२. देवलोकं वा अग्निना यजमानोऽनु पश्यति। तैसं २,६,९,१।

५४३. देवा असुरैर्विजयमुपयन्तोऽग्नौ प्रियास्तन्वः संन्यदधत। मै १,७,२।

५४४. देवान् ह्येष (अग्निः) परिभूः। तैसं २,५,९,३।

५४५. देवानामेष एको योऽग्निमुपतिष्ठते। काठ ७,७।

५४६. देवायतनं वा अग्निर्वैश्वानरः। मै ३,१,१०।

५४७. देवाश्च वा असुराश्च संयत्ता आसन्, सोऽग्निर्विजयमुपयत्सु त्रेधा तन्वो विन्यधत्त, पशुषु तृतीयमप्सु तृतीयममुष्मिन्नादित्ये तृतीयम्। काठ ८,८।

५४८ देवा ह्येतम् (अग्निम्) ऐन्धत। तैसं २,५,९,१।

५४९. द्यौर्वा अस्य (अग्नेः) परमं जन्म। माश ९,२,३,३९।

५५०. द्वे वा अग्नेस्तन्वौ हव्यवाहन्या देवेभ्यो हव्यं वहति, कव्यवाहन्या पितृभ्यः। मै १,१०, १८; काठ ३६,१३।

५५१. न ह स्म वै पुराऽग्निरपरशुवृक्णं दहति। तैसं ५,१,१०,१; काठ १९,१०।

५५२. नाको नाम दिवि रक्षोहाग्निः। मै ४,१,९; काठ ३१,७।

५५३. नेदुच्छिष्टमग्नौ जुहवाम। माश ४,४,३,१२। 147043

५५४. पञ्चचितिकोऽग्निः। माश ६,३,१,२५; ८,६,३,१२।

५५५. पञ्च वा एतेऽग्नयो यच्चितय उदधिरेव नाम प्रथमो दुध्रो द्वितीयो गह्यस्तृतीयः किंशिलश्चतुर्थो वन्यः पञ्चमः। तैसं ५,५,९, १ (तु. काठ ४०,३)।

५५६. पर्जन्यो (पशवो [तै.]) वाऽअग्निः (+ पवमानः [तै.])। तै १,१,६,२; माश १४,९,१,१३।

५५७. पर्वैतदग्नेर्यदुखा। माश ६,२,२,२४।

५५८. पशवो वा अग्नेः प्रियं धाम। काठ ७,६।

५५९. पशवो वा आहुतयो, रुद्रोऽग्निः स्विष्टकृत्। मै १,४,१३।

५६०. पशुर् (+ वा [मै., काठ., क.]) अग्निः (ह्यग्निः [मै १,५,६; ३,२,१])। तैसं ५,२,६, २; मै ३, ३,४;४,७; काठ ७,४; २०,४; क ३१,६।

५६१. पशुर् (+ वा [तैसं.]) एष यदग्निः। तैसं ५, ७, ६, १; माश ६, ४,१, २; ७, २,४, ३०; १, २,१७।

५६२. पशूनेव प्रथमस्य तृचस्य प्रथमया स्तोत्रियया जयति, भूमिं द्वितीयया, अग्निं तृतीयया। जै १, २४५।

५६३. पाङ्क्तोऽग्निः। काठ २०, ५; २१, ९; क ३१, ७; तैआ १, २५, ३,७।

५६४. पाहि माग्ने दुश्चरिताद् आ मा सुचरिते भज। तैसं १,१, १२,२; काठ १,१२; क १,१२।

५६५. पुञ्जिकस्थला च क्रतुस्थला चाप्सरसाविति दिक् चोपदिशा चेति ह स्माह माहित्थिः सेना च तु ते समितिश्च (अग्नेः)। माश ८, ६, १,१६।

५६६. पुनरासद्य सदनमपश्च पृथिवीमग्ने शेषे मातुर्यथोपस्थे अन्तरस्यां शिवतमः। मै २,७,१०।

५६७. पुनरूर्जा नि वर्तस्व पुनरग्न इषाऽऽयुषा। पुनर्नः पाहि विश्वतः। तैसं ४,२,१,३।

५६८. पुरीषायतनो वा एष यदग्निः। तैसं ५, १, २, ४।

५६९. पुरुष एवाग्निर्वैश्वानरः । जै १. ४५ ।

५७०. पुरुषो(+वा [माश १४,९,१,१५] ऽग्निः । माश १०, ४, १, ६ ।

५७१. पृथिवीं लोकानां जयत्यग्निं देवं देवानाम् । जै १, २६ ।

५७२. पृथिवी समित्, तामग्निः समिन्द्धे । मै ४, ९,२३ ।

५७३. पृथिव्यग्नेः ( +पत्नी [गो.] ) । मै १, ९, २; काठ ९, १०; गो २, २, ९; तैआ ३,९,१ ।

५७४. पृथिव्येवाग्निर्वैश्वानरः । जै १, ४५ ।

५७५. प्रजननं (+हि [तैसं.]) वा अग्निः । तैसं १, ५, ९, १; तै १, ३, १, ४ ।

५७६. प्रजननं वा ऋतवोऽग्निः प्रजनयिता । मै १, ७, ४; काठ ९,३ ।

५७७. प्रजापतिरग्निः । माश ६, २, १,२३; ३०; ५,३, ९; ७, २,२, १७ ।

५७८. प्रजापतिरिमां (पृथिवीं) प्रथमां स्वयमातृण्णां चितिमपश्यत्…… । तमग्निरब्रवीत् । उपाहमायानीति, केनेति, पशुभिरिति । माश ६, २, ३, १-२ ।

५७९. प्रजापतिरेषो (°तिर्वा एष यद् [तैसं.]) ऽग्निः । तैसं ५,६,९,२; माश ६,५, ३, ७;८,१ ४ ।

५८०. प्रजापतिर्देवताः सृजमानः । अग्निमेव देवतानां प्रथममसृजत । तै २, १, ६, ४ ।

५८१. प्रजापतिर्वा इदमासीत्तस्मादग्निरध्यसृज्यत । सोऽस्य मूर्ध्न ऊर्ध्व उदद्रवत् । क ३, १२ ।

५८२. प्रजापती रोहिण्यामग्निमसृजत तं देवा रोहिण्यामादधत ततो वै ते सर्वान्रोहानरोहन् । तै १, १, २, २ ।

५८३. प्रणीर्ह्येष (अग्निः) यज्ञानाम् । तैसं २,५,९,२ ।

५८४. प्राची दिगग्निर्देवता । मै १, ५, ४; काठ ७, २; तै ३, ११,५, १ ।

५८५. प्राची दिग्, वसन्त ऋतुरग्निर्देवता, ब्रह्म द्रविणं, गायत्री छन्दो रथन्तरं साम, त्रिवृत् स्तोमः, स उ पञ्चदशवर्तनिः, सानगा ऋषिस्त्र्यविर्वयः, कृतमयानां पुरोवातो वातः । मै २,७,२० (तु. तैसं ४, ३, ३, १; काठ ३९,७) ।

५८६. प्राचीमेव दिशमग्निना प्राजानन् । माश ३,२,३,१६ ।

५८७. प्राची हि दिगग्नेः । माश ६, ३,३, २ ।

५८८. प्राच्या त्वा दिशा सादयाम्यग्निना देवेन देवतया गायत्रेण छन्दसाग्नेः शिरा उपदधामि । मै २, ८, ११ ।

५८९. प्राजापत्यो (+वा एषो [तैआ.]) ऽग्निः । मै ३, १, ७; तैआ १, २६, ४, ६ ।

५९०. प्राणा अग्निः । माश ६, ३,१, २१; ८,२,१० ।

५९१. प्राणो वा (+इन्द्रतमः [तैआ.]) अग्निः । माश २, २, २, १५; ९,५, १, ६८; तैआ ५,८,१२ ।

५९२ बाधस्व (अग्ने) द्विषो रक्षसो अमीवाः । तैसं ४, १, ५, १ ।

५९३. बृहद्भाः पाहि माग्ने दुश्चरितादा मा सुचरिते भज । तैसं १, १,१२, २ ।

५९४. बृहस्पतिस्त्वा सादयतु पृथिव्याः पृष्ठे······अग्निस्तेऽधिपतिः । तैसं ४,४,६,१ ।

५९५. ब्रह्म वा अग्निः (+क्षत्रं सोमः [कौ ९,५])। कौ ९,१;५; १२,८; जै १, १८२; तै ३, ९, १६,३; माश २,५,४,८; ५,३,५,३२ ।

५९६. ब्रह्म ह्यग्निः (+ तस्मादाह ब्राह्मणेति [माश १, ४, २,२]) । माश १, ५,१,११ ।

५९७. ब्रह्म ( ब्रह्मवर्चसं ॰ वा [मै.] ) अग्निः । मै ३, ८, ४; माश १, ३, ३, १९ ।

५९८. भूरिति वा अग्निः । तैआ ७,५,२; तैउ १, ५, २ ।

५९९. मन एवाग्निः । माश १०, १, २, ३ ।

६००. मनुर्ह्येतम् ( अग्निम् ) उत्तरो देवेभ्य ऐन्ध । तैसं २, ५, ९, १ ।

६०१. मनुष्या अग्नेरायुष्कृतः । काठ ११, ८ ।

६०२. मय्यग्निस्तेजो दधातु । तैआ ४, ४२, २ ।

६०३. मरुतोऽद्भिरग्निमतमयन् तस्य तान्तस्य हृदयमाच्छिन्दन् साऽशनिरभवत् । तै १,१,३,१२ ।

६०४. महान् ह्येष यदग्निः ······ब्राह्मणो ह्येष भारतेत्याहैष हि देवेभ्यो हव्यं भरति । तैसं २,५,९,१ ।

६०५. मा छन्दस्तत्पृथिव्यग्निर्देवता । मै २,१३, १४ ।

६०६. मिथुनं वा अग्निश्च सोमश्च सोमो रेतोधा अग्निः प्रजनयिता । काठ ८,१०; क ७, ६ ।

६०७. मुख ॰ ह्येतदग्नेर्यद् ब्रह्म । माश ६, १,१, १० ।

६०८. मुखम् (मृत्युर् [काठ.]) अग्निः । काठ २१, ७; माश १२,९,१,११ ।

६०९. मुखाद् (पुरुषस्य) अग्निरजायत । काठसंक १०१ ।

६१०. मृत्युर्वा (+ एष यद् [तैसं.]) अग्निः । तैसं ५,१,१०,३;४, ४, ४; काठ १९,११; क ३१,१ ।

६११. मृत्योरेतद्रूप ॰ यदग्निर्यत् पाशः । मै ३, २, १ ।

६१२. य ( अग्निः ) एको रुद्र उच्यते । तैआ १, १२, १,२ ।

६१३. य एवं विद्वानग्निमुप तिष्ठते पशुमान् भवति । तैसं १,५,९,३ ।

६१४. यच्छर्वो ऽग्निस्तेन, न ह वा एनं शर्वो हिनस्ति । कौ ६,३ ।

६१५. यजमानोऽग्निः । माश ६, ३,३,२१; ५, १,८; ७, ४, १,२१; ९,२,३,१३ ।

६१६. यजमानो वा अग्नेर्योनिः । तैसं ३, ४,१०,५ ।

६१७. यत्ते अग्ने तेजस्तेनाहं तेजस्वी भूयासं यत्ते अग्ने वर्चस्तेनाहं वर्चस्वी भूयासं यत्ते अग्ने हरस्तेनाह ॰ हरस्वी भूयासम् । तैसं ३,५,३,२ ।

६१८. यत्ते वर्चो जातवेदः ······ तेन मा वर्चसा त्वमग्ने वर्चस्विनं कुरु । शांआ १२, १ ।

६१९. यत्राङ्गारेष्वग्निर्लेलायेव तदस्यास्यमाविर्नाम, तद् ब्रह्म, तस्मिन् होतव्यम् । काठ ६,७ ।

६२०. यत्स्नाव (अग्नेः) तत्सुगन्धितेजनम् । तां २४,१३,५ ।

६२१. यथर्त्वेवाग्नेरर्चिर्वर्णविशेषाः । नीलार्चिश्च पीतकार्चिश्चेति । तैआ १,९,१,२ ।

६२२. यथायमग्निः पृथिव्यामेवमिदमुपस्थे रेतः । ऐआ ३,१,२ ।

६२३. यदग्नये प्रवते ( देवाः ) निरवपन्, यान्येव पुरस्ताद्रक्षा ँ स्यासन्, तानि तेन प्राणुदन्त । तैसं २,४,१, २-३ ।

६२४. यदग्नये विबाधवते ( देवा निरवपन् ), यान्येवाभितो रक्षा ँ स्यासन् तानि तेन व्यबाधन्त । तैसं २,४,१,३ ।

६२५. यदग्निं (यजति) देवतास्तेन (यजति) । मैं ३,७,१ ।

६२६. यदग्निर्घोरसंस्पर्शस्तदस्य वारुणं रूपम् । ऐ० ३,४ ।

६२७. यदग्नेरन्ते पश्यामस्तदसुराणां चक्षुषा पश्यामः । मै ४,१,१ ।

६२८. यदग्नौ जुहोति तद्देवेषु जुहोति । माश ३,६,२,२५ ।

६२९. यदस्थि (अग्नेरासीत् ) तत् पीतुदारु ( अभवत् ) । तां २४,१३,५ ।

६३०. यदहुत्वा वास्तोष्पतीयं प्रयायाद् रुद्र एनं भूत्वाऽग्निरनूत्थाय हन्यात् । तैसं ३,४,१०,३ ।

६३१. यदाह श्येनोऽसीति सोमं वा एतदाहैष ह वा अग्निर्भूत्वाऽस्मिंल्लोके संश्यायति तस्माच्छ्येन-स्तच्छ्येनस्य श्येनत्वम् । गो १,५,१२ ।

६३२. यदिदं घृते हुते प्रतीवार्चिरुज्ज्वलत्येषा वा अस्य (अग्नेः) सा तनूर्ययाऽपः प्राविशद्यदिदमप्सु परीव ददृशे यद्धस्तावनिज्य स्नात्वा श्रदिव धत्ते, य एवाप्स्वग्निः स एवैनं तत्पावयति स स्वदयति । काठ ८,९ ।

६३३. यदिन्द्राय राथन्तराय निर्वपति, यदेवाग्नेस्तेजस्तदेवावरुन्धे । तैसं २,३,७,१ ।

६३४. यदेतत् स्त्रियां लोहितं भवति, अग्नेस्तद्रूपम् । ऐआ २,३,७ ।

६३५. यदेनं (अग्निं) द्यौरजनयत् सुरेताः । तैसं ४,२,२,४-५ ।

६३६. यदेवास्य (अग्नेः) क्रव्याद् यद्विश्वदाव्यं तच्छमयति य एवं विद्वान् वारवन्तीयं गायते । मै १,६,७ ।

६३७. यद् ( अग्ने रेतः) द्वितीयं पराऽपतत् तदसावभवत् (द्यौः)। तैसं ५,५,४,१ ।

६३८. यद् द्वितीयेऽहन् प्रवृज्यते । अग्निर्भूत्वा देवानेति । तैआ ५,१२,१ ।

६३९. यद्रेता (अग्नेः) आसीत् सोऽश्वत्थ आरोहोऽभवत्, यदुल्ब ँ सा शमी । मै १,६,१२ ।

६४०. यद्वा अग्नेर्वामं वसुस्तत्तभः । काठ २५,६; क ३९,३ ।

६४१. यद् वाजप्रसवीयं जुहोत्यग्निमेव तद्भागधेयेन समर्धयत्यथो अभिषेक एवास्य सः । तैसं ५,४,९,१ ।

६४२. यद्वेवाह स्वर्णघर्मः स्वाहा स्वर्णार्कः स्वाहेत्यस्यैवैतानि अग्नेर्नामानि[1] । माश ९,४, २,२५ ।

६४३. यन्मे अग्न ऊनं तन्वस्तन्म आपृण । क ५,५ ।

६४४. यं परिधिं पर्यधत्था अग्ने देव पणिभिरिध्यमानः । क ४७,११ ।

---

१. घर्मः, अर्कः, शुक्रः, ज्योतिः, सूर्य इति ।

६४५. यया ते सृष्टस्याग्नेर्हेतिमशमयत्प्रजापतिस्तामिमामप्रदाहाय'''हरामि। तै १, २, १, ६।

६४६. यस्माद्वायत्रमुखः प्रथमः (त्रिरात्रः) तस्मादूर्ध्वोऽग्निर्दीदाय। तां १०,५,२।

६४७. या९वनस्पतिष्ववसत्ता९वेणा अवसत् (अग्निः)। मै ३,१,२।

६४८. या अस्य (अग्नेः) यज्ञियास्तन्व आस९स्ताभिरुदक्रामत ता एताः पवमाना, पावका, शुचिः। काठ ८,९।

६४९. याऽग्नेराज्यभागस्य (आहुतिः) सोत्तरार्धे होतव्या, ततो योत्तरा सा रक्षोदेवत्या। मै १,४,१२।

६५०. या ते अग्ने रुद्रिया तनूरिति व्रतयति स्वायामेव देवताया९हुतं व्रतयति। काठ २४,९।

६५१. या ते अग्ने रुद्रिया तनूरित्याह स्वयैवैनद्देवतया व्रतयति। तैसं ६,२,२,७-८।

६५२. या ते अग्ने शुचिस्तनूर्दिवमन्वाविवेश, या सूर्ये या बृहति या जागते छन्दसि या सप्तदशे स्तोमे याप्सु तां त एतदवरुन्धे। काठ ७,१४; क ६,३।

६५३. या (वाक्) पृथिव्यां साऽग्नौ, सा रथन्तरे। काठ १४,५।

६५४. या वा अग्नेर्जातवेदास्तनूस्तयैष प्रजा हिनस्त्यग्निहोत्रे भागधेयमिच्छमानः। काठ ६,७।

६५५. या वाक् सोऽग्निः। गो २,४,११।

६५६. या वाजिन्नग्नेः पवमाना प्रिया तनूस्तामावह। मै १,६,२।

६५७. या वाजिन्नग्नेः प्रिया तनूः पशुषु पवमाना (°सूर्ये शुक्रा शुचिमती) तामावह। काठ ७,१३।

६५८. यास्ते अग्न आर्द्रा योनयो याः कुलायिनीः। ये ते अग्न इन्दवो या उ नाभयः। यास्ते अग्ने तनुव ऊर्जो नाम। ताभिस्त्वमुभयीभिः संविदानः······सीद। तैआ ४,१८।

६५९. यास्ते अग्ने सूर्ये रुच उद्यतो दिवमातन्वन्ति रश्मिभिस्ताभिः सर्वाभी रुचे। तैसं ५,७,६,१।

६६०. युनज्मि ते पृथिवीमग्निना सह। तां १,२,१।

६६१. ये अग्नयः समनसः सचेतस ओषधीष्वप्सु प्रविष्टास्ते सम्राजमभिस९यन्तु। क ६, ३।

६६२. ये अग्नयः समनसा ओषधीषु प्रविष्टास्ते विराजमभिसंयन्तु। मै १,६,२।

६६३. ये ग्राम्याः पशवो विश्वरूपाः '''अग्निस्ता९अग्ने प्रमुमोक्तु देवः। तैआ ३,११,११।

६६४. ये मध्यमाः (तण्डुलाः) स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्यात्। तैसं २,५,५,२।

६६५. योऽग्निर्मृत्युस्सः (°ग्निर्वागेव सा [जै.])। जै १,२४९; जैउ २,५,१,२।

६६६. योनिरेषाग्नेर्यन्मुञ्जः। माश ६,६,१,२३।

६६७. योनिर्वा अग्नेः (एषोऽग्नेर्यत् [मै.]) पुष्करपर्णम्। तैसं ५,१,४,२; २, ६,५; मै ३,१,५;१,६।

६६८. यो वा अग्निः स वरुणस्तदप्येतदृषिणोक्तं त्वमग्ने वरुणो जायसे यदिति। ऐ ६,२६।

६६९. यो वा अग्नाग्निर्गायत्री स निदानेन। माश १,८,२,१५।

६७०. यो वै रुद्रः (वरुणः) सोऽग्निः । माश ५,२,४,१३ ।

६७१. योषा वाऽअग्निः (°षा वै वेदिर्वृषाग्निः [माश १,२,५,१५]) । माश १४, १,१,१६ ।

६७२. योषा वाऽआपो वृषाग्निः (+मिथुनमेवैतत्प्रजननं क्रियते [माश १, १,१,२०]) । माश १,१, १,१८; २,१,१,४ ।

६७३. रथीरध्वराणामित्याहैष (अग्निः) हि देवरथः । तैसं २,५,९,२ ।

६७४. रुद्रोऽग्निः (+स्विष्टकृत् [तै.]) । काठ ८,८; २४,६; क ४२, ६; तां १२, ४, २४; तै ३, ९, ११, ३-४ ।

६७५. रुद्रोऽग्निरस्य प्रजनयिता । काठ ११,५ ।

६७६. रेतो वा (रुद्रो वा एष यत् [तैसं.]) अग्निः । तैसं ५,४,३,१;१०,५; मै ३, २, १ ।

६७७. रोहितेन त्वाऽग्निर्देवतां गमयतु । तैसं १,६,४,३; काठ ५,३ ।

६७८. रोहितो ह्यग्नेरश्वः । माश ६,६,३,४ ।

६७९. रौद्रेणानीकेन पाहि माऽग्ने । तैसं १,३,३,१-२; क २,७ ।

६८०. वयो वा अग्निः । तैसं ५, ७, ६,१; मै ३,४,८ ।

६८१. वाग् (+ एव [माश.]) अग्निः । माश ३,२,२,१३; ऐआ २,१, ५ ।

६८२. वाग्वा अग्निः । माश ६,१, २, २८; जैउ ३, १, २, ५ ।

६८३. वातः प्राणः (+तदयमग्निः [मै १, ६,२]) । तैसं ७, ५,२५,१; मै ३, १,७ ।

६८४. वायुर्वा अग्निः सुसमिद्वायुर्हि स्वयमात्मानं समिन्धे, स्वयमिदं सर्वं यदिदं किञ्च । ऐ २,३४ ।

६८५. वायुर्वा अग्नेस्तेजस्तस्माद् वायुमग्निरन्वेति ( °स्माद् यद्वयङ् वातो वाति तदग्निरन्वेति [काठ.]) । मै ३, १, १०; काठ १९, ८ ।

६८६. वायुर्वा अग्नेः स्वो महिमा । कौ ३, ३ ।

६८७. वायोरग्निः । अग्नेरापः । तैआ ८,१; तैउ २, १ ।

६८८. वारुणं यवमयं चरुं निर्वपेदग्नये वैश्वानराय । काठ १०, ४ ।

६८९. विद्म्वग्निम् (वरुणोऽध्यात ) । तैसं १, २, ८, २; काठ २,६ ।

६९०. विदेरग्निर्नभो नामाग्ने ऽअङ्गिर आयुना नाम्नेहीति । माश ३,५,१,३२ ।

६९१. विद्मा ते अग्ने त्रेधा त्रयाणि । तैसं ४, २,२,१ ।

६९२. विराड् ( विराड् [माश.] ) अग्निः । माश ६, २, २, ३४; ३,१, २१; ८,२, १२; ९, १, १,३१; तैआ २, १४, १ ।

६९३. वि···बाधस्व रिपून् रक्षसो अमीवाः···अग्ने । मै २, ७, ५ ।

६९४. विराट् सृष्टा प्रजापतेः । ऊर्ध्वारोहद्रोहिणी । योनिरग्नेः प्रतिष्ठितिः । तै १, १,२, २७ ।

६९५. विश्वकर्मायमग्निः । माश ९, २,२,२; ५,१, ४२ ।

६९६. विश्वानि देव ( अग्ने ) वयुनानि विद्वान् । तैसं १, ४,४३,१ ।

६९७. विश्वा हि रूपाण्यग्निः । मै ३, २, १ ।

६९८. वीरहा वा एष देवानां योऽग्निमुत्सादयते ( °मुद्वासयते + न वा एतस्य ब्राह्मणा ऋतायवः पुराऽन्नमक्षन् [तैसं.]) । तैसं १,५,२,१;२,२,५,५; काठ ९, २० ।

६९९. वीर्यं वा (वैश्वदेवः [मै.] ) अग्निः । मै ३, ३, ८; तै १, ७, २, २; गो २,६,७ ।

७००. वृषा (+वा [तैआ.]) अग्निः । तैसं ५,१,५,७; तैआ १, २६, ३, ४ ।

७०१. वैश्वानर इति वा अग्नेः प्रियं धाम । तां १४,२, ३ ।

७०२. वैश्वानरो वै सर्वेऽग्नयः । माश ६, २, १,३५; ६,१, ५ ।

७०३. व्यृद्धा वा एषाहुतिर्यामनग्नौ जुहोति । काठ १२, १ ।

७०४. शिर एव (एतद् यज्ञस्य यत् [माश ९,२,३,३१]) अग्निः । माश १०,१,२,५ ।

७०५. शिवः शिव इति शमयत्येवैनम् ( अग्निम् ) एतदहि ९सायै सथो हैष इमांल्लोकाञ्छान्तो न हिनस्ति । माश ६,७,३,१५ ।

७०६. शिशिरं वा अग्नेर्जन्म, ······सर्वासु दिक्ष्वग्निश्शिशिरे । काठ ८,१ ।

७०७. शुग्वा अग्निरापः शान्तिः । मै ३, ४, १० ।

७०८. शुचिजिह्वो अग्निः । काठ १६, ३ ।

७०९. संयच्च प्रचेताश्चाग्नेः सोमस्य सूर्यस्य । तैसं ४,४, ११, २; काठ २२,५ ।

७१०. संवत्सर एवाग्निः ( एषोऽग्निः [माश ६, ७, १, १८] ) । माश १०, ४, ५, २ ।

७११. संवत्सरः खलु वा अग्नेर्योनिः । तैसं २, २,५, ६ ।

७१२. संवत्सरोऽग्निः (+वैश्वानरः [तैसं., मै., ऐ.] ) । तैसं ५, १, ८,५; २,६,१; ४,७,६; मै १, ७, ३; ऐ ३, ४१; तां १०, १२,७; माश ६, ३, १, २५; ३,२,१०; ६,१,१४ ।

७१३. संवत्सरो वा अग्निर्वैश्वानरः (°ग्निर्नाचिकेतः [तै ३,११,१०,२;४]) । तैसं २,२,५,१; मै २, ३,५;५, ६; ३, १,१०; ३, ३; १०; १०, ७; ४, ३,७; काठ १०, ३; ४; ११, ८; क ८,४; तै १,७,२,५; माश ६,६,१,२०;८,२,२,८ ।

७१४. संवत्सरो वा एष यदग्निः (°रोऽग्नेर्योनिः [काठ.]) । तैसं ५, ६,९, २; काठ १९, ९ ।

७१५. संवत्सरो वै प्रजननम् (+अग्निः प्रजनयिता [काठ., क.] ) काठ ७, १५; क ६, ५; गो १, २, १५ ।

७१६. स ( अग्निः ) एताः[1] तिस्रः तनूरेषु लोकेषु विन्यधत्त । माश २, २,१,१४ ।

७१७. स एषोऽक्रिरेव यत् क्रमुकः । माश ६,६,२, ११ ।

---

1. पवमानपावकशुच्याख्याः ।

७१८. स एषो ( अग्निः ) ऽत्र वसुः । माश ९,३,२, १ ।

७१९. स (अग्निः) गायत्रिया त्रिष्टुभा जगत्या देवेभ्यो हव्यं वहतु प्रजानन् । तैसं २, २, ४, ८ ।

७२०. सत्पतिश्चेकितान इत्ययमग्निः सतां पतिश्चेतयमान इत्येतत् । माश ८, ६,३,२० ।

७२१. सत्यं पूर्वैर्ऋषिभिः स ँ्विदानो अग्निः । मै २, ७,१६ ।

७२२. स नो भव शिवस्त्वं ( अग्ने ) सुप्रतीको विभावसुः । काठ १६, ९ ।

७२३. सं नो देवो वसुभिरग्निः । तैसं २, १,११, २-३ ।

७२४. सप्तचितिकोऽग्निः । माश ६, ६, १, १४; ९, १,१,२६ ।

७२५. सप्त ते अग्ने समिधः सप्त जिह्वाः[1] (+सप्त ऋषयः सप्त धाम प्रियाणि। सप्त ऋत्विजः सप्तधा त्वा यजन्ति सप्त होत्रा ऋतुथानु विद्वान्त्सप्त योनीरापृणस्व घृतेन [मै.]) । तैसं १,५, ३, २-३; मै १,६,२; ३,३,९; काठ ७, १४; क ६,८; तै ३, ११, ९, ९ ।

७२६. सप्त ते अग्ने समिधः सप्त जिह्वा इत्येतावतीर्वा अग्नेस्तन्वः षोढा सप्त सप्त । मै १,६,७ ।

७२७. स ( अग्निः ) प्राचीं दिशं प्राजानात् । कौ ७, ६ ।

७२८. स ( प्रजापतिः ) भूरित्येवर्ग्वेदस्य रसमादत्त । सेयं पृथिव्यभवत् । तस्य यो रसः प्राणेदत् सोऽग्निरभवद्रसस्य रसः । जैउ १, १,१, ३ ।

७२९. समग्निर्वसुभिर्नो अव्यात् । मै ४, १२, २; काठ १०,३७ ।

७३०. समाने वै योना आस्ता ँ् सूर्यश्चाग्निश्च । काठ ६, ३ ।

७३१. समिधमातिष्ठ गायत्री त्वा छन्दसामवतु, त्रिवृत्स्तोमो, रथन्तर ँ् सामाग्निर्देवता, ब्रह्म द्रविणम् । मै २, ६, १० ।

७३२. सम्राट् च स्वराट् चाग्ने ये ते तन्वौ ताभ्यां मा ऊर्जं यच्छ, विराट् च प्रभूश्चाग्ने ये ते तन्वौ ···, विभूश्च परिभूश्चाग्ने ये ते तन्वौ······ । मै १, ६, २ ।

७३३. स ( अग्निः ) यत्र यत्रावसत् तत् कृष्णमभवत् । तैसं ५, १, १, ४ ।

७३४. स यत्र ह वा एष ( अग्निः ) प्रथम ँ् संप्रधूप्य प्रज्वलति तद्ध वरुणो भवत्यथ यत्र संप्रज्वलितो भवत्यवरेणेव वर्षिमाणं तद्ध रुद्रो भवत्यथ यत्र वर्षिष्ठं ज्वलति तद्धेन्द्रो भवत्यथ यत्र नितरामर्चयो भवन्ति तद्ध मित्रो भवत्यथ यत्राङ्गारा मल्मलायन्तीव तद्ध ब्रह्म भवति । काश ३, १, १, १ ।

७३५. स यथोच्छिष्टमग्नौ प्रास्येदेव ँ्ह तत् । काश ५, ५,१,११ ।

७३६. स यदस्य सर्वस्याग्रमसृज्यत तस्मादग्निरग्रिर्ह वै तमग्निरित्याचक्षते परोऽक्षम् । माश ६, १,१११ ।

७३७. स ( अग्निः ) यदिहासीत्तस्यैतद् भस्म यत् सिकताः । मै १,६,३ ।

---

१. काली कराली च मनोजवा च सुलोहिता या च सुधूम्रवर्णा । स्फुलिङ्गिनी विश्वरुची च देवी लेलायमाना इति सप्त जिह्वाः (तु. मुण्डक १,२,४) ।

७३८. स यद्वैश्वदेवेन यजते। अग्निरेव तर्हि भवत्यग्नेरेव सायुज्य९सलोकतां जयति। माश २,६,४,८।

७३९. स यो ह स मृत्युरग्निरेव सः। जै १,१२।

७४०. स यो हैवमेतमग्निमन्नादं वेदान्नादो हैव भवति। माश २,२,४,१।

७४१. सर्वं वाऽइदमग्नेरन्नम्। माश १०,१,४,१३।

७४२. सर्वतोमुखोऽयमग्निः। यतो ह्येव कुतश्चाग्नावभ्यादधति तत एव प्रदहति तेनैष सर्वतोमुखस्तेनान्नादः। माश २,६,३,१५,।

७४३. सर्वदेवत्योऽग्निः। माश ६,१,२,२८।

७४४. सर्वानृतून् पशवोऽग्निमभिसर्पन्ति। मै १,८,२।

७४५. सर्वास्वोषधीष्वग्निः। मै ३,१,५।

७४६. सर्वेषां वा एष (अग्निः) भूतानामतिथिः। माश ६,७,३,११।

७४७. सर्वेषामु हैष देवानामात्मा यदग्निः। माश ७,४,१,२५;९,५,१,७।

७४८. स (प्रजापतिः) वा अग्निमेवाग्रे मूर्धतोऽसृजत। मै १,८,१।

७४९. स ह सोऽभिजिदेव स्तोमः। अग्निरेव सः। स हीदं सर्वमभ्यजयत्। जै १,३१२।

७५०. स (अग्निः) हि देवानां दूत आसीत्। माश १,४,१,३४।

७५१. सा (पृथिवी)ऽग्निं गर्भमधत्थाः। मै २,१३,१५।

७५२. सा या सा वागग्निस्सः (वागासीत्सोऽग्निरभवत् [जैउ २,१,२,१])। जैउ १,९,१,३।

७५३. सिकता नि वपत्येतद्वा अग्नेर्वैश्वानरस्य रूपम्। तैसं ५,२,३,२।

७५४. सूपसदनोऽग्निः (अस्तु)। तैसं ७,५,२०,१।

७५५. सूर्योऽग्नेर्योनिरायतनम्। तै ३,९,२१,२;३।

७५६. सैषा योनिरग्नेर्यद्वेणुः (°ग्नेर्यन्मुञ्जः [माश ६,३,१,२६])। माश ६,३,१,३२।

७५७. सोऽग्नये तेजस्विनेऽजं कृष्णग्रीवमालभत तेन तेजस्व्यभवत्। मै २,५,११।

७५८. सोऽग्निम् (प्रजापतिः) अब्रवीत्त्वं वै मे ज्येष्ठः पुत्राणामसि। त्वम्प्रथमो वृणीष्वेति। सोऽब्रवीन्मन्द्रं साम्नो वृणेऽन्नाद्यमिति। जैउ १,१६,२,५-६।

७५९. सोऽग्निमेवाग्रेऽसृजत (प्रजापतिः)। काठ ७,५।

७६०. सोऽग्निरेव भूत्वा पृतना असहत (प्रजापतिः)। जै १,३१४।

७६१. सोऽग्निर्गायत्र्या स्वाराण्यसृजत। जै १,२९९।

७६२. सोऽपामन्नम् (अग्निः)। माश १४,६,२,१०।

७६३. सोऽब्रवीद्(अग्निः) वरं वृणै यदेव गृहीतस्याहुतस्य बहिः परिधिः स्कन्दात् तन्मे भ्रातृणां (भूपति-भुवनपति-भूतानांपति-संज्ञानां) भागधेयमसदिति। तैसं २,६,६,२।

७६४. सोमो रेतोधा (+अग्निः प्रजनयिता [काठ ८,१०]) । मै १, ६,९; ३,२,५; काठ ११, २; क ४६, २ ।

७६५. स्तनयित्नुरेव (स्त्रियो वा ) अग्निर्वैश्वानरः । जै १,४५ ।

७६६. स्निक् च स्नीहितिश्च स्निहितिश्च । उष्णा च शीता च । उग्रा च भीमा च । सदाम्नी सेदिरनिरा । एतास्ते अग्ने घोरास्तनुवः । तैआ ४,२३ ।

७६७. स्वाहाग्नये कव्यवाहनाय । मं २,३,२ ।

७६८. हव्यवाहनो (+वै [माश.]) देवानाम् (अग्निः) । तैसं २,५,८,६; माश २,६,१,३० ।

७६९. हिरण्यं वा अग्नेर्नाचिकेतस्य शरीरम् य एवं वेद सशरीर एव स्वर्गं लोकमेति । तै ३,११,७,३ ।

७७०. हिरण्यं वा अग्नेस्तेजः । मै १,६,४ ।

७७१. हेतयो नाम स्थ तेषां वः पुरो गृहा अग्निर्व इषवः । तैसं ५,५,१०,३ ।

अग्ना-पूषन्- > आग्नापौष्ण-

स आग्नापौष्णमेकादशकपालं पुरोडाशं निर्वपति । माश ५, २, ५, ५ ।

अग्ना-मरुत्->आग्निमारुत ( उक्थ )-

१. अधिपत्न्यस्यूर्ध्वा दिग्, विश्वे ते देवा अधिपतयो बृहस्पतिर्हेतीनां प्रतिधर्ता त्रिणवत्रयस्त्रिंशौ त्वा स्तोमौ पृथिव्यां श्रयतां वैश्वदेवाग्निमारुते उक्थे अव्यथायै स्तभ्नुतां शाक्वररैवते सामनी । मै २, ८,९ ।

२. शुकरूपा वाजिनाः कल्माषा आग्निमारुताः । मै ३, १३, ८ ।

अग्ना-विष्णु-

१. अग्नाविष्णू ( आमयाविनः ) आत्मा । तैसं २, ३, ११, १ ।

२. अग्नाविष्णू इति वसोर्धारायाः ( रूपम् ) । तै ३, ११, ९, ९ ।

३. अग्नाविष्णू वै देवानामन्तभाजौ । कौ १६, ८ ।

४. अग्नाविष्णू······सप्त रत्ना दधाना ( आगच्छतम् ) । काठ ४, १६ ।

आग्नावैष्णव-

१. आग्नावैष्णव एकादशकपालः ( + अनड्वान् वामनो दक्षिणा [काठ.]) । मै २, ६, ४; ३, १, १०; ४, ३,१; काठ १५, १ ।

२. आग्नावैष्णवं घृते चरुं निर्वपेच्चक्षुष्कामः । तैसं २, २, ९,३; मै २, १, ७ ।

३. आग्नावैष्णवं द्वादशकपालं निर्वपेत्तृतीयसवनस्याऽऽकाले । तैसं २, २, ९, ६ ।

४. आग्नावैष्णवमष्टाकपालं निर्वपेत् प्रातः, ··· एकादशकपालं मध्यन्दिने, ··· द्वादशकपालमपराह्णे । काठ १०, १ ।

५. आग्नावैष्णवमष्टाकपालं निर्वपेत् प्रातः सवनस्याऽऽकाले । तैसं २,२,९,५ ।

६. आग्नावैष्णवमेकादशकपालं निर्वपति (°र्वपेत् + सारस्वतं चरुं बार्हस्पत्यं चरुं पूर्वेद्युरामयाविनं याजयेत् [मै.])। तैसं १, ८, ८, १; ५, ५, १, ४; मै २, ३, ५।

७. आग्नावैष्णवमेकादशकपालं निर्वपेदभिचरन् ( °भिचर्यमाणः + अग्निर्वै सर्वा देवता विष्णुर्यज्ञो, देवताश्चैव यज्ञं चास्तृत्यै [मै.])। तैसं २, २, ९, १; मै २,१,७।

८. आग्नावैष्णवमेकादशकपालं निर्वपेद्दर्शपूर्णमासा आलप्स्यमानः (°र्वपेद्यं यज्ञो नोपमेत् [तैसं.])। तैसं २, २,९, २-३; मै १,४, १४।

९. आग्नावैष्णवमेकादशकपालं निर्वपेन्माध्यन्दिनस्य सवनस्याऽऽकाले। तैसं २, २, ९, ५-६।

१०. आग्नावैष्णवा रोहितललामास्तूपराः। काठ ४९,८।

११. वामना अनड्वाह आग्नावैष्णवाः। मै ३, १३, ९।

## अग्नि-कल्प-

तस्मादनूचानमाहुरग्निकल्प इति। माश ६,१,१,१०।

## अग्नि-चयन-

१. अन्नमदानि गृहा मे ऽसन्निति वा अग्निश्चीयते। क ३५, १।

२. उत्तरवेद्या ँ ह्यग्निश्चीयते। तैसं ५, २,५,७; काठ २०,४; क ३१, ६; तैआ १, २६,३,५।

३. कस्यै देवताया अग्निश्चीयत इत्याहुर्ब्रह्मवादिनः, प्रजापतय एव, तस्य किँ हविरित्यात्मैव। काठ २२, ८; क ३५, २।

४. देवा मा वेदन्निति वा अग्निश्चीयते। य एवं विद्वानेतं चिनुते विदुरेनं देवाः। क ३५, १।

५. नाग्निं चित्वा रामामुपेयादयोनौ रेतो धास्यामीति, न द्वितीयं चित्वाऽन्यस्य स्त्रियमुपेयान्न तृतीयं चित्वा कांचनोपेयात्। तैसं ५, ६, ८, ३-४।

६. प्रजापतिर्वा एतमग्रेऽग्निमचिनुतर्तुभिस्संवत्सरं वसन्तेन पूर्वार्धं, ग्रीष्मेण दक्षिणं पक्षं, वर्षाभिरुत्तरं, शरदा पुच्छ ँ, हेमन्तेन मध्यम्। काठ २२, ४।

७. ब्रह्मणा वावास्य तत् पूर्वार्धमचिनुत, क्षत्रेण दक्षिणं पक्षं, विशोत्तरं, पशुभिः पुच्छमाशया मध्यम्। काठ २२, ४।

८. य एवं विद्वानग्निं चिनुते, भूयानेव भवत्यभीमाँल्लोकाञ्जयति, विदुरेनं देवा अथो एतासामेव देवताना ँ सायुज्यं गच्छति। तैसं ५, ७,५, ७।

९. या ँ समामग्निं चिन्वन्ति ग्राहुका स्तेनं भवन्ति। क ३०, ८।

१०. योऽग्निं चित्वा नर्ध्नोति, स पुनश्चितिं चिनुते। तैसं ५, ४,१०, ५।

११. वयसां वा एष प्रतिमया चीयते यदग्निः। तैसं ५, ५,३, २।

१२. विराज्यग्निश्चेतव्यः। काठ २०, ५।

१३. सप्त मा पुरुषा उप जीवानिति वा अग्निश्चीयते। त्रयः प्राञ्चस्त्रयः प्रत्यञ्च आत्मा सप्तमः। तैसं ५, ५, २, ३।

१४. स्वर्गाय वै लोकायाग्निश्चीयते। काठ २२, ७।

१५. हविष्कृतो वा एष योऽग्निं चिनुते, यथा वै हविः स्कन्दत्येवं वा एष स्कन्दति योऽग्निं चित्वा स्त्रियमुपैति। तैसं ५, ७, ६,५।

**अग्नि-चित्-**

१. अग्निचिता स्त्री नोपेत्या। मै ३,३,१।

२. अग्निचितो नाश्लीलं कीर्तयेत्। क ३०,८।

३. अग्निचित् सर्वमायुरेति। तैसं ५,६,३,१।

४. अग्निचिद् वर्षति न धावेदवरुद्ध ँ ह्यस्यान्नम्। तैसं ५,४,९,२।

५. अग्निचिन् नाभिचरितवै। तैसं ५,६,३,१।

६. अग्निचिन्मनुष्याणाम् (अभिषिक्तः)। तैसं ५,४,९,२।

७. शते शते संवत्सरेष्वग्निचित्कामममश्नाति कामं न। माश १०,१,५,४।

८. सप्त पुरुषानभ्यग्निचिदन्नमत्ति त्रीन् परस्तात् (पुरस्तात् [क.]) त्रीनवस्ताद् (°नधस्ताद् [क.]) आत्मा सप्तमः। काठ २०,३; क ३१,५।

**अग्नि-चित्या-**

सर्वं वा अग्निचित्या। कौ १९,५;७।

**अग्नि-ज,जा-**

१. अग्निज ँ (°जा वै [काठ.]) हिरण्यम्। मै ३,७,५; काठ ११,८।

२. अग्निजा अजाः। काठ २४,६।

**अग्नि-जिह्व-**

ये अग्निजिह्वाः'''ते नो देवाः'''सुहवाः शर्म यच्छत। ऐआ ५,१,१।

**अग्नि[,ग्नी]ध्-**

१. अग्नित्पण्डको (°ग्नी° [क.])भावुकः। काठ २८,८; क ४४,८।

२. अग्निधं (ऋत्विजम्) वृणीते पङ्क्तिं तच्छन्दसां वृणीते। काठ २६,९।

३. अग्नीत्पत्नीषु रेतो धत्ते। गो २,४,५।

४. अग्नीद् रौहिणौ पुरोडाशावधिश्रय। तैआ ४,४,१।

५. अग्नीद् वै पात्नीवतस्य (ग्रहस्य) यजति। मै १,९,८।

६. अच्युतपाजा (यज्ञमुखं वा [मै., गो.]) अग्नीत्। मै १,६,४; ४, ८, ३; गो २, ३, १८; तैआ ३,५,१।

७. अनड्वाहमग्नीधे (ददाति)। तैसं १, ८,१८,१; तै १,८,२,५।

८. तदग्नयऽआग्नीध्रं कुर्वतेऽददात्तस्मादप्येतर्ह्यग्नीधे हिरण्यं दीयते। माश ४, ३,४,२४।

९. त्वष्टाग्नी (°ग्नि [काठ.] )त्। मै १,९,१; काठ ९,८; तैआ ३,३,१।

१०. पुंश्चलूमग्नीत् स्त्रीणां नेष्टा। मै ४,५,४।

११. यदग्नीधम् (वृणीते) अतिछन्दसं तत् (वृणीते)। मै ३,९,८।

१२. यद्गुदङ्ङग्निधे च यजमानाय च पशुभ्योऽकं स्यात्। काठ ३५,१८।

१३. रुद्रो (वैष्णवो [तैसं.]) अग्नीत्। तैसं ७,१, ५, ७; मै १,९,१; काठ ९,८; क ८, ११; तैआ ३,२,१।

१४. विज्ञातम् ( श्रोत्रम् [तैआ.]) अग्नीत्। मै १,९,१; काठ ९, ८; ११; क ८, ११; ऐ ५, २५; तैआ १०,६४।

आग्नीध्र-

१. अथ यदि यजुष्टः (यज्ञो भ्रेषं नीयात्) भुवस् स्वाहेत्याग्नीध्रे जुहवाथ। जै १,३५८।

२. अन्तरिक्षं ज्योतिरित्याग्नीध्रात्तेन (रुद्रमवयजति)। मै ३,९,४।

३. अन्तरिक्षम् (+वा [माश.]) आग्नीध्रम् (°ध्रे [काठ ३४, १४])। काठ २१, ८; तै २,१,५,१; माश ९,२,३,१५।

४. अयजुषाग्नीध्रम् (मिनोति), अनिरुक्तमिव ह्यन्तरिक्षम्। मै ३,८,९।

५. असदिव वा अन्तरिक्षम्, अन्तरिक्षमिवाऽऽग्नीध्रम्। तैसं ५,४,६,४।

६. आग्नीध्रमन्तरिक्षात् (°रिक्षे [मै.]) । मै ३, ८, १; काठ २४, १०; क ३८,३।

७. आग्नीध्रेणान्तरिक्षम् (अभ्यजयन् देवाः)। मै ३,९,१; क ४०,५।

८. आग्नीध्रे ह्यधारयंत यदाग्नीध्रेऽधारयन्त तदाग्नीध्रस्याग्नीध्रत्वम्। ऐ २,३६।

९. आग्नेय्याग्नीध्रम् (उपचरति)। मै ४,६,५।

१०. आग्नेय्याग्नीध्रे (जुहोति), अन्तरिक्षं तेन (आक्रमते)। मै ४,८, ३।

११. एतद्वै यज्ञस्यापराजितं यदाग्नीध्रम्। तैसं ६,४,२,६।

१२. ग्रीवा (पृष्ठम् [मै.]) आग्नीध्रम्। मै ३,८,८;४,५,९; काठ २५,१०; क ४०,३।

१३. घर्म या तेऽन्तरिक्षे शुग् या त्रैष्टुभे छन्दसि या राजन्ये याऽऽग्नीध्रे तां त एतेनावयजे। तैआ ४,११,१।

१४. त्रैष्टुभम् ( तदेतदनार्तं यत् [काश.] ) आग्नीध्रम्। मै ३, ४, ४; काठ २१,१२; काश ४,६,१,२७।

१५. द्यावापृथिव्यो वाऽएष यदाग्नीध्रः। माश १,८,१,४१।

१६. प्राचीनव ऽ शमाग्नीध्रम् (मिनोति), ऊर्ध्वं ऽ ह्यन्तरिक्षम् । मै ३,८,९ ।

१७. यदाग्नेय्याऽऽग्नीध्रे जुहोत्यन्तरिक्ष एवैनमाक्रमयति । क ४४,४ ।

१८. वसन्त आग्नीध्रस्तस्माद्वसन्ते दावाश्चरन्ति तद्ध्यग्निरूपम् । माश ११, २, ७,३२ ।

१९. विश्वेषां देवानामाग्नीध्रे ( सोमः ) । काठ ३४,१५ ।

[°ध्र- अग्नि- ९३ द्र.] ।

आग्नीध्रीय-

१. बाहूऽएवास्य ( यज्ञस्य ) आग्नीध्रीयश्च मार्जालीयश्च । माश ३, ५, ३, ४ ।

२. बाहू ( पुरुषस्य ) मार्जालीयश्चाग्नीध्रीयश्च । कौ १७, ७ ।

## अग्नि-धान-

पाण्योर्लोम नास्त्यग्निधान ऽ ह्येतत् । काठ ६, २ ।

## अग्नि-नेत्र-

ये देवाः पुरःसदो अग्निनेत्राः······( ते नोऽवन्तु ) । तैसं १,८,७,१; मै २, ६,३; ४,३,४ ।

## अग्नि-मुख-

तस्माद्देवा अग्निमुखा अन्नमदन्ति । माश ७,१,२,४ ।

## अग्नि-रूप-

तान्येतान्यष्टौ अग्निरूपाणि[1] । कुमारो[2] नवमः । माश ६, १,३, १८ ।

## अग्नि-रेतस्-

समानजन्म वै पयश्च हिरण्यञ्चोभय ऽ ह्यग्निरेतसम् । माश ३, २, ४, ८ ।

## अग्नि-ष्टुत्-

१. ज्योतिष्टोमेनाग्निष्टुता यज्ञविभ्रष्टो यजेत । तां १७, ८, १ ।

२. तेन ( अग्निष्टुता ) एनम् (इन्द्रम् ) अयाजयत्तेनास्याश्लीलां वाचमपाहन् । तां १७,५,१ ।

३. योऽपूत इव स्यादग्निष्टुता यजेताग्निनैवास्य पाप्मानमपहत्य त्रिवृता तेजो ब्रह्मवर्चसं दधाति । तां १७, ५, ३ ।

४. सप्तदशेनाग्निष्टुतान्नाद्यकामो यजेत । तां १७, ९, १ ।

५. स य उक्तोक्तः स्याद् योऽभ्याख्यायेत स एतेन ( अग्निष्टुता ) यजेत । जै २, १३४ ।

६. स यो मुखेन पापं कृत्वा मन्येत, त्रिवृताग्निष्टुता ( एकाहेन ) यजेत, एष ह वै मुखेन पापं करोति योऽवाद्यं वदति । जै २,१३५ ।

---

१. रुद्रः, सर्वः ( =शर्वः ), पशुपतिः, उग्रः, अशनिः, भवः, महान्देवः, ईशान इति ।

२. रुद्रपुत्रोऽग्निपुत्रश्च ।

अग्नि-ष्टोम-

१. अग्निप्रतिष्ठानो ह्यग्निष्टोमः। काठ १४, ९।
२. अग्निर् (+वा [माश.]) अग्निष्टोमः। ऐ ३, ४१; माश ३, ९, ३, ३२।
३. अग्निर्वा एष वैश्वानर उपावसृज्यते यदग्निष्टोमः। क ४०, ४।
४. अग्निर्वै पूर्वोऽग्निष्टोमस्सूर्य उत्तरः। काठ ३४, ८।
५. अग्निष्टोमाद् (चातुर्मास्यानाम्) वैश्वदेवं यज्ञक्रतुं निर्माय प्रजापतिः प्रजा असृजत। मै १, १०,५; काठ ३५,२०; क ४८, १८।
६. अग्निष्टोमेन वै देवा इमं लोकम् (भूलोकम्) अभ्यजयन्। तां ९,२,९; २०,१,३।
७. अग्निष्टोमो विषुवान्। जै २, ५०।
८. अग्निष्टोमो वै संवत्सरः (यज्ञानां मुखम् [कौ.])। ऐ ४, १२; कौ १९, ८।
९. अन्तो (ज्योतिर् [कौ.]) वा अग्निष्टोमः। काठ २६, १; क ४०, ४; कौ २५,९।
१०. अयमेवाग्निष्टोमो योऽयं (वायुः) पवते। जै २, ४९।
११. अस्मिन्नेव (पृथिवी-) लोकेऽग्निष्टोमेन प्रतितिष्ठति। काठ १४, ९।
१२. आग्नेयो हि (आत्मा वा [तां.]) अग्निष्टोमः। मै ३, ९, ५; तां १९, ५, ११।
१३. इममेव लोकं पशुबन्धेनाभिजयति। अथो अग्निष्टोमेन। तै ३, १२, ५, ६।
१४. एतावान् वै (वाव [जै.]) यज्ञो यावानग्निष्टोमः। तैसं ५,४,१०,२; काठ २२, १; २८, १; क ४४,१; जै १, १७९; तैआ ५, ६, ३।
१५. एष वाव यज्ञानां विषुवान् यदग्निष्टोमः। जै २, ४९।
१६. एष वाव यज्ञो यदग्निष्टोमः, एकस्मा अन्यो यज्ञः कामायाह्रियते सर्व्वेभ्योऽग्निष्टोमः। तां ६, ३, १-२।
१७. एष वै यज्ञः स्वर्ग्यो यदग्निष्टोमः। तां ४, २, ११।
१८. एषा वै (वाव [तां.]) यज्ञस्य मात्रा यदग्निष्टोमः। मै ३, ४, ४; तां २०, ११, ८।
१९. कनीनिके अग्निष्टोमौ। तैसं ७, २, ९, १; तां १०, ४, २।
२०. चक्षुषी वा एते यज्ञस्य यदतिरात्रौ, कनीनिके अग्निष्टोमा इति। तैसं ७,२,९,१; काठ ३४,८।
२१. ज्येष्ठयज्ञो वा एष (+प्रजापतियज्ञः [जै.]) यदग्निष्टोमः। जै १, ६७; तां ६, ३, ८।
२२. ज्योतिर्वा एषोऽग्निष्टोमो ज्योतिष्मन्तं पुण्यं लोकञ्जयति य एवं विद्वानेतेन यजते। तां १९, ११,११।
२३. तद्धैतदग्निहोत्रं त्र्यहमेव पयसा जुहुयात्। तद्वा अग्निष्टोमस्य रूपम्। जै १, ३८।
२४. तस्य (अग्निष्टोमस्य) वा एतास्तन्वो यद् धिष्ण्याः। मै ३, ८, १०।

२५. त्रिवृद् ( वैश्वानरः [काठ.]) अग्निष्टोमः । काठ ३४,१६; ष ३,९ ।

२६. द्वादशस्तोत्राण्यग्निष्टोमः । तां ९, १, २४ ।

२७. द्वादशाग्निष्टोमस्य ( °ष्टोमे [मै.] ) स्तोत्राणि । मै ४, ५, ४; तां ४,२,१२; तै १, २,२, १ ।

२८. पुरुषसंमितो वाऽअग्निष्टोमः । माश ३,९,३,३२ ।

२९. प्रतिष्ठा (ब्रह्मवर्चसं [काठ., तै.]) वा अग्निष्टोमः । काठ ३७,७; कौ २५,१४; तै २,७,१,१ ।

३०. ब्रह्म ( यज्ञमुखं [मै., तां., तै.] ) वा अग्निष्टोमः । मै ४, ४, १०; कौ २१, ५; जै १, २०७; तां १८, ८, १; तै १, ८, ७, १; शांआ २, १८ ।

३१. यदाग्निष्टोममास्ते प्राणस्यैवास्यान्तं गच्छति, सर्वमायुरेति । क ४४, १ ।

३२. यमराज्यं वा अग्निष्टोमेनाभिजयति । मै १, ८, ६ ।

३३. यो ( +ह [गो.]) वा एष ( सूर्यः ) तपत्येषोऽग्निष्टोम एष साह्नः । ऐ ३, ४४; गो २,४,१० ।

३४. विराड् ( वीर्यं [तां.] ) वा अग्निष्टोमः । कौ १५, ५; तां ४,५,२१ ।

३५. संवत्सरो वा अग्निष्टोमः । मै ३, ८,१०; ४,५,७; काठ २६, १; क ४०, ४ ।

३६. स एष वा अग्निष्टोमो य एष (सूर्यः) तपत्येष इन्द्र एष प्रजापतिरेष एवेदं सर्वम् । जै १, ३१४ ।

३७. स वा एष संवत्सर एव यदग्निष्टोमश्चतुर्विंशत्यर्धमासो वै संवत्सरश्चतुर्विंशतिरग्निष्टोमस्य स्तुतशस्त्राणि, तं यथा समुद्रं स्रोत्या एवं सर्वे यज्ञक्रतवोऽपियन्ति । ऐ ३,३९ ।

३८. स वा एषोऽग्निरेव यदग्निष्टोमस्तं यदस्तुवंस्तस्मादग्निस्तोमस्तमग्निस्तोमं संतमग्निष्टोममित्याचक्षते परोक्षेण परोक्षप्रिया इव हि देवाः । ऐ ३, ४३ ।

३९. सोऽग्निष्टोमेन वसूनयाजयत् त इमं ( पृथिवी- ) लोकमजयन् । तैसं ७,१,५,३ ।

अग्निष्टोम-स्तोम-

प्राण एवाग्निष्टोमस्तोमः । जै २,४९ ।

अग्नि-ष्ठ-

आत्मा वा अग्निष्ठः । काठ २९,८ ।

अग्नि-ष्ठा-

यजमानो ( +वा [मै., माश.]) ऽग्निष्ठाः । मै ३,९,३; काठ २६,५; क ४१, ३; माश ३,७,१, १३;१६ ।

अग्नि-ष्वात्त (पितृ)-

यदग्निष्वात्तान् (यजति) गृहमेधिनस्तत् । मै १,१०,१८; काठ ३६, १३ ।

अग्नि-होत्र-

१. अग्नये चैव सायं (जुहोमि), प्रजापतये चेत्यब्रवीत्, सूर्याय च प्रातः प्रजापतये चेति। काठ ६,६।

२. अग्नये वा एतद् (अग्निहोत्रं) धृत्यै गुप्त्यै हूयते, यत् सायं जुहोति राज्यै तेन दाधार, यत्प्रातरह्ने तेन। मै १,८,१।

३. अग्निहोत्रं वै दशहोतुर्निदानम्। तै २,२,११,६।

४. अग्निहोत्रं वैश्वदेवमुच्यते। काठ ६,५।

५. अग्निहोत्रं (+ वै [मै.]) दशहोता। मै १,९,५; काठ ९,१३।

६. अग्निहोत्रेण वै देवाः स्वर्गं लोकमायन्। काठसंक ५६।

७. अग्निहोत्रे वै सर्वे यज्ञक्रतवः। मै १,८,६।

८. अग्निहोत्रेऽश्वमेधस्याप्तिः। काश ३,१,८,२।

९. अग्निहोत्रे स्वाहाकारः। मै १,८,१।

१०. अग्नेर्वै गुप्त्या ऽग्निहोत्रꣳहूयते, यत्सायं जुहोति तेनैनं रात्र्यै रमयति, यत्प्रातस्तेनाह्ने। काठ ६,१; क ३,१२।

११. अग्नेर्हुतादजनीति। तदग्निहोत्रस्याग्निहोत्रत्वम्। तै २,१,६,३।

१२. अथ ह ततः पुराऽहोरात्रे संश्लिष्टे एवासतुरव्याकृते, ते उ अग्निहोत्रेण एव व्याकृते। जै १,२१२।

१३. अन्नं वा अग्निहोत्रम्। जै १,६।

१४. अस्तः सूर्ये निम्रुक्ते सायमग्निहोत्रं जुहुयात। उपोदय ꣳ सूर्यस्य प्रातः। काठ ६, ५; क ४,४।

१५. असꣳस्थितो वा एष यज्ञो यदग्निहोत्रम्। तै २,१,४,९।

१६. आयुषे कमग्निहोत्रꣳहूयते सर्वमायुरेति य एवं वेद। मै १,९,५; काठ ९,१३।

१७. इध्मो वा एषोऽग्निहोत्रस्य यत् समित्। काठ ६,५।

१८. उद्भूतिर्वा एतत् प्रभूतिर्यदग्निहोत्रम्। काठ ६,७।

१९. एतद्वै जरामर्यꣳ सत्रं यदग्निहोत्रं (°मर्यमग्निहोत्रं सत्रं [तैआ.]; + जरया वा ह्येवास्मान्मुच्यन्ते मृत्युना वा [माश.])। माश १२,४,१,१; तैआ १०,६४।

२०. एषा (°ष [तै.]) वा अग्निहोत्रस्य स्थाणुर्या (यत् [तै.]) पूर्वाहुतिः (+तामतिहाय जुहुयात् [क.])। क ४,४; तै २,१,४,२।

२१. किं देवत्यमग्निहोत्रमिति वैश्वदेवमिति ब्रूयात्। तै २,१,४,६।

२२. किमिति (अग्निहोत्रम्) पय एवेति। यत्पयो न स्यात् केन जुहुया इति व्रीहियवाभ्यामिति यद् व्रीहियवौ न स्यातां केन जुहुया इति या अन्या ओषधय इति यदन्या ओषधयो न स्युः

केन जुहुया इति या आरण्या ओषधय इति यदारण्या ओषधयो न स्युः केन जुहुया इति वानस्पत्येनेति यद्वानस्पत्यं न स्यात्केन जुहुया इत्यद्भिरिति यदापो न स्युः केन जुहुया इति। स होवाच। न वाऽइह तर्हि किं चनासीदथैतदहूयतैव सत्य ँ श्रद्धायामिति। माश ११,३,१,२-४ (तु. जै १,१९)।

२३. गौर्वा (ऋतं वै सत्यम् [मै.]) अग्निहोत्रम्। मै १,८,७; तै २,१,६,३।

२४. घर्मो वा एष प्रवृज्यते यदग्निहोत्रम्। काठ ६,३।

२५. तदेतत् प्राजापत्यं (वैश्वदेवं) यदग्निहोत्रम्। जै १,६।

२६. तदेतद्वैराजं दशविधमग्निहोत्रं भवति, तस्य प्राण एवाहवनीयोऽपानो गार्हपत्यो व्यानोऽन्वाहार्यपचनो मनो धूमो मन्युरर्चिर्दन्ता अङ्गाराश्श्रद्धा पयो वाक् समित् सत्यमाहुतिः प्रज्ञात्मा स रसः। शांआ १०,८।

२७. तद्यद्दीक्षोपसत्सु स्वाहेति व्रतयति तेनास्य दीक्षोपसत्स्वनन्तरितमग्निहोत्रं भवति। यदुपां ँ श्वन्तर्यामावुदितेऽन्यं जुह्वत्यनुदितेऽन्यं, तेन सुत्यायाम्। जै २,३८।

२८. तद् वा अपराजितं यदग्निहोत्रम्। न ह वै पराजयते य एवं वेद। जै १,४।

२९. तद्वै तदग्निहोत्रं ऽयहमेव दध्ना (अद्भिः, आज्येन) जुहुयात्। तद्वै वाजपेयस्य (पुरुषमेधस्य, अश्वमेधस्य) रूपम्। जै १,३८।

३०. तस्मादपत्नीकोऽप्यग्निहोत्रमाहरेत्। ऐ ७,९।

३१. तस्मादाहुः प्राणोऽग्निहोत्रमिति। जै १,२०।

३२. त्रयोऽग्निहोत्रे स्थाणव इति ह स्माह शाण्डिल्यः। यदप्रदीप्तायां समिधि जुहोति स स्थाणुः। यदेनामपराध्नोति स स्थाणुः यदेने संसृजति स स्थाणुः। जै १,२१।

३३. दीर्घसत्त्रं ह वा एत उपयन्ति येऽग्निहोत्रं जुह्वति। एतद्ध वै सत्त्रं जरामूरीयम्। जरया वा ह्येवास्मान्मुच्यते मृत्युना वा। जै १,५१।

३४. दुग्धेन सायं प्रातरग्निहोत्रं जुहुयात्। कौ ४,१४।

३५. द्विर्ह्यग्निहोत्र ँ हूयते (जुह्वति [क.])। मै ३,६,१०; क ३६,४।

३६. न राजन्यस्याग्निहोत्रमस्त्यव्रत्यो हि स हन्ति व्रतम्। काठ ६,६; क ४,५।

३७. न वै किलान्यत्राग्निहोत्राल्लोकजित्या अवकाशोऽस्ति। जै १,४४।

३८. नौर्ह वाऽएषा स्वर्ग्या। यदग्निहोत्रं तस्याऽएतस्यै नावः स्वर्ग्याया आहवनीयश्चैव गार्हपत्यश्च नौमण्डे ऽअथैष एव नावाजो यत्क्षीरहोता। माश २,३,३,१५।

३९. प्रजननं वा एतद् यदग्निहोत्रम्, अग्निः प्रजनयिता। काठ ६,७।

४०. प्राजापत्यम् (तदेतदपर्यन्तं यद् [जै १,४]) अग्निहोत्रम्। जै १, ६०; माश १२, ४,२,१।

४१. प्राण एव (ब्रह्म वा [जै.]) अग्निहोत्रम् । जै १, ५; माश ११, ३, १, ८ ।

४२. ब्रह्माजुहोत् सत्यमजुहोदमुमेव तदादित्यमजुहोदेष ह्येवाग्निहोत्रम् । काठ ६, १ ।

४३. ब्राह्मणस्यैव ( अग्निहोत्रम् ) होतव्यम्···अथो य ऋतमिव सत्यमिव चरेत् तस्य होतव्यमनुसन्तत्यै । मै १,८, ७ ।

४४. भूर्भुवः स्वरग्नौ ज्योतिर्ज्योतिरग्ना इत्यग्निहोत्रं जुहुयात् । काठ ६,७ ।

४५. मुखं वाऽएतद्यज्ञानां यदग्निहोत्रम् । माश १४, ३, १,२९ ।

४६. यज्जुहोति तद्देवानाम् । यन्निमार्ष्टि तत्पितॄणाम् । यत् प्राश्नाति तन्मनुष्याणाम् । तस्मादग्निहोत्रं वैश्वदेवमुच्यते । क ४, ४ ।

४७. यज्ञमुखं वाऽअग्निहोत्रम् । तैसं १,६,१०,२.

४८. यत्पयसाग्निहोत्रं जुहोत्यमुमेव तदादित्यं जुहोति । क ४, २ ।

४९. यदग्निहोत्रमासीत्तद् व्रतमुपाय ँ स्तस्माद्द्वि- ( °द् द्वि- ) व्रतेन भवितव्यम् । मै ३,६,१० ।

५०. यदि पयो न विन्देदाज्येन (अग्निहोत्रं ) जुहुयात् तद्ध्यप्रतिवेक्यमपशव्यमीश्वरमस्याशान्त ँ शुचा पशून्निर्दहः । काठ ६, ३ ।

५१. यदि पयो न विन्देद्यवाग्वा ( अग्निहोत्रं ) जुहुयात् तद्धि प्रतिवेक्य ँ शान्तं मिथुनं पशव्यमापश्च तण्डुलाश्च । काठ ६, ३; क ४, २ ।

५२. यद्यवाग्वाग्निहोत्रं जुहोत्यमुमेव तदादित्यं जुहोत्येष (आदित्यः) ह्येवाग्निहोत्रम् । काठ ६,३ ।

५३. यर्ह्ययं ( रुद्रः ) देवाः ( देवः [क.] ) प्रजा अभिमन्येत सजूर्जातवेदो दिवा पृथिव्या हविषो वीही स्वाहेति द्वादश रात्रीरग्निहोत्रं जुहुयात् । काठ ६, ७; क ४, ६ ।

५४. यवाग्वैव सायंप्रातरग्निहोत्रं जुहुयात् । कौ ४, १४ ।

५५. योऽग्निहोत्रं जुहोति स हविष्मान् । मै १, ८, ६ ।

५६. रेतो वा एतद् (+ वाजिनमाहिताग्नेः [तै.]) यदग्निहोत्रम् । काठ ६, ७; तै ३, ७, ३, ६ ।

५७. रौद्रं गवि ( पयः ) वायव्यमुपसृष्टम् आश्विनं दुह्यमानम् अग्नीषोमीयं दुग्धं पौष्णाः ऐन्द्रश्चो मैत्रश्शरो वारुणमधिश्रितं वैष्णवं प्रतिष्ठाप्यमानं वैश्वदेवमुन्नीतं सवितुः प्रक्रान्तं द्यावापृथिव्योरुपसन्नम् इन्द्राग्न्योः पूर्वाहुतिः प्रजापतेरुत्तरा । तदेतत्सप्तदशमग्निहोत्रम् । जै १, २१ ।

५८. वत्सो वा अग्निहोत्रस्य प्रायणम् । अग्निहोत्रं यज्ञानाम् । तै २, १,५, १ ।

५९. सददि वा एष ददाति योऽग्निहोत्रं जुहोति । मै १, ५, १२ ।

६०. स यो हैवं विद्वानग्निहोत्रं च जुहोति दर्शपूर्णमासाभ्यां च यजते मासि मासि हैवास्याश्वमेधेनेष्टं भवति । माश ११, २, ५, ५ ।

६१. सर्वस्मात्पाप्मनो निर्मुच्यते स य एवं विद्वानग्निहोत्रं जुहोति । जै १, ९ ।

६२. सर्वाभ्यो वा एष देवताभ्यो जुहोति योऽग्निहोत्रं जुहोति । तै २, १, ८, ३ ।

६३. सायमहुतेऽग्निहोत्रेऽग्निहोत्रिणा नाशितव्यं···प्रातरहुते नाशितव्यम् । मै १, ५,७ ।

६४. सूर्यो ह वा ( हविर्वा एतद् यद् [काठ.] ) अग्निहोत्रम् । काठ ६, ४; माश २, ३,१,१ ।

६५. सृष्टिर् (स्वर्ग्यं [माश.]) वा एतद्यदग्निहोत्रम् । काठ ६, ७; माश १२, ४, २, ७ ।

६६. सोऽमृतत्वं गच्छति य एवं विद्वानग्निहोत्रं जुहोति । जै १, २ ।

६७. होत्रा वै देवेभ्योऽपाक्रामन्नग्निहोत्रे भागधेयमिछमाना यदग्निहोत्रमित्याह तेन होत्रा आभजति तेनैना भागिनीः करोत्येषा वा अग्नेऽग्ना आहुतिराहूयत तदग्निहोत्रस्याग्निहोत्रत्वम् । मै १ ८,१ ।

[°त्र- अग्निष्टोम- २३ द्र.] ।

### अग्निहोत्र-तपनी-

तस्माद्चक्रवृत्तामग्निहोत्रतपनीं कुर्यात् । क ४, २ ।

### अग्निहोत्र-स्थाली-

इयम् ( पृथिवी ) एवाग्निहोत्रस्थाली । जै १, ६०; माश १२, ४, १, ११ ।

### अग्निहोत्राहुति-

सायंप्रातर्ह्यग्निहोत्राहुती जुह्वति । माश १०, १, ५, २ ।

### अग्निहोत्रिन्-

१. ओषधीर्वा इमा रुद्रा विषेणाञ्ज ऽ स्ताः पशवो नालिशन्त······उत बह्वीराहुतयो हूयन्ते, ता अग्निनान्त्रवाकरोत्, ता अस्त्रदयत्, ताः पुनर्णवा अजायन्तैतर्हि खलु वा अग्निहोत्रिणे दर्शपूर्णमासिने सर्वा ओषधयः स्वदन्ते । मै १, ८, ४ (तु. माश २, ४, ३,२-३) ।

२. प्रजापतिस्ताः (विषलिप्ता ओषधीः ) अग्निनोपासृजत्ता अग्निरस्वदयदेतस्यां वा ( समिधि ) आहितायामग्निहोत्रिणे वीरुधस्स्वदन्ति । काठ ६, ५ ।

३. यद्यत्कामयेत तत्तदग्निहोत्र्यग्निं याचेदुप हैनं तन्नमति । मै १,५,१२ ।

### अग्निहोत्री-

१. इयं ( पृथिवी ) वा अग्निहोत्री । तै १, ४,३,१ ।

२. द्यौर्वा अग्निहोत्री तस्या आदित्य एव वत्सः । जै १, ६० ।

३. वाग्घ वा ( द्यौर्वा [माश १२,४,१,११]) ऽएतस्याग्निहोत्रस्याग्निहोत्री । माश ११,३, १, १ ।

४. वाग्वा अग्निहोत्री । जै १, १९ ।

## अग्नी-वरुण->आग्निवारुण-

आग्निवारुणमेकादशकपालमनु निर्वपेत् । तैसं १,५, २,५ ।

## अग्नी-षोम-

१. अग्निनैवान्नमवरुन्धे, सोमेनान्नाद्यम् , अन्नवानेवान्नादो भवति । तैसं ३,४,३,३ ।

२. अग्नीषोमयोरयाट् प्रिया धामानीत्युपा ऽ श्वनिरुक्तं तेनावरुन्धे, अग्नीषोमयोरयाट् प्रिया धामानीत्युच्चैर्निरुक्तं तेनानिरुक्तं च वा इदं निरुक्तं च, तस्यैवोभयस्यावरुद्ध्यै । काठ ३२, १ ।

३. अग्नीषोमयोरहं देवयज्यया चक्षुष्मान् भूयासम् । तैसं १,६,२,३ ।
४. अग्नीषोमयोर्भासदौ (०योः षष्ठी [मै ३.१५,४]) । मै ३,१५, ६ ।
५. अग्नीषोमयोर्वा एतद् भागधेयं यत् पौर्णमासम् (हविः) । काठ ७,५ ।
६. अग्नीषोमा इम ँ सु मे शृणुतं वृषणा हवम् । काठ ४,१६ ।
७. अग्नीषोमा एवाग्र आज्यभागौ यजन्ति । काठ ८,१० ।
८. अग्नीषोमाभ्यां यज्ञश्चक्षुष्मान् । काठ ५, १ ।
९. अग्नीषोमाभ्यां वा इन्द्रो वृत्रमहन् । तैसं १, ६, ११, ६; तै १, ६, १, ६ ।
१०. अग्नीषोमाभ्या ँ वा एष मेधायात्मानमालभते (आत्मानं मेधायालभते [क.]) यो दीक्षते, स वा एतेनैव पशुनात्मानं निष्क्रीणीते । मै ३, ७,८; क ३७, ८ ।
११. अग्नीषोमाभ्यां वै वीर्येणेन्द्रो वृत्रमहन् । मै २,१,३;४,३,१; काठ २४,७;३२,१; क ३७,८ ।
१२. अग्नीषोमाभ्यां चाषान् ( आलभते ) । मै ३, १४, ४ ।
१३. अग्नीषोमाविदं सर्वं यदन्नं चान्नादश्च, सोमो ऽन्नमग्निरन्नादः । काठसंक १४० ।
१४. अग्नीषोमा सवेदसा …सं देवत्रा बभूवथुः । तै ३, ५, ७, २ ।
१५. अग्नीषोमौ परमां काष्ठामगच्छताम् । तैसं १, ६, ९. २ ।
१६. अग्नीषोमौ प्रथमौ वीर्येण वसून् रुद्रानादित्यानिह जिन्वतम् । तैसं ३, ५, १, २ ।
१७. अग्नीषोमौ वृत्रहणौ (°मौ वै यज्ञस्य चक्षुषी [काठ ३२,१] ) । काठ ५, १ ।
१८. अग्नीषोमौ वै देवाना ँ सयुजौ ( मुखम् [गो.] ) । गो २,१,२०; माश ३, ४,४, ९ ।
१९. अग्नीषोमौ वै ब्रह्मवर्चसस्य प्रदातारौ । मै २, १,४; काठ १०, २ ।
२०. अग्नीषोमौ वै ब्राह्मणस्य स्वा देवता, ता एव भागधेयेनोपधावति, ता अस्मै सर्वान् कामान् प्रयच्छतः । काठ १०, २ ।
२१. अथ यदग्नीषोमौ प्रथमौ देवतानां यजति दार्शपौर्णमासिके वा एते देवते । कौ ५, २ ।
२२. अथेन्द्रोऽघृतश्शिथिल इवामन्यत सो (अग्नीषोमौ) ऽन्वागच्छत्, सोऽग्नौ चैव सोमे चानाथत, तमेतयेष्ट्याऽयाजयतामग्नीषोमीयेणैकादशकपालेन । काठ १०, २ ।
२३. अयाडग्निरग्नेः… इति ब्रह्मवर्चसं तेनावरुन्द्धे, सोमस्यायाट्… इति क्षत्रं तेन । काठ ३२,१ ।
२४. अहोरात्रे वा अग्नीषोमौ । कौ १०, ३ ।
२५. चक्षुषी (+वा [मै.]) अग्नीषोमौ । मै ३, ७, १; ऐ १, ८ ।
२६. तयैवास्मिन् ( अग्नीषोमौ) तेज इन्द्रियं ब्रह्मवर्चसमधत्ताम् । तैसं २,३,३,१-२ ।
२७. तस्माद्यस्यै कस्यै च देवतायै हविर्निर्वपन्ति तत्पुरस्तादाज्यभागावग्नीषोमाभ्यां यजन्ति । माश १, ६, ३, १९ ।
२८. तस्मिन् ( इन्द्रे ) तेजोऽग्निरदधादिन्द्रिय ँ सोमस्तता इन्द्रोऽभवत् । मै २,१,४ ।

२९. तावग्नीषोमौ समभवताम्। तैसं २, ३, ३, १।

३०. प्राणापाना एवाग्नीषोमाभ्या ९सम्भरति। काठ २३, ८।

३१. प्राणापानावग्नीषोमौ। ऐ १, ८।

३२. भद्रा अग्नीषोमा भवतं नवेदसा। काठसंक ६१।

३३. मम वै युव ९स्थ इत्यब्रवीत् (इन्द्रोऽग्नीषोमौ)। तैसं २, ५,२,३।

३४. यस्मै कस्मै च देवतायै हविर्निर्वपन्ति तत्पुरस्तादाज्यभागावग्नीषोमाभ्यां यजन्ति, तन्न सौम्ये ऽध्वरे न पशौ, यस्मै कस्मै च देवतायै हविर्निर्वपानिति ह्यब्रुवन्। माश १,६, ३, १९।

३५. राजानौ वा एतौ देवतानां यदग्नीषोमौ। तैसं २,६,२,१-२।

३६. स (सोमः) गिरिमगच्छत्, तमग्निरन्वगच्छत्, तौ गिरा अग्नीषोमौ समभवतां, तस्मात्सदद्गि गिरा अग्निर्दहति, गिरौ सोमः। मै २, १, ४।

[°म-अग्नि- १०९ द]।

अग्नीषोमीय,या-

१. अग्नीषोमीयं वा एतद्धविर्यदग्नौकरणम्। काठसंक ५७।

२. अग्नीषोमीयं ९ हि पौर्णमास ९हविर्भवति। माश १, ८,३, २।

३. अग्नीषोमीयः (सोमः) पशौ। काठ ३४,१४।

४. अग्नीषोमीयमष्टाकपालं (°यमेकादश° [मै.]) निर्वपेत् (+श्यामाकं वसन्ता ब्राह्मणः [मै., काठ.]) ब्रह्मवर्चसकामः। तैसं २, ३, ३,३; मै २, १, ४; काठ १०,२।

५. अग्नीषोमीयमेकादशकपालं निर्वपेद्यं कामो नोपनमेत्। तैसं २,३,३,३।

६. अग्नीषोमीयमेकादशकपालम् (+ हिरण्यं दक्षिणा [तैसं.]; पुरोडाशं निर्वपति [माश.])। तैसं १,८,१, १-२; मै २,१,३; माश ५,२,३,७।

७. अग्नीषोमीयो वै पूर्वपक्षः (°मीयया पूर्वपक्ष उपतिष्ठेत [काठ.]। मै १, ५, ७; काठ ७, ५।

८. अग्नीषोमीयो वै ब्राह्मणो देवतया स्वामेव देवतां कामाय......उपासरत्। मै २, १,४।

९. द्विरूपा अग्नीषोमीयाः। मै ३, १३, ९।

१०. पौर्णमासं यज्ञमग्नीषोमीयं पशुमकुर्वत। तैसं ३, २, २, २-३।

११. यत्सोमः प्राजनयद्, अग्निरग्रसत, तस्मादग्नीषोमीया। तैसं ३, ४,३,२।

१२. योऽग्नीषोमीय उपा ९ शुयाजो हृदयमेवास्य (यज्ञस्य) स स यत्तेनोपा ९ शु चरन्ति तस्माद्धिदं गुहा हृदयम्...अथ योऽग्नीषोमीयः पुरोडाशो ऽयमेवास्य स सव्योऽर्धः। काश ३, २,१०,५।

अग्न्याधान-

१. अजातो वै तावत् पुरुषो यावदग्निं नाधत्ते, स वै तर्ह्येव जायते यर्ह्यग्निमाधत्ते। मै १,६,४।

२. प्रति प्रजया च पशुभिश्च तिष्ठति य एवं विद्वानग्निमाधत्ते। मै १, ६, १३।

अग्न्याधेय-

१. अग्न्याधेये सामानि न गीयन्ते । काठसंक २० ।

२. ब्रह्मणो वा एतदुदरणं यदग्न्याधेयम् । काठ ९, १५ ।

अग्न्युपस्थान-

१. ब्राह्मणस्पत्याभिरग्निमुपतिष्ठेत । लु १०३ ।

२. सायम् (अग्निम्) उपतिष्ठन्ते…प्रातर्नोपतिष्ठन्ते । मै १,५,७ ।

आग्नेय-

१. अर्धं वै पुरुषस्याग्नेयमर्धं वारुणम् । अस्थान्याग्नेयानि मांसानि वारुणानि । काठ १३,२।

२. आग्नेयं वा एतत्पयो यदजक्षीरम् । मै ३,१,८ ।

३. आग्नेयं वै हिरण्यम् । तैसं २, ३, २, ४; तै २, २, ५, २ ।

४. आग्नेय एककपालः (पुरोडाशः) । तां २१,१०,२३ ।

५. आग्नेयः कृष्णग्रीवः (कृष्णोऽजः [काठ ४८, ३ ]) । काठ ४८,१ ।

६. आग्नेयः पुरोडाशो भवति । माश २,४,४,१२ ।

७. आग्नेयं क्रतुमन्वाह तदिमं (भू-) लोकमाप्नोति । कौ ११,२;१८,२ ।

८. आग्नेयं (+वै [काठ ११,२; माश.]) घृतम् । मै १,१०,७; ३,७,५; काठ ३६,२; माश ७,४, १,४१; ९,२,२,३ ।

९. आग्नेयमजम् (प्रजापतिरालिप्सत) । माश ६,२,१,५ ।

१०. आग्नेयमष्टाकपालं सेनान्यो गृहे, हिरण्यं दक्षिणा । तैसं १,८,९,१ ।

११. आग्नेयमष्टाकपालं (पुरोडाशम्) निर्वपेत् । मै २,३,६; काठ ११,१ ।

१२. आग्नेयमेतच्छन्दो यद् गायत्री (ºमेतत्पात्रं यदुखा ([मै.]) । मै ३,१,८; जै १,३०३

१३. आग्नेयमेतद्देवतया यत्स्वारम् (ºमेतन्नक्षत्रं यत् कृत्तिकाः [काठ.]) । काठ ८,१; जै १,३०३।

१४. आग्नेयं पञ्चकपालमुदवसानीयं निर्वपेत् । तैसं ३,५,४,३ ।

१५. आग्नेयं (+वै [जैउ.]) प्रातःसवनम् । मै ४,५,९; जैउ १,१२,३,२ ।

१६. आग्नेयाः (+वै [काठ., क.]) पशवः । तैसं १,५,१,३; काठ २४,८; क ३८,१; तै १,१,४,३ ।

१७. आग्नेयानि वै पुरुषस्यास्थानि । मै २,५,२ ।

१८. आग्नेयो (+मैत्रो ब्राह्मणः [काठ.]) देवतया । काठ १२,१; जै १,६८ ।

१९. आग्नेयो (+वै [तैसं.]) ब्राह्मणः (+सौम्यो राजन्यः [तैसं.]) । तैसं २,१,२, ९; जै १,१८३; तां १५,४,८ ।

२०. आग्नेयो वा अजः (अनड्वान् [माश ७,३,२,१६; १३,८,४,६]) । मै ४,८,३; गो २,३,१९; माश ६,४,४,१५ ।

२१. आग्नेयो वै ब्राह्मणः (+गायत्रः ⌊काठ ९,१३⌋; देवतया सोमराजा ⌊काठ ८,१०⌋)। तैसं २, १, ५, ६; ३, ३, ३; तै २,७,३,१ ।

२२. आग्नेयो वै (वाव ⌊ऐ.⌋) सर्वः पशुः। मै ३,१०,३; ऐ २,६ ।

२३. आग्नेयोऽष्टकपालः पुरोडाशो भवति। माश २,५,१,८ ।

२४. आग्नेयोऽष्टाकपालः (+सेनान्यो गृहे हिरण्यं दक्षिणा ⌊मै.⌋)। मै २,६,५;४,३,८; काठ ९,४ ।

२५. आग्नेयो ( + वै ⌊तैसं., मै., तै., माश.⌋) होता ( वेणुः ⌊तैसं.⌋)। तैसं ५,२,५,२; मै ४,४,८; तां १८,९,९; तै १,७,६,१; ३,९,५,२; माश १३,२,६,९ ।

२६. आत्माऽऽग्नेयः (कृष्णाशीर्षाऽऽ°)। मै ४,७,८ ।

२७. इममेव (पृथिवी-) लोकमाग्नेयेन (आज्यस्तोत्रेण देवाः ) आजयन्। जै १,१०५ ।

२८. कृष्णग्रीव आग्नेयो ललाटे पुरस्तात्। मै ३,१३,२ ।

२९. कृष्णग्रीवा आग्नेयाः। मै ३,१३,७;१० ।

३०. तेज एवास्मिन् (इन्द्रे) अग्निराग्नेयेनादधादिन्द्रिय ९ सोमः सौम्येन। काठ १०, २ ।

३१. त्रिणिधनमाग्नेयं भवति प्रतिष्ठायै। तां १३,३,२१ ।

३२. दक्षिणतोऽग्र ओषधयः पच्यमाना आयन्ति। आग्नेया ह्योषधयः। काठ २३,८ ।

३३. दाश्यं यज्ञमाग्नेयं पशुमकुर्वत। तैसं ३,२,२,३ ।

३४. द्वयं वा इदं न तृतीयमस्ति। आर्द्रं चैव शुष्कं च यच्छुष्कं तदाग्नेयं यदार्द्रं तत्सौम्यम्। माश १,६,३,२३ ।

३५. प्रैवाग्नेयेन वापयति रेतः सौम्येन दधाति। तैसं २,४,६,१ ।

३६. यच्छुक्लं तदाग्नेयं यत्कृष्णं तत्सौम्यं यदि वेतरथा यदेव कृष्णं तदाग्नेयं यच्छुक्लं तत्सौम्यं ( रूपं ) यदेव वीक्षते तदाग्नेय ९ रूप ९ शुष्केऽइव हि वीक्षमाणस्याक्षिणी भवतः शुष्कमिव ह्याग्नेयं यदेव स्वपिति तत्सौम्य ९ रूपमार्द्रेऽइव हि सुषुपुषोऽक्षिणी भवत आर्द्र इव हि सोमः। माश १, ६, ३, ४१ ।

३७. यदष्टाकपालः ( पुरोडाशः ) तेनाग्नेयः। मै ३, ६, १; काठ १०, २ ।

३८. यदाग्नेयस्तेजस्तेनावरुन्द्धे। मै ४, ७, ३ ।

३९. यद् वही तेनाग्नेयः। मै ४, ३, १ ।

४०. यद्वै शुष्कं (+यज्ञस्य ⌊माश.⌋) तदाग्नेयं (+यद्धरितं तत् सौम्य ९, शुष्कं च वा इद ९ हरितं च तस्यैवोभयस्यैवावरुद्ध्यै ⌊काठ.⌋)। काठ ३२,१; माश ३,२,३,९ ।

४१. विराजो वै तेज आग्नेयः। मै ४, ७, ३ ।

४२. षड्भिराग्नेयैः ( पशुभिः ) वसन्ते ( यजते )। माश १३, ५, ४, २८ ।

४३. स उऽएव यजमानस्तस्मादाग्नेयो भवति। माश ३, ९, १,६ ।

४४. सूर्य एवाग्नेयः। चन्द्रमाः सौम्योऽहरेवाग्नेय ९ रात्रिः सौम्या य एवापूर्यतेऽर्द्धमासः स आग्नेयो योऽपक्षीयते स सौम्यः। माश १,६, ३,२४ ।

४५. सौम्यो वै जीवन्नाग्नेयः प्रमीतः । काठ ११, ५; ८ ।
[°य- अग्निष्टोम- १२ द्र.] ।

आग्नेयी-

१. आग्नेयीं ( अजाम् ) वसन्ते (आलभेत ) । काठ १३,१ (तु. मै २,५,२) ।
२. आग्नेयी ( +वै [तै.]) रात्रिः ( +ऐन्द्रमहः [काठ., क.]) । तैसं १,५,९,३; काठ ८,३; क ६,८; तै १,१, ४,२; ५, ३,४; २, १,२, ७ (तु. जै १, १८८; तै १, १,४,३) ।
३. आग्नेयी वा एषा यदजा । तैसं २, २, ४,५; ५, ४, ३,२; तै ३, ७,३, १ ।
४. आग्नेयी सायमाहुतिस्तया रेतः सिञ्चति, तद्रेतः सिक्तं रात्र्यै गर्भं दधाति, तत्सौर्या ( आहुत्या ) प्रातः प्रजनयामकः । मै १, ८, ५ ।
५. आग्नेयी सायमाहुतिस्सौरी प्रातः । काठ ६, ५; ८, ११; क ७, ८ ।
६. कृत्तिकासु ब्राह्मणस्य ( अग्निम् ) आदध्यात्, आग्नेयीः कृत्तिकाः; आग्नेयो ब्राह्मणः । मै १,६, ९ ।
७. क्षुङ्क्षाग्नेयी । मै ३, १४, १२ ।
८. यदाग्नेयी तेजस्तयावरुन्द्धे । मै २, ५, २ ।
९. यदाग्नेय्या ( जुहोति ), देवेभ्यस्तेन ( आह्रियते ) । मै ३,९,१ ।
१०. यद्वहिनी तेनाग्नेयी । काठ १३, ६ ।
११. यर्हि लोहिनीव श्वता तर्हि रौद्री…यर्हि श्येनीव श्वता तर्ह्याग्नेयी । मै ३, १०, १ ।
१२. वसन्ता प्रातराग्नेयीं कृष्णग्रीवीमालभेत । तैसं २, १, २, ५ ।
१३. सा या मन्द्रा साऽऽग्नेयी ( आगा ) । तया प्रातस्सवनस्योद्गेयम् । जैउ १,१२,३,२ ।
[°यी- आग्नीध्र- ९ द्र.] ।

अग्र-> अग्रे-गू-

ता यत् समुद्रं गच्छन्ति (आपः) तेनाग्रेगुवः (उच्यन्ते) । माश १,१,३,७ ।

अग्रे-पू-

ता यत् प्रथमाः (आपः) सोमस्य राज्ञो भक्षयन्ति तेनाग्रेपुवः । माश १,१,३,७ ।

अग्र्य-

अग्र्यमिव हीदम् (आग्रयणाख्यं हविः) । माश २,४, ३,१३ ।

आग्रयण-

१. अग्नेस्त्वा मात्रया जगत्यै वर्तन्याऽऽग्रयणस्य वीर्येण देवस्त्वा…सृजतु । तैसं २, ३,१०,३ ।
२. अष्टमेऽहन् (तृतीयेऽहन् [तैसं ७,२,८,१ ]) आग्रयणो गृह्यते । तैसं ७,२,८,४ ।
३. आग्रयणेनान्नाद्यकामो यजेत । कौ ४,१२ ।

४. आग्रयणो द्वादशकपालो भवति । मै ४,३,२ ।

५. आत्माग्रयणः (°ग्राय° [मै ४,६,४]) । मै ४,५,९; माश ४, ४, १, ५ ।

६. आत्मा वा आग्रयणः (+ ग्रहः, प्राणा इतरे [जै.]) । माश ४,२,२,५;४,५,४,६; जै १,३५३ ।

७. उर इवैतद् यज्ञस्य वागिव यद् आग्रयणः । तैसं ७, २,७,४ ।

८. एष गायत्रियै लोके गृह्यते यद् आग्रयणः । तैसं ६,५,७,१ ।

९. जागत (+ वा [तैसं.]) आग्रयणः । तैसं ७,२,८,१; क ४६, ५ ।

१०. पिता वा आग्रयणः, पुत्रा ग्रहाः । काठ २७, ९ ।

११. प्रजापतिर्वा (वाग्वा [तैसं.]) आग्रयणः । तैसं ७,२,८,४; मै ४,६,४;७,४; ८, ८; काठ २७, ९; क ४४,९ ।

१२. यच्चतुर्थेऽहन्नाग्रयणो गृह्यते स्व एवैनमायतने गृह्णाति । तैसं ७,२,८,२ ।

१३. यां वाऽअमूं ग्रावाणमाददानो वाचं यच्छत्यत्र वै साग्रेऽवदत्तद्यत्साऽत्राग्रेऽवदत्तस्मादाग्रयणो नाम । माश ४,२, २,६ ।

१४. विश्वे देवा देवतोष्णिहा छन्द आग्रयणस्य पात्रमसि । तैसं ३,१, ६,३ ।

१५. संवत्सराद्वा एतदधिप्रजायते यदाग्रयणम् । गो २, १, १७ ।

१६. साऽऽग्रयणं प्रत्याऽगच्छत् (वाक्) तदाग्रयणस्याऽऽग्रयणत्वं तस्मादाग्रयणे वाग् वि सृज्यते । तैसं ६,४,११,२-३ ।

आग्रायण–

१. अग्र ९ ह्याग्रायणः । मै ४,६,४;८,९ ।

२. आग्रायणो वै गायत्र्या वत्सः । मै ४,६,४ (तु. काठ २७,९) ।

३. आत्मानं त आग्रायणः पातु । मै ४,८,७ ।

४. एतेन वै देवा अग्रं पर्याय ९ स्तदाग्रायणस्याग्रायणत्वम् । काठ १२,७ ।

५. गायत्र्या एष लोके सोमो गृह्यते, यदाग्रायणः । मैसं ४,७,१ ।

६. जागत (जगति [मै.]) आग्रायणः । मै ४,८,८; काठ ३०,२; ४६,५ ।

७. ते देवा एतमाग्रायणमपश्य ९ स्तमगृह्णत तेनाग्रं पर्यायन्, यदग्रं पर्याय ९ स्तदाग्रायणस्याग्रायणत्वम् । काठ २७,९ ।

८. यदकृत्वाऽऽग्रायणं (यदनिष्ट्वाऽऽग्रायणेन [काठ.]) नवस्याश्नीयाद् देवानां भागं प्रतिक्लृप्तमश्नीयाद् (°मद्याद् [काठ.]) आर्त्तिमार्छेत् । मै ४,३,२; काठ १२,७ ।

९. यद्वैश्वदेवं तेनाग्रायण उक्थवान् । काठ २८,१०; क ४५,१ (तु. मै ४,६,१) ।

आग्रायण-पात्र-

यदाग्रायणपात्रं प्रयुज्यते सर्वा एव तेन प्रजा दाधार । काठ २८,१०; क ४५,१ ।

आग्रायणाग्र-

य आनुजावरः स आग्रायणाग्रान् (ग्रहान् गृह्णीत) । मै ४,८,९ ।

अघ-> अघ-मर्षण-

१. अहोरात्राणि वावाघं मर्षयन्ति । मै १,५,१२ ।

२. आपो वरुणः पुनात्वघमर्षणः । तैआ १०,१,१४ ।

अघ-शंस-

१. निरस्तो अघशंसः । काठ १,५; क १,५ ।

२. भ्रातृव्यो वा अघशंसः । काठ ३१,४; क ४७,४ ।

अघ्न्या-

१. आपो वा अघ्न्या या अग्नेर्धूमाज्जायन्त आपो वा अघ्न्या याः शिश्नात्प्रसृज्यन्ते । ऐआ १,३,५ ।

२. पयो अघ्न्यासु (ततान) । काठ २,६ ।

अघ्न्या-त्व-

ततो यत् प्रथमꣳ रेतः पराऽपतत्, तदग्निना पर्यैन्द्ध, तदासामघ्न्यात्वम् । मै ४, २,१२ ।

अङ्क-> अङ्काङ्क-

आपो वाऽअङ्काङ्कं छन्दः । माश ८,५,२,६ ।

अङ्कुप-

आपो वाऽअङ्कुपं छन्दः । माश ८,५,२,४ ।

अङ्ग-

१. अङ्गानि त उक्थ्यः (ग्रहः) पातु । मै ४,८,७ ।

२. अङ्गानि मे चमसाध्वर्यवः । प २,६ ।

३. अङ्गानि वाव होत्राः । गो २,६,६ ।

४. अङ्गानि वै विश्वानि धामानि । माश ३,३,४,१४ ।

५. अङ्गानि होत्राशंसिनः (होत्रकाः [ऐ., गो २,५,१४]) । ऐ ६,८; कौ १७,७;२९,८; गो २,५,४ ।

६. अङ्गान्युक्थ्यः (ग्रहः) । मै ४,५,९ ।

७. अङ्गैर्यज्ञम् (संपादयति) । तैआ ३,४,१ ।

८. अष्टाव् (ऋतवः [तैसं.]) अङ्गानि । तैसं ७,५,२५,१; माश ९,२,२,६ ।

९. छन्दाꣳस्यङ्गानि ( सुपर्णस्य गरुत्मतः ) । मै २,७,८; काठ १६,८ ।

१०. न (+ह [गो.]) वै सकृदेवाग्रे सर्वः (सर्वं [गो.]) संभवत्येकैकं वा अङ्गं संभवतः संभवति। ऐ ६,३१; गो २,६,९।

११. वैश्वदेवानि ह्यङ्गानि। ऐ ३,२।

अङ्गिरस्-

१. अङ्गारेभ्योऽङ्गिरसः (असृज्यन्त)। जै ३,२६३; माश ४,५,१,८।

२. अङ्गिरसश्च वा आदित्याश्च स्वर्गे लोकेऽस्पर्धन्त, त आदित्या एतं पञ्चहोतारमपश्यꣳस्तं मनसानूद्द्रुत्याजुहवुस्तत आदित्यास्स्वर्गं लोकमायन्नपाङ्गिरसोऽभ्रꣳशन्त। काठ ९,१६।

३. अङ्गिरसः सुवर्गं लोकं यन्तोऽप्सु दीक्षातपसी प्रावेशयन्। तैसं ६,१,१,२।

४. अङ्गिरसः स्वर्गं लोकं यतो रक्षाꣳस्यन्वसचन्त। तां ८,९,५।

५. अङ्गिरसां वा एकोऽग्निः। ऐ ६,३४।

६. अङ्गिरसामेकं पर्व व्याचक्षाण इवानुद्रवेत्। माश १३,४,३,८।

७. अङ्गिरसो नः पितरो नवग्वा अथर्वाणो भृगवः सोम्यासः। तैसं २,६,१२,६।

८. अङ्गिरसो वै स्वर्यन्तो (स्वर्गं लोकं यन्तः [काठ., क.]) ऽजायां घर्मं प्रासिञ्चन्त्सा शोचन्ती पर्णं परामृशत्, सोऽर्कोऽभवत् (+तदर्कस्यार्कत्वम् [काठ., क.])। मै ३,३,४; काठ २१,६; क ३१,२१।

९. अङ्गिरा उ ह्यग्निः (वाऽग्निः [माश ६,४,४,४])। माश १,४,१,२५।

१०. अङ्गिरोभिरागहि यज्ञियेभिर्यम वैरूपैरिह मादयस्व। विवस्वन्तꣳहुवे यः पिता तेऽस्मिन् यज्ञे बर्हिष्यानिषद्य। तैसं २,६,१२,६; मै ४,१४,१६।

११. अङ्गिरोभिर्देवेभिर्देवतया पाङ्क्तेन त्वा छन्दसा युनज्मि हेमन्तशिशिराभ्याम्। काठ ४१,९।

१२. अथैनम् (इन्द्रम्) ऊर्ध्वायां दिशि मरुतश्चाङ्गिरसश्च देवाः······अभ्यषिञ्चन्······पारमेष्ठ्याय माहाराज्यायाऽऽधिपत्याय स्वावश्यायाऽऽतिष्ठाय। ऐ ८,१४।

१३. अथैषोऽङ्गिरसामनुक्रीः। एतेन वा अङ्गिरस आदित्यानाप्नुवन्। तां १६,१४,१-२।

१४. अन्वञ्च इवाङ्गिरसः सर्वैः स्तोमैः पृष्ठैर्गुरुभिः सामभिः स्वर्गं लोकमस्पृशन्। माश १२,२,२,११।

१५. अभितोऽङ्गिरसः (पर्यपश्यन्)। जै २,१४२।

१६. आदित्याश्चाङ्गिरसश्चैतत् सत्रꣳसमदधतादित्यानामेकविꣳशतिरङ्गिरसां द्वादशाहः। तां २४,२,२।

१७. इमं यम प्रस्तरमा हि सीदाङ्गिरोभिः पितृभिः संविदानः। तैसं २,६,१२,६; मै ४,१४,१६।

१८. घोरेण त्वा भृगूणां चक्षुषा प्रेक्षे। रौद्रेण त्वा ऽङ्गिरसां मनसा ध्यायामि। तैआ ४,३,१।

१९. तं वरुणं मृत्युमभ्यश्राम्यदभ्यतपत्समतपत्तस्य श्रान्तस्य तप्तस्य संतप्तस्य सर्वेभ्योऽङ्गेभ्यो रसोऽक्षरत् सोऽङ्गरसोऽभवत्तं वा एतमङ्गरसं सन्तमङ्गिरा इत्याचक्षते। गो १,१,७।

२०. त एतेन सद्यःक्रियाङ्गिरस आदित्यानयाजयन् । माश ३, ५, १, १७ ।

२१. ततो वा आदित्याः पूर्वं स्वर्गं लोकमगच्छन्नहीयन्ताङ्गिरसः । जै २,११७ (तु. तां १६,१२,१)।

२२. तस्मादङ्गिरसोऽधीयान ऊर्ध्वस्तिष्ठति । गो १,१,९ ।

२३. तान् हादित्यानङ्गिरसो याजयाञ्चक्रुः । गो २,६,१४ ।

२४. ते हादित्याः पूर्वं स्वर्गं लोकं जग्मुः पश्चेवाङ्गिरसः षष्ट्यां वा वर्षेषु । ऐ ४, १७ ।

२५. त्रिवत्सास्तिस्रोऽङ्गिरसाम् । काठ ४९,६ ।

२६. द्वय्यो ह वा इदमग्रे प्रजा आसुः । आदित्याश्चैवाङ्गिरसश्च । माश ३, ५,१,१३ ।

२७. द्व्युत्तरेण वै स्तोमेनादित्याः स्वर्गं लोकमाय ९ श्चतुरुत्तरेणाङ्गिरसः । मै ३,४,२ ।

२८. प्राणो वा अङ्गिराः । माश ६,१,२, २८; ५,२,३;४ ।

२९. भद्रा भृगवोऽङ्गिरसः सुदानवः । काठसंक ६२ ।

३०. भृगूणामङ्गिरसां तपसा तप्यध्वम् । तैसं १,१,७,२; काठ १, ७; क १, ७ ।

३१. येऽङ्गारा आसंस्तेऽङ्गिरसोऽभवन् यदङ्गराः पुनरवशान्ता उददीप्यन्त तद् बृहस्पतिरभवत् । ऐ ३,३४ ।

३२. येऽङ्गिरसः स रसः । गो १,३,४ ।

३३. ये वै देवानामङ्गिरसस्ते ब्राह्मणस्य प्रत्येनसोऽग्निर्वायुर्वाग्बृहस्पतिः । काठ ८,४ ।

३४. विदेदग्निर्नभो नामाग्नेऽअङ्गिर आयुना नाम्नेहि । माश ३,५, १,३२ ।

३५. वीरा वै तदजायन्त यदङ्गिरसः । जै ३,२६४ ।

३६. सोमो वैष्णवो राजेत्याह तस्याप्सरसो विशस्ता इमा आसत युवतयः शोभना उपसमेता भवन्ति ता उपदिशत्यङ्गिरसो वेदः सोयऽमित्यङ्गिरसामेकं पर्व व्याचक्षाण इवानुद्रवेत् । माश १३, ४,३,८ ।

[°रस्- अग्नि- ३२७;५१९ द्र.] ।

अङ्गिरस्वत्-

१. अग्निं पुरीष्यमङ्गिरस्वदच्छेम इत्यग्निं पशव्यमग्निवदच्छेम इत्येतत् । माश ६,३,३,३ ।

२. प्राणो वै यमोऽङ्गिरस्वान् पितृमान् । तैआ ५,७,११ ।

३. यमाय त्वा पितृमतेऽङ्गिरस्वते स्वाहा । मै ४,९,८ ।

अङ्गिरोधामन्-

१. ये पश्चात् (प्राणाः) तेऽङ्गिरोधामानः । काठ २०, ११; क ३१, १३ ।

२. आदित्यधामानो वा उत्तरे (अन्ये [काठ.]) प्राणा अङ्गिरोधामानोऽधरे (अन्ये [काठ.]) । मै ३, २,९; काठ २०,११ ।

आङ्गिरस-

१. कर्णश्रवा एतदाङ्गिरसः पशुकामः ( कार्णश्रवसं ) सामापश्यत्तेन सहस्रं पशूनसृजत । तां १३, ११,१५ ।

२. चतुर्निधनमाङ्गिरसं (साम) भवति चतुरात्रस्य धृत्यै । तां १२,९,१८ ।
३. तानङ्गिरस ऋषीनाङ्गिरसांश्चाविंश्यानभ्यश्राम्यदभ्यतपत्समतपत्तेभ्यः श्रान्तेभ्यस्तप्तेभ्यः सन्तप्तेभ्यो यान् मन्त्रानपश्यत्स आङ्गिरसो वेदोऽभवत् । गो १,१,८ ।
४. तेषां (अङ्गिरसां) कल्याण आङ्गिरसोऽध्यायमुदव्रजत् स ऊर्णायुं गन्धर्वमप्सरसां मध्ये प्रेङ्खमाणमुपैत् । तां १२, ११,१० ।
५. स एष एवाऽऽङ्गिरसः (अयास्यः) । अतो हीमान्यङ्गानि रसं लभन्ते । तस्मादाङ्गिरसः । यद्ध्येषामङ्गानां रसस्तस्माद्धेवाऽऽङ्गिरसः । जैउ २,४,२,९ ।
६. सर्वं हैवाप्नोति य एवं विद्वानेतेन (आङ्गिरसेन) साम्ना स्तुवते । जै २,१४ ।
७. सोऽयास्य आङ्गिरसः । अङ्गानां हि रसः (+प्राणो वाऽङ्गानां रसः [माश १४,४,१,२१]) । माश १४,४,१,९ ।
[°स- अग्नि- ५२६ द्र.] ।

अङ्गुलि-
नानावीर्या अङ्गुलयः । तैसं ६,१,१,५ ।

अङ्गुष्ठ-
१. अतिच्छन्दाः प्रथमा सोऽयमङ्गुष्ठस्तस्मादयमङ्गुष्ठः सर्वा अङ्गुलीः प्रत्येति । शांआ २,५ ।
२. समावद्वीर्योऽन्याभिरङ्गुलिभिस्तस्मात् (°ष्ठः) सर्वा अनु सं चरति । तैसं ६,१,१,५ ।

अङ्घारि-
अङ्घारिरसि बम्भारिः । मै १,२,१२ ।

अचित्तपाजस्-
अचित्तपाजा अग्नीत् । मै १,९,१ ।

अचित्तमनस्-
अचित्तमना उपवक्ता । मै १,९,१; काठ ९,९ ।

अच्छावाक (ऋत्विज्)-
१. आनुष्टुभो हि (प्रतिष्ठा वा [कौ.]) अच्छावाकः । कौ २०,९; जै १,३११ ।
२. इमं इव वा एषा होत्राणां यदच्छावाकः । जै २,३७८ ।
३. ऐन्द्राग्नो (मिथुनं वा [माश ४,३,१,३]) ऽच्छावाकः । माश ३,६,२,१३ ।
४. ऐन्द्राग्नमच्छावाकस्य (+उक्थं भवति [गो.]) । काठ ३४,१६; गो २,४,१४;५,१० ।
५. नाच्छावाकं वृणीते, पश्चाजेव वा एषा, होत्राः स्वर्ग्या यदच्छावाकया । मै ३,९,८ ।
६. पश्चाजमिव वा एतच्छन्दो यदनुष्टुप् पश्चाजेवैषा होत्रा यदच्छावाकया, तस्मादच्छावाकमुपैव ह्वयन्ते न वृणते । काठ २६,९; क ४१,७ ।
७. भरद्वाजादच्छावाकः ( न प्रच्यवते ) । गो २,३,२३ ।

८. रैवतमच्छावाकस्य । कौ २५,११ ।

९. वीर्य्यवान्वा एष बह्वृचो यदच्छावाकाः । गो २,५,१५ ।

१०. स्थूरि यवाचितमच्छावाकस्य, स्थूरीरिव ह्येषा होत्रा स्वर्ग्या यदच्छावाक्या । मै ४,४,८ ।

११. स्थूरि यवाचितमच्छावाकाय (ददाति) (+ अन्तत एव वरुणमवयजते [तै.]) । तैसं १,८,१८,१; तै १,८,२,४ ।

अच्छावाक-सामन्-

१. ऐलमच्छावाकसाम भवति । जै १,१५५ ।

२. पशवोऽच्छावाकसाम । जै १,३०९ ।

अच्छिद्र-

१. असौ वा आदित्योऽच्छिद्रं पवित्रम् । तै ३, २, ५,२ ।

२. यद्वा एतस्य ( अष्टमस्य ) अह्नश्छिद्रमासीत्तद्देवा अच्छिद्रेणाप्यौह ँ स्तदच्छिद्रस्याच्छिद्रत्वम् तां १४,९, ३६ ।

३. यो वाऽअयं ( वायुः ) पवत ऽएषोऽच्छिद्रं पवित्रम् । माश १,१,३,६ ।

अच्युत-

ते यद्दतूनभिह्वयमाना अथाग्निमायतनान्नाच्यावयंस्तस्मादग्निरच्युतः । माश १,६,१,६ ।

अच्युत-क्षित्-

अच्युतक्षिदसि, दिवं दृ ँह ( अन्तरिक्षं स्कभान [क.]) । तैसं १,२,१२,३; मै १,२,८; ३,८,५; क २,३ ।

अच्युत-पाजस्- अग्निध्- ६ द्र.

अच्युत-मनस्-

अच्युतमना उपवक्ता । तैआ ३, ५, १ ।

अज,जा-

१. अजं पशुम् ( प्रजापतिः शीर्षत एव मुखतोऽसृजत ) । जै १,६८ ।

२. अजया ( सोमम् ) क्रीणाति, तप एवास्य क्रीणाति । मै ३, ७, ७; काठ २४,१ ।

३. अजस्यैकपदः पूर्वे प्रोष्ठपदाः । तै १, ५,१, ५; ३,१,२, ८ ।

४. अजा वै बार्हत्यूर्ध्वैवाक्रान्ता सा राथन्तरीं वाचं वदति माक्कारेण । जै १,२९४-२९५ ।

५. अजा वैरूपम् (साम) । जै १, ३३३;२, ३४ ।

६. अजा ह सर्वा ओषधीरत्ति । माश ६, ५,४,१६ ।

७. अजे हि सर्वेषां पशूनां ँ रूपम् । माश ६,५, १,४ ।

८. अजोऽग्नीषोमीयः । तां २१, १४, ११ ।

९. अजोऽस्यजास्मद्या द्वेषा ९ सि । तैआ ६, १०, २ ।

१०. अथ यः कपाले रसो लिप्त आसीत्सोऽजोऽभवत् । माश ६, १, १,११; ३,१,२८ ।

११. अथ यदेनम् (सोमम्) अजया क्रीणाति, सतपसमेवैनं तत् क्रीणाति । काश ४,३,३,१४ (तु. तै ६,१,१०,१; माश ३, ३, ३, १८)।

१२. अथैतदन्तर्यामपात्रं पुनः प्रयुज्यते ऽजां वा एतत् प्रति । मै ४, ८,८ ।

१३. अश्वस्येव वा एतस्य (अजस्य) शिरो गर्दभस्येव कर्णौ पुरुषस्य श्मश्रूणि गोरिव पूर्वौ पादा अवेरिवापरौ शुन इव लोमान्यजो भवति। काठ १३, १ (तु. मै २,५,१)।

१४. आजा ह वै नामैषा यदजैतया ह्येनं (सोमं) अन्तत आजति तामेतत्परोऽक्षमजेत्याचक्षते। माश ३, ३, ३, ९ ।

१५. आश्विनमजमालभेत । काठ १२, १२ ।

१६. उपांशुपात्रमेवान्वजाः प्रजायन्ते । माश ४, ५, ५, २ ।

१७. एकपदा ह भूत्वाजा उच्चक्रमुः । माश ८, २, ४, १ ।

१८. एष एतेषां पशूनां प्रयुक्ततमो यदजः । ऐ २, ८ ।

१९. एषा (अजा) हि पशूना ९ सहस्रपोषं पुष्यति । अतो ह्येषा त्रीञ्जनयत्यथो द्वौ । क ३७,७ ।

२०. गां चाजं च दक्षिणत एतस्यां तद्दिश्येतौ पशू दधाति तस्मादेतस्यां दिश्येतौ पशू भूयिष्ठौ । माश ७, ५, २, १६ ।

२१. गायत्री छन्दस्तदजा, बृहस्पतिर्देवता। मै २, १३, १४ ।

२२. त ९ सूर्य्यं देवमजमेकपादं प्रोष्ठपदासो अनुयन्ति सर्वे । तै ३, १, २, ८ ।

२३. ततो गायत्र्यजामादायोदपतत् सा वा एभ्यः (छन्दोभ्यः) प्रारोचयत् । मै ३, ७, ७ ।

२४. तपसो ह वाऽएषा प्रजापतेः सम्भूता यदजा तस्मादाह तपसस्तनूरसीति । माश ३,३,३,८ ।

२५. तमस्या अजाभ्यारुणत् (गायत्र्यै) तदजाया अजात्वम् । काठ २३, १०; क ३७,१ ।

२६. तस्याक्षिभ्यामेव तेजोऽस्रवत् । सोऽजः पशुरभवद् धूम्रः । माश १२, ७, १,२ ।

२७. ताभ्यामेतद्यथा ज्ञातिभ्यां वा सखिभ्यां वा सहागताभ्या ९ समानमोदनं पचेदजं वा । माश १, ६, ४, ३ ।

२८. ते (अजाः) सुप्रपतरा भवन्ति । माश ५, ५, ४, १ ।

२९. त्वष्ट्रेऽजाम् (दद्यात्) । तैआ ३,१०,३ ।

३०. परमेण पशुना (अजया, हे सोम त्वं) क्रीयसे । क १, १९ ।

३१. परमो ह्येषा (अजा) पशूनाम् । काठ २४, ६; क ३७,७ ।

३२. प्रजापतेर्वै शोकादजा (:) समभवन् । माश ६, ५, ४,१६ ।

३३. प्राजापत्यमजं तूपरं विश्वरूपमालभेत सर्वेभ्यः कामेभ्यः । काठ १३,१ ।

३४. प्रोष्ठपदा नक्षत्रमज एकपाद्देवता । तैसं ४,४,१०,३; मै २,१३,२० ।

३५. बस्तेनाजाः (अन्वाभवत्) । काठ ३५,१५;४३,४ ।

३६. ब्रह्म वाऽ ( वाग्वाऽ [माश ७,५,२,२१]) अजः । माश ६,४,४,१५ ।

३७. ब्राह्मणम् (अनु) अजः | माश ६,४,४,१२ ।

३८. यः (वषट्कारकृतगायत्रीशिरश्छेदाद् उद्भूतो रसः) पशून् (प्राविशत्) सोऽजाम् (प्राविशत्)। तैआ ५,२,४ ।

३९. यज्ञस्य शीर्षच्छिन्नस्य शुगुदक्रामत्ततोऽजा समभवत् । माश १४,१,२,१३ ।

४०. यदजायै पयस्तद् देवानां पयः । तैआ ५,१०,२ ।

४१. यदविं यदजां ददाति, मा ऽ सानि तेन स्पृणोति । काठ २८,५; क ४४,५ ।

४२. वाचोऽजम् (प्रजापतिर्निरमिमीत) । माश ७, ५,२,६ ।

४३. वायवे श्वेतमजमालभेत बुभूषन् । काठ १२,१३ ।

४४. वायव्यमजमालभेत·········भूतिकामः । मै २,५,११ ।

४५. विष्फुलिङ्गाभ्य एवाजाश्चैणेयाश्चासृज्यन्त । जै ३,२६३ ।

४६. सर्वाणि वा एष (अजस्तूपरः) रूपाणि पशूनां प्रत्या लभ्यते यच्छ्मश्रुणस्तत् पुरुषाणा ऽ रूपं यत् तूपरस्तदश्वानां, यदन्यतोदन् तद्गवां, यदव्या इव शफास्तदवीनां, यदजस्तदजानाम्। तैसं ५,५,१,२-३ ।

४७. सा गायत्र्यजया ज्योतिषोदपतत् (+सास्यै [गायत्र्यै] प्रारोचयत् [काठ.])। काठ २४, ६; क ३७, ७ ।

४८ सा गायत्र्युदपतच्चतुरक्षरा सती साजया······तमस्या अजाऽभ्यारुणत् । काठ २३, १० ।

४९. साजया कर्णगृह्योदपतत् (गायत्री) । क ३७,१ ।

५०. सा (अजा) त्रीञ्जनयत्यथो द्वौ । काठ २८,१० ।

५१. सा (अजा) यत् त्रिः संवत्सरस्य विजायते तेन परमः पशुः ( तेन प्रजापतेर्वर्णः ) । माश ३,३,३,८ ।

५२. सा या वागासीत् साजा वशाऽभवत् तस्मात्सारस्वती | काठ १३,१२ ।

५३. सा वा एषा सर्वदेवत्या यदजा वशा । तैसं ३,४,३,२ ।
[ °ज– अग्नि- ३२९;३३०;४५०;५१२; अग्निज- २; अङ्गिरस्- ८; आग्नेय- २०; आग्नेयी- ३ द्र.]

अज-क्षीर–

१. अजक्षीरेण जुहोति । तैसं ५,४,३,२ ।

२. अजक्षीरेणाच्छृणत्ति सा ( अजा) ह्याग्नेयीतमा । काठ १९, ७ ।

३. परमं वा एतत्पयो यदजक्षीरम् । तैसं ५,१,७,४ ।
[ °र– आग्नेय- २ द्र. ] ।

अज-लोम-

शन्त्वायाजलोमैः स ५ सृजति । तैसं ५,१,६,२ ।

अजावि-

१. अजावी आलभते भूम्ने । तै ३,९,८,३ ।

२. तस्मादेताः (अजावयः) त्रिः संवत्सरस्य विजायमाना द्वौ त्रीनिति जनयन्ति । माश ४,५,५,६ ।

अजाविक-

१. अजाविकमेवोष्णिक् । कौ ११,२ ।

२. तस्मादु सह सतोऽजाविकस्योभयस्यैवाजाः पूर्वा यन्त्यनूच्योऽवयः । माश ४,५,५,४ ।

अजगर-

१. अजगरं स्वप्नः (गच्छति) । गो १,२,२ ।

२. अजगरेण सर्पान् (अन्वाभवत्) । काठ ४३,४ (तु. काठ ३५,१५) ।

३. गुदाभ्योऽह्यो ऽजगराः ( अजायन्त ) । जै २, २६७ ।

४. वलायाजगरः । मै ३, १४, १९ ।

अजर्षभ-

प्रजापतिर्वाऽएष यदजर्षभः । माश ५, २,१, २४ ।

अजस्र-

अग्निरजस्रः । माश ६, ७,४, ३ ।

अजिर-

एष वै मृत्युर्यद् वायुरजिर एव नाम । जै १, २६ ।

अञ्जन->अञ्जन-गिरि-

तानि ( रक्षांसीन्द्रः ) अञ्जनगिरिणान्तरधत्त रक्षांस्येतं सचन्ते यो दीक्षते भवति हि यदाङ्क्ते रक्षसामन्तर्हित्या इन्द्रो वै वृत्रमहँस्तस्य (वृत्रस्य) चक्षुः परापतत् तत् त्रिककुभं प्राविशद्यदाङ्क्ते, तस्यैव चक्षुषोऽवरुद्ध्यै । काठ २३, १ ।

अञ्जलि-

१. तस्मादु हैतद् भीतोऽञ्जलिं करोति । माश ९, १, १, ३९ ।

२. दश वाऽअञ्जलेरंगुलयः । माश ९, १,१, ३९ ।

अञ्जस्कीय-

एतेन वै नमी साप्यो वैदेहो राजाञ्जसा स्वर्गं लोकमैदञ्जसाऽऽगामेति तदञ्जस्कीयानामञ्जस्कीयत्वम् । तां २५, १०, १७ ।

अञ्जि-

१. छंदांसि वा अंजयो वाघतस्तैरेतद्देवान् यजमाना विह्वयंते मम यज्ञमागच्छत मम यज्ञमिति। ऐ २, २।

२. रश्मयो वाऽएतस्य (आदित्यस्य) अञ्जयो वाघतः। माश ६, ४, ३, १०।

अणु-

प्रियङ्गवश्च मेऽणवश्च मे (यज्ञेन कल्पन्ताम्)। तैसं ४, ७, ४, ३।

अण्ड-

आनन्दनन्दा अण्डौ मे भगः सौभाग्यं पसः। काठ ३८, ४।

अतिग्रह-

अष्टावतिग्रहाः[1]। माश १४, ६, २, १।

अतिग्राह्य-

१. उपस्तम्भनं वा एतद्यज्ञस्य यदतिग्राह्याः। क ४५, ८।

२. ते (अग्नीन्द्रसूर्याः) एतानतिग्राह्यान्ददृशुस्तानत्यगृह्णत तद्यदेनानत्यगृह्णत तस्मादतिग्राह्या नाम। माश ४, ५, ४, २।

३. देवा वा इन्द्रियं वीर्यं व्यभजन्त, ततो यदत्यशिष्यत तदतिग्राह्या अभवन्, तदतिग्राह्याणामतिग्राह्यत्वम्। तैसं ६, ६, ८, १।

४. देवा वै यदन्यैर्ग्रहैर्यज्ञस्य नावारुन्धत तदतिग्राह्यैरतिगृह्यावारुन्धत। तदतिग्राह्याणामतिग्राह्यत्वम्। तै १, ३, ३, १।

अतिच्छन्दस्-

१. अतिच्छन्दा वै सर्वाणि छन्दाꣳसि (+अभिभवति [जै.])। तैसं ५, ३, ८, ३; तै १, ७, ९, ६; जै २, ४८।

२. अतिछन्दो वै छन्दसामायतनम्। गो १, ५, ४।

३. अति वा एषा (ऋक्), अन्यानि छन्दाꣳसि यदतिछन्दाः। तां ५, २, ११।

४. अध्वर्यू वृणीते ऽतिच्छन्दसं तच्छन्दसां वृणीते। काठ २६, ९।

५. उदरमतिच्छन्दाः पशवो वै छन्दाꣳस्यन्नं पशव उदरं वाऽअन्नमत्त्युदरꣳ हि वाऽन्नमत्ति तस्माद्यदोदरमन्नं प्राप्नोत्यथ तज्जग्धं यातयामरूपं भवति तद्यदेषा पशूञ्छन्दाꣳस्यत्ति तस्मादत्तिच्छन्दा अत्तिच्छन्दा ह वै तामतिच्छन्दा इत्याचक्षते परोऽक्षम्। माश ८, ६, २, १३।

६. एषा वै सर्वाणि छन्दाꣳसि यदतिच्छन्दाः। माश ३, ३, २, ११; ४, ४, ५, ७।

७. छन्दसां वै यो रसोऽत्यक्षरत्सोऽतिछंदसमभ्यत्यक्षरत्तदतिछंदसोऽतिछंदस्त्वम्। ऐ ४, ३।

---

1. अपानः, रसः, नाम, रूपम्, शब्दः, कामः, कर्म, स्पर्श इति।

८. वर्ष्म वा एषा छन्दसां यदतिच्छन्दाः । तैसं ५,२,१,५; ३, ८, ३; काठ २४, ५; क ३७, ६; तै १,७,९,६ ।

९. शरीराण्य् (षष्ट्यक्षरा [जै २,५९]) अतिच्छन्दाः । जै २, ५८ ।

१०. षडरत्निरतिछन्दसा संमितः ( यूपः ) । काठ २६, ४; क ४१, २ ।

११. सर्वाणि वै छन्दा ऽस्य् (इमे वै लोका [तां.]) अतिछन्दाः । मै ३, ७,४;४,८,५; तां ४,९,२ ।

१२. साध्याश्चाप्त्याश्चातिच्छन्दसं समभरन् । तां ते प्राविशन् । तान् साछादयत् । जै १,२८३ । [°न्दस्- अङ्गुष्ठ- १; अग्नि[,ग्नी]ध- ११ द्र.] ।

आतिछन्दस-

१. सवित्र आतिच्छन्दसाय त्रयस्त्रि ऽशाय रैवताय शैशिराय द्वादशकपालः । तैसं ७,५,१४,१ ।

२. प्रजापतिरातिच्छन्दसम् (छन्दः) । शांआ ११, ७. ।

अतिथि-

१. अतिथय आगताय सर्पिष्वदातिथ्यं क्रियते । तैसं ५, २,२,४ ।

२. अतिथिर्दुरोणसत् (हंसः=सूर्यः) । काठ ३४, १४; माश ५,४, ३,२२ (तु. ऐ ४,२०) ।

३. अनस्वी च रथी चातिथीनामपचिततमौ । तैसं ५, २, २, ३; काठ १९, १२; क ३१, २ ।

४. पूर्वं हि अतिथिमाशयन्ति । काठसंक १२ ।

५. ब्राह्मणायातिथये सर्पिष्वन्तं पचति । काठ १९, १२ ।

६. यो वै भवति यः श्रेष्ठतामश्नुते स वा अतिथिर्भवति । ऐआ १,१, १ ।

अतिथि-देव-

अतिथिदेवो भव । तैआ ७,११,२; तैउ १,११, २ ।

अतिथि-पति-

अतिथिपतिर्वावातिथेरीशे । क ४६,४ ।

आतिथ्य-

१. अथ यदातिथ्येन यजन्ते । विष्णुमेव देवतां यजन्ते । माश १२,१,३,४ ।

२. यावद्भिर्वै राजाऽनुचरैरागच्छति, सर्वेभ्यो वै तेभ्य आतिथ्यं क्रियते । तैसं ६, २, १,२ ।

३. शिरो वा (+एतद्यज्ञस्य [काठ., ऐ., कौ.]) आतिथ्यम् । मै ३,७,९; काठ २४,८; ऐ १,१७; २५; कौ ८,१ ( तु. माश ३,२,३,२० ) ।

अतिपुरुष-

य आदित्ये सोऽतिपुरुषः । जैउ १,८,२,२ ।

अतिमान-

तस्मान्नातिमन्येत पराभवस्य हैतन्मुखं यदतिमानः । माश ५,१, १,१; ११,१,८,१ ।

अतिरात्र (यज्ञ)-

१. अतिरात्रात् साकमेधान् यज्ञक्रतुं निर्मायेन्द्रो वृत्रमहन् । मै १, १०, ५; काठ ३५, २०; क ४८, १८ ।

२. अतिरात्रेणामुम् (द्युलोकमभ्यजयन् देवाः) । तां ९,२,९ ।

३. एष ह वा उभयतो ज्योतिर्यज्ञक्रतुर्यदतिरात्रः । जै १,२३२ ।

४. चक्षुषी अतिरात्रौ । तां १०,४,२ ।

५. तस्य (संवत्सररूपिणः समुद्रस्य) एतत् पारं यदतिरात्रौ । तैसं ७, ५,१,३ ।

६. प्रतिष्ठा वाऽअतिरात्रः । माश ५,५,३,५ ।

७. प्राणो वै पूर्वोऽतिरात्रोऽपान उत्तर इयं (पृथिवी) वै पूर्वोऽतिरात्रोऽसा (द्यौः) उत्तरः । काठ ३४,८ ।



८. भूतं वै पूर्वोऽतिरात्रो भव्यमुत्तरः । काठ ३४,८ ।

९. भूतं पूर्वोऽतिरात्रो भविष्यदुत्तरः पृथिवी पूर्वोऽतिरात्रो द्यौरुत्तरोऽग्निः पूर्वोऽतिरात्र आदित्य उत्तरः प्राणः पूर्वोऽतिरात्र उदान उत्तरः । तां १०,४,१ ।

१०. ये देवयानाः पन्थानस्तेष्वतिरात्रेण (प्रतितिष्ठति) । काठ १४,९ ।

११. वाचमतिरात्रेण (स्पृणोति) । काठ १४, ९ ।

१२. संवत्सरस्य वा एतौ दंष्ट्रौ यदतिरात्रौ तयोर्न स्वप्तव्यं संवत्सरस्य दंष्ट्रयोरात्मानन्नेदपिदधानीति । तां १०,४,३ ।

१३. स कृत्स्नो विश्वजिद्योऽतिरात्रः । कौ २५,१४ ।

१४. सारस्वती मेष्यतिरात्र आलभ्या । मै ३,९,५ ।

१५. सोऽतिरात्रेणाऽऽदित्यानयाजयत् (प्रजापतिः) तेऽमुं(द्यु-)लोकमजयन् । तैसं ७,१,५,३ ।

१६. स्वर्(स्वाराज्यम् [मै.]) अतिरात्रेण (अभिजयति) । मै १,८,६; तै ३,१२,५,७ । [°त्र- अग्निष्टोम- २० द्र.] ।

अतिरिक्त-

अतिरिक्तं वै त्रयोदशमतिरिक्तो निरुद्धः । मै २,२,११ ।

अतिवाद-

१. अतिवादेन वै देवा असुरानत्युद्याथैनानत्यायन् । ऐ ६,३३ ।

२. श्रीर्वा अतिवादः । गो २,६,१३ ।

अतिषद्->आतीषादीय (साम)-

आयुर्वा आतीषादीयमायुषोऽवरुध्यै । तां १२,११,१५ ।

अतीरोक-

नक्षत्राणामतीरोकाः । काठ २३,१ ।

अतूर्त-

१. अतूर्तो होतेत्याह न ह्येतं (अग्निम्) कश्चन तरति । तैसं २,५,९,२-३ ।

२. अयं वा अग्निरतूर्तो होतेमं ह न कश्चन तिर्यंचं तरति । ऐ २,३४ ।

३. न ह्येत ९(अग्निम्) रक्षा९ सि तरन्ति तस्मादाहातूर्तो होतेति । माश १,४,२,१२ ।

अत्तृ-

१. आदित्यो वाऽअत्ता । तस्य चन्द्रमा एवाहितयः । माश १०,६, २,३ ।

२. प्राणो वाऽअत्ता तस्यान्नमेवाहितयः । माश १०,६,२,४ ।

३. स वै यः सोऽत्ताग्निरेव सः । माश १०,६,२,२ ।

अत्य-

अत्योऽसीत्याह । तस्मादश्वः सर्वान् पशूनत्येति तस्मादश्वः सर्वेषां पशूना ९ श्रैष्ठ्यं गच्छति । तै ३,८,९,१; (तु. तां १,७,१; माश १३,१,६,१) ।

अत्यायु->अत्यायु-पात्र-

यदाहात्यायुपात्रमित्यति ह्येतदन्यानि पात्राणि यत् द्रोणकलशो देवपात्रं द्रोणकलशः । तां ६, ५, ७ ।

अत्यायुस्-

अत्यायुर्यज्ञायज्ञीयम् । जै १, २९२ ।

अत्रि-

१. अथाकामयतात्रिर्भूयिष्ठा म ऋषयः प्रजायां जायेरन्निति, स एतं त्रिणवं स्तोममपश्यत्तमाहरत्तेनायजत । जै २,२१९ ।

२. तद्धैतद्देवाः । रेतः (वाचः सकाशात्पतितं गर्भम्) चर्मन्वा यस्मिन्वा बभ्रुस्तद्ध स्म पृच्छन्त्यत्रैव त्या३ दिति ततोऽत्रिः सम्बभूव । माश १,४,५,१३ ।

३. वागेवात्रिर्वाचा ह्यन्नमद्यतेऽत्तिर्ह वै नामैतद्यदत्रिरिति । माश १४,५,२,६ ।

४. स यदिदं सर्वं पाप्मनोऽत्रायत यदिदं किञ्च तस्मादत्रयस्तस्मादत्रय इत्याचक्षत एतमेव (प्राणम्) सन्तम् । ऐआ २,२,१ ।

अत्रिन्-

१. अत्रिणो वै रक्षा ९ सि । पाप्मानोऽत्रिणः । ष ३, १ ।

२. रक्षांसि वै पाप्मात्रिणः । ऐ २,२ ।

अत्स्यत्-

एष मृत्युर्यद् यमोऽत्स्यन्नेव नाम । जै १,२८ ।

अथकार-

अन्नं वा अथकारः । जै १, १८६ ।

**अथर्निधन** ( साम )-

ब्रह्मवर्चसमथर्निधनेनावारुन्धत ( देवाः ) । तां १०, १२, ३ ।

**अथर्वन्-**

१. अथर्वणां चन्द्रमा देवतं तदेव ज्योतिः सर्वाणि छन्दांस्यापः स्थानम् । गो १, १,२९ ।

२. अथर्वणामङ्गिरसां प्रतीची ( दिक् ) । तै ३, १२, ९, १ ।

३. अथर्वणामेकं पर्व व्याचक्षाण इवानुद्रवेत् । माश १३, ४, ३, ७ ।

४. अथर्व पितुं मे गोपायेत्याह । अन्नमेवैतेन स्पृणोति । तै १, १, १०, ४ ।

५. अथर्व पितुं मे गोपाय । रसमन्नमिहाऽऽयुषे । अदब्धायोऽशीततनो । अविषं नः पितुं कृणु । तै १, २, १, २५ ।

६. अथर्वभिर् जपन्ति । काठसंक २७ ।

७. अथर्वाणो वै ब्रह्मणः समानः । काठसंक ४ ।

८. अथर्वा न्युप्तः (°थर्वोपात्तः [तैसं.]) ( सोमः ) । तैसं ४,४, ९, १; काठ ३४, १५ ।

९. अथर्वा वै प्रजापतिः । गो १, १, ४ ।

१०. ऋषयो वा अब्रवन्नेतेमसुपरिश्येनं स्वर्गं लोकं जिगीषाम यस्मिन्नेतेऽथर्वाणः । जै ३,२७० ।

११. तद्यदब्रवीदथार्वाङेनमेतास्वेवाप्स्वन्विच्छेति तदथर्वाऽभवत् तदथर्वणोऽथर्वत्वम् । गो १,१,४ ।

१२. तमु त्वा ( अग्ने ) दध्यङ्ङृषिः पुत्र ईधे अथर्वणः । मै २, ७, ३ ।

१३. प्रजापतिर्वा अथर्वा । तैसं ५, ६, ६, ३; मै ३, १, ५; काठ १९, ४; क ३०, २ ।

१४. प्राणो ( +वा [माश ६, ४, २, १.]) ऽथर्वा । माश ६, ४, २, २ ।

१५. येऽथर्वाणस्तद्भेषजम् । गो १, ३, ४ ।

१६. वरुण आदित्यो राजेत्याह तस्य गन्धर्वा विशस्तऽ इमऽ आसतऽइति युवानः शोभना उपसमेता [illegible]न्ति तानुपदिशत्यथर्वाणो वेदः सोऽयमित्यथर्वणामेकं पर्व व्याचक्षाण इवानुद्रवेत् । म[illegible] १३, ४, ३,७ ।

१७. [°र्वन्- अग्नि- ३४०; ५३५ द्र.] ।

**अथर्व-वेद-**

शन्नो देवीरभिष्टय इत्येवमादिं कृत्वा अथर्ववेदमधीयते । गो १, १, २९ ।

**अथर्वाङ्गिरस्-**

१. मेद आहुतयो ह वाऽएता देवानाम् । यदथर्वाङ्गिरसः । माश ११, ५,६,७ ।

२. यदथर्वाङ्गिरसो ( ऋषयोऽध्यगीषत ) मध्वाहुतयः ( ता अभवन् ) । तैआ २, ९, २ ।

**आथर्वण-**

१. आथर्वणं लोककामाय ब्रह्म साम कुर्यात् । तां ८, २, ५ ।

२. आथर्वणो वा एतल्लोककामाः सामापश्य[illegible]स्तेनामर्त्यं लोकमपश्यन् यदेतत्साम भवति स्वर्गस्य लोकस्य प्रजात्यै । तां ८,२,६ ।

३. चतुर्णिधनमाथर्वणं भवति चतूरात्रस्य धृत्यै । तां १२, ९, ८ ।

४. तानथर्वण ऋषीनाथर्वणांश्चार्षेयानभ्यश्राम्यदभ्यतपत् समतपत् तेभ्यः श्रान्तेभ्यस्तप्तेभ्यः सन्तप्तेभ्यो यान् मन्त्रानपश्यत् स आथर्वणो वेदोऽभवत् । गो १, १, ५ ।

५ भेषजं वा आथर्वणानि । तां १२, ९, १० ।

६. भेषजं वै देवानामथर्वाणो ( अथर्वणा दृष्टा मन्त्राः ) भेषज्यायैवारिष्ट्यै । तां १६,१०,१० ।

अदाभ्य ( ग्रह )-

१. तानसुरान् ( देवाः ) आदभ्नुव ᳚स्तददाभ्यस्यादाभ्यत्वम् । मै ४, ७, ७ ।

२. तेऽब्रुवन्नदभन्न इति तदस्यादाभ्यत्वमथो यदेनान् दब्धुं नाशक्नुव ᳚स्तदस्यादाभ्यत्वम् । काठ ३०, ७ ।

३. ते ( देवाः ) होचुः । अदभाम वाऽएनान् ( असुरान् ) इति तस्माददाभ्यो न वै ( असुराः ) नोऽदभन्निति तस्माददाभ्यो वाग्वाऽअदाभ्यः । माश ११, ५, ९, ५ ।

४. यत्ते सोमादाभ्यं नाम जागृवि तस्मै ते सोम सोमाय स्वाहा । मै १, ३, ४ ।

५. यद्वै देवा असुरान् अदाभ्येनादभ्नुवन् तदाभ्यस्यादाभ्यत्वम् । तैसं ६, ६, ९,१ ।

६. वागेवादाभ्यः । माश ११, ५, ९, १ ।
[ °भ्य- अंशु- ५ द्र.] ।

अदारसृत् (सामन् )-

१. दिवोदासं वै भरद्वाजपुरोहितन्नाना जनाः पर्य्ययतन्त स उपासीदद्दषे गातुम्मे विन्देति तस्मा एतेन साम्ना गातुमविन्दद्गातुविद्वा एतत्सामानेन दारे नासृन्मेति तददारसृतोऽदारसृत्त्वं विन्दते गातुन्न दारे धावत्यदारसृता तुष्टुवानः । तां १५, ३, ७ ।

२. भरद्वाजस्यादारसृद्भवति । तां १५, ३, ६ ।

३. यदब्रवीद् भरद्वाजो न वै दारेऽसृण्मेति, तदेवादारसृतोऽदारसृत्त्वं, तदेतद् विजितिर्भ्रातृव्यहा साम । जै ३,२४८ ।

अदिति-

१. अथ यत् प्रायणीयेन यजन्ते । अदितिमेव देवतां यजन्ते । माश १२,१,३, २ ।

२. अथा वयम्···अनागसो अदितये स्याम । तैसं ४,२,१,४; मै १,२,१८;४,१४,१७; काठ ३,८ ।

३. अदित[1] एहि । मै ४,२,५; तैआ ४,८,१; ५,७,१ ।

४. अदितिं यजति, तस्मादियमुपरिष्टात्प्रजाभ्यो वर्षति । काठ २३, ८ ।

५. अदिति ᳚शीर्ष्णा ( प्रीणामि ) । तैसं ५, ७, १३, १; मै ३, १५, २; काठ ५३,३ ।

६. अदितिः पाशान् (°शम् [ तैसं.]) प्रमुमोक्त्वेतान् ( °तम् [ तैसं.]) । तैसं ३,१,४,४; मै १,२, १५; काठ ३०,८ ।

---

१. गोनाम ।

७. अदितिः पुत्रकामा साध्येभ्यो देवेभ्यो ब्रह्मौदनमपचत्। तस्या उच्छेषणमददुः। तत्प्राश्नात् सा रेतोऽधत्त । तस्यै धाता चार्यमा चाजायेताम् । ······मित्रश्च वरुणश्चाजायेताम्। ······अंशश्च भगश्चाजायेताम्। ······इन्द्रश्च विवस्वांश्चाजायेताम्। तै १, १, ९, १-३।

८. अदितिरच्छिन्नपत्रा। काठ १, ११; क १, ११।

९. अदितिरस्युभयतःशीर्ष्णी (वाक्) इत्याह, यदेवाऽऽदित्यः प्रायणीयो यज्ञानामादित्य उदयनीयस्तस्मादेवमाह। तैसं ६, १,७,५।

१०. अदितिरस्युभयतःशीर्ष्णी (°र्ष्णि [मै.]) सा नः (सा मा [काठ. क.]) सुप्राची सुप्रतीची भव (संभव [तैसं.]; एधि [माश.])। तैसं १,२,४,२; मै १,२,४; काठ २, ५; क १, १७; माश ३, २, ४, १६-१७।

११. अदितिरासादितः (सोमः)। तैसं ४, ४, ९, १।

१२. अदितिरिव त्वा सुपुत्रोपनिषदेयम्। काठ १, १०।

१३. अदितिर्न उरुष्यत्वदितिः शर्म यच्छतु। अदितिः पात्वꣳहसः। तैसं १, ५, ११,५।

१४. अदितिर्वेद्या (सहागच्छतु)। तैआ ३, ८, १।

१५. अदितिर्वै प्रजाकामौदनमपचत्तत उच्छिष्टमाश्नात् सा गर्भमधत्त तत आदित्या अजायन्त। गो १,२,१५।

१६. अदितिर्हि गौः। माश २, ३, ४, ३४; १४, २, १, ७।

१७. अदितिः षोडशाक्षरया (°क्षरेण [तैसं.]) षोडशं मासम् (स्तोमम् [तैसं.]) उदजयत्। तैसं १,७,११,२; मै १,११,१० (तु. काठ १४,४)।

१८. अदितिस्ते बिलं गृह्णातु पाङ्क्तेन छन्दसा··· । तैसं ४, १, ५, ४।

१९. अदितिः सोमस्य योनिः। मै ३,७,८;९,१।

२०. अदित्या अहं देवयज्यया प्रतिष्ठां गमेयम्। काठ ५, १।

२१. अदित्या (°त्यै [तैसं.]) भागोऽसि, पूष्ण आधिपत्यमिति पश्चात् (°पत्यमोजः स्पृतं, त्रिणवः स्तोमः [तैसं., मै.])। तैसं ४,३,९,१; मै २,८,५; काठ २१,१।

२२. अदित्या (°त्यै [तैसं.]) रास्नासि। तैसं १, १, २, २; काठ १, २; क १, २।

२३. अदित्यास्त्वगसीतीयम् (पृथिवी) अदितिरस्या एवैनत् त्वचं करोति। काठ ३१, ४।

२४. अदित्यास्त्वा पृष्ठे सादयामीतीयꣳ (पृथिवी) वा अदितिः। मै ४,१,२।

२५. अदित्यै त्रयो रोहितैताः। काठ ४९, ८।

२६. अदित्यै द्वादशी (अस्तु)। तैसं ५, ७, २२, १।

२७. अदित्यै पाजस्यम् (पुनर्वसू [तै.])। काठ ५३,६; तै १,५,१,१।

२८. अदित्यै मह्यै स्वाहादित्यै सुमृडीकायै स्वाहा। काठ ४३, ५।

२९. अदित्यै विष्णुपत्न्यै चरुः। काठ ४५, १०।

३०. अदित्योर्ध्वाम् (दिशं प्राजानन्)। तैसं ६, १, ५,२।

३१. अनागसं त्वमदितिः कृणोतु··· । काठ ७, १६।

३२. अनागास्त्वे अदितित्वे तुरास इम ँ यज्ञं दधतु श्रोषमाणाः। तैसं २,१,११,६; मै ४,१४,१४।

३३. अविज्ञाता अदित्यै (अस्तु)। मै ३, १३,६; १०।

३४. अष्टयोनीमष्टपुत्राम्। अष्टपत्नीमिमां महीम्। अहं वेद न मे मृत्युः······। अष्टौ पुत्रासो[1] अदितेः। तैआ १,१३,१-२।

३५. आविन्ना देव्यदितिर्विश्वरूपी। तैसं १,८,१२,२।

३६. इड एह्यदित एहि सरस्वत्येहि (+ इत्याह। एतानि वा अस्यै देवनामानि ⌊तैआ ५,७,१⌋)। तैआ ४,८,१।

३. इडे रन्तेऽदिते सरस्वति प्रिये प्रेयसि महि विश्रुत्येतानि ते अघ्निये नामानि। तैसं ७,१,६,८।

३८. इडे रन्ते हव्ये काम्ये चन्द्रे ज्योते ऽदिति सरस्वति महि विश्रुति। एता तेऽअघ्न्ये (देवत्रा) नामानि। माश ४,५,८,१०।

३९. इम ँ समुद्र ँ (साहस्रं ⌊काठ.⌋) शतधारमुत्सं व्यच्यमानं भुवनस्य (सरिरस्य ⌊काठ⌋.) मध्ये। घृतं दुहानामदितिं जनायाग्ने मा हि ँ सीः परमे व्योमन्। तैसं ४,२,१०,२-३; काठ १६,१७।

४०. इयं (पृथिवी) वा अदितिः (+ इय ँ हीद ँ सर्वं ददते ⌊माश.⌋)। तैसं २, २, ६,१; ३,१,२; ५,१,७,१; मै १,१०,२०; ११,६;२,३,५;५,२; ३,२,६; ४,१,२; ५; ३,८; ८, १०; कौ ७,६; गो १,१,२५; तै १,१,६,५; माश ७,४,२,७।

४१. इय ँ (पृथिवी) वा अदितिर्, ऊर्ध्वा वा अस्या दिक्। मै ३,७,१।

४२. इय ँ (पृथिवी) वा अदितिर्देवी विश्वदेव्यवती। मै ३,१,८।

४३. इयं (पृथिवी) वाऽअदितिर्मही। माश ६,५,१,१०।

४४. इयं (पृथिवी) वै देव्यदितिः (+ विश्वरूपी ⌊तै १,७,६,७⌋)। जै १,५८; तै १,४,३,१।

४५. इयं वै पृथिव्यदितिः (+ सेयं देवानां पत्नी ⌊माश ५,३,१,४⌋)। माश १,१,४,५; २, २, १, १९;३,३,१,४।

४६. इयं (पृथिवी) ह्यदितिः (°ह्येवादितिः ⌊माश.⌋)। ऐ १,८; माश ३,२,३,६।

४७. इयम् (+ वा ⌊मै.⌋) (पृथिवी) अदितिः (+ अस्या वा एनेमतद् गर्भं करोति ⌊मै.⌋)। मै ४,४,९; काठ ८,१०; ११,८; २३, ८; ४७,१।

४८. ऊर्ध्वामिव दिशं अदित्या प्राजानन्नियं (पृथिवी) वाऽअदितिस्तस्मादस्यामूर्ध्वा ओषधयो जायन्तऽऊर्ध्वा वनस्पतयः। माश ३,२,३,१९।

४९. एवा न देव्यदितिरनर्वा। विश्वस्य भर्त्री जगतः प्रतिष्ठा। पुनर्वसू हविषा वर्धयन्ती। प्रियं देवानामप्येतु पाथः। तै ३,१,१,४।

---

१. मित्रः, वरुणः, धाता, अर्यमा, अंशः, भगः, इन्द्रः, विवस्वान् इत्यष्टौ पुत्राः।

५०. गां मा हि ऽसीरदितिं विराजम् । तैसं ४, २, १०, २ ।

५१. गृध्रशितिकक्षी वार्ध्रीणसस्तेऽदित्याः । काठ ४७,१० ।

५२. तस्यै (अदित्यै) धेनुर्दक्षिणा धेनुरिव वा इयं (अदितिः=पृथिवी) मनुष्येभ्यः सर्वान् कामान् दुहे । माश ५,३,१,४ ।

५३. ततश्चक्षाथामदितिं दितिं चेति ततः पश्यत ऽ स्वं चारणञ्चेत्येवैतदाह । माश ५,४,१,१५ (तु. तैसं १,८,१२,३) ।

५४. तदभ्यनूक्ता । अष्टौ पुत्रासो अदितेर्ये जातास्तन्वं परि देवा ऽ उपप्रैत् सप्तभिः परा मार्तण्ड-मास्यदिति । तां २४,१२,५-६ ।

५५. तस्या (अदित्याः=पृथिव्याः) इयमूर्ध्वा दिक् । काठ २३,८ ।

५६. ते देवा अदितिम्(=पृथिवीम्)अब्रुव ऽ स्त्वया मुखेनेमा दिशः प्रजानामेति । मै ३,७,१ ।

५७. धेनुर्दक्षिणैतद्ध्यदित्या रूपम् । मै ४,३,८ ।

५८. नवभिरस्तुवत पितरोऽसृज्यन्तादितिरधिपत्न्यासीत् (°धिपतिरासीत् [मै.]) । तैसं ४, ३,१०, १; मै २,८,६; काठ १७,५ ।

५९. पुनर्वसुर्नक्षत्रमदितिर्देवता । मै २,१३,२० ।

६०. पृथिवी च मे अदितिश्च मे (यज्ञेन कल्पताम्) । तैसं ४,७,९,१ ।

६१. पृथिव्यदितिः । काठ २४,४;६; क ३७,५; ७ ।

६२. प्रतिष्ठा वा अदितिः प्रतिष्ठा पूषा, प्रतिष्ठा त्रिणवः । तैसं ५, ३, ४,४; काठ २१, १ ।

६३. मा गामनागामदितिं वधिष्ट । मै २,८,१५; तैआ ६,१२,१ ।

६४. मातेवास्मा अदिते शर्म यच्छ, (+ इयमदितिरस्यामेवैनं प्रतिष्ठापयति [काठ ११,८]) विश्वे देवा जरदष्टिर्यथाऽसत् । तैसं २,३,१०,३; मै २,३,४; काठ ३६,१५ ।

६५. यच्चिद्धि ते पुरुषत्रा यविष्ठाचित्तिभिश्चकृमा कच्चिदागः कृधी ष्वस्माँ अदितेरनागान् व्येना ऽ सि शिश्रथो विष्वगग्ने । काठ २,१५ ।

६६. यत् तदादत्त तददितिः । काठ ८,२ ।

६७. यत्स्विदादित्यः प्रायणीय आदित्य उदयनीयस्तदस्या (अदित्याः=वाचः) उभयतः शीर्षत्वम् । मै ३,७,५ ।

६८. वाग्वाऽअदितिः । माश ६,५,२,२० ।

६९. विष्टम्भो दिवो, धरुणः पृथिव्या अस्येशाना जगतो विष्णुपत्नी । विश्वव्यचा इषयन्ती सुभूतिः शिवा नो अस्त्वदितिरुपस्थे । तैसं ४,४,१२,५ ।

७०. सर्वं वाऽअत्तीति तददितेरदितित्वम् । माश १०,६,५,५ ।

७१. सुत्रामाणं पृथिवीं द्यामनेहस ऽ सुशर्माणमदितिं सुप्रणीतिम् । दैवीं नाव ऽ स्वरित्रामनाग-समस्रवन्तीमारुहेम स्वस्तये । काठ २,३ ।

७२. सैक्षतोच्छिष्टं (ओदनमदितिः) मेऽश्नत्या द्वौ द्वौ (पुत्रौ) जायेते । मै १,६,१२ ।

७३. सोर्ध्वां दिशं (अदितिः) प्राजानात् । कौ ७,६ ।

७४. स्वादित्या अदितये स्यामानेहसः । माश १, ५,१, १७ ।

अद्य-

अद्य वाव रथन्तरम् । तैसं ३,१,७,२ ।

अद्रि-

१. अद्रिरसि श्लोककृत् । काठ १,५; क १,५ ।

२. गिरिर्वाऽअद्रिः । माश ७,५,२,१८ ।

३. ग्रावाणो वा अद्रयः । तैसं ६, १,११,४ ।

४. सोममद्रौ (अदधात्) । तैसं १,२,८,२; मै १,२,६; काठ २,६; क १,१९ ।

अद्रिजा-

एष (सूर्यः) वा अद्रिजाः । ऐ ४,२० ।

अधर->अधरारणि-

उर्वश्यसीत्यधरारणिमायुरसि । काश ४,४,१,१४ ।

अधरौष्ठ-

अयं वै (भू-) लोकोऽधरौष्ठः । कौ ३, ७ ।

अधिदेवन-

अधिदेवनं वाऽअग्निस्तस्यैतेऽअङ्गारा यदक्षाः । माश ५,३,१, १० ।

अधिद्यो-

अधिद्यौर्नामास्यमृतेन विष्टा······विश्वे ते देवा गोप्तारः सूर्योऽधिपतिः । मै २,८,१४ ।

अधिपति-

१. अधिपतिः प्रोह्यमाणः (सोमः) । काठ ३४,१४ ।

२. अधिपतिरसि प्राणाय त्वा प्राणं जिन्व । तैसं ३,५,२,४-५; ४,४,१,२-३; काठ ३७, १७ ।

३. अधिपतिरसीत्येव प्राणमदधात् । तैसं ५,३,६,२ ।

४. त्वष्टाऽधिपतिः । मै ३,६, ९ ।

५. प्रजापतिर्वाऽअधिपतिः । माश ८,२,३,१२ ।

६. विष्टम्भो वयोऽधिपतिश्छन्दः । तैसं ४,३,५,२; मै २,८,२ ।

७. समुद्रोऽधिपतयो नाम स्थ, तेषां व उपरि गृहा वर्षं व इषवः । तैसं ५,५,१०,४ ।

अधिपत्नी-

१. अधिपत्नी नामासि बृहती (ऊर्ध्वा [मै.]) दिक् तस्यास्ते बृहस्पतिरधिपतिः । तैसं ५,५,१०, २; मै २,१३,२१ ।

२. अधिपत्न्यस्यूर्ध्वा (°त्न्यसि बृहती [तैसं., काठ.]) दिक्। तैसं ४,३,६,२; मै २, ८, ३; काठ १७,३।

## आधिपत्य-

अथैनम् (इन्द्रम्) ऊर्ध्वायां दिशि मरुतश्चाङ्गिरसश्च देवाः'''अभ्यषिञ्चन्'''पारमेष्ठ्याय माहाराज्यायाऽऽधिपत्याय स्वावश्यायाऽऽतिष्ठाय। ऐ ८, १४।

## अधि[,धी]वास-

क्षत्रस्य वा एषा योनिर्यदधि (°धी[माश.])वासः। काश ७,३,४,३; माश ५, ४,४,३।

## अधिषवण-

१. जिह्वाधिषवणम् (+चर्म [काठ., क.])। मै ३,८,८; ४,५,९; काठ २५,९; क ४०, २।

२. तस्या (विराजः = पृथिव्याः) एतदूधो यदधिषवणे। काठ २५,९; क ४०,२।

३. त्वगधिषवणं चर्म (विराजो गोः = पृथिव्याः)। काठ २५,९; क ४०,२।

४. हनू वा एते यज्ञस्य यदधिषवणे। तैसं ६.२,११,३; काठ २५,९; क ४०,२।

## अध्ययन-

यज्ञोपवीत्येवाधीयीत। तैआ २,१,१।

## अध्यर्ध-

यदयमेक एव पवतेऽथ कथमध्यर्ध इति यदस्मिन्निद ँ सर्वमध्यार्ध्नोत्तेनाध्यर्ध इति। माश १४,६,९,१०।

## अध्यर्द्धेड (साम)-

प्रतिष्ठाध्यर्द्धेडेन व्यजयन्त (देवाः)। तां १०,१२,४।

## अध्रिगु-

१. अध्रिगुर्वै देवानां शमिता। ऐ २,७।

२. अध्रिगुश्च विपापश्च (°गुश्चापापश्चोभौ [तै.]) देवाना ँ शमितारौ। मै ४, १३,४; तै ३, ६,६,४।

## अध्वन्-

१. पूषाध्वनस्पातु (°नः पातु [तैसं.])। तैसं १,२,४,२; काठ २,५; क १,१७।

२. पूषा वा अध्वना ँ सन्नेता समष्ट्यै। तैसं ५,१,२,४; काठ १९, २।

३. योजनशो हि मिमाना अध्वानं धावन्ति। माश ५,१,५,१७।

## अध्वर-

१. अध्वरो वै यज्ञः। माश १, २, ४, ५; ४,१, ३८; ३९; ५,३; २, ३,४, १०; ३,५, ३, १७; ९,२,११।

२. अध्वर्तव्या वा इमे देवा अभूवन्निति तदध्वरस्याध्वरत्वम्। तैसं ३,२,२,३।

३. ते (असुराः)ऽध्वृतोऽयमभूदित्यपक्राम९स्तदध्वरस्याध्वरत्वम् । मै ३,६,१० ।

४. तेऽसुरा अपक्रामन्तोऽब्रुवन्न वा इमे ध्वर्तवा अभवन्निति । तदध्वरस्याध्वरत्वम् । क ३८,४ ।

५. देवान्ह वै यज्ञेन यजमानान्त्सपत्ना असुरा दुधूर्षाञ्चक्रुः (=हिंसितुमिच्छां कृतवन्तः) ते दुधूर्षन्त एव न शेकुर्धूर्वितुं ते परा बभूवुस्तस्माद्यज्ञोऽध्वरो नाम । माश १,४,१,४० ।

६. प्राणो (रसो [माश ७,३,१,६]) ऽध्वरः । माश ७,३,१,५ ।

७. यज्ञो वा अध्वरः । काठ ३१,११; क ४७,११; तैआ ५,२,६० ।

अध्वर्यु-

१. अध्वर्युः पुरो वाच९ विभजति, मैत्रावरुणः पश्चात् । मै ३,६,८ ।

२. अध्वर्युणा दक्षिणाः (स्वर्गं लोकं यन्ति) । मै ४,८,८ ।

३. अध्वर्युणा वै यज्ञो विधृतः । मै ३,८,१० ।

४. अध्वर्युरेव महः । गो १,५,१५ ।

५. अध्वर्युर्वै श्रेयान् पापीयान् प्रतिप्रस्थाता । काठ २७,५; क ४२,५ ।

६. अध्वर्योर्लोके तिष्ठञ्जुहोति । काठ २७,६ ।

७. अनड्वानध्वर्यवे ( देयः), वह्न्येव यज्ञस्यावरुन्द्धे । काठ ८,८ ।

८. अन्तराहवनीयं च हविर्धानं चाध्वर्योर्लोकः । मै ४,६,५ ।

९. अपानो मेऽध्वर्युः । प २,७ ।

१०. अर्यमा इव ह्यध्वर्युः । मै ४,४,८ ।

११. अश्विनावध्वर्यू (ण्नाऽध्वर्यू [मै.]) । मै १,९,१; २,८,१; काठ ९,८; ए १,१८; गो २,२, ६; तै ३,२,२,१; माश १,१,२,१७; ३,९,४,३; तैआ ३,३,१ ।

१२. असावध्वर्युः (द्यौः) । तैसं ३,२,९,६ ।

१३. आदित्यो मेऽध्वर्युः । प २,५ ।

१४. आश्विनौ वाऽअध्वर्यू । काठ २८,५; क ४४,५ ।

१५. एतम् (आत्मानमादित्यम्) अग्नावध्वर्यवः (मीमांसन्ते) । शांआ ८,४ ।

१६. उद्गातारमध्वर्युस्स्पाशयेत । काठ ३५,१६ ।

१७. चक्षुर् (+मे [प.])अध्वर्युः । कौ १७,७; गो २,५,४; प २,६; तैआ १०,६४ ।

१८. तद्वा अध्वर्योः स्व९ यदाश्रावयति,'''तद्वा अध्वर्योः स्व९ यद्वायव्यम् । मै ४,५,६ ।

१९. तमेतमग्निरित्यध्वर्यव उपासते । यजुरिति । माश १०,५,२,२० ।

२०. तस्य (अध्वर्योः) प्रातःसवनमायतनम् । जै १,२४३ ।

२१. तावध्वर्यू प्रथमौ प्रतिपद्येते प्राणोदानौ यज्ञस्य । माश ४२,५,३ ।

२२. द्यौरध्वर्युः । मै १,९,१; । काठ ९,८; तैआ ३,२,१ ।

२३. पर्णमयेनाध्वर्युरभिषिञ्चति । तै १,७,८,७ ।

२४. पशवो ह्यध्वर्युमनु । ष २,८ ।

२५. पूर्वार्धो वै यज्ञस्याध्वर्युर्जघनार्धः पत्नी । माश १,९,२,३ ।

२६. प्रतिगरोऽध्वर्यूणाम् । तैसं ३,२,९,६ ।

२७. प्रतिष्ठा वा एषा यज्ञस्य यदध्वर्युः । तै ३,३,८,१० ।

२८. प्रतीच्यध्वर्योः (दिक्) । माश १३,५,४,२४ ।

२९. प्राकाशावध्वर्यवे ददाति । तैसं १,८, १८,१ ।

३०. प्राचीन ५ वै धिष्ण्येभ्योऽध्वर्योर्लोकः । मै ३,८, १० ।

३१. प्राणापानावेवाध्वर्यू । गो १, २,१०; माश ५,५,१,११ ।

३२. प्राणो यज्ञस्य (अध्वर्युः) । जै १,८५ ।

३३. मनो (+ वा ⌊माश १२,१,१,५⌋) ऽध्वर्युः । माश १,५,१,२१ ।

३४. यत् तिष्ठन् प्रतिगृणात्यमुष्या (दिवः) एव तदध्वर्युर्नैति, तिष्ठतीव ह्यसौ (द्यौः) । तैसं ३, २,९,६-७ ।

३५. यत् प्रयाजेष्वनिष्टेषु प्राङङ्गारस्स्कन्देदध्वर्यवे च यजमानाय चाक ५ स्यात् । काठ ३५, १८; क ४८,१६ ।

३६. यदध्वर्युं (वृणीते), पङ्क्ति तत् (वृणीते) । मै ३,९,८ ।

३७. राज्यं वा अध्वर्युः । तै ३,८,५,१ ।

३८. वह्निरध्वर्युः । तै १,१,६,१० ।

३९. वायुर् (वातो ⌊तैआ.⌋) अध्वर्युः । गो १,१,१३; तैआ ३, ६, १ ।

४०. वायुर्वा अध्वर्युः (+ अधिदैवं प्राणोऽध्यात्मम् ⌊ गो १,४,५ ⌋ ) गो १,२,२४ ।

४१. सत्यहविरध्वर्युः । मै १,९,१; काठ ९,९; तैआ ३,५,१ ।

४२. सामाध्वर्युः । मै १,९,१; तैआ २,१७, २; ३,१,१ ।

४३. सिंहाध्वर्युर् (+ मनसा ⌊काठ.⌋) ध्यायति (°येत् ⌊काठ.⌋) । मै २,३,९; काठ १[illegible]१० । [°र्युं- अतिछन्दस्- ४ द्र.] ।

अध्वर्युपात्र-

अध्वर्युपात्र ५ वै यजमानस्य पात्रं प्रतिप्रस्थानं भ्रातृव्यस्य । मै ४, ६, २ ।

आध्वर्यव-

१. अश्विनाऽऽध्वर्यवम् । मै ४,१३,८ ।

२. यजुषाऽऽध्वर्यवं (क्रियते) । जै १,३५८ ।

अनडुह्-

१. अग्निरेष यदनड्वान् । माश ७,३,२,१ ।

२. अनडुहा क्रीणाति, वह्ययेवास्य क्रीणाति । मै ३,७,७ ।

३. अनडुहो वै पयस्तण्डुला असा (असौ [क.]) आदित्योऽनड्वान् । काठ ६,३; क ४,२ ।

४. अनड्वाञ्च मे धेनुश्च मे (यज्ञेन कल्पताम्) । तैसं ४,७,१०,२ ।

५. अनड्वान् नेष्टुः (दीयते) । मै ४,४,८ ।

६. अनड्वान् वयः, पङ्क्तिश्छन्दः । तैसं ४,३,५,१; मै २,८,२; काठ १७,२ ।

७. अनड्वान् वै सर्वाणि वयांसि पशूनाम् । मै ३,७,४ ।

८. अनड्वाहः पङ्क्त्यै (दीयन्ते) । मै ३,१३,१८ ।

९. ऐन्द्राग्न एकादशकपालः (+ऋषभोऽनड्वान् दक्षिणा [काठ १५,१]) । काठ ९,५ ।

१०. धेन्वै वा एतद्रेतो यदाज्यमनडुहस्तण्डुलाः । तैसं २,२,९,४ ।

११. मिथुनं वा एतद्यद् घृतं च तण्डुलाश्च, धेन्वा घृतं पयो ऽनडुहस्तण्डुलाः । काठ १०, १ ।

१२. वह्निर्वा अनड्वान् । तैसं २,२,१०,५; ६,१,१०,२; तै १,१,६,१०;८,२,५ ।

१३. वोढाऽनड्वान् (आजायताम्) । तैसं ७,५,१८,१ ।

१४. श्येत इव ह्येष (सूर्यः) उद्यंश्चास्तं च यन्भवति तस्माच्छ्येतोऽनड्वान्दक्षिणा । माश ५,३, १,७ ।

[ °डुह्- अग्निध्- ७; अध्वर्यु- ७; आग्नावैष्णव- १; आग्नेय- २० द्र. ] ।

अनद्धापुरुष-

१. एष ह वाऽअनद्धापुरुषो यो न देवानवति न पितॄन्न मनुष्यान् । माश ६, ३,१,२४ ।

२. कोऽनद्धा पुरुष इति, (यः) न देवान्न पितॄन्न मनुष्यान् (पूजयेत्) इति । ऐ ७,९ ।

अनन्त-

अनन्तो भूत्वा (प्रजापतिः) मृत्युरभवत् । कामो भूत्वाऽनन्तोऽभवत् । जै १, ३१४ ।

आनन्त्य-

प्रजापतिरकामयताऽऽनन्त्यमश्नुवीयेति । गो १,५,८ ।

अनमीव-

अनमीवस्य शुष्मिण इत्याहायक्ष्मस्येति वावैतदाह (°स्येत्येवैत° [काठ., क.]) । तैसं ५, २, २, १; काठ १९,१२; क ३१,२ ।

अनर्वन्-

अनर्वा प्रेहीति । असपत्नेन प्रेहीत्येवैतदाह । माश ३,८,२,३ ।

अनवद्राण-

यः (वायुः) पवते सोऽनवद्राणः । काठ ३७,१० ।

अनशन-

१. तपो नाऽनशनात्परम् । तैआ १०,६२ ।

२. तस्य (प्रायश्चित्तार्थं वेदभागमध्येतुः पुरुषस्य) अनशनं दीक्षा । तैआ २,१७,२ ।

**अनश्नत्सांगमन-**

अथ य एष सभायामग्निः । एष एवानश्नत्सांगमनस्तद्यदेतमनशित्वेवोपसंगच्छंते तस्मादेषोऽनश्नन् । माश २,३,२,३ ।

**अनस्-**

१. अन्तरिक्षरूपमिव वा एतद्यदनः । काश ४,३,४,१ ।

२. यज्ञो (भूमा [माश १,१,२,६]) वाऽअनः । माश १,१,२,७;३,९,३, ३ ।

**अनोवाह्य-**

अनोवाह्यं समे जीवनम् । तैसं ६,१,९,४ ।

**अनात्मन्—**

अनात्मा हि मर्त्यः । माश २,२,२,८ ।

**अनाधृष्ट, ष्टा-**

१. अयं (प्रजापतेस्तनूविशेषः) वा अग्निरनाधृष्टः । कौ २७,५ ।

२. तपसाऽनाधृष्टः (इन्द्रः) । तैसं ४,४,८,१ ।

३. विराड्वा ऽअनाधृष्टं छन्दः । माश ८,२,४,४ ।
[ °ष्टा- अग्नि- ३४७ द्र. ] ।

**अनाधृष्य,ष्या-**

१. अनाधृष्यश्चाप्रतिधृष्यश्च ( +यज्ञस्य [तैआ.] ) अभिगरौ । मै १, ९, १; काठ ९, ९; तैआ ३,५,१ ।

२. अनाधृष्या (प्रजापतेस्तनूविशेषः) तदग्निः । ऐ ५,२५ ।

३. असावादित्योऽनाधृष्यः । कौ २७,५ ।

४. द्यौरष्टहोता । सोऽनाधृष्यः । तैआ ३,७,३ ।

५. व्याघ्रो वयोऽनाधृष्यं (°धृष्टम् [तैसं.]) छन्दः । तैसं ४,३,५,२; मै २,८,२ ।

**अनाप्ता-**

अनाप्ता (प्रजापतेस्तनूविशेषः) तत्पृथिवी । ऐ ५,२५ (तु. कौ २७,५) ।

**अनाप्या-**

अनाप्या (प्रजापतेस्तनूविशेषः) तद् द्यौः । ऐ ५,२५ (तु. कौ २७,५) ।

**अनार्ति-**

अनार्त्यै त्वेत्येवैतदाह यदाहाव्यथायै त्वेति । माश ५,४,३,७ ।

**अनाशक-**

एतद्वै सर्वं तपो यदनाशकस्तस्मादुपवसथे नाश्नीयात् । माश ९, ५,१,६।

अनाहिताग्नि-

१. एषा वा अनाहिताग्नेरिष्टिर्यच्चतुर्होतारः। काठ ९,१५।

२. नो ह्यनाहिताग्नेर्व्रतचर्यास्ति। माश २,१,४,७।

अनिरुक्त-

१. अनिरुक्तं हि मनोऽनिरुक्त ९ ह्येतद्यत्तूष्णीम्। माश १,४,४, ५।

२. अनिरुक्तं (+इव [मै.]) हि रेतः। मै ४, ८, ६;। काठ २९,४; क ४५,५।

३. अनिरुक्तमु वै प्राजापत्यम्। जै २,१२।

४. अनिरुक्तान्याज्यानि। माश १,६,१,२०।

५. अनिरुक्तो वै (हि [मै.]) प्रजापतिः। मै ३,६,५; ऐ ६,२०; जै १,६०; तां १८,६,८; तै १, ३,८,५; माश १,१,१,१३; ६,१,२०; ६,२,२,२१; ऐआ १,२,२ (तु. काठ १४, १०)।

६. अनिरुक्तो हि संवत्सरः (वायुः [माश.])। मै १,१०,५; काठ ३५, २०; क ४८, १८; माश ८,७,३, १२।

७. अनिरुक्तो ह्येष (अन्तरिक्ष-) लोकः। माश १,४,१,२६ (तु. मै ३,८,९)।

८. अपरिमितं वाऽअनिरुक्तम्। माश ५,४,४,१३।

९. छन्ना इव हि परोक्षम्, अनिरुक्ता इव देवाः प्रजाः पृष्ठोक्थानि। जै १,२७४।

१०. यदनिरुक्तं तेन वैश्वदेवम्। जै १,१३८;१४२।

११. सर्वं वाऽअनिरुक्तम्। माश १, ३, ५, १०;४,१,२१;२,२,१,३; ७,२,२,१४; १०,१,३,११।

अनिलया-

तद्वायुर्न ह्येष इलयति (कदाचनेलयति [ऐ.])। ऐ ५, २५; कौ २७,५।

अनीक-

सेनाया वै सेनानीरनीकम्। माश ५,३,१,१।

अनुकाश-

प्रकाशेनान्तरमनुकाशेन बाह्यम् (प्रीणामि)। मै ३,१५,२।

अनुख्यातृ-

१. आदित्यो (+वा [गो.])ऽनुख्याता। तैसं ३,३,८,५; तै ३,७, ५,४; गो २,२, १९; ४,९।

२. चन्द्रमा अनुख्याता। काठसंक १२२।

अनुद्रष्टृ-

वायुरनुद्रष्टा। काठसंक १२२।

अनुपानीया-

एताभिर्वा इन्द्रस्तृतीयसवनमन्वपिबत् तदनुपानीयानामनुपानीयात्वम्। ऐ ३, ३८।

अनुमति-

१. अनुमतेऽनुमन्यस्व न इदं यद् भेषजं कृणुमहे तनूषु । काठ ३५,१२; क ४८,१२ ।

२. अनुमत्या अष्टाकपालं निर्वपन्ति । मै २,६,१ ।

३. अनुमत्या अष्टाकपालेन प्रचरन्ति, निर्ऋतिमेव निरवदाय । मै ४,३,१ ।

४. अनुमत्यै चरुः (हविः [माश.]) । तैसं ७,५,१४,१;२२,१; काठ ४५,१०; माश ५,२,३,२ ।

५. अनुमत्यै पुरोडाशमष्टाकपालं निर्वपति धेनुर्दक्षिणा । तैसं १, ८, १, १; (तु. काठ १५,१; माश ५, २,३,२) ।

६. अन्विदनुमते त्वं मन्यासै शं च नः कृधि । तैसं ३,३,११,३-४ ।

७. इयं (पृथिवी) वा अनुमतिः (+इयमेवास्मै राज्यमनुमन्यते [तै १, ६, १, ४-५]; स यस्तत्कर्म शक्नोति कर्तुं यच्चिकीर्षतीयꣳहास्मै तदनुमन्यते [माश.]) । मै ४,३, ८; तै १,६,१, १; माश ५,२,३,४ ।

८. इयं (पृथिवी) वा अनुमतिर्वाग्वाऽनुमतमेवैनꣳस्वमाक्रमयति । मै ४,३,१ ।

९. गायत्री (+वा [तैसं.]) अनुमतिः । तैसं ३,४,९,६; मै ४,३,५; काठ १२, ८ ।

१०. धेनुर्दक्षिणैतद्ध्यनुमत्या रूपम् । मै ४,३,१ ।

११. पिद्वो न्यङ्कुः ककुटस्तेऽनुमत्यै । मै ३,१४,१३ ।

१२. प्रजापतेरनुमतिः (पत्नी) । तैआ ३,९,२ ।

१३. विद्वो न्यङ्कुः कशस्तेऽनुमत्याः । काठ ४७,७ ।

१४. या द्यौः साऽनुमतिः सो एव गायत्री । ऐ ३,४८ (तु. ऐ ३,४७) ।

१५. या पूर्वा पौर्णमासी साऽनुमतिः । मै ४, ३, ५; काठ १२, ८; ऐ ७, ११; गो २, १, १०; प ४,६ (तु. तैसं ३,४,९,६ ) ।

१६. येऽरातीयन्ति (पुरुषाय) सा निर्ऋतिर्ये नारातीयन्ति साऽनुमतिः । मै ४,३,१ ।

अनुम्लोचन्ती-

प्रम्लोचन्ती चानुम्लोचन्ती चाप्सरसाविति दिक् चोपदिशा चेति ह स्माह माहित्थिरहोरात्रे तु ते, तेहि प्र च म्लोचतोऽनु च म्लोचतः । माश ८,६,१,१८ ।

अनुयाज-

१. अपाना अनुयाजाः । काठ १२,२; कौ ७,१;१०,३; माश ११,२,७,२७ ।

२. अशनिरेव प्रथमोऽनुयाजः । ह्रादुनिर्द्वितीय उल्कुषी तृतीयः । माश ११, २, ७, २१ ।

३. आत्मा वै प्राणानामेकादशः···अथ यदेकादशानुयाजाः, प्राणानस्मिन् दधाति । मै ३, ९,८ ।

४. एकादश (नव [मै.] ) अनुयाजाः । मै १, १०,८; काठ २६,९; क ४१,७ ।

५. छन्दाꣳसि वाऽअनुयाजाः । माश १,८,२,८;१४ (तु. माश १,३,२,९;३,९,३,८) ।

६. तद्यत्तासु सर्वास्विष्टासु (देवतासु) अथैतत्पश्चेवानुयजति तस्मादनुयाजा नाम। माश १,८,२,७।

७. त्रयोऽनुयाजाः। इमऽएवास्य तेऽवाञ्चस्त्रयः प्राणाः। माश ११,२,६,९।

८. न वाऽअत्र देवतास्त्यनुयाजेषु। माश १,८,२,१५।

९. प्रजाऽनू (°नु° [काठ., ऐ.]) याजाः। तैसं २,६,१,६; काठ २३,९; ऐ १,११।

१०. येऽवाञ्चस्तेऽनुयाजाः (प्राणाः)। ऐ १,१७।

११. रेतोधेयम् (पशवो वा [माश.]) अनुयाजा। कौ १०,३; माश ३,८,४,८।

अनुरूप-

१. अग्निरनुरूपः। जैउ ३,१,४,२।

२. पूर्वमु चैव तद्रूपमपरेण रूपेणानुवदति यत्पूर्वं९ रूपमपरेण रूपेणानुवदति तदनुरूपस्यानुरूपत्वमनुरूप एनं पुत्रो जायते य एवं वेद। तां १२,१,५;७,७;१३, १,९;७,७।

३. प्रजा (+वा [ऐ ३,२४]) अनुरूपः। ऐ ३, २३; कौ १५,४; २२,८; गो २, ३, २१;२२; जैउ ३,१,४,३।

४. स योऽयं (पुरुषः) चक्षुष्येषोऽनुरूपो नाम। अन्वङ् ह्येष सर्वाणि रूपाणि। जैउ १,८,३,४।

अनुवत्सर-

वायुरनुवत्सरः। तां १७,१३,१७; तै १,४,१०,१।

अनुवषट्कार-

१. यद्वस्फूर्जति सोऽनुवषट्कारः (यज्ञस्य)। तैआ २,१४,१।

२. संस्था (+वा एषा यद् [ऐ.]) अनुवषट्कारः। ऐ २,२८;३,२९; कौ १३, ५;८;१६,१;२; गो २,३,७।

अनुवाक्या-

१. असौ (द्यौः) वा अनुवाक्या (ह्यनु° [माश १,४,२,१८]); । माश १, ७,२,११।

२. ऋचोऽनुवाक्याः। काठ ११,१०।

३. ह्वयति वाऽअनुवाक्यया। माश १,७,२,१७।

अनुष्टुभ्-

१. अथानुष्टुप् वागेव सा। ...द्वयं वाचा करोति, अन्नं चैनयात्ति वदति च। जै १,२५४।

२. अनुष्टुप् कुहूः (प्रतिमा [काठ.])। तैसं ३,४,९,६; काठ ३२,४।

३. अनुष्टुप् च वै सप्तदशश्च समभवताम्। तां १०,२,४।

४. अनुष्टुप् छन्दसाम् (एतमादित्यमानशे)। तां ४,६,७।

५. अनुष्टुप् छन्दसां प्रतिष्ठा। तैसं २,५,१०,३।

६. अनुष्टुप् छन्दस्तदायुर्मित्रो देवता। मै २,१३,१४; काठ ३९,४।

७. अनुष्टुप् ( + वै [मै. ; काठ १९, १०; क ३०,८] ) सर्वाणि छन्दा ᳩसि ( + परिभूः [काठ., क.] ) तैसं ५, १, ५, २-३; मै ३. १, ४; ३,२; ४, ५,१; काठ १९, ३; क ३०,१।

८. अनुष्टुप् सोमस्य च्छन्दः। कौ १५,२; १६, ३।

९. अनुष्टुप् (प्राणस्य) स्रावानि। ऐआ २,१,६।

१०. अनुष्टुबनुस्तोभनात्। दे ३,७।

११. अनुष्टुबायतनानि ह्याज्यानि। ऐआ १,१,२।

१२. अनुष्टुबुदीची ( दिक् )। माश ८,३,१,१२।

१३. अनुष्टुबेव सर्वम्। गो १, ५, १५।

१४. अनुष्टुब्भि छन्दसां योनिः। तां ११, ५, १७।

१५. अनुष्टुब्भिरुत्तरतः ( पशूनेवावरुन्धे )। मै ३, ३, २।

१६. अनुष्टुब् ( °ष्टुप् [काठ., गो.] ) मित्रस्य ( पत्नी )। मै १,९,२; काठ ९,१०; गो १,२,९।

१७. अनुष्टुब् वै परमा परावत्। ऐ ३,१५।

१८. अनुष्टुब् वै प्रजापतेः स्वं छन्दः। काठ २३, २; क ३५,८।

१९. अनुष्टुभं वै स ( यजमानः ) छन्दसां जयति विश्वान् देवान् देवानाम्। जै १, ३२।

२०. अनुष्टुभमनुचंचूर्यमाणमिन्द्रं नि चिक्युः कवयो मनीषेति वाचि वै तदैन्द्रं प्राणं न्यचायन्निन्येतत्तदुक्तं भवति। ऐआ २,३,५।

२१. अनुष्टुभमस्था प्रविशामि। काठ ३८, १४।

२२. अनुष्टुभा प्रतिष्ठाकामस्य ( परि दध्यात् )। तैसं ६,४,३, २।

२३. अनुष्टुभि प्रस्तुतायां वाचा पृथिवीं संदध्यात्। जै १, २७०।

२४. अन्तो वा अनुष्टुप् (+ छन्दसाम् [तां.] )। मै १,१०,१८; काठ ३६,१२; तां १९, १२,८।

२५. आत्मा (+ वै [तैसं.] ) लोकम्पृणा [इष्टका] (+ प्राणोऽनुष्टुप् [तैसं.] )। तैसं ५,५,६,२; माश ८, ७, २,८।

२६. आपो (ज्येष्ठ्यं [तां.] ) वा अनुष्टुप्। कौ २४,४; तां ८, ७, ३;१०, १०।

२७. इदमुत्तरात्स्वस्तस्य श्रोत्रᳩ सौव ᳩ शरच्छ्रौत्र्यनुष्टुप् शारद्यनुष्टुभः ऐडमैडान्मन्थी मन्थिन एकवि ᳩ श एकवि ᳩ शाद् वैराजं विश्वामित्र ऋषिः। मै २, ७,१९; काठ १६,१९।

२८. इयं ( पृथिवी ) वाऽनुष्टुप्। तां ८,७,२; माश १, ३,२, १६।

२९. उदीची दिक् शरदृतुर्मित्रावरुणौ देवता पुष्टं द्रविणमनुष्टुप् छन्दो वैराजᳩ सामैकवि ᳩ शः स्तोमः स उ त्रिणवर्वतनिः पुराणा ऋषिस्तुर्यवाड् वयोऽभिभवो ऽयानाम्। मै २, ७,२०।

३०. उदीचीमातिष्ठानुष्टुप्त्वा छन्दसामवत्वेकवि ᳩ शः (छन्दसाव° [काठ.] ) स्तोमो, वैराज ᳩ साम,

मित्रावरुणौ देवता, पुष्टं ( बलं [तैसं.] ) द्रविणम् । तैसं १,८,१३, १-२; मै २, ६, १०; काठ १५, ७ ।

३१. उदीचीमारोह । अनुष्टुप्त्वावतु, वैराज ॅसामैकवि ॅशस्तोमः, शरदृतुः, फलं द्रविणम् । माश ५, ४, १,६ ।

३२. उद्वद्वा अनुष्टुभो रूपम् । मै ४, ४, १०; तां १८, ८,१४ ।

३३. एकवि ॅशतिधाम्नी वा अनुष्टुप् । मै ४, ७, ६ ।

३४. एषा वै प्रत्यक्षमनुष्टुब्यद्यज्ञायज्ञीयम् ( साम ) । तां० १५, ९,१५ ।

३५. क्षत्रं (प्रतिष्ठा [जै.]) वा अनुष्टुप् (°ष्टुक् [तै ]) । तै ३,३,९,१; जै १,२२९; ऐआ १,१,३ ।

३६. गायत्री वै सा यानुष्टुप् । कौ १०, ५; १४,२;२८,५ ।

३७. गायत्र्युदपतत्, तामनुष्टुम् माता प्रत्यन्वैक्षत । जै १, २८८ ।

३८. तं ( अनन्तम् ) विश्वे देवा वाङ् मनश्च प्रजापतिरनुष्टुभा छन्दसा यज्ञायज्ञीयेन साम्नास्तुवन् । जै १,२२९ ।

३९. तां ( अनुष्टुभम् ) बलवदुपब्दिमतीनिघातं गायेत् । निघ्नदिव ह खलु वा एतच्छन्दो यदनुष्टुप् । अनुष्टुभा वै वाचा छन्दसा देवा असुरानवाचोऽवाघ्नन् । जै १, २६१ ।

४०. तुर्यवाड्वयोऽनुष्टुप् छन्दः । तैसं ४, ३, ५,१; मै २,८,२; काठ १७,२ ।

४१. त्रिवत्सा अनुष्टुभे ( नियोज्याः ) । मै ३, १३, १७ ।

४२. दिशो (पादौ [प.] ) ऽनुष्टुप् । मै ३, १, २; काठ १९, १; क २९,८; प २,३ ।

४३. द्वात्रि ॅशदक्षरा (+वा [जै.]) ऽनुष्टुप् (°ष्टुक् [तैसं.]) । तैसं २, ५, १०, ३; कौ २६, १; जै० १,३२; तां १०,३,१३; तै० १, ७, ५,५ ।

४४. द्वात्रिंशदङ्गुलो भवति ( दक्षिणाग्निः ) । अनुष्टुभा संमितोऽनुष्टुभा वीर्यं करोत्यष्टुभैव वीर्येण यजमानं समर्धयति । काठसंक १६ ।

४५. परमं वाऽएतच्छन्दो यदनुष्टुप् । माश १३, ३,३,१ ।

४६. परमा वा एषा छन्दसां यदनुष्टुक् । तैसं ५, ४, १२, १ ।

४७. पशुभ्योऽनुष्टुभा ( देवा असुरानन्तरायन् ) । जै १, ९९ ।

४८. पश्चाजमिव वा एतच्छन्दो यदनुष्टुप् पश्चाजेवैषा होत्रा यदच्छावाक्या । काठ २६, ९; क ४१,७ ।

४९. प्रजापतिर् ( +वा [ तां., जै. ) अनुष्टुप् । तैसं ३, ४, ९, ७; जै १,२९०; तां ४,८,९ ।

५०. प्राजापत्यमेतच्छन्दो यदनुष्टुप् । मै ३, ६,५ ।

५१. प्राणा ( °णो [ काठ., क. ] ) वा अनुष्टुप् । तैसं ५, २,८, २; काठ २१,३; क ३१,१८ ।

५२. प्राणा वा एतानीतराणि छन्दा ॅसि, वागनुष्टुप् । मै ३, १, ९ ।

५३. बृहस्पतिरष्टाक्षरयानुष्टुभमुदजयच्चतुर्धा ह्येतस्या ( हि तस्या [ काठ. ]) अष्टा अष्टा अक्षराणि । मै १, ११, १०; काठ १४,४ ।

५४. बृहस्पतिर्देवताऽनुष्टुप् छन्दो मित्रावरुणयोः पात्रमसि । तैसं ३, १, ६, २ ।

५५. यच्चतुर्ध्रुवायां गृह्णात्यनुष्टुभे तद् गृह्णाति··· इयं (पृथिवी) वा अनुष्टुवस्यै वा इद९सर्वं प्रभवति तस्माद्ध्रुवाया एव सर्वो यज्ञः प्रभवति (ध्रुवा=पृथिवी) । माश १,३,२,१६ ।

५६. यज्ञोऽनुष्टुक् (°ष्टुप् [काठ., क.]) । तैसं ५, १, ३, ६; काठ १९, ३; क ३०,१ ।

५७. यस्य ते (प्रजापतेः) ऽहं (अनुष्टुप्) स्वं छन्दोऽस्मि । ऐ० ३, १३ ।

५८. यस्याष्टौ ता (उष्णिहः) अनुष्टुभम् (संपद्यन्ते) । कौ० ९,२ ।

५९. या कुहूः सानुष्टुप् । ऐ० ३, ४७; ४८ (तु. मै ४, ३, ५; काठ १२, ८) ।

६०. वागनुष्टुप् (+सर्वाणि छन्दांसि [तै १, ७,५,५]) । मै ३, ९,५; ४, ४, ९; कौ ५,६; ७,९;२६,१;२७,७; जै १, २६९; २,५८; तां ५, ७,१; तै १, ८,८,२; माश ८, ५,२,५; १०, ३, १, १; ऐआ १, १,१; ३,८; शांआ २, १५ ।

६१. वागेवासौ प्रथमानुष्टुप् । कौ १५,३; १६,४ ।

६२. वाग्वा (°ग्वि [माश ३,१,४,२]) अनुष्टुप् (°ष्टुक् [तै.]) । तैसं ५,१,३,५; ९,१; मै २,३,७; ३,३,८;४,५,३; काठसंक १४१; क ३१, १८; ऐ १,२८;३,१५;६,३६; गो २,६, १६; जै १, १०२;१६१;२७२;२, २२१;४२५; तै ३,३,१०,३; माश १,३,२,१६;८,७,२,६ ।

६३. वाचमनुष्टुभं तन्वं संनिर्मिमीते । ऐआ २,३,६ ।

६४. वाचम् (असुराणां) अनुष्टुभा (देवा अवृञ्जत) । जै १, ९९;२५३ ।

६५. वास्त्वनुष्टुप् । माश १,७,३,१८ ।

६६. विश्वेदेवा अनुष्टुभं समभरन् । जैउ १,४,४,७ ।

६७. विश्वेषां देवानामनुष्टुप् । जै २,१०१ ।

६८. विष्णोरनुष्टुप् (पत्नी) । तैआ ३,९,१ ।

६९. वृषा वै त्रिष्टुब् योषानुष्टुप् । ऐआ १,३,५ ।

७०. सत्यानृते वा अनुष्टुप् । तै १,७,१०,४ ।

७१. स (प्रजापतिः) पद्भ्यामेव प्रतिष्ठाया···अनुष्टुभं छन्दः (असृजत) । जै १,६९ ।
[°ष्टुभ्- अग्नि- ३४८ द्र. ] ।

अनुष्टुप्छन्दस्-

१. यस्ते राजन् वरुणद्रुहः पाशोऽनुष्टुप्छन्दा दिशोऽन्वाविवेश पशुषु प्रतिष्ठितः । काठ १७,१९ ।

२. यस्ते राजन् वरुणानुष्टुप्छन्दाः पाशो दिक्षु प्रतिष्ठितस्तं त एतेनावयजे । मै २, ३, ३ ।

३. शूद्रोऽनुष्टुप्छन्दा वेश्मपतिर्देवः । तस्माद्ध पादावनेज्येनैव जिजीविषति । पद्भ्यां ह्येनं प्रतिष्ठाया असृजत (प्रजापतिः) । जै १, ६९ ।

आनुष्टुभ-

१. आनुष्टुभं वै चतुर्थमहः । कौ २२, ७;८ ।

२. आनुष्टुभः पुरुषस्तस्मात् पुरुषः सर्वा वाचो वदति । मै ४,७, ५ ।

३. तस्मादानुष्टुभं छन्दा९सि नानुव्यूहन्ति । तां ६, १, ११ ।

४. विश्वे त्वा देवा उत्तरतोऽभिषिञ्चन्त्वानुष्टुभेन छन्दसा । तै २,७,१५,५ ।

५. विश्वे त्वा देवा वैश्वानराः कुर्वन्त्वानुष्टुभेन (आछृन्दन्त्वा° [मै.]; कृण्वन्त्वा° [माश ६,५,२,६]; धूपयन्त्वा° [माश ६,५,३,१०]; संसृजन्त्वा° [तैसं.]) च्छन्दसाङ्गिरस्वत् । तैसं ४, १,५,२; मै २, ७,६; काठ १६,५ ।

६. विष्णोः क्रमोऽसि (+ शत्रूयतो हन्ताऽऽनुष्टुभं छन्द आरोह, दिशोऽनुविक्रमस्व [काठ १६,८]) । काठ १,४ ।

अनुस्तरणी-

१. जरतीं मूखां तज्जघन्यामनुस्तरणीं कुर्वीत । तैसं ७,१,६,४ ।

२. ताम् (गाम्) अब्रुवन् यमायोदेहि···इति सा धूम्रादित्यौ ह्युदैत् ईर्मतो ह्रसीयसी पश्चाद्वर्षीयसी जरतीव कुष्ठाऽशृंगी···सैषानुस्तरणी । जै २,२५० (तु. तां २१,१,७) ।

३. पितॄणामनुस्तरणी तस्मात्पितृमत्या यजति । मै ४,७,२ ।

४. यत् कृष्णया (क्रीणीयात्) ऽनुस्तरणी स्यात् ,प्रमायुको यजमानः स्यात् । तैसं ६,१,६,७ ।

५. यत् (सोमक्रयणी गौः) पदिबद्धानुस्तरणी स्यात् , प्रमायुको यजमानः स्यात् । तैसं ६, १, ७, ५ ।

अनूक-

१. अनूकमेवास्य सामिधेन्यः । माश ११, २,६, ३ ।

२. बृहतीछन्दो बृहस्पतिर्देवतानूकम् । माश १०, ३, २,३ ।

अनूचान-

ऋषीणां निधिगोप इति ह्यनूचानमाहुः । माश १, ७, २, ३ ।

अनूबन्ध्या (गो)-

१. अथ यामनुबन्ध्यायामेकाम्, मित्रावरुणयोरेव तेन पुरोधामाश्नुत । जै २, १२९ ।

२. चतुर्थमेवैतत्सवनं यदनूबन्ध्या तस्मादच्युता भवति । कौ १८, ११ ।

३. मैत्रावरुणी वा अनूबन्ध्या । कौ ४, ४ ।

अनूराधा-

१. अनूराधाः प्रथमम् । अपभरणीरुत्तमं तानि यमनक्षत्राणि । तै १, ५, २, ७ ।

२. अनूराधा नक्षत्रं मित्रो देवता । तैसं ४, ४, १०, २; मै २, १३,२० ।

३. अन्वेषामरात्समेति ! तदनूराधाः । तै १, ५, २, ८ ।

४. आर्ध्नोद् वै स यस्तमाधत्त, तस्मादनूराधाः । काठ ८,१५; क ८,३ ।

५. मित्रस्य (प्रतिष्ठा [तै १,५,२,२]) अनूराधाः । तै १, ५, १, ३; ३, १ ,२, १ ।

६. मित्रो देवताऽनूराधा नक्षत्रम् । काठ ३९, १३ ।

अनृत-

१. अथ योऽनृतं वदति यथाग्निं समिद्धं तमुदकेनाभिषिञ्चेदेवं हैनं स जासयति तस्य

कनीयः कनीय एव तेजो भवति श्वः श्वः पापीयान् भवति तस्माद्‌ु सत्यमेव वदेत् । माश २, २, २, १९ ।

२. अथैतन्मूलं वाचो यदनृतं, तद्यथा वृक्ष आविर्मूलः शुष्यति स उद्वर्तत एवमेवानृतं वदन्नाविर्मूलमात्मानं करोति स शुष्यति स उद्वर्तते । तस्मादनृतं न वदेद्दयेत त्वेनेन । ऐआ २, ३, ६ ।

३. अनृतं ( वा एतत् ) यदा तपति वर्षति । तै १, ७, ५, ३ ।

४. अनृतं ऽवा एषा करोति या (स्त्री) पत्युः क्रीता सत्यथान्यैश्चरति । मै १, १०, ११ ।

५. अनृतं ऽवै सीसमनृतं क्लीबोऽनृत ऽ सुरा । मै २, ४, २ (तु. काठ १२, ११) ।

६. अनृतं ऽ शण्डामर्का अनृतं भ्रातृव्यः । काठ २७, ७ ।

७. अनृतं ऽ स्त्री शूद्रः श्वा कृष्णः शकुनिस्तानि न प्रेक्षेत । माश १४, १,१, ३१ ।

८. अनृतं ऽ हि कृत्वा मेद्यति । माश २, ४, २, ६ ।

९. अनृत ऽ हि गाथाऽनृतं नाराश ऽ सी । काठ १४, ५ ।

१०. अनृतादात्मानं जुगुप्सेत् । तैआ १०, ९, १ ।

११. अनृताद्वै ताः प्रजा वरुणोऽगृह्णात् । मै १, १०, १२ ।

१२. अनृते खलु वै क्रियमाणे वरुणो गृह्णाति । तै १, ७, २, ६ ।

१३. अनृतेनासुरान् ( प्रजापतिरसृजत ) । काठ ९, ११ ।

१४. अमेध्यो वै पुरुषो यदनृतं वदति । तेन पूतिरन्तरतः । माश १, १, १, १; ३, १,२,१० ।

१५. अश्रद्धामनृतेऽधाच्छ्रद्धा ऽ सत्ये प्रजापतिः । मै ३, ११, ६ ।

१६. आमन्त्रणे नानृतं वदेत् । काठ ८, ७ ।

१७. एतद्वाचश्छिद्रं यदनृतम् । तां ८, ६,१३ ।

१८. ओ३मिति सत्यं, नेत्यनृतम् । ऐआ २, ३, ६ ।

१९. तस्मात्काल एव दद्यात्काले न दद्यात्तत्सत्यानृते मिथुनीकरोति । ऐआ २, ३, ६ ।

२०. तस्माद्‌ु हैतद्य आसवत्यनृतं वदत्यूष इवैव पिस्यत्याढ्य इव भवति परा ह त्वेवान्ततो भवति, परा ह्यसुरा अभवन् । माश ९,५,१,१७ ।

२१. ताम् (वाचम् ) अन्वार्तीयन्त, तदनृतस्य जन्म । मै ३,७,३ ।

२२. ते देवाः सत्यमभवन्, अनृतमसुराः । मै १,९,३ ।

२३. ते ऽब्रुवन्नन्वृतीयामहा इति, तामन्वार्तीयन्त, तदनृतस्य जन्म, तद्य एव ऽ विद्वान्सत्यानृता ऽ वाच ऽ वदति, न हैनं द्रुणाति (=हिनस्ति) । मै ३, ७, ३ ।

२४. तेषां ( अङ्गिरसाम् ) स्वर्गं लोकं यतां सोऽहीयत ( श्वित्र आङ्गिरसः ), अनृतं ह्यब्रवीत् । जै ३, ७७ ।

२५. देवता वा एष आरद्योऽनृतं करोति । मै २, १, ४ ।

२६. देवाः पितरो मनुष्यास्तेऽन्यत आसन्नसुरा रक्षा ५ सि पिशाचास्तेऽन्यतस्ते समयतन्त, ते यद्देवानामप्यल्पकं लोहितमसुरा अकुर्व ५ स्तद्रात्रीभी रक्षाँस्यसुम्भ ५ स्तान् सुब्धान् मृतानभिव्यौच्छत्, ते देवा अविदुर्यै वै न इमे के च म्रियन्ते रक्षा ५ सि वावैतान् सुम्भन्तीति, तानि ( रक्षांसि ) उपामन्त्रयन्त ( देवाः ), तान्यब्रुवन् वार्यं वृणामहै यदेवेमानसुराञ्जयाम तन्नस्सहासदिति, ततो देवा असुरानजयँस्तेऽसुराञ्जित्वा रक्षा ५ स्यपानुदन्त, तान्यनृतमकर्तेति समन्तं देवान् पर्यविश ५ स्ते देवा अग्ना एवानाथन्त । काठ १०, ७।

२७. देवासुराः संयत्ता आसन् । ते देवा अश्विनोः पूषन् वाचः सत्य ५ संनिधायानृतेनासुरानभ्यभवन् । तेऽश्विभ्यां पूष्णे पुरोडाशं द्वादशकपालं निरवपन् । ततो वै ते वाचः सत्यमवारुन्धत । यदश्विभ्यां पूष्णे पुरोडाशं द्वादशकपालं निर्वपति । अनृतेनैव भ्रातृव्यानभिभूय वाचः सत्यमवरुन्धे । तै १, ८,३,३-४ ।

२८. प्रातःप्रातरनृतं ते वदन्ति पुरोदयाज्जुह्वति ये ऽग्निहोत्रम् । दिवाकीर्त्यमदिवा कीर्तयन्तः सूर्यो ज्योतिर्न तदा ज्योतिरेषाम् । ऐ ५, ३१ ।

२९. भ्रातृव्यायानृतं वदेत् । काठ २७,८ ।

३०. यत्तुरीयमनृतं तन्मनुष्येषु न्यदधादेतद्वै वाचोऽनृतं यन्मनुष्या वदन्ति । काठ ६, ७ ।

३१. यो गाथानाराश ५ सीभ्या ५ सनोति न तस्य प्रतिगृह्यमनृतेन हि स तत् सनोति । मै १, ११, ५ ।

३२. शमलं वा एतद्वाचो यदनृतम् । काठसंक १२ ।

३३. सत्यमेव देवा अनृतं मनुष्याः । माश १, १,१, ४; २,१७;२,३, २,२ ।

३४. स होवाच वदथानृता३ मिति वदामो हीति, कस्मै कामायेति, स्त्रीकाम्या वा, नर्मकाम्या वा, सखीकाम्या वेति । जै ३, २७० ।

३५. स्रवति ह वा अनृतं वदतो यज्ञो ऽथोह पूयति । जै १, २५६ ।

अनृशंस-

अतिरिक्तजीव्यनृशंसः । जै १, १८१ ।

अन्त-

१. अन्तं वा एष गतो यो निरूढोऽन्तोऽर्कोऽन्तो ऽश्वमेधः । अन्तेनैवास्मा अन्ते कल्पयति······ अन्तो वा एषा ऋद्धीनां यजनः । मै २, २, ९ ।

२. अन्तो वै क्षयः (त्रिवृत् [ऐआ.] ) कौ ८,१; ऐआ १, ५,३ ।

३. अन्तो वै धिषणा (धूः [ऐआ १,५, २]) । ऐ ५, २; ऐआ १,५,३ ।

४. अन्तो वै पर्यासो ऽन्त उदर्कः । गो २, ३, १६; ४,४; १८ ।

५. अन्तो वै महत् (हि बृहस्पतिः [माश.]) । ऐ ५, २; १२; माश ४,५,१,१०; ऐआ १,५,३ ।

६. अन्तो वै यज्ञस्य स्वाहाकारोऽन्त ऋतूना ५ हेमन्तः । माश १, ५, ३, १३ ।

७. अन्तो वै वाणवन्तोऽन्तो राजन्यः । मै ४, ४, ३ ।

८. असौ वा आदित्योऽन्तः। काठ ११, ४।

[ न्त- अग्निष्टोम- ९; अनुष्टुभ्- २४ द्र. ]।

अन्तक-

एष ( संवत्सरः ) हि मर्त्यानामहोरात्राभ्यामायुषोऽन्तं गच्छत्यथ म्रियन्ते तस्मादेष एवान्तकः स यो हैतमन्तकं मृत्यु ँ संवत्सरं वेद। माश १०, ४, ३, २।

अन्तरिक्ष-

१. अथ द्वितीययाऽऽवृतेदमेवाऽन्तरिक्षं जयति यदुचान्तरिक्षे। तद्देतैश्चैनं छन्दोभिस्समर्द्धयति यान्यभिसम्भवति। एतां चास्मै दक्षिणाम्प्रयच्छति यामभिजायते। जैउ ३,३,१,६।

२. अथ यत्कपालमासीत्तदन्तरिक्षमभवत्। माश ६, १,२, २।

३. अथ यद् ( आण्डस्य ) अन्तरासीत्, तदिदमन्तरिक्षम्। जै ३,३६१।

४. अथ यदन्तरिक्षे तत्सर्वमुपद्रवेणाप्नोति। जैउ १,१०, १,८।

५. अथ यया विद्धः शयित्वा जीवति वा म्रियते वा सा द्वितीया (इषुः) तदिदमन्तरिक्ष ँ सैषा रुजा नाम (इषुः)। माश ५,३,५,२९।

६. अधिद्यौरन्तरिक्षं ब्रह्मणा विष्टा मरुतस्ते गोप्तारो वायुर्वियत्तः··· । तैसं ४, ४,५, २।

७. अनारम्भणमिव वा एतदनायतनमिव यदन्तरिक्षम्। काठ २१, ८।

८. अन्तरिक्षं यच्छान्तरिक्षं द ँ हान्तरिक्षं मा हि ँ सीरित्यात्मानं यच्छात्मानं द ँ हात्मानं मा हि ँ सीरित्येतत् (अन्तरिक्षम्=आत्मा)। माश ८, ३, १, ९।

९. अन्तरिक्षं यजुषा (जयति)। माश ४,६,७,२।

१०. अन्तरिक्षं रुद्राः (अजयन्)। काठसंक ५३।

११. अन्तरिक्षं लोकानां जयति वायुं देवं देवानाम्। जै १,२६।

१२. अन्तरिक्षं वशा, धाता गर्भो, रुद्रा जरायु, वायुर्वत्सो, घर्मः पीयूषः। काठ ३९,८।

१३. अन्तरिक्षं वा अन्तर्यामः (ग्रहः)। मै ४,५,६;७,१; काठ २७,२; क ४२,२।

१४. अन्तरिक्षं वा अन्नममुतो वै प्रदीयते ऽस्यां (पृथिव्याम्) प्रजायते। काठ ३४,५।

१५. अन्तरिक्षं वाऽअपा ँ ( वाऽअवरम् [माश ९,२,३,३९]) सधस्थम्। माश ७, ५,२,५७।

१६. अन्तरिक्षं वा उखेमौ लोकौ (द्यावापृथिव्यौ) स्तनौ। मै ३,१,७।

१७. अन्तरिक्षं वाऽउपयमन्यन्तरिक्षेण हीद ँ सर्वमुपयतम्। माश १४,२,१,१७।

१८. अन्तरिक्षं वाऽउलूखलम्। माश ७,५,१,२६।

१९. अन्तरिक्षं वा ऋतम् (ऋतस्य विभूम [तैसं.])। तैसं ३,३,५,४; जै १,१२१।

२०. अन्तरिक्ष ँ (+वै [काठसंक., तां., तै.]) वामदेव्यम् (साम)। मै ३,३,५; काठसंक ९; जै १, ३२९; तां १५,१२,५; तै १,१,८,२; २,१,५,७।

२१. अन्तरिक्षं विश्वव्यचाः (विश्वभूः [मै.]) । मै ४,१,३; काठ ३१,२; क ४७,२; तै ३,२,३,७ ।

२२. अन्तरिक्षं (°क्षे [माश.]) विष्णुर्व्यक्रऽस्त त्रैष्टुभेन च्छन्दसा । काठ ५,५; माश १,९,३,१० ।

२३. अन्तरिक्षं वै तृतीया चितिः । माश ८,४,१,१ ।

२४. अन्तरिक्षं वै नभाऽसि । तस्य रुद्रा अधिपतयः । तै ३, ८,१८,१ ।

२५. अन्तरिक्षं वै प्र, अन्तरिक्षं हीमानि सर्वाणि भूतान्यनुप्रयन्ति । ऐ २,४१ ।

२६. अन्तरिक्षं वै मध्यमा चितिः । माश ८,७,२,१८ ।

२७. अन्तरिक्षं वै मातरिश्वनो घर्मः । मै ४, १, ३; क ४७,२; तै ३,२,३,२ ।

२८. अन्तरिक्षं वै माध्यन्दिनऽसवनम् । माश १२,८,२,९ ।

२९. अन्तरिक्षं वै यजुषामायतनम् । गो १,२, २४ ।

३०. अन्तरिक्षऽवै (हि [मै ३,८,५]) यज्ञः (पशवः [मै ३,९,७]) । मै ३,६,८ ।

३१. अन्तरिक्षं वै वरिवश्छन्दः ( विवधच्छन्दः [माश ८,५,२,५]) । माश ८,५,२,३ ।

३२. अन्तरिक्षं वै सर्वेषां देवानामायतनम् । माश १४,३,२,६ ।

३३. अन्तरिक्षं वै स्वयमातृण्णा (इष्टका) । तैसं ५,३,२,१ ।

३४. अन्तरिक्षऽशान्तिस्तद् वायुना शान्तिः । मै ४,९,२७ ।

३५. अन्तरिक्षऽसमित्, ताऽवायुः समिन्द्धे । मै ४,९,२३ ।

३६. अन्तरिक्षं सारस्वतेन (अवरुन्धे) । माश १२,८, २,३२ ।

३७. अन्तरिक्षं सावित्री (साधु [तैआ.]; देवी [जैउ.]); । गो १,१,३३; तैआ ५,३,७; जैउ ३,१,४,८ ।

३८. अन्तरिक्षऽ ह्येष उद्धिः । माश ६,५,२,४ ।

३९. अन्तरिक्ष उक्थेन (प्रतितिष्ठति) । काठ १४,९ ।

४०. अन्तरिक्ष एव महः । गो १,५,१५ ।

४१. अन्तरिक्षं गौः (गार्हपत्यः ( अग्निः ) [ काठ., क.]) । काठ ८,६; क ७,२; ऐ ४,१५ ।

४२. अन्तरिक्षं चतुर्होता स विष्ठाः । तैआ ३, ७,२ ।

४३. अन्तरिक्षं तृतीयं पितॄन्यज्ञो ऽगात् । ऐ ७, ५ ।

४४. अन्तरिक्षं ( +वै [माश.] ) त्रिष्टुप् । मै ३, १, २; काठ १९, १; क २९, ८; जै १,३३९; माश १, ८, २, १२; जैउ १, १७,३, ३ ।

४५. अन्तरिक्षं दक्षिणाग्निः ( पशुपाः [काठ.]) । काठ ७,९; काठसंक ९ ।

४६. अन्तरिक्षं दिङ्निधनेन ( देवा अभ्यजयन् ) । तां १०,१२,३ ।

४७. अन्तरिक्षं ( +वाव [मै.]) द्वितीया ( +चितिः [मै.]), वयाऽसि पुरीषम् । तैसं ५,६,१०,२; मै ३,३,३; काठ २२, ४ ।

४८. अन्तरिक्षं नाराशऽसः (प्रगाथः [जैउ.]) । माश १, ८, २,१२; जैउ ३,१, ४,२ ।

४९. अन्तरिक्षमसिजन्मनोपभृन्नाम । मै १, १, १२ ।

५०. अन्तरिक्षमसुम् ( अन्ववसृजतात् ) । मै ४, १३, ४; काठ १६,२१ ।

५१. अन्तरिक्षमस्यग्नौ श्रितम् । वायोः प्रतिष्ठा । तै ३, ११, १, ८ ।

५२. अन्तरिक्षमात्मा ( °माकाशः [जै.] ) । मै ४, २,२; जै २,५४; तैआ ३, ४,१ ।

५३. अन्तरिक्षमिमाः प्रजाः । मै ४,५, ६;७,१ ।

५४. अन्तरिक्षमिव वा एषा या मध्यमा चितिः । काठ २१, ३ ।

५५. अन्तरिक्षमिवानाधृष्यं द्यौरिवानाधृष्यो भूयासम् । ऐआ ५, १, १ ।

५६. अन्तरिक्षमुक्थेन ( °क्थ्येन [तै.] ) ( देवा अभ्यजयन् ) । तां ९,२,९; तै ३, १२, ५,७ ।

५७. अन्तरिक्षमुपभृत् ( उत्तरवेदिः [माश.] ) । मै ४, १,११; १२; तै ३,३,१, २; ६, ११; माश १२, ८, २, ३६ ।

५८. अन्तरिक्षमेव द्वितीयस्य च तृचस्य प्रथमया स्तोत्रियया जयति, वायुं द्वितीयया, प्राणं तृतीयया । जै १, २४५ ।

५९. अन्तरिक्षमेव विश्वं वायुर्नरः (°मेवोपा ९ ंशुसवनः [माश ४,१,२,२७]) । माश ९, ३,१,३ ।

६०. अन्तरिक्षं पवित्रेण ( सहागच्छतु ) । तैआ ३, ८, २ ।

६१. अन्तरिक्षं पशुमद्भिः ( यज्ञैर्देवा अभ्यजयन् ) । तां १७, १३, १८ ।

६२. अन्तरिक्षं पायुः (पुरितता [तैसं ५,७,१६,१]) । तैसं ७, ५,२५, २ ।

६३. अन्तरिक्षं पुलीतता ( °लि° [काठ.] ) । मै ३, १५, ७; काठ ५३, ६ ।

६४. अन्तरिक्षं पृण (पुरोधाता [ऐ.]) । तैसं १, ३, १, २; काठ २, १२; क २,६; ऐ ८, २७ ।

६५. अन्तरिक्षं पृथिव्याम् ( प्रतिष्ठितम् ) । ऐ ३,६; गो २,३, २ ।

६६. अन्तरिक्षं प्रमा (भुवनपतिः [जै.]) । मै ३, २, ९; जै २,४१ ।

६७. अन्तरिक्षं भूत्वा ( प्रजापतिः ) दिवमस्तभ्नोत् । जै १, ३१४ ।

६८. अन्तरिक्षं मरीचयः (महाव्रतम् [माश.]) । माश १०,१,२,२; ऐआ २, ४,१; ऐउ १,१,२ ।

६९. अन्तरिक्षं मैत्रावरुणेन ( आज्यस्तोत्रेण देवा अजयन् ) । जै १, १०५ ।

७०. अन्तरिक्षस्य पृष्ठे व्यचस्वतीं प्रथस्वतीमित्यन्तरिक्षस्य ह्येतत्पृष्ठं व्यचस्वत्प्रथस्वत् । माश ८, ३, १, ९ ।

७१. अन्तरिक्षस्य ( रूपं ) रजताः ( सूच्यः ) । तै ३,९,६, ५ ।

७२. अन्तरिक्षस्य ( रूपं ) ऊष्माणः । ऐआ ३, २, ५; शांआ ८, ८ ।

७३. अन्तरिक्षात् त्रिष्टुभा ( देवा असुराननन्तरायन् ) । जै १, ९९ ।

७४. अन्तरिक्षाय नमो वायवे नमो भव्याय नमश्श्रोत्राय नमः । काठ ५१, ६ ।

७५. अन्तरिक्षाय पांक्त्रान् ( आलभते ) । मै ३, १४, ७ ।

७६. अन्तरिक्षेण हीमे द्यावापृथिवी विष्टब्धे । माश १, २, १, १६ ।

७७. अन्तरिक्षेणद९ सर्वं पूर्णम् । तां १५, १२, ५ ।

७८. अन्तरिक्षे तेन प्रतितिष्ठति वायुं ज्योतिरवरुन्द्धे । काठसंक १० ।

७९. अन्तरिक्षे वया९सि (द ९ह) । तैसं ३, २, ८,६ ।

८०. अन्तरेव वा इदमिति तदन्तरिक्षस्यान्तरिक्षत्वम् । तां २०, १४, २ ।

८१. अयं वाव समुद्रो ऽनारम्भणो यदिदमन्तरिक्षम् । जै १, १६५ ।

८२. अयमेवाकाशो जूः । यदिदमन्तरिक्षमेत९ ह्याकाशमनु जवते तदेतद्यजुर्वायुश्चान्तरिक्षं च । माश १०, ३, ५, २ ।

८३. अयम्म आकाशः स मे त्वयि (अन्तरिक्षे) । जैउ ३, ५,२, १४ ।

८४. अयं मध्यमो (लोकः=अन्तरिक्षम्) बृहती । तां ७, ३, ९ ।

८५. अर्ध९ ह्यन्तरिक्षस्यास्मिंल्लोके ऽधर्ममुष्मिन् (द्युलोके) । मै ३,८, ९ ।

८६. अश्विनौ द्व्यक्षरया प्रमामन्तरिक्षम् (उदजयताम्) । मै १,११, १०; काठ १४, ४ ।

८७. असदिव वा अन्तरिक्षम् । तैसं ५, ४, ६,४ ।

८८. अहमन्तरिक्षादिति वरुणः । मै ४, ३, ४ ।

८९. आत्मानमन्तरिक्षस्य (आदित्य आदत्त) । जै २, २६ ।

९०. आत्मा ऽन्तरिक्षम् । काठ १६, २ ।

९१. इदं वा (इदमेव [जै १, ३०७]) अन्तरिक्षं वामदेव्यम् (स्वरः [जै १,३०७]) । जै १,१४६ ।

९२. इन्द्राग्नी च विश्वकर्मा चान्तरिक्षं द्वितीया९ स्वयमातृण्णां चितिमपश्यन्··· । तान्वायुरब्रवीत् । उपाहमयानीति, केनेति, दिग्भिरिति । माश ६,२,३,३-४ ।

९३. इन्द्रोऽन्तरिक्षम् (आर्ध्नोत्) । काठ २९, ७; क ४५, ८ ।

९४. इयं (पृथिवी) वै वागदो (अन्तरिक्षम्) मनः । ऐ ५, ३३ ।

९५. इयम् (पृथिवी) अन्तरिक्षम् । ऐ ३, ३१ ।

९६. उक्थैरन्तरिक्षं (लोकं देवा अभ्यजयन्) । तां २०,१,३ ।

९७. उपभृदेहि घृताच्यन्तरिक्षं जन्मना । काठ १,११; क १,११ ।

९८. उपहूतं वामदेव्य९(साम) सहान्तरिक्षेण । तैसं २,६, ७,२; माश १,८, १,१९ ।

९९. ऊधर्वा अन्तरिक्षं (द्यावापृथिव्याख्यौ)स्तनावभितोऽनेन (पृथिवीरूपेण स्तनेन) वा एष देवेभ्यो दुग्धेऽमुना (द्युलोकरूपेण स्तनेन) प्रजाभ्यः । तां २४,१,६ ।

१००. एतेन (अन्तरिक्षेण) इमौ लोकौ (द्यावापृथिव्यौ) विष्कब्धौ । जैउ १, ६,१,३ ।

१०१. घर्म या तेऽन्तरिक्षे शुग्यान्तरिक्षे, या वाते, या वामदेव्ये, या त्रैष्टुभे छन्दसीयं···ते तामवयजे । मै ४,९,१० ।

१०२. घृतमन्तरिक्षस्य रूपम् । माश ७,५,१,३ ।

१०३. चन्द्रार्धं दक्षिणाग्नेः (लक्षणं कुर्यात्), चन्द्रार्धं ह्यन्तरिक्षम् । काठसंक १५ ।

१०४. छिद्रमिवेदमन्तरिक्षम् । तां ३,१०,२;२१,७,३ ।

१०५. ज्योतिरसि, ज्योतिर्मे यच्छान्तरिक्षं यच्छ । तैसं ५,७,६,२ ।

१०६. तद् (ब्रह्म) इदमन्तरिक्षम् । जैउ २,२,३,६ ।

१०७. तद्यदस्मिन्निदं सर्वमन्तस्तस्मादन्तर्यक्षम् । अन्तर्यक्षं ह वै नामैतत् । तदन्तरिक्षमिति परोक्षमाचक्षते । जैउ १,६,१,४ ।

१०८. तनूनपातं यजति, यज्ञ एवान्तरिक्षे प्रति तिष्ठति । तैसं २,६,१,२-३ ।

१०९. तस्य ते (प्रजापतेः)ऽन्तरिक्षं महिमापो वया ॅसि रूपं, वायुष्टे तेजः । काठ ४५,१२ ।

११०. त्रैष्टुभम् ( परिमण्डलम् [जै.] ) अन्तरिक्षम् । तैसं ५,२,१,१; जै १, २५७; माश ८, ३, ४, ११ ।

१११. द्यां ते धूमो गच्छत्वन्तरिक्षमर्चिः, पृथिवीं भस्म । काठ ३,३; क २,१०; ४१,४ ।

११२. द्यौरन्तरिक्षे प्रतिष्ठिता । ऐ ३,६; गो २,३,२ ।

११३. धरुणमस्यन्तरिक्षं दृ ॅह (+ चक्षुर्देहि श्रोत्रं देहि [काठ. क.]) । मै १, १, ८; ४, १, ८; काठ १,७;३१,६; क १,७; ४७,६; माश १,२,१,१० ।

११४. ध्रुवक्षिदस्यन्तरिक्षं दृ ॅह [+ इति दक्षिणाम् (परिधिं परिदधाति [माश.])] । तैसं १, २, १२,३; मै १,२,८; ३,८,५; माश ३, ५,२,१४ ।

११५. नमो अस्तु रुद्रेभ्यो ये अन्तरिक्षे येषा ॅ वात इषवः । मै २,९,९; काठ १७,१६; क २७,६ ।

११६. नाभ्या (पुरुषस्य) आसीदन्तरिक्षम् । काठसंक १०१; तैआ ३,१२,६ ।

११७. पशवो (प्रजा [काठ २०,११; क ३१,१३]) ऽन्तरिक्षम् । काठ ६,८; ७,७; क ३१,१३ ।

११८. पशूनेव सहान्तरिक्षेणोपह्वयते । तैसं २,६,७,२ ।

११९. पूषा मा पशुपाः पात्वित्यन्तरिक्षमेव । मै १,५,११ ।

१२०. पृष्ठे पृथिव्यास्सीद, भासान्तरिक्षमापृण, ज्योतिषा दिवमुत्तभान, तेजसा दिश उद्दृ ॅह । काठ १८,४ ।

१२१. प्रमा छन्दस्तदन्तरिक्ष ॅ वायुर् (वातो [काठ.]) देवता । मै २, १३,१४; काठ ३९,४ ।

१२२. प्राणेन सृष्टावन्तरिक्षं च वायुश्चान्तरिक्षं वा अनु चरन्त्यन्तरिक्षमनु शृण्वन्ति । ऐआ २,१,७ ।

१२३. प्राणो ( मध्यं [ माश. ] ) वा अन्तरिक्षम् । तैसं ५,६, ८,५; जै १,३०७; माश ७,५,१,२६ ।

१२४. भासाऽन्तरिक्षमापृण । तैसं ४,६,५,२ ।

१२५. भुव ( भुवर् [काठसंक.] ) इत्यन्तरिक्षम् । काठसंक ४७; तैआ ७, ५, १; तैउ १,५,१ (तु. जै १,३६४) ।

१२६. भुव इत्येव यजुर्वेदस्य रसमादत्त (प्रजापतिः) । तदिदमन्तरिक्षमभवत् । तस्य यो रसः प्राणेदत् स वायुरभवद्रसस्य रसः । जैउ १,१,१,४ ।

१२७. भूमिर्भूम्ना द्यौर्वरिणा[1]ऽन्तरिक्षं महित्वा ''' अग्निमन्नादमन्नाद्यायाऽऽदधे। तैसं १, ५,३,१।

१२८. महद्वीदम् ( महद्वा [ऐ.] ) अन्तरिक्षम्। ऐ ५, १८; १९; कौ २६, ११।

१२९. य एवायम्पवते ( वायुः ), एतदेवान्तरिक्षम्। जैउ १, ६,१,२।

१३०. यजुषां वायुर्दैवतं तदेव ज्योतिस्त्रैष्टुभं छन्दो ऽन्तरिक्षं स्थानम्। गो १, १, २९।

१३१. यथाऽसावन्तरिक्षे विद्युदेवमिदमात्मनि हृदयम्। ऐआ ३, १,२; शांआ ७, ४।

१३२. यदस्मिन् सर्वस्मिन् अन्तरीक्षते तस्मादन्तरिक्षम्। जै २, ५६।

१३३. यद् वैष्णवोऽन्तरिक्षम् तेन। मै २, २, १३।

१३४. यवमयो मध्य एतद्वा अन्तरिक्षस्य रूपम्। तैसं २, ४, ११, ५।

१३५. यस्ते राजन् वरुणद्रुहः पाशस्त्रिष्टुप्छन्दा अन्तरिक्षमन्वाविवेश क्षत्रे प्रतिष्ठितः। काठ १७, १९।

१३६. या ऽन्तरिक्षे ( वाक् ), सा वाते, सा वामदेव्ये''''' तां ब्राह्मणे न्यदधुः। काठ १४,५।

१३७. यान्येव बभ्रूणीव हरीणि ( लोमानि ) तान्यन्तरिक्षस्य रूपम्। माश ३, २,१, ३।

१३८. युक्तो वातोन्तरिक्षेण ते सह। तां १, २,१।

१३९. युनज्मि वायुमन्तरिक्षेण ते सह। तैसं ३, १, ६, १-२।

१४०. ये देवा यज्ञहनो यज्ञमुषो ऽन्तरिक्षे ऽध्यासते। वायुर्मा तेभ्यो रक्षतु। काठ ५, ६।

१४१. ये वधकास्ते ऽन्तरिक्षस्य रूपम्। माश ५, ४, ५, १४।

१४२. यो वायोर्घोषो यो वयसां तमेतस्मै ( अन्तरिक्षाय ) प्रायच्छद्, यः पर्जन्यस्य घोषो यो दुन्दुभेस्तममुष्मै ( दिवे ) प्रायच्छत्। जै ३, १०५।

१४३. रजता ऽन्तरिक्षम् [ °रिक्षे [मै.] ( पूरासीत् )]। मै ३,८,१; काठ २४,१०; गो २,२,७।

१४४. रजताम् (पुरीं) अन्तरिक्षम् [°क्षे [माश.]; °क्षलोके [कौ.] (असुरा अकुर्वत)]। ऐ १, २३; कौ ८,८; माश ३,४,४,३।

१४५. रुद्रेभ्यो ऽन्तरिक्षम् ( प्रजापतिः प्रायच्छत् )। जै २, १४१।

१४६. वागित्यन्तरिक्षम्। जैउ ४, ११, १, ११।

१४७. वायवस्स्थेति वायुर्वा अन्तरिक्षस्याध्यक्षः। अन्तरिक्षदेवत्याः पशवः। वायुरेवैनान् ( पशून् ) अन्तरिक्षाय परिददाति। काठ ३०, १०; क ४६, ८।

१४८. वायुनाऽन्तरिक्षम् ( अन्वाभवत् )। काठ ४३, ४।

१४९. वायुनान्तरिक्षेण वयोभिस्तेनैष लोकस्त्रिवृद्योऽयमन्तरा। तां १०,१, १।

१५०. वायुमन्तरिक्षाय ( प्रजापतिर्वत्सं प्रायच्छत् )। जै ३, १०७।

१५१. वायुरन्तरिक्षस्य ( अधिपतिः )। तैसं ३, ४, ५, १।

---

1. =वरिम्णा।

१५२. वायुरन्तरिक्षात् (+ उदैत् [जै.])। तैसं ३, २, ४,३; जै १,७।

१५३. वायुरन्तरिक्षे (+ श्रितः, दिवः प्रतिष्ठा [तै.])। तै ३, ११, १, ९; तैआ १, २०, २।

१५४. वायुर्वा अन्तरिक्षस्याध्यक्षो (°क्षाः [तै.]) ऽन्तरिक्षदेवत्याः (+ खलु वै [तै.]) पशवः। मै ४, १, १; तै ३, २, १,३।

१५५. वायुर्वै देवो ऽन्तरिक्षं देवी। शांआ १, ५।

१५६. विश्वकर्मा त्वा सादयत्वन्तरिक्षस्य पृष्ठे···वायुस्ते (°युष्टे [मै., काठ.]) ऽधिपतिः। तैसं ४, ४,६,१; मै २, ७, १६; काठ १७, १० (तु. मै २, ८, १४)।

१५७. विष्णुः (यजमानाय) तद् (विन्दति) यदन्तरिक्षे। मै २, २,१३।

१५८. विष्णोः क्रमोऽस्यभिमातिहा त्रैष्टुभं छन्द आरोहान्तरिक्षमनुविक्रमस्व। काठ १६,८।

१५९. वैश्वदेवं वाऽअन्तरिक्षम्। काश ४,८,३, २१; माश ३,८,३,२२।

१६०. वैश्वदेवोऽयमन्तरा लोकः (अन्तरिक्षम्)। जैउ १,१२,३,४।

१६१. शिथिलमिवान्तरिक्षम्। काठ २१,३; क ३१,१८।

१६२. शुक्लमिवान्तरिक्षम्, अन्तरिक्षेणेमे लोकास्संतताः। काठ १२,४।

१६३. सन्धिनाऽन्तरिक्षायान्तरिक्षं जिन्व। मै २,८,८।

१६४. सन्धिरस्यन्तरिक्षाय त्वान्तरिक्षं जिन्व। तैसं ४, ४, १, १; काठ १७, ७; ३७, १७; तां १,९,४।

१६५. सन्धिरित्यन्तरिक्षम् (असृजत)। तैसं ५,३,६,१।

१६६. स भुव इति व्याहरत्। सोऽन्तरिक्षमसृजत। चातुर्मास्यानि सामानि। तै २,२,४,२-३।

१६७. समया मामयेत्यन्तरिक्षं (आदित्याय) प्रायच्छत्। प्रकाशं चासम्बाधं च। जै २,२५।

१६८. स ह प्रजापतिरीक्षांचक्रे। कथं न्विमे (त्रयः) लोका ध्रुवाः प्रतिष्ठिताः स्युरिति स एभिश्चैव पर्वतैर्नदीभिश्चेमाम् (पृथिवीम्) अद ९ हद्वयोभिश्च मरीचिभिश्चान्तरिक्षं जीमूतैश्च नक्षत्रैश्च दिवम्। माश ११, ८,१,२।

१६९. सह हैवेमावग्रे लोकावासतुस्तयोर्वियतोर्योऽन्तरेणाकाश आसीत्तदन्तरिक्षमभवदीक्ष ९ हैतन्नाम ततः पुरान्तरा वाऽइदमीक्षमभूदिति तस्मादन्तरिक्षम्। माश ७, १,२,२३।

१७०. स्वध्यक्षमन्तरिक्षम् (अस्तु)। तैसं ७,५,२०,१।

[°क्ष- अच्युतक्षित्-; अनिरुक्त- ४;९; आग्नीध्र- २;३;७;१३;१६ द्र.]।

**अन्तरिक्ष-देवता-> °देवत्य-**

१. अन्तरिक्षदेवत्याः खलु वै पशवः (°त्यो वै दीक्षितः [काठ.])। काठ २३,५; तै ३,२,१,३।

२. अन्तरिक्षदेवत्यो हि प्राणः (सोमः [गो.])। तैसं ७,४,५,५; गो २,२,४।

**अन्तरिक्ष-रूप-** अनस्- १ द्र.

अन्तरिक्ष-लोक-

१. अन्तरिक्षलोकं याज्यया (जयति) । माश १४,६,१,९ ।

२. अन्तरिक्षलोको (+वा [ष.]) ऽन्वाहार्यपचनः (दक्षिणाग्निः) । जै १, ५१; ष १,५ ।

३. अन्तरिक्षलोको महः (यजुर्वेदः [ष.]) । माश १२, ३,४,७; ष १,५ ।

४. अन्तरिक्षलोको माध्यन्दिनं सवनम् । गो २,४,४ ।

५. अन्तरिक्षलोको वै प्रमा, अन्तरिक्षलोको ह्यस्माल्लोकात्प्रमित इव । माश ८,३,३,५ ।

६. अन्तरिक्षलोको वै बार्हती तृचाशीतिः । ऐआ १, ४,३ ।

७. अन्तरिक्षलोको वै मारुतो मरुतां गणः । माश ९,४,२,६ ।

८. अयमन्तरिक्षलोको निरुक्तः सन्ननिरुक्तः । माश ४,६,७, १७ ।

९. उषस्यमन्वाह तदन्तरिक्षलोकमाप्नोति । कौ ११,२; १८,२ ।

१०. तस्मादेषां लोकानामन्तरिक्षलोकस्तनिष्ठः । माश ७,१,२,२० ।

११. त्रैष्टुभो(मनो [माश.]) ऽन्तरिक्षलोकः । कौ ८,९; माश १४,४,३,११ ।

१२. भुव इत्यन्तरिक्षलोकः । माश ८,७,४,५ ।

१३. भुवरिति यजुर्भ्योऽक्षरत् । सोऽन्तरिक्षलोकोऽभवत् । ष १, ५ ।

अन्तरिक्ष-सद्-

वसुरन्तरिक्षसत् । माश ५,४,३,२२ ।

अन्तरिक्षाधिपति-

रुद्राः पितामहा अन्तरिक्षाधिपतयः । काठसंक १४१ :१४ ।

अन्तरिक्षायतन-

अन्तरिक्षायतना हि प्रजा । तां ४,८,१३ ।

आन्तरिक्ष-

धूम्रा आन्तरिक्षाः (पशवः) । मै ३,१३,११ ।

अन्तर्याम-

१. अन्तर्यामोऽपान एव । कौ १२,४ ।

२. अपानो (रेतो [काठ २७,२; क ४२, २]) ऽन्तर्यामः । काठ २७,३; क ४२,३ ।

३. असावेवान्तर्यामः (द्यौः) । माश ४,१,२,२७ ।

४. उदान एवान्तर्यामः (यज्ञस्य) । माश ४,१,१,१ ।

५. तद्यदस्यैषो (उदानः)ऽन्तरात्मन्यतो यद्ध्येनेनेमाः प्रजा यतास्तस्मादन्तर्यामो नाम । माश ४, १,२,२ ।

६. ते देवा अन्तर्याममपश्य९स्तमगृह्णत, तेनासुरानेभ्यो लोकेभ्योऽन्तरदधत । मै ४,५,६ ।

७. दक्षिणतोऽन्तर्यामम् (जुहुयात्) । क ४२,१ ।

८. पशवो वा अन्तर्यामः । काठ २८,७; क ४४, ७ ।
[°म- अन्तरिक्ष- १३ द्र. ] ।

अन्तर्यामि-पात्र-

१. अन्तर्यामपात्रमेवान्ववयः प्रजायन्ते । माश ४,५,५,३ ।

२. अपानाय त्वेत्यन्तर्यामपात्रम् (सादयति) । काठ २७, २; क ४२,२ ।

३. यदन्तर्यामपात्रं प्रयुज्यतेऽवीरेव तेन पशूनां दाधार । काठ २८,१०; क ४५,१ ।

४. सोमो देवता त्रिष्टुप् छन्दोऽन्तर्यामस्य पात्रमसि । तैसं ३,१,६,२ ।
[°त्र- अजा- १२ द्र.] ।

अन्तर्यामिन्-

वेत्थ नु त्वं काप्य तमन्तर्यामिणं य इमं च लोकं परं च लोक९सर्वाणि च भूतान्यन्तरो यमयतीति । माश १४,६,७,३ ।

अन्तर्वसु (त्रिरात्र)-

स यः श्रीकामः स्यात्, स एतेन (अन्तर्वसुना) यजेत । जै २,२८० (तु. तां २१,७,१-४) ।

अन्तस्त्य-

१. यथोपपादमिव वा अन्तस्त्यं ह्रसीय इव च द्राघीय इव च । ऐआ १,५,१ ।

२. विक्षुद्रमिव वा अन्तस्त्यमणीय इव च स्थवीय इव च । ऐआ १,५,१ ।

अन्त्र-> आन्त्र-

विह्रुत आन्त्रैः (प्रीणामि) । मै ३,१५,९ ।

अन्तःसदस-

या इमा (पुरुषस्य) अन्तर्देवतास्तेऽन्तःसदसम् । कौ १७,७ ।

अन्धस्-

१. अन्धसस्पतऽइति सोमस्य पतऽइत्येतत् । माश ९,१,१,२४ ।

२. अन्धो रात्रिः [अच्छेतः (सोमः ⌊काठ.⌋)] । काठ ३४,१४; तां ९,१,७ ।

३. अन्नं (यज्ञो ⌊जै १,११६⌋) वा अन्धः । जै १,२०३ ।

४. अहर्वा अन्धः। जै १, ११६; २१४; तां १२,३,३ ।

अन्धाहि-

१. अन्धाहीन् त्स्थूरगुदया (प्रीणामि) । मै ३,१५,९ ।

२. अन्धाहेस्स्थूरगुदा (अस्ति) । काठ ५३,७ ।

अन्धीगु-,>आन्धीगव (सामन्)-

१. अथैतदान्धीगवमन्धीगुर्वा एतत्पशुकामः सामापश्यत्तेन सहस्रं पशूनसृजत यदेतत्साम

भवति पशूनां पुष्ट्यै । ८,५,१२ ।

२. तदेतद् विराजोऽन्नाद्यस्यावरुद्धिः साम······। यद्धन्धीगुश्शाक्त्योऽपश्यत् तस्मादान्धीगव-मित्याख्यायते । जै १,१६५ ।

अनूप->आनूप (सामन्)-

एतेन वै वध्र्यश्व आनूपः पशूनां भूमानमाश्नुत पशूनां भूमानमश्नुत आनूपेन तुष्टुवानः । तां १३,३,१७ ।

अन्न-

१. अथ यत्कृष्णं तदपां रूपमन्नस्य मनसो यजुषः । जैउ १, ८,१,९ ।

२. अथो अन्नं निविद इत्याहुः । कौ १५,३;४ ।

३. अदन्ति ह स्म वा एतस्य पुरान्नं यस्यैतानि न हूयन्ते । काठ २३,२; क ३५,८ ।

४. अद्भयो वा अन्नं जायते । तैआ १, २४,४ ।

५. अद्यतेऽत्ति च भूतानि । तस्मादन्नं तदुच्यते । तैआ ८,२; तैउ २,२ ।

६. अन्नं याज्या (रश्मिः [माश.]) । कौ १५,३;१६,४; गो २,३,२१; माश ८,५, ३,३ ।

७. अन्नं वा अभिवर्तः (अपां पाथः [माश.]) । तैसं ५, ३,३, ३; माश ७, ५,२,६० ।

८. अन्नं वा अर्कः (+ तस्यैतत् पुष्पं यदारण्यम् [जै.]) । काठ १०, ८; गो २,४,२; जै २,१४; तां ५, १, ९; १४, ११,९; १५, ३,३४ ।

९. अन्नं वा आदित्याः (+अन्नं मरुतोऽन्नं पञ्चवि ꣳ शोऽन्नमेव दक्षिणतोऽवरुन्द्धे [काठ.]) । तैसं ५,३,४,३; काठ २१,१ ।

१०. अन्नं वा आपः (आयतनम् [माश ६,२,१,१४]) । जै १,२९७; तै ३, ८,२,१; १७,५; माश २, १,१,३; ७,४,२,३७;८,२,३,६; तैआ १,२४,४ ।

११. अन्नं वा इडा (इरा [जै.]) । ऐ ८, २६; कौ ३, ७; जै १, १७५ ।

१२. अन्नं वा इषः (°षम् [कौ.]) । ऐआ १, १,४; कौ २८,५ ।

१३. अन्नं वाऽउक्थ्यः (क्थ्यम् [गो.]) । गो १,४,२०; माश १२,२,२,७ ।

१४. अन्नं वा ऊर्क् (+ उदुम्बरः [माश.]) । तैसं ५,४,४,१; माश ३,२,१,३३;३,४,२७ ।

१५. अन्नं वा ओमा (वै फलम् [मै.]) । मै ३,१,२;२,४; काश २,८,२,३ ।

१६. अन्नं वाजः (विट् [तैसं.]) । तैसं ३,५,७,२; माश ५,१,१,१६; ८,१,१,९ ।

१७. अन्नं विराट् (+तस्माद्यस्यैवेह भूयिष्ठमन्नं भवति स एव भूयिष्ठं लोके विराजति तद्विराजो विराट्त्वम् [ ऐ १,५ ]) । तैसं २,५,१०,३; ६, १,२; काठ ३६, २; काठसंक ५४; कौ ९, ६; १२, ३; जै १, १३२; १६५; २०४; ३०६; ३३१; २, ८; १३; तां ४, ८,४; तै १, ६, ३, ४;८,२,२ ।

१८. अन्नं विशः (वृष्टिः [गो.]) । गो १,४,४;५; माश २,१,३,८ ।

१९. अन्न ९वै कम् (गर्भाः ⌊तैसं.⌋) । तैसं ५,३,३,४; मै ३,२,५; ऐ ६,२१; गो २, ६,३ ।

२०. अन्नं वै गार्हपत्यः (गिरश्छन्दः ⌊माश ८,५,२,५⌋) । माश ८,६,३,५ ।

२१. अन्नं वै गौः (गौरीवीतम् ⌊जै.⌋) । जै १, २१५; तै ३,९,८,३ ।

२२. अन्नं वै चतुर्होतारः (चन्द्रमाः ⌊तै.⌋) । मै १,९ ७; काठ ९,१५; तै ३,२,३,४ ।

२३. अन्नं वै देवा अर्क इति (पृश्नीति ⌊तां १२,१०,२४⌋ ) वदन्ति । तां १५,३,२३ ।

२४. अन्नं वै दैर्घश्रवसम् (साम) । जै २,१४ ।

२५. अन्नं वै नृम्णम् (न्यूङ्खः ⌊ऐ.; गो.⌋) । ऐ ५,३; ६,२९;३०;३६; कौ २७,४; गो २,६,८;१२ ।

२६. अन्नं वै पङ्क्तिः (जनित्रम् ⌊तैसं.⌋) तैसं ५,३,४,१; गो २,६,२; ऐआ १,१,३ ।

२७. अन्नं वै पावकम् (°वकः ⌊तैसं.⌋) । तैसं ५,४,४,४; ६,३; मै १,६,८;३,३,५; काठ ८,८; माश २,२,१,७ ।

२८. अन्नं वै पितु (°तुः ⌊माश.⌋) । ऐ १,१३; माश १,९,२,२०;७,२,१,१५ ।

२९. अन्नं वै पूषा (पुरीषम् ⌊माश.⌋) । तैसं २,१,६,१; कौ १२,८; तै १, ७,३,६; ३, ८,२३,२; माश ८,५,४,४; ६,१,२१; १४,३,१,२३; ।

३०. अन्नं वै पृश्नि (प्रजापतिः ⌊माश ५,१,३,७ ( तु. ७,१,२,४); काठसंक.⌋ ) । तैसं ५, ४,६,५; ५,६,३; मै ३, २,८; काठसंक १६; जै २,१४; तै २,२,६,१; माश ८,७,३,२१ ।

३१. अन्नं वै प्रयाजाः ( प्रेङ्खः ⌊ ऐआ.⌋) । काठ ९,१; ऐआ १,२,४ ।

३२. अन्नं वै ब्रह्मणः पुरोधा । तां १२,८,६; १३,९,२७; १४,९,३८ ।

३३. अन्नं वै भद्रम् (मधु ⌊ऐआ.⌋) । तै १,३,३,६; ऐआ १,१,३ ।

३४. अन्नं वै मरुतः । तैसं २,१,६,२; तै १,७,३,५;७,५,२;७,७,३ ।

३५. अन्नं वै यजुष्मत्य इष्टकाः । माश ८,७,२,८ ।

३६. अन्नं वै याज्या (रथन्तरम् ⌊ऐ.⌋) । ऐ ८,१; गो २,३,२२; ६,८ ।

३७. अन्नं वै यावा अन्नं प्रजाः । तैसं ५,३,४,५ ।

३८. अन्नं वैराजम् ( वै रूपम् ⌊माश.⌋) (छन्दः) । माश ९,२,१,१२; शांआ ११,७ ।

३९. अन्नं वै वयश्छन्दः (वषट्कारः ⌊जै.⌋) । जै १,११३; माश ८,५,२,६ ।

४०. अन्नं वै वाजः (वाजपेयः ⌊तै १,३,२,४⌋) । तैसं २,५,७,३; ५,१,२,२; ४,६,६; मै १,११,५; ७; ३,१,३; ४,३; काठ १४,५; तां १३,९,१३; २१; १५,११,१२; १८,६,८; तै १,३,६,२; ६; ३,८,५; माश ५,१,४,३; ६,३,२,४ ।

४१. अन्नं वै वाजाः (विचक्षणम् ⌊जै.⌋) । जै २,६४; माश १,४,१,९ ।

४२. अन्नं वै विराजः ( विशः ⌊माश.⌋ ) । माश ४, ३,३,१२; ५, १,३,३; ६, ७, ३,७; ऐआ १,५,२ ।

४३. अन्नं वै (+श्रीः [गो.]) विराट्। मै १, ६,११; ३,२,९; ऐ १,५; ४, ११; ५,१९;६,२०; गो १,५,४; २,१,१९; जै १,२२९; माश ७,५,२,१९।

४४. अन्नं वै व्यन्नं (वि, अन्ने) हीमानि सर्वाणि भूतानि विष्टानि। माश १४,८,१३,३।

४५. अन्नं वै व्योम (व्रतम् [तां., माश.])। तैसं ५,३,३,२; जै २,४१०; तां २२,४,५; माश ७, ५,१,२५।

४६. अन्न ९ वै सप्तदशः (°शम् [जै.])। मै ३,२,१०; क ३१,१४; जै २,६; तां २,७,७; १७, ९,२; १९,११,४; २०,१०,१; २५,६,३।

४७. अन्नं वै सर्वेषां भूतानामात्मा। गो २,१,३।

४८. अन्नं वै सवि ९ शः। काठ २०,१३।

४९. अन्नं वै साम (सुरूपम् [कौ.])। कौ १६,३; जै २,३९।

५०. अन्नं वै सूदहोहाः। शांआ २,१।

५१. अन्न ९ वै सोमः। मै ३,१०,७; माश ३, ९, १, ८; ७, २, २,११।

५२. अन्नं वै स्तोमश्च यजुश्च। मै ३,४,२ (तु. माश ९,३,३,६)।

५३. अन्नं वै स्वयमातृण्णा (इष्टका)। माश ७,४,२,१।

५४. अन्नं वै स्वाहाकारः (हिङ्कारः [जै.])। जै १,३१५; माश ९,१,१,१३।

५५. अन्नं व्रतम् (श्रुष्टिः [माश.])। तां २३,२७,२; माश ७,२,२,५।

५६. अन्न ९ सप्तदशः (समिष्टयजुः [माश.])। तैसं ५,३,३,२; ४,१; जै २, ३०६; माश ११, २, ७, ३०।

५७. अन्न ९ सप्तहोता। स प्राणस्य प्राणः। तैआ ३,७,३।

५८. अन्न ९ सम्मार्जनानि (सवि ९ शः [तैसं.])। तैसं ५,३,२,३; तै ३,३,१,५।

५९. अन्न ९ साम्राज्यानामधिपतिः। तैसं ३,४,५,१।

६०. अन्न ९ सार्पराज्ञम् (सावित्री [गो.])। काठ ८,६; गो १,१३३।

६१. अन्नं सोमः (सुरा [तै.])। कौ ९,६; तां ६,६,१; तै १,३,३,५; माश ३,३,४,२८।

६२. अन्नं ह वै देवानां सोमो राजा। जै १,२३३।

६३. अन्न ९ हि (वै [तै.]) गौः। तै ३,९,८,३; माश ४,३,४,२५; जैउ ३,१,३,१३।

६४. अन्न ९ हि प्राणः (व्रतम् [माश ६,६,४,५])। माश २,२,१,६; ३,८,४,८; ४, ३,४,२५।

६५. अन्नं हि श्रीः (स्वाहाकारः [माश.])। जै १,११७; माश ६,६,३,१७।

६६. अन्न ९ ह्येवेयं (गौः), यद्धि किञ्चान्नं, गौरेव तदिति। माश २,२,४,१३।

६७. अन्नं केतः (जुहूः [मै.])। मै ३,१,१; माश ६,३,१,१९।

६८. अन्नं धाता (आहुतिः [माश.])। तैसं ५,३,४,१; काठ २१,१; माश १२,९,१,११।

६९. अन्नं न निन्द्यात्। तैआ ९,७; तैउ ३,७।

७०. अन्नं न परिचक्षीत। तैआ ९,८; तैउ ३,८।

७१. अन्नं नमः ( न्यूङ्खः [कौ.] )। कौ २२,६;८; २५,१२; ३०,५; माश ६,३,१,१७।

७२. अन्नमर्कः। मै ३,१,२; २,४;१०; काठ १९,१; माश ९,१,१,४।

७३. अन्नमशीतयः ( +अन्नेन हीदं सर्वमश्नुते [ऐआ २, १, २] )। माश ९, १,१,२१; ऐआ ५,२,५।

७४. अन्नमशीतिः ( °मापः [जै.] )। जै ३,११५; माश ८,५,२,१७।

७५. अन्नमिव खलु वै वर्षम् (वृष्टिः)। तैसं ५,४,९,२।

७६. अन्नमिव विभु भूयासम्। ऐआ ५,१,१।

७७. अन्नमुक्थानि ( °मुदुम्बरः [काठ, क.] )। काठ २५,१०; क ४०,३; कौ ११,८; १७,७।

७८. अन्नमु वै प्राणाः ( सोमः [जै २,६४] )। जै १,२१५।

७९. अन्नमु वै रथन्तरम् (श्वस्तनम् [जै १,२१५])। जै १, १३६।

८०. अन्नमु श्रीः (वै स्तोभः [जै.] )। जै १,३३२; माश ८,६,२,१।

८१. अन्नमृक् ( °मृतवः [मै.] )। मै १,७,३; जै २,३९।

८२. अन्नमेतद्यत् स्वरसामानः। जै २,७।

८३. अन्नमेव ग्रहः। अन्नेन हीद९ सर्वं गृहीतम्। माश ४,६,५,४।

८४. अन्नमेव दक्षिणतो धत्ते, तस्माद्दक्षिणेनान्नमद्यते। तैसं ५,३,३,२।

८५. अन्नमेव यजुः। माश १०,३,५,६।

८६. अन्नं पञ्चवि९शः। तैसं ५,३,३,४;४,३; काठ २१,१।

८७. अन्नं (+वै [माश ६,८,२,७]) पशवः। काठ १९, १०; क ३०, ८; ऐ ५, १९; जै १, ३०५; ३०६; २,७; माश ६,२,१,१५; ७, ५,२,४२।

८८. अन्नं पुरीषम् ( पृश्नि [काठ.]; पृष्ठानि [तां.] )। काठ २१,३;८; क ३१,१८; तां १९,९,४; माश ८,१,४,५; ७,३,२।

८९. अन्नं प्रच्छच्छन्दः ( प्रजापतिः [तैआ.] )। माश ८, ५, २, ४; तैआ ५, ११, ६।

९०. अन्नं प्राणः ( प्रेतिः [माश.] ) कौ २५, १३; तै ३, २, ३, ४; माश ८, ५, ३, ३; तैआ ५,१०,५।

९१. अन्नं प्राणमन्नमपानमाहुः। अन्नं मृत्युं तमु जीवातुमाहुः। अन्नं ब्रह्माणो जरसं वदन्ति। अन्नमाहुः प्रजननं प्रजानाम्। तै २,८,८,३।

९२. अन्नं ब्रह्मेति व्यजानात्। तैआ ९,२; तैउ ३,२।

९३. अन्नं भुजिष्याः। माश ७,५,१,२१।

९४. अन्नं मरुतः ( मासाः [तैसं.] )। तैसं ५,३,४,३;४,४,१; काठ २१,१।

९५. अन्नं मे पुरीष्य ( बुध्य [मै.] ) पाहि तन्मे गोपाय। मै १,५.१४; काठ ७,३।

९६. अन्नं मे पुरीष्य (बुध्य [मै.]) अनुगुपस्तन्मे पुनर्देहि। मै १,५,१४; काठ ७,३।

९७. अन्नेन गयः (यज्ञं दाधार)। तैसं ४,४,८,१।

९८. अन्नेन वैश्यो भद्रो भवति। मै १,६,९।

९९. अन्नेन सर्वं प्रतितिष्ठति, अन्नं वै देवयोनिर्भवति, अन्नं वै प्राणानुपसृजति, तस्मादन्नममृतं वदन्ति। काठसंक ७०:५-६।

१००. अन्नेन हीमाः प्रजा विपश्यन्ति। जै २,६४।

१०१. अभिशस्यमानं याजयेद्, यस्य वै देवा अन्नमदन्त्यदन्ति तस्य मनुष्या अन्नम्। मै २,३,७।

१०२. अम्बरीषे वा अन्नं भ्रियते। तैसं ५,१,९,४।

१०३. अरत्निमात्राद्ध्यन्नमद्यते। माश ७,५,१,१३; १०,२,२,७।

१०४. अर्को (+वै देवानाम् [तैसं २,२,७,२; तै., माश.]) ऽन्नम्। तैसं ५,५,६,३; तै १,१,८,५; माश १२, ८, १.२।

१०५. अवस्वान् कव्या नाम स्थ पार्थिवास्तेषां व इह (अधरायां दिशि = ध्रुवायां [पृथिव्याम्]) गृहा अन्नं व इषवः। तैसं ५,५,१०,४-५।

१०६. आपश्च पृथिवी चान्नमेतन्मयानि ह्यन्नानि भवन्ति। ऐआ २,३,१।

१०७. आपोऽन्नम्। काठ ८,२; २५,२; क ३८,५; ऐ ६,३०।

१०८. आपो वा अन्नम्। ज्योतिरन्नादम्। अप्सु ज्योतिः प्रतिष्ठितम्। ज्योतिष्यापः प्रतिष्ठिताः। तैआ ९,८; तैउ ३, ८।

१०९. आपो वै सूदोऽन्नं दोहः। माश ८,७,३,२१।

११०. इयं (पृथिवी) वा अन्नस्य प्रदात्रिका। मै २,५,७।

१११. उभाभ्या ँ हस्ताभ्यामन्नमद्यते ( °स्ताभ्यां परिगृह्य पुरुषोऽन्नमत्ति [क.] )। मै ३,२,१०; क ३१,१४।

११२. ऊर्ग् वा उदुम्बरो (+अन्नम् [जै.])। तैसं २,१,१,७; ५,४,४; मै १, ११,८; ३, १,२; जै २,१८३; तां ५,५,२; तै १,१,३,१०।

११३. एतदु परममन्नं यद्दधि, मधु, घृतम्। माश ९,२,१,१२।

११४. एतद्वै साक्षादन्नं यद्राजनं (साम), पञ्चविधं भवति। तां ५,२,७।

११५. एते हि साक्षादन्नं यदूपाः। तै १,३,७,६।

११६. एष वै सोमो राजा देवानामन्नं यच्चन्द्रमाः। माश १,६,४,५; २,४,२,७; ११, १,४,४।

११७. ओषधिवनस्पतयोऽन्नम्। प्राणभृतोऽन्नादम्। ओषधिवनस्पतीन्हि प्राणभृतोऽदन्ति। ऐआ २,३,१।

११८. ओषधीनां रेतोऽन्नमन्नस्य रेतो रेतः । ऐआ २,१,३ ।

११९. ओषधीभ्योऽन्नम् । अन्नात् पुरुषः । तैआ ८,१; तैउ २,१ ।

१२०. क्षीयते वा अमुष्मिँल्लोकेऽन्नम्, इतः प्रदान ऽँ ह्यमुष्मिँल्लोके प्रजा उपजीवन्ति । तैसं १, ७,३,४-५ ।

१२१. गर्भाः पञ्चवि ऽँ श इति दक्षिणतोऽन्नं वै पञ्चवि ऽँ शः । काठ २०,१३ ।

१२२. चन्द्रमस्त्वन्नम् । शांआ ६,२; कौउ ४,२ ।

१२३. त एव ( त्रयो लोकाः ) अस्मा अन्नं प्रयच्छन्ति । तैसं २,३,६,२ ।

१२४. तत्तदिति वा अन्नम् । ऐआ १,३,३;६ ।

१२५. तदन्नं वै विश्वम्प्राणो मित्रम् । जैउ ३,१,३,६ ।

१२६. तद्वै पय एवान्नम् । एतद्ध्यग्रे प्रजापतिरन्नमजनयत । माश २,५,१,६ ।

१२७. तपो मे तेजो मेऽन्नम्मे वाङ् मे । तन्मे त्वयि (अग्नौ) । जैउ ३,५,१,१६ ।

१२८. तस्मात्प्राणेनान्नं गृहीतं यो ह्येव प्राणिति सोऽन्नमत्ति । माश ७,५,१,१७ ।

१२९. तस्मात्प्राणोऽन्नेन गृहीतो यो ह्येवान्नमत्ति स प्राणिति । माश ७,५,१,१६ ।

१३०. तस्मादस्य (तक्ष्णः) अन्नमन्नाद्यम् । मै २,४,१; काठ १२,१० ।

१३१. तस्मादाहुः सामैवान्नमिति । सा १,१,३ ।

१३२. तस्माद्यया कया च विधया बह्वन्नं प्राप्नुयात् । तैआ ९,१०; तैउ ३,१० ।

१३३. तस्या एतस्या अन्नमेवापिधानम् (प्राणरूपायै मानुष्यै विराजे) । जै १,२४६ ।

१३४. ता अन्नादेव (प्रजाः) सम्भवन्ति तस्माद्धन्नमेव प्रजाः । माश २,५,१,६ ।

१३५. तावेव (मित्रावरुणौ) अस्मा अन्नं प्रयच्छतः (यजमानाय) । तैसं २,१,९,२ ।

१३६. त्रिवृद्ध्यन्नम् । माश ३,२,१,१२;७,१,२० ।

१३७. त्रिवृद्वाऽअन्नं कृषिर्वृष्टिर्बीजम् । माश ८,६,२,२ ।

१३८. त्रेधा विहितं वा इदमन्नमशनं पानं खादः । ऐआ २,३,४ (तु. माश ८,५,३,३) ।

१३९. दक्षिणाग्नय एवान्नं परिदाय प्रैति । मै १,५,१४ ।

१४०. दक्षिणेन हस्तेनान्नमद्यते (°स्तेन पुरुषोऽन्नमत्ति [क.]) । मै ३, २, १०; ७, ६; क ३१, १४ ।

१४१. दारुपात्रेणाहूय तं मनुष्या अदुहुरन्नम् । काठसंक १४०: ९-१० ।

१४२. देवतानां वा एतदन्नं यच्चन्द्रमाः । काठसंक १६:४ ।

१४३. द्यावापृथिवी वा अन्नस्येशाते । मै २,५,४ ।

१४४. द्रोणेन वा अन्नमद्यते । मै ३,४,७ ।

१४५. द्रोणे वा अन्नं भ्रियते । तैसं ५,४,११,२ ।

१४६. द्वयमु ह वा अन्नस्य रूपं यच्चैवाश्नाति, यच्च पिबति । जै २,८ ।

१४७. द्विः संवत्सरस्यान्नं पच्यते । माश ६,५,४,९ ।

१४८. नमो अस्तु रुद्रेभ्यो ये पृथिव्या ऽ येषामन्नमिषवः । मै २,९,९ ।

१४९. न वा ऋत ऊर्जोऽन्नं धिनोति । काठ ८,२ ।

१५०. न ह्यन्नमृत ऊर्जो धिनोति, नो ह्यूर्गृतेऽन्नाद्धिनोति । मै ३,८,९ ।

१५१. नह्यृतेग्व(गु[1]-अ)न्नमस्ति । काश १, २,४,१० (तु. माश २, २,४,१३) ।

१५२. नाभिदघ्ना (आसन्दी) भवति । अत्र (नाभिप्रदेशे) वाऽ अन्नं प्रतितिष्ठति···अत्रोऽएव रेतस आशयः । माश ३,३,४,२८ ।

१५३. पङ्क्तिर्वा अन्नम् । ऐ ६,२०; ऐआ १,३,८ ।

१५४. पाङ्क्त[2] ऽ ह्यन्नम् (°ङ्क्तमन्नम् [ तां १२,१,९ ] ) । तां ५,२,७ ।

१५५. पात्रेण (पात्रैः [मै.]; °त्रे [तैसं.] ) वा अन्नमद्यते । तैसं ५, ६,२,३; मै ३,४, १; काठ २१,४; क ३१,१९ ।

१५६. पृथिवी वा अन्नम् । आकाशोऽन्नादः । पृथिव्यामाकाशः प्रतिष्ठितः । आकाशे पृथिवी प्रतिष्ठिता । तैआ ९,९; तैउ ३,९ ।

१५७. पृथिव्युदपुरमन्नेन विष्टा मनुष्यास्ते गोप्तारोऽग्निर्वियत्तः । तैसं ४,४,५,१ ।

१५८. पृश्निर्भवत्येतद्वा अन्नस्य रूपम् । तैसं २,१,६,२ ।

१५९. प्राणो वा अन्नम् । शरीरमन्नादम् । तैआ ९,७; तैउ ३,७ ।

१६०. बभ्रुर्भवत्येतद्वा अन्नस्य रूपम् । तैसं २,१,३,३ ।

१६१. बहुरूप ऽ ह्यन्नम् । तैसं २,१,६,४ ।

१६२. भर्गो देवस्य कवयो ऽन्नमाहुः । गो १,१,३२ ।

१६३. मध्यतो वा अन्नमशितं धिनोति । जै २,४१० ।

१६४. मह इत्यन्नम् । अनेन वाव सर्वे प्राणा महीयन्ते । तैआ ७,५,३; तैउ १,५,३ ।

१६५. मामभ्यपक्रामेति दक्षिणा दिक् (आदित्याय) प्रायच्छदन्नं च रथं च । जै १,११७ ।

१६६. मेधाय इत्यन्नायेत्येतत् । माश ७, ५, २, ३२ ।

१६७. मेध्यमन्नम् । काठ १२, ११ ।

१६८. यत्तदन्नमेष स विष्णुर्देवता । माश ७, ५, १,२१ ।

१६९. यद्‌ वाऽआत्मसंमितमन्नं तदवति तन्न हिनस्ति यद्‌भूयो हिनस्ति तद्यत्कनीयो न तदवति । माश ७, ५, १, १४; ९, २,२, २ ।

---

१. < ऋते गोः । २. =पञ्चविधम्, अद्यं, खाद्यं, चोष्यं, लेह्यं, पेयमिति ।

१७०. यस्यान्नवतीर्दक्षिणतोऽत्स्यन्नमाऽस्यान्नादो जायते । तैसं ५, ३, ४, ६ ।

१७१. यादृगह वा अस्मिंल्लोकेऽन्नं ददाति, तादृगस्यामुष्मिंल्लोकेऽन्नं भवति । जै २, १६० ।

१७२. रथप्रोतं वै दार्भ्यमभ्यशत्रुं स त्वं कौलकावती अब्रूताम् । तथा त्वा याजयिष्यावो यथा तेऽन्नमत्स्यन्ति । मै २, १, ३ ।

१७३. रस इव खलु वा अन्नम् । तैसं २, १, ७, ५ ।

१७४. वराहो वा अस्याम् ( पृथिव्याम् ) अन्नं पश्यति तस्मा इयं ( पृथिवी ) विजिहीते, यद् वराह-विहतं भवति, तदेवान्नमवरुन्द्धे । काठ ८, २ ।

१७५. वाचेऽन्नम् ( अस्तु ) । तैआ ३, १०, ३ ।

१७६. विरूपम् ( नानारूपम् ) अन्नम् । तां १४, ९, ८ ।

१७७. वीरहा वा एष देवानां योऽग्निमुद्वासयते, न वा एतस्य ब्राह्मणा ऋतायवः पुराऽन्नमक्षन् । तैसं १, ५, २, १; २, २, ५, ५ ।

१७८. वैश्वदेवं (रेतो [गो.]) वा अन्नम् । तैसं २, १, ६, ४; ६, ६, ५, ३; गो १, ३, २३; तै १, ६, १, १० ।

१७९. व्रीहिनान्नानि ( अन्वाभवत् ) । काठ ४३, ४ ।

१८०. श्यामो भवत्येतद्वा अन्नस्य रूपम् । तैसं २, १, ६, २।

१८१. संवत्सरं ह्यन्नमनुप्रजायते । काठ १०, ३ ।

१८२. संवत्सरेणैवास्मा अन्नं पचति । तैसं ५, २, ५, ५ ।

१८३. स ( चन्द्रमाः ) आपूर्यमाणोऽमुं लोकं गच्छति । सोऽमुना लोकेन संस्पृश्यान्नं भवति । जै २, ३ (तु. माश १, ६, ४, ५) ।

१८४. स एतेन (आदित्य- [=प्राण-]) रूपेण सर्वा दिशो विष्टोऽस्मि तस्य मे ( इन्द्रस्य ) ऽन्नं मित्रं दक्षिणं तद्वैश्वामित्रमेष तपन्नेवास्मीति होवाच ( इन्द्रः ) । ऐआ २, २, ३ ।

१८५. स एषोऽन्नस्य ग्रहो यद् वायुः । ऐआ २, ४, ३ ; ऐउ १, ३, १० ।

१८६. सप्तदश ँ ह्यन्नम् । माश ८, ४, ४, ७ ।

१८७. सप्त वा अन्नानि । तै १, ३, ८, १ ।

१८८. सर्वं ह्येतदन्नं यद्दधि मधु घृतम् । माश ९, २, १, ११ ।

१८९. साम देवानामन्नम् । जै १, ७१; तां ६, ४, १३ ।

१९०. सौम्यं ( शान्तिर् [ऐ.] ) वा अन्नम् । तैसं २, १, ३, ३; ऐ ५, २७; ७, ३ ।

[ °न्न- अग्नि- २४; ७३;४१२; अग्निहोत्र- १३; अथकार-; अथर्वन्- ४; अन्धस्- ३ द्र.] ।

अन्न-काम-

१. अन्नकामो यजेतैतद्देवत्या ( अन्नदेवत्या ? ) वा इमा दिशो, यथादेवतं वा आभ्यो दिग्भ्यो ऽध्यन्नाद्यमवरुन्द्धे । मै ४, ४,९ ।

२. एकादशकपालं निर्वपेदन्नकामः । काठ १०, ८ ।

३. द्रोणचितं चिन्वीतान्नकामः। काठ २१, ४; क ३१, १९।

४. पौष्ण ँ श्याममालभेतान्नकामः। तैसं २, १, ६, १।

५. विराजाऽन्नकामस्य (परिदध्यात्)। तैसं ६, ४, ३, २।

**अन्न-जीवन-**

अन्नजीवन ँ हीद ँ सर्वम्। माश ७, ५, १, २०।

**अन्न-पति-**

१. अन्नपते अन्नस्य नो देह्यनमीवस्य शुष्मिणः। मै २, १०, २।

२. वरुणो ऽन्नपतिः। माश १२, ७,२,२०।

[°ति- अग्नि- ८७; १४९;१९१ द्र.]।

**अन्नपत्नी-**

१. अन्नपत्नी तदादित्यः (प्रजापतेस्तनूविशेषः)। ऐ ५, २५।

२. असावन्नपत्नी (द्यौः)। कौ २७, ५।

**अन्न-वत्-**

शरदो ऽहं देवयज्ययान्नवान् वर्चस्वान् भूयासम्। काठ ४, १४।

[°वत्- अग्नि- १९१ द्र.]।

**अन्नवती-**

१. ओमन्वती'''अन्नवत्यौ'''इत्येवैतदाह (ओमा=अन्नम्)। माश १, ९, १, ४।

२. या अन्नवतीस्ता दक्षिणतः (उपदधाति), आऽस्यान्नादो जायते य एवं वेद। काठ २१,१।

**अन्नाद्-**

१. ऋग्भिरन्नादः (इन्द्रः)। तैसं ४, ४, ८, १।

२. ज्योतिश्च वायुश्चान्नादमेताभ्यां हीदं सर्वमन्नमत्ति। ऐआ २, ३, १।

३. तेषां (प्राणभृताम्) य उभयतोदन्ताः पुरुषस्यानु विधां विहितास्ते ऽन्नादा अन्नमितरे पशवस्तस्मात्त इतरान् पशूनधीव चरन्त्यधीव ह्यन्ने ऽन्नादो भवति। ऐआ २, ३, १।

४. प्रजापतिर्वै देवानामन्नादो वीर्य्यवान्। तै ३, ८, ७, १।

५. स यो हैवमेतं वृत्रमन्नादं वेदान्नादो हैव भवति। माश १, ६,३,१७।

[°द,दा- अग्नि- १४९;१९२;३४९;३५०; अन्न- ११७ द्र.]।

**अन्नादी-**

इयं (पृथिवी) वा अन्नादी (प्रजापतेस्तनूविशेषः)। कौ २७, ५।

**अन्नादन-**

यदन्नादन ँ स तित्तिरिः। तैसं २, ५, १, २।

अन्नाद्य-

१. अन्नाद्यं वा अमृतम् । काठसंक ४९ : ६; ५० : १ ।
२. आपो वा अन्नाद्यम् । काठसंक ४९:७ ।
३. इन्द्रोऽन्नाद्यस्य प्रदाता । काठ १०,८ ।
४. ऊर्ग्वा अन्नाद्यमुदुम्बरः । ऐ ५, २४; ८, ८; ९; कौ २५, १५; २७, ६; ऐआ १, २, ३ ।
५. ऋतवो वाऽइदꣳ सर्वमन्नाद्यं पचन्ति । माश ४, ३, ३, १२ ।
६. एतदु ह वा अमुष्मिँल्लोके परममन्नाद्यं यत्सोमपीथः । जै २, १६० ।
७. एतद्धि देवानां प्रत्यक्षमन्नाद्यं यच्चन्द्रमाः । जै १,२४६ ।
८. एतद्वै कृत्स्नमन्नाद्यं यद्विराट् । कौ १४, २ ।
९. एतद्वै परममन्नाद्यं यत्सोमः । कौ १३, ७ ।
१०. कृत्स्नं वा एतदमृतमन्नाद्यमिमं लोकमागच्छति यदापः । जै १, ३५१ ।
११. गौर्वै (पशवः [ जै १, १६५ ] ) कृत्स्नमन्नाद्यम् । जै १, १७८ ।
१२. दिवा (ब्रह्म [काठसंक ४९:५] ) वा अनाद्यम् । काठसंक ५०:५ ।
१३. द्यावापृथिवी वा अन्नाद्यस्येशाते, अमुतो ( दिवः ) वर्षत्यस्यां ( पृथिव्याम् ) प्रतितिष्ठत्येते (द्यावापृथिवी) अन्नाद्यस्य प्रदात्री। काठ १३,७।
१४. प्रतिष्ठित्या अन्नाद्याय पङ्क्तिः । ऐआ १, ४, २ ।
१५. यद् दशकपालो भवति, विराजैवास्मिन् ( यजमाने ) अन्नाद्यं दधाति । तैसं २, २,५, ३ ।
१६. यमलमन्नाद्याय सन्तमन्नाद्यं नोपनमेत् स एतां वारुणीं कृष्णां वशामालभेत । तैसं २,१,९,१ ।
१७. यश उ वै सोमो राजान्नाद्यम् । कौ ९, ६ ।
१८. वर्ष्य उदके यजेतैतद्ध्यन्नाद्यस्य नेदिष्ठम् । मै ४, ३,३ ।
१९. वाग्वा ( विराड् [ऐ.] ) अन्नाद्यम् । काठसंक ५०:७; ऐ ४, १६; ८, ४ ।
२०. वीर्यं वै कर्म, वीर्येण वा अन्नमद्यते, कर्म वा अन्नाद्यम् । काठसंक ५०:२ ।
२१. श्रीर्विराडन्नाद्यम् । कौ १, १; २, ३; १२, २; १५, ५ ।
२२. श्रीर्वै विराड् यशोऽन्नाद्यम् । गो १, ५, २०; २, ६, १५ ।
२३. संवत्सरोऽन्नाद्यस्य प्रदाता । मै ४, ३, ३; काठ १०, ३ ।
२४. सरस्वत्या अहं देवयज्यया वाचमन्नाद्यं पुषेयम् । काठ ५, १ ।
२५. सरस्वत्यास्त्वा वीर्येण यशसेऽन्नाद्यायाभिषिञ्चामि । मै ३, ११, ८ ।
२६. सर्वे ( प्रैषाः ) सारस्वता अन्नाद्यस्यैवावरुद्ध्यै । माश १२, ८, २, १६ ।
२७. सोऽब्रवीद् (प्रजापतिः) एकं वावेदमन्नाद्यमसृक्षि सामैव । जैउ १, ३, १, ३ ।
२८. हिङ्कारेण ह्येव देवेभ्योऽन्ततोऽन्नाद्यं प्रदीयते । जै १, २४६ ।

अन्नाद्य-काम-

१. अन्नाद्यकामो निर्भुजं ब्रूयात्। ऐआ ३, १, ३; शांआ ७, ११।

२. औदुम्बरम् (यूपम्) अन्नाद्यकामस्य (करोति)। ष ४, ४।

अन्यवाप-

[1]अन्यवापोऽर्धमासानाम्। मै ३, १४, १८; काठ ४७, ७।

अन्वाहार्य-

१. तद्यदेतद्धीनं यज्ञस्यान्वाहरति तस्मादन्वाहार्यो नाम। माश ११, १, ८, ६।

२. यदन्वाहार्यमाहरत्येते वै देवाः प्रत्यक्षं यद् ब्राह्मणास्तानेव तेन प्रीणाति। तैसं १,७,३,१।

३. यद्वै यज्ञस्य क्रूरं यद् विलिष्टं तदन्वाहार्येणाऽन्वाहरति तदन्वाहार्यस्यान्वाहार्यत्वम्। तैसं १, ७,३, १-२।

४. स वा एष प्राजापत्यो यदन्वाहार्यः। तैसं १, ७, ३, २।

अन्वाहार्य-पचन (दक्षिणाग्नि)-

१. अथ यदीष्टिपशुबन्धेषु वा दर्शपूर्णमासयोर्वा (यज्ञो श्रेषं नीयात्) भुवस्स्वाहेत्यन्वाहार्यपचने जुहवाथ (इति प्रजापतिर्देवानुवाच)। जै १,३५८।

२. अथैष एव नडो नैषिधो यदन्वाहार्यपचनः। माश २, ३, २, २।

३. अथैष भ्रातृव्यदेवत्यो यदन्वाहार्यपचनः। माश २, ३, २,६।

४. अन्वाहार्यपचनं यजुरन्तरिक्षं वामदेव्यम्। तैआ १०, ६३।

५. अन्वाहार्यपचनः पितृणाम् (आयतनम्)। तैसं १, ६, ७,१; काठ ३२, ७।

६. दम इत्यन्वाहार्यपचनः। जैउ ४, ११, ५, १५।

७. पुत्रो (व्यानो [माश.]) ऽन्वाहार्यपचनः। ऐ ८, २४; माश २, २, २, १८।
[ °न- अन्तरिक्षलोक- २ द्र. ]।

अन्विति-

१. अन्नमन्वितिः। माश ८, ५,३, ३।

२. अन्वितिरसि, दिवे त्वा दिवं जिन्व। तैसं ४, ४,१, १।

अप्-

१. अग्निः पूर्वरूपम्। आदित्य उत्तररूपम्। आपः सन्धिः। वैद्युतः (अग्निः) सन्धानम्। तैआ ७, ३,२; तैउ १, ३, २।

२. अग्निना वा ऽआपस्सपत्न्यः। माश ६, ८, २, ३।

---

१. कोकिलाख्यः पक्षिविशेषः।

३. अग्निर्ह वा ऽ अपो ऽभिदध्यौ मिथुन्याभिः स्यामिति ताः सम्बभुव तासु रेतः प्रासिञ्चत्तद्धि-रण्यमभवत्तस्मादेतदग्निसंकाशमग्नेर्हि रेतस्तस्मादप्सु (हिरण्यं) विन्दन्त्यप्सु हि (रेतः) प्रासिञ्चत्। माश २, १, १, ५।

४. अग्ने पित्तमपामसि। तैसं ४, ६, १, २।

५. अग्नेरापः। अद्भ्यः पृथिवी। पृथिव्या ओषधयः। तैआ ८, १; तैउ २, १।

६. अथ यत्कृष्णं तदपां रूपमन्नस्य मनसो यजुषः। जैउ १, ८, १, ९।

७. अथ यत् स्वरसाम्न उपयन्ति। अप एव देवतां यजन्ते। माश १२, १, ३, १३।

८. अथ यदप्सु वरुणं यजति स्व एवैनं तदायतने प्रीणाति। कौ ५, ४।

९. अथ यद्यपः शूद्राणां स भक्षः। ऐ ७, २९।

१०. अथ वामदेव्यम्। स ह सा शान्तिरेव स्तोमः। आप एव ताः। जै १, ३१३।

११. अथ ह्यापः श्रेयसीर्मेनिरे, ताः प्रति त्वा वयमातपाम इति यात्रां च प्रयां च (आदित्याय) प्रायच्छन्। अग्निर्ह वा एष एतदेत्यपामेवायनेन, तासामेतासामूर्ध्वाश्छायाः, प्रति हैनं तदातपन्ति। जै २, २६।

१२. अद्भिर्यज्ञः प्रणीयमानः प्राङ् तायते। तस्मादाचमनीयं पूर्वमाहारयति। गो १,१,३९।

१३. अद्भिर्वाऽइद ँ सर्वमाप्तम्। माश १, १,१,१४; २, १,१,४; ४, ५,७,७।

१४. अद्भिर्ह्येव हवीँषि प्रोक्षति, ब्रह्मणाऽपः। तैसं २, ६, ५, १।

१५. अद्भिस्तान्तमभिषिञ्चन्ति। काठ २५, ७।

१६. अद्भ्यः (+वै [मै.]) प्रजाः प्रजायन्ते। मै ३, १०, १; काठ ८, ८।

१७. अद्भ्यो मत्स्यान् (आलभते)। मै ३, १४, २।

१८. अद्भ्यो वा एष (अग्निः) प्रथममाजगाम। माश ६, ७, ४, ४।

१९. अद्भ्यो ह वाऽअग्रेऽश्वः सम्बभूव सोऽद्भ्यः सम्भवन्नसर्वः समभवदसर्वो हि वै समभवत्त-स्मान्न सर्वैः पद्भिः प्रतितिष्ठत्येकैकमेव पादमुदच्य तिष्ठति। माश ५,१,४,५।

२०. अन्तरिक्षं वाऽ अपा ँ सधस्थम्। माश ७, ५, २, ५७।

२१. अप आस्येन (प्रीणामि)। मै ३, १५, १; ९; काठ १३, २।

२२. अपः श्लाघा (गच्छति)। गो १, २, २।

२३. अपां वा एतच्छरो यदवका। काठ २१, ७।

२४. अपां वा एतत्पुष्पं यद् वेतसः। तैसं ५, ४, ४, २; मै ३, ३,६।

२५. अपां वा एतत्पृष्ठं यत् पुष्करपर्णम्। तैसं ५, १, ४, २; २, ६, ६।

२६. अपां वा एतन्मध्याज्ज्योतिरजायत। तैआ ५, १०, ४।

२७. अपां वा एष रसो यद्वेवत्यः । तां १३, १०, ५ ।

२८. अपा ᳪ वा एषा योनिर्यदवका…, अपा ᳪ वा एतद्रूप ᳪ यदवका । मै ३,३,६ ।

२९. अपा ᳪ शरो ऽवकाः । तैसं ५, ४, ४, २-३ ।

३०. अपां चतुर्थी (अस्तु) । तैसं ५, ७, २१, १; मै ३, १५, ४; काठ ५३, ११ ।

३१. अपां नप्त्रे जषः ( झषः [काठ.] ) । तैसं ५,५,१३; काठ ४७, ३ ।

३२. अपामुद्रः । मै ३, १४, १८; काठ ४७, ११ ।

३३. अपामेतत् पुष्पं यद्वेतसः । मै ३,३,६; काठ २१,७ ।

३४. अपामेष ओषधीना ᳪ रसो यत्पयः ( यद्दधि [क.] ) । क ४५, ६; माश १२, ८,२, १३ ।

३५. अपो यूषेण [ यूष्णा ([मै.] प्रीणामि)] । मै ३, १५, ८; काठ ५३,१० ।

३६. अपो रक्षा ᳪ सि न तरन्ति । मै ४, १, ३; ३,४;५, १; ८, ५ ।

३७. अपो वामदेव्येन ( दुहे ) । मै ४, २, २ ।

३८. अपो वै रात्रिर्दिवा भूतं प्रविशति, तस्मादापो दिवा कृष्णा अपोऽहर्नक्तं ( प्रविशति ), तस्मादापो नक्तं ᳪ शुक्लाः । मै ४, ५,१ ।

३९. अपो वै सोमस्य रसः प्रविष्टः । मै ४, ५, २ ।

४०. अपो ऽत्रोक्षति शान्त्यै । तैसं ५, २,३, २ ।

४१. अपो ऽश्नाति, तन्नेवाशितं नेवानशितम् । तैसं १, ६, ७, ४ ।

४२. अप्सु तेजः ( प्रतिष्ठितम् ) । शांआ ६, २; कौउ ४, २ ।

४३. अप्सु पृथिवी ( प्रतिष्ठिता ) । जैउ १, २, ३, २ ।

४४. अप्सु मे सोमो अब्रवीदन्तर्विश्वानि भेषजा । आपश्च विश्वशम्भुवः । मै ४, १०, ४ ।

४५. अप्सु योनिर्वा अश्वः ( °निर्वै वेतसः [माश १२, ८,३,१५ ] ) । तैसं २,३, १२, ३; ५, ३,१२, २;तै ३,८, ४, ३; १९,२;२०,४; माश १३, २, २, १९ ।

४६. अप्सु वै मरुतः शिताः(!)[1] ( श्रितः [गो.] ) । कौ ५, ४; गो २, १,२२ ।

४७. अप्सु वै वरुणः ( +आदित्यवान् [तैआ.] ) । तैसं १, ६, ५,६; २,३, १२,२; तैआ ५,७,११ ।

४८. अप्सु स्नाति, साक्षादेव दीक्षातपसी अवरुन्धे । तैसं ६, १, १, २ ।

४९. अप्स्वन्तरमृतमप्सु भेषजम् । तैसं १, ७, ७, १-२; मै १, ११, १ ।

५०. अभ्रं वा ऽपां भस्म । माश ७, ५, २, ४८ ।

५१. अमृतं ( अमृतत्वं [कौ.] ) वा आपः । मै ४, १, ९; ४, ३; काठ २९, ६; क ४५, ७; ४८, १४; कौ १२, १; माश १, १, ३, ७; ४, ४, ३,१५; तैआ १, २६,७ ।

---

१. श्रिताः इति शोधः ।

५२. अमृतं वा एतदस्मिन् लोके यदापः । ऐ ८, २० ।

५३. अमृतमापः (°ता ह्यापः [तै., माश.]) । तैसं २, ६,८, ७; गो २, १,३; तै १, ७, ६, ३; माश ३, ९, ४, १६ ।

५४. अशिष्यन्पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधाति, लम्भुको हास्य वासो भवत्यनग्नो ह भवति । शांआ ९, ७ ।

५५. अश्मनो ह्यापः प्रभवन्ति । माश ९, १, १, ४ ।

५६. अषाढा नक्षत्रमापो देवता । मै २,१३, २० (तु. काठ ३९, १३) ।

५७. असौ वै तपन्न् (आदित्यः) अपामायतनमायतनवान् भवति । ··· आपो वा अमुष्य तपत (आदित्यस्य) आयतनम् । तैआ १, २२,३ ।

५८. अस्ति वै चतुर्थो देवलोक आपः । कौ १८, २ ।

५९. आप आज्यम् । माश १२, ८, २,३६ ।

६०. आप इति तत् प्रथमं वज्ररूपम् । कौ १२, २ ।

६१. आप इव रस ओषधय इव रूपं भूयासम् । ऐआ ५, १,१ ।

६२. आप उन्दन्तु जीवसे दीर्घायुत्वाय वर्चसे । तैसं १, २, १, १ ।

६३. आप एता ओषधयो यद्दर्भाः । काठ ८, १५ ।

६४. आप एव सर्वम् । गो १, ५, १५ ।

६५. आपः खलु वै विश्वे देवाः (पशवः [मै ३, ८, ४]) । मै ४, ५, १; ३ ।

६६. आपः पुष्करपर्णम् । माश ६, ४, १, ९; १०, ५, २, ६ ।

६७. आपः प्रतीचीर्भूयिष्ठा धावन्ति, सौमीर्ह्यापः । काठ २३, ८ ।

६८. आपः प्रोक्षणीभिः (सहागच्छन्तु) । तैआ ३, ८, १ ।

६९. आपः प्रोक्षण्यः (सर्वा देवताः [काठ.]) । काठ २५, ७; ऐ ५, २८ ।

७०. आपश्शान्ताः (शान्तिः [मै.]) । मै ३, ४, १०; ४, ५,४; काठ १९, ५; क ३०, ३ ।

७१. आपः श्रद्धा (सत्यम् [मै.]) । मै ४, १, ४; क ४७, ३ ।

७२. आपः सत्ये (प्रतिष्ठिताः) । ऐ ३, ६; गो २, ३, २ ।

७३. आपः स्थ समुद्रे श्रिताः । पृथिव्याः प्रतिष्ठा । तै ३, ११, १, ५ ।

७४. आपः स्वरसामानः (सावित्री [जैउ.]) । कौ २४, ४; जैउ ४, १२,१, ३ ।

७५. आपो दिव ऊधः । माश ६, ७, ४, ५ ।

७६. आपो देवानां प्रियं धाम । मै ४, १, ४; काठ ३१, ३; क ४७, ३ ।

७७. आपो देवीर्बृहतीर्विश्वशम्भुवः । तैसं ६, १,२,३ ।

७८. आपो भूत्वा (प्रजापतिः) सर्वमाप्नोत् । जै १, ३१४ ।

७९. आपो मेध्या यज्ञियाः । काठ २५, ५; क ३९,२; ४०, २ ।

८०. आपो मे होत्राश ᳲ सिनः । ष २, ५ ।

८१. आपो यज्ञः ( रक्षोघ्नीः [काठ ३१,२; क ४७, २] ) । मै ४, १,४; काठ २५,३; क ३८, ६ ।

८२. आपो ( +वै [काठ.] ) यज्ञस्य गोप्त्रीः । काठ ३१, २; क ४७, २ ।

८३. आपो रेतः ( + प्रजननम् [तै.] ) । काश ४,८,४,६; तै ३,३,१०,३; माश ३,८,४,११;५,१ ।

८४. आपो ( +मे [तै.] ) रेतसि ( + श्रिताः [तै.] ) । तै ३,१०,८,६; शांआ १०,१ ।

८५. आपो वज्रः (अभिगरः [तैआ.] ) । मै ४, १, ४; काठ ३१,३; क ४७,३; तैआ ३, ६,१ ।

८६. आपो वरुणानीः । काठ ८, ५; क ७, १ ।

८७. आपो वाऽअर्कः (अर्कः [माश १०,६, ५, २]) । माश ७, ५,१, ११; ८, ३,२,५;६ ।

८८. आपो वा अशान्तस्य शमयित्रिकाः । मै ३, १, ६ ।

८९. आपो वाऽ अस्य ( अग्नेः ) दिवोऽर्णः । माश ७, १,१, २४ ।

९०. आपो वा ऽअस्य सर्वस्य प्रतिष्ठा । माश ४, ५, २,१४; ६, ८, २,२; १२, ५,२,१४ ।

९१. आपो वा इदं सर्वमाप्नुवंस्तदेनमाह सर्वमाप्नुहीति । काठसंक ४९: ६-७ ।

९२. आपो वा इदमग्रे ( +महत् [जैउ.] ) सलिलमासीत् । तै १, १, ३, ५; जैउ १,१८,१,१ ।

९३. आपो वा इदमासन्सलिलमेव । स प्रजापतिरेकः पुष्करपर्णे समभवत् । तस्यान्तर्मनसि कामः समवर्तत । इद ᳲ सृजेयमिति । तैआ १, २३, १ ।

९४. आपो वा ऽउत्सः (ओषधयः [मै.]) । मै २, ५, ४; माश ६, ७, ४, ४ ।

९५. आपो वा एते यत्पशव इति । जै ३, १४६ (तु. ऐ १, ८ ) ।

९६. आपो वै क्षीररसा आसन् । तां १३, ४, ८ ।

९७. आपो वै जनयो ऽद्भ्यो हीद ᳲ सर्वं जायते । माश ६, ८, २, ३ ।

९८. आपो वै दिव्यं नभः । माश ३, ८, ५, ३ ।

९९. आपो वै देवानां पत्नय आसन् । जै १, १४० ।

१००. आपो वै देवानां प्रियं धाम । तै ३, २, ४, २ ।

१०१. आपो वै परिमादोऽद्भिर्हीदं सर्वं परिमितम् । शांआ १, ४ ।

१०२. आपो वै पवित्रम् ( पावकाः [काठ.]) । काठ ८, ८; जै १, १२१ ।

१०३. आपो वै पुष्करम् ( पुष्करपर्णम् [माश ७, ३, १, ९] ) । माश ६,४,२,२;७,४,१,८ ।

१०४. आपो वै प्रजापतिः परमेष्ठी ता हि परमे स्थाने तिष्ठन्ति । माश ८, २,३, १३ ।

१०५. आपो वै प्राणाः ( भेषजम् [तैआ.] ) । काश ४, ८, २, २; माश ३, ८,२,४; जैउ ३, १०, ९; तैआ १, २६, ५ ।

१०६. आपो वै मरुतः (द्यौः [माश.]) । ऐ ६, ३०; कौ १२, ८; माश ६,४,१,९ ।

१०७. आपो वै यज्ञः ( रक्षोघ्नीः [तैसं २, ६,४,४ तै.] । तैसं १, ७,५,३; मै ३, ६,९; काठ २३,२; क ३५,८; ४७,३; ऐ २, २०; तै ३, २,३,१२;४,२;९, १४; माश ३,८, ५, १ ।

१०८. आपो वै यज्ञस्य निष्कृतिः । काठ ६, ३; क ४, २ ।

१०९. आपो वै रेवतयः ( °तीः [मै., तै.]; °वत्यः [तां.] ) । मै ४,१,९; जै २, १३६; तां ७,९,२०; १३, ९, १६; तै ३, २, ८, २ ।

११०. आपो वै वरुणः ( वरेण्यम् [जैउ.] ) । मै ४, ८, ५; काठ १३, २; २२, ११; २९, ३; ३५, ५; ४५, ४; जैउ ४, १२, २,१ ।

१११. आपो वै विधा अद्भिर्हीद ५ सर्वं विहितम् । माश ८, २, २, ८ ।

११२. आपो वै वृष्टिः (सूददोहाः [शांआ.]) । तैआ १, २६, ५; शांआ २, १ ।

११३. आपो वै शान्ताः ( शान्तिः [मै.]) । तैसं ५, १, ५, १; ४,४,३; मै २,१,५ ।

११४. आपो वै शान्तिरापो निष्कृतिरापो भेषजा । मै १, ८, ३ ।

११५. आपो वै श्रद्धा ( सरिरम् [माश.]) । मै १, ४, १०; ४, १, ४; माश ७, ५, २, १८ ।

११६. आपो वै सर्वः ( शर्वः ), अद्भयो हीद ५ सर्वं जायते । माश ६, १, ३,११ ।

११७. आपो वै सर्वस्य शान्तिः ( +प्रतिष्ठा [ष.] ) । जै १, ८२;२०२; ष ३, १ ।

११८. आपो वै सर्वा देवताः । तैसं २, ६, ८, ३; ५,७,९, ३; काठ २५, ३; ३४, १८; ऐ २,१६; कौ ११, ४; तै ३, २, ४, ३; ३, ४,५; ७,३,४; ९,७, ५ ।

११९. आपो वै सर्वे कामाः ( देवाः [माश १०, ५, ४, १४] ) । माश १०, ५,४, १५ ।

१२०. आपो वै सहस्रियो वाजः । माश ७, १,१, २२ ।

१२१. आपो वै सूदो ऽन्नं दोहः । माश ८, ७, ३, २१ ।

१२२. आपो व्यानः । जैउ ४, ११, १, ९ ।

१२३. आपो ऽसि जन्मना वशा, सा यज्ञं गर्भमधत्थाः । मै २, १३, १५ ।

१२४. आपो ह वाऽइदमग्रे सलिलमेवास । ता अकामयन्त कथं नु प्रजायेमहीति । माश ११, १, ६, १ ।

१२५. आपो ह वाऽओषधीना ५ रसः । माश ३, ६,१, ७ ।

१२६. आपो ह वै वृत्रं जघ्नुस्तेनैवैतद्वीर्येणापः स्यन्दन्ते । माश ३, ९, ४, १४ ।

१२७. आपो हि पयः (शान्तिः [तां.]) । कौ ५, ४; गो २, १, २२; तां ८, ७, ८ ।

१२८. आपो हि यज्ञः ( यज्ञायज्ञीयम् [जै.] ) । मै ३, ६, २; ४; ४, ८, ९; जै १,२९२; माश ३, १,४,१५ ।

१२९. आपो हि रेतः ( वरुणः [मै.] ) । मै ४, ८, ५; तां ८, ७, ९ ।

१३०. आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन । तैआ ४,४२,४ ।

१३१. आपो ह्येतस्य ( सोमस्य ) लोकः । माश ४, ४, ५,२१ ।

१३२. इन्द्रियं वा आपः । काठ ३२, २ ।

१३३. इन्द्रो वै वृत्रमप्स्वध्यह ९ स्तासा ९ यद्यज्ञियं मेध्यमासीत्तदुदक्रामत्, ता इमा ओषधयो-ऽभवꣳस्तासा ९ वा एतत्तेजो यद्दर्भाः, एता वै शुष्का आपः । मै ३, ६, ३ ।

१३४. इमे वै लोका अपा ꣳ रसः । ते ऽमुष्मिन्नादित्ये समाभृताः । तैआ १, २२, ८ ।

१३५. इमे वै लोका अप्सु प्रतिष्ठिताः । तैआ १, २२, ८, ।

१३६. इयं ( पृथिवी ) वाऽ अपामयनमस्या ९ ह्यापो यन्ति । माश ७, ५,२,५० ।

१३७. इयं ( पृथिवी ) वा एतासां ( अपाम् ) पात्रम् । काठ ३२, ७ ।

१३८. इषिरो विश्वव्यचा वातो गन्धर्वस्तस्यापो ऽप्सरसा ऊर्जो नाम ( °प्सरसो मुदाः [तैसं.] ) । तैसं ३, ४, ७, २; मै २, १२, २ ।

१३९. उदीचीर्वा आपः स्यन्दन्ते । जै ३, १४६ ।

१४०. उदीच्या ( °च्यां [तैसं.]) दिशाप( °पा [मै.]; °श्याप [तैसं.] ) ओषधयो वनस्पतयो मार्जयन्ताम् । तैसं १, ६, ५, २; मै १, ४, २; काठ ५, ५ ।

१४१. उद्रो मद्गुः प्लवस्तेऽपाम् । काठ ४७, १० ।

१४२. ऊर्वा आपो रसः । कौ १२, १ ।

१४३. ऊर्जमपाम् (आदित्य आदत्त ) । जै २, २६ ।

१४४. एतद् ध वा आसाम् ( शक्वरीणाम्=महानाम्नीनाम् ) एकं रूपं यदापः । जै ३, १०८ ।

१४५. एतद्वा अपां नामधेयं गुह्यं यदाधावाः । मान्दासु ते शुक्र शुक्रमाधूनोमि [ +भन्दनासु कोतनासु नूतनासु रेशीषु मेषीषु वशीषु विश्वभृत्सु माध्वीषु ककुहासु शक्वरीषु शुक्रासु ( तैसं ३, ३, ३,१-२ [तु. मै १,३,३६; काठ ३०,६] )] । तैसं ३, ३, ४, ३ ।

१४६. एताभिर् ( अद्भिरिन्द्रः ) ह्येनम् ( वृत्रम् ) अहन् । माश १, १, ३,८ ।

१४७. एता वा अपां दीक्षिताः पशुमतीर् ( °वतीर् [क.]) यास्स्थावरा लोमशास्संततः ( या स्थावरालोमशाः पशवः [क.]) । काठ २२, १३; क ३५, ६ ।

१४८. एता वा अपामनूज्झावर्यो नाम यद्दर्भाः । तैआ ५, १०, ६ ।

१४९. एता वै प्रत्यक्ष ९ वारुणीर्यदापः । मै २, ५, ६ ।

१५०. एष वाऽ अपा ꣳ रसो यो ऽयं (वायुः ) पवते । माश ५, १, २, ७ ।

१५१. एष वै रयिर्वैश्वानरः ( यदापः ) । माश १०, ६, १, ५ ।

१५२. एषा वै प्रजापतेः सर्वता तनूर्यदापः । मै १, ६,३ ।

१५३. ओजसा वा एता वीर्येणापो ऽन्धेराः ( ऽच्छेराः ) । मै ४, ४, १ ।

१५४. ओषधयो वा ऽअपामोष्म । यत्र ह्याप उन्दन्त्यस्तिष्ठन्ति तदोषधयो जायन्ते । माश ७, ५, २, ४७ ।

१५५. काला अप्सु निविशन्ते, आपः सूर्ये समाहिताः। तैआ १, ८, १।

१५६. कूर्ममुपदधाति। अपामेव मेधमवरुन्धे। अथो स्वर्गस्यैव लोकस्य समष्ट्यै। तैआ १, २५,२।

१५७. गह्वरोऽवस्थावानो नाम स्थ, तेषां व उत्तराद् गृहा आपो व इषवः। तैसं ५, ५,१०,४।

१५८. गिरिबुध्ना उ वा आपः। माश ७, ५, २, १८।

१५९. गिरिर्वै वृत्रो, या (आपः) अतिमुमुचाना धावन्ति ता जीवा यज्ञियाः। मै ४, ५, १।

१६०. चक्षुर्वा ऽ अपां क्षयस्तत्र हि सर्वदैवापः क्षियन्ति। माश ७,५,२,५४।

१६१. चन्द्रा ह्यापः। तै १, ७, ६, ३।

१६२. चत्वारि वा अपा ५ रूपाणि। मेघो विद्युत्, स्तनयित्नुर्वृष्टिः। तैआ १, २४,१।

१६३. चन्द्रमा वा अपामायतनम्'''आपो वै चन्द्रमस आयतनम्। तैआ १, २२, ४।

१६४. चन्द्रमा वा अपां पुष्पम्। तैआ १, २२, १।

१६५. तदेतत्सत्यमक्षरं यदोमिति (+तस्मिन्नापः प्रतिष्ठिताः [जैउ.])। जै १, ३२३; जैउ १, २, ३, २।

१६६. तद् (आपः) धिरण्यमाण्डं समैषत् तस्य हरितमधरं कपालमासीद् रजतमुत्तरं, तच्छतं देवसंवत्सराञ् छयित्वा निर्भिद्यमभवत् सहस्रं वा। जै ३, ३६०; ३६१।

१६७. तद्यत्तत्सत्यमाप एव तदापो हि वै सत्यम्। माश ७, ४, १, ६।

१६८. तद्यत्तदन्नमापस्ताः। जैउ १, ९, २, ५।

१६९. तद्यथा भोक्ष्यमाणोऽप एव प्रथममाचामयेदप उपरिष्टात्। गो १, २, ९।

१७०. तद्यदब्रवीद् (ब्रह्म) आभिर्वा अहमिदं सर्वमाप्स्यामि यदिदं किंचेति तस्मादापोऽभवंस्त-दपामप्त्वमाप्नोति वै स सर्वान् कामान् यान् कामयते। गो १, १, २।

१७१. तद्यदेवात्र यज्ञस्याशान्तं भवति यदमेध्यमापो वै तस्य सर्वस्य शान्तिः। जै १, ५२।

१७२. तद्यास्ता आपोऽन्नं तत्। जैउ १, ८,१, ९।

१७३. तद्वै महानाम्नीनां (शक्करीणाम्) सर्वं रूपं यदापः। जै ३, ११५।

१७४. तस्मात्पुरुषात्तस्मादापो जायन्ते। माश ६, १, ३, १।

१७५. तस्मात्प्रतीच्योऽप्यापो वह्व्यः स्यन्दन्ते, सौम्या ह्यापः। ऐ १, ७; १२।

१७६. तस्मादिमा उभयत्रापः प्राणेषु चात्मंश्च। माश ७, २, ४, १०।

१७७. ता एता (गायत्र्याभिमन्त्रिताः) आपो वज्रीभूत्वा तानि रक्षा ५ सि मन्देहारुणे द्वीपे प्रक्षि-पन्ति। तैआ २, २, १।

१७८. तानि ह वा एतानि रक्षा ५ सि गायत्रियाभिमन्त्रितेनाम्भसा शाम्यन्ति। तैआ २,२,१।

१७९. ता (आपः) मिथुनमैच्छन्त। ता मित्रावरुणावुपैताम्। ता गर्भमदधत। ततो रेवतयः पशवोऽसृज्यन्त। जै १, १४०।

१८०. ता वा ऽएताः सप्तदशापः[1] सम्भरति सप्तदशो वै प्रजापतिः। माश ५, ३, ४, २२।

१८१. ता हैतास्त्रय्य ऽआपो यन्मण्डूको ऽवका वेतसशाखैताभिरेवैनमेतत्त्रयीभिरद्भिः शमयति। माश ९, १, २,२२।

१८२. तेजश्च ह वै ब्रह्मवर्चसं चातपवर्ष्या आपः। ऐ ८, ८।

१८३. त्रयीर्वा आपो, दिव्याः पार्थिवाः समुद्रियाः। मै ३, ६, ३।

१८४. दर्भा वा आपा ओषधयः। मै १, ७, २।

१८५. दिक्षु वा आपः। अन्नं वा आपः। अद्भ्यो वा अन्नं जायते। तैआ १, २४, ४।

१८६. दिव्या आपः प्रोक्षणयः। तै २,१,५ १।

१८७. देवपवित्रमेतद् यदापः। जै १, ५२।

१८८. देव्यो (धर्मो [माश ११,१,६,२४]) ह्यापः। माश १,१,३,७।

१८९. द्यौर्वाऽअपा सदनं दिवि ह्यापः सन्नाः। माश ७, ५, २, ५६।

१९०. नक्षत्राणि वा अपामायतनम्'''आपो वै नक्षत्राणामायतनम्। तैआ १, २२, ५।

१९१. नाप्सु मूत्रपुरीषं कुर्यात्। न निष्ठीवेत् (आरुणकेतुकाग्निचित्)। न विवसनः स्नायात्। गुह्यो वा एषोऽग्निः। एतस्याग्नेरनतिदाहाय। तैआ १,२६,७।

१९२. न्यञ्चनं वा एतत्प्रपदनं यदापः। जै २, ६७।

१९३. पर्जन्यो वा अपामायतनम्······ आपो वै पर्जन्यस्यायतनम्। तैआ १, २२, ६।

१९४. पवित्रं (मेध्या) वाऽआपः। माश १,१,१,१; ३,१,२,१०।

१९५. पशवो वा एते यदापः। ऐ १,८।

१९६. पृथिव्यप्सु (+श्रिता अग्नेः प्रतिष्ठा [तै.])। ऐ ३,६; गो २,३, २; तै ३,११,१,६।

१९७. प्रजापतेर्वा एष रसो यदापः। काठ २१, ७।

१९८. प्राणा वा (प्राणो हि [जैउ.]) आपः। तां ९,९,४; तै ३,२,५,२; जैउ ३,२,५,९।

१९९. प्रातःसवनरूपा त्वापः। कौ १२,३।

२००. मनसा सृष्टा आपश्च वरुणश्चापो हास्मै श्रद्धां संनमन्ते। ऐआ २, १,७।

२०१. मनुष्या वाऽआपश्चन्द्राः। माश ७,३,१,२०।

२०२. मनो वै मनुष्यधुर आपो देवधुरः। रेतस्यायां प्रस्तुतायां मनसापस्संदध्यात्। जै १,२७०।

२०३. मरुतोऽद्भिरग्निमतमयन्। तस्य तान्तस्य हृदयमाच्छिन्दन् साऽशनिरभवत्। तै १,१,३,१२।

---

१. =सारस्वतीः, ऊर्मी, स्यन्दमानाः, अपयतीः, समुद्रियाः, निवेष्याः, स्थावराः, आतपवर्ष्याः, वैशन्तीः, कूप्याः, प्रुष्वाः, मधव्याः, गोरुल्व्याः, पयस्याः, विश्वभृतः, मरीचीः।

२०४. मान्दा वशा (+ज्योतिष्मतीरमस्वरीः [मै.]) इत्येतानि वा अपां नामधेयानि। मै २, ४,८; काठ ११, १०।

२०५. मान्दा वाशाः शुन्ध्यूरजिराः। ज्योतिष्मतीस्तमस्वरीरुन्दतीः सुफेनाः। मित्रभृतः क्षत्रभृतः सुराष्ट्रा (आपः) इह माऽवत। तैसं २,४,७,२ (तु. मै २,४,७; काठ ११,९)।

२०६. मित्रावरुणौ वा अपां नेतारौ (°णौ ह्यपामीशाते [मै.])। तैसं ६,४,३,३; मै ४,५,२।

२०७. मेध्या वाऽएता आपो भवन्ति या आतपति वर्षन्ति। माश ५, ३, ४, १३।

२०८. मैत्रीर्वा ओषधयो, वारुणीरापः। तैसं २,१,९,२।

२०९. यज्ञसुखम् (ब्रह्मवर्चसम् [मै ३,८,४]) आपः। मै ४,५,२।

२१०. यज्ञो वा आपः। कौ १२,१; तै ३,२,४,१; माश १,१,१,१२।

२११. यत्र वा आप उपगच्छन्ति तदोषधयः प्रति तिष्ठन्ति। तैसं ५,१,३,१।

२१२. यदपां (रेतोऽसिच्यत) तद्रजतम् (अभवत्)। काठ ८,५।

२१३. यदपो निनयति, शान्त्या एव, रक्षसामपहत्यै। काठ २४,४।

२१४. यदापोऽसौ (द्यौः) तत्। माश १४,१,२,९।

२१५. यदि मध्यन्दिने (सवने स्कन्देत्), अप ओषधीर्जनमगन्यज्ञः······इत्यनुमन्त्रयेत। काठ २५, ७।

२१६. यद्वव आपस्तेन। कौ ६, २।

२१७. यद्वै दिवा भवत्यपो रात्रिः प्रविशति, तस्मात्, ताम्रा आपो दिवा ददृश्रे। तैसं ६,४,२, ४।

२१८. यन्नक्तं भवत्यपोऽहः प्रविशति, तस्माच्चन्द्रा आपो नक्तं ददृश्रे। तैसं ६,४, २, ४।

२१९. यश्चापश्चन्द्राः प्रथमो जजान कस्मै देवाय हविषा विधेम। काठ १६,१४।

२२०. या अधस्तात्ता आपः। ऐआ २, ४,१; ऐउ १,१, २।

२२१. या (आपः) आतपति वर्षति याश्च परिददृशे, ता आपो ब्रह्मवर्चस्याः। मै ४,४, १।

२२२. याः पृथिवीं पयसोन्दन्ति शुक्रास्ता ना आपः शᳬ स्योना भवन्तु। मै २,१३,१।

२२३. या (अग्नेः) पावका (तनूरासीत्), अपस्तया (प्राविशत्)। काठ ८,९।

२२४. यावद्वै प्राणेष्वापो भवन्ति तावद्वाचा वदति। माश ५, ३,५,१६।

२२५. या वाजिन्नग्नेः प्रिया तनूरप्सु पावका तामावह। क ६,३।

२२६. यासा ᳬ राजा वरुणो याति मध्ये सत्यानृते अवपश्यन् जनानाम्। मधुश्चुतः शुचयो याः पावकास्ता ना आपः शᳬ स्योना भवन्तु। मै २,१३,१।

२२७. योषा वाऽआपो वृषाग्निः (+ मिथुनमेवैतत्प्रजननं क्रियते [माश १,१,१,२०]) | माश १,१,१, १८;२,१,१,४।

२२८. यो ह वाऽअयमपामावर्त्तः स हावभृथः स हैष वरुणस्य पुत्रो वा भ्राता वा तमेवैतत्स्तौति। माश १२,९,२,४।

२२९. रसेनापः (आदित्योऽस्तं यन् प्रविशति)। जै १,७।

२३०. रेत (°तस [ऐआ., ऐउ.]); रेतो वा [ऐ.]; रेवत्यः [माश.]) आपः। ऐ १,३; जै ३, ११५; माश १,२,२,२; ऐआ २, ४१; ऐउ १,१,४।

२३१. रेवतीरापा ओषधयः। मै ४,२,१०।

२३२. वज्रो (रसो [माश ३,३,३,१८;९,४,७] ) वा आपः। मै २,१,९; जै २,६७; तै ३,२,४,२; माश १, १,१, १७;७,१,२०; ३,१,२,६; ७,५,२,१४; तैआ १,२६,५।

२३३. वरुणस्य वा अभिषिच्यमानस्याप इन्द्रियं वीर्य्यं निरघ्नन्। तत्सुवर्णं ९ हिरण्यमभवत्। तै १,८,९,१।

२३४. वरुणाय वै सुषुवाणस्य भर्गोऽपाक्रामत्स त्रेधापतद् भृगुस्तृतीयमभवच्छ्रायन्तीयं तृतीय-मपस्तृतीयं प्राविशत्। तां १८,९,१।

२३५. वरुणोऽद्भिः साम्ने समनमद्, ऋचे समनमत्। तैसं ७,५,२३,२।

२३६. वरुणोऽपाम् (अधिपतिः)। तैसं ३,४, ५,१।

२३७. वस्तिस्त्वाऽएष वैश्वानरस्य (यदापः)। माश १०,६,१,५।

२३८. वाग्देवत्यं साम वाचो मनो देवता मनसः पशवः पशूनामोषधय ओषधीनामापः। तदेतदह्मयो जातं सामाऽप्सु प्रतिष्ठितमिति। जैउ १, १८, ४, १४।

२३९. वायुरापश्चन्द्रमा इत्येते भृगवः। एत इदं सर्वं समाप्याययन्ति। गो १,२,९।

२४०. वायुर्वा अपामायतनम्……। आपो वै वायोरायतनम्……। तैआ १,२२,२-३।

२४१. वायुर्वाऽअपामेम यदा ह्येवैष इतश्चेतश्च वात्यथापो यन्ति। माश ७,५,२,४६।

२४२. वायोश्च त्वाऽपां च (सूर्य) भ्राजसे जुहोमि। तैसं ३,३,१,२।

२४३. वारुणीरापः (°णीर्ह्यापः [मै ४,४,२]) । मै ४,३, १०।

२४४. विद्युद्वाऽअपां ज्योतिः। माश ७,५,२,४९ (तु. जै १, २९२)।

२४५. विश्वं हि रिप्रं प्रवहन्तु देवीः (आपः)। मै १,२,१।

२४६. वीर्यं ( वैराजीः [कौ.]) वाऽआपः। कौ १२,३; माश ५,३,४,१।

२४७. वैश्वदेवीरापः। मै ४,५, २।

२४८. व्रेशीनां त्वा पत्मन्नाधूनोमि, कुकूननानां……भन्दनानां……, मदिन्तमानां, मधुन्तमानां त्वा पत्मन्नाधूनोमि। इत्येता वै दैवीरापः। माश ११,५,९,८,।

२४९. शान्तिर् (+वा [ऐ.]; वै भेषजम् [कौ.,गो.] ) आपः। ऐ ७,५; कौ ३,६; ७; ८; ९; गो २, १,२५; माश १,२,२,११;७,४,९;१७; ९,३,२; ४;२,६,२,१८; ३, ३,१,७।

२५०. शान्तिर् (शुक्रा [तै.] ) ह्यापः। क ३८,२; तै १,७,६,३।

२५१. शिवा ह्यापस्तस्मादाह श्वात्रा स्थेति वृत्रतुर इति वृत्र ९ ह्येता अघ्नन्। माश ३,९,४,१६।

२५२. श्रद्धा (सत्यं [जै.]) वा आपः। तैसं १,६,८,१; जै १,४; तै ३,२,४,१।

२५३. श्रोत्रं वा अपा ५ संधिः। माश ७,५,२,५५।

२५४. संवत्सरो वा अपामायतनम्······आपो वै संवत्सरस्यायतनम्। तैआ १, २२,७।

२५५. स ( परमेष्ठी प्राजापत्यः ) आपोऽभवत्···परमाद्धाऽएतत्स्थानाद्वर्षति यद्दिवस्तस्मात्परमेष्ठी नाम। माश ११,१,६,१६।

२५६. संज्ञानं वा एतत् पशूनां यदापः। काठ २०, १०; क ३१, १२; तैआ १,२६,४।

२५७. समुद्राय (सौम्या हि [ऐ.]) आपः (सन्तु)। ऐ १,७; तैआ ३,१०,३।

२५८. समुद्रो वाऽअपां योनिः। माश ७,५,२,५८।

२५९. समुद्रोऽसि तेजसि श्रितः। अपां प्रतिष्ठा। तै ३,११,१, ४।

२६०. स वा एषोऽपः प्रविश्य ( सूर्य्यः ) वरुणो भवति। कौ १८,९।

२६१. सारस्वतीरापस्तदेवेन्द्रियं वीर्यं तेज आप्नोति। मै ४, ३,९।

२६२. सिकता वा अपां पुरीषम्। माश ७,५,२,५९।

२६३. सुमित्रा न आप ओषधयः सन्तु······। तैआ ४,११,८।

२६४. सेद ५ सर्वमाप्नोद् (वाक्) यदिदं किं च यदाप्नोत्तस्मादापः। माश ६, १,१,९।

२६५. स्थावरा (अपः) अभ्यवयन्ति, ता हि साक्षात् वरुणः। मै ४,८,५।

२६६. हिरण्यवर्णाः शुचयः पावका यासु जातः कश्यपो यास्विन्द्रः। अग्नि ५ या गर्भं दधिरे विरूपास्ता न आपः श ५ स्योना भवन्तु। मै २, १३,१।
[अप्- अक्षिति- २; अग्नि- १५१; २५८; ३५३; ३५४; ३५६; ३८९; ३९१; ६३२; अघमर्षण- २; अङ्गिरस्- ३; अन्न- ७; १०; ७४; १०८; १५४; अन्नाद्य- ९ द्र.]।

**अप्सु-जा-**

१. अप्सुजा (+ ऊ [माश.]) वा अश्वः। मै १,११,६; काठ १४,६; माश ७, ५, २,१८।

२. अप्सुजा ( °जो [तैसं., तै.] ) वेतसः। तैसं ५,३, १२,२; तै ३, ८, ४, ३;१९,२; २०,४; माश १३,२,२,१९;।

३. अयोनिर् (+ वा [काठ.]) अश्वोऽप्सुजाः। मै २,३,३; काठ १२,६।

**अब्जा-**

एष (सूर्य्यः) वा अब्जा अद्भ्यो वा एष प्रातरुदेत्यपः सायं प्रविशति। ऐ ४, २०।

**अपभया** (प्रजापतेस्तनूविशेष)-

अपभया तन्मृत्युः सर्वं ह्येतस्माद्धीभाय (°त्युर्नह्येष बिभेति [कौ.])। ऐ ५,२५; कौ २७,५।

**अपभरणी** (नक्षत्र)-

१. अपभरणीर्नक्षत्रं यमो देवता। तैसं ४,४, १०,३ (तु. काठ ३९,१३)।

२. अपभरणीष्वपावहन् । तै १,५,२,९ ।

३. यमस्यापभरणीः । तै १,५,१,५;२,७ ।

[ ण्णी- अनूराधा- १ द्र. ] ।

अपरपक्ष (कृष्णपक्ष)-

१. अपरपक्षः कुहूः । तैसं ३,४,९,६ ।

२. ऐन्द्राग्न्याऽपरपक्षे (उपतिष्ठेत) । काठ ७,५ ।

३. प्रस्तुतं विष्टुत ९ सुतासुन्वतीति । एतावनुवाकावपरपक्षस्याहोरात्राणां नामधेयानि । तै ३,१०,१०,२ ।

४. योऽवाङ्ङ्वातृणत् सोऽपरपक्षस्तेनासुरानसृजत् । काठ ९,११ ।

अपराजित-

अपराजितो (लोकः) यस्मिन्नादित्यः । जै १,३३४ ।

अपराजिता (दिश्)-

१. अपराजिता नामासि ब्रह्मणा विष्टा······मरुतस्ते गोप्तारो वायुरधिपतिः । मै २,८,१४ ।

२. त उदीच्यां प्राच्यां दिश्ययतन्त (देवासुराः) ते ततो न पराजयन्त सैषा दिगपराजिता । ऐ १,१४ ।

अपराह्ण-

१. अपराह्णः प्रतिहारः । जैउ १,३,२,४ ।

२. अपराह्णे पितृणाम् (समित्यां देवल आस) । जै ३,२७१ ।

३. चन्द्रमसेऽपराह्णे तस्मिञ्छतमानं हिरण्यं ददाति रजतम् ,······रात्रिरपराह्णः । जै २,९८ ।

४. भगस्यापराह्णः (कालः) । तै १,५,३,३ ।

५. शरद्यपराह्णे श्वेतां बार्हस्पत्याम् (मल्हामालभेत) । तैसं २,१,२,५ ।

अपरिपर-

असा आदित्योऽपरिपरः पन्थास्तमेवैनमभ्यारोहयति स्वर्गस्य लोकस्य समष्ट्यै । काठ २४,६; क ३७,७ (तु. मै ३,७,७) ।

अपरिमित-

अपरिमितं भव्यम् । ऐ ४,६ ।

अप√रुध्

एष (प्राणः) ह्यन्यमपरुणद्धि नैतमन्यः । जैउ २,२,२,८ ।

अपस्या (इष्टका)-

१. यदपस्या उपधीयन्तेऽस्या (पृथिव्याः) अनतिदाहाय । काठ २०,९ ।

२. रेतोऽपस्याः (इष्टकाः)। तैसं ५,२,१०,१; काठ २०,९।

३. वज्रो वा अपस्याः। तैसं ५,२,१०,१।

अपान-

१. अग्निर् ( अन्तर्हि [तां.] )अपानः। तां ७,६,१४; जैउ ४,११,१,९।

२. अपान आहवनीयः (°नस्त्रिष्टुप् [तां.])। जै १,६१; तां ७,३,८।

३. अपानः प्रत्याश्रावितम् (प्रस्तोता [कौ., गो.])। कौ १७,७; गो २,५,४; तै २,१,५,९।

४. अपानाच्चक्षुस्सन्तनु। काठ ३९, ८।

५. अपानादन्तरिक्षलोकं (प्रजापतिः प्राबृहत्)। कौ ६,१०।

६. अपानाय त्वेत्यभ्यात्मम्। ऐआ ५,१,४।

७. अपानेन नासिकाम् (प्रीणामि)। मै ३,१५,२।

८. अपानेन (इडा) पितॄन् (दाधार)। तैसं १,७,२,१।

९. अपानेन मनुष्यान्मनुष्यलोके (अयास्य आङ्गिरस अदधात्)। जैउ २,३,२,३।

१०. अपानेन वै प्राणो धृतः। मै ४,५,६।

११. अपानेन हि गन्धाञ्जिघ्रति। माश १४,६,२,२।

१२. अपानेन हि मनुष्या अन्नमदन्ति। माश १०,१,४,१२।

१३. अपानेन ह्ययं यतः प्राणो न पराङ् भवति। ऐआ २,१,८।

१४. अपाने निविश्यामृत ९ हुतम्। तैआ १०,३६,१।

१५. अपाने निविष्टोऽमृतं जुहोमि। तैआ १०,३३,१।

१६. अपाने ऽमृतमधाम्। जै १,१४।

१७. अपाने वैद्युतम् ( प्रजापतिराविशयत् )। शांआ ११,१।

१८. अपानो जगती (नियुत् [ तैसं.])। तैसं. २,१,१,२; मै ३,४,४; काठ २१,१२।

१९. अपानो यजमानः (याज्या [माश.])। माश १४,६,१,१२; ष २,६।

२०. अपानो रथन्तरम् (वरुणः [तैसं., माश.])। तैसं ५,३,४, २; तां ७,६,१४;१७; माश ८, ४, २,६;१२,९,२,१२।

२१. अपानो वा ए(आ-इ)तवान्। माश १,४,३,३।

२२. अपानो वै यन्ताऽपानेन ह्ययं यतः प्राणो न पराङ् भवति। ऐ २,४०।

२३. अपानो हृदये (प्रतिष्ठितः)। शांआ ११, ६।

२४. अभ्यावर्त्ता मनुष्ययशसम्। ते ह तेऽपाना एव। जै १,२७९।

२५. अर्वाङपानः (नाभ्यै)। तैसं ६,३,१,५।

२६. अहरेव प्राणो रात्रिरपानः। ऐआ २, १, ५।

२७. उपरिष्टाद् (नाभ्यै) अपानः। तैसं ३,४,१, ४।

२८. ऊर्ध्वं (+ वै [क.]) नाभ्याः प्राणोऽवाचीनमपानः। काठ २६,१; क ४०,४।

२९. एत्यपानस्तदसौ (द्यु-) लोकः। जैउ २,३,३,५।

३०. ऐन्द्रोऽपानः। तैसं ६,३,११,२।

३१. घोषीव ह्ययमपानः। ष २,२।

३२. चत्वार ऋतुभिरिति (यजन्ति), अपानमेव तद्यजमाने दधति। कौ १३,९।

३३. तं (पशुं संज्ञप्तं) प्रतीचीदिगपानेत्यनुप्राणदपानमेवास्मिंस्तददधात्। माश ११,८,३,६।

३४. तस्माद्दहु किंच किंचाऽपानेन जिघ्रति। जैउ १,१८,५,५।

३५. धरुणेनापानायापानं जिन्व। मै २,८,८।

३६. धरुणोऽस्यपानाय त्वापानं जिन्व। काठ ३७,१७।

३७. नाभ्या अपानः (निरभिद्यत), अपानान्मृत्युः। ऐआ २,४, १; ऐउ १, १,४।

३८. प्राणो वै दक्षोऽपानः क्रतुः। तैसं २,५,२,४।

३९. बहिर्वै सन्तं प्राणमुपजीवन्त्यन्तः सन्तमपानम्। जै १,२७; ३९४।

४०. भुव इत्यपानः। तैआ ७,५,३; तैउ १,५,३।

४१. मनसा ह्यपानो धृतः। काठ २७,२; क ४२,२।

४२. मृत्युरपानो भूत्वा नाभिं प्राविशत्। ऐआ २,४,२; ऐउ १,२,४।

४३. यजूंषि वै ब्रह्मणोऽपानः। काठसंक ४:२।

४४. यन्ताऽस्यपानाय त्वाऽपानं जिन्व। तैसं ४,४, १,३।

४५. यन्तेत्यपानम् (असृजत)। तैसं ५,३,६,२।

४६. वरुणस्य सायमासवोऽपानः। तै १, ५,३,१।

४७. वाच्यपानो नियतः वाचैव तदपानं दधार। जै १, २७५।

[ °न- अध्वर्यु- ९; अनुयाज- १; अन्तर्याम- १; अन्तर्यामपात्र- २ द्र. ]।

**अपान-पा-**

धूरसि श्रेष्ठो रश्मीनामपानपाः। तैसं ३,२, १०,२।

**अपान-भाजन->°ना-**

अपानभाजनाऽमावास्या। जै २,३९४।

**अपान-रूप-**

प्रत्यञ्चोऽनुयाजाः (हूयन्ते), तदपानरूपम्। माश ११, २, ७,२७।

**अपाप-**

अपापो (देवानाम्) निग्रभीता। ऐ २, ७।

[°प- अभ्रिगु- २ द्र.]।

अपामार्ग-

१. अपामार्गैरपमृजते । अघमेव तदपमृजतेऽपाघमपकिल्बिषमपकृत्यामपो रपः । अपामार्ग त्वमस्मदप दुःस्वप्न्यं सुव । माश १३, ८,४,४।

२. अपामार्गैर्वै देवा दिक्षु नाष्ट्रा रक्षा ँस्यपामृजत ते व्यजयन्त । माश ५,२,४, १४।

३. प्रतीचीनफलो वाऽपामार्गः । माश ५,२,४,२० ।

अपामार्ग-होम-

यदपामार्गहोमो भवति रक्षसामपहत्यै । तै १,७, १,८ ।

अपाव्य-

आव्यं वा एतैस्तेऽयाजय ँस्तदपाव्यानामपाव्यत्वम् । काठ ३०,९ ।

अपिशर्वर (छन्दस्)-

१. अपिशर्वर्या अनुस्मसीत्यब्रुवन्नपिशर्वराणि खलु वा एतानि छन्दांसीति ह स्माऽऽहैतानि हीन्द्रं रात्रेस्तमसो मृत्योर्विभ्यतमत्यपारयंस्तदपिशर्वराणामपिशर्वरत्वम् । ऐ ४, ५।

२. तद्यदपिशर्वर्या अपिस्मसीत्यब्रुवंस्तदपिशर्वराणामपिशर्वरत्वम् । गो २,५,१।

३. द्वादशस्तोत्राण्यपिशर्वराणि । ऐ ४,६ ।

४. शर्वराणि खलु ह वा अस्यैतानि छन्दांसीति ह स्माऽऽहैतानि ह वा इन्द्रं राज्यास्तमसो मृत्योरभिपत्यावारयंस्तदपिशर्वराणामपिशर्वरत्वम् । गो २,५,१ ।

५. शर्वरी वै नाम रात्रिः । ते देवा अब्रुवन्नपि वै नश्शर्वर्यामभूदिति । तदेव शर्वराणां शर्वरत्वम् । जै १,२०९ ।

अपूत->अपूत-पा-

अपूतपा आधूयमानः (सोमः) । तैसं ४,४,९,१ ।

अपूप-

१. इन्द्रस्यापूपः । इतीन्द्रिय ँवा इन्द्रः । मै ३,१०,६; क ४५,२ ।

२. इन्द्रियमपूपः । ऐ २,२४ ।

अपूर्वा-

अपूर्वा (प्रजापतेरतनूविशेषः) तन्मनः । ऐ ५,२५; कौ २७,५ ।

अपोनप्त्र-> अपोनप्त्रीय>ष्या-

वज्रस्तेन यदपोनप्त्रीया (ऋक्) । ऐ २,१६ ।

अप्तु-

प्रजा वा अप्तुरित्याहुः । प्रजानां यमन इति । गो २,५,९ ।

अप्तु-मत्-> °ती-

यदप्तुमत्या (जुहोति), पितृभ्यस्तेन (आह्रियते) । मै ३,९,१ ।

अप्तुर्-

अप्तुरमिति ह्यस्या (प्रतिपदः) आप्त्वा श्रेयांसं वसीयान् आत्मना भवति । जै १, ९० ।

अप्तोर्याम-

यद् (विष्णुः पशून्) आप्नोत् । तदप्तोर्यामस्याप्तोर्यामत्वम् । तै २,७,१४,२ ।

अप्तोर्यामन्-

१. ता (प्रजाः) यदाप्त्वायच्छदतो वा अप्तोर्यामा । गो २, ५,९ ।

२. यङ्कामङ्कामयते तमेतेनाप्नोति । तदप्तोर्याम्णोऽप्तोर्यामत्वम् । तां २०,३,४-५ ।

अप्रतिधृष्य,ष्या-

अप्रतिधृष्या तदादित्यः । ऐ ५,२५ ।

[ °ष्य- अनाधृष्य- १द्र. ] ।

अप्रतिरथ-

१. एतेन वै देवा असुरानप्रत्यभ्यजय ९ स्तदप्रतिरथस्याप्रतिरथत्वम् । मै ३, ३, ७; काठ २१,१० ।

२. ते देवा एतदप्रतिरथमपश्यन् तेन वै ते प्रत्यसुरानजयन् तदप्रतिरथस्याप्रतिरथत्वम् । तैसं ५,४,६,३-४ ।

३. दक्षिणतो वै देवाना ९ यज्ञ ९ रक्षा ९ स्यजिघा ९ स ९ स्तानि (रक्षांसि) वा अप्रतिरथेनैवापाघ्नत । मै ३,३,७ ।

अप्रयुच्छत्-

रक्षा णो अप्रयुच्छन्निति गोपाय नो ऽप्रमत्त इत्येवैतदाह । माश ३, २, २, २२ ।

अप्सरस्-

१. अप्सरसो मुष्काभ्याम् (प्रीणामि) । तैसं ५,७,१५,१; काठ ५३,५ ।

२. किं नु तेऽस्मास्वित । हसो मे क्रीडा मे मिथुनम्मे तन्मे युष्मासु । तन्मे पुनर्देहेति । तदस्मा अप्सरसः पुनर्ददति । जैउ ३, ५, ६, ८ ।

३. गन्ध इत्यप्सरसः (उपासते) । माश १०,५,२,२० ।

४. तस्य (वातस्य) आपोऽप्सरसः । माश ९,४,१,१० ।

५. तस्य (यज्ञस्य) दक्षिणा अप्सरसः । माश ९,४,१,११ ।

६. तस्य (चन्द्रमसः) नक्षत्राण्यप्सरसः । माश ९,४,१,९ ।

७. तस्य (सूर्यस्य) मरीचयोऽप्सरसः । माश ९,४,१,८ ।

८. तस्य (मनसः) ऋक्सामान्यप्सरसः । माश ९,४,१,१२ ।

९. तस्य (अग्नेः) ओषधयोऽप्सरसः । माश ९, ४,१,७ ।

१०. रोहित् कुण्डृणाची गोलत्तिका ता अप्सरसाम् । मै ३,१४,१८; काठ ४७, ६ ।

११. सोमो वैष्णवो राजेत्याह तस्याप्सरसो विशस्ता इमा आसत इति युवतयः शोभना उपसमेता भवन्ति ता उपदिशत्यङ्गिरसो वेदः सोऽयमिति । माश १३,४,३,८ ।

अप्सरा-

अप्सरासु च या मेधा गन्धर्वेषु च यन्मनः । दैवी मेधा मनुष्यजा सा मां मेधा सुरभिर्जुषताम् । तैआ १०,४१ ।

अब्द-

१. संवत्सरो वा अब्दः । तैसं ५,६,४,१; । मै ३,४,४; काठ २२,६ ।

२. सजूरब्द आयवोभिः काठ २२,५;६ ।

३. सजूरब्दा आयवभिः (आयवोभिः [मै ३,४,४]) । मै २,१२,३ ।

४. सजूरब्दोऽयावभिः तैसं ५,६,४,१ ।

अभय-

१. यदा ह्येवैष (साधकः) एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते । अथ सोऽभयं गतो भवति । तैआ ८,७,१; तैउ २,७ ।

२. स्वर्गो वै लोकोऽभयम् । माश १२, ८,१, २२ ।

अभिगर- अनाधृष्य- १; अप्- ८५ द्र. ।

अभि√चर्

१. अग्नये रुद्रवते पुरोडाशमष्टाकपालं निर्वपेदभिचरन् । तैसं २, २,२,३ ।

२. अभिचरंश्चिन्वीत, वज्रो वा आपः वज्रमेव भ्रातृभ्यः प्रहरति । स्तृणुत एनम् । तैआ १,२६,५-६ ।

३. अभिचरन् दशहोत्रा जुहुयान्नव वै पुरुषे प्राणा नाभिर्दशमी प्राणानेवास्योपदासयति । काठ ९,१६ ।

४. तैल्वकीम् (समिधम्) अभिचरन्नादध्यादेष वै वनस्पतीनां वज्रस्ताजग्ध प्रमीयते । मै ३,१,९ ।

५. नैनं शप्तम् । नाभिचरितमागच्छति य एवं वेद । तै ३,१२,५, १ ।

६. बार्हस्पत्यमरुणं तूपरमभिचरन्नालभेत । काठ १३, ४ ।

७. ब्राह्मणस्पत्यं तूपरमा लभेताभिचरन् । तैसं २,१, ५,७ ।

८. ब्राह्मणस्पत्यां बभ्रुकर्णीमा लभेताभिचरन् । तैसं २, १, ८, २ ।

९. योऽभिचरेत् मन्थ्यग्रान् (ग्रहान् गृह्णीत), आर्तं वा एतत्पात्रं यन्मन्थिपात्रम् । मै ४, ८, ९ ।
१०. रथचक्रचितं चिन्वीताभिचरन् । क ३१,१९ ।
११. राजसूयेनेजानो नाभिचरितवै प्रत्यगेनमभिचारः स्तृणुते । तै १,७, ७, ५ ।
१२. वारुणं कृष्णं वृष्णिमभिचरन्नालभेत । काठ १३,२ ।
१३. वारुणं कृष्णं पेत्वमालभेताभिचरन् । मै २,५,६ ।
१४. सोमारौद्रं चरुं निर्वपेद् (+ कृष्णानां व्रीहीणाम् [काठ.]) अभिचरन् । तैसं २, २,१०, ४; काठ ११,५ ॥ [अभि√चर् आग्नावैष्णव- ७; अग्नि- २७ द्र.]

अभिजित् (यज्ञ)-

१. अग्निरेवाभिजिदग्निर्हीदं सर्वमभ्यजयत् । कौ २४,१ ।
२. अथ यदभिजितमुपयन्ति । अग्निमेव देवतां यजन्ते । माश १२,१,३,१२ ।
३. अभिजिता वै देवा अभ्यजयन्निमांस्त्रीँल्लोकान् । कौ २४, १ ।
४. अभिजिता वै देवा (+ असुरान् [तां २०]) इमान् लोकानभ्यजयन् । तां २०,८,१;२२,८,४ ।
५. अभिजिदसि युक्तग्रावेन्द्राय त्वेन्द्रञ्जिन्व । तैसं ४,४,१,२ ।
६. अयं वै (भू)लोको अभिजित् । जै २,८ ।
७. एकाहो वा अभिजित् । कौ २४,२ ।
८. यदभिजिता यजतेऽभिजित्यै यत् संवत्सरमुख्यं बिभर्तीमं तेन लोकं स्पृणोति । काठ २२,३ ।
९. यदभिजिद्भवत्यनभिजितस्याभिजित्यै । तां १६.४,७ ।
१०. स वा अभिजिदभयसामा सर्वस्तोमो भवति । कौ २४ १ ।
११. सोऽकामयत (इन्द्रः), यन्मेऽनभिजितं तदभिजयेयमिति स एतमभिजितमपश्यत्तेनानभिजितमभ्यजयत् । तां १६,४, ६॥ [°जित्- अग्नि- ७४९ द्र.] ।

अभिजित् (नक्षत्र)-

१. अभिजिन्नक्षत्रं, ब्रह्मा देवता । मै २,१३,२० ।
२. अभिजिन्नाम नक्षत्रमुपरिष्टादषाढानामवस्ताच्छ्रोणायै । तै १,५, २,३ ।
३. देवासुराः संयत्ता आसन् । ते देवास्तस्मिन्नक्षत्रेऽभ्यजयन् । यदभ्यजयन् तदभिजितोऽभिजित्त्वम् । तै १,५,२, ३-४ ।
४. यस्मिन्ब्रह्माभ्यजयत् सर्व्वमेतत् । अमुञ्च लोकमिदमू च सर्व्वम् । तन्नो नक्षत्रमभिजिद्विजित्य श्रियं दधात्वहृणीयमानम् । तै ३,१,२,५ ।

अभितष्टीय (सूक्त)- प्रजापतिर्वा अभितष्टीयम् । कौ २९,७ ।

अभितृण्ण-> °वत्-> अभितृण्णवती (ऋच्)-

१. इन्द्रो वै प्रातःसवने न व्यजयत, स एताभिरेव माध्यन्दिनं सवनमभ्यतृणत् , यदभ्यतृणत्तस्मादेता अभितृण्णवत्यो भवन्ति । ऐ ६, ११ ।
२. तद्यदेताभिः (इन्द्रः) माध्यन्दिनं सवनमभ्यतृणत् , तस्मादेता अभितृण्णवत्यो भवन्ति । गो २,२,२१ ।

**अभिद्यु-**

१. अभिद्युर् (लोकः) यस्मिन् वरुणः । जै १,३३४ ।

२. अर्धमासा (+ वा [माश.]) अभिद्यवः । तैसं २,५,७,४; माश १,४,१,९ ।

३. मासा देवा अभिद्यवः । गो १,५,२३ ।

**अभिनिधन** (सामन्)- अभिनिधनेन वा इन्द्रो वृत्राय वज्रं प्राहरत्, तमस्तृणुत, स्तृणुते भ्रातृव्यमभिनिधनेन तुष्टुवानः । तां १४,४,५ ।

**अभिप्लव** (षडह)-

१. असावेवाभिप्लवो योऽसौ (आदित्यः) तपति । एष हीदं सर्वमभिप्लवते । जै २,३१ ।

२. इमे वै लोका अभिप्लवाः । माश १२,२,२,१ ।

३. तऽआदित्याश्चतुर्भि स्तोमैश्चतुर्भिः पृष्ठैर्लघुभिः सामभिः स्वर्गं लोकमभ्यप्लवन्त यदभ्यप्लवन्त तस्मादभिप्लवाः । माश १२,२,२,१० ।

४. त एतेनाभिप्लवेनाभिप्लुत्य (देवाः) मृत्युं पाप्मानमपहत्य ब्रह्मणः सलोकतां सायुज्यमापुः । कौ २१,१ ।

५. तद्यदभिप्लवम् (परिप्लवम्) उपयन्ति संवत्सरमेव तद्यजमानाः समारोहन्ति । कौ २०,१ ।

६. पशवो वा अभिप्लवाः । कौ २१,५ ।

७. पिता वा अभिप्लवः पुत्रः पृष्ठ्यः । गो १,४,१७ ।

८. ब्रह्माभिप्लवः, क्षत्रं पृष्ठ्यः । जै २,३१ ।

९. यद्वेवैष षडहः पुनः पुनरभिप्लवते तस्मादभिप्लवो नाम । कौ २१,६ ।

१०. श्रीर्वा अभिप्लवाः । कौ २१,५ ।

११. स्वर्गं लोकमभ्यप्लवन्त यदभ्यप्लवन्त (आदित्याः), तस्मादभिप्लवः । गो १, ४, २३ ।

**अभिभव-** अनुष्टुभ्- २९ द्र. ।

**अभिभू-** अभिभूरस्यभ्यहं तं भूयासं योऽस्मान् द्वेष्टि यं च वयं द्विष्मः । मै १,५,११ ।

**अभिभूति-** छन्दांसि वा अभिभूतयः । तां ९,४,७ ।

**अभि √मन्** माऽभिमंस्थाऽइति···मैनं हिंसीर् (विश्वरूपम्) इत्येतत् । माश ७,५,२,१७ ।

**अभिमाति-**

१. अभिमातिर्वै पाप्मा भ्रातृव्यः । मै २,५,८;९ ।

२. पाप्मा वा अभिमातिः । तैसं २,१,३,५; काठ १३,३ ।

३. सपत्नो वाऽअभिमातिः । माश ३,९,४,९; ५,२,४,१६; १४,२,२,८ ।

**अभिमाति-षाह्-** सं वृष्णान्यभिमातिषाह इति सं रेतांसि पाप्मसह इत्येतत् । माश ७,३,१,४६ ।

**अभिमाति-हन्-**

१. इन्द्राय त्वाभिमातिघ्ने (इमं पयस्वन्तं सोमं मिमे) । मै १, ३,३; काठ ३,१०; क २,१७ ।

२. विष्णोः क्रमोऽस्यभिमातिहा गायत्रेण छन्दसा पृथिवीमनु विक्रमे । तैसं १,६,५,२ ।

अभिवान्या (गो) – अभिवान्याया गोर्दुग्धे (मन्थः) स्यात्, सा हि पितृणाम्। मै १,१०,१७।

अभि√शंस् अप्रतिष्ठितो वा एष यमभिश ँसन्ति। मै २,५,२।

अभिशस्ति- > °शस्ति-हन्- विष्णोः क्रमोऽस्यभिशस्तिहा त्रैष्टुभेन छन्दसाऽन्तरिक्षमनु विक्रमे। तैसं १,६,५,२।

अभिशस्यमान- अभिशस्यमानं याजयेद्यस्य वै देवा अन्नमदन्ति, अदन्ति तस्य मनुष्या अन्नम्। मै २,३,७।

अभि√षिच् शीर्षतो वाऽअभिषिच्यमानोऽभिषिच्यते। माश ९,३,२,३।

अभीक,-> आभीक (सामन्)-

१. अङ्गिरसस्तपस्तेपानाः शुचमशोच ँ स्त एतत्सामापश्य ँ स्तानभीकेऽभ्यवर्षत्तेन शुचमशमयन्त यदभीकेऽभ्यवर्षत्तस्मादाभीकम्। तां १५,९,१।

२. आभीकं भवत्यभिक्रान्त्यै। तां १५,९,८।

अभीत्वरी- सेना वा अभीत्वरी। कौ २८,५।

अ(भि>)भीवर्त्त-

१. अभीवर्त्तः सविंश इति दक्षिणतः, अन्नं वै सविंशः। काठ २०,१३।

२. अभीवर्त्तेन वै देवा असुरानभ्यवर्त्तन्त, यदभीवर्त्तो ब्रह्मसाम भवति भ्रातृव्यस्याभिवृत्त्यै। तां ८,२,८।

३. अभीवर्त्तेन वै देवाः स्वर्गं लोकमभ्यवर्त्तन्त। यदभीवर्त्तो ब्रह्मसाम भवति स्वर्गस्य लोकस्याभिवृत्त्यै। तां ४,३,२।

४. प्रजापतिर्वा अभीवर्तः प्रजाश्छन्दांसि। जै २,३८०।

५. ब्रह्म वा अभीवर्त्तो ब्रह्मणैव तत्स्वर्गं लोकमभिवर्तयन्तो यन्ति। काठ ३३,७।

६. वृषा वा एष रेतोधा यदभीवर्त्तः। तां ४,३,८।

७. संवत्सरो वाऽअभीवर्त्तः सवि ँ शस्तस्य द्वादशमासा सप्तऽर्तवः संवत्सर एवाभीवर्त्तः सविंशस्तद्यत्तमाहाभीवर्त इति संवत्सरो हि सर्वाणि भूतान्यभिवर्तते। माश ८,४,१,१५।

[ °र्त्त- अन्न- ७ द्र. ]।

अभीशु- अभीशवो वै रश्मयः। माश ५,४,३,१४।

आभीशव (सामन्)- अथाभीशवं तृप्त्या एव तर्पयन्ति एवैनमेतेन। जै २,१४।

अभूति-

१. अभूतिरित्यसुराः (उपासाञ्चक्रिरे), ते ह पराबभूवुः। ऐआ २,१,८।

२. असुरा (गाम्) अदुह्राऽयस्पात्रेण स्रवताऽभूतिं च पराभूतिं च। मै ४,२,१३।

अभ्य(भि√अ)ञ्ज् अस्थै पुरुषोऽवच्छितोऽनक्तैवैतद्भवति यदभ्यङ्क्ते, गवि वै पुरुषस्य त्वग्गोर्वा एतन्नवनीतं भवति, स्वयैवैनमेतत्त्वचा समर्धयति··· । माश ३,१,३,७।

**अभ्यातान** (मन्त्रविशेष)-

१. यद्देवा अभ्यातानैरसुरानभ्यातन्वत तदभ्यातानानामभ्यातानत्वम् । तैसं ३,४,६,२ ।

२. यद्विश्वे देवाः समभरन् तस्मादभ्याताना वैश्वदेवाः । तैसं ३,४,६,१ ।

**अभ्यादाव्य**- अशुचितर इव वा एष यदभ्यादाव्यः । मै १, ८,९ ।

**अभ्यावर्त्त**- अपान- २४ द्र. ।

**अभ्र**-

१. अग्नेर्वै धूमो जायते धूमादभ्रमभ्राद् वृष्टिः । माश ५,३,५,१७ ।

२. अथ यद्यभ्रं स्यादेतद्वा अस्य तद्रूपं येन प्रजा बिभर्त्ति । कौ १८,.४ ।

३. अभ्रमेव सविता । गो १,१,३३ ।

४. तस्यै वा एतस्यै वसोर्धारायै द्यौरेवात्माभ्रमूधः । माश ९,३,३,१५ ॥ [°भ्र- अप्- ५० द्र.] ।

**अभ्रातृव्या** (प्रजापतेस्तनूविशेष)- अभ्रातृव्या तत्संवत्सरः । ऐ ५,२५; कौ २७,५ ।

**अभ्रि**-

१. वज्रो वाऽअभ्रिः । माश ३,५,४,२; ६,३,१,३९ ।

२. वाग्वाऽअभ्रिः । माश ६,४,१,५ ।

**अमति**- अशनाया वा (वै + पाप्मा [ऐ.]) अमतिः । ऐ २,२; माश ९,२,३,८ ।

**अमावस्या**-

१. अमावस्यां रात्रीं निशि यजेतामावस्यां वै रात्रीं निशि रक्षा९सि प्रेरते, पूर्णान्येवैनान्यपवपति, परिश्रिते यजेत रक्षसामन्तर्हित्यै वामदेवस्यैतत् पञ्चदशं राक्षोघ्नम् । काठ १०,५ ।

२. आयुषे ( श्रोत्राय [काठ.] ) कममाव(°वा [मै.]) स्येज्यते । मै १,९,५; काठ ९,१३ ।

३. इन्द्राग्न्योर्वा एतद् भागधेयं यदमावस्या । काठ ७,५ ।

४. एका कलोदशिष्यत (चन्द्रमसः) तां प्रजापतिः सिनीवाल्या अददात् तयेह पशुषु वनस्पतिष्वोषधीषु चामावसद्यदमावसत् तदमावस्याया अमावस्यात्वम् । काठसंक २३ : ६-८ ।

५. तं ( चन्द्रमसं प्रजापतिः ) वैश्वदेवेन चरुणामावस्यां रात्रीमयाजयत् तेनैनं यक्ष्मादमुञ्चत् । काठ ११,३ ।

६. ते देवा अब्रुवन्नमा वै नो वस्वभूदिति सामावस्या । काठ ७,१०; क ५,९ ।

७. यच्चन्द्रमा अमावस्याया अधि प्रजायते तन्मिथुनम् । काठ १२, ८ ।

८. वत्सैरमावस्यायाम् ( व्रतमुपयन्ति ) । काठ ३१, १५ ।

९. वैश्वदेवेन चरुणामावस्यां रात्रीं यजेत यो राजयक्ष्माद् बिभीयाद्यक्ष्मादेवैनं मुञ्चति, सोऽमुमेवाप्यायमानम् ( चन्द्रमसम् ) अन्वाप्यायते । काठ ११, ३ ।
[°स्या- अग्नि- २४; अपानभाजना- द्र. ] ।

**अमावास्या**-

१. अमावास्यायां (आदित्यदेवताकं चरुम् ) निर्वपेदमुमेवैनम् (सोमम् ) आप्यायमानमन्वाप्याययति, नवोनवो भवति जायमान इति ···यमादित्या अ९शुमाप्याययन्तीति । तैसं २,३, ५, ३ ।

२. अमावास्या वै सरस्वती [ + पूर्णमासः ( पौर्ण° [गो.] ) सरस्वान् [मै., तैसं ३,५,१, ५ ] ]। तैसं ३, ५, १, ४; मै १, ४, १५; गो २, १, १२ ।
३. अमावास्या सिनीवाली । तैसं ३, ४, ९, ६ ।
४. *अमावास्या स्विष्टकृत् ( यज्ञस्य ) । तैआ २, १४, १ ।*
५. अमा वै नो ऽद्य वसु, वसंतीतीन्द्रो हि देवानां वसु, तदमावास्याया अमावास्यात्वम् । तैसं २,५,३,७ ।
६. आ ऽमावास्यायां प्याययन्ति ( वृत्रम् ) । तैसं २, ५, २, ४-५ ।
७. इन्द्रो वृत्रं हत्वाऽसुरान् पराभाव्य सोऽमावास्यां प्रत्यागच्छत् । तै १, ३, १०, १ ।
८. ऐन्द्रं दध्यमावास्यायां तेनामावास्या सेन्द्रा । तैसं २, ५, ४, १ ।
९. कामो वा अमावास्या । तै ३, १, ५, १५ ।
१०. चन्द्रमा अमावास्यां रात्रिमादित्यं प्रविशत्यादित्योऽग्निम् । जैउ १, ११, १, ६ ।
११. चन्द्रमा वा अमावास्यायामादित्यमनुप्रविशति । ऐ ८, २८ ।
१२. तं ( चन्द्रमसं ) देवा इन्द्रज्येष्ठाः सोमपाश्चासोमपाश्च यथा पितरं पितामहं प्रपितामहं वा वृद्धं प्रलयमुपगच्छमानं व्याधिगतं मरिष्यतीति वा तां रात्रिं वसन्ते तदमावास्याया अमावास्यात्वम् । ष ४, ६ ।
१३. तस्मादमावास्यायां नाध्येतव्यं भवति । ष ४, ६ ।
१४. तस्य ( संवत्सरस्य) एतद् द्वारं यदमावास्या । चन्द्रमा एव द्वारपिधानः । माश ११,१,१,१ ।
१५. *तस्य ( संवत्सरस्य ) एते प्राणापाना यत् पौर्णमास्यश्चामावास्याश्च । जै २, ३९४ ।*
१६. ते देवा अब्रुवन् । अमा ( सह ) वै नोऽद्य वसुर् ( चन्द्रमाः ) वसति यो नः प्रावात्सीदिति । माश १, ६, ४, ३ ।
१७. देवानां वा एते सदोहविर्धाने यत् पौर्णमासी चामावास्या च ······ उभे पुण्याहे उभे यज्ञिये । मै १, ६, ९ ।
१८. नाऽमावास्यायां च पौर्णमास्यां च स्त्रियमुपेयाद्, यद्युपेयान्निरिन्द्रियः स्यात् । तैसं २,५,६,४ ।
१९. प्रजापतेर्वा एतौ स्तनौ यत्पौर्णमासी चामावास्या च । मै १, ६, ९ ।
२०. ब्रह्म वै पौर्णमासी क्षत्रममावास्या । कौ ४, ८ ।
२१. मैत्रावरुण्याऽऽमिक्षयाऽमावास्यायां यजेत । तैसं २, ५, ५, ४ ।
२२. यदाग्नेयो ऽष्टाकपालोऽमावास्यायां भवत्यैन्द्रं दधि, देवताश्चैव तेनेन्द्रियं च यजमानोऽवरुन्धे । तैसं २, ५, ३, २ ।
२३. यदैन्द्राग्नम् ( हविः ) अमावास्यायां तमाग्नेय ँ श्वो भूते पशुमालभन्त । मै ३,६,१० ।
२४. वत्सैरमावास्यायाम् ( व्रतमुपैति ) । तैसं १, ६, ७, २ ।
२५. वृधन्वतीममावास्यायाम् ( अनूच्येते ) । तैसं २, ५, २,५ ।
२६. *सहशीना ँ रात्रीणाममावास्यायां च पौर्णमास्यां च देवा इज्यन्ते । तैसं २, ५, ६, ६ ।*
२७. स यत्रैष ( चन्द्रमाः ) एता ँ रात्रिं न पुरस्तान्न पश्चाद्ददृशे तदिमं लोकमागच्छति स इहैवापश्चौषधीश्च प्रविशति स वै देवानां वस्वन्न ँ ह्येषां तद्यदेष एता ँ रात्रिमिहाऽमा वसति तस्मादमावास्या नाम । माश १, ६, ४, ५ ।

२८. सान्नाय्यभाजना वाऽमावास्या । माश २,४,४,२० ।

२९. सोमस्य वै राज्ञोऽर्धमासस्य रात्रयः पत्न्य आसन्, तासाममावास्यां च पौर्णमासीं च नोपैत्, ते एनमभिसमनह्येतां, तं ( सोमम् ) यक्ष्म आच्छैद्, राजानं ( सोमम् ) यक्ष्म आरदिति तद्राजयक्ष्मस्य जन्म, यत्पापीयानभवत् तत्पापयक्ष्मस्य, यज्जायाभ्यामविन्दत्, तज्जायेन्यस्य ( जन्म ) । तैसं २, ५, ६, ४-५ ।

आमावास्य-

१. अथैतदेव वृत्रहत्यं यदामावास्यं ( हविः ) वृत्रꣳ ह्यस्मा ऽ एतज्जघ्नुषऽ आप्यायनमकुर्वन् । माश १, ६, ४, १२ ।

२. आमावास्यं वै सान्नाय्यम् । माश २,४,४,१५ ।

३. एतद्ध पौर्णमासेन चेष्ट्वाऽऽमावास्येन च यावतीꣳ सौम्येनाध्वरेण जितिं जयति तावतीं जयति, तन्महायज्ञो भवति । काश १, ३, ४, ८ ।

४. ऐन्द्राग्नꣳ ह्यामावास्यꣳ हविर्भवति । माश १, ८, ३, ४ ।

५. यद्दधि तेनाऽऽमावास्यम् । जै २, ३८ ।

६. सान्नायमामावास्यम् ( हविः ) । माश १, ६, २, ६ ।

अमित्र- चिणोमि ब्रह्मणामित्रानुन्नयामि स्वाँ अहम् । काठ १९,१० ।

अमीवा- वि···बाधस्व रिपून् रक्षसो अमीवाः··· अग्ने । मै २,७,५ ।

अमृत, ता-

१. अग्निरमृतम् । माश १०, २, ६, १७ ।

२. अजरꣳ ह्यमृतमायुः । माश ४, २, ४, २ ।

३. अथ यद् ब्रह्म तदमृतम् । जैउ १, ८, १, १० ।

४. अन्नममृतं वदन्ति । काठसंक ७० : ६ ।

५. अमृतं वा आज्यम् (ऋक् [कौ.]) कौ ७, १०; तैआ २, १८, २ ।

६. अमृतं वै ( हि [ माश. ] ) प्राणः (प्रणवः [गो.]) । कौ ११, ४; १४, २; गो २, ३, ११; माश १०, १, ४, २ ।

७. अमृतं वै प्राणाः ( रुक् [माश.] ) । तैसं २, ६, ८, ७; गो २, १,१३; माश ७, ४,२,२१ ।

८. अमृतं वै हिरण्यम् । तैसं ५, २, ७, २; मै २, २, २; ३, ५; ३, २, १; ६; ३, ६; ४, ६, ६;७, ७; काठ ११, ४; २४, ५; क ४५, ७; तै १, ३, ७; ७; माश ९, ४, ४,५; तैआ ५, ९,५ ।

९. अमृतꣳ हिरण्यम् [+ अमृतमेष (आदित्यः [माश.] )] । तैसं २,३,२,२;११,५; ५,२,९,३; मै ३, ४, ७; ४, ४, ४; काठ १९, ११; क ३१, १; तां ९, ९, ४; तै १, ७, ६, ३;८, १; माश ६,७,१,२; १०, ४,१,६ ।

१०. अमृतꣳ ह्येतदमृतेन क्रीणाति यत्सोमꣳ हिरण्येन । माश ३, ३,३,६ ।

११. अमृतं खलु वै प्राणाः । तैसं ५,२,९,२ ।

१२. अमृतं देवानामायुः प्रजानाम् इति । तैआ ३, ११, ३ ।

१३. अमृतमायुः (+तस्य देवा आयुष्कृतः [मै २, ३, ४]) । मै २, ३, ३ ।
१४. अमृतमिव हि स्वर्गो लोकः । तै १, ३, ७, ५ ।
१५. अमृतमु वै प्राणाः । माश ९, १, २, ३२; ३, ३, १३ ।
१६. अमृतमेभ्य (विश्वसृड्भ्यः) उदगायत् । सहस्रं परिवत्सरान् । तै ३, १२, ९, ३ ।
१७. अमृतमेव सप्तमी चितिः । माश ८, ७, ४, १८ ।
१८. अमृतं पुरुषः । तैआ १, २५, १ ।
१९. अमृता देवाः । माश २, १, ३, ४ ।
२०. अमृतान्मृत्युः (निवर्तते) । माश १०, २, ६, १९ ।
२१. अमृतो वै सोमः । काश ४, ३, ४, १२ ।
२२. आदित्योऽमृतम् । माश १०, २, ६, १६ ।
२३. ऋतममृतमित्याह । जै २, १६० ।
२४. एतया (इष्ट्या) यजेत यः प्रमयाद् बिभीयाद्... (हिरण्यरूपेण) अमृतेनैवास्मिन् (यजमाने) अमृतं (शतायुः) दधाति शतकृष्णलो भवति, शतायुर्वै पुरुषश्शतवीर्यः । काठ ११, ४ ।
२५. एते देवा अदुहुर्हारीतेन पात्रेणामृतम् । काठसंक १४० : ९ ।
२६. किं नु ते ऽस्मासु (देवेषु) इति । अमृतमिति । जैउ ३, ५, ७, ८ ।
२७. घृतं पिबन्नमृतं चारु गव्यं (अग्ने) पितेव पुत्रं जरसे म एमम् (°से नयेमम् [काठ.]) । मै ४, १२, ४; काठ ११, १३ ।
२८. तद्यत्तदमृत ऽसोमः सः । माश ९, ५, १, ८ ।
२९. तां (गाम्) देवा अदुह्र हरितेन पात्रेणामृतम् (°त्रेण यज्ञं चामृतं च [मै ४, २, १३]) । मै ४, २, १ ।
३०. तेजोऽसि शुक्रमस्यमृतमसि (आज्य) । माश १, ३, १, २८ ।
३१. ते (देवाः) ह्रोचुः (हे मृत्यो) नातोऽपरः कश्चन सह शरीरेणामृतोऽसद्यदैव त्वमेतं भाग ऽहरासाऽ अथ व्यावृत्य शरीरेणामृतोऽसद्यो ऽमृतो ऽसद्विद्यया वा कर्मणा वेति यद्वै तदब्रुवन्विद्यया वा कर्मणा वेत्येषा हैव सा विद्या यदग्निरेतदु हैव तत्कर्म यदग्निः । माश १०, ४, ३, ९ ।
३२. देवा आयुष्मन्तस्ते ऽमृतेन (+आयुष्मन्तः [काठ.]) । तैसं २, ३, १०, ४; काठ ११, ७ ।
३३. देवाश्च वा असुराश्चापां रसममन्थंस्तस्मान्मथ्यमानादमृतमुदतिष्ठत्ततो यः सर्वतो रसः समस्रवत् स सोमस्तत्सोमस्य सोमत्वम् । काठसंक २२:१-२ ।
३४. द्यौरपराजिता ऽमृतेन विष्टाऽऽदित्यास्ते गोप्तारः सूर्यो वित्तः । तैसं ४, ४, ५, २ ।
३५. प्रजातिरमृतमानन्द इत्युपस्थे । तैआ ९, १०, ३; तैउ ३, १०, ३ ।
३६. प्रजापतिर्वा ऽ अमृतस्तस्य विश्वे देवाः पुत्राः । माश ६, ३, १, १७ ।
३७. प्राणा वा अमृताः । तैआ ५, ९, १० ।
३८. प्राणो (+वा [माश १४, ४, ४, ३]) ऽमृतम् । माश १०, २, ६, १८ ।
३९. मर्त्यानि हीमानि शरीराणी३ अमृतैषा देवता (प्राणः) ऐआ २, १, ८ ।
४०. य एव शतं वर्षाणि यो वा भूया ऽसि जीवति स हैवैतदमृतमाप्नोति । माश १०, २, ६, ८ ।

४२. यदा वै स्वर्गच्छत्यथामृतो भवति। जै १, ३३२।
४३. यद्भेषजं तदमृतं यदमृतं तद्ब्रह्म। गो १, ३, ४।
४४. स एतेन प्रज्ञेनात्मना (प्राज्ञेना° ⌊ऐउ.⌋) ऽस्माल्लोकाद् (स एवं विद्वानस्माच्छरीरभेदादूर्ध्व ⌊ऐआ २,५; ऐउ ४,६⌋) उत्क्रम्यामुष्मिन् स्वर्गे लोके सर्वान् कामानाप्त्वाऽमृतः समभवत्। ऐआ २, ५;६; ऐउ ४,६;५,४।
४५. सदमृतम्। माश १४,४,१,३१।
४६. स्वर्देवा अगामामृता अभूम। मै १,११,३।

[°त- अधिद्यो-; अन्नाद्य- १; १०; अप्- ४९; ५१; ५२; ५३; अपान- १६ द्र.]।

अमृतत्व-

१. अमृतत्वं वै रुक्। माश ९,४,२,१४।
२. अमृतत्वं वै सूददोहाः (हिङ्कारः)। शांआ २,१।
३. आ मा सोमो अमृतत्वेन गम्यात्। मै १,११,३।
४. एतद्वाव (एतद्वै ⌊मै., माश.⌋) मनुष्यस्यामृतत्वं यत्सर्वमायुरेति। मै २,२,२; तां २२,१२,३; २३,१२,३; माश ९,५,१,१०।
५. प्रजाभिरग्नेऽमृतत्वमश्याम्। तैसं १,४,४६,१।
६. प्राणेन ह्येवास्मिँल्लोकेऽमृतत्वमाप्नोति। शांआ ५,२; कौउ ३,२।
७. स्वर्गो वै लोकोऽमृतत्वम्। मै१,१०,१७; काठ ३६,११। [°त्व- अग्नि- ३९; अप्-५१ द्र.]।

अमेध्य-

१. अस्ति वै पत्न्या अमेध्यं यदवाचीनं नाभेः। माश १,३,१,१३।
२. अस्ति वै पुरुषस्यामेध्यं यत्रास्यापो नोपतिष्ठन्ते केशश्मश्रौ च वाऽक्षस्य नखेषु चापो नोपतिष्ठन्ते तद्यत्केशश्मश्रु च वपते नखानि च निकृन्तते मेध्यो भूत्वा दीक्षा इति। माश ३,१,२,२।
३. ऊर्ध्वं ९ वै पुरुषस्य नाभेर् (°भ्यै ⌊तैसं.⌋; °भ्या ⌊काठ., क.⌋) मेध्यमवाचीनममेध्यम्। तैसं ६,१,३,४; मै ३,६,७; काठ २३,४; क ३६, १।
४. ऋक्ष९वा अमेध्यम्। मै ३,८,६; ९,३।
५. केशश्मश्रु वपते, दतो धावते, नखान्निकृन्तते, स्नाति, मृता वा एषा त्वगमेध्यं वा अस्यैतदात्मनि शमलं तदेवापहते। मै ३,६,२ (तु. माश ३,१,२,२)।
६. तद्यदमेध्य९रिप्रं तत्। माश ३,१,२, ११।
७. द्वादश वै पुरुषे मेध्यानि, लोम च तनूश्चासृक् च मा९सं चास्थि च मज्जा च सेहुश्च प्लीहा चाश्रु च दूषिका च स्वेदश्च यच्च प्रस्रावयते। काठ ३४, १२।

अमेनि- अमेन्यस्मै नृम्णानि धारयेत्यक्रुध्यन्नो धनानि धारयेत्येवैतदाह। माश १४, २,२,३०।

अम्बरीष- अन्न- १०२ द्र.।

अम्बि- आपो वा अम्बयः। कौ १२, २।

अम्बिका-

१. अम्बिका ह वै नामास्य (रुद्रस्य) स्वसा। माश २,६,२,९।
२. एष ते रुद्र भागस्तं जुषस्व सह स्वस्राम्बिकया। मै १,१०,४।
३. तया (अम्बिकया [शरदा]) वा एष (रुद्रः) हिनस्ति य ँ हिनस्ति। तै १,६,१०,४।
४. या ह वै सा रुद्रस्य स्वसाऽम्बिका नाम सा ह वै भगस्य (सौभाग्यस्य) ईष्टे तस्मादु हापि कुमार्यः परीयुर्भगस्य भजामहाऽइति। माश २, ६, २, १३।
५. शरद्वै रुद्रस्य योनिः स्वसाम्बिका, एतां वा एषो (रुद्रः) ऽन्वभ्यवचरति। तस्मात् शरदि भूयिष्ठ ँ हन्ति। मै १,१०,२०।
६. शरद्वै रुद्रस्य स्वसाम्बिका तामेषो (रुद्रः) ऽन्ववचरति तस्मादेष (रुद्रः [ज्वरः]) शरदि भूयिष्ठं हन्ति। काठ ३६,१४ (तु. तै १,६,१०,४)।

अम्बी- अम्बी वै स्त्री भगनाम्नी, तस्मात् त्र्यम्बकाः। मै १,१०,२०; काठ ३६, १४।

अम्भस्-

१. अदोऽम्भः परेण दिवं, द्यौः प्रतिष्ठा। ऐआ २,४,१; ऐउ १,१,२।
२. अयं वै (भू-)लोकोऽम्भा ँ सि। तस्य वसवोऽधिपतयः। तै ३,८,१८, १।

अम्भृण(पात्रविशेष)-> °णा-वत्- वैश्वदेवौ वाऽअम्भृणावतो हि देवेभ्य उन्नयन्त्यतो मनुष्येभ्योऽतः पितृभ्यः। माश ४,५,६,३।

अयन-

१. आदित्य एवायनम्। स ह्येषु लोकेष्वेति। इत्यधिदेवतम्। अथाध्यात्मम्। ··· प्राण एवायनम्। स ह्यस्मिन् सर्वस्मिन्नेति। जै २, २९।
२. इयं (पृथिवी) वाऽअपामयनमस्या ँ ह्यापो यन्ति। माश ७, ५, २, ५०।
३. तदाहुः कस्मादयनानीति गमनान्येव भवन्ति कामस्य कामस्य स्वर्गस्य च लोकस्य। कौ ६, १५।

अयव-

१. अपरपक्षा अयवाः। माश ८, ४, २, ११।
२. एकत्रि ँ शतास्तुवत, प्रजा असृज्यन्त, यवाश्चायवाश्चाधिपतय आसन्। मै २,८, ६।
३. यवानां भागोऽस्ययवानामाधिपत्यं, प्रजाः स्पृताश्चतुश्चत्वारि ँ शः स्तोमः। मै २,८,५।

अयवन्- स यो (अर्धमासः) देवानामासीत् स यवाऽयुवत हि तेन देवा, योऽसुराणा ँ सोऽयवा न हि तेनासुरा अयुवत। अथोऽइतरथाहुः। य एव देवानामासीत् सोऽयवा न हि तमसुरा अयुवत, योऽसुराणा ँ स यवाऽयुवत हि तं देवाः। माश १,७,२,२५-२६।

अयस्-

१. अयस्त्रैष्टुभम् (छन्दः)। शांआ ११, ७।
२. अश्मनोऽयः (प्रजापतिरसृजत) तस्मादश्मनोऽयो धमन्ति। अयसो हिरण्यं तस्मादयो बहुध्मात ँ हिरण्यसंकाशमिवैव भवति। माश ६, १, ३, ५।

३. विश एतद् रूपं यदयः। माश १३, २, २, १९।

४. हिरण्यं च मे ऽयश्च मे ( यज्ञेन कल्पताम् )। तैसं ४, ७, ५, १।

**अयस्पात्र-** अथाऽसुरा अदुह्रायस्पात्रेण स्रवता सुराम्। मै ४,२,१॥ [ °त्र- अभूति- २ द्र. ]।

**अयस्मय-** अयस्मयेन ( पात्रेण ) असुरा अदुहुर्यवान्। काठसंक १४० : १०।

**अयस्मयी-**

१. अयस्मयीमेवास्मिंल्लोके ( पुरीमसुराश्चक्रिरे )। माश ३, ४, ४, ३ (तु. मै ३,८,१)।

२. अयस्मयीयम् ( पूः पृथिवी )। काठ २४, १०; क ३८, ३।

३. अस्य वै ( भू ) लोकस्य रूपमयस्मय्यः …दिशो वा अयस्मय्यः ( सूच्यः )। तै ३,९,६,५।

**अयाव-**

१. अर्धमासा (मासा [तैसं ५, ६, ४, १]) अयावाः। तैसं ५,३,४,५; ६,४,१।

२. एकत्रिं॰शता ऽस्तुवत, प्रजा असृज्यन्त, यावानां चायावानां चाऽऽधिपत्यमासीत्। तैसं ४, ३, १०, ३।

**अयास्-** अग्नि- ३६९ द्र.।

**अयास्य-**

१. अयास्य उद्गाता। मै १, ९, १; काठ ९, ९; ऐ ७, १६; तैआ ३, ५, १।

२. अयास्येनाऽऽङ्गिरसेन मनुष्या उत्तरतः ( आगच्छन् )। जैउ २,३,१,२।

३. अयास्यो ( अस्माकमादित्यानाम् ) ब्रह्मा। जै ३,१८८।

४. क्व नु सोऽभूद्यो न इत्थमसक्तेत्ययमास्येऽन्तरिति सोऽयास्यः। माश १४,४,१,९।

५. ते ( असुराः ) ऽब्रुवन्नयं वा आस्य इति। यदब्रुवन्नयं वा आस्य इति तस्मादयमास्यः। अयमास्यो ह वै नामैषः। तमयास्य इति परोक्षमाचक्षते। जैउ २, ३, २, ७।

६. स एष एवाऽयास्यः ( अन्नाद्यम् )। आस्ये धीयते तस्मादयास्यः। यद्वेवा ( ऽयम् ) आस्ये रमते तस्माद्वेवाऽयास्यः। जैउ २, ४, २, ८।

७. स प्राणो वा अयास्यः। जैउ २, ३, २, ८॥ [ °स्य- अग्नि- ५१९ द्र. ]।

**आयास्य** ( सामन् )-

१. अन्नाद्यं वाव तदेभ्यो लोकेभ्योऽपाक्रामत्तदयास्य आयास्याभ्यामच्यावयत्, च्यावयत्यन्नाद्यमायास्याभ्यां तुष्टुवानः। तां ११, ८, १२।

२. अयास्यो वा आङ्गिरस आदित्यानां दीक्षितानामन्नमाश्नात्त॰ शुगार्च्छत्स तपोऽतप्यत स एते आयास्ये अपश्यत्ताभ्या॰ शुचमपाहतापशुच॰ हत आयास्याभ्यां तुष्टुवानः। तां ११,८,१०।

३. आयास्यम्भवति तिरश्चीननिधनं प्रतिष्ठायै। तां १४,३,२१।

४. एभ्यो वै लोकेभ्यो वृष्टिरपाक्रामत्तामयास्य आयास्याभ्यामच्यावयत्, च्यावयति वृष्टिमायास्याभ्यां तुष्टुवानः। तां ११,८,११।

५. तस्मा ( अयास्यायोद्गात्र आदित्याः ) अमुमादित्यमश्व॰ श्वेतं कृत्वा दक्षिणामानय॰स्तं प्रतिगृह्य व्यभ्र॰शत स एतान्यायास्यान्यपश्यत्तैरात्मान॰ समश्रीणात्। तां १६, १२,४।

६. यदाग्रास्यानि भवन्ति भेषजायैव शान्त्यै । तां १६,१२,५ ।

७. स (आग्रास्यः) व्यभ्र ५ शत स एतान्यायास्यान्यपश्यत्तैरात्मान ५ समश्रीणाद्छिद्रमिव वै सप्तममहर्यदेतत्साम भवत्यहरेव तेन स ५ श्रीणाति । तां १४, ३, २२ ।

अरण- मृत्योर्वै क्षेत्राण्यरणानि । तैसं ७,२,७,५; काठ ३०, ३; क ४६,६ ।

आरण- आरणाय सृमरः । मै ३,१४,२० ।

अरणि-

१. अयं ते योनिर्ऋत्विय इत्यरण्योः समारोहयत्येष वा अग्नेर्योनिः । तैसं ३,४,१०,४-५ ।

२. अरो वै विष्णुस्तस्य वा एषा पत्नी यदरणिस्तदरण्या अरणित्वम् । काठसंक २१ : २-३ ।

३. चतुर्विंशत्यङ्गुलारणिर्भवति'''गायत्र्या सम्मिता, षडङ्गुलपृथ्वी । काठसंक २१ : १-२ ।

४. तस्या (अरण्याः) यान्यग्रे चत्वार्यङ्गुलानि तच्छिरो यदन्यानि चत्वार्यङ्गुलानि सा ग्रीवा यदन्यानि चत्वार्यङ्गुलानि तदुरः स्तनो बाहू पार्श्वे पृष्ठमुदरं च यदन्यानि चत्वार्यङ्गुलानि सा श्रोणी यदन्यानि चत्वार्यङ्गुलानि तदूरू जानुनी यदन्यानि चत्वार्यङ्गुलानि तज्जङ्घे पादा इत्येतावतैवारणिः सर्वैरङ्गैः संपूर्णा भवति । काठसंक २१ : ३-५ ।

५. देवरथो वा अरणी । कौ २,६ ।

अरण्य-

१. अरण्यं प्रजा उपजीवन्ति । तैसं ६,२,१०,७ ।

२. क्षत्र? (क्षत्रिय) उ वा अरण्यस्यातिनेता । जै २,४२३ ।

३. वाग्वाऽअरण्येऽनूच्यः (पुरोडाशः) । माश ९,३,२,४ ।

आरण्य-

१. इन्द्रियं वा आरण्यम् । तैसं १,६,७,३-४; मै १,४,१० ।

२. एतदायतना वा आरण्याः पशवः, यद् बहिष्पवमानमरण्ये स्तुवन्ति । जै १,८९ ।

अरति- अयं वै (पृथिवी-) लोकोऽरतिः पृथिव्याः । जै २,३९० ।

अरत्नि- बाहुर्वाऽअरत्निः । माश ६,३,१,३३; ७,१,१४; १४,१,२,६ ।

अररु-

१. अररुर्वै नामासुर आसीत् । काठ ३१,८; क ४७,८ ।

२. अररुर्ह वै नामासुररक्षसमास तं देवा अस्याः (पृथिव्याः) अपाघ्नत । माश १, २, ४, १७ ।

३. भ्रातृव्यो वा अररुः । काठ २५,४; ३१,८; क ३९,१; ४७,८; तै ३,२,९,४ ।

अराति-

१. अन्तरिता अरातयः । तैसं १,१,८,१ ।

२. अपहतारातिः । काठ १,५; क १,५ ।

३. अवधूतारातिः (°ता अरातयः [तैसं.]) । तैसं १,१,५,१; मै १,१,६; काठ १,५; क १,५ ।

४. निर्दग्धारातिः (°धा अरातयः [तैसं.]) । तैसं १,१,७,१; मै १,१,८; काठ १,७ ।

५. परापूतारातिः (°ता अरातयः [तैसं.]) । तैसं १,१,५,२; मै १,१,७; काठ १,५; क १,५।
६. परिलिखिता अरातयः । तैसं १,२,५,१;३,१,१ ।
७. प्रत्युष्टारातिः (°ष्टा अरातयः [तैसं.]) । तैसं १,१,२,१; मै १,१,४; काठ १, २ ।
८. वृत्रस्यासि कनीनिकान्तरहं त्वया द्वेषमन्तररातीर्दधे। क १,१३ ।
९. सहस्रारातिम् । मै १,१,११ ।

**√अरातीय, > °यत्-**

१. अरातीयन्तमधरं कृणोमि, यं द्विष्मस्तस्मिन् प्रति मुञ्चामि पाशम् । तैसं ३,१,४,४ ।
२. इदमह ं यो मे (नः [काठ.]) समानो योऽसमानोऽरातीयति तस्य ग्रीवा अपि कृन्तामि। मै १,२,१०; काठ २,५ ।
३. विष्णोः क्रमोऽस्यरातीयतो हन्ता जागतेन छन्दसा दिवमनु विक्रमे । तैसं १,६,५,२-३ ।

**अरावन्-** अरावाणो वा एते येऽनृतमभिशंसन्ति । तां ६,१०,७ ।

**अरिष्ट-**

१. अनेन (अरिष्टेन साम्ना) नारिषामेति तदरिष्टस्यारिष्टत्वम् । तां १२,५,२३ ।
२. देवाश्च वा असुराश्चास्पर्द्धन्त यं देवानामघ्नन्न स समभवद्यमसुराणा ं स ं सोऽभवत्ते देवास्तपोऽतप्यन्त त एतदरिष्टम् (साम)अपश्य ं स्ततो यं देवानामघ्नत् ? (अघ्नन्) स ं सो ऽभवद्यमसुराणान्न स समभवत् । तां १२,५,२३ ।

**अरिष्टनेमि-**

१. अरिष्टनेमिः पृतना युधा जयन् । काठसंक ६० : ५ ।
२. एष (तार्क्ष्यः [वायुः]) वा अरिष्टनेमिः पृतनाजिदाशुः । ऐ ४,२० ।

**अ(रि>)री-** प्रजा वा अरीः । माश ३,९,४,२१ ।

**अरुण,णा (वर्ण)-**

१. अरुणाः (पशवः) शरदे (दीयन्ते) । मै ३,१३,१९ ।
२. अरुणो भ्रूमान् भवत्येतद्वा इन्द्रस्य रूपम् । तैसं २,१,६,३ ।
३. गोभिररुणैरुषा आजिमधावत् (गावः = रश्मयः) । ऐ ४, ९ ।
४. तस्य ( प्रजापतेः ) यन्मा ं समासीत्ततोऽरुणाः केतवो वातरशना ऋषय उदतिष्ठन् । तैआ १,२३,२ ।
५. याऽरुणा (गौः) सा पोषयिष्णुः । मै ४,२,१४ ।
६. ये (पशवः) ऽभितप्यमानादसृज्यन्त तेऽरुणाः । जै ३,२६३ ।

**अरुण-दूर्वा-** एष वै सोमस्य न्यङ्गो यदरुणदूर्वा । माश ४,५,१०,५ ।

**अरुणी-** उषा अरुणीः । तैसं ५,६,४,१; काठ २२,६ ।

**आरुण->आरुणकेतुक (अग्नि)-**

१. कमग्निं चिनुते । इममारुणकेतुकमग्निं चिन्वान इति । य एवासौ (सूर्यः) इतश्चामुतश्चाव्यतीपाती । तमिति । तैआ १,२२,१२ ।

२. तं वा एतमरुणाः केतवो वातरशना ऋषयोऽचिन्वन्। तस्मादारुणकेतुकः। तैआ १,२४,४।

आरुणी- सजूरुषा आरुणीभिः [अरुणीभिः (स्वाहा [काठ.])]। मै २,१२,३;३,४,४; काठ २२,५।

अरुन्धती-

१. ऋषीणामरुन्धती (पत्नी)। तैआ ३,९,२।

२. दक्षिणाऽरुन्धती। काठ ३७,१०।

अरुप- अग्नि- १५२ द्र.।

अर्क-

१. अङ्गिरसः सुवर्गं लोकं यन्तो ऽजायां घर्मं प्रासिञ्चन्त्सा शोचन्ती पर्णं परा ऽजिहीत सोऽर्कोऽभवत्, तदर्कस्यार्कत्वम्। तैसं ५, ४, ३, ३।

२. अर्कश्चक्षुस्तदसौ सूर्यः (+ यत्ते शुक्र शुक्रं धाम, शुक्रा तनूश्शुक्रं ज्योतिरजस्रं, यत्ते ऽनाधृष्टं नामानाधृष्य तेन त्वादधे, वर्चो मे यच्छ [काठ.])। काठ ७,१४; तै १,१,७,२।

३. अर्कश्च मे सूर्यश्च मे (यज्ञेन कल्पताम्)। तैसं ४, ७, ९ १।

४. अस्य (अग्नेः) एवैतानि नामानि[1]। माश ९,४,२,२५।

५. आदित्यो [इयं (पृथिवी [काठ.])] वा ऽर्कः। काठ १०,८; माश १०, ६, २, ६।

६. एतस्य वै (रुद्रस्य) देवस्याशयादर्कः समभवत्। स्वेनैवैतद् (स्वेनैवैनम् [रुद्रम्] एतद्) भागेन स्वेन रसेन प्रीणाति। माश ९, १, १, ९।

७. दीर्घतमसो ऽर्को (सामविशेषः) भवति। तां १५, ३, ३४।

८. प्राणो वा ऽर्कः। माश १०, ४, १, २३; ६, २, ७।

९. वेत्थार्कमिति पुरुष ँहैव तदुवाच। वेत्थार्कपर्णेऽइति कर्णौ हैव तदुवाच वेत्थार्कपुष्पेऽइत्यक्षिणी हैव तदुवाच वेत्थार्ककोश्याविति नासिके हैव तदुवाच वेत्थार्कसमुद्गाविलोष्ठौ हैव तदुवाच वेत्थार्कधाना इति दन्तान्हैव तदुवाच वेत्थार्काष्ठीलामिति जिह्वा ँ हैव तदुवाच वेत्थार्कमूलमित्यन्न ँ हैव तदुवाच। माश १०, ३, ४, ५।

१०. स एष एवार्को य एष (सूर्यः) तपति। माश १०, ४, १, २२।

११. स एषोऽग्निरर्को यत्पुरुषः। माश १०,३,४,५॥ [°र्क- अग्नि- ७९; १५३; ३५८; ३७१; ३७२; ३७३; ५१३; अङ्गिरस्- ८; अन्त- १; अन्न- ८;२३;७२;१०४; अप्- ८७ द्र.]।

अर्क-पर्ण- यदर्कपर्णेन जुहोत्यर्केण वा एतदर्कमेव यजति। मै ३, ३, ४ (तु. काठ २१, ६)।

अर्क-पुष्प-

१. असावादित्यो ऽर्कपुष्पम्। शांआ १, ४।

२. अन्नं वै देवा अर्क इति वदन्ति रसमस्य पुष्पमिति सरसमेवान्नाद्यमवरुन्धे ऽर्कपुष्पेण (साम्ना) तुष्टुवानः। तां १५, ३, २३।

अर्क-वत्-> अर्कवती- एषेन्द्रस्यान्त्या तनूर्यार्कवती। काठ १०, ८।

---

1. घर्मः, अर्कः, शुक्रः, ज्योतिः, सूर्य इति।

**अर्काश्वमेध-**

१. इयं (पृथिवी) वा अर्कोऽसा (द्यौः) अश्वमेधः। काठ १०, ९।

२. एते वै महायज्ञस्यान्त्ये तनू यदर्काश्वमेधौ। तैसं २, २, ७, ५।

३. ओजो (प्राणापानौ) बलं वा एतौ देवानां यदर्काश्वमेधौ। तै ३, ९, २१, ३।

**अर्काश्वमेध-वत्-** इन्द्रायार्काश्वमेधवते पुरोडाशमष्टाकपालं निर्वपेत्। तैसं २,२,७,५।

**अर्क्य-**

१. अन्नं वा अर्क्यम्। काठ ३०,५।

२. अर्चते वै मे कमभूदिति तदेवार्क्यस्यार्कत्वम्। माश १०,६,५,१।

३. तस्य (अर्कस्य) एतदन्नं क्यमेप चन्द्रमास्तदर्क्यं यजुष्टः। माश १०,४,१,२२।

४. स एष एवार्कः। यमेतमत्राग्निमाहरन्ति तस्यैतदन्नं क्यं योऽयमग्निश्चितस्तदर्क्यं यजुष्टः। माश १०,४,१,४।

**अर्चिस्-**

१. अजस्रेण भानुना दीद्यतमित्यजस्रेणार्चिषा दीप्यमानमित्येतत्। माश ६,४,१,२।

२ ऊर्ध्वा शुक्रा शोचीꣳष्यग्नेरित्यूर्ध्वानि ह्येतस्य (अग्नेः) शुक्राणि शोचीꣳष्यर्चीꣳषि भवन्ति। माश ६, २,१,२२।

३. परिवृङ्ग्धि हरसा माभिमꣳस्था इति पर्येनं वृङ्ग्ध्यर्चिशा मैनꣳहिꣳसीरित्येतत् (हरः = अर्चिः)। माश ७, ५,२,१७।

४. सप्त हस्तास इति सप्त छन्दांसि तस्मात् सप्तार्चिषः। काठसंक २५ : २-३।

**अर्जुन-** अर्जुनो ह वै नामेन्द्रः (+ यदस्य गुह्यं नाम [माश ५,४,३,७]) । माश २, १, २,११।

**अर्जुन** (पुष्प)-

१. इन्द्रो वृत्रमहꣳस्तस्य यो नस्तः सोमः समधावत्तानि बभ्रुतूलान्यर्जुनानि। तां ९, ५, ७।

२. यदि सोमं न विन्देयुः पूतीकानभिषुणुयुर्यदि न पूतीकानर्ज्जुनानि। तां ९,५,३।

३. यानि पुष्पाण्यवाशीयन्त (सोमस्य ह्रियमाणस्य) तान्यर्ज्जुनानि। तां ८,४,१।

**आर्जुन-**

१. इन्द्रो वै वृत्रमहꣳस्तस्य यल्लोहितमासीत्तान्यार्जुनानि लोहिततूलान्यभवन्। काठ ३४, ३।

२. यो (वृत्रस्य) ग्रीवाभ्यः प्रवृढाभ्यो रसस्समस्रवत्तान्यार्जुनानि बभ्रुतूलान्यभवन्, सोमो वा एषोऽसूर्य इव तु। काठ ३४,३।

**अर्जुनी** (नक्षत्र)- अर्जुन्यो वै नामैतास्ता एतत्परोऽक्षमाचक्षते फल्गुन्य इति। माश २, १,२,११।

**अर्णव-** प्राणो वाऽअर्णवः। माश ७,५,२,५१।

**अर्थ-** अर्थश्च म एमश्च मे (यज्ञेन कल्पताम्)। तैसं ४,७,५, २।

**अर्धमास-**

१. अथैतावेवार्धमासौ मित्रावरुणौ य एवापूर्यते स वरुणो योऽपक्षीयते स मित्रस्तावेतांꣳ रात्रिमुभौ समागच्छतः। माश २,४,४,१८।

२. अर्धमास एव पञ्चदशस्यायतनम् । तां १०,१,४ ।
३. अर्धमासः पञ्चदशः । तां ६,२,२ ।
४. अर्द्धमासशो हि प्रजाः पशव ओजो वलं पुष्यन्ति । तां १०, १,६ ।
५. अर्धमासा उपसदः (°साः प्रस्तावः [प.]) । माश १०,२,५,५; प ३,१ ।
६. अर्धमासाः पर्वाणि (अश्वस्य मेध्यस्य) । तैसं ७,५,२५,१ ।
७. अर्धमासानां तृतीयः । काठ ५३, ८ ।
८. अर्धमासास्त्वोर्दां जयन्तु । तैआ ४,२६,१ ।
९. अर्धमासा हविष्पात्राणि (हविष्मन्तः [गो.]) । गो १,५,२३; माश ११, २, ७, ४ ।
१०. अर्धमासौ ( शुक्लकृष्णपक्षौ) वै मित्रावरुणौ । तां २५, १०, १० ।
११. इमे मासाश्चार्धमासाश्च सर्वेषां भूतानां प्राणैरप प्रसर्पन्ति चोत्सर्पन्ति च । तैआ १,१४,३ ।
१२. किं नु तेऽस्मासु (अर्धमासेषु) इति । इमानि क्षुद्राणि पर्वाणि । जैउ ३, ५, ४, ८ ।
१३. देवाश्च वाऽअसुराश्च । उभये प्राजापत्याः प्रजापतेः पितुर्दायमुपेयुरेतावेवार्धमासौ ( शुक्लकृष्णपक्षौ) । माश १,७,२,२२ ।
१४. पञ्चदश (+वा [जै.]) अर्धमासस्य रात्रयः । मै १,७,३; काठ ३४,९; जै १,१३२ ।
१५. पञ्चदशिनोऽर्धमासाः । तैसं ७,५,२०,१ ।
१६. पवित्रं पवयिष्यन्त्सहस्वान्त्सहीयानरुणोऽरुणरजा इति । एतेऽनुवाका अर्द्धमासानाञ्च मासानाञ्च नामधेयानि । तै ३, १०, १०, ३ । [°स- अन्यवाप-; अभिद्यु- २; अयाव- १ द्र. ] ।

अर्द्ध,र्धर्च-

१. असौ (द्यौः) वा अर्धर्च इयम् (पृथिवी) अर्धर्चः । तैसं ६, ३,११,३ ।
२. एष (प्राणः) वा अर्धर्च एष ह्येभ्यः सर्वेभ्योऽर्धेभ्योऽर्चत । ऐआ २, २,२ ।
३. प्रतिष्ठा वा अर्द्धर्चः । गो २,५,१० ।

अर्द्धेळ- त्राणाय वा एष यदर्द्धेळमिति । जै १,१९० ।

अर्बुद-

१. अर्बुदः काद्रवेयो राजेत्याह तस्य सर्पा विशः…सर्पविद्या वेदः…सर्पविद्याया एकं पर्व व्याचक्षाण इवानुद्रवेत् । माश १३,४,३,९ ।
२. अर्बुदो वै सर्प एताभिर् (अर्बुदस्य ऋग्भिः) मृतां त्वचमपाहत । जै २,२२२ ।
३. वाग्वा अर्बुदम् । तै ३,८,१६,३ ।

अर्यमन्-

१. अर्यमा सप्तहोतॄणां होता । तै २,३,५,६ ।
२. अर्यमेति तमाहुर्यो ददाति । तै १,१,२,४ ।
३. अर्यम्णे चरुं निर्वपेत् सुवर्गकामः । तैसं २,३,४,१ ।
४. अर्यम्णो वा एतदहर्यदुत्तराः फल्गुनीः, दानमर्यमा । मै १,६,९ ।

५. अर्यम्णो वा एतन्नक्षत्रं यत्पूर्वे फल्गुनी [यदुत्तरा (फल्गुनी [काठ.])] काठ ८, १; तै १,१,२,४;५,१,२; ३,१,१,८ ।
६. अर्यम्णोऽष्टमी (नवमी [मै.]) । तैसं ५,७,२२,१; मै ३,१५,५; काठ ५३,१२ ।
७. असौ वा आदित्योऽर्यमा । तैसं २,३, ४,१ ।
८ आऽर्यमा याति वृषभस्तुराषाड्, दाता वसूनि विदधे तनूपाः । सहस्राक्षो गोत्रभिद्वज्रबाहु रस्मासु देवो द्रविणं दधातु । मै ४,१२,४ ।
९. एष वा (एषो [काठ ८,१]) अर्यमा यो ददाति । काठ ११,४ ।
१०. एषा वा ऊर्ध्वा बृहस्पतेर्दिक्देष उपरिष्टादर्यम्णः पन्थाः । माश ५,५,१,१२ ।
११. ततो वै स (अर्य्यमा) पशुमानभवत् । तै ३,१,४,९ ।
१२. पिंगः क्षिवङ्क्षा नीलशीर्ष्णी तेऽर्यम्णः । काठ ४७,५ ।
१३. फल्गुनीः (°नी [तैसं.]) नक्षत्रमर्यमा देवता । तैसं ४,४,१०,१-२; मै २,१३,२० ।
१४. यज्ञो वा अर्य्यमा । मै ४,२,१०; तै २, ३,५,४ ।
१५. यो (यः खलु वै [तैसं.]) ददाति, सोऽर्यमा । तैसं २,३, ४,१; मै २,३,६ । [°मन्- अध्वर्यु- १० द्र.] ।

अर्वन्-

१. अर्वाऽसुरान् (अवहत्) । तैसं ७,५,२५,२; माश १०,६,४,१ ।
२. अर्वासि (+ सप्तिरसि, वाज्यसि [तैसं.]) । तैसं १, ७, ८,१; तां १,७,१; तै ३,८,९,२; माश १३,१,६,१ ।
३. पुमा ९ सोऽर्वन्तः । माश ३, ३,४,७ ।
४. यच्छ्वयदरुरासीत्तस्मादर्वा नाम । तै ३,९,२१,२ ।
५. वाजमर्वत्सु··· (अदधात्) । तै १,२,८,१; काठ २,६; क १,१९ । [°र्वन्- अग्नि- १५२ द्र.]

अर्वाग्वसु-

१. अथ यदर्वाग्वसुरित्याहातो (पर्जन्यात्) ह्यर्वाग्वसु वृष्टिरन्नं प्रजाभ्यः प्रदीयते । माश ८ ६,१,२० ।
२. अयमुपर्यर्वाग्वसुस्तस्य तार्क्ष्यश्चारिष्टनेमिश्च सेनानीग्रामण्या उर्वशी च पूर्वचित्तिश्चाप्सरस अवस्फूर्जद्धेतिर्विद्युत्प्रहेतिः । मै २,८,१० ।
३. अर्वाग्वसुर्ह वै देवानां ब्रह्मा पराग्वसुरसुराणाम् । गो २,१,१ ।
४. अहरर्वाग्वसुः । मै १,५,९; काठ ७,६ ।

अर्वाग्बिल- अर्वाग्बिलश्चमस ऊर्ध्वबुध्न इदं तच्छिरः । माश १४,५,२,५ ।

अर्वावसु-

१. अर्वावसुर्वै नाम देवानां ब्रह्मा । कौ ६,१३ ।
२. अर्वावसुर्ह वै देवाना ९ होता । माश १,५,१,२४ ।

अलज- अलज आन्तरिक्षः । मै ३,१४,१६; काठ ५७, १० ।

अलज-चित्- अलजचितं चिन्वीत चतुःसीतं प्रतिष्ठाकामः । तैसं ५,४,११,१ ।

**अलम्म**– तम् (परिजानतः पुत्रम्, ऋषयः) अब्रुवन् को न्वयं कस्मा अलमित्यलन्तु वै मह्यमिति (सामाब्रवीत्) तदलम्मस्यालम्मत्वम्। तां १३,१०,८।

**अलापु,बु**– सर्पा (गाम्) अदुह्राऽलापुना विषम्। मै ४,२,१३।

**अलाबु-पात्र**– अलाबुपात्रेण सर्पा अदुहुर्विषम्। काठसंक १४०, १०-११।

**अवका**–

१. अथ (आपः) यदब्रुवन्नवाङ् नः कमगादिति ता अवाका अभवन्नवाका ह वै ता अवका इत्याचक्षते परोऽक्षम्। माश ९,१,२,२२।

२. तस्मादवका अपामनुपजीवनीयतमा यातयाम्न्यो हि ताः। माश ९,१,२,२४।

३. शर्कराभिरवकामवकाभिश्शर्कराम् (प्रीणामि)। काठ ५३, १॥ [°का- अग्नि- ३०१; ३७५; अप्- २३;२८;२९;८७ द्र.]।

**अवकाश**–

१. प्राणा (+वा [कौ., माश १४,१, ४, १]) अवकाशाः। कौ ८,६; माश १४,१,४,१;३,२,५१।

२. स इन्द्र एतमवकाशमपश्यत्, तेनासुरानभ्यभवत्। मै ४, १, १२।

**अवकीर्णिन्**–

१. कतिधाऽवकीर्णी प्रविशति, चतुर्धेत्याहुर्ब्रह्मवादिनो मरुतः प्राणैरिन्द्रं बलेन, बृहस्पतिं ब्रह्मवर्चसेनाग्निमेवेतरेण सर्वेण। तैआ २,१८,१।

२. चतुर्धा ह वा एष प्रविशति योऽवकीर्यते। इन्द्रं बलेन मरुतः प्राणेन, बृहस्पतिं ब्रह्मवर्चसेनाग्निमेवेतरेण सर्वेण। अथाशुक्रः परिशिष्यते। जै १, ३६२।

**अवदान**–

१. तदवदानैरेवाव दयते, तदवदानानामवदानत्वम्। तैसं ६,३,१०,५।

२. स येन देवेभ्य ऋणं जायते। तदेनांस्तदवदयते यद्यजतेऽथ यदग्नौ जुहोति तदेनांस्तदवदयते तस्माद्यत्किञ्चाग्नौ जुह्वति तदवदानं नाम। माश १, ७,२,६।

**अवभृथ**–

१. तद्यदपोऽभ्यवहरन्ति तस्मादवभृथः। माश ४, ४,५,१।

२. ते (गुरुतल्पगब्राह्मणहन्तार एनस्विनः)ऽपोऽभ्यवयन्ति यथाहिस्त्वचो निर्मुच्यत एवं सर्वस्मात्पाप्मनो निर्मुच्यन्ते, तान्न जुगुप्सेयुः, स यावन्तमश्वमेधेनेष्ट्वा लोकं जयति त्रिस्तावन्तं जयति यस्यैवं विदुष एवमेनस्विनोऽवभृथमभ्यवयन्ति। जाबालि (लुसं.) १०७।

३. यो ह वाऽअयमपामावर्तः स हावभृथः स हैष वरुणस्य पुत्रो वा भ्राता वा। माश १२, ९,२,४।

४. वरुणोऽवभृथे (अन्तराक्रियते)। काठ ३४,१६।

५. वरुण्यो वाऽअवभृथः। माश ४, ४,५,१०।

६. समुद्रोऽवभृथः। तै २,१,५,२।

**अवरसधस्थ**– अन्तरिक्ष- १५ द्र.।

**अवरोध**- तेषां चमसानां रसोऽवाङैत्तेऽवरोधा अभवन्नथ य ऊर्ध्वंस्तानि फलानि । ऐ ७, ३१ ।

**अवसान**- प्रतिष्ठा वा अवसानम् । कौ ११,५; गो २,३,११ ।

**अवस्थावन्**-

१. अवस्थावा नामास्युदीची दिक्, तस्यास्ते वरुणोऽधिपतिस्तिरश्चराजिः । तैसं ५,५,१०,१ ।

२. गह्वरोऽवस्थावानो नाम स्थ, तेषां व उत्तराद् गृहा आपो व इषवः । तैसं ५,५,१०,४ ।

**अवस्यु**-

१. अयं वाऽअवस्युरशिमिदो योऽयं (वातः) पवते । माश १४, २, २,५ ।

२. अयं वै (पृथिवी) लोकोऽवस्यूर्दुवस्वान् । माश ९,४, २,७ ।

३. अवस्युरसि दुवस्वान् । मै १,२,१२ ।

**अवस्वत्**- अन्न- १०५ द्र. ।

**अवाची** (दिश्)- अवस्था नामास्यवाची दिक्, तस्यास्ते विष्णुरधिपतिः, कल्माषग्रीवो रक्षिता । मै २,१३,२१ ।

**अवान्तरदिश्**- सर्वत इव हीमा अवान्तरदिशः । माश २, ६,१,११ ।

**अवान्तरदिशा**-

१. अवान्तरदिशाः पर्शवः । तैसं ७,५,२५,१ ।

२. बभ्रुकानवान्तरदिशाभ्यः (आलभते) । मै ३, १४, ७ ।

**अवान्तरदीक्षा**- आत्मानमेव दीक्षया स्पृणोति (पाति [तैसं.]) प्रजामवान्तरदीक्षया । तैसं ६,२, २,७; काठ २४,९; क ३८,२ ।

**अवि**-

१. अथैतदुपा ९ शुपात्रं पुनः प्रयुज्यतेऽविं वा एतत् प्रति । मै ४,८,८ ।

२. ऽविं पशुम् (प्रजापतिः ऽद्भ्यामेवासृजत) । जै १,६९ ।

३. अविर्मल्हा (गलस्तनयुता) सारस्वती । माश ५,५,४, १ ।

४. अविर्वैराजम् (साम) । जै १,३३३; २,३४ ।

५. अविर्वै राथन्तरीं वाचं वदति क्रन्देन । अजा वै बार्हत्यूर्ध्वैवाक्रान्ता सा राथन्तरीं वाचं वदति । जै १,२९४ ।

६. अश्वं चाविं चोत्तरत एतस्यां तद्दिश्येतौ पशू दधाति तस्मादेतस्यां दिश्येतौ पशू भूयिष्ठौ । माश ७,५,२,१५ ।

७. इमामूर्णायुं (अविम्) वरुणस्य मायां, त्वचं पशूनां द्विपदां चतुष्पदाम् । त्वष्टुः प्रजानां प्रथमं जनित्रमग्ने मा हि ९ सीः परमे व्योमन् । तैसं ४,२,१०,३ ।

८. इयं (पृथिवी) वाऽअविरियं ९ हीमाः सर्वाः प्रजा अवति । माश ६,१,२,३३ ।

९. तस्मादु सह सतोऽजाविकस्योभयस्यैवाजाः पूर्वा यन्त्यनूच्योऽवयः । माश ४,५,५,४ ।

१०. नासिकाभ्यामेवास्य (इन्द्रस्य) वीर्यमस्रवत् । सोऽविः पशुरभवन्मेषः । माश १२, ७,१,३ ।

११. पूष्णेऽविम् (दक्षिणां दद्यात्) । तैआ ३,१०,३ ।

१२. यत् प्रथमं तमोऽपाघ्नन् (देवाः) साविः कृष्णाभवद्, यद् द्वितीय ँ सा लोहिनी, यत् तृतीय ँ सा बलक्षी (+यदध्यस्तादपाकृन्तत्साविर्वशाभवत् [मै २,५,२]) । मै ४, ५, ७ ।

१३. वारुणी च हि त्वाष्ट्री चाविः । माश ७,५,२,२० ।

१४. श्रोत्रादविम् (प्रजापतिर्निरमिमीत) । माश ७ ५,२,६ ।

१५. श्वेतो लोमशस्तदवीनां रूपम् । जै २, ३७१ ॥ [°वि- अजा- ४१; अजावि- २; अन्तर्यामपात्र- १ द्र.] ।

अव्यय- सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु । वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् । गो १,१,२६ ।

√अश् (भोजने), >अशन,ना-

१. तस्मै (वृत्राय) ह स्म पूर्वाह्णे देवा अशनमभिहरन्ति मध्यन्दिने मनुष्याऽअपराह्णे पितरः । माश १,६,३,१२ ।

२. तान् (मनुष्यान् प्रजापतिः) अब्रवीत् सायम्प्रातर्वोऽशनं प्रजा वो मृत्युर्वोऽग्निर्वो ज्योतिरिति । माश २,४,२,३ ।

३. प्राणा वा अशनम् । मै ३,६,२ ।

४. मध्यतोऽशनमशितं धिनोति । जै १,७१ ।

५. स यो हैवं विद्वान् सायम्प्रातराशी भवति सर्वं ँ हैवाऽऽयुरेति । माश २,४,२,६ ।

६. सायं प्रातर्वै मनुष्याणां देवहितमशनम् । मै ३, ६, ६ ।

अशना-पिपासा- यस्यै कस्यै च देवतायै हविर्गृह्यते भागिन्यावेवास्याम् (देवतायाम्) अशनापिपासे भवतः । ऐआ २,४,२; ऐउ १,२,५ ।

अशन(,ना)या-

१. अशनया ह वै रथाः । जै १,१२६ ।

२. अशनाया हि मृत्युः । माश १०,६,५,१ ।

३. एको वा अमुष्मिंल्लोके मृत्युः । अशनया मृत्युरेव । तै ३,९,१५,१-२ ।

अशनि-

१. अशनिं मस्तिष्केण (प्रीणामि) । तैसं ५, ७, १२,१; मै ३, १५, २; काठ ५३,२ ।

२. कतम स्तनयित्नुरित्यशनिरिति । माश ११,६,३,९ ।

३. तस्य (अग्नेः) मरुतस्स्तनयित्नुना हृदयमाच्छिन्दन् सा दिव्याशनिरभवत् । काठ ८,२ ।

४. 'दिदिवः पाही'ति हरित ँ रुक्ममुपरिष्टादध्यूहते, दिव्याया एवैनम् (यजमानम्) अशन्या योयाव । मै ४,४,४ ।

५. यदशनिरिन्द्रस्तेन न ह वा एनमशनिर्हिनस्ति नास्य प्रजां नास्य पशून्'''य एवं वेद, तस्य व्रतं सत्यमेव वदेद्धिरण्यं च बिभृयादिति । कौ ६,९ ।

६. विद्युद्वाऽअशनिः । माश ६,१,३,१४ ॥ [°नि- अग्निरूप-; अप्- २०३ द्र.] ।

अशया- रोचनो (लोकः) यस्मिनशया । जै १,३३४ ।

**अशस्ति-** पाप्मा वा अशस्तिः । माश ६,३,२, ७ ।

**अशित-** अप्- ४१ द्र. ।

**आशित-** नात्याशितेन भवितव्यम् । मै ३,६,२ ।

**अशिमिद्-** अवस्यु- १ द्र. ।

**अशीति-**

१. अशितिभिर्वै देवा इमान् लोकानिमानध्वन आप्नुवत तदशीतीनामशीतित्वम् । जै २, २४।

२. तद् (रौहिणकं साम) वा अशीतिभिस्संपन्नम् । आशयन्त्येवैनमेतेन । जै २,१४ ।
[°ति- अन्न- ७३; ७४ द्र.] ।

**अश्मन्-**

१. अथ यदश्रु संक्षरितमासीत्सोऽश्मा पृश्निरभवदश्रुर्ह वै तमश्मेत्याचक्षते परोऽक्षम् । माश ६, १,२,३ ।

२. अश्मा जागतम् (छन्दः) । शांआ ११,७ ।

३. असौ वाऽआदित्योऽश्मा पृश्निः । माश ९,२,३,१४ ।

४. तस्य (वृत्रस्य) एतच्छरीरं यद्गिरयो यदश्मानः । माश ३,४,३,१३; ९,४,२; ४,२,५,१५ ।

५. शर्कराया अश्मानं (असृजत) तस्माच्छर्कराश्मैवान्ततो भवति । माश ६,१,३,५ ।

६. स्थिरो वाऽअश्मा । माश ९,१,२,५ ।

**अश्रु-** अश्रुभिः प्रुष्वाम् (प्रीणामि) । काठ ५३,१० (तु. मै ३,१५,८; अश्मन्- १; अश्व- २;७) ।

**अश्व-**

१. अग्निर्वा अश्वः श्वेतः । माश ३,६,२,५ (तु. माश ६,३,३,२२) ।

२. अथ यदश्रु संक्षरितमासीत्सोऽश्रुरभवदश्रुर्ह वै तमश्व इत्याचक्षते परोऽक्षम् । माश ६,१,१,११ ।

३. अथ योऽसौ (सूर्यः) तपती९३ एषोऽश्वः श्वेतो रूपं कृत्वाऽश्वाभिधान्यपिहितेनात्मना प्रतिचक्राम । ऐ ६, ३५ ।

४. अथैतद् ऋतुपात्रं पुनः प्रयुज्यतेऽश्वं वा एतत् प्रति । मै ४,८,८ ।

५. अन्तो वा अश्वः पशूनाम् । तां २१,४,६ ।

६. अपूतो वाऽएषोऽमेध्यो यदश्वः । माश १३,१,१,१ ।

७. अश्रुण्येव (प्रजापतेः) अश्वोऽजायत । काठसंक १७:७ ।

८. अश्व इव वै प्रजापतिरासीत् । काठ २४,८; क ३८,१ ।

९. अश्वः पशूनां स्विषिमान् हरस्वितमः । तै ३,८,७,३ ।

१०. अश्वः पशूनां यशस्वितमः (°नामपचिततमः [तै.]) । तै ३,८,७,२; माश १३,१,२,८ ।

११. अश्वः पशूनामन्नादो वीर्य्यावत्तमः । तै ३,८,७,१ ।

१२. अश्वः पशूनामाशुः सारसारितमः । तै ३,८,७,२ ।

१३. अश्वः पशूनामोजिष्ठो बलिष्ठः । तै ३,८,७,१ ।

१४. अश्वः प्रस्तोतुः प्राजापत्यः । मै ४,४,८ ।

१५. अश्वमालभते···श्रीर्वा एकशफम् । श्रियमेवावरुन्धे । तै ३,९,८,२ ।

१६. अश्वं पशुम् (प्रजापतिर्बाहुभ्यामेवोरसोऽसृजत)। जै १,६८।
१७. अश्वं प्रस्तोतृ-प्रतिहर्तृभ्याम् (ददाति)। तै १,८,२,३।
१८. अश्वश्चतुस्त्रिं ९ शः (°शो दक्षिणानाम् [तां.])। तां १७, ११,३; तै २,७,१,३।
१९. अश्वस्त्रिभिस्तिष्ठ ९ स्तिष्ठति ... सर्वा ९ श्चतुरः पदः प्रतिदधत् पलायते। तैसं ५,४,१२,१।
२०. अश्वस्य वा आलब्धस्य रेत उदक्रामत्। तत्सुवर्ण ९ हिरण्यमभवत्। तै ३,८,२,४; माश १३,१,१,३।
२१. अश्वस्स्व ९ शकृदुपजिघ्रति कच्चिदर्षिं चाग्निं च न निरास्था ३ मिति। काठ ८, ५।
२२. अश्वेन वै देवा अग्रे विजिति ९ व्यजयन्त। मै ३, १, ३।
२३. अश्वे वै सर्वा देवता अन्वायत्ताः। तै ३,८,७,३।
२४. अश्वो न देववाहन इति। अश्वो ह वाऽएष (अग्निः) भूत्वा देवेभ्यो यज्ञं वहति। माश १,४,१,३०।
२५. अश्वो बृहत्। जै १,३३३; २,३४।
२६. अश्वो मनुष्यान् (अवहत्)। तैसं ७,५,२५,३; माश १०,६,४,१।
२७. अश्वो मैत्रस्य (+ दक्षिणा [मै.])। मै २,६,६; काठ १५,५।
२८. अश्वो वै बृहद्वयः। तै ३,९,५,३; माश १३,२,६,१५।
२९. अश्वोस्यत्योसि मयोसि हयोसि वाज्यसि सप्तिरस्यर्वासि वृषासि। तां १,७,१।
३०. असौ वा आदित्योऽश्वः [°त्य एषोऽ(शुक्रः)श्वः [माश.]]। तै ३,९,२३,२; माश ७,३,२,१०।
३१. आनुष्टुभो (इन्द्रो [कौ.]) वाऽअश्वः। कौ १५,४; माश १३. २, २, १९।
३२. आशुः सप्तिरित्याह। अश्व एव जवं दधाति। तस्मात्पुराशुरश्वोऽजायत। तै ३,८,१३,२।
३३. इयं (पृथिवी) वै मनोरश्वा भूरिपुत्रा। तैआ ५,४,८।
३४. ईश्वरो वा अश्वः प्रमुक्तः परां परावतं गन्तोः। तै ३,८,९,३; १२,२; ९,१३,२।
३५. एतेन (अश्वेन) वै देवा असुरानुत्तममभ्यभवन्। क २९.८।
३६. एतेभ्य (अङ्गिरोभ्यः) एतमादित्या आदित्यमेवाश्वं श्वेतं भूतम् ... आनयन्। जै ३,१८८।
३७. एष खलु वै स्तोमो यदश्वः। मै १,६,४।
३८. एष वा अश्वो मेध्यो य एष (आदित्यः) तपति। काश ३,१,८,१;३।
३९. एष वा अश्वो मेध्यो ... ... यच्चन्द्रमाः। काश ३,१,८,१।
४०. क्षत्रं वा ऽअन्वश्वः। माश ६,४,४,१२।
४१. क्षत्रं वाऽ अश्वो विडितरे पशवः। माश १३,२,२,१५।
४२. चक्षुषाश्वम् ( प्रजापतिर्निरमिमीत )। माश ७,५,२,६।
४३. चतुष्कपाला (वारुणाः पुरोडाशाः) भवन्ति, चतुष्पाद्धयश्वः। तैसं २,३,१२,२।
४४. जागतोऽश्वः प्राजापत्यः। तै ३,८,८,४।
४५. तं (अश्वम्) यमाय ब्रह्मणेऽददात्। माश ४,३,४,२७।
४६. तस्मा ( आयास्यायोद्गात्रे ) अमुमादित्यमश्व ९ श्वेतं कृत्वा ( आदित्याः ) दक्षिणामानयन्। तां १६,१२,४।
४७. तस्मादश्व उभयादन्ननन्तर्हितो हि पुरुषादसृज्यत। मै १,८,१।
४८. तस्मादश्वः पशूनां वीर्यवत्तमः (जविष्ठः [ऐ.])। ऐ ५,१; माश १३,१,२,५।
४९. तस्मादश्वः पशूनामाशिष्ठः (°नामोजस्वितमः [माश १३,१,२,६])। माश १३,१,२,७।

५०. तस्मादश्वः शुक्ल उदुष्टमुख इवाथो ह दुरक्षो भावुकः । माश ७,३,२,१४ ।

५१. तस्मादश्वस्त्रिभिः (पद्भिः) तिष्ठंस्तिष्ठत्यथ युक्तः सर्वैः पदैः सममायुते । माश १३,२,७,६।

५२. तस्मादश्वः सर्वेषां पशूना ९ श्रैष्ठ्यं गच्छति । तै ३,८,९,१ ।

५३. तस्मादु हैतदश्वः पशूनां भगितमः । माश ६,३,३,१२ ।

५४. तस्य (अश्वस्य श्वेतस्य) रुक्मः पुरस्ताद्भवति । तदेतस्य रूपं क्रियते य एष (आदित्यः) तपति । माश ३,५,१,२० ।

५५. तस्य (सौर्यस्य हविषः) अश्वः श्वेतो दक्षिणा । तदेतस्य रूपं क्रियते य एष (सूर्यः) तपति यद्यश्व ९ श्वेतं न विन्देदपि गौरेव श्वेतः स्यात् । माश २,६,३,९ ।

५६. तान् (असुरान् देवाः) अश्वा भूत्वा पद्भिरपाघ्नत यदश्वा भूत्वा पद्भिरपाघ्नत तदश्वानामश्वत्वमश्नुते यद्यत्कामयते य एवं वेद । ऐ ५,१ ।

५७. तेऽङ्गिरस आदित्येभ्य अमुमादित्यमश्व ९ श्वेतं भूतं दक्षिणामनयन् । तै ३,९, २१,१ ।

५८. ते ऽब्रुवन् (आदित्याः) । यं ( अश्वम् ) नोऽनेष्ट सवर्योऽभूदिति । तस्मादश्व ९ सवर्येत्याह्वयन्ति । तै ३,९,२१,१ ।

५९. ते (आदित्याः) ऽश्वं श्वेतं दक्षिणां निन्युरेतमेव य एष (सूर्यः) तपति । कौ ३०, ६ ।

६०. न वा उ एतन्म्रियसे न रिष्यसि, देवाँ इदेषि पथिभिस्सुगेभिः··· । काठ ४६,५ ।

६१. न वै मनुष्यः स्वर्गं लोकमञ्जसा वेदाश्वो वै स्वर्गं लोकमञ्जसा वेद । माश १३, २, ३,१।

६२. परमा वा एषा दक्षिणा यदश्वः । काठ ८,५ ।

६३. परमोऽश्वः पशूनाम् । तैसं ५,४,१२,१; माश १३,३,३,१ ।

६४. प्रजापतिः प्रजाः सृष्ट्वा रिरिचानोऽमन्यत, सोऽश्वो भूत्वा संवत्सरं न्यङ् भूम्या ९ शिरः प्रतिनिधायातिष्ठत् तस्याश्वथो मूर्ध्न उदभिनत् । मै १,६,१२ ।

६५. प्रजापतेर् (+ वा [तां.]) अक्ष्यश्वयत्तत्परापतत्तदश्वोऽभवत्तदश्वस्याश्वत्वम् (+ तद्देवा अश्वमेधेन प्रत्यदधुः [तां.]) । तैसं ५,३, १२,१; तां २१,४,२; तै १,१,५,४ ।

६६. प्रजापतेर्वै चक्षुरश्वयत्, तस्य यः श्वयथा आसीत् सोऽश्वोऽभवत् । मै १,६,४ ।

६७. प्राजापत्यो (यजमानो [तै ३,९,१७,४; ५]) वा अश्वः । तैसं ३,२, ६, ३; ५,१,७,१; मै ४,४,८;८,३; काठ ८,५; तै ३,८,२२,३; ९,१६,१;१७,४; ५; माश ६,५,३,९; तैआ ५,३,५।

६८. प्राजापत्योऽश्वः । तैसं ५,१,२,२; मै २,३,३; ३,१,३; ७,९; ४,१, २; काठ २२, ८; क ४७, १; तै १,१,५,५; ३,२,२,१; माश १३,१,१,१ ।

६९. यदश्वं ददाति···प्रजापतेरेव तेन प्रियं धामोपैत्यथो अमुष्यादित्यस्य लोकं जयति । मै ४,८,३ ।

७०. यदश्वं ददाति सूर्यभ्राजमेवैनं (दातारं) करोति । काठ २८, ५; क ४४,५ ।

७१. यदश्वेन यन्ति रक्षसामतीत्यै । काठ १९,२; क २९,८ ।

७२. यद्वै तदश्रु संक्षरितमासीदेष सोऽश्वः । माश ६,३,१,२८ ।

७३. यमायाश्वम् (+ अनयन् [मै.]) । मै १,९,४; काठ ९,९ ।

७४. ययुर्नामासीत्याह । एतद्वा अश्वस्य प्रियं नामधेयम् । तै ३,८,९,२ ।

७५. यस्मात्प्रजापतिरालब्धोऽश्वोऽभवत्तस्मादश्वो नाम । तै ३,९,२१,४;२२,१;२ ।

७६. योऽश्वं प्रतिगृह्णीयात् स एतेन वारुणेन हविषा यजेत निर्वरुणत्वाय, चतुष्कपालो भवति चतुष्पाद् वा अश्वः । काठ १२, ६ ।
७७. रथोऽश्वैः प्रजापतये समनमद् , भूतेभ्यः समनमत् । तैसं ७,५,२३,२ ।
७८. रश्मिना वा अश्वो यत ईश्वरो वा अश्वोऽयतो (+ऽधृतो [माश.]) ऽप्रतिष्ठितः परां परावतं गन्तोर्यत् पार्थुरश्मं ब्रह्मसामं (°साम [माश.]) भवत्यश्वस्य यत्यै (श्वस्यैव [माश.]) धृत्यै । तैसं ५,४,१२,३; माश १३,३,३,५ ।
७९. वज्री वा अश्वः प्राजापत्यः । क ३०,१; तै ३,८,४,२ ।
८०. वज्री वा एषः (+ प्राजापत्यो [मै.]) यदश्वः । मै ३,१,३; तै १,१,५,५ ।
८१. वज्रोऽश्वः (वाऽश्वः [माश ४,३,४,२७;६,३,३,१२]) । माश १३,१,२,९ ।
८२. वज्र्यश्वः । तैसं ५,१,२,३; काठ १९,२ ।
८३. वरुणायाश्वम् (दक्षिणां दद्यात्) । तैआ ३,१०,२ ।
८४. वरुणो ? (वारुणो) वा अश्वो वरुणदेवत्यः । मै २,३, ३ ।
८५. वरुणो ह वै सोमस्य राज्ञोऽभीवाक्षि प्रतिपिपेष तदश्वयत्ततोऽश्वः समभवत्तद्यच्छ्वयथा-त्समभवत्तस्मादश्वो नाम । माश ४, २,१,११ ।
८६. वाजिनो (वारुणा [काठ., क.]) ह्यश्वाः । काठ २८,४; क ४४,४; माश ५,१,४,१५ ।
८७. वाजी (भूत्वाऽश्वः) गन्धर्वान् (अवहत्) । तैसं ७,५,२५,२; माश १०, ६,४,१ ।
८८. वारुणं यवमयं चरुम् (निर्वपति), अश्वो दक्षिणाम् । तैसं १,८,८,२ ।
८९. वारुणमश्वम् (प्रजापतिरालिप्सत) । माश ६,२,१,५ ।
९०. वारुणो वा अश्वः । तै २,२,५,३; ३,८,२०,३;९,१६,१ ।
९१. वारुणो हि देवतयाऽश्वः । तै १,७,२,६ ।
९२. विभूर्मात्रा प्रभूः पित्राऽश्वोऽसि हयोऽस्यत्योऽसि नरोऽस्यर्वाऽसि सप्तिरसि वाज्यसि वृषाऽसि नृमणा असि ययुर्नामासि । तैसं ७,१,१२,१ ।
९३. विराट् छन्दस्तदश्वो वरुणो देवता । मै २,१३,१४ ।
९४. वीर्यं (वृषा [तैसं.] वा अश्वः । तैसं २,४,९,४; माश २,१,४,२३;२४ ।
९५. वृषा (वारुणो [माश.]) ह्यश्वः । मै २,४,८; काठ ११,१०; माश ७,५,२,१८ ।
९६. वैश्वदेवो (सौर्यो [गो.]) वा अश्वः । गो २, ३,१९; तै ३,९,२,४;११,१; माश १३,२,५,४ ।
९७. समुद्र एवास्य (अश्वस्य मेध्यस्य) बन्धुः समुद्रो योनिः । माश १०,६,४,१ ।
९८. समुद्रो वा अश्वस्य योनिः समुद्रो (बन्धुः) । तैसं ७,५,२५, ३ ।
९९. स (?) वारुणो यदश्वः । माश ५,३,१,५ ।
१००. सूरादश्वं वसवो निरतष्ट । काठ ४०, ६ ।
१०१. सूर्यस्य वा एतदध्वानं यन्ति यदश्वं प्राञ्चं च प्रत्यञ्चं चाक्रमयन्ति । काठ २०,५ ।
१०२. सोऽग्निरश्वो भूत्वा प्रथमः प्रजिगाय । गो २,४, ११ ।
१०३. सोमो वै वृष्णो अश्वस्य रेतः । तै ३,९,५, ५ ।
१०४. स्तोमादश्वस्सम्भूतः । काठ ८,५ ॥ [°श्व- अग्नि- ४४;५०;२०८; ४६६; अत्य-; अप्- १९; ४५; अप्सुजा- १; ३; अर्वन्- २; अवि- ६ द्र.],।

अश्वतर-

१. अश्वतरो न प्र जायत आत्तरेता हि । तैसं ७,१,१,३ ।

२. अश्वतरो बर्हिषि न देयः । अति ग़ुप्लवताप लकामत । आत्तरेता ह्यप्रजा हि षोडशिनस्स्तोत्रे देयः । जै १,६७ ।

३. ये (पशवः) दह्यमानादसृज्यन्त तेऽश्वतराश्च कृष्णाश्च । जै ३, २६३ ।

अश्वतरगर्दभ- निर्ऋत्या अश्वतरगर्दभौ । तैआ ३, १०, ३ ।

अश्वतरी- अश्वतरीरथेनाग्निराजिमधावत्तासां प्राजमानो योनिमकूल्यत्तस्मात्ता न विजायन्ते । ऐ ४,९ ।

अश्वमेध-

१. अन्तोऽश्वमेधः । मै २,२,९ ।

२. अश्वमेधे सर्वा देवता अन्वायत्ताः । माश १३,१,२,९ ।

३. असावश्वो मेधो मेध्य इत्यादित्यम् (उपदिशन्) । जै १, २५ ।

४. असावादित्योऽश्वमेधः । तैसं ५,७,५,३; माश ९,४,२,१८ ।

५. असौ वाऽआदित्य एकवि९ शः सोऽश्वमेधः । माश १३,५,१,५ ।

६. उत्सन्नयज्ञो वा एष यदश्वमेधः कस्तद्वेदेत्याहुर्यदि सर्वो वा क्रियते, न वा सर्व इति, यत्संकृत्यच्छावाकसामं भवत्यश्वस्य सर्वत्वाय पर्याप्त्या अनन्तरायाय । तैसं ५,४,१२,३ ।

७. ऋषभ एष यज्ञानां यदश्वमेधः । तै ३,८,३,३ ।

८. एष एवाश्वमेधो यच्चन्द्रमाः । माश ११,२,५, १ ।

९. एष (अश्वमेधः) वा अतिव्याधी नाम यज्ञः । तै ३, ९,१९, २ ।

१०. एष वाऽअश्वमेधो य एष (सूर्यः) तपति । माश १०,६,५,८ ।

११. एष (अश्वमेधः) वा ऊर्जस्वान् (पयस्वान्, प्रभूर्, विभूर्) नाम यज्ञः । तै ३,९,१९,१ ।

१२. एष (अश्वमेधः) वै तेजस्वी (क्लृप्तो, दीर्घो, ब्रह्मवर्चसी) नाम यज्ञः । तै ३,९,१९,३ ।

१३. एष (अश्वमेधः) वै प्रतिष्ठितो (विधृतो, व्यावृत्तो) नाम यज्ञः । तै ३,९,१९,२ ।

१४. ततोऽश्वः समभवद्यदश्वत्तन्मेध्यमभूदिति तदेवाश्वमेधस्याश्वमेधत्वम् । माश १०,६,५,७ ।

१५. तद् (प्रजापतेरक्षि) देवा अश्वमेधेन ( + एव [तैसं.] ) प्रत्यदधुरेष वाव ( वै [तैसं.]) प्रजापतिं सर्वं करोति योऽश्वमेधेन यजते । तैसं ५,३,१२,१; तां २१,४,२ ।

१६. तरति सर्वं पाप्मानं तरति ब्रह्महत्यां योऽश्वमेधेन यजते । माश १३,३,१,१ ।

१७. तेजसा वा एष ब्रह्मवर्चसेन व्यृध्यते । योऽश्वमेधेन यजते । तै ३,९,५,१ ।

१८. निरायत्याश्वस्य शिश्नं महिष्युपस्थे निधत्ते वृषा वाजी रेतोधा रेतो दधात्विति । माश १३,५,२,२ ।

१९. प्रजापतिरश्वमेधः । माश १३,२,२,१३; ४,१,१५ ।

२०. प्राणश्च मेऽश्वमेधश्च मे (यज्ञेन कल्पताम् ) । तैसं ४,७,९,१ ।

२१. यजमानो वाऽअश्वमेधः । माश १३,२,२,१ ।

२२. योऽश्वमेधेन यजते देवानामेवायनेनैति । तै ३,९,२२,३ ।

२३. राजा वाऽएष यज्ञानां यदश्वमेधः। माश १३,२,२,१।
२४. राष्ट्रं वा अश्वमेधः (राष्ट्रमश्व° [माश १३, २,२,१६])। तै ३,८,९,४; माश १३,१,६,३।
२५. वृषभ एष यज्ञानां यदश्वमेधः। माश १३,१,२,२।
२६. श्रीर्वै राष्ट्रमश्वमेधः। तै ३,९,७,१; माश १३,२,९,२।
२७. सर्वस्य वा एषा प्रायश्चित्तिः, सर्वस्य भेषज ५ सर्वं वा एतेन (अश्वमेधेन) पाप्मानं देवा अतरन्नपि वा एतेन ब्रह्महत्यामतरन्। तैसं ५,३,१२,१।
२८. सर्वस्यैव न वेद यो ब्राह्मणः सन्नश्वमेधस्य न वेद सोऽब्राह्मणः। माश १३,४,२,१७।
२९. स वा एष (अश्वमेधः) वीर्यमेव यज्ञो, यर्हि वा एतेन पुरेजिरे, सर्वमेव वीर्यवदास। जै २,२६६।
३०. सोऽश्वमेधेनेष्ट्वा स्वराडिति नामाधत्त। गो १, ५,८॥ [ °ध- अग्नि- १५४; अग्निहोत्र- २९; ६०; अर्काश्वमेध- १; ३ द. ]।

अश्व-वृष- अश्ववृषेणैकशफाः पशवः। काठ ३५,१५।

अश्व-शक- अश्वशकेन धूपयति। तैसं ५,१,७,१।

अश्व-युज् (नक्षत्र)-

१. अश्वयुजोरयुक्त। तै १ ५, २, ९।
२. अश्वयुजौ नक्षत्रमश्विनौ देवता। तैसं ४,४,१०,३; मै २,१३,२० (तु. काठ ३९,१३)।
३. अश्विनोरश्वयुजौ। तै १,५,१,५; ३,१,२,१०।

अश्व-वाल- यज्ञो ह देवेभ्यो ऽपचक्राम सोऽश्वो भूत्वा पराङावर्तत तस्य देवा अनुहाय वालानभिपेदुस्तानालुलुपुस्तानालुप्य सार्द्धं ५ संन्यासुस्त एता ओषधयः समभवन् यदश्ववालाः। माश ३, ४, १, १७।

अश्व-सूक्त-> आश्वसूक्ति (सामन्)- गौषूक्तिश्चाश्वसूक्तिश्च बहुप्रतिगृह्य गरगिरावमन्येतां तावेते सामनी अपश्यतां ताभ्यां गरन्निरघ्नाताम्। तां १९, ४, १०।

अश्व-स्तोम->अश्वस्तोमीय-

१. अश्वस्य वा आलब्धस्य मेध उदक्रामत्। तदश्वस्तोमीयमभवत्। तै ३, ९, १२, १।
२. अश्वो वा अश्वस्तोमीयम् (मेधोऽश्व° [ तै ३,९,१२,१ ] )। तै ३, ९, १२, ३।

आश्व- अश्वो वै भूत्वा प्रजापतिः प्रजा असृजत स प्राजायत बहुरभवत्प्रजायते बहुर्भवत्याश्वेन तुष्टुवानः। ११,३,५।

अश्वत्थ-

१. अथाश्वत्थं (पात्रं) भवति। तेन वैश्योऽभिषिञ्चति यदेवादोऽश्वत्थे तिष्ठते इन्द्रो मरुत उपामन्त्रयत। माश ५, ३, ५, १४।
२. अश्वत्थेन वनस्पतयः (अन्वाभूयन्त)। काठ ३५,१५।
३. अश्वत्थे वो (ओषधीनाम्) निषदनम्। काठ १६,१३; क २५,४।
४. अश्वत्थो वै वनस्पतीना ५ सपत्नसाहो विजित्यै। तैसं ५, १,१०,२।
५. एष (अश्वत्थः) वै वनस्पतीना ५ सपत्नसाहः। काठ १९,१०; क ३०,८।
६. ततः (अश्वस्य) शकाच्छ्वसी (शकृतःश्वसी) अजायत, तत्पार्श्वान्मध्याच्चाश्वत्थत्पार्श्वान्मध्या-

च्चाश्वसत्तदश्वत्थोऽजायत तस्य वेदो मूलं पर्णानि छन्दांसि। काठसंक १८: १-३।

७. तेजसो वा एष वनस्पतिरजायत यदश्वत्थः। ऐ ७,३२।

८. त्वच एवास्यापचितिरस्रवत्सोऽश्वत्थो वनस्पतिरभवत्। माश १२, ७, १, ९।

९. प्रजापतिर्देवेभ्यो निलायत। अश्वो रूपं कृत्वा। सोऽश्वत्थे संवत्सरमतिष्ठत्। तदश्वत्थस्याश्वत्थत्वम्। तै ३, ८,१२,२।

१०. मरुतां वा एतदोजो यदश्वत्थः। तैसं २, ३, १, ५-६।

११. मारुतो (+ वा [काश.]) ऽश्वत्थः। तैसं ३, ५, ७, २; काश ७, २, ४, ११।

१२. विडश्वत्थः। तैसं ३, ५, ७, ३।

१३. विशो वीर्यमपाक्रामत्, तदश्वत्थं प्राविशत् स तेन वीर्येण भर्भराभवत्। मै २,२, १।

१४. विशो वै वीर्यमपाक्रामत् तदश्वत्थं प्राविशत्, तस्माद्देवोऽष्टतस्सर्वाहा पर्णमेजयंस्तिष्ठति यदश्वत्था भवन्ति। काठ ११, ६।

१५. विष्णुर्देवताश्वत्थो नक्षत्रम्। काठ ३९, १३।

१६. साम्राज्यं वा एतद्वनस्पतीनाम् (यदश्वत्थः)। ऐ ७, ३२; ८,१६॥ [ °त्थ- अग्नि- १३१; ३०९;३७७;६३९; अश्व ६४ द्र. ]।

**आश्वत्थ-** आश्वत्थेन (पात्रेण) वैश्यः (अभिषिञ्चति)। तै १, ७, ८, ७।

**आश्वत्थी-** आश्वत्थ्युपभृत्। तैसं ३,५,७,२।

**अश्विन्-**

१. अथ यदेनं (अग्निम्) द्वाभ्यां बाहुभ्यां द्वाभ्यामरणीभ्यां मन्थन्ति द्वौ वा अश्विनौ तदस्याश्विनं रूपम्। ऐ ३, ४।

२. अश्विना आशिरा (प्रीणामि)। मै १, ९, २; काठ ९, १०।

३. अश्विना उ ह वै देवानां बद्धमुचौ। जै ३, ७२।

४. अश्विना (°नौ [काठ.]) एतस्य देवते (°ता [काठ.]) य आमयावी। मै २, ५,६; काठ १३,७।

५. अश्विनाव॰ साभ्याम् (प्रीणामि)। तैसं ५, ७, १३, १।

६. अश्विनाविव रूपेण (भूयासम्)। मं २, ४, १४।

७. अश्विनावेतस्य देवता य आनुजावरः। क ४६, ६।

८. अश्विनावेतस्य देवता यो दुर्ब्राह्मणः सोमं पिपासति। तैसं २, १, १०, १।

९. अश्विनोस्त्वा तेजसा ब्रह्मवर्चसायाभिषिञ्चामि। मै ३, ११, ८।

१०. अश्विनौ देवता पङ्क्तिश्छन्दोऽश्विनोः पात्रमसि। तैसं ३, १, ६, २।

११. अश्विनौ द्व्यक्षरया (°रेण [तैसं.]) प्राणापाना उदजयताम् (°नावुद° [तैसं.])। तैसं १, ७, ११,१; मै १,११,१०; काठ १४,४।

१२. अश्विनौ पूर्वपादौ······मित्रावरुणावपरपादौ। तैआ २,१९,२।

१३. अश्विनौ वै देवानामनुजावरौ (अत्यन्तनिकृष्टौ)। तैसं २,३,४,२; मै २,५,६; काठ १३, ७; ३०, ३; क ४६, ६।

१४. अश्विनौ वै देवानां भिषजौ। तैसं २,३,११, २-३; मै २,५,६; ३,२,९; ४,१,२; ऐ १,१८; कौ १८, १; गो २, २,६; ५, १०; तै १, ७, ३, ५; तैआ ५, ७, ३।

१५. अश्विनौ (द्यावापृथिवी) व्यात्तम् (विकासितमुखस्थानीये)। तैआ ३, १२, २।
१६. अश्विनौ हि (वै [मै.]) देवानामध्वर्यू। मै ४,५,४; तैआ ५, २, ५।
१७. अश्विनौ ह्यभिषज्यताम्। मै २,४, १; काठ १२, १०।
१८. अश्विभ्यां (+आगोमुग्भ्यां [तैसं.; मै.]) धानाः। तैसं ७, ५,२२, १; मै ३, १५, ११; तै १, ५, ११, ३।
१९. अश्विभ्यां मयूरान् (आलभते)। मै ३, १४, ४।
२०. इन्द्रे हि तौ (अश्विनौ) तानीन्द्रियाणि वीर्याण्याप्त्वाधत्ताम्। मै २, ४, १।
२१. इमे (द्यावापृथिव्यौ) अश्विना। तैसं ५,६,४,१; काठ २२, ६।
२२. इमे ह वै द्यावापृथिवी प्रत्यक्षमश्विनाविमे हीद ँ सर्वमाश्नुवातां पुष्करस्रजावित्यग्निरेवास्यै (पृथिव्यै) पुष्करमादित्योऽमुष्यै (दिवे)। माश ४, १, ५, १६।
२३. गर्दभरथेनाश्विना उदजयताम्। ऐ ४, ९।
२४. छागमश्विभ्या ँ स्वाहा। मै ३, ११, २।
२५. तदश्विना उदजयतां रासभेन। कौ १८, १।
२६. तद्यौ ह वाऽइमौ पुरुषाविवाक्ष्योः। एतावेवाश्विनौ। माश १२, ९, १, १२।
२७. तयोर् (अश्विनोः) या भिषज्या तनूरासीत्तां त्रेधा विन्यदधाताम्, अग्नौ तृतीयं, ब्राह्मणे तृतीयमप्सु तृतीयम्। काठ २७, ४।
२८. तेषाम् (देवानाम्) अश्विनौ प्रथमावधावतान्तावन्ववदन् सह नोऽस्त्विवति। तावब्रूताङ्किं नो ततः स्यादिति यत्कामयेथे इत्यब्रुव ँ स्तावब्रूतामस्मद्देवत्यमिदमुक्थमुच्याता इति तस्मादाश्विनमुच्यते। तां ९, १, ३६।
२९. त्रिबन्धुरेण त्रिवृता रथेन त्रिचक्रेण सुवृता यातमर्वाक्। पिन्वतं गा जिन्वतमर्वतो नो वर्धयतमश्विना वीरमस्मे। काठ १७, १८।
३०. देवस्य त्वा सवितुः प्रसवे। अश्विनोर्बाहुभ्याम्। तै २, ६, ५, २।
३१. देवा असुरैर्विजयमुपयन्तोऽश्विनोः पूषणि सत्यं न्यदधत। मै ४, ४, ९।
३२. नासिके (द्यावापृथिवी वा [काठ.]) अश्विनौ। काठ १३, ५। माश १२, ९, १, १४।
३३. पातं नो अश्विना दिवा, पाहि नक्त ँ सरस्वति। मै ३, ११, ३; काठ ३८, ८।
३४. पुत्रमिव पितरा अश्विनोभेन्द्रावतं काव्यैर्द ँ सनाभिः। काठ १७, १९।
३५. प्रत्यूहताम् (प्रत्यौह° [तैसं., काठ.]) अश्विना मृत्युमस्मात् (+......ता अस्मान् मृत्युं प्रत्यूहतः [मै.])। तैसं ४, १, ७, ४; ५,१,८,६; मै ३, ४, ६; काठ १८, १६।
३६. भद्राश्विना नो भवतां नवेदसा। काठसंक ६१ : १२।
३७. मुख्यौ (अहोरात्रे [मै.]) वाऽश्विनौ (यज्ञस्य)। मै ३,४,४; माश ४, १, ५, १९।
३८. यत्राश्विनोश्छागस्य हविषा प्रिया धामानि। काठ १८, २१।
३९. 'यदश्विना उदजयतामश्विनावाश्नुवातां तस्मादेतदाश्विनमित्याचक्षते। ऐ ४,८।
४०. 'युव ँ सुराममश्विना नमुचावासुरे सचा विपिपाना शुभस्पती इन्द्रं कर्मस्वावतम्' (मा १०, ३३) इत्याश्राव्याहाश्विनौ सरस्वतीमिन्द्र ँ सुत्रामाणं यजेति। माश ५, ५, ४, २५।
४१. श्येताविव ह्यश्विनौ। माश ५, ५, ४, १।

४२. श्रुतसदसि श्रोत्रपाभ्यां ( अश्विभ्याम् ) त्वा······( गृह्णामि )। तैसं ३, २, १०,१।
४३. श्रोत्रे अश्विनौ। माश १२, ९, १, १३।
४४. सङ्ग्रहीतुर्गृहान् परेत्याश्विनं द्विकपालं पुरोडाशं निर्वपति, सयोनी वाऽश्विनौ, सयोनी सव्यष्ठृसारथी, समानं ह्येव रथमधितिष्ठतः। माश ५, ३, १, ८।
४५. सजोषा अश्विना द ँसोभिः···घृतेन स्वाहा। मै २, १२,३; ३,४, ४; काठ २२,५।
४६. सतीनामष्टाकपालोऽश्विभ्याम्। मै २, ६, १३ ॥ [°श्विन्- अंस-; अध्वर्यु- ११; अन्तरिक्ष- ८६; अश्वयुज्- २,३; आध्वर्यव- १ द्र. ]।

आश्विन-

१. आश्विनः ( प्रवर्ग्यः ) पयस्यानीयमाने ( नामाधत्त )। तैआ ५, ११, ४।
२. आश्विनं दुह्यमानम् ( पयः ) ··· वारुणमधिश्रितम्। मै १,८,१०।
३. आश्विनं ( °नो [काठ.] ) द्विकपाल ँ( °लः [ मै., काठ.] ) संग्रहीतुर्गृहे सवात्यौ दक्षिणा। तैसं १, ८, ९, २; मै २, ६, ५; काठ १५, ४।
४. आश्विनं द्विकपालं ( + पुरोडाशं [माश.] ) निर्वपेत् (निर्वपति [माश.]) । तैसं २, ६, ३,६; माश ५, ३, १, ८।
५. आश्विनं धूम्रमालभते ( °मालभेत+यो दुर्ब्राह्मणः सोमं पिपासेत् [ तैसं २, १, १०, १] )। तैसं १, ८, २१, २; तै १, ८, ५, ६।
६. आश्विनमन्वाह तदमुं लोकम् ( दिवम् ) आप्नोति। कौ ११,२; १८, २।
७. आश्विनः ( ग्रहः ) श्रोत्रम्। मै ४, ५, ९।
८. आश्विना अधोरामौ बाह्वोः। मै ३, १३, २।
९. आश्विनो दशमो गृह्यते, व्यानो वा एष गृह्यते, नाभिरेव दशमो (ग्रहः) गृह्यते। मै ४,६,१।
१०. आश्विनो द्विकपालः (पुरोडाशः)। तां २१, १०, २३।
११. इममेव लोकमाश्विनेन ( अवरुन्धे )। माश १२, ८, २, ३२।
१२. कुवलसक्तुभिराश्विन ँ( ग्रहं ) श्रीणाति। मै २, ३, ९; काठ १२, १०।
१३. द्वाभ्यां ह्याश्विनमित्याख्यायते। कौ १८, ५।
१४. धानामाश्विनस्य ( पात्रेऽवदधाति )। काठ २७,५।
१५. यः पश्चात् सोमपीथः स आश्विनाग्रान् ( ग्रहान् गृह्णीत ) पश्चेव ह्येतौ (अश्विनौ) सोमपीथमाश्नुवाताम्। मै ४, ८, ९।
१६. लोपाश (श्रोत्रम् [कौ.] ) आश्विनः। मै ३, १४, १७; कौ १३,५।
१७. लोहित ( अजः ) आश्विनो भवति। माश ५, ५, ४, १।
१८. वसन्तग्रीष्मावेवाश्विनाभ्याम् ( अवरुन्धे )। माश १२, ८, २, ३४।
१९. शुद्धवालस्सर्वशुद्धवालो मणिवालस्त आश्विनाः। मै ३, १३, ४; काठ ४९,३।
२०. श्रोत्रं वा आश्विनः। काठ २७, ५; क ४२, ५।
२१. श्रोत्रं चात्मा चाश्विनः। काठ २७, ५; क ४२, ५; ऐ २, २६।
२२. श्रोत्रं त आश्विनः ( ग्रहः ) पातु। मै ४, ८, ७।
२३. सर्वे आश्विना भवन्ति ( प्रैषाः ) भैषज्याय। माश १२,८,२,१६।

२४. सर्वत आश्विनं परिहारं भक्षयति, तस्मात् सर्वाः दिशः शृणोति । मै ४,६,१ ।
२५. हिङ्कारेणाश्विनः सामन्वान् । मै ४, ६, १ ॥ [ °न- अज- १५; अध्वर्यु- १४ द्र. ] ।

अषाढा-

१. अपां पूर्वाषाढाः ( नक्षत्राणि ) । तै १, ५, १, ४; ३, १, २, ३ ।
२. अषाढा नक्षत्रं, विश्वे देवा देवता ( + उत्तरा [काठ.] ) । तैसं ४,४,१०,२; काठ ३९,१३ ।
३. इयं (पृथिवी) वाऽअषाढा (इष्टका) । माश ६,५,३,१; ७,४,२,३२; ८,५,४,२ ।
४. ग्रीवा अषाढा । माश ७,५,१,३५ ।
५. तऽएते सर्वे प्राणा यदषाढा । माश ७,४,२,३६ ।
६. ताम् ( इष्टकां देवाः ) उपधायासुरान्त्सपत्नान् भ्रातृव्यानस्मात्सर्वस्मादसहन्त यदसहन्त तस्मादषाढा । माश ७,४,२,३३ ।
७. *यन्नासहन्त तदषाढाः* । तै १,५,२, ८ ।
८. वाग् (+ वा [माश ७,४,२,३४; ८,५,४,१]) अषाढा । माश ६.५,३,४; ७,५,१,७ ।
९. विश्वेषां देवानामुत्तराः (अषाढाः) । तै १,५,१,४, ३,१,२,४ ॥ [°ढा- अप्- ५६ द्र.] ।

अष्टन्-

१. अष्टौ भवन्त्येताभिर्वै देवाः सर्वा अष्टीराश्नुवत तथो एवैतद् यजमान (°ना [शांआ.]) एताभिरेव सर्वा अष्टीरश्नुते (°श्नुवते [शांआ.]) । कौ ९,४०; शांआ १,४ ।
२. यदष्टाभिर् (ऋग्भिः) अवारुन्धताष्टाभिराश्नुवत तदष्टानामष्टत्वम् । ऐ १,१२ ।

अष्टका-

१. एषा वै संवत्सरस्य पत्नी यदेकाष्टका । तां ५,९,२ ।
२. पर्वैतत्संवत्सरस्य यदष्टका । माश ६, २, २, २४ ।
३. प्राजापत्यमेतदहर्यदष्टका । माश ६, २,२,२३ ।
४. संवत्सरस्य प्रतिमां यां (एकाष्टकारूपाम् ) त्वा रात्रि यजामहे । मं २,२,१८ ।
५. संवत्सरस्य या पत्नी (एकाष्टकारूपा) सा नो अस्तु सुमङ्गली । मं २,२,१६ ।

अष्ट-रात्र-

१. अष्टरात्रेण वै देवाः सर्वमाश्नुवत । तां २२,११,६ ।
२. एतेन (अष्टरात्रेण) वै देवा देवत्वमगच्छन् देवत्वं गच्छति य एवं वेद । तां २२,११,२-३ ।
३. बृहस्पतिरकामयत ब्रह्मवर्चसी स्यामिति स एतमष्टरात्रमपश्यत्तमाहरत्तेनायजत ततो वै स ब्रह्मवर्चस्यभवद्य एवं विद्वानष्टरात्रेण यजते ब्रह्मवर्चस्येव भवति । अष्टरात्रो भवत्यष्टाक्षरा गायत्री, गायत्री ब्रह्मवर्चसं, गायत्रियैव ब्रह्मवर्चसमव रुन्धे । अष्टरात्रो भवति, चतस्रो वै दिशश्चतस्रोऽवान्तरदिशा दिग्भ्य एव ब्रह्मवर्चसमव रुन्धे । तैसं ७,२,३,१ ।

अष्ट-होतृ- अनाधृष्य- ४ द्र. ।

अष्टाचत्वारिंश (स्तोम)-

१. विड् (अन्तो वा [तां.]) । अष्टाचत्वारिंशः । जै २, २७९; तां ३,१२,२ ।
२. वीवर्तो (वि° [तैसं.]) ऽष्टाचत्वारिंशः । तैसं ४,३,८,१;५,३, ४,५; मै २,८,४ ।

**अष्टादंष्ट्र-**

१. अष्टादंष्ट्रो वैरूपः पशुकामस्तपोऽतप्यत। स एते सामनी अपश्यत्। ताभ्यामस्तुत। स एतामिलामुपैत्। जै १,१९१।

२. अष्टाद९ष्ट्रो वैरूपोऽपुत्रोऽप्रजा अजीर्य्यंत्स इमान् लोकान्विचिच्छिदिवाँ अमन्यत, स एते जरसि सामनी अपश्यत्तयोरप्रयोगादबिभेत् सोऽब्रवीदध्नवद्यो मे सामभ्या९ स्तवाता इति। तां ८,९,२१।

आष्टादंष्ट्र (सामन्)-

१. आष्टादंष्ट्रे ऋद्धिकामः कुर्वीत। जै १,१९१ (तु. तां ८,९,२०)।

२. यदष्टादंष्ट्रो वैरूपोऽपश्यत् तस्मादाष्टादंष्ट्रे इत्याख्यायेते। जै १,१९१।

**अष्टादशन्-** मर्त्तुर्तिरष्टादशः (स्तोमः)। तैसं ४,३,८,१; मै २.८,४; काठ १७,४।

**अष्टादशिन्-** संवत्सरस्य वा एषा प्रतिमा यदष्टादशिनः। द्वादशमासाः पञ्चर्तवः संवत्सरोऽष्टादशः। तै ३, ९, १, १-२।

**अष्ट्रि-** अष्टन्- १ द्र.।

**असत्-**

१. अथ यदसत्सर्क् सा वाक् सोऽपानः। जैउ १, १७, १, २।

२. असद्वाऽइदमग्रऽआसीत् (+ ततो वै सदजायत [तैआ., तैउ.]) | माश ६, १,१,१; तैआ ८, ७, १; तैउ २, ७,१.

३. इदं वा अग्रे नैव किंचनासीत्। न द्यौरासीन्न पृथिवी नान्तरिक्षम्। तदसदेव सन्मनोऽकुरुत स्यामिति। तै २, २, ९, १।

४. तदाहुः किं तदसदासीदित्यृषयो वाव तऽग्रेऽसदासीत्। माश ६, १, १, १।

५. न शूद्रो दुह्यादसतो वा एष सम्भूतोऽसन्त्स्यात्। मै ४, १,३; काठ ३१, २; क ४७,२।

६. मृत्युर्वाऽअसत्। माश १४, ४, १, ३१।

**असमरथ-** तस्य (आदित्यस्य) रथप्रोतश्चासमरथश्च सेनानीग्रामण्याविति वार्षिकौ तावृतू। माश ८, ६, १, १८।

**असम्बाध-** अन्तरिक्ष- १६७ द्र.।

**असि-**

१. असिं वै शास इत्याचक्षते। माश ३, ८, १, ४।

२. वज्रो वाऽअसिः। माश ३, ८, २, १२।

**असित-**

१. अथार्भवः पवमानः। स ह सोऽसित एव स्तोमः। दिश एव ताः। दिशो ह व्युत्क्रामन्ति पाप्मा न सिषाय, न हैनं पाप्मा सिनोति य एवं वेद। जै १, ३१३।

२. असितो धान्वो राजेत्याह तस्यासुरा विशस्तऽइमऽआसतऽइति कुसीदिन उपसमेता भवन्ति तानुपदिशति मायावेदः सोऽयमिति। माश १३, ४, ३, ११।

३. असितो वा एतेन दैवलस्त्रयाणां लोकानां दृष्टिमपश्यत् त्रयाणाङ्कामानामवरुध्या आसितं क्रियते । तां १४, ११, १९ ।
४. मृत्यवेऽसितः ( पशुः ) । मै ३, १४, १८ ।
५. समीची नामासि प्राची दिक्, तस्यास्तेऽग्निरधिपतिरसितो रक्षिता । तैसं ५,५,१०,१ ।

असित-ग्रीव- अग्निर्वाऽअसितग्रीवः । माश १३, २, ७, २ ।

आसित- तदेतत्स्वर्ग्यं साम, सर्वानिमान् लोकाननुसञ्चरत्युश्नुते स्वर्गं लोकं य एवं वेद, यद्वसितो दैवलोऽपश्यत् तस्मादासितमित्याख्यायते । जै ३, २७१ ।

असु-

१. असुरात्तः ( सोमः ) । तैसं ४, ४, ९, १ ।
२. असुरिति वा अहमेतं ( प्रतिश्रुत्कारयं पुरुषम् ) उपासे । शांआ ६, १३; कौउ ४, १३ ।
३. असुर्वाव स पृश्निरश्मा । काठ २१, १२ ।
४. तस्या एतस्यै वाचः प्राणा एवाऽसुः । एषु हीदं सर्वमसूतेति । जैउ १, १३, १,७ ।
५. प्रतिश्रुत्कायामसुरिति । शांआ ६, २; कौउ ४, २ ।
६. प्राणो वाऽअसुः । माश ६, ६, २, ६ ।
७. स एषोऽसुः स एष प्राणः । स एष भूतिश्चाभूतिश्च । ऐआ २, १, ८ ॥ [°सु- अन्तरिक्ष- ५० द्र.] ।

असुर-

१. अथ ह तर्हि देवेष्वेव हिरण्यमास, नासुरेषु, संवृक्तं ह देवैरसुराणां हिरण्यमास । जै २, ९९ ।
२. अष्टावसुराणां (सहचरा आसुः) तेषां सेन्द्रो माययाष्टमो भवति वृत्रं जिघांसन् । जै २,१५५ ।
३. असुरः क्रीतः [ क्रीयमाणः ( सोमः [तैसं.])] । तैसं ४, ४, ९,१; काठ ३४,१४ ।
४. असुराणां वा इयम् ( पृथिवी ) अग्र आसीत् । मै ३, ८, १; तै ३, २, ९, ६ ।
५. असुराणां वा इयं पृथिव्यासीत् । मै ४. १, १०; काठ ३१, ८; क ४७, ८ ।
६. असुराणा ९ साम्राकृत्यः, क्षिप्रं बह्वीर्भवन्ति, क्षिप्रं पराभवन्ति । मै ४, २, ९ ।
७. असुराणां ह वा अग्र इमे लोका आसुः । जै ३,११७ ।
८. असुरा वा एषु लोकेष्वास ९ स्तान्देवा ऊर्द्धसद्मनेन ( साम्ना ) एभ्यो लोकेभ्यः प्राणुदन्त । तां ९, २, ११ ।
९. असुरा वै देवान् दक्षिणत उपानयन् । तैसं ६, ६, ४,४ ।
१०. अहर्वै देवा आश्रयन्त रात्रीमसुराः । ऐ ४, ५; गो २, ५, १ ।
११. अहर्वै देवानामासीद्राञ्यसुराणाम् । काठ ७,६; क ५, ५ (तु. तैसं १,५,९,२) ।
१२. उपरिष्टाल्लक्ष्माणं देवा उपादधताऽधस्ताल्लक्ष्माणमसुरास्ततो देवा अभवन्, पराऽसुराः । मै ३, २, ७ ।
१३. उभये वा एते प्रजापतेरध्यसृजन्त । देवाश्चासुराश्च । तै १, ४, १, १ ।
१४. उशना ( +वै [तां.] ) काव्योऽसुराणां पुरोहित ( दूत [तैसं.]) आसीत् । तैसं २, ५, ८, ५; जै १,१२५; तां ७, ५, २० ।
१५. ऋचा वा असुरा आयन् साम्ना देवाः । जै १, १५४

१६. एकाक्षरं वै देवानामवमं छन्द आसीत्सप्ताक्षरं परमन्नवाक्षरमसुराणामवमं छन्द आसीत् पञ्चदशाक्षरं परमम् । तां १२, १३, २७।

१७. एतौ तह्र्यसुराणां ब्राह्मणा आस्तां तृष्टावरुत्री । मै ४, ८, १ ।

१८. कनीयस्विन इव वै [+तर्हि (युद्धसमये) ⌊तां.⌋)] देवा आसन् भूयस्विनोऽसुराः। जै १,१९८; तां १२,१३,३१ ।

१९. कनीयाꣳसि (छन्दांसि) देवेष्वासन्, ज्यायाꣳस्यसुरेषु । मै ४,७,५ ।

२०. कानीयसा एव देवा ज्यायसा असुराः । माश १४, ४, १, १ ।

२१. चातुर्मास्यैर्वै सोऽसुरान् (प्रजापतिः) प्राणुदत, चातुर्मास्यैः प्रजा असृजत। मै १,१०,५।

२२. छन्दोभिर्वै देवा असुरानभ्यभवन् । जै १, ३४२ ।

२३. ततोऽसुरा उभयीरोषधीर्याश्च मनुष्या उपजीवन्ति याश्च पशवः कृत्ययेव त्वद्विषेणेव त्वत्प्रलिलिपुरुतैवं चिद्देवानभिभवेमेति ततो न मनुष्या आशुर्न पशव आलिलिशिरे ता हेमाः प्रजा अनाशकेनोत्पराबभूवुः···ते (देवाः) होचुर्हन्तेदमासामपजिघांसामेति केनेति यज्ञेनैवेति। माश २,४,३,२-३ ।

२४. ततोऽसुरा एषु लोकेषु पुरश्चक्रिरेऽयस्मयीमेवास्मिंल्लोके रजतामन्तरिक्षे हरिणीं (सुवर्णमयीम्) दिवि । माश ३,४,४,३ ।

२५. तद्यत् किञ्चासुराणाꣳ स्वमासीत्, तद्देवा वेद्याविन्दन्त, तद् वेद्या वेदित्वम् । मै ३,८,३।

२६. तस्य (प्रजापतेः) वा असुरेवाजीवत् तेनासुनासुरानसृजत, तदसुराणामसुरत्वम् । मै ४,२,१; तै २,३,८,२ ।

२७. ते देवा अब्रुवन् या एवेमा देवताश्छन्दांसि पुरुषे प्रविष्टा एताभिरेवासुरान् धूर्वामेति। जै १,९८ ।

२८. ते देवा अहरभ्यजयन्नथासुरा रात्रिमभ्युपाधावन् । जै १,१९६ ।

२९. ते देवा एतेन सत्येनाभिगीय ओमिति एतैर्यौधाजयस्य निधनैरसुरान् पाप्मानं भ्रातृव्यानघ्नन्। जै १,३२३ ।

३०. ते देवाः प्रजापतिमेवाभ्ययजन्त । अन्योऽन्यस्यासन्नसुरा अजुहवुः । ···प्रजापतिर्देवानुपावर्तत। गो २,१,७ ।

३१. ते देवाः प्रयाजैरेभ्यो लोकेभ्योऽसुरान् प्राणुदन्त । तैसं २,६,१,३-४ ।

३२. ते देवाश्चक्रमचरञ्छालम् (चक्रव्यतिरिक्तं साधनम्) असुरा आसन् । माश ६,८,१,१ ।

३३. तेभ्यः (असुरेभ्यः प्रजापतिः) तमश्च मायां च प्रददौ । माश २,४,२,५ ।

३४. ते वा असुरा इमानेव लोकान्पुरोऽकुर्वत । ऐ १,२३ ।

३५. ते ऽसुरा ऊर्ध्वं पृष्ठेभ्यो नाऽपश्यन् ते केशानग्रेऽवपन्त। अथ श्मश्रूणि । अथोपपक्षौ। ततस्तेऽवाञ्च आयन् । पराभवन् । यस्यैवं वपन्ति । अवाङेति । तै १,५,६,१ ।

३६. तेऽसुरा भूयाꣳसोऽजितमनस आसन् कनीयाꣳसः पराजितमनस्तरा इव देवाः। काठ १०,१० ।

३७. तेऽसुरा भूयाꣳसो बलीयाꣳस आसन् । तां १८,१,२ ।

३८. तेऽसुरा मनस्वितरा आसन्नमनस्तरा इव देवाः। काठ १२, २।

३९. तेऽसुराः सन्नह्य सहसैवाऽऽचरन् (यज्ञमारब्धवन्तः), ब्रह्मचर्येण तपसैव देवाः, तेऽसुरा अमुह्य९स्ते न प्राजान९स्ते पराऽभवन्, ते न स्वर्गं लोकमायन्। तैआ २,१,१।

४०. त्वमग्ने रुद्रो असुरो महो दिवः। तैसं १,३,१४,१; तै ३, ११,२,१।

४१. दक्षिणतो वै देवानसुरा यज्ञमजयन्। मै १,९,८।

४२. दक्षिणेन हस्तेन (प्रजापतिः) देवानसृजत सव्येनासुरान्। मै १,९,३।

४३. दयध्वमिति न आत्थेति (असुराः प्रजापतिमब्रुवन्)। माश १४,८,२,४।

४४. दिवा देवानसृजत (प्रजापतिः) नक्तमसुरा९स्ते देवाः शुक्ला अभवन् कृष्णा असुराः ... ते देवाः सत्यमभवन्ननृतमसुराः। मै १,९,३।

४५. देवाः पितरो मनुष्यास्तेऽन्यत आसन्, असुरा रक्षांसि पिशाचा (°चास्ते [काठ.]) अन्यतः। काठ १०,७; जै १,१५४।

४६. देवा वै यद् यज्ञेऽकुर्वत, तदसुराऽकुर्वत। तैसं २, ५, ४, १।

४७. देवाश्च वा असुराश्च प्रजापतेर्द्वयाः पुत्रा आसन्। तां १८, १, २।

४८. देवाश्च वा असुराश्च संयत्ता आसन्, यान् देवानामघ्न९स्तदेव तेऽभवन्, यानसुराणां (अघ्नन्) पुनस्त उत्पत्यायुध्यन्त। काठ १०, ७।

४९. देवाश्च वा असुराश्च समावदेव यज्ञेऽकुर्वत। यदेव देवा अकुर्वत तदसुरा अकुर्वत। काठ २०, ६; क ३१, ८ (तु. काठ ९,१५)।

५०. देवाश्च वा असुराश्चास्पर्धन्त, ते देवाः प्रजापतिमेवाभ्ययजन्तान्योऽन्यस्यासन्नसुरा अजुहवुः। काठ ८, १३; क ८, १।

५१. दैव्योऽसुराणाम् (दूत आसीत्)। तैसं २, ५, ११, ८।

५२. नानारूपा असुराः। जै १, २७८।

५३. प्रउगचिता (पञ्चहोत्रा [काठ ९,१४]) वै देवा असुरान् प्राणुदन्त। काठ ९, १४; २१, ४; क ३१,१९।

५४. प्राचो वै देवान् प्रजापतिरसृजतापाचोऽसुरान्। काठ ८, ४; क ६, ९।

५५. प्रातश्च सायं चासुराणां (व्रतम्), निर्मेध्यं क्षुधो रूपं, ततस्ते पराऽभवन्। तैसं ६,२,५,४।

५६. प्रातस्सायन्तनं तान् (असुरान्, देवाः) उपसद्भिरेवैभ्यो लोकेभ्यो नुदमाना आय९स्ततो देवा अभवन्, पराऽसुरा अभवन्, सर्वेभ्य एवैभ्यो लोकेभ्यो भ्रातृव्यं नुदमान एति, य एवं विद्वानुपसद उपैति। काठ २४, १०।

५७. मनो वा असुरम्। तद्धयसुषु रमते। जैउ ३, ६, ७, ३।

५८. मायेत्यसुराः (उपासते)। माश १०, ५, २, २०।

५९. यज्ञेनासुरानपानुदन्त। तैआ १०, ६३, १।

६०. यज्ञोऽसुरेषु विदद्वसुः। तां ८, ३, ३।

६१. यदसुराणां (कर्माऽऽसीत्) न तदार्ध्यत। तैसं ३, ४, ६, १।

६२. यद्दिवा देवानसृजत तद्देवानां देवत्वं यदसूर्य्यं तदसुराणामसुरत्वम्। ष ४, १।
६३. या विप्रुषो वि परापतन् ताभ्यो ऽसुरा रक्षा ॅसि पिशाचाश्चोदतिष्ठन्। तस्मात्ते पराभवन्। विप्रुड्भ्यो हि ते समभवन्। तैआ १, २३, ७।
६४. योऽपक्षीयते तम् (अर्धमासम्) असुराः (उपायन्)। माश १,७,२, २२।
६५. यो ब्राह्मणो वा वैश्यो वा पुष्टोऽसुर इव स्यात् तस्य गृहाद् (दक्षिणाग्निम्) आहरेत् काठ ८, १२; क ७, ७।
६६. रथन्तरेण वै देवा असुरान् संविच्य बृहता जालेनेवाभिन्यौब्जन्। जै १, १३५।
६७. रात्र्या ऽसुरान् (असृजत), ते कृष्णा अभवन्। काठ ९, ११।
६८. विश्वरूपो वै त्वाष्ट्रः पुरोहितो देवानामासीत् स्वस्रीयो ऽसुराणाम्। तैसं २,५,१,१।
६९. विष्णुमुखा वै देवा असुरानेभ्यो लोकेभ्यः प्रणुद्य स्वर्गं लोकमायन्। मै १, ४, ७।
७०. स (प्रजापतिः) आस्येनैव देवानसृजत ··· तस्मै ससृजानाय दिवेवास। ··· अथ योऽयमवाङ् प्राणः, तेनासुरानसृजत। ··· तस्मै ससृजानाय तम इवास। माश ११, १, ६, ७-८।
७१. स (प्रजापतिः) तान् वरुणेनासुरान् ग्राहयित्वा विष्णुना यज्ञेन प्राणुदत। काठ १३, ४।
७२. स यो (अर्धमासः) देवानामासीत्; स यवाऽयुवत हि तेन देवा, यो ऽसुराणा ॅ सोऽयवा न हि तेनासुरा अयुवत। अथो इतरथाहुर्य एव देवानामासीत् सो ऽयवा न हि तमसुरा अयुवत योऽसुराणा ॅ स यवा ऽयुवत हि तं देवाः। माश १, ७, २, २५-२६।
७३. सव्य ॅ हस्तमन्वसुरान् (असृजत), ते मृद्धा अभवन्। काठ ९,११।
७४. स (इन्द्रः) ह तैरेवास्थिभिर्नवनवतीर्जघनासुराणाम्। जै ३,६५।
७५. सहरक्षा (अग्निः) असुराणाम्। तैसं २, ५, ८, ६।
७६. स (प्रजापतिः) होवाचास्विन्न वत मेऽराधीति। तस्मादसुरा नाम। काश ३, १, १२, ८।
७७. सो···ऽकामयत (प्रजापतिः) प्रजायेयेति। स तपो ऽतप्यत। सो ऽन्तर्वानभवत्। स जघनादसुरानसृजत ··· स मुखाद्देवानसृजत। तै २, २,९,५;८।
७८. सोऽसुरानसृजत (प्रजापतिः)। तदस्याप्रियमासीत्। तद् दुर्वर्ण ॅ हिरण्यमभवत् ··· (तदनु) स देवानसृजत। तै २,२,४,४-५।
७९. सोऽसुरान् (प्रजापतिः) ब्रह्मणापानुदताग्निर्ब्रह्म। काठ ८, ४।
८०. स्तोमपुरोगवा वै देवा असुरानभ्यजयन्। मै १, ६, ४।
८१. स्तोमपुरोगा वै देवा एभ्यो लोकेभ्योऽसुरान् प्राणुदन्त। काठ ८, ५।
८२. स्वेष्वेवास्येषु जुह्वतश्चेरुः (असुराः)। माश ११, १, ८, १॥ [°र- अग्नि- ५१५; ६२७; अनुष्टुभ्- ३९; अनृत- १३; अन्तर्याम- ६; अपरपक्ष- ४; अभूति- १;२; अयस्पात्र-; अयस्मय-; अर्धमास- १३; अर्वन्- १; अर्वाग्वसु- ३; अवकाश-२; असित- २ द्र.]।

**असुर-ब्रह्म-** त्वष्टावरूत्री आस्तामसुरब्रह्मौ। काठ ३०, १; क ४६, ४।

**असुर-माया-** तम् (इन्द्रम्) अह्णादसुरमायया(आसुरी)। कौ २३,४।

**असुर-रक्षस्->०स-** तस्य (मनोर्ऋषभस्य) ह स्म श्वसथाद्रवथादसुररक्षसानि मृद्यमानानि

यन्ति। माश १, १,४,१४ (तु. ऐ २,११; कौ १०,२; गो २,३,२३)।

असुर-हन्-> असुरघ्नी- मनोर्वै श्रद्धादेवस्य यजमानास्यासुरघ्नी वाग्यज्ञायुधानि प्रविष्टाऽऽसीत् तेषां यावन्तोऽसुरा उपाशृण्वँस्ते पराभवन् (···°ष्टासीत् तस्या वदन्त्या यावन्तोऽसुरा उपश्रृण्वँस्तावन्तस्तदहर्नाभवन् [मै.])। मै ४, १,६; काठ ३१, ४।

असुरी- असुर्यो वा एता यदोषधयः। मै १, ६, ३।

असुर्य, र्या-

१. असुर्यं वा एतत् पात्रं यत्कुलालकृतं चक्रवृत्तम्। मै १, ८, ३।

२. असुर्यं (+वै [काठ., क.]) पात्रमनाच्छृण्णं, आच्छृणत्ति देवत्राऽकः (यदाच्छृणत्ति देवत्रैव करोति [काठ., क.])। तैसं ५,१,७,४; काठ १९,७; क ३०,५।

३. असुर्या (°र्यो [मै ३,६,६]) वै रात्रिः (°त्री+ वर्णेन शुक्रियमहः [काठ.])। मै १, ८, ६; ३,६,६; काठ ८, ३।

४. न पुरा सूर्यस्योदेतोर्मन्थितवा, असुर्यो विदेवा (विदेवः) आधीयत, उद्यत्सु रश्मिषु (अग्निः) मध्यस्तत् सदेवः सेन्द्रः ··· ···। मै १,६,१०।

५. आष्ट्राग्निः सर्वमत्ति मेध्यं चामेध्यं चासुर्यो वा एष यद् आष्ट्राग्निः। काठसंक १५ः५।

६. यच्चक्रवृत्तं तदसुर्यं, यदचक्रवृत्तं तद्देवमात्रम् (°पात्रम् [क.])। काठ ६, ३; क ४,२।

७. यस्यावाची वाक् सोऽनार्त्विजीनोऽसुर्यो हि स वर्णः। काठ १३, ४।

आसुर-

१. निवीतमासुरम्। काठसंक ७७ः ६।

२. यत् क्रौञ्चमन्वाहाऽऽसुरं तत्। तैसं २, ५, ११, १ (तु. ऐ ३, ४; ४, ९)।

आसुरी- आसुरी माया स्वधया कृतासीति। मै २, ७, ७।

असृज्-

१. आपो वै यज्ञिया मेध्या असृज्यन्त तदेका अपि नासृज्यन्तासृगेवाव तस्मान्मृज्यत, तदस्नोऽसृक्त्वम्। काठ ३४, ८।

२. प्रजापतिः पशूनसृजत, स वा असृगेव नासृजताऽसृष्ट ऽ वा एतत्, तदस्नोऽसृक्त्वम्। मै ४,२, ९।

३. रक्षसां भागोऽसीति रक्षसा ऽ ह्येष भागो यदसृक्। माश ३, ८,२,१४।

४. स यदस्ना रक्षः संसृजतादित्याह रक्षांस्येव तत्स्वेन भागधेयेन (असृग्रूपेण) यज्ञान्निरवदयते। ऐ २, ७।

अस्कन्न- अस्कन्नमद्य देवेभ्य आज्य ऽ सम्भ्रियासमित्यविक्षुब्धमद्य देवेभ्यो यज्ञं तनवा इत्येवैतदाह। माश १, ४, ५, १।

अस्त- गृहा वा अस्तम्। माश २, ५, २, २९।

अस्थन्-

१. ऋङ्मयान्यस्यास्थानि भवन्ति। जै २, २४।

२. तारका अस्थानि। तैसं ७, ५, २५, १॥ [°स्थन्- आग्नेय- १७ द्र.]।

**आदित्य-ग्रह-**

१. अथैष सरसो ग्रहो यदादित्यग्रहः । कौ १६,१;३०,१ ।

२. आदित्यग्रहं (अनु) गावः (प्रजायन्ते)। तैसं ६, ५, १०,१ ।

३. सवनततिर्वा आदित्यग्रहः । कौ १६, १ ।

**आदित्य-धामन्-**

१. आदित्यधामानो वा अन्ये (उत्तरे [मै.]) प्राणा अङ्गिरोधामानोऽन्ये (अधरे [मै.]) । मै ३,२,९; काठ २०,११ ।

२. ये पुरस्तात् (प्राणाः) त आदित्यधामानः । काठ २०, ११, क ३१,१३ ।

**आदित्य-पात्र-**

१. अथैतदादित्यपात्रं पुनः प्रयुज्यते, गा ९ वा एतत् प्रति । मै ४, ८, ८ ।

२. आदित्यपात्रं प्रयुज्यते गाव एव तत् पशूनामनुप्रजायन्ते । काठ २८,१० ।

३. यदादित्यपात्रं प्रयुज्यते गा एव तेन पशूनां दाधार । क ४५,१ ।

**आदित्य-वत्-** वरुणायादित्यवते यवमयं चरुम् (निर्वपेत्) । मै २, २, ६ ।

**आदित्य-स्थ-** पुरुषो यजू९षि (आदित्यस्थः) । माश १०,५,१,५ ।

**आदित्या-** पष्ठौही गर्भिण्यादित्या । मै २,६,१३ ।

**आदेश** ( ब्राह्मणवाक्य-)- आदेश आत्मा । तैआ ८,३,१; तैउ २,३,१ ।

**आधवनीय-**

१. इन्द्राय त्वेत्याधवनीयम् (अभिमृशेत्) । तैसं ३,२,१,३ ।

२. निभूयपूराधवनीये । काठ ३४,१६ ।

**आधाव-** एतद्वा अपां नामधेयं गुह्यं यदाधावाः । तैसं ३,३,४,१ ।

**आधि-** चारुः कृपणकाशी कामो गन्धर्वस्तस्याऽऽधयोऽप्सरसः शोचयन्तीर्नाम । तैसं ३,४, ७, २ ।

**आधिपत्य-** अधिपति- द्र.

**आधीत-**

१. आधीतं बर्हिः । मै १,९,१ ।

२. प्रजा वा आधीतं, पशव आधीतिः । मै १, ४,१४ ।

**आधीत-यजुस्-**

१. ततो यानि त्रीणि स्रुवेण जुहोति । तान्याधीतयजू९षीत्याचक्षते । माश ३,१,४,२ ।

२. तद्यदस्यैता आत्मन्देवता आधीता भवन्ति तस्मादाधीतयजू९षि नाम । माश ३,१,४,१४ ।

३. प्रजापतिर्वै यत् किञ्च मनसादीधेत्तदाधीतयजुर्भिराप्नोत् तदाधीतयजुषामाधीतयजुष्ट्वम् । मै ३,६,४ ।

**आधीति-** आधीत- द्र. ।

**आध्वर्यव-** अध्वर्यु- द्र ।

**आनति-** चक्षुरानतिः । जै १,१४ ।

**आनन्त्य-** अनन्त- द्र. ।

**आनन्द-**

१. आनन्दं नन्दथुना (°थुभ्याम् [काठ.]) । तैसं ५,७, १९,१; काठ ५३,९ ।

२. आनन्दो ब्रह्मेति व्यजानात् । तैआ ९,६,१; तैउ ३,६,१ ।

३. तस्य (आनन्दमयस्यात्मनः) प्रियमेव शिरः। मोदो दक्षिणः पक्षः। प्रमोद उत्तरः पक्षः। आनन्द आत्मा। ब्रह्म पुच्छं प्रतिष्ठा। तैआ ८,५,१; तैउ २,५,१।

४. युवा स्यात्साधुयुवाऽध्यायकः। आशिष्ठो दृढिष्ठो बलिष्ठः। तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात्। स एको मानुष आनन्दः। तैआ ८, ८, १; तैउ २,८, १। [°न्द- अमृत- ३५ द्र.]।

**आनुष्टुभ-** अनुष्टुभ्- द्र.।

**आनूप**(सामन्-)- एतेन वै वध्र्यश्व आनूपः पशूनां भूमानमाश्नुत पशूनां भूमानमश्नुत आनूपेन तुष्टुवानः। तां १३,३, १७।

**आन्तरिक्ष-** अन्तरिक्ष- द्र.॥ **आन्त्र-** अन्त्र- द्र.॥ **आन्धीगव-** अन्धीगु- द्र.।

**आपति-**

१. आपतये त्वा गृह्णामीत्यग्नये तेन वसुभ्यो गृह्णाति। मै ३,७,१०।

२. प्राणो वा आपतिः। तैसं ६ २,२,२॥ [°ति- आत्मन्- ५० द्र.]।

**आपाल** (सामन्-)- यद्दपालात्रेय्यपश्यत् तस्मादापालमित्याख्यायते। जै १, २२१।

**आ√पृण्**

१. अग्ने यन्मे तनुवा ऊनं तन्म आ पृणेत्याह, यन्मे प्रजायै पशूनामूनं तन्म आ पूरयेति वावैतदाह। तैसं १,५,७,५।

२. आपृणस्वेत्याप्रजायस्वेत्येतत्। माश ९,२,३,४४।

**आप्त्य-**

१. अथैनम् (इन्द्रम्) अस्यां ध्रुवायां मध्यमायां प्रतिष्ठायां दिशि साध्याश्चाऽऽप्त्याश्च देवाः··· अभ्यषिञ्चन्··· राज्याय। ऐ ८,१४।

२. त (आप्त्याः) इन्द्रेण सह चेरुः। माश १,२, ३,२।

३. तत (ताभ्योऽद्भ्यः सकाशात्) आप्त्याः सम्बभूवुस्त्रितो द्वित एकतः। माश १,२, ३,१।

४. साध्याश्च त्वाप्त्याश्च देवाः पाङ्क्तेन च्छन्दसा त्रिणवेन स्तोमेन शाक्वरेण साम्नाऽऽरोहन्तु तानन्वारोहामि राज्याय। ऐ ८,१२।

५. साध्याश्चाप्त्याश्च पारमेष्ठ्याय (आदित्यमभ्यषिञ्चन्त)। जै २,२५।

६. साध्याश्चाप्त्याश्च पारमेष्ठ्याय (वरुणमभ्यषिञ्चन्त)। जै ३,१५२।

७. साध्याश्चाप्त्याश्चातिच्छन्दसं समभरन्। तां ते प्राविशन् (मृत्योरात्मनो गुप्त्यर्थम्)। तान् सा (अतिच्छन्दाः) अछादयत्। जै १,२८३।

८. साध्याश्चाप्त्याश्चाधस्तात् (पर्यपश्यन्)। जै २, १४२।

**आप्नान-** तेऽन्तरेण चात्वालोत्करा उपनिष्क्रामन्ति तद्धि यज्ञस्य तीर्थमाप्नानं नाम। कौ १८,९।

**आप्य-** सो (अग्निः) ऽङ्गारेणापोऽभ्यपातयत्। तत एकतोऽजायत स द्वितीयमभ्यपातयत् ततो द्वितोऽजायत स तृतीयमभ्यपातयत् ततस्त्रितोऽजायत। यदद्भ्योऽजायन्त तदाप्यानामाप्यत्वम्। तै ३, २,८, १०-११।

**आप्री** (ऋच्-)-

१. आप्रीभिराप्नुवन्। तदाप्रीणामाप्रित्वम्। तै २,२, ८, ६।

२. आप्रीभिराप्रीणाति (+तद्यदाप्रीणाति तस्मादाप्रियो नाम [कौ.]) । ऐ २,४; कौ १०,३ ।

३. तद्यदेनम् (पशुम्) एताभिराप्रीभिराप्रीणात्तस्मादाप्रियो नाम । माश ११,८,३,५ ।

४. तमेताभिराप्रीभिराप्याययन्ति तद्यदाप्याययन्ति तस्मादाप्रियो नाम । माश ३,८,१,२ ।

५. ताभिः (आप्रीभिः) स (प्रजापतिः) मुखत आत्मानमाऽप्रीणीत । तैसं ५,१,८, ३-४ ।

६. तेजो वै ब्रह्मवर्चसमाप्रियः । ऐ २,४ ।

७. प्राणा वा आप्रियः । कौ १८,१२ ।

८. मेध आप्रीषु । काठ ३४,१५ ।

९. यदाप्रियो भवन्ति यज्ञमेवाप्रीणाति । काठ २२,१ ।

१०. यदेता आप्रियो भवन्ति यज्ञमेवैताभिर्यजमान आप्रीणीते । मै ३, ९,६ ।

११. यदेतान्याप्रिय आज्यानि भवन्त्यात्मानमेवैतैराप्रीणाति । तां १५, ८,२;१६,५,२२ ।

**आभीक-** अभीक- द्र. ॥ **आभीशव-** अभीशु- द्र. ।

**आ√भू** प्राणं वा अनु प्रजाः पशव आभवन्ति । जैउ २, २, ४, ४ ।

**आम->√आमि**

१. पय एतस्यामयति यस्यामयति । काठ ११, ५; १२, १ ।

२. प्राणान् वा एतस्य शुगृच्छति यस्या ऽऽमयति । तैसं ७, २, ७, ५ ।

३. संवत्सरो हि वा एतस्य लुब्धो ऽथैतस्यामयति । काठ १२, ८ ।

**आमन्त्रण-** एतद्वै देवाना ँ सत्यमनभिजितं यदामन्त्रणम् । काठ ८, ७; क ७, ४ ॥ [°ण- अनृत- १६ द्र. ] ।

**आमय->आमयाविन्-**

१. अग्नये रक्षोघ्ने ऽष्टाकपालं निर्वपेदामयावी । काठ १०, ५ ।

२. अग्निं वा एतस्य ( आमयाविनः ) शरीरमप्येति वायुं प्राणः । जै १, ९२ ।

३. अग्निना वा एष वरुणेन गृहीतो भवति य आमयावी । जै १, ९६ ।

४. अप वा एतस्मादन्नाद्यं क्रामति य आमयावी । तां १६, १३, ३ ।

५. अप्रतिष्ठितो वा एष य आमयावी । तां १६, १३, ४ ।

६. आमयाविनं याजयेत् । प्राणा वा एतमतिपवन्ते य आमयावी यत्तीव्रसोमेन यजते पिहित्या एवाच्छिद्रतायै । तां १८, ५, ११ ।

७. आमयावी (आरुणकेतुकमग्निम्) चिन्वीत…भेषजमेवास्मै करोति । तैआ १, २६,३ ।

८. इन्द्राया ँहोमुचा एकादशकपालं ( पुरोडाशम् ) निर्वपेदामयाविनं याजयेत् । मै २,२,१० ।

९. एतस्य ( यज्ञस्य ) एवैकवि ँ शमग्निष्टोमसाम कृत्वाऽऽमयाविनं याजयेत् । तां १६,१३,१ ।

१०. ऐन्द्रवायवाग्रान् ( ग्रहान् ) गृह्णीयादामयाविनः । काठ ३०, ३ ।

११. नैष जीवो न मृतो य आमयावी । काठ ११, ५; ८ ।

१२. पयस्यया यजेतामयावी, मैत्रावरुणी ब्राह्मणस्य स्यादैन्द्रावरुणी राजन्यस्याग्निवारुणी वैश्यस्य । काठ १२, १ ।

१३. पाप्मनैष ( °नैव [काठ १३,६] ) गृहीतो य आमयावी । काठ १३, २;६ ।

१४. पूर्णान् ग्रहान् गृह्णीयादामयाविनः । काठ ३०, ३ ।
१५. प्राणैरेष व्यृध्यते य आमयावी । तां १६, १३, २ ।
१६. यं आमयावी स मैत्रावरुणाग्रान् ( ग्रहान् गृह्णीत ), प्राणापानौ हि मित्रावरुणौ । मै ४,८,९ ।
१७. यं कामयेदामयाविनं जीवेदित्यग्नेरन्ते ब्राह्मणाय प्रोच्यापः परिप्लूयादेतावद्धै भेषजम् । काठ २७, ४; क ४२, ४ ।
१८. रक्षा ५ स्येत ५ सचन्ते य आमयावी । काठ १०, ५ ।
१९. वरुणगृहीत (°तो वा [काठ १०,४; मै.] ) एष य आमयावी । मै २, १,२;३,१; काठ १०,४; ११, ८; १२, १ ।
२०. सोमं वा एतस्य (आमयाविनः) रसो गच्छत्यग्निं ५ शरीरम् । तैसं २, २,१०, ४ ।
[°विन्- अंहस्- १; अग्नि- ३५; अश्विन्- ४ द्र. ] ।

आमहीयव ( सामन्- )-
१. आमहीयवं भवति क्लृप्तिश्चान्नाद्यञ्च क्लृप्तिञ्चैवैतेनान्नाद्यञ्चाभ्युत्तिष्ठन्ति । तां १५, ९,५ ।
२. आमहीयवं भवति क्लृप्तिश्चान्नाद्यञ्च समानं वदन्तीषु क्रियत इदमित्थमसदिति । तां ११, ११, ७ ।
३. ता यदेनं ( प्रजापतिम् ) प्रजाः सुहिता अशिता आमहीयन्त तदामहीयवस्यामहीयवत्वम् । जै १, ११७ ।
४. ताः ( प्रजाः प्रजापतिना ) सृष्टा अमहीयन्त यदमहीयन्त तस्मादामहीयवम् । तां ७,५, १ ।
५. प्रजानाञ्च वा एषा सृष्टिः पापवसीयसश्च विधृतिर्य्यदामहीयवम् । तां ७, ५, ४ ।
६. प्रजापतिरकामयत बहु स्यां प्रजायेयेति स शोचन्नमहीयमानः ( अपूज्यमानः )अतिष्ठत्स एतदामहीयवम् ( साम ) अपश्यत्तेनेमाः प्रजा असृजत । तां ७, ५, १ ।

आमाद्- अयं ( अग्निः ) वाऽआमाद्येनेदं मनुष्याः पक्त्वाश्नन्ति । माश १, २,१, ४ ।

आमावास्य- अमावास्या- द्र. ।

आमिक्षा-
१. आण्डस्य वा एतद्रूपं यदामिक्षा । तै १, ६, २, ४ ।
२. आमिक्षा विमदितेव । काठ २९, १ ।
३. मारुत्यामिक्षा, वारुण्यामिक्षा । मै १, १०, १; काठ ९,४ ।
४. मैत्रावरुणीमामिक्षाम् ( निर्वपति ) । तैसं १, ८, १९, १ ।
५. मैत्रावरुण्यामिक्षा, वशा दक्षिणा । मै २, ६, १३ ।
६. वैश्वदेवीमामिक्षाम् ( निर्वपति ) । तैसं १, ८, २, १ ।
७. वैश्वदेव्यामिक्षा ( +भवति [तैसं.]) । तैसं १, ६, २,५;७,१०, १; मै १, १०,१; काठ ९,४; क ८, ७ ।

आम्र- (इन्द्रस्य छिद्रेभ्यः सोमः परेयाय । तदनन्तरं स इन्द्रः) खाट्कृत्य चतुर्थं निरष्ठीवत् तदेवाम्रमभवत् । जै २, १५६ ।

आयतन-
१. आयतनं रथन्तरम् । जै १, ३३० ।

२. मनो वाऽआयतनम् । माश १४, ९, २,५; शांआ ९, २ ।

३. युष्माकमायतनेन इति विश्वान् देवान् ( अब्रुवन् देवाः ) । जै १, २११ ।

**आयति**- प्राणो वा आयतिः । गो २, २, ३ ।

**आयव**- मासा आयवाः । काठ २२, ६ ।

**आयवन्**- ऋतवा आयवानः । मै ३, ४, ४ ॥ [ °वन्- अब्द- ३ द्र. ] ।

**आयवस्**- अब्द- २ द्र. ॥ **आयास्य**- अयास्य- द्र. ।

**आयु**-

१. उर्वशी वाऽ अप्सराः पुरूरवा पतिरथ यत्तस्मान्मिथुनादजायत तदायुः । माश ३, ४,१,२२ ।

२. पुरूरवा वा ऐड उर्वशीमविन्दत देवीं, तस्या आयुरजायत । मै १, ६, १२ ।

३. माता वा उर्वश्यायुर्गर्भः । काठ २६, ७; क ४१, ५ ।

४. विदेदग्निर्नभो नामाग्ने ऽअङ्गिर आयुना नाम्नेहि इति । माश ३,५, १, ३२ ।

**आयुत** (ईषद्विलीनसर्पिस्- )-

१. आयुतं गन्धर्वाणाम् । काठ २३, १ ।

२. आयुतं पितॄणाम् ( सुरभि ) । ऐ १, ३ ।

**आयुवान**- आयुवाना इव हि मरीचयः प्लवन्ते । माश ९, ४, १, ८ ।

**आयुस्**-

१. अग्निरायुः···ब्रह्मायुः···यज्ञ आयुः···अमृतमायुः । मै २, ३, ४ ।

२. अन्नमु वाऽआयुः । माश ,९,२,३,१६ ।

३. अमृतमायुर्हिरण्यम् । माश ३,८,२,२७; ४,५,२,१०;६,१,६ ।

४. अमृतेनैवाऽऽयुरात्मन् धत्ते । तैसं ३,३,४,३ ।

५. असावायुः (द्यौः) । तैसं ७,२,४,२ ( तु. काठ ३३,३; ऐ ४,१५) ।

६. असावुत्तम (लोकः =स्वर्लोकः) आयुः (स्तोमः) । तां ४,१,७ ।

७. आयुः पुरस्तादाह । तैआ ५,४,७ ।

८. आयुः प्राणः (°जगती ⌊तैसं ७,५,१,५⌋) । तैसं ३, ३,४,३; ६,६,१०,३; ७,५,१,५ ।

९. आयुर् (+वै ⌊तैसं.⌋) घृतम् । तैसं २,३,२,२; मै २,३,५; काठ ११,८,२१,७ ।

१०. आयुर् (+वै ⌊काठ.; मै ४,६,६⌋) ध्रुवः । मै ४,५,९;६,६; काठ २८,१; क ४४,१ ।

११. आयुर्वा उद्गाता । आयुः क्षत्तसंगृहीतारः । तै ३,८,५,४ ।

१२. आयुर्वा उष्णिक् । ऐ १,५; ऐआ १,१,३;३,८ ।

१३. आयुर्वा एष यद्वायुः । ऐआ २,४,३; ऐउ १,३,१० ।

१४. आयुर्वायव्या (इष्टका) । मै ३, ३,१ ।

१५. आयुर् (+वै ⌊माश.⌋ ) विकर्णी (इष्टका) । तैसं ५,३,७,३; माश ८,७,३,११ ।

१६. आयुर्वीर्यं९ हिरण्यम् । मै १,७,५; काठ ९,२; क ८,५ ।

१७. आयुर्वै गायत्रम् ( सहस्रम् ⌊ तै. ⌋ ) । जै १,२९२; तै ३,८,१५,३; १६,२ ।

१८. आयुर्वै परमः कामः । काठ ३७,१६; काठसंक ७२ : ४ ।

१९. आयुर्वै (हिं ⌊काठ.; क ४८, १४; माश.⌋) हिरण्यम् । मै २, १,७; ४, ४, २; ४; काठ ११, ८; क ४५,७; ४८,१४; तै १,८, ९,१; माश ४, ३, ४, २४ ।

२०. आयुषः प्राण ९ सन्तनु । काठ ३९, ८ ।

२१. आयुषा वै (एकाहेन) देवा असुरानायुवताऽऽयुते भ्रातृव्यं य एवं वेद । तां १६,३, २ ।

२२. आयुषे हिङ्कुरु··· इति पुरस्तादार्भवस्य पवमानस्य वदेत् । मै ४,२,४ ।

२३. आयुस्ते ध्रुवः (ग्रहः) पातु । मै ४,८,७ ।

२४. आयुस्संवत्सरः । मै ४,६,८; काठ १०,४;११,८ ।

२५. आयुस्स्वयमातृण्णा (इष्टका) । काठ २१,३ ।

२६. उत्तम ९ ह्यायुः । मै ३,३,१ ।

२७. चक्षुरसि श्रोत्रं नाम धातुराधिपत्य आयुर्मे दाः । तैसं ३,३,५,१ ।

२८. जरा वै देवहितमायुः । मै १,७,५; काठ ९,२; क ८,५ ।

२९. तद्धापि छायां पर्यवेक्षेतात्मनोऽप्रणाशाय । अथो सर्पिषोरक्ष्योरादधीत चक्षुष आप्यायनाय । तदपि विज्ञानमासाद् । य आत्मानं न परिपश्येदपेतासुस्स स्यात् । तस्मात्सत्यादप्याज्यं भूय आनीय पर्यैवात्मानं दिदृक्षेत सर्वस्यायुषोऽवरुद्धयै । जै १,१६७ ।

३०. ध्रुवमसि पृथिवीं द ९ ह (+ आयुर्देहि प्राणं देहि ⌊काठ., क.⌋) । मै १,१,८;४,१,८; काठ १, ७; क १,७ ।

३१. ध्रुवम् (ग्रहमवकाशयति) आयुषे मे वर्चोदा वर्चसे पवस्व । माश ४,५, ६,३ ।

३२. न मधु होतव्यमायुर्वै मध्वायुरग्नौ प्रदध्यात् प्रमायुकस्स्यात् । काठ ११,२ ।

३३. प्र चन्द्रमास्तिरति दीर्घमायुः । तैसं २,४,१४,१ ।

३४. प्राणो वा आयुः (+ यावद्यस्मिञ्छरीरे प्राणो वसति तावदायुः ⌊शांआ., कौउ. ⌋) । ऐ २,३८; शांआ ५,२; कौउ ३,२ ।

३५. भद्रं न आयुः शरदो असच्छतम् । काठसंक ६१:२ ।

३६. माषकमण्डलु ९ शूद्राय ( ददाति ), आयुस्तेन परिक्रीणाति । काठ ३७, १ ।

३७. य एवं विद्वान्स्यान्न मृण्मये भुञ्जीत तथा हास्यायुर्न रिष्येत तेजश्च । आ १ ।

३८. यच्छतमायुष्टत् । जै २, ४७ ।

३९. यज्ञेनास्मा ( यजमानाय ) आयुर्दधाति,······सर्वे वा एते (ऋत्विजः) अस्मै चिकित्सन्ति । मै २, ३, ५ ।

४०. यज्ञो मे आयुर्दधातु काठ ५, ३ ।

४१. यज्ञो वा आयुः । जै १,७०; तां ६, ४, ४ ।

४२. यदग्नये शुचये ( निर्वपति ), आयुरेवास्मिन् ( ज्योगामयाविनि ) तेन दधात्युत यदीतासुर्भवति जीवत्येव । तैसं २, २, ४, ३ ।

४३. यद्धिरण्यं ददात्यायुस्तेन वर्षीयः कुरुते । मै ४, ८, ३; गो २, ३, १९ ।

४४. यावदायुस्तावान् प्राणः । मै ४, ६, ६ ।

४५. या सुरूपा ता ९ श्यामा, ता ९ श्येनी, तां कृष्णा । तत्प्रजापतिरुदाजतायुर्नाम रूपं पशूनाम् । आयुष्मान् भवति य एवं वेद । मै ४, २,४ ।

४६. यो वै प्राणः स आयुः । माश ५,२,४,१० ।

४७. वरुण आयुः, संवत्सरो हि वरुणः, संवत्सरो ह्यायुः । काश ५, १, ४,६ । (तु. माश ४,१,४,१०;२,४,४ ।

४८. वायोरायुषाऽऽयुष्मान् भूयासम् । काठ ५, ५ ।

४९. विष्णोश्च यज्ञस्यान्तस्तयोरहं देवयज्ययाऽऽयुःप्रतिष्ठां गमेयम् । काठ ५,३ ।

५०. शतं वर्षाणि पुरुषायुषो भवन्ति । ऐआ २, २, १ ।

५१. स (प्रजापतिः) एवास्मिन् (यजमाने) आयुर्दधाति । तैसं २,३, २,१ ।

५२. सर्वं ऽह्यायुः । काश ५,२,४,२ ।

५३. सुगं नु पन्थां प्रदिशन् विभाहि ज्योतिष्मद्धेह्यजरं न आयुः (अग्ने) । काठ २,१५ ॥ [°युस्- अग्नि- १५७; १५८; २१७; २८४; ३४७; अग्निहोत्र- १६; अनुष्टुभ्- ६; अमावस्या- २; अमृत- २;१२;१३; अशन्- ५ द्र.] ।

**आयुर्दा-** आयुर्दा अग्ने हविषो जुषाणो घृतप्रतीको घृतयोनिरेधि । घृतं पीत्वा मधु चारु गव्यं पितेव पुत्रमभि रक्षतादिमम् (यजमानम्) । तैसं १,३,१४,४-५; ३,३,८,१; तैआ २,५,१ (तु. मै ४,१२, ४; काठ ११,१३) ।

**आयुष्काम-**

१. पौरुमीढं दक्षोणिधनमायुष्कामः कुर्वीत । जै १,१५१ ।

२. प्राजापत्यं चरुं निर्वपेच्छतकृष्णलं[1] घृत आयुष्कामः । काठ ११,४ ।

**आयुष्कृत्-** एते वै देवा आयुष्मन्तश्चायुष्कृतश्च यदिमे प्राणाः । मै २,३,५ ।

**आयुष्मत्-** अग्नि- ३; १९ द्र. ।

**आरण-** अरण- द्र. ॥　　**आरण्य-** अरण्य- द्र. ।

**आ√रभ्** ते वामारभऽइति ते वां प्रविशामीत्येवैतदाह । माश ३, २,१,७ ।

**आरम्भणीय** (अहन्-)-

१. चतुर्विंशमेतदहरुपयन्त्यारम्भणीयमेतेन वै संवत्सरमारभन्त । एतेन स्तोमांश्च छन्दांसि चैतेन सर्वा देवता अनारब्धं वै तच्छन्दोऽनारब्धा सा देवता यदेतस्मिन्नहनि नारभन्ते तदारम्भणीयस्यारम्भणीयत्वम् । ऐ ४, १२ ।

२. तं चतुर्विंशेनारभन्ते तदारम्भणीयस्यारम्भणीयत्वम् । कौ १९, ३ ।

३. वागारम्भणीयमहः । जै २,५७ ।

४. वागेवारम्भणीयमहर्वाचा ह्यारभन्ते यद्यदारभन्ते । माश १२,२, ४,१ ।

**आरुण-, आरुणकेतुक-, आरुणी-** अरुण- द्र. ।

**आरोग-** आरोगस्य···भ्राजस्य ······ पटरस्य······पतङ्गस्य ······ स्वर्णरस्य ······ ज्योतिषीमतस्य······ विभासस्य······कश्यपस्य ······ स्थामे स्वतेजसा······ भानि । आपो वो मिथुनम् । तैआ १,१६,१ ।

---

१. यवत्रयपरिमितं सुवर्णं कृष्णलम् ।

**आर्जुन-** अर्जुन- द्र. ॥ **आर्तव-** ऋतु- द्र. ॥ **आर्त्विज्य-** ऋत्विज्- द्र. ।

**आर्द्रदानु-** आर्द्रदानुरित्येष (वायुः) ह्यार्द्रं ददाति । माश ९,४,२,५ ।

**आर्द्रा** (नक्षत्र-)-

१. आर्द्रया रुद्रः प्रथमान एति । तै ३, १,१, ३ ।

२. आर्द्रा नक्षत्र ९ रुद्रो देवता । तैसं ४,४,१०,१ ।

३. स (रुद्रः) एत ९ रुद्रायाऽऽर्द्रायै प्रैयङ्गवं चरुं पयसि निरवपत् । ततो वै स पशुमानभवत् । तै ३ १,४,४ ।

**आर्भव-** ऋभु- द्र. ।

**आर्य** (दीक्षित-)- आर्येणेव ब्राह्मणेन वा क्षत्रियेण वा वैश्येन वैते हि यज्ञियाः । काश ४,१,१,६ ।

**आर्षभ-** ऋषभ- द्र. ।

**आ√लभ्**

१. अनु त्वा माता मन्यतामनु पिता इत्यनुमत एवैनं (पशुम्) मात्रा पित्रा भ्रात्रा सख्यालभते । मै ३,९,६ ।

२. देवताश्चैव यज्ञं चालभ्य दर्शपूर्णमासा आलभते । मै १, ४,१४ ।

३. वत्समालभते (°त्सं पराहन्ति [काठ.]) वत्सनिकान्ताः (+ हि [मै.]) पशवः (पराहन्ति =आलभते = स्पृशति) । मै १, ५, ९; काठ ७,७ ।

**आवपन-**

१. अयं वै (भू-) लोक आवपनं महत् । तै ३,९,५,५ ।

२. प्रतिष्ठा वा आवपनम् । शांआ २,१४ ।

**आविद्-** स यदेनमेताभ्यो देवताभ्य आवेदयत्येताभिरनुमतः सूयते, तस्मादाविदो नाम । काश ७,२,४,३० ।

**आशा** (दिश्-)-

१. अपद्यमानः (अव्यथमाना [काठ.]) पृथिव्यामाशा दिश आपृण । काठ १९,७; तैआ ४, ३,२; ५, ३, ६ ।

२. आशया मध्यम् (अचिनुत) । तैसं ५,६,१०,१; मै ३,४,८ ।

३. आशा वा इदमग्र आसीद्भविष्यदेव । जैउ ४,११,१,१ ।

४. यन्त्रमस्याशा द ९ह. रूपं देहि बलं (वर्णं [क.]) देहि । काठ १, ७; क १,७; ४७,६ ।

५. विष्णवाशानां पते । तै ३,११,४,१ ।

**आशा-पाल-**

१. अथैते देवाः (आशापालाः) आप्याः साध्या अन्वाध्या मरुतः । माश १३,४,२, १६ ।

२. शतं वै तल्प्या राजपुत्रा आशापालाः । माश १३,१, ६,२ ।

**आशित-** अशित- द्र. ।

**आशिर्-** प्रजा वै पशव आशीः । जै १, १७४ ॥ [°शिर्- अश्विन्-२ द्र. ]।

**आशिस्-**

१. एषा वा आशीः। जीवेयं, प्रजा मे स्याच्छ्रियं गच्छेयमिति······श्रीर्हि पशवः। माश १,८,१,३६।

२. धेनुं दद्दात्याशिष एवावरुन्धे। तैसं २,४,११,६।

३. बह्वी वै यजुःष्वाशीः। माश १,२,१,७;३,५,२,११; ६,१,१७।

४. मित्रावरुणावाशिषा (सहागच्छताम्)। तैआ ३,८,१।

**आशीविष-** इन्द्रस्य त्रिदिवे सोम आस। तं ह्यग्नयो गन्धर्वा जुगुपुरेत एव धिष्ण्याः। त उ एवाशीविषाः। जै १,२८७।

**आशु-**

१. अहर्वा एतदग्लीयत तद्देवा आशुनाभ्यधिन्व ५ स्तदाशोराशुत्वम्। तां १४,९,१०।

२. आशु भार्गवं भवति। तां १४,९,९।

३. वायुर्वाऽआशुस्त्रिवृत्। स एषु त्रिषु लोकेषु वर्तते। माश ८, ४,१, ९।

**आश्रावण-** यज्ञो वा आश्रावणम्। माश १, ५,१,१; ८,३,९।

**आश्रावित-** प्राणो वा अग्निहोत्रस्याऽऽश्रावितम्। तै २, १,५, ९।

**आ√श्रु** स यदाश्रावयति यज्ञमेवैतदनुमन्त्रयतऽआ नः शृणूप न आवर्त्तस्वेति। माश १,५,२,७।

**आश्रुति-** आश्रुतिरुत्तरतो मित्रावरुणयोराधिपत्ये, श्रोत्रं मे दाः। मै ४,९,३; तैआ ४, ५,३-४

**आश्रे,श्लेषा** (नक्षत्र-)-

१. आश्लेषा (°श्रे [तैसं.]) षा नक्षत्र ५ सर्पा देवता। तैसं ४,४,१०,१; मै २,१३,२०।

२. सर्पाणामाश्रेषाः। तै १,५,१,२ (तु. ३,१,१,५)।

३. सर्पा देवताश्लेषा नक्षत्रम्। काठ ३९,१३।

**आश्व-** अश्व- द्र.॥

**आश्वसूक्ति-** अश्वसूक्त- द्र.॥

**आश्वत्थ-, °त्थी-** अश्वत्थ- द्र.।

**आश्विन-** अश्विन्- द्र.।

**आष्कारणिधन** (सामन्-)- आष्कारणिधनं काण्वं प्रतिष्ठाकामाय ब्रह्मसाम कुर्यात्। तां ८,२,१।

**आष्टादंष्ट्र-** अष्टादंष्ट्र- द्र.।

**आसञ्जन-**

१. अन्नमासञ्जनमन्ने ह्ययमात्मा प्राणैरासक्तः। माश ६,७, १, २१।

२. आदित्य आसञ्जनमादित्ये हीमे लोका दिग्भिरासक्ताः। माश ६, ७,१, १७।

३. चन्द्रमा आसञ्जनं चन्द्रमसि ह्यय ५ संवत्सर ऋतुभिरासक्तः। माश ६,७,१,१९।

**आसन्दी-**

१. इयं (पृथिवी) वाऽआसन्द्यस्या ५ हीद ५ सर्वमासन्नम्। माश ६,७,१,१२।

२. श्रीरासन्दी। ऐआ १,२,४।

३. सैषा (आसन्दी) खादिरी वितृणा भवति। माश ५,४, ४,१।

**आसित-** असित- द्र.।

आस्कन्द- ऊर्ध्वा दिगेषमन्तगिशिरा ऋतुः, बृहस्पतिर्देवता, फलं द्रविणं, पङ्क्तिश्छन्दः, शाक्वररैवते सामनी, त्रिणवः स्तोमः, स उ त्रयस्त्रिंशवर्तनिः सुपर्णो ऋषिः, पष्ठवाड् वय आस्कन्दो ऽयानाम् । मै २,७,२० ।

आस्ताव- एष ह वा उद्गातुश्च यजमानस्य च धिष्ण्यो यदास्ताव आयतनमास्तावः । जै ३,११६ ।

आहवनीय (अग्नि-)-

१. अथ यदि सामतः (यज्ञो ऽग्रं नीयात्) स्वस्स्वाहेत्याहवनीये जुहवाथ (प्रजापतिर्देवानुवाच) । सैव तत्र प्रायश्चित्तिः । जै १,३५८ ।

२. अथ यस्य देवयजनस्याहवनीयादन्याः प्राचीरापो धावन्ति, गार्हपत्यादन्याः प्रतीचीस्तत्रयजेत । मै ३,८,४ ।

३. अथाहवनीयमुपतिष्ठते । श ऽस्य पशून्मे पाहीति पशूना ऽ ह्येष ईष्टे । माश २,४, १, ५ ।

४. अथैषा देवयोनिर्देवलोको यदाहवनीयः । जै १,१७ ।

५. असा आहवनीयोऽमुष्मिंस्तेन लोके प्रतितिष्ठति । काठसंक १० : १-२ ।

६. आहवनीय ऐन्द्रमभिश्रयति । तैसं २,२,११,१ ।

७. आहवनीयः साम सुवर्गो लोको बृहत् । तैआ १०,६३,१ ।

८. आहवनीयाय एव पशून् परिदाय प्रैति । मै १,५,१४ ।

९. आहवनीयेनामुं (उ-) लोकम् (देवा अभ्यजयन्) । मै ३,९,१; क ४०,५ ।

१०. आहवनीयो वा आहुतीनां प्रतिष्ठा । माश २,४, ३,१० ।

११. आहवनीयो वै यज्ञस्य शिरः । माश ६, ५,२,१ ।

१२. इन्द्रो ह्याहवनीयः । माश २,६,१,३८ ।

१३. एतदायतनो यजमानो यदाहवनीयः । तां १२,१०,१६ ।

१४. एतद्वै देवानामायतनं यदाहवनीयः । तैसं १,६,७,१ ।

१५. एष वै स यज्ञः । येन तद्देवा दिवमुपोदक्रामन्नेव आहवनीयोऽथ य इहाहीयत स गार्हपत्यस्तस्मादेतं (आहवनीयम्) गार्हपत्यात्प्राञ्चमुद्धरन्ति । माश १,७,३,२२ ।

१६. कस्त्वाऽऽहवनीय इत्यसावादित्य इति ब्रूयादेतस्मिन्हि सर्वाभ्यो देवताभ्यो जुह्वति । तैसं ५,७,४,२ ।

१७. चतुरश्रमाहवनीयस्य कुर्याच्चतुरश्रो ह्यसौ लोकोऽरत्निमात्रो भवति, एतावान् ह्यात्मा, प्रजापतिना संमितः । काठसंक १६ : ६-७ ।

१८. तस्य (राज्ञः) पुरोहित एवाहवनीयो भवति । ऐ ८,२४ ।

१९. देवतानां वा एतदायतनं यदाहवनोयः । मै १,४,१०; काठ ३२,७ ।

२०. देवयोनिर्वाऽएष यदाहवनीयः । माश १२, ९,३,१० ।

२१. देवानां वा एतान्यायतनानि यद् गार्हपत्यश्च दक्षिणाग्निश्चाहवनीयश्च । काठसंक १५-१६: १५-१६ ।

२२. द्यौराहवनीयः । काठ ८,६; क ७,२; माश ८,६,३, १४ (तु. जै १,५१) ।

२३. धिष्ण्या (ग्राम इति [जैउ.]) आहवनीयः । काठ ८,७; क ७,४; जैउ ४,११,५,१५ ।

२४. प्रजापतिर् (रुद्र) आह्वनीयः । मै ३,९,१[२] ।
२५. प्राञ्चौ बाहू उन्नयति । आह्वनीयमेव गृह्णाति । क ४७,८ ( तु. मै ४,१,१० )।
२६. प्राणोदानावेवाहवनीयश्च गार्हपत्यश्च । माश २,२,२,१८ ।
२७. मुखमेवास्य (यज्ञस्य) आह्वनीयः । माश ३,५,३, ३ ।
२८. मुखमेवाह्वनीयः (पुरुषस्य) । कौ १७,७ (तु. तैआ १०,६४,१) ।
२९. यजमान ( °नो वा [तैसं.] ) आह्वनीयः । तैसं ३,१,३,२; तै ३,३,७,२ ।
३०. यजमानदेवत्यो वा आह्वनीयः । तै १,६,५,३ ।
३१. यजमानायतन ९ वा आह्वनीयः । मै ३,३,२ ।
३२. यज्ञ ( °ज्ञो वै [ऐ.] ) आह्वनीयः । ऐ ५,२४;२६; माश १,७,३,२६ ।
३३. यदाहवनीयं गच्छतः, स्वर्गं तेन लोकम् । मै ३,८,७ ।
३४. यद्वाऽआहवनीयमुपतिष्ठते । दिवं तदुपतिष्ठते । माश २, ३, ४, ३६ ।
३५. यद्वा आहवनीयमुपतिष्ठते । पशूंस्तद्याचते । माश २,३,४, ३२ ।
३६. योऽग्नेस्तृतीयो भागस्तं देवा श्वोभूते प्राञ्चमनयन् स देवेभ्य आहवनीयोऽभवत् । काठसंक १४: ४-५ ।
३७. योनिर्वै पशूनामाहवनीयः । कौ १८,६; गो २.४,६ ।
३८. शिरो वै यज्ञस्याहवनीयः पूर्वोऽर्धो वै शिरः पूर्वार्धमेवैतद्यज्ञस्य कल्पयति । माश १,३,३,१२ ।
३९. सामवेदादाहवनीयः (अजायत) । ष ४,१ ।
४०. स्वर्गो लोकश्चतुरश्रस्तस्मादाहवनीयश्चतुरश्रः । काठसंक १५:१३ ।
४१. स्वर्गो वै (हि [काठ., क.]) लोक आहवनीयः । मै ३,७,७; काठ २५,८; क ४०, १;५; तै १, ६,३,६; ष १,५ (तु. मै १, १०,७; काठ २०,२; ३६,१; क ३१,४) ॥ [ °य- अपान- २; अमावस्या- २; आत्मन्- २३; आदित्य- ३१ द्र. ] ।

**आह्वनीय-भाज्-** आहवनीयभाग् यजमानः । कौ ३,९ ।

**आहाव-**

वाग् (ब्रह्म वा [ऐ २,३३]) आहावः । ऐ २,३३;४,२१ ।

**आहिताग्नि-**

१. अनवरुद्धा वा एतस्य विराड् य आहिताग्निः । तैसं १,७,६,७ ।
२. आनीतो वा एष देवानां य आहिताग्निः । मै २,१,१०; ४, ३,२; काठ १२,७ ।
३. देवान्वाऽएष उपावर्त्तते य आहिताग्निर्भवति । माश २,४,२,११; ६,१,३७ ।
[ °ग्नि- अग्नि- ३६; अहोरात्र- ८ द्र.] ।

**आहुति-**

१. अथ यस्याज्यमनुत्पूत ९ स्कन्दत्यसौ वा अस्कन्ना नामाहुतिः । ष ४, १ ।
२. आहुतयस्ते कामान्त्समर्धयन्तु । मै ३,११,८ ।
३. आहुतयो वा अग्नेः प्रियं धाम । मै १,५,८ ।
४. आहुतिर्वा एषा यद् ब्राह्मणस्य मुखम् । तां १६,६,१४ ।

५. आहुतिर्हि यज्ञः । माश ३,१, ४, १ ।
६. आहूतयो वै नामैता यदाहुतय एताभिर्वै देवान् यजमानो ह्वयति तदाहुतीनामाहुतित्वम् । ऐ १, २ ।
७. यद्यदाह्वयति तस्मादाहुतिर्नाम । माश ११, २, २, ६ ।
८. तस्मिन्नग्नौ यत्किंचाभ्यादधत्याहितय एवास्य ता आहितयो ह वै ता आहुतय इत्याचक्षते परोऽक्षम् । माश १०,६,२,२ ।
९. दारुपात्रेण जुहोति न हि मृन्मयमाहुतिमानश औदुम्बरं ( दारुपात्रम् ) भवति । तैसं २, ५, ४,३-४ (तु. तां १६,६,१४) ।
१०. देवेषवो वा एता यदाहुतयो, यं द्विष्यात्तं तर्हि मनसा ध्यायेद्, देवेषुभिरेवैनं विपृषति स्तृणुत एव । मै १,४,१३ ।
११. द्वे वा आहुती सोमाहुतिरेवान्याऽऽज्याहुतिरन्या । माश १,७,२,१० ।
१२. न वा अनग्नावाहुतिर्हूयते । काश ७,३,४,२० ।
१३. न ह वै ता आहुतयो देवान्गच्छन्ति या अवषट्कृता वाऽस्वाहाकृता भवन्ति । कौ १२,४ ।
१४. न हि सवितुर्ऋत (न हीन्द्राहत) आहुतिरस्ति । काठ ६,८[2] ।
१५. मा ९ सानि वाऽआहुतयः । माश ९, २,३,४६ ।
१६. यदध्वर्युरनग्नावाहुतिं जुहुयादन्धोऽध्वर्युः स्याद्रक्षा ९ सि यज्ञ ९ हन्युः । तैसं ५,१,३,१-२ ।
१७. या वा इत आहुतिरुद्यते, साऽमुतो ( दिवः) वृष्टिं च्यावयति । काठ २५, ५ ।
१८. यूपेन वा आहुतयः स्वर्गं लोकं यन्ति । मै ४,८,८ ।
१९. व्यद्धा वा एषाहुतिर्यामनग्नौ जुहोति । काठ १२,१; २४,४; क ३७,५ ॥ [ °ति- अभि- ५५९; अन्न- ६८; आग्नेयी- ४;५ द्र. ] ।

## इ

इक्षुशलाका- इक्षुशलाकयोपमन्थति, सा हि पितॄणाम् । मै १,१०,१७ ।

इटत् (ऋषि-)- इटन्वा एतेन काव्योऽञ्जसा स्वर्गं लोकमपश्यत् स्वर्गस्य लोकस्यानुख्यात्यै स्वर्गाल्लोकान्न च्यवते तुष्टुवानः । तां १४,९,१६ ।

इड-

१. अन्नं वा इडः । ऐ २,४;६,१५ ।
२. इडो यजति वर्षा एव वर्षाभिर्हीडितमन्नाद्यमुत्तिष्ठति । कौ ३,४ ।
३. इडो यजति, वर्षा (पशून् [ तैसं २, ६,१,२]) एवावरुन्धे । तैसं २,६,१,१;२ ।
४. प्रजा वाऽइडः । माश १,५,४,३ ।
५. वर्षा वा इड इति हि वर्षा इडो यदिदं क्षुद्र ९ सरीसृपं ग्रीष्महेमन्ताभ्यां नित्यक्तं भवति तद्वर्षा ईडितमिवान्नमिच्छमानं चरति तस्माद्वर्षा इडः । माश १,५,३, ११ ।

इडा-

१. अथेडां पशून्समवद्यति । माश १,७,४,९ ।
२. अन्नं पशव इडा । कौ १३,६ (तु. मै ४,६,१; काठ २२,६; जै १,३००;३०७) ।

३. इडा खलु वै पाकयज्ञः । तैसं १,७,१,१ ।
४. इडा देवहूः । तैसं ३,३,२,१ ।
५. इडायै हिङ्कुरु, इति पुरस्तादाज्यानां वदेत् । मै ४,२,४ ।
६. इडायै ह्येतत् पदं, यत् सोमक्रयण्यै । तैसं ६,१,८,२ ।
७. इडा वा इद ँ सर्वम् । मै ४,२,२ ।
८. इडा वै मानवी यज्ञानूकाशिन्यासीत् । तै १,१,४,४ ।
९. इडा हि गौः । माश २,३,४,३४;१४,२,१,७ (तु. मै ३,७,६;४,२,३; माश ३,३,१,४; तैआ ४,८,१; ५,७,१ ) ।
१०. इडोपहूता वसुभिः सजोषाः । तैसं ५,१,११,३; मै ३,१६,२; काठ ४६, २ ।
११. इन्द्रियं [इयं ( पृथिवी [कौ.] )] वा इडा । मै १,४,५; कौ ९,२ ।
१२. इहैवेडया वसुमत्या सधमादं मदेम । मै ४,१३,८ ।
१३. उत मैत्रावरुणी (इडा) इति । यदेव (इडा) मित्रावरुणाभ्या ँ समगच्छत । माश १,८,१,२७ ।
१४. उदरमेवास्य (यज्ञस्य) इडा । माश ११,२,६,८ ।
१५. एतद्ध वै मनुर्बिभयांचकार । इदं वै मे तनिष्ठं यज्ञस्य यदियमिडा पाकयज्ञिया । माश १,८,१,१६ ।
१६. पशव इडाना ँ संक्षारः (सामविशेषः) । तां १६,११,७ ।
१७. पशवो वा इडा (°ळा [जै.]) । तैसं १,७,१,१; २,६, ७, ३; मै १,१०,१५; ऐ २,९; १०,१०; कौ ३, ७; ५,७;२९,३; गो २, १,२५; जै १, १०२; १२२;१२३; १३३; १५४;१५५;१६५; १८६;३३०; तां ७, ३,१५; १४,५,३१; तै १,६,६,६; माश १, ८,१ २२; ७, १,१,२७; ष २,२ ।
१८. मनुर्ह्येतामग्रेऽजनयत तस्मादाह मानवी (इडा) इति । माश १,८,१,२६ ।
१९. यदेवास्यै (इडायै) घृतं पदे समतिष्ठत तस्मादाह घृतपदी (इडा) इति । माश १,८,१,२६ ।
२०. यद्धै तदात्मानमैट्ट सेडाभवत् तदिडाया इडात्वम् । मै ४, २,३ ।
२१. या वा सा (इडा-)ऽऽसीद्गौर्वै साऽऽसीत् । माश १,८, १,२४ ।
२२. या वै सा प्रफर्व्यासीत् सा गौरभवत् सेडा सा मानवी घृतपदी मैत्रावरुणी । मै १,६,१३ ।
२३. या शितिपृष्ठा, तां मन्दिस्तां मेनी, ता ँ शबली, ता ँ शितिबाहुस्ता ँ शुद्धवाला । तद् बृहस्पतिरुदाजसेडा नाम रूपं पशूनाम् । मै ४,२,४ ।
२४. यो वा इडां धेनुं वेद, सर्वा ह वा अस्मै दिशो धेनवो भवन्ति । मै ४,२,२ ।
२५. श्रद्धा (वृष्टिर्वा [तैसं.]) इडा । तैसं १,७,२,५ ; माश ११, २,७,२० ।
२६. सजूर्वैश्वानर इडया घृतेन स्वाहा । मै २,१२,३;३,४,४; काठ २२, ५ ।
२७. सा (इडा) वै पञ्चावत्ता भवति । माश १,८,६,१२ ।
२८. सैषा (मनोर्दुहिता) निदानेन यदिडा । माश १,८, १,११ ॥ [°डा- अन्न- ११ द्र.] ।

**इडादध** (यज्ञ-)– स एष (इडादधः) पशुकामस्यान्नाद्यकामस्य यज्ञः । कौ ४,५ ।

**ऐड–**

१. ऐड ँ रथन्तरम् । तां ७,६,१७ ।

२. प्रतिष्ठामिडाभिरैडेनावारुन्धत (देवाः)। तां १०,१२,४।
ऐडी-ऐडीश्च वा इमाः प्रजाः मानवीश्च। मै १,५,१० (तु. काठ ७,८)।

इण्ड्व-

१. अहोरात्रे इण्ड्वे। माश ६,७,१,२५।
२. इमा उ लोकाविड्ण्वे (द्यावापृथिवी)। माश ६,७,१,२६।

इतर- आसुर्या ह वा इतरा गिरः। ऐ ३,४९।

इतरजन-

१. ऋक्षो जतूः सुषुलूका त इतरजनानाम्। मै ३,१४,१७।
२. तरक्षः (तरक्षुः) कृष्णश्श्वा चतुरक्षो गर्दभस्त इतरजनानाम्। काठ ४७,९ (तु. मै ३, १४, २१)।

इति- इतिश्च मे गतिश्च मे (यज्ञेन कल्पताम्)। तैसं ४,७,५,२ ॥ [°ति- अग्नि- ८१ द्र.]।

इतिह-> ऐतिह्य- स्मृतिः प्रत्यक्षमैतिह्यम्। तैआ १, २,१।

इतिहास-

१. मत्स्यः सांमदो राजेत्याह, तस्योदकेचरा विशस्त इम आसत इति ...... तानुपदिशतीतिहासो वेदः सोऽयमिति कञ्चिदितिहासमाचक्षीत। माश १३,४,३, १२।
२. यद् ब्राह्मणानीतिहासान्पुराणानि कल्पान् गाथा नाराशंसीर्मेदाहुतयो देवानामभवन्ताभिः क्षुधं पाप्मानमपाघ्नन्। तैआ २, ९,१।

इदावत्सरः-

१. चन्द्रमा(+ वा [तै.]) इदावत्सरः। तां १७,१३,१७; तै १,४,१०,१।
२. यत्ते रुद्र पश्चाद् धनुस्तद्वातो अनुवातु ते, तस्मै ते रुद्रेदावत्सरेण नमस्करोमि। तैसं ५,५, ७,३।

इदुवत्सर- यत्ते रुद्रोत्तराद्धनुस्तद् वातो अनुवातु ते, तस्मै ते रुद्रेदुवत्सरेण नमस्करोमि। तैसं ५,५,७,३-४।

इध्म-

१. आत्मा वा इध्मः। तै ३,२,१०, ३।
२. इन्धे ह वा एतदध्वर्युः। इध्मेनाग्निं तस्मादिध्मो नाम। माश १, ३,५,१।
३. ग्रीष्म इध्मः। काठसंक १००: १२; तैआ ३,१२,३।
४. स्वष्टेध्मेन (सहागच्छतु)। तैआ ३,८,२।
५. प्राण एवास्येध्मः। माश ११,२,६,२।
६. वनस्पतय इध्मः (°ध्माः [ऐ.])। ऐ ५,२८; तै २, १,५,२ ॥ [°ध्म- अहोरात्र- १० द्र.]।

इन्दु-

१. प्रजा वै पशव इन्दुः। तैसं ३,४,१,२।
२. यजमानो वै सोमो राजेन्दुः। जै १, ९० (तु. ऐ १,२९)।
३. रेतो (सोमो [माश.]) वा इन्दुः। तैसं ६,५, ८,३; माश २,२, ३,२३; ७,५,२,१९।

इन्द्र-

१. अग्निहोत्रेण दर्शपूर्णमासाभ्यामिन्द्रमसृजत । कौ ६,१५ ।

२. अतिष्ठा वा इन्द्रो देवतानाम् । काश ७, २,३, ६ ।

३. अथ य इन्द्रस्सा वाक् । जैउ १.११,१,२ ।

४. अथ यत्पुरीष ऽ स इन्द्रः । माश १०,४, १,७ ।

५. अथ यत्र (अग्निः) वर्षिष्ठं ज्वलति तर्ह्येन्द्रो भवति । काश ३, १,१,१ ।

६. अथ यत्रैतत्प्रदीप्तो भवति । उच्चैर्धूमः परमया जूत्या बल्बलीति तर्हि हैष (अग्निः) भवतीन्द्रः । माश २,३,२,११ ।

७. अथ यदिन्द्रे सर्वे देवास्तत्स्थानाः । तस्मादाहुरिन्द्रः सर्वा देवता इन्द्रश्रेष्ठा देवा इति । माश १,६,३, २२ ।

८. अथ यद्विश्वजितमुपयन्ति । इन्द्रमेव देवतां यजन्ते । माश १२, १,३,१५ ।

९. अथ यः स इन्द्रोऽसौ स आदित्यः । माश ८,५, ३,२ ।

१०. अथ वै तर्हीन्द्रो देवानामासीदवमतमः शिथिरतमस्तस्मै वा एत ऽ षोडशिनं (ग्रहं) प्रायच्छन्, तेनेन्द्रोऽभवत् ततो देवा अभवन् पराऽसुराः । मै ४,७,६ ।

११. अथ ह वै वैखानसा इत्यृषिका इन्द्रस्य प्रिया आसुः'''तदिन्द्रो ह वै विखानाः । जै ३,१९० ।

१२. अथ हाभियुग्वानो नामाष्टौ देवानां सहचरा आसुरष्टौ पितॄणामष्टौ मनुष्याणामष्टावसुराणाम् । तेषां (असुराणाम् ) स्मेन्द्रो माययाऽष्टमो भवति वृत्रं जिघांसन् । जै २, १५५ ।

१३. अथेन्द्राय ज्येष्ठाय हायनानां चरुं निर्वपति । माश ५,३, ३,६ ।

१४. अथैतद्वामेऽक्षणि पुरुषरूपम् । एषास्य (दक्षिणेऽक्षणि वर्त्तमानस्य पुरुषस्येन्द्राख्यस्य) पत्नी विराट् । माश १४,६,११,३ ।

१५. अथो इन्द्रस्यैष आत्मा यन्महाव्रतम् । शांआ १,१ ।

१६. 'अपां फेनेन नमुचेः शिर इन्द्रोदवर्तयः । विश्वा यदजय स्पृधः' (ऋ ८, १४,१३) इति पाप्मा वै नमुचिः । माश १२,७,३,४ ।

१७. अभिजिदसि युक्तग्रावेन्द्राय त्वेन्द्रं जिन्व (+ इत्याहाभिजित्यै [तैसं ३,५,२,४]) । तैसं ३, ५,२,४; ४,४,१,२; काठ ३७, १७ ।

१८. असुं तु (द्यु-) लोकं नाभ्यजयत् (इन्द्रः) त ऽ विश्वकर्मा भूत्वाऽभ्यजयत् । मै ४,८,१० ।

१९. अयं वाऽइन्द्रो योऽयं (वातः) पवते । माश १४,२,२,६ ।

२०. अयं वा इन्द्रो राजाऽयमिन्द्रोऽधिराजोऽसाविन्द्रः स्वराडिमानेव लोकान्त्स्वेन भागधेयेनोपधावति, त एवात्मा अन्नं प्रयच्छन्ति । तैसं २ ३,६,२ ।

२१. अर्जुनो ह वै नामेन्द्रः (+ यदस्य गुह्यं नाम [माश ५···]) । माश २,१,२,११; ५,४,३,७ ।

२२. अर्धेन्द्राणि जुहोति तस्मादिन्द्रो देवतानां भूयिष्ठभाक् । काठ २१, ११ ।

२३. अश्वरथेनेन्द्र आजिमधावत्तस्मात्स उच्चैर्घोष उपब्दिमान्क्षत्रस्य रूपम् । ऐ ४,९ ।

२४. असौ वा आदित्य इन्द्रो रश्मयः क्रीडयः (मरुतः) । मै १, १०, १६; काठ ३६,१० ।

२५. असौ वा आदित्यस्तेजोभिर्व्याध्यत तत इदं सर्वं तमोऽभवत्, स प्रजापतिरेतान् दश ऋषभानपश्यदथो आहुरिन्द्रो ऽपश्यदिति तानैन्द्रानालभत, तैरस्मिन् (आदित्ये)

इन्द्रियाणि वीर्याण्यात्स्वादधात् । मै २,५,१० ।

२६. अस्मास्विन्द्र इन्द्रियं दधातु । मै १,४,१ ।

२७. अस्मिन्वा इदमिन्द्रियं प्रत्यस्थादिति । तदिन्द्रस्येन्द्रत्वम् । तै २,२, १०,४ ।

२८. आ यस्मिन्त्सप्त वासवा रोहन्ति पूर्व्या रुहः । ऋषिर्ह दीर्घश्रुत्तमा इन्द्रस्य घर्मो अतिथिः । मै ४,१२,२ ।

२९. आविन्न इन्द्रो वृद्धश्रवाः । तैसं १,८,१२,२ ।

३०. इदं वा इन्द्रस्य घर्मश्च सूर्यश्च, इदमस्य मन्युश्च मनश्च, इदमस्येन्द्रश्चेन्द्रियं च, इदमस्यार्कश्चाश्वमेधश्च, एतानि वै सर्वाणीन्द्रोऽभवत् । मै २, २,९ ।

३१. इदमदर्शमिती ३ँ । तस्मादिदन्द्रो नामेदन्द्रो ह वै नाम तमिदन्द्रं सन्तमिन्द्र इत्याचक्षते परोक्षेण । परोक्षप्रिया इव हि देवाः । ऐआ २,४,३; ऐउ १,३, १४ ।

३२. इन्द्रं वयं शुनासीरमस्मिन् यज्ञे हवामहे । काठ २१, १४ ।

३३. इन्द्र ९ स्वपसा (प्रीणामि) । मै ३,१५,३; काठ ५३,८ ।

३४. इन्द्र आसीत्सीरपतिः शतक्रतुः । तै २,४,८,७ ।

३५. इन्द्र इति ह्येतमाचक्षते य एष (सूर्यः) तपति । माश ४,६,७, ११ ।

३६. इन्द्र इन्द्रियस्य प्रदाता । मै २,२,८ ।

३७. इन्द्र इन्द्रियेण (एवैनमवति) । तै १,७,६,६ ।

३८. इन्द्र उक्थामदैः (सहागच्छतु) । मै १,९,२;८; काठ ९,१०; तैआ ३,८,१ ।

३९. इन्द्र उ वै परुच्छेपः (प्रजापतिः [शांआ.]) । कौ २३,४; शांआ १, १ ।

४०. इन्द्र उ (इन्द्रो [गो.]) वै वरुणः स उ वै पयोभाजनः । कौ ५, ४; गो २,१, २२; ।

४१. इन्द्र उ वै वसुक्रः । शांआ १,३ ।

४२. इन्द्र उ वै वातापिः स हि वातमाप्त्वा शरीराण्यर्हन्प्रतिपरैति । कौ २७,४ ।

४३. इन्द्र उ वै वेनः (षोडशी [कौ १७,१;४]) । कौ ८,५; १७,१; ४ ।

४४. इन्द्र एकादशाक्षरेण (°क्षरया [काठ.]) त्रिष्टुभमुदजयत् । तैसं १,७,११,२; काठ १४, ४ ।

४५. इन्द्र एष यदुद्गाता । जैउ १, ६,३,२ ।

४६. इन्द्रः क्षत्रम् । माश १०,४,१,५ ।

४७. इन्द्रः खलु वै श्रेष्ठो देवतानामुपदेशनात् । तै २,३,१,३ ।

४८. इन्द्रः पशूनां प्रदाता । काठ १०,८; ११,२ ।

४९. इन्द्रः पृणन्तं पपुरिं चेन्द्र इन्द्र स्तुवन्तं सवितारमिन्द्रः । दधाति शक्रः सुकृतस्य लोक इन्द्रं मन्ये पितरं मातरं च । मै ४, १४, ७ ।

५०. इन्द्रं देवताम् (प्रजापतिर्बाहुभ्यामेवोरसः असृजत) । जै १, ६८ ।

५१. इन्द्रं दैवीर्विशो मरुतोऽनुवर्त्मानः । मै २, ११, १ ।

५२. इन्द्रमच्छ सुता इम इतीन्द्रियस्य वीर्यस्यावरुध्यै । तां ११,१०,४ ।

५३. इन्द्रमदेव्यो माया असचन्त स प्रजापतिमुपाधावत्तस्मा एतं विघनं (क्रतुम्) प्रायच्छत्तेन सर्वा मृधो व्यहत । तां १९,१९,१ ।

५४. इन्द्रमब्रुवन् ( देवाः ) 'त्वं वै नो वीर्यवत्तमोऽसि'···इति । तैसं २,४, २,१ ।
५५. इन्द्रमिद्धरी वहतोऽप्रतिधृष्टशवसम् । मै १,३, ३४ ।
५६. इन्द्रमेव मन्युमन्तं मनस्वन्तं ᳪ स्वेन भागधेयेनोपधावति, स (इन्द्रः) एवास्मिन् (यजमाने) इन्द्रियं मन्युं मनो दधाति, जयति त ᳪ सङ्ग्रामम् । तैसं २,१,३, २ ।
५७. इन्द्रं बलेन ( अवकीर्णी प्रविशति) । जै १,३६२; तैआ २,१८,१ ।
५८. इन्द्रं मध्ये करोति, वायुमभितः, प्राणापानयोर्विधृत्यै । इन्द्रियं वै व्यानः । क ४२,३ ।
५९. इन्द्रश्च नः शुनासीरौ··· । शुनासीरौ···इन्द्रवन्तौ हविरिदं जुषेथाम् । तै २,४, ५,७ ।
६०. इन्द्रश्च वै नमुचिश्चासुरः समदधातां न नौ नक्तं न दिवाहनन्नार्द्रेण न शुष्केणेति तस्य व्युष्टायामनुदित आदित्येऽपां फेनेन शिरोऽछिनत् । तां १२,६,८ ।
६१. इन्द्रस्तद् (यजमानाय विन्दति) यद् दिवि । मै २,२,१३ ।
६२. इन्द्रस्त्रिष्टुभा निधनवन्ति (सामान्यसृजत) । जै १, २९९ ।
६३. इन्द्रस्त्वा रुद्रैर्दक्षिणतो रोचयतु त्रैष्टुभेन छन्दसा । तैआ ४,६,१ ।
६४. इन्द्रस्य क्रोडः (गौरमृगः [मै ३,१४,१३]) । मै ३,१४,१३;१५,७; काठ ५३,६ ।
६५. इन्द्रस्य च त्वा क्षत्रस्य चौजसा जुहोमि । मै ४,७,३ ।
६६. इन्द्रस्य तृतीया (पुरोडाशः [माश.]) । मै ३,१५,५; माश ४,२,५,२२ ।
६७. इन्द्रस्य त्वा जठरे सादयामि । गो २, १,२ ।
६८. इन्द्रस्य (इन्द्रस् [मै ४,१,२]) त्वा बाहुभ्यामुद्यच्छे । तैसं १,१,२,२; मै १,१,२; ४,१,२; काठ १,२; क १,२ ।
६९. इन्द्रस्य त्वेन्द्रियेण व्रतपते व्रतेनादधामि । तै १,१,४,८ ।
७०. इन्द्रस्य त्वेन्द्रियेणौजसे बलायाभिषिञ्चामि । मै ३, ११,८ ।
७१. इन्द्रस्य प्राणोऽसीत्याहेन्द्रियमेवास्मिन् (आमयाविनि) एतेन दधाति । तैसं २,३,११,३ ।
७२. इन्द्रस्य बलाय स्वाहा, मरुतामोजसे स्वाहा । तैसं १,८, १५,२; काठ १५, ८ ।
७३. इन्द्रस्य बाहुरसि दक्षिणः । मै १,१,१०; काठ १,९; क १,९; तै १,१,११,१-२; माश १,३,४,३ ।
७४. इन्द्रस्य बृहत् (साम) । मै २,३,७ ।
७५. इन्द्रस्य भागोऽसि, विष्णोराधिपत्यं (+ क्षत्र ᳪ स्पृतं, पञ्चदशः स्तोमः [तैसं., मै.]) । तैसं ४,३, ९, १; मै २,८,५; काठ २१, १ ।
७६. इन्द्रस्य माध्यन्दिनं सवनम् । कौ १४,५ ।
७७. इन्द्रस्य (विष्णोः) युज्यः सखा । मै १,२,१४;२,३,८; काठ ३,३; क २,१० ।
७८. इन्द्रस्य रूपमृषभो बलाय । मै ३,११,९ ।
७९. इन्द्रस्य रोहिणी ( ज्येष्ठानक्षत्रमिति ) । तै १,५,१,४ ।
८०. इन्द्रस्य वज्रः······प्रति हव्या गृभाय । तैसं ४,६,६,६; काठ ४६,१ ।
८१. इन्द्रस्य वा एतौ हरी । यदुभे बृहद्रथन्तरे । जै १,३४३ । (तु. तां ९,४, ८) ।
८२. इन्द्रस्य वा एषा यज्ञिया तनूर्यद् यज्ञः । तैसं ३,३,७,३ ।
८३. इन्द्रस्य वै मरुतः । कौ ५,४;५ ।

८४. इन्द्रस्य (वरुणस्य) शतभिषक् (नक्षत्रम्)। तै १,५,१,५।
८५. इन्द्रस्याऽक्रूरता अथो आहुः प्रजापतेः। मै ४,२,९।
८६. इन्द्रस्याहं विमृधस्य देवयज्ययाऽसपत्नो भूयासम्। काठ ५,१।
८७. इन्द्रस्याहं देवयज्ययेन्द्रियावी (°यावान् [काठ.]) भूयासम्। तैसं १,६,२,४; काठ ५,१।
८८. इन्द्रस्याहमिन्द्रियावतो देवयज्यया पशुमान् भूयासम्। काठ ५, १।
८९. इन्द्रस्येन्द्रियेणाभिषिञ्चामि। ऐ ८,७।
९०. इन्द्रस्येन्द्रियेणेन्द्रियावान् भूयासम्। काठ ५,५।
९१. इन्द्रस्यैकादशी। मै ३,१५,४;५; काठ ५३,११।
९२. इन्द्रस्यैवैतच्छन्दो यत् त्रिष्टुप्। शांआ १,२।
९३. इन्द्रस्योरुमाविश दक्षिणम्। मै १,२,६; काठ २,६; २४,६; क ११,९; तै १,२,७,१-२।
९४. इन्द्रस्यौजसे स्वाहा। मै २, ६,१२।
९५. इन्द्रस्यौजोऽसि प्रजापते रेतः। मै ४,९,१।
९६. इन्द्रः सप्तहोता (°होत्रा [तै २,२,८,५]) । तै २,२,८,५;३,१,१।
९७. इन्द्रः सर्वा देवता इन्द्रश्रेष्ठा देवाः। माश ३,४, २,२; (तु. जै १,३२१)।
९८. इन्द्रः सुनीत्या सह मा पुनातु। काठसंक ९६ : ६।
९९. इन्द्रः सोमस्य योनिः। मै ३,७,८।
१००. इन्द्रा एकादशाक्षरया त्रिष्टुभमुदजयत्। मै १,११,१०।
१०१. इन्द्राद् बृहत् (सामापाक्रामत्)। काठ १२,५।
१०२. इन्द्राय कृण्वती भागम् इतीन्द्रियमेवास्मिन् (यजमाने) तद्दधाति। जै १,५८।
१०३. इन्द्राय त्रैष्टुभाय पञ्चदशाय बार्हताय ग्रैष्मायैकादशकपालः [°ष्माय पुरोडाशमेकादशकपालम् (निर्वपति [मै.])]। मै ३,१५,१०; काठ ४५,१०।
१०४. इन्द्राय त्वा बृहद्वते वयस्वते उक्थायुवम् (गृह्णामि)। मै १,३,१४।
१०५. इन्द्राय त्वा मरुत्वते (+स्वाहा [मै ४,९,८) । मै १,३, १९; ४,९,८।
१०६. इन्द्राय त्वा हरिवते (गृह्णामि)। मै १,३,३४।
१०७. इन्द्राय त्वेत्याधवनीयम् (अभिमृशेत्)। तैसं ३, २,१,३।
१०८. इन्द्राय त्वौजस्वते एष ते योनिः। मै १,३,३२।
१०९. इन्द्राय नमस्त्रिष्टुभे नमः पञ्चदशाय नमो बृहते नमो ग्रीष्माय नमो दक्षिणायै दिशे नमो व्यानाय नमो रुद्रेभ्यो नमः। काठ ५१,२।
११०. इन्द्राय मन्युमत एकादशकपालं निर्वपेत् सङ्ग्रामे, मन्युना वै वीर्यं करोतीन्द्रियेण जयति। काठ १०,८।
१११. इन्द्राय मन्युमते मनस्वते पुरोडाशमेकादशकपालं निर्वपेत् संग्रामे संयत्ते। तैसं २,२,८,२।
११२. इन्द्राय मरुत्वते नैवारमेकादशकपालम् (पुरोडाशं निर्वपेत्)। मै २, २, ६।
११३. इन्द्राय राज्ञे त्रयस्त्रिंशतिपृष्ठाः (पशवः)। काठ ४९, ७।
११४. इन्द्राय शुनासीराय द्वादशकपालः (पुरोडाशं द्वादशकपालम् [तैसं.])। तैसं १,८,७,१; मै १,१०,१; काठ १५, २।

११५. इन्द्राय सुत्राम्णे पुरोडाशमेकादशकपालम् । तै १,७,३,७ ।
११६. इन्द्राय (+ राज्ञे [काठ., तैसं.]) सूकरः । तैसं ५,५,११,१; मै ३,१४,२१; काठ ४७,१ ।
११७. इन्द्राय स्वपस्याय वेहत् । मै ३,१३,२ ।
११८. इन्द्राय स्वराजे (°याधिराजाय) त्रयस्त्रिंशतिभसदः (°तिककुदः) । काठ ४९,७ ।
११९. इन्द्राय हि सोम आह्रियते । तैसं ६,४,४,१ ।
१२०. इन्द्राया ऽंहोमुचे (+ एकादशकपालं निर्वपेदामयावी [काठ.]) । काठ १०,९; तै १,७,३,७ ।
१२१. इन्द्रायाध्यक्षायानु त्वा माताऽनुमन्यताम् । तैसं १, २,४,२; काठ २,५; क १,१७ ।
१२२. इन्द्रियं (+ वै [मै.]) वीर्यमिन्द्रः । मै ३,४,१; माश २,५,४,८ ।
१२३. इन्द्रियम् (+ वा [मै ४,२,१०; ३,८;४,३; काठ., क.) इन्द्रः । मे ४,७,३; काठ २९,१; क ४५,२; ।
१२४. इन्द्रियाणि शतक्रतो या ते जनेषु पञ्चसु । इन्द्र तानि ता ( त [तैसं.]) आवृणे । तैसं १,६, १२,१; मै ४,१२,२ ।
१२५. इन्द्रेण देवाः (अन्वाभूयन्त ) । काठ ३५, १५ ।
१२६. इन्द्रे हि तौ (अश्विनौ) तानीन्द्रियाणि वीर्याण्याप्त्वाधत्ताम् । मै २, ४,१ ।
१२७. इन्द्रो ज्येष्ठस्य प्रदाता । मै २,२,१३ ।
१२८. इन्द्रो (एवैनम् ) ज्येष्ठानाम् (सुवते) । तै १,७, ४,१ ।
१२९. इन्द्रो ज्येष्ठानाम् (अधिपतिः) । तैसं ३,४,५,१ ।
१३०. इन्द्रो ज्येष्ठामनु नक्षत्रमेति । तै ३,१, २,१ ।
१३१. इन्द्रो ज्योतिर्ज्योतिरिन्द्र इति तदन्तरिक्षलोकं लोकानामाप्नोति माध्यन्दिनं सवनं यज्ञस्य । कौ १४,१ ।
१३२. इन्द्रो देवता (राजन्यस्य) । तां ६,१, ८ ।
१३३. इन्द्रो देवता ककुच्छन्द उक्थानां ( जगती छन्द इन्द्रवायुवोः [ तैसं ३,१,६,२]) पात्रमसि तैसं ३, १,६,२;३ ।
१३४. इन्द्रो देवानामधिपाः पुरोहितो विशां पतिरभवद् वाजिनीवान् । मै ४,१४,१२ ।
१३५. इन्द्रो देवानामोजिष्ठः । काठ ११, ३ ।
१३६. इन्द्रो देवानां भूयिष्ठभाक् । तैआ ५,७,५ ।
१३७. इन्द्रो द्यौरुर्व्युत भूमिरिन्द्रा इन्द्रः समुद्रो अभवद्गभीरः । उर्वन्तरिक्ष ऽं स जभाला इन्द्रा इन्द्रं मन्ये पितरं मातरं च । मे ४,१४,७ ।
१३८. इन्द्रो धाना अत्तु । क ४५,२ ।
१३९. इन्द्रो (+ वै [जै.]) निधनम् । तैसं ३,३,२,१; जै १, ३०४ ।
१४०. इन्द्रो नौधसम् (साम) । जै १,३३५ ।
१४१. इन्द्रो बभूव ब्रह्मणा गभीर इन्द्रा आभूतः परिभूष्विन्द्रः । इन्द्रो भविष्यदुत भूतमिन्द्रा इन्द्रं मन्ये पितरं मातरं च । मे ४,१४,७ ।
१४२. इन्द्रो (श्रियः) बलम् (आदत्त) । माश ११,४,३,३ ।
१४३. इन्द्रो बलं बलपतिः । माश ११,४,३,१२; तै २,५,७,४ ।

१४४. इन्द्रो भूतस्य भुवनस्य राजेन्द्रो दाधार पृथिवीमुतेमाम् । इन्द्रे ह विश्वा भुवनाश्रितानीन्द्रं मन्ये पितरं मातरं च । मै ४,१४,७ ।

१४५. इन्द्रो मरुद्भिः (व्युदक्रामत्) । मै २,२,६; माश ३, ४,२,१ ।

१४६. इन्द्रो मरुद्भिर्ऋतुधा (° धा [तैसं.]) कृणोतु । तैसं २, १,११,२; मै ४, १२, २; काठ १०,१२ ।

१४७. इन्द्रो माध्यन्दिन ९ सवनम् । तैआ ५,१,६ ।

१४८. इन्द्रो मृधां विहन्ता । कौ ४,१ ।

१४९. इन्द्रो मे बले श्रितः । तै ३, १०,८,८ ।

१५०. इन्द्रो यजमानः । काठ ७,१०;३७,८ ।

१५१. इन्द्रो यज्ञस्य देवता ( नेता [माश ४,१,२,१५]) । ऐ ५,३४;६,९; माश २,१,२,११; ४, १,२,१५ ।

१५२. इन्द्रो यज्ञस्यास्मेन्द्रो देवता । माश ९,५,१,३३ ।

१५३. इन्द्रो यतीन् सालावृकेभ्यः प्रायच्छत्तेषां त्रय उदशिष्यन्त रायोवाजो बृहद्गिरिः पृथुरश्मिः । तां ८,१,४ ।

१५४. इन्द्रो यतीन् सालावृकेयेभ्यः प्रायच्छत्तमश्लीला वागभ्यवदत् स प्रजापतिमुपाधावत्तस्मा एतमुपहव्यं प्रायच्छत् । तां १८,१,९ ।

१५५. इन्द्रो यतीन् सालावृकेयेभ्यः प्रायच्छत्तमश्लीला वागभ्यवदत्सोऽशुद्धोऽमन्यत स एते शुद्धाशुद्धीये (सामनी) अपश्यत्ताभ्यामशुध्यत् । तां १९,४,७ (तु. तां १४,११,२८) ।

१५६. इन्द्रो यतीन् सालावृकेयेभ्यः प्रायच्छत्तेषां त्रय उदशिष्यन्त पृथुरश्मिर्बृहद्गिरी रायोवाजः । तां १३, ४,१७ ।

१५७. इन्द्रो रुद्रैः (उदक्रामत्) । ऐ १,२४ ।

१५८. इन्द्रो लोकम्पृणा । माश ८,७,२, ६ ।

१५९ इन्द्रो वज्रस्योद्यन्ता षोडशः । जै १, १९५; ३३१ ।

१६०. इन्द्रो वसुधेयः । माश १,८,२,१६ ।

१६१. इन्द्रो वा अधृतइशिथिल इवामन्यत, सोऽग्नौ चैव बृहस्पतौ चानाथत, तमेतयेष्ट्यायाजयतां यदाग्नेयस्तेज एवास्मि ९ स्तेन पुरस्तादधत्तां, यदैन्द्र (पुरोडाशः) इन्द्रियमेवास्मि ९ स्तेन मध्यतोऽधत्तां, यद् बार्हस्पत्य उपरिष्टादेवास्मि ९ स्तेन ब्रह्मवर्चसमधत्ताम् । काठ ११, १ ।

१६२. इन्द्रो वा अश्वः । कौ १५, ४ ।

१६३. इन्द्रो वा असुरान् हत्वाऽपूत इवामेध्योऽमन्यत, सोऽकामयत शुद्धमेव मासन्तं शुद्धेन साम्ना स्तुयुरिति···ततो वा इन्द्रः पूतः शुद्धो मेध्योऽभवत् । जै ३,२२८ ।

१६४. इन्द्रो वा अस्येन्द्रियेणापक्रामति वरुण एनं वरुणपाशेन गृह्णाति···यः पाप्मना गृहीतो भवति । तैसं २,३,१३,१-२ ।

१६५. इन्द्रो वा एतस्या (सूतवशायाः) अजायत । काठ १३,४ ।

१६६. इन्द्रो वा एष पुरा वृत्रस्य वधादथ वृत्र ९ हत्वा यथा महाराजो विजिग्यान एवं महेन्द्रो

ऽभवत् । माश १,६,४,२१;४,२,३,१७ ।

१६७. इन्द्रो वागित्यु वाऽआहुः । माश १,४,५,४ ।

१६८. इन्द्रो विश्वजिदिन्द्रो हीदं सर्वं विश्वमजयत् । कौ २४,१ ।

१६९. इन्द्रो वृत्रं वज्रेणाध्यस्य नास्तृषीति मन्यमानः स ऊतीकानेव प्राविशत् । तस्मै त एवोतिमविन्दन् । जै १,३५४ ।

१७०. इन्द्रो वृत्र ँ वज्रेणावधीद्धीन्द्रो व्य ँ समुत शुष्णमिन्द्रः । इन्द्रः पुरः शम्बरस्याभिनद्धीन्द्रं मन्ये पितरं मातरं च । मै ४,१४,७ ।

१७१. इन्द्रो वृत्र ँ हत्वा देवताभिश्चेन्द्रियेण च व्यार्धत् । तै १,६,१,७ ।

१७२. इन्द्रो वृत्रमहन् (एकविंशेन षोडशिना) । जै १,१९५ ।

१७३. इन्द्रो वृत्रहेन्द्रोऽभिमातिहेन्द्रो वृत्रतूरुन्नीयमानः (सोमः) । काठ ३४, १५ ।

१७४. इन्द्रो वृद्धश्रवाः (वृषा [माश.]) । मै २,६,९; माश १,४,१,३३ ।

१७५. इन्द्रो वै गोपाः (चतुर्होता [तै.]) । ऐ ६, १०; गो २,२, २०; तै २,३,१,३ ।

१७६. इन्द्रो वै त्राता, इन्द्रोऽपरोद्धा । मै २, २, १० ।

१७७. इन्द्रो वै त्रिशिरसं त्वाष्ट्रमहन् । तां १७,५,१ ।

१७८. इन्द्रो वै त्वष्टा । ऐ ६,१० ।

१७९. इन्द्रो वै देवानां क्षेत्रंजयः । मै २,२, ११ ।

१८०. इन्द्रो वै देवानामधिराजः । मै २,२,११ ।

१८१. इन्द्रो वै देवानामोजिष्ठो बलिष्ठः (+सहिष्ठः सत्तमः पारयिष्णुतमः [ऐ.]) । कौ ६, १४; गो २,१,३; ऐ ७,१६;८,१२ ।

१८२. इन्द्रो वै प्रदाता स एवास्मै यज्ञं प्रयच्छति । कौ ४,२ ।

१८३. इन्द्रो वै प्रासहस्पतिस्तुविष्मान् । ऐ ३,२२ ।

१८४. इन्द्रो वै मघवान् । माश ४,१,२,१५;१६ ।

१८५. इन्द्रो वै मरुतः क्रीडिनः । गो २,१,२३ ।

१८६. इन्द्रो वै मरुतः सान्तपनाः । गो २,१,२३ ।

१८७. इन्द्रो वै यजमानः । माश २,१,२,११; ४,५,४,८; ५,१,३,४;४,३ ।

१८८. इन्द्रो वै यज्ञस्य देवता । माश १,४,१, ३३;५, ४;२,३,४, ३८ ।

१८९. इन्द्रो वै यतीन् सालावृकेयेभ्यः प्रायच्छत् (+ तेषां वा एतानि शीर्षाणि यत् खर्जूराः [मै.]) । मै १,१०,१२; काठ ८,५ । (तु. १५३-१५६ इहोद्धारा अपि) ।

१९०. इन्द्रो वै युधाजित् । तां ७,५,१४ ।

१९१. इन्द्रो वै वरुणः स उ वै पयोभाजनः । गो २,१,२२ । इन्द्रो वै वाजी । ऐ ३,१८ ।

१९२. इन्द्रो वै विलिस्तेङ्गां दानवीमकामयत, सोऽसुरेष्वचरत् स्त्र्येव स्त्रीष्वभवत् पुमान् पुंस्सु स निर्ऋतिगृहीत इवामन्यत । काठ १३, ५ ।

१९३. इन्द्रो वै वृत्रं हत्वा महान् (विश्वकर्मा [ऐ.]) अभवत् । ऐआ १.१,१; ऐ ४,२२ ।

१९४. इन्द्रो वै वृत्र ँ हत्वा स महेन्द्रोऽभवत् । क ४४,३ ।

१९५. इन्द्रो वै वृषा (वृत्रहा [कौ.]) । काठ २७,१; क ४२,१; तां ९,४,३; कौ ४, ३ ।

१९६. इन्द्रो वै वेधाः । ऐ ६,१०; गो २,२,२० ।

१९७. इन्द्रो वै श्रेष्ठो देवतानाम् । जै १, ३०४ ।

१९८. इन्द्रो वै संग्रामस्य विनेतेन्द्रो विजापयिता । काठ १३,५ ।

१९९. इन्द्रोऽसि सत्यौजाः । तैसं १,८,१६,१; मै २,६,१२; काठ १५,८ ।

२००. इन्द्रोऽस्मे भवतु वज्रबाहुरिन्द्रे भूतानि भुवनानीन्द्रे । अस्माकमिन्द्रो भवतु प्रसाह इन्द्रं मन्ये पितरं मातरं च । मै ४, १४,७ ।

२०१. इन्द्रो हविर्धाने (सोमः) । तैसं ४, ४,९,१ ।

२०२. इन्द्रो ह वै षोडशी । माश ४,५,३,१ ।

२०३. इन्द्रो हि देवानां वसु । तैसं २,५,३,७ ।

२०४. इन्द्रो हि षोडशी । काठ १४, ९; माश ४,२, ५,१४ ।

२०५. इन्द्रौजसां पते । तै ३, ११,४,२; ।

२०६. इन्द्रौजस्कारौजस्वा ९ स्त्व ९ सहस्वान् देवेष्वेध्योजस्वन्तं मा ९ सहस्वन्तं मनुष्येषु कुरु । मै ४,७,३ ।

२०७. इन्धो वै नामैष योऽयं दक्षिणेऽक्षन्पुरुषस्तं वाऽएतमिन्ध ९ सन्तमिन्द्र इत्याचक्षते परोऽक्षेणेव । माश १४,६,११,२ ।

२०८. इयं (पृथिवी) वा इन्द्रो मघवा विरप्शी । ऐ ३,३८ ।

२०९. उग्रा च भीमा च पितॄणां (°तृ°[तैसं]) यमस्येन्द्रस्य । तैसं ४, ४,११, २; काठ २२,५ ।

२१०. उग्रामातिष्ठ, त्रिष्टुप्त्वा छन्दसामवतु (°सावतु [काठ.] पञ्चदशः स्तोमो, बृहत्सामेन्द्रो देवता, क्षत्रं द्रविणम् । तैसं १,८,१३,१; मै २,६,१०; काठ १५,७ ।

२११. उदीच्यां वृत्रहन् वृत्रहाऽसि । तैसं २, ४,१४,१; मै ४,१२,२ ।

२१२. उष्णिक्ककुब्भ्यां वा इन्द्रो वृत्राय वज्रमुदयच्छद् गायत्र्योस्तिष्ठन् । जै १,१५८ ।

२१३. ऋक्सामे वा इन्द्रस्य हरी । मै ३,१०,६; ४,७,४; ऐ २,२४; तै १,६,३,९ ।

२१४. ऋचश्च सामानि चेन्द्रः (स्वभागरूपेणाभजत) । यजूंषि विष्णुः । माश ४, ६,७,३ ।

२१५. ऋतमसि सत्यं नामेन्द्रस्याऽऽधिपत्ये क्षत्रं मे दाः । तैसं ३,३,५,१ ।

२१६. ऋभवो वा इन्द्रस्य प्रियं धाम । तां १४, २,५ ।

२१७. ऋषभमिन्द्राय (+सुत्राम्ण आलभते [माश.]) । मै ३,११,२; माश ५,५,४,१ ।

२१८. ऋषभेण क्रीणाति, सेन्द्रमेव क्रीणाति । मै ३,७,७ ।

२१९. एकाष्टका तपसा तप्यमाना जजान गर्भं महिमानमिन्द्रम् । तेन दस्यून् व्यसहन्त देवा हन्ताऽसुराणामभवच्छचीभिः । तैसं ४, ३,११, ३ ।

२२०. एतद्ध वा आसाम् (शक्वरीणाम्=महानाम्नीनाम् ) एकं नाम यद् इन्द्राः । जै ३, १०८ ।

२२१. एतद्वाऽइन्द्रस्य निष्केवल्य ९ सवनं यन्माध्यन्दिन ९ सवनं तेन वृत्रमजिघांसत्तेन व्यजिगीषत । माश ४,३,३,६ ।

२२२. एतद्वा इन्द्रस्य रूपं यदृषभः । माश २,५,३,१८ ।

२२३. एतस्यां (एकाष्टकायाम् ) वा इन्द्रोऽजायत, स देवानां वीर्यावत्तमः तस्माद् य एकाष्टकायां पशूनां जायते स वीर्यावान् भवति । काठ १३,३ ।

२२४. एतानि वै सर्वाणि (यमराज्यमग्निष्टोमेन सोमराज्यमुक्थ्येन, सूर्यराज्यं षोडशिना, स्वराज्यमतिरात्रेण) इन्द्रोऽभवत् । मै १,८,६ ।

२२५. एते इन्द्रस्यान्त्ये तन्वौ यदर्कवती । काठ १०,९ ।

२२६. एतेन (पारुच्छेपेन रोहिताख्येन छन्दसा) वा इन्द्रः सप्त स्वर्गांल्लोकानरोहत् । ऐ ५, १० ।

२२७. एष इन्द्र एष प्रजापतिः (य एष तपति) । जै १,८ ।

२२८. एष एवेन्द्रः । य एष (सूर्य्यः) तपति । माश १, ६,४,१८ ।

२२९. एष एवेन्द्रः । यदाहवनीयः । माश २,३,२,२ ।

२३०. एष वाऽअत्रेन्द्रो भवति यद्यजमानः । माश ३,३,३,१० ।

२३१. एष वाऽइन्द्रो य एष (सूर्य्यः) तपति । माश २,३,४,१२;३,४,२,१५ ।

२३२. एष वा एतर्हीन्द्रो यो यजते । तै १,३,६,३ ।

२३३. एष वै शुक्रो य एष (सूर्यः)तपत्येष (सूर्यः) उ एवेन्द्रः । माश ४,५,५,७;९,४ ।

२३४. एषा वा इन्द्रस्य भेषजा तनूर्यद् ९ होमुक् । मै २,२,१० ।

२३५. एषा ह खलु वै यजमानस्य नेदिष्ठं देवता यदिन्द्रः । जै १,२०० ।

२३६. एषो (इन्द्रः)ऽर्धभाग्देवतानाम् । मै ३, ४, १ ।

२३७. ओकः सारी वा इन्द्रः । ऐ ६,१७; २२; गो २,५,१५ ।

२३८. ओकः सारी हैवैषामिन्द्रो भवति यथा गौः प्रज्ञातं गोष्ठम् । गो २,६,४ ।

२३९. ओजस्विनी नामासि दक्षिणा दिक्, तस्यास्त इन्द्रोऽधिपतिः, पृदाकुः । तैसं ५,५, १०, १ ।

२४०. ओजो वा इन्द्रः । तैसं ५, ३, ४, २ ।

२४१. ओहो वै नामेन्द्रः । जै १, ३३८ ।

२४२. कालकञ्जा वै नामासुरा आसन् । ते सुवर्गाय लोकायाग्निमचिन्वत । पुरुष इष्टकामुपादधात् पुरुष इष्टकाम् । स इन्द्रो ब्राह्मणो ब्रुवाण इष्टकामुपाधत्त । एषा मे चित्रा नामेति । ते सुवर्गलोकमाप्रारोहन् । स इन्द्र इष्टकामवृहत् । तेऽवाकीर्यन्त येऽवाकीर्यन्त । त ऊर्णनाभयोऽभवन् । द्वावुदपतताम् । तौ दिव्यौ श्वानावभवताम् । तै १,१,२, ४-६ । (तु. मै १,६, ९; काठ ८,१) ।

२४३. किं खलु वै तेऽस्तीति (प्रजापतिरिन्द्रम्) अब्रवीत् । 'स्तो न्वै म इमौ प्राणापानौ' इति (इन्द्रः प्रत्युवाच) । जै २,४०९ ।

२४४. क्षत्रं वा इन्द्रः मै १,१०,१३;२,१,८; काठ १०,११;११,१;२९,९; क ४६, ३; कौ १२,८; तै ३,९,१६,३; माश २,५,२, २७; २,५,४,८;३,९,१,१६;४,३,३,६ ।

२४५. क्षत्रमिन्द्रः । जै १,१८२ ।

२४६. चतुर्होत्रा वै देवा इन्द्रमजनयन् । मै १,९,५; काठ ९, १४ ।

२४७. चत्वारो वरा देया ब्रह्मण उद्गात्रे होत्रेऽध्वर्यवे । एते वै यज्ञस्येन्द्राः । तानेव प्रीणाति । काठ ३५,१६; क ४८,१४ ।

२४८. चत्वारो वै पृश्नेः स्तना आस९स्ततस्त्रिभिर्देवेभ्योऽदुहत् कुशीभिरेकोऽनुनद्ध आसीत् । स९वा इन्द्र एवापश्यत्, तेनैन्द्रायैवादुहत्, तद्वा अस्य (इन्द्रस्य) कौशिकत्वम् । मै ४,५,७ ।

२४९. चित्तिः स्रुक्, चित्तमाज्यं, वाग्वेदिर् आधीतं बर्हिः, केतो अग्निर्, विज्ञातमग्नीद्, वाचस्पतिर्होता, मन उपवक्ता, प्राणो हविः, सामाध्वर्युर्, इन्द्रं गच्छ स्वाहा । मै १, ९, १; काठ ९,८ ।

२५०. चित्रा नक्षत्रमिन्द्रो देवता । तैसं ४,४, १०,२ ।

२५१. जगृह्मा ते दक्षिणमिन्द्र । हस्तम् । मै ४,१४,८ ।

२५२. तं (इन्द्रं) वसिष्ठः प्रत्यक्षमपश्यत् । तैसं ३,५,२,१ ।

२५३. तꣳ वा इन्द्रमन्तरेव गर्भꣳ सन्तमयस्मयेन दाम्नापौम्भत्, सोऽपोब्धोऽजायत, तꣳ वा एतेन बृहस्पतिरयाजयदैन्द्राबार्हस्पत्येन, तस्य (इन्द्रस्य) तद्दाम स्वयमेव व्यपद्यत, स इमा दिशो वज्रेणाभिपर्यावर्तत । मै २,१,१२ ।

२५४. तं हेन्द्र उवाच विश्वामित्र वरं वृणोष्वेति स होवाच विश्वामित्रस्त्वामेव विजानीयामिति, द्वितीयमिति, त्वामेवेति, तृतीयमिति, त्वामेवेति । शांआ १,६ ।

२५५. त इन्द्राया ꣳहोमुचे पुरोडाशमेकादशकपालं निरवपन्निन्द्राय वैमृधायेन्द्रायेन्द्रियावते त्रयस्त्रि ꣳशत्कपालं पुरोडाशं निरवपन् (देवाः), त्रयस्त्रि ꣳशद् वै देवताः । तैसं २,४,२,२ ।

२५६. त एकवि ꣳ शमेवायतनमचाय ꣳस्त इन्द्रमजनयन् । काठ ९,११ ।

२५७. स एनम् (इन्द्रम् ) अध्यक्रीडन् (मरुतः) । तै १,६,७,५ ।

२५८. ततः प्राणोऽजायत स (प्राणः) इन्द्रः । माश १४,४,३,१९ ।

२५९. ततो वा इदमिन्द्रो विश्वमजयद्यद्विश्वमजयत्तस्माद्विश्वजित् । तां १६,४,५ ।

२६०. ततो वा इन्द्र उदतिष्ठत्, सोदीची दिक् । तैआ १, २३,६ ।

२६१. ततो वा इन्द्रो देवानामधिपतिरभवत् । तै २,२,१०,३ ।

२६२. ततो हैव गौरो भूत्वा (इन्द्रः) अर्णवमवचस्कन्द । जै २,७९ ।

२६३. तदाहुर्न ऋत इन्द्राद्यज्ञोऽस्त्विति । मै ३, ४,१० ।

२६४. तदिन्द्रं यजमानमकृत् । जै १, ३३१ ।

२६५. तम् (दशरात्रम्, इन्द्रः ) आहरत् तेनायजत, ततो वै सोऽन्याभिर्देवताभिर्व्यावृतमगच्छत् । तैसं ७,२,५,२ ।

२६६. तमिन्द्र उवाच (विश्वामित्रम्) - प्राणो वा अहमस्म्यृषे प्राणस्त्वम् प्राणः सर्वाणि भूतानि । ऐआ २,२,३ ।

२६७. तमिन्द्र उवाच ( प्रतर्दनं दैवोदासिम् ) 'मामेव विजानीह्येतदेवाहं मनुष्याय हिततमं मन्ये । शांआ ५,१; कौउ ३,१ ।

२६८. तमिन्द्रो दिद्वेष (त्रिशीर्षाणं त्वाष्ट्रं विश्वरूपं) तस्य तानि शीर्षाणि प्रचिच्छेद । माश १,६,३, २ ।

२६९. तयैव (इष्ट्या) अस्मिन् ( इन्द्रे) तेज इन्द्रियं ब्रह्मवर्चसमधत्ताम् (अग्नीषोमौ)। तैसं २,३.३,१-२ ।

२७०. तव स्तोमेनेतीन्द्रम् (अब्रुवन् देवाः)। जै १,२११ ।

२७१. तस्मादाहुरिन्द्रो वागिति । माश ११,१, ६,१८ ।

२७२. तस्माद् (प्रजापतेः) देवता व्युदक्रामंस्तमिन्द्र एव देवतानां नाजहात् । जै २, ४०९ ।

२७३. तस्मादाहेन्द्रो ब्रह्मेति । कौ ६,१४ ।
२७४. तस्मै (इन्द्राय) शक्वर्यः प्रायच्छत् (प्रजापतिः)। ततो वा इन्द्रो वृत्रमहन् । जै १, १९४।
२७५. तस्य ह (क्षत्रियस्य) दीक्षमाणस्येन्द्र एवे न्द्रियमादत्ते । ऐ ७, २३ ।
२७६. तस्यासौ (इन्द्रस्य, द्यु- ) लोको नाभिजित आसीत्तं (इन्द्रः) विश्वकर्मा भूत्वाऽभ्यजयत्। तै १,२,३,३ ।
२७७ तस्येन्द्रो वम्रिरूपेण ( अरुणकेतुकस्याग्नेः ) धनुर्ज्यामच्छिनत् स्वयं तदिन्द्रधनुरित्यज्यम्। अभ्रवर्णेषु चक्षते । एतदेवशंयोर्बार्हस्पत्यस्य । एतद्रुद्रस्य धनुः रुद्रस्य त्वेव धनुरार्त्निः। शिर उत्पिपेष । स प्रवर्ग्योऽभवत् । तैआ १,५,२ ।
२७८. तस्यैतयैव सुरयेन्द्रियं वीर्यं ँ सोमपीथमन्नाद्यमहरत् (नमुचिः, इन्द्रस्य), स ह न्यर्णः शिश्ये । माश १२,७,१, १० ।
२७९. तान् (पशून् ) इन्द्रः पञ्चदशेन स्तोमेन नाप्नोत् । तै २,७, १४,२ ।
२८०. ताभ्यः (महानाम्नीभ्यः = शक्वरीभ्यः) तत् (स्वंनाम) प्रायच्छत् तस्मादेता इन्द्रा नामैतद्ध वा आसां प्रियं गुह्यं नाम यदिन्द्राः । जै ३,१११ ।
२८१. तामब्रुवन् (गाम् ) 'इन्द्राय उदेहि···इति सा शबली पष्ठौह्युदैत् सैषेन्द्रेण्या दीयते । तां २१,१,५ ।
२८२. तामिन्द्रो (वाचं ) मध्यतो ऽवक्रम्य व्याकरोत्, तस्मादियं व्याकृता वागुद्यते । तैसं ६,४,७,४ ।
२८३. तिस्रो म (इन्द्रस्य) इमास्तनुवो वीर्यावतीः इयमॅ होमुगियं विमृधेयमिन्द्रियावती । तैसं २,४,२,१ ।
२८४. तेज एवास्मिन् (इन्द्रे) अग्निराग्नेयेनादधादिन्द्रियँ सोमः सौम्येन । काठ १०,२ ।
२८५. ते ये शतं देवानामानन्दाः । स एक इन्द्रस्यानन्दः । तैआ ८,८,३; तैउ २,८, ३ ।
२८६. तेषां ह स्मेन्द्रो मेधातिथेर्मेषस्य रूपं कृत्वा सोमं व्रतयति । जै ३,२३४ ।
२८७. ते ( देवाः ) होचुः । इन्द्रो वै नो वीर्यवत्तमः । माश ४,६, ६,३ ।
२८८. (इन्द्र उवाच) त्रिशीर्षाणं त्वाष्ट्रमहनमरुर्मुखान् यतीन् सालावृकेभ्यः प्रायच्छं बह्वीः सन्धा अतिक्रम्य दिवि प्रह्लादीयानतृणमहमन्तरिक्षे पौलोमान् पृथिव्यां कालकाञ्जांस्तस्य मे तत्र न लोम च नामीयते । कौउ ३,१; (तु. शांआ ५,१) ।
३८९. त्रिष्टुप्छन्दस्तद्धिरण्यमिन्द्रो देवता । मै २, १३, १४; काठ ३९, ४ ।
३९०. त्रिष्टुब्वा इन्द्रस्य स्वं छन्दः । काठ ११,३ ।
३९१. त्रैष्टुभ इन्द्रः । कौ ३,२; २२,७; जै १, ३३१ ।
३९२. दक्षिणतो वृषभ एधि हव्यः (इन्द्र!) । तैसं २,४,१४,२ ।
३९३. दक्षिणया त्वा दिशा सादयामीन्द्रेण देवेन देवतया त्रैष्टुभेन छन्दसाग्नेः पक्षमुपदधामि । मै २,८,११ ।
२९४. दक्षिणा दिगिन्द्रो देवता । मै १,५,४; काठ ७, २; तै ३,११,५,१ ।
२९५. दक्षिणा दिग् ग्रीष्म ऋतुरिन्द्रो देवता, क्षत्रं द्रविणं, त्रिष्टुप्छन्दो, बृहत्साम, पञ्चदशः स्तोमः स उ सप्तदशवर्तनिः, सनातना ऋषिर्दित्यवाड् वयस्त्रेतायानां दक्षिणाद्वातो वातः । मै २,७,२० ।

२९६. देवलोको (पञ्चदशो [जै.]) वा इन्द्रः। कौ १६,८; २,२०।

२९७. देवास्त्वेन्द्रज्येष्ठा वरुणराजानोऽधस्ताच्चोपरिष्टाच्च पान्तु। तैसं ५,५,९,५।

२९८. द्यौरिन्द्रेण गर्भिणी। माश १४,९,४,२१।

२९९. द्वयेन वाऽएष इन्द्रो भवति यच्च क्षत्रियो यदु च यजमानः। माश ५,३, ५,२७।

३००. द्विभाग (मध्यस्थो वा [कौ.]) इन्द्रः। तैसं ७,१,५,५; कौ ५,४।

३०१. द्वेऽइन्द्रस्तृतीये, तृतीयं विष्णुः। माश ४,६,७,३।

३०२. द्वौ तव भागौ इतीन्द्रन् (प्रजापतिः) अब्रवीत्। जै २, २४३।

३०३. धर्म इन्द्रो राजेत्याह तस्य देवा विशस्तऽइमऽआसत इति श्रोत्रिया अप्रतिग्राहका उपसमेता भवन्ति तानुपदिशति सामानि वेदः सोऽयमिति। माश १३. ४,३,१४।

३०४. न पुरा सूर्यस्योदेतोर्मन्थितवा असुर्यो विश्वदेवा ( विदेवः ) आधीयत उद्यत्सु रश्मिषु (अग्निः) मध्यस्तत्, सदेवः सेन्द्रः (इन्द्रः = सूर्यः, देवाः = रश्मयः)। मै १,६,१०।

३०५. नमुचिर्ह वै नामासुर आस तमिन्द्रो निविव्याध तस्य पदा शिरोऽभितष्ठौ स यदभिष्ठित उदबाधत स उच्छ्वङ्कस्तस्य पदा शिरः प्रचिच्छेद ततो रक्षः समभवत्। माश ५,४,१,९।

३०६. न ह वा इन्द्रः कंचन भ्रातृव्यं पश्यते। जैउ १,१४,४,६।

३०७. नित्यास्ते (अग्नि-वायु-संवत्सराः) ऽनुचरास्तव (हे इन्द्र)। तैआ १,१२,३।

३०८. पञ्चदशभिरस्तुवत, क्षत्रमसृज्यतेन्द्रोऽधिपतिरासीत्। तैसं ४,३,१०,२; मै २,८,६।

३०९. पुत्रवती दक्षिणत इन्द्रस्याधिपत्ये, प्रजां मे दाः। मै ४,९, ३; तैआ ४,५, ३।

३१०. प्रजापतिर्वै देवेभ्यो भागधेयानि व्यादिशत्, तदिन्द्रियमत्यरिच्यत, तदिन्द्रोऽब्रवीन्मयी-दमस्त्विति, तदस्मिन्नदधात्। काठ १०, १०।

३११. प्राच्यां दिशि त्वमिन्द्रासि राजोतोदीच्या ऽ वृत्रहन् वृत्रहासि। यत्र यन्ति स्रोत्यास्तज्जितं ते, दक्षिणतो वृषभो हव्य एधि (°भ एधि हव्यः [तैसं.])। तैसं २,४,१४,३; मै ४, १२,२।

३१२. प्राण (+एव [माश १२,९,१,१४]) इन्द्रः। माश ६,१,२,२८; १२,९,१,१४।

३१३. प्राणापानौ वा अस्य (इन्द्रस्य) हरी तौ हीदं सर्वं हर्तारौ हरतः। जै २,७९।

३१४. बल इन्द्रम् (प्रजापतिरावेशयत्)। शांआ ११, १।

३१५. बृहतीमिन्द्राय वाचं वद। काठ २,११; क २,५;४०,२।

३१६. बृहस्पतिर्विश्वकर्मेन्द्रो गन्धर्वस्तस्य मरुतोऽप्सरसा ओजो नाम। मै २,१२, २।

३१७. ब्रह्मणश्च त्वा क्षत्रस्य चौजसे (इन्द्र) जुहोमि। तैसं ३,३,१,१-२।

३१८. मन (रुक्म [माश १०, ४,१,६] ) एवेन्द्रः। माश १०, ४,१,६; १२, ९,१,१३ ( तु. गो २,४,११)।

३१९. मन्युना वै युजेन्द्रोऽसुरानवाबाधत। मै ४, ६,३।

३२०. मयीन्द्र इन्द्रियं दधातु। तैआ ४,४२,२ (तु. तां १,३,५; माश १, ८,१,४२)।

३२१. मरुतो ह वै क्रीडिनो वृत्र ऽ हनिष्यन्तमिन्द्रमागतं तमभितः परिचिक्रीडुर्महयन्तः। माश २,५,३,२०।

३२२. मरुत्वान् वा इन्द्रः। जै १,११६।

३२३. मरुद्भिर्वै वीर्येणेन्द्रो वृत्रमहन्, न ऋते मरुद्भ्योऽशक्नोद्वीर्यं कर्तुम् । मै ४, ६, ८ ।
३२४. महाँ इन्द्रो य ओजसा पर्जन्यो वृष्टिमाँ इव…वावृधे । काठ ४,८; क ३, ६ ।
३२५. महानाम्नीभिर्वा इन्द्रो वृत्रमहन् । कौ २३,२ ।
३२६. मुखादिन्द्रश्चाग्निश्च (अजायत) । तैआ ३, १२,६ ।
३२७. मेधातिथेर्ह मेषो भूत्वा (इन्द्रः) राजानं (सोमम्) पपौ । जै २, ७९ ।
३२८. य एवासौ (आदित्यः)तपत्येष एवेन्द्रः । जै १, ३३८ ।
३२९. यतरस्मिन् खलु वै संग्राम इन्द्रो भवति स जयति । मै १, ९,६ ।
३३०. यतरेषामिन्द्रो भवति ते संग्रामं जयन्ति । काठ ९,१४ ।
३३१. यत्परं भाः प्रजापतिर्वा स इन्द्रो वा । माश २, ३, १, ७ ।
३३२. यत्पुरस्ताद्वासीन्द्रो राजा भूतो वासि । जैउ ३,५, १,२ ।
३३३. यत्र देवास्तदिन्द्रः । मै ४,२,६ ।
३३४. यत्र वा अद इन्द्र ५ सोमोऽत्यपवत ततः शार्दूलः समभवत् तस्मादाह सोमस्य त्विषिरसीति । काश ७,२,४,३ ।
३३५. यत्र वै सोम इन्द्रमत्यपवत स यत्ततः शार्दूलः समभवत्तेन सोमस्य त्विषिः । माश ५,३, ५,३;४,१,११ ।
३३६. यत्रेन्द्रं देवताः (यज्ञेषु) पर्यवृञ्जन्, (यतः स इन्द्रः) विश्वरूपं त्वाष्ट्रमभ्यमंस्त वृत्रमस्तृत यतीन्त्सालावृकेभ्यः प्रादादरुर्मघानवधीद् बृहस्पतेः प्रत्यवधीदिति तत्रेन्द्रः सोमपीथेन व्यार्ध्यत । ऐ ७,२८ ।
३३७. यत्रेन्द्रस्य मेषस्य हविषः प्रिया धामानि …तत्रैतान् प्रस्तुत्येवोपस्तुत्येवोपावस्रक्षत् । काठ १८, २१ ।
३३८. यत्सर्वेषामर्धमिन्द्रः प्रति तस्मादिन्द्रो देवतानां भूयिष्ठभाक्तमः । तैसं ५, ४, ८,३ ।
३३९. यत्साकमेधैर्यजतऽइन्द्र एव तर्हि भवतीन्द्रस्यैव सायुज्य ५ सलोकतां जयति । माश २,६,४,८ ।
३४०. यदा वृत्रमतरच्छूरा इन्द्रो अथैकराजो अभवज्जनानाम् । मै ४,१४,१३ ।
३४१. यदिन्द्राय बार्हताय (निर्वपति) यदेवेन्द्रस्य तेजस्तदेवावरुन्धे । तैसं २,३,७, २ ।
३४२. यदिन्द्रोऽपिबच्छचीभिः । अहं तस्य मनसा शिवेन । सोम राजानमिह भक्षयामि । तै १,४,२,३ ।
३४३. यदिन्द्रो युधाजीवन्नेतत्सामापश्यत् तद् यौधाजयस्य यौधाजयत्वम् । जै ६,१२२ ।
३४४. यदेकादशेऽहन् प्रवृज्यते । इन्द्रो भूत्वा त्रिष्टुभमेति । तैआ ५, १२,३ ।
३४५. यद् द्याव इन्द्र ते शतं शतं भूमीरुत स्युः । न त्वा वज्रिन् सहस्रं सूर्या अनु न जातमष्ट रोदसी । काठ १२,१५ ।
३४६. यद्ध वा (इन्द्रः) असुरैर्महासंग्रामं संयेते, तद्ध वेदान् निराचकार । तान् (वेदान्) ह विश्वामित्रादधिजगे । ततो हैव कौशिक ऊचे । जै २, ७९ ।
३४७. यद्वा इदं किंच, तदिन्द्रस्य परिभूतम् । काठ ३१, १ ।
३४८. यश्छन्दसामृषभो विश्वरूपः । छन्दोभ्योऽध्यमृतात्संबभूव स मेन्द्रो मेधया स्पृणोतु (प्रीणयतु) । तैआ ७,४,१; तैउ १,४,१ ।

३४९. या रोहिणी तामरुणा, तां गौरी, तां बभ्रूः। तदिन्द्रा उदाजत वसुर्नाम रूपं पशूनाम्। मै ४,२,४।

३५०. यावद्ध वा इन्द्र एतमात्मानं न विजज्ञे तावदेनमसुरा अभिबभूवुः, स यदा विजज्ञेऽथ हत्वा ऽसुरान्विजित्य सर्वेषां च देवानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं पर्यैत्। शांआ ६, २०; कौउ ४,२०।

३५१. यासामिन्द्र उदाजत वसु नाम रूपं पशूनामुपसं धाम पश्यमानः तासामयं योनिः। मै ४,२,११।

३५२. युक्ता ह्यस्य (इन्द्रस्य) हरयः शतादशेति। सहस्रं हैत आदित्यस्य रश्मयः (इन्द्रः =आदित्यः)। जैउ १,१४,३,५।

३५३. ये स्थविष्ठास् (तण्डुलाः) तानिन्द्राय प्रदात्रे दध ऽ इचरुम् (कुर्यात्)। तैसं २, ५, ५, २।

३५४. योऽयं चक्षुषि पुरुष एष इन्द्रः। जैउ १,१४,२,१०।

३५५. यो वै कश्च यज्ञस्तायत इन्द्रस्यैव सः। काश ३,२,२, ४।

३५६. यो वै वायुः स इन्द्रो य इन्द्रः स वायुः। माश ४,१,३,१९।

३५७. यो ह खलु वाव प्रजापतिस्स एवेन्द्रः (स उ वेवेन्द्रः [तै.])। काठ ३३,४; तै १, २,२,५।

३५८. रुद्रास्त्वा प्रवृहन्तु त्रैष्टुभेन छन्दसेन्द्रस्य प्रियं पाथ उपेहि। तैसं ३, ३, २, १।

३५९. रेत (शिश्नम् [माश १२,९ १,१६]) इन्द्रः। माश १२, ९,१,१६;१७।

३६०. वज्रः पञ्चदशः इन्द्रो वज्रस्योद्यन्ता षोडशः। जै १,३३१।

३६१. वाग् (+एव [जै.]; वा [कौ.]) इन्द्रः। कौ २,७;१३,५; जै २,७७; माश ८,७,२,६।

३६२. वाजिमद्वा इन्द्रस्य रूपम्। ऐआ १, २,१।

३६३. वायाविन्द्रो वैकुण्ठः। शांआ ६,२; कौउ ४,२।

३६४. वायुः पूतः पवित्रेण प्राक् सोमो अतिस्रुतः। इन्द्रस्य युज्यः सखा। वायोः पूतः पवित्रेण प्रत्यक् सोमो अतिस्रुतः। इन्द्रस्य युज्यः सखा। मै ३, ११,७।

३६५. विराडसि, दक्षिणा दिग्, रुद्रास्ते देवा अधिपतया (°य [तैसं.]) इन्द्रो हेतीनां प्रतिधर्ता पञ्चदशस्त्वा स्तोमः पृथिव्या ऽ श्रयतु, प्रउगमुक्थमव्यथायै स्तभ्नोतु बृहत् साम। तैसं ४,४,२,१; मै २, ८,९।

३६६. विश्वानि मे कर्माणि कृतान्यासन्निति विश्वकर्मा हि सोऽभवद् (इन्द्रः) वृत्र ऽ हत्वा। मै १,१०,१६।

३६७. वीर्यम् (+वा [मै २,४,२; गो., तां.]) इन्द्रः। मै १,९,३; ४,४,५;७,८; काठ ९,११; गो २, ६,७; तां ९, ७, ५; ८; तै १,७,२,२।

३६८. वृद्धानामिन्द्रः प्रदापयिता। तै १,७,२,३।

३६९ वृद्धाम् (प्रजाम्) इन्द्रः प्रयच्छति। तैसं २,५,५,२।

३७०. वृषणश्वस्य ह मेनस्य मेनका नाम दुहितास ता ऽ हेन्द्रश्चकमे। ष १, १।

३७१. वृषणश्वस्य ह मेना भूत्वा मघवा (इन्द्रः) कुल उवास। जै २,७९।

३७२. वृषण्वद्वा इन्द्रस्य रूपम्। ऐआ १,२,१।

३७३. वृषा वा इन्द्रः। कौ २०, ३।

३७४. वैखानसा वा ऋषय इन्द्रस्य प्रिया आस ९ स्तान् रहस्युर्देवमलिम्लुङ् मुनिमरणेऽमारयत्। तां १४,४,७।

३७५. शतभिषं ( °षङ् [तैसं.] ) नक्षत्रमिन्द्रो देवता। तैसं ४,४,१०,३; मै २, १३,२०।

३७६. स (इन्द्रः) आत्मन एवाधि तृतीयसवनं निरमिमीत। जै १,१५६।

३७७ स इन्द्र आत्मनः शीतरूरावजनयत्, तच्छीतरूरयोर्जन्म। तैसं २, ५,२,३।

३७८. स इन्द्रः सलावृकी रूपं कृत्वेमां (पृथिवीम्) त्रिः सर्वतः पर्यक्रामत् तदिमां (पृथिवीं देवाः) अविन्दन्त। तैसं ६, २,४,४।

३७९. स उ एव मखः स विष्णुः। तत इन्द्रो मखवानभवन्मखवान्ह वै तं मघवानित्याचक्षते परोऽक्षम्। माश १४,१,१,१३।

३८०. स (इन्द्रः) एतमिन्द्राय ज्येष्ठायै ( ज्येष्ठानक्षत्राय) पुरोडाशमेकादशकपालं निरवपन्महाव्रीहीणां ततो वै स ज्यैष्ठ्यं देवानामभ्यजयत्। तै ३, १, ५, २।

३८१. स (इन्द्रः) एतं माहेन्द्रं ग्रहमवृत माध्यन्दिनं सवनानां निष्केवल्यमुक्थानां त्रिष्टुभं छन्दसां पृष्ठं साम्नाम्। ऐ ३,२१।

३८२. स एतेन (आदित्य = प्राण-) रूपेण सर्वा दिशो विष्टेऽस्मि तस्य मे (इन्द्रस्य)ऽन्नं मित्रं दक्षिणं तद्वैश्वामित्रमेष तपन्नेवास्मीति होवाच। ऐआ २, २,३।

३८३. स एषोऽपहतपाप्मा तपति (आदित्यः)। एष (आदित्यः) ह वा इन्द्रः। जै २,१३४।

३८४. सखाय इन्द्रमूतयऽइतीन्द्रियवन्तमूतयऽ इत्येतत्। माश ६, ३,२,४।

३८५. सत्यं हीन्द्रः। कौ ३, १; शांआ ५,१।

३८६. स प्रजापतिरिन्द्रं ज्येष्ठं पुत्रमपन्यधत्त नेदेनमसुरा बलीया ९ सोऽहनन्निति। तै १,५,९, १।

३८७. स प्रजापतिरेतान् दश ऋषभानपश्यदथो आहुरिन्द्रोऽपश्यदिति, तानैन्द्रानलभत, तैरस्मिन् ( इन्द्रे = आदित्ये ) इन्द्रियाणि वीर्याण्याप्त्वादधात्। मै २,५,१०।

३८८. स (परमात्मा) ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमः स्वराट्। तैआ १०, ११।

३८९. समिन्द्रो मरुद्भिर्यज्ञियैः··· अजिज्ञिपत्। तैसं २,१,११,३।

३९०. समिन्द्रो रातहव्यो मरुद्भिः (नोऽव्यात्)। मै ४,१२,२; काठ १०, ३७।

३९१. स (इन्द्रः) यत्र त्रिशीर्षाणं त्वाष्ट्रं विश्वरूपं जघान। माश १,२,३,२।

३९२. स यस्स इन्द्र एष एव स य एष (सूर्य्यः) एव तपति। जैउ १, ९,१,२;१०,२,५।

३९३. स यः स इन्द्रः। एष सोऽप्रतिरथः। माश ९, २,३,५।

३९४. स यस्स इन्द्रस्सामैव तत्। जैउ १,१०,१,१।

३९५. स यो मनसश्च वाचश्च स्वरो जायते स इन्द्रः। जै १,३२०-३२१।

३९६ स योऽयं मध्ये प्राणः। एष एवेन्द्रस्तानेष प्राणान्मध्यत इन्द्रियेणैन्द्ध यदैन्द्ध तस्मादिन्ध इन्धो ह वै तमिन्द्र इत्याचक्षते परोऽक्षम्। माश ६,१,१,२।

३९७. सर्वं वाऽइदमिन्द्राय तस्थानमास यदिदं किंचापि योऽयं (वायुः) पवते। माश ३,९, ४,१४।

३९८. स (इन्द्रः) वै देवानां वसुर्वीरो ह्येषाम्। माश १,६,४,२।

३९९. सह (सूर्यो वा [काठ ७,४] ) इन्द्रः। काठ ७,४; २९,९; क ४६,२।

४००. स ह स सर्वजिदेव स्तोमः। इन्द्र एव सः। स हीदं सर्वमजयत्। जै १, ३१२।

४०१. सेना वा इन्द्रस्य प्रिया जाया वावाता प्रासहा नाम । ऐ ३,२२ (तु. गो २,२,९) ।

४०२. सोऽकामयत (प्रजापतिः) इन्द्रो मे प्रजाया ऽ श्रेष्ठः स्यादिति तामस्मै स्रजं प्रत्यमुञ्चत्ततो वा इन्द्राय प्रजाः श्रैष्ठ्यायातिष्ठन्त तच्छिल्पं पश्यन्त्यः । तां १६,४,३ ।

४०३. सोऽग्रं(इन्द्रः) देवतानां पर्यैत् । अगच्छत् स्वाराज्यम् । तै १. ३,२,२ ।

४०४. सो ऽब्रवीत् (इन्द्रो देवान्) तिस्रो म इमास्तन्वो वीर्यावतीस्ता मे प्रीणीताथैतान् (असुरान्) अभिभविष्याम इति, ता वै ब्रूहीत्यब्रुवन् (देवाः) इयं विमृधेत्यब्रवीद् (इन्द्रः), इयम ऽ होमुगियमिन्द्रियावतीति । त इन्द्राय विमृधायैकादशकपालं निरवपन्निन्द्राया ऽ होमुच एकादशकपालमिन्द्रायेन्द्रियवत एकादशकपालम् । काठ १०,१० ।

४०५. सो ऽब्रवीद् (इन्द्रः) अहं विश्वाभ्यां आशाभ्या इति । मै ४,३,४ ।

४०६. सोऽब्रवीद् (इन्द्रः) उग्रं साम्नो वृणे श्रियमिति । जैउ १,१६,२,८ ।

४०७. स्तनयत्नुरिन्द्रस्य रूपम् । ऐआ १, २,१ ।

४०८. स्तनयित्नुरेवेन्द्रः । माश ११,६,३,९ ।

४०९. स्वस्ति न इन्द्रो वृद्धश्रवाः (दधातु) । तैआ १, १, १, ।

४१०. हरिभ्यां त्वेन्द्रो देवतां गमयतु । तैसं १,६, ४, ३; काठ ५,३ ।

४११. हरिव आगच्छेति पूर्वपक्षापरपक्षौ वा इन्द्रस्य हरी ताभ्या ऽ हीद ऽ सर्वं हरति । ष १,१ ।

४१२. हरिवाँ इन्द्रो धाना अत्तु । ऐ २,२४ ।

४१३. हृदयमेवेन्द्रः । माश १२, ९, १, १५ ॥ [°न्द्र- अंहस्-३; अक्षर-२; अक्षि-३; अग्नि-६३३; अग्नीषोम-९; ११; २२; ३३; अन्तरिक्ष-९३; अन्नाद्य- ३; अप्- २६६; अपूप- १; अभिमातिहन्- १; अरुण- २; अर्कवती-; अर्काश्वमेधवत्-; अश्विन्- ४०; अहल्या-; अहोरात्र- २६; आदित्य- २७; ४४;६०; १७८; ३१८; ३४२; ३५३; ३·४; आमयाविन्- ८; आहवनीय- १२; आहुति- १४ द्र.]।

**इन्द्र-घोष-**

१. इन्द्रघोषस् (° षास् [काठ.]) त्वा वसुभिः (°सवः [काठ.]) पुरस्तात् पातु (°न्तु [काठ.])। तैसं १, २,१२,२; काठ २,९; माश ३,५,२,४ (तु. मै ३,८,५; क २,३) ।

२. इन्द्रघोषा वो वसुभिः पुरस्तादुपदधताम् । तैआ १,२०,१ ।

**इन्द्र-तम-** मधु हुतमिन्द्रतमेऽअग्नाविति मधु हुतमिन्द्रियतमेऽग्नावित्येवैतदाह । माश १४, २,२,४२ ॥ [°म- अग्नि- ३९६; ५९१ द्र. ]।

**इन्द्र-तुरीय-** स इन्द्रस्तुरीयमभवत् । यदिन्द्रस्तुरीयमभवत् । तदिन्द्रतुरीयस्येन्द्रतुरीयत्वम् । तै १,७,१,३ ।

**इन्द्र-नक्षत्र-** एता वाऽइन्द्रनक्षत्रं यत्फल्गुन्यः । माश २,१,२,११ ।

**इन्द्र-निहव-** मन इन्द्रनिहवः । कौ १५,३ ।

**इन्द्र-योनि-** अन्तरेण तालुके । य एष स्तन इवावलम्बते । सेन्द्रयोनिः । यत्रासौ केशान्तो विवर्तते । व्यपोह्य शीर्षकपाले । तैआ ७,६,१; तैउ १,६,१ ।

**इन्द्र-प्रजापति-** इन्द्रप्रजापती (ब्रह्मलोकस्य) द्वारपालौ । शांआ ३, ३; कौउ १,२ ।

इन्द्र-रूप- अग्निर्नेता स वृत्रहेति वार्तघ्नमिन्द्ररूपम् । ऐआ १,२,१ ।

इन्द्र-वरुण->ऐन्द्रवारुण- ऐन्द्रवारुणो हि राजन्यो देवतया । मैसं २, ३,१ ।

इन्द्र-वायु-

१. इन्द्रवायुभ्यां त्वैष ते योनिः, सजोषाभ्यां त्वा सादयामि । तैसं १, ४,४,१ ।
२. इन्द्रवायू हि सयुजौ । तैसं ६. ६,८, ३ ।
३. वाक्षसदसि वाक्पाभ्यां ( इन्द्रवायुभ्याम् ) त्वा··· ( गृह्णामि ) । तैसं ३, २, १०,१ ॥ [°यु-इन्द्र- १३३ द्र.] ।

ऐन्द्रवायव-

१. अथैन्द्रवायवं ( ग्रहमवकाशयति ) वाचे मे ··· । माश ४, ५,६, २ ।
२. गायत्रो वा ऐन्द्रवायवः । तैसं ७, २, ८, १; काठ ३०, २; क ४६. ५ ( तु. मै ४,८,८ )।
३. त एतमैन्द्रवायवमगृह्ण ऽस्ततो वृत्रमघ्नन् ( देवाः ) । काठ २७, ३ ।
४. पुरोडाशमैन्द्रवायवस्य पात्रेऽवदधाति । काठ २७, ५ ।
५. प्राण ( णो वा [तैसं ७, २, ८,४; क.] ) ऐन्द्रवायवः । तैसं ७, २,७,१;८,४ काठ ३०, ३; क ४६, ५ ।
६. प्रायणीये ऽहन्नैन्द्रवायवो गृह्यते । तैसं ७, २,८, १ ।
७. राथन्तरो वा ऐन्द्रवायवः । तैसं ७, २, ८, २ ।
८. वाक् च प्राणाश्चैन्द्रवायवः । काठ २७, ५; क ४२, ५; ऐ २, २६ ।
९. वाग् ( +वा [मै ४, ५, ८] ) ऐन्द्रवायवः । मै ४, ५,८;९; काठ २७, ३; क ४२, ३ ।
१०. वाचं त ऐन्द्रवायवः ( ग्रहः ) पातु । मै ४, ८, ७ ।
११. शितिबाहुरन्यतश्शितिबाहुस्समन्तशितिबाहुस्त ऐन्द्रवायवाः । काठ ४९,३ ।

ऐन्द्रवायवाग्र-

१. ऐन्द्रवायवाग्रान् गृह्णीयादामयाविनः । क ४६, ६ ।
२. यो ज्येष्ठबन्धुः स्यात् स ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीत । मै ४, ८, ९ ।

इन्द्र-शत्रु- अथ ( त्वष्टा ) यदब्रवीदिन्द्रशत्रुर्वर्द्धस्वेति तस्मादु हैनमिन्द्र एव जघानाथ यद्ध शश्वदवक्ष्यदिन्द्रस्य शत्रुर्वर्द्धस्वेति शश्वदु ह स एवेन्द्रमहनिष्यत् । माश १. ६, ३, १० ।

इन्द्र-स्तोम- एतेन वा इन्द्रो ऽत्यन्या देवता अभवदत्यन्याः प्रजाः भवति य एवं वेद । तां १९,१६, २ ।

इन्द्राग्नि-

१. अथा सपत्नान् इन्द्राग्नी मे विषूचीनान् व्यस्यताम् । काठ १, १२ ।
२. अबध्नन्निन्द्राग्निभ्यां छागम् । मै ४,१३, ८ ।
३. अमृतं ऽइन्द्राग्नी । माश १०, ४, १, ६ ।
४. अस्ति वै छन्दसां देवतेन्द्राग्नी । माश १, ८, २, १६ ।
५. इन्द्राग्निभ्यां वा इमौ लोकौ ( द्यावापृथिव्यौ ) विधृतौ । तैसं ५, ३, २, १ ।
६. इन्द्राग्निभ्यां कुश्चान् (आलभते) । मै ३,१४,३ ।
७. इन्द्राग्निभ्यामोजो दाभ्यामोष्टारौ । काठ ५०, १ ।

८. इन्द्राग्निभ्यां बलदाभ्या ९ सीरवाहा भवी द्वे । काठ ५०, १ ।
९. इन्द्राग्नियोरहं देवयज्ययेन्द्रियाव्यन्नादो भूयासम् । तैसं १, ६, २, ४ ।
१०. इन्द्राग्नियोर्विशाखे ( नक्षत्रविशेषः ) । तै १, ५, १, ३ ।
११. इन्द्राग्नी इव बलेन (भूयासम्) । मं २, ४, १४ ।
१२. इन्द्राग्नी एतस्य प्रजामपगूहतो यो ऽलं प्रजायै सन् प्रजां न विन्दते । काठ ९, १७ ।
१३. इन्द्राग्नी च हि देवानां बृहस्पतिश्चायातयामानः । तैसं ५, ५, ६, २ ।
१४. इन्द्राग्नी पशूनां भूयिष्ठभाजौ करोति । क ४६, ३ ।
१५. इन्द्राग्नी वा इद ९ सर्वम् । माश ४, २, २, १४ ।
१६. इन्द्राग्नी वृत्रहणा ( +जुषेथाम् [तैसं.] ) । तैसं १, १, १४, १, काठ ४, १५ ।
१७. इन्द्राग्नी वै देवानामयातयामानौ । तै १, १, ६, ५; २,५,१ ।
१८. इन्द्राग्नी वै देवानामोजस्वितमौ । माश १३, १, २, ६ ।
१९. इन्द्राग्नी वै देवानामोजिष्ठौ (+बलिष्ठौ [तै.]; बलिष्ठौ सहिष्ठौ सत्तमौ पारयिष्णुतमौ [ऐ.]) । ऐ २, ३६; तां २४, १७, ३; तै ३, ८,७, १; ष ३, ७ ।
२०. इन्द्राग्नी वै देवानामोजोभृतौ ( °वानां मुखम् [कौ.] ) । मै ३, २, ९; कौ ४, १४ ।
२१. इन्द्राग्नी वै (हि [माश २,९,२,१४]) विश्वे देवाः । माश २,४,४,१३;९,२,१४;१०,४,१,९ ।
२२. इन्द्राग्नी वै सर्वे देवाः । कौ १२, ६; १६, ११; माश ६, १, २, २८ ।
२३. इन्द्राग्नी शिखण्डाभ्याम् ( प्रीणामि ) । तैसं ५, ७, १५,१; काठ ५३, ५ ।
२४. इन्द्राग्नी सर्वा देवताः । काठ ३४, १ ।
२५. इन्द्राग्नी हि प्राणोदानौ । माश ४, ३, १, २२ ।
२६. इन्द्राग्न्योः पशुतिः । मै ३, १५,५ ।
२७. इन्द्राग्न्योरहं देवयज्ययौजस्वान् वीर्यावान् भूयासम् । काठ ५, १ ।
२८. इन्द्राग्न्योर्धेनुर्दक्षिणायामुत्तरवेद्याश्श्रोण्यामासन्ना । काठ ३४, १५ ।
२९. एतद्ध वा इन्द्राग्न्योः प्रियं धाम यद्वागिति । ऐ ६, ७; गो २, ५, १३ ।
३०. एताभिर्वा इन्द्राग्नी अत्यन्या देवता अभवताम् । तां २४, १७, २ ।
३१. एतौ ह वा आशिष्ठौ देवतानां यदिन्द्राग्नी । जै १, ३०४ ।
३२. ओज इन्द्राग्नी । मै ४, ७, ८; काठ २९, ९; क ४६, २ ।
३३. ओजोभृतौ ( °जो बलं [तै.] ) वा एतौ देवानां यदिन्द्राग्नी । तैसं ६,५,४,१; तै १,६,४,४ ।
३४. ओजो (+वै [मै १, १०, १०; ३, २, ८; काठ.] ) वीर्यमिन्द्राग्नी । मै १,१०,१०; २, १, १;३,२,८; काठ ९, १७; २९, ९; ३४, १ ।
३५. क्षत्रं वा इन्द्राग्नी ( +विड् ऋतवः [काठ २८, २; क.]) । काठ २८, २; २९, १०; क ४४, २; माश २,४,२,६ ।
३६. ज्योतिरिन्द्राग्नी । तैसं ६, ५, ४, १; माश १०, ४,१,६ ।
३७. तस्मादाहुरिन्द्राग्नीऽएव देवाना ९ श्रेष्ठाविति । माश ८, ३, १, ३ ।
३८. तावेव ( इन्द्राग्नी ) अस्मिन् ( यजमाने ) इन्द्रियं वीर्यं धत्तः । तैसं २, २, १, ३ ।
३९. तेजो वा ( °जो वै वीर्यम् [मै.]) इन्द्राग्नी । मै ३, ३, ८; काठ ३४, १ ।

४०. दर्शपूर्णमासयोर्वै देवते स्त इन्द्राग्नीऽएव । माश २, ४, ४, १७ ।
४१. नक्षत्राणामधिपत्नी विशाखे । श्रेष्ठाविन्द्राग्नी भुवनस्य गोपौ । तै ३, १, १, ११ ।
४२. प्रतिष्ठे वा इन्द्राग्नी । कौ ३, ६; ५,४; शांआ २, १३ ।
४३. प्राणापानौ (प्राणोदानौ [माश.]) वा (+एतौ देवानां यत् [तै.]) इन्द्राग्नी । मै १,५,६;१०, ७;१०; काठ ७, ५;३४,१; ३६,२; गो २,२,१; तै १,६,४,३; माश २,५,२,८ ।
४४. बलं वै तेज (ब्रह्मक्षत्रे वा [कौ.] ) इन्द्राग्नी । कौ १२,८; गो २,१,२२ ।
४५. ब्रह्म चैव क्षत्रं च सयुजा अकर्, यदग्निश्चेन्द्रश्च भूयिष्ठभाजौ देवतानां, तस्माद् ब्राह्मणश्च राजा च भूयिष्ठभाजौ मनुष्याणाम् ( ब्रह्म = अग्निः, क्षत्रम् = इन्द्रः ) । मै ४,७,८ ।
४६. भद्रेन्द्राग्नी नो भवतामृतावृधा । काठसंक ६१ : ११ ।
४७. ये नः सपत्ना अप ते भवन्त्विन्द्राग्निभ्यामव बाधामहे तान् । तैसं ३,७,१४, ४ ।
४८. विशाखं नक्षत्रमिन्द्राग्नी देवता । मै २, १३,२० ।
४९. शुचिं न स्तोमं नवजातमद्येन्द्राग्नी वृत्रहणा जुषेथाम् । काठ १३, १५ ।
५०. सवनैरिन्द्राग्नी (गृहिणौ) । जै १,२८० ।
५१. सह इन्द्राग्नी । मै ४,७,८ ।
५२. स ह स उद्भिदेव स्तोमः । इन्द्राग्नी एव तौ । तौ हीदं सर्वमाजिसृत्यायामुदभिन्ताम् । जै १,३१२ ।
५३. सूर्यो वा इन्द्रस्सोऽग्नि नक्तं प्राविशत्युभा एवैनौ सहेष्टे । काठ ७, ४ ॥ [°ग्नि- अन्तरिक्ष- ९२ द्र. ] ।

**इन्द्राग्नि-स्तोम-**

१. अथैष इन्द्राग्न्योः स्तोम एतेन वा इन्द्राग्नी अत्यन्या देवता अभवतामत्यन्याः प्रजा भवति य एवं वेद । तां १९,१७,१ ।
२. पुरोधा कामो (इन्द्राग्निस्तोमेन) यजेत । तां १९,१७,७ ।

**ऐन्द्राग्न** (आज्यस्तोत्र-)–

१. इयं वामस्य मन्मन इत्यैन्द्राग्नम् । तां १२, ८, ७ ।
२. ऐन्द्राग्नं वै सामतस्तृतीयं सवनम् । कौ ४,४ ।
३. ऐन्द्राग्न उन्नीतः (°ग्नः संहितः [काठ ४८,१]) । काठ ३४, १६; ४८,१ ।
४. ऐन्द्राग्नम् (पयः) उपसन्नम् । मै १,८,१० ।
५. ऐन्द्राग्नमेकादशकपालं निर्वपेत् (+ प्रजाकामः [ तैसं २, २,१,१]; जनतामेष्यन् [तैसं २, २,१,४]) । तैसं २,२, १, १;४; मै २,१,१ (तु. तैसं १,८,३,१; मै २,६,२) ।
६. ऐन्द्राग्नं पुनरुत्सृष्टमा लभेत य आ तृतीयात् पुरुषात् सोमं न पिबेत् । तैसं २,१, ५, ५ ।
७. ऐन्द्राग्ना ऊरू । ऐआ १,५,१ ।
८. ऐन्द्राग्नानि ह्युक्थ्यानि । मै ३,९,५; काठ १४,९; माश ४,२,५,१४; ४,६,३,३ ।
९. ऐन्द्राग्नो ऽग्नौ मथ्यमान (सोमः) ऐन्द्राग्नोऽग्नौ प्रहियमाणे । काठ ३४, १४ ।
१०. ऐन्द्राग्नो द्वादशकपालः (+पुरोडाशो भवति [माश.]) । मै १, १०,१; काठ ९,४;१५, १; क ८,७; माश १,६,४,३;२,५,२,८ (तु. तैसं. १,८,१,२;७,१) ।

११. ऐन्द्राग्नो यज्ञः । जै १,१०६ ।
१२. ऐन्द्राग्नो वा अपरपक्षः । मै १,५,७ ।
१३. कृष्णग्रीवः शितिकक्षोऽञ्जिपक्थस्त ऐन्द्राग्नाः । मै ३,१३,५ ।
१४. दिश एवैन्द्राग्नेन (देवा अजयन्) । जै १,१०५ ।
१५. स ह्येत ऐन्द्राग्नः (पशुः) । मै ४,७,८ ॥ [°ग्न- अनडुह्- ९ द्र.] ।

ऐन्द्राग्नी- अपरपक्ष- २ द्र. ।

इन्द्रापूषन्->ऐन्द्रापौष्ण- ऐन्द्रापौष्णं चरुम् (निर्वपति) । तैसं १,८,८,१ ।

इन्द्राबृहस्पति- इन्द्राबृहस्पती ऊरुभ्याम् (प्रीणामि) । तैसं ५,७,१५,१; काठ ५३,५ ।

ऐन्द्राबार्हस्पत्य-

१. उन्नतः शितिबाहुः, शितिपृष्ठस्त ऐन्द्राबार्हस्पत्याः । मै ३,१३,८ ।
२. ऐन्द्राबार्हस्पत्यं चरुं निर्वपेद् राजन्याय बुभूषते । काठ ११,४ ।
३. ऐन्द्राबार्हस्पत्यं ब्राह्मणाच्छंसिन उक्थं भवति । गो २,४,१४;१६ ।
४. ऐन्द्राबार्हस्पत्या अरुणललामास्तूपराः । काठ ४९,२ ।
५. शितिककुच्छितिपृष्ठशितिभसत् त ऐन्द्राबार्हस्पत्याः । काठ ४९,४ ।
६. षड्भिरैन्द्राबार्हस्पत्यैः (पशुभिः) शिशिरे (यजते) । माश १३,५,४,२८ ।

इन्द्रामरुत्->ऐन्द्रामारुत- ऐन्द्रामारुता उक्षाणः । तां २१,१४,१२ ।

इन्द्रावरुण-

१. इन्द्रावरुणा अलगाभ्याम् (प्रीणामि) । मै ३,१५,६ ।
२. या वामिन्द्रावरुणा यतव्या (°रुगा सहस्या रक्षस्या तेजस्या) तनूस्तयेमम् हसो मुञ्चतम् । तैसं २. ३,१३,१[२] ।
३. यो वामिन्द्रावरुणावग्नौ स्रामस्तं वामेतेनाव यजे, यो वामिन्द्रावरुणा द्विपात्सु पशुषु, चतुष्पात्सु, गोष्ठे, गृहेष्वप्स्वोषधीषु, वनस्पतिषु स्रामस्तं वामेतेनाव यजे । तैसं २ ३,१३,१ ।

ऐन्द्रावरुण- उन्नत ऋषभो वामनस्त ऐन्द्रावरुणाः (ऐन्द्रावैष्णवाः [मै.]) । मै ३, १३,८; काठ ४९,४ ।

इन्द्राविष्णु- इन्द्राविष्णू अष्ठीवद्भ्याम्(प्रीणामि) । तैसं ५.७,१५, १; काठ ५३,५ ।

ऐन्द्रावैष्णव-

१. ऐन्द्रावैष्णवं हविः । काठ १२,२ ।
२. ऐन्द्रावैष्णवमेकादशकपालम् (चरुं निर्वपति) । तैसं १,८,८,१ ।
३. ऐन्द्रावैष्णवा गौरललामास्तूपराः । काठ ४९,७ ।
४. शितिपाच्छित्योष्ठ शितिभ्रूस्त ऐन्द्रावैष्णवाः । काठ ४९,४ ।
५. षड्भिरैन्द्रावैष्णवैः (पशुभिः) हेमन्ते (यजते) । माश १३,५,४,२८ ।

इन्द्राशुनासीर-

१. इन्द्राय शुनासीराय पुरोडाशं द्वादशकपालं निर्वपति । तै १,७,१,१ ।
२. संवत्सरो वा इन्द्राशुनासीरः (इन्द्रः शुना° [मै.]) । मै ४, ३, ३; तै १,७,१,१ ।

इन्द्रासूर्य->ऐन्द्रासौर- ऐन्द्रासौराश्श्यामललामास्तूपराः। काठ ४९, १०।

इन्द्रासोम- भद्रेन्द्रासोमा युधि दस्युहन्तमा। काठसंक ६१ : १४।

इन्द्रासोमीय- इन्द्रासोमीयमेकादशकपालम् (चरुं निर्वपति)। तैसं १,८,८,१।

इन्द्रेष्या- इन्द्र- २८१ द्र.।

इन्द्राणी-

१. इन्द्राणी देवी सुभगा सुपत्नी। उद ९ शेन पतिविद्ये जिगाय। त्रि ९ शदस्या जघनं योजनानि। उपस्थ इन्द्र ९ स्थविरं बिभर्ति। तै २,४,२,७।

२. इन्द्राणी पत्या सुजितं जिगायोद ९ शेन पतिविद्ये बिभेद। त्रि ९ शदस्या जघन ९ योजनान्युपस्था इन्द्र ९ स्थविर ९ बिभर्ति। मै ३,८,४; काठ ८,१७।

३. इन्द्राणीमासु नारिषु सुपत्नीमहमश्रवम्। न ह्यस्या अपरं चन जरसा मरते पतिः। तैसं १, ७,१३,१-२; काठ ८,१७।

४. इन्द्राणीं प्लीह्ना (प्रीणामि)। तैसं ५,७, १६, १; काठ ५३,६।

५. इन्द्राणीवाविधवेषे। काठ १,१०।

६. इन्द्राणी ह वाऽइन्द्रस्य प्रिया पत्नी तस्या उष्णीषो विश्वरूपतमः। माश १४,२,१,८।

७. इन्द्राण्या एकादशी (°ण्याः षष्ठी [मै.])। मै ३ १५,५; काठ ५३,१२।

८. इन्द्राण्याः (°ण्यै [तैसं.]) संनहनम् (असि)। तैसं १,१,२,२; काठ १, २; क १,२।

९. इन्द्राण्यै चरुं निर्वपेद्यस्य सेनाऽसꣳशितेव स्यादिन्द्राणी वै सेनायै देवता। तैसं २,२,८,१।

१०. इन्द्राण्यै त्रयः कृष्णैताः (धेनवः)। काठ ४९,८।

११. तिस्रोऽजा मल्हा इन्द्राण्यै। काठ ४९,९।

१२. सेना वा इन्द्राणी। मै २, २,५; काठ १०, १०।

१३ सेना ह नाम पृथिवी धनञ्जया विश्वव्यचा अदितिस्सूर्यत्वक्। इन्द्राणी देवी प्रासहा ददाना। सा नो देवी सुहवा शर्म यच्छतु (इन्द्राणी प्रासहा सञ्जयन्ती मयि पुष्टिं पुष्टिपत्नी दधातु [काठ.])। काठ ८,१७; तै २,४,२,७-८।

ऐन्द्र-

१. अथ यदुच्चैर्घोष स्तनयन्बबबा कुर्वन्निव दहति यस्माद् भूतानि विजन्ते तदस्य (अग्नेः) ऐन्द्रं रूपम्। ऐ ३,४।

२. अथो खल्वैन्द्रम् (सांनाय्यम्) इत्येव ब्रूयादिन्द्रं वाव ते तद् भिषज्यन्तोऽभि समगच्छन्तेति। तैसं २,५,३,७।

३. अमुम् (द्युलोकम्) ऐन्द्रेण (आज्यस्तोत्रेण देवा अजयन्)। जै १, १०५।

४. इन्द्रियं ऐन्द्रेण (पशुना आत्मन्धत्ते)। तै १,३,४,३।

५. एतदेव पशुष्वैन्द्रं रूपं यदृषभः। शांआ १,१।

६. ऐन्द्र ९ वृष्णि ९ वृषभ ९ वा (आलभेत)। मै २,५,११।

७. ऐन्द्रं वै दधि (सुत्यमहः [कौ.])। कौ ४, ४; माश ७,४,१,४२।

८. ऐन्द्र ९ वै (हि [मै ३,८,१०; माश.]) सदः । मै ३,८,१०;४,६,५; काठ २५,१०; क ४०,३; माश ३,६,१,२२ ।
९. ऐन्द्र ९ सान्नाय्यम् (हविः) । काठ १५,२; माश २ ४,४,१२ ।
१०. ऐन्द्र ९ हि चषालम् (पुरीषम् [माश.]) । मै ३ ९, ३; माश ८,७,३,७ ।
११. ऐन्द्र एकादशकपालः (पुरोडाशः) (+कार्यः [मै.]) । मै २, ३, ६; तां २१.१०,२३ ।
१२. ऐन्द्र एकादशकपालो राज्ञो गृहे । मै ४,३,८ ।
१३. ऐन्द्रः प्राणो···ऐन्द्रो व्यानो···ऐन्द्रोऽपानो अङ्गे अङ्गे निदीध्यत् । काठ ३,७; क २, १४ ।
१४. ऐन्द्रं (+हि [कौ.]) त्रैष्टुभं माध्यन्दिनं सवनम् । कौ २२,२; गो २,४, ४ ।
१५. ऐन्द्रं दधि (+ऋषभो वही दक्षिणा [तैसं १,८,१,२]) । तैसं १, ८,१,२;७,१; मै १, १०,७; २,६,३ ।
१६. ऐन्द्रमरुणमालभेतेन्द्रियकामः । तैसं २,१,६, २ ।
१७. ऐन्द्रमृषभं वा वृष्णिं वा (आलभेत) । काठ १२, १२ ।
१८. ऐन्द्रमृषभ ९ सेन्द्रत्वाय (आलभते) । तै १,८,५,६ ।
१९. ऐन्द्रमृषभम् (प्रजापतिरालिप्सत) । माश ६,२,१,५ ।
२०. ऐन्द्रमेकादशकपाल ९ राजन्यस्य गृह ऋषभो दक्षिणा । तैसं १,८, ९,१ ।
२१. ऐन्द्रमेकादशकपालमृषभो वही दक्षिणा । तैसं १, ८,१,२ ।
२२. ऐन्द्रमेकादशकपालं पुरोडाशं निर्वपति । माश ५,३,१,३ ।
२३. ऐन्द्रं पञ्चकपालं दधि मधु घृतं धाना उदकं, तत् स ९ सृष्टं भवति । मै २,३,६ ।
२४. ऐन्द्रं महाव्रतम् । जै २, २० ।
२५. ऐन्द्रं ( +वै [जैउ.] माध्यन्दिनं सवनम् । मै ४,५,९; गो २,१,२३; जैउ १,१२, ३,३ ।
२६. ऐन्द्रः सोमः । तैसं ३,१,८,२ ।
२७. ऐन्द्राः (+वै [मै १,५,११; ऐ ६,२५]; हि [मै २, ३, ६]) पशवः । तैसं २, २, ७, १; मै १, ५,११; २,३,६; ३,१०,२; ऐ ६,२५ ।
२८. ऐन्द्राण्युक्थानि । मै ४,६,५ ।
२९. ऐन्द्रा वा एते पशवो ये मुष्कराः । काठ १९,८ ।
३०. ऐन्द्रा वै पशवा इन्द्रः पशूनां प्रजनयिता । मै २, ५,३ ।
३१. ऐन्द्रेण शुक्रामन्थिनौ (गृह्येते) । मै ४, ६, १ ।
३२. ऐन्द्रेणान्तरिक्षे (ज्योतिर्धत्ते) । तैसं ६,६, ८,३ ।
३३. ऐन्द्रो ब्राह्मणाच्छंसी ( माध्यन्दिनः [कौ.]) । कौ ५, ५; २२, ७; तै १, ७, ६,१; माश ९, ४, ३,७ ।
३४. ऐन्द्रो (+हि [मै.]) यजमानः । मै ४,३,८; काठ २४,६ ।
३५. ऐन्द्रो (+हि [मै.]) यज्ञः । मै ३,८,८; ४, ५, ४; काठ १०,९; २७, ३ ।
३६. ऐन्द्रो (+वै [तै.]) राजन्यः । मै २,१,४; जै १,९५;१८२; तां १५,४,८; तै ३,८,२३,२ ।
३७. ऐन्द्रोऽरुणः । काठ ४८,१ ।
३८. ऐन्द्रो वा एष यज्ञक्रतुर्यत्साकमेधाः । कौ ५,५; गो २, १,२३ ।

३९. ऐन्द्रो वा एष यज्ञो (यज्ञक्रतुर् [कौ., गो.]) यत् सौत्रामणी। कौ १६, १०; गो २,५,७; माश १२,८,२,२४।
४०. ऐन्द्रो वै यज्ञः (मध्यन्दिनः [गो.; ऐ ६,३०]) । मै ३,७,८;४,३,७; काठ २७, १०; ३१, ११; क ४७,११; ऐ ६,११;३०; गो २,६,९।
४१. ऐन्द्रो वै राजन्यस्त्रिष्टुप्छन्दाः। मै ४,४,५।
४२. ऐन्द्रो वै राजन्यो देवतया। मै १,६,५;२,५,८; काठ १०,१० (तु. जै १,६८)।
४३. ऐन्द्रो वै वज्रः, इन्द्रियेण खलु वै वज्रः प्रह्रियते। मै २, ५, ११।
४४. ऐन्द्रो वै वृष्णिरैन्द्रः षोडशी। मै ३,९,५; (तु. मै ४,७,८)।
४५. ऐन्द्रो हि यज्ञक्रतुः। कौ ५,५; २८,२;३।
४६. तदाहुः किन्देवत्यो यज्ञ इति। ऐन्द्र इति ब्रूयात्। गो २,३,२३।
४७. तस्मात्सदस्यृक्सामाभ्यां कुर्वन्त्यैन्द्र ९ हि सदः। माश ४, ६,७,३।
४८. ताभ्य (शक्करीभ्यः प्रजापतिः) एतानैन्द्रान् घोषान्प्रायच्छद्योऽग्नेर्घोषो यो रथस्य तमस्यै (पृथिव्यै) प्रायच्छद् यो वायोर्घोषो यो वयसां तमेतस्यै (अन्तरिक्षाय) प्रायच्छद् यः पर्जन्यस्य घोषो यो दुन्दुभेस्तममुष्यै (दिवे) प्रायच्छत्। जै ३, १०५।
४९. दिवमैन्द्रेण (अवरुन्धे)। माश १२,८,२, ३२।
५०. पुरुषो वै पशूनामैन्द्रस्तस्मात् पशूनामीष्टे। माश ४, ५,५,७।
५१. प्राशृङ्गा ऐन्द्राः (पशवः)। मै ३,१३, १६।
५२. बदरसक्तुभिरैन्द्रम् (श्रीणाति)। मै २,३,९; काठ १२,१०।
५३. यः पशुकामः स्यात्स एतमैन्द्रमुन्नतमालभेत। तैसं २, १, ५,१।
५४. यच्छुक्लं (अक्ष्योः) तदैन्द्रम्। माश १२,९,१,१२।
५५ यत्पृष्ठं माध्यन्दिनं तेनैन्द्रम्। जै १,१३८; १४२।
५६. यदष्टाकपालस्तेनाग्नेयो, यत् त्रिकपालस्तेन वैष्णवो, यदेकादशकपालः संपद्यते तेनैन्द्रः। मै ३,६,१।
५७. यदि राजन्यः (यजेत), ऐन्द्रं··प्रतिष्ठापयति। मै ४,४,९।
५८. यदैन्द्रः (अतिग्राह्यो ग्रहः), इन्द्रियं तेन (अवरुन्द्धे)। मै ४,७,३।
५९. यदैन्द्रो भवतीन्द्रियं वै सोमपीथः। तै २,१,५,६।
६०. यद्वै किंचन पीतवत्पदं तदैन्द्रं रूपम्। ऐ ६,१०।
६१. यन्मुष्करस्तेनैन्द्रो रूपेणैवैनं समर्धयति। मै ४,३,१।
६२. वैमृधः पूर्णमासेऽनुनिर्वाप्यो भवति, तेन पूर्णमासः सेन्द्र ऐन्द्रं दध्यमावास्यायां तेनामावास्या सेन्द्रा। तैसं २,५,४,१।
६३. शक्करीणामैन्द्रः (अतिग्राह्यो ग्रहः)। मै ४,७, ३।
६४. स ह्यैन्द्रो यदृषभः। माश ५,३,१,३।
६५. ह ९ सो वृको वृषद ९ शस्त ऐन्द्राः। काठ ४७,११।
६६. हेमन्तशिशिरावैन्द्राभ्याम् (अवरुन्धे)। माश १२, ८, २, ३४॥ [ऐन्द्र- आग्नेयी- २, आहवनीय- ६ द्र.]।

ऐन्द्री-

१. अथ या घोषिण्युपब्दिमती सैन्द्री (आगा)। तया माध्यन्दिनस्योद्रेयम्। जैउ १,१२,३,३।
२. ऐन्द्री ँ सूतवशामालभेत भूतिकामः। तैसं २,१,५,४।
३. ऐन्द्री द्यौः। तां १५,४,८।
४. ऐन्द्रीमावृतमन्वावर्त इत्याद्यसौ वा आदित्य इन्द्रस्तस्यैवावृतमनुपर्यावर्तते। दक्षिणा पर्यावर्तते, स्वमेव वीर्यमनु पर्यावर्तते, तस्माद्दक्षिणोऽर्ध आत्मनो वीर्यावत्तरोऽथो आदित्यस्यैवावृतमनु पर्यावर्तते। तैसं १,७, ६,३।
५. ऐन्द्रया सदा उपचरति। मै ४,६, ५।
६. ऐन्द्रयो वालखिल्याः (ऋचः)। ऐ ६,२६।
७. ग्रीष्मे मध्यन्दिने स ँ हितामैन्द्रीम् (आलभेत)। तै २,१,२,५।
८. यत्पयस्तेनैन्द्री (गौः)। मै ४,३,४।
९. वागस्यैन्द्री (+उपलक्षयणी [तैसं; काठ ४,१४])। तैं १,६,२,२; काठ ४,१४; ३१, १५।
१०. वाग्घ्यैन्द्री। ऐ २, २६।
११. संहितामैन्द्रीम् (मल्हामालभेत)। तैसं २,१,२,४।

इन्द्रिय-

१. इन्द्रियं वै गर्भः। तैसं २,१,२, ६; काठ १३,१; तै १,८,३,३।
२. इन्द्रियं वै ज्येष्ठबन्धुः (ज्यैष्ठ्यम् [काठ.])। मै २, २, १०; काठ १०, ९।
३. इन्द्रियं वै त्रिष्टुक्। तैसं २, ५, १०,१; ३ २, ९, ३।
४. इन्द्रियं वै पशवः (वाक् [काठ ३१,१५])। तैसं २,२,७,१; मै २,२,८; काठ १०,८;३२,१।
५. इन्द्रियं वै वीर्यं पृष्ठानि (बृहत् [मै.])। मै १,११,९; जै १,२५४।
६. इन्द्रियं वै वीर्यं वारवन्तीयम् (साम)। जै १,३५२।
७. इन्द्रियं वै सोमपीथः। तैसं २, १, ५, ६;३,२,७; तै १, ३,१०, २।
८. इन्द्रिय ँ (+वै [मै.]) सोमः। मै ४,६,१;७,८; काठ १०,२।
९. इन्द्रियं त्रिष्टुप् (पुत्रः [काठ ९,१४])। तैसं २, ५, १०, ४; ५, १,३, ६; काठ १९,३।
१०. इन्द्रियं (+वै [क.]) प्रजास्सोमपीथः। काठ २७, २; क ४४, ८।
११. इन्द्रियं माध्यन्दिन ँ सवनम्। तैसं ३, २, ९ ३।
१२ इन्द्रियं माध्यन्दिने सवने (आत्मन् दधीत)। तैसं ३,२, ९,२।
१३. इन्द्रियेण वा इय ँ वाङ् मध्यतो विधृता। मै ४, ५, ८।
१४. एतद्वा ऽइन्द्रियं बृहद्, य एष (सूर्यः) तपति। माश १४, ३, १,३१।
१५. जायमानो ह वै ब्राह्मणः सप्तेन्द्रियाण्यभिजायते ब्रह्मवर्चसञ्च स्वप्नं च क्रोधं च श्लाघां च रूपं च पुण्यमेव गंधं सप्तमम्। गो १, २, २।
१६. प्रजा वा इन्द्रियम्। तैसं ६, ५, ८, ४।
१७. प्राणा इन्द्रियाणि। काठ ८, १; तां २, १४, २; २२, ४, ३।
१८. यदेकादशकपालस्त्रिष्टुभैवास्मिन् (यजमाने) इन्द्रियं दधाति। तैसं २, २, ५,३।
१९. यद्वारवन्तीयमग्निष्टोमसाम भवतीन्द्रियस्य वीर्यस्यावरुद्ध्यै। मै ४, ४, ९।

२०. यस्त्वैवं ब्राह्मणो विद्यात् । तस्य देवा असन् वशे । तैआ ३, १३, २ ।

२१. सप्रथ ( सभ्याग्ने ) सभां मे गोपायेत्याह । सभामेवैतेनेन्द्रिय ९ स्पृणोति । तै १,१,१०,५।
[°य- अपूप- २; आरण्य- १; इडा- ११, इन्द्र- २६; ३६;७०;७१; ८९; ९०;१०२;११०; १२२;१२३,१२४;३२०; ऐन्द्र- ४३; ५९ द्र.] ।

इन्द्रिय-काम- य इन्द्रियकामो वीर्यकामः स्यात् तमेतया सर्वपृष्ठया याजयेत् । तैसं २, ३, ७, १-२ ॥ [ °म- ऐन्द्र-१६ द्र ] ।

इन्द्रिय-वत्- निरिन्द्रिया स्त्री, पुमानिन्द्रियवान् । मै ४, ७, ४ ।

इन्द्रिया-वत्-

१. यदिन्द्रायेन्द्रियावते (निर्वपति ), आत्मानमेवास्य तेन करोति । तैसं २,२,७,३ ।

२. वीर्यवत इत्येवैतदाह यदाहेन्दोरिन्द्रियावत इति । माश ४, ४, २, १२ ।

३. वीर्यवानित्येवैतदाह यदाहेन्द्रियावानिति । माश ३,९,३,२५ ।

इन्वका,गा-

१. इन्वगा नक्षत्रं, मरुतो देवता । मै २, १३, २० ।

२. मरुतो देवतेन्वका नक्षत्रम् । काठ ३९, १३ ।

३. सोमस्येन्वकाः ( मृगशीर्षसंघगतास्तारकाः ) । तै १, ५, १, १ ।

इरज्->√इरज्य,>इरज्यत्- इरज्यन्नग्ने प्रथयस्व जन्तुभिरिति । मनुष्या वै जन्तवो दीप्यमानोऽग्ने प्रथस्व मनुष्यैरित्येतत् । माश ७, ३, १, ३२ ।

इरा- इरा पत्नी विश्वसृजाम् । तै ३, १२, ९, ५ ॥ [°रा- अन्न- ११ द्र.] ।

इरान्न- इरान्नं वा एतत् ( साम ) । तां ५, ३, २ ।

ऐर- ऐरं वै बृहत् । तैसं २, ६, ७, २; तां ७, ६,१७ ।

इरिण-

१. आहिताग्निः श्रद्धादेवः स्वकृत इरिणे नाव स्येद् ब्रह्महत्यायै ह्येष वर्णः । तैसं २, ५, १, ३ ।

२. ईश्वरः पापीयान् भवितोर्यत् स्वकृतमिरिणमध्यवस्यतीति । जै १,१३४ ।

३. स्वकृत इरिण उपदधात्येतद्वा अस्या ( पृथिव्याः ) निर्ऋतिगृहीतम् । काठ २०, २ ।

४. स्वकृत इरिणे जुहोति प्रदरे वा । एतद्वै निर्ऋत्या आयतनम् । तै १,६,१,३ ।

इला-

१. अयं वै ( पृथिवी- ) लोक इला । जै १, ३०७ ।

२. इलाभिरेव बृहतीराभ्याः । जै २, ४२० ।

३. पशव ( + वै [जै १,१०२; १२२; १२३; १५४; १५५; १६५; १८६; ३३०]) इला । जै १, ३००; ३०७ ।

इलान्द-

१. इलान्द इति पितरः ( गामाह्वयन् ), तेभ्यो वा अतिष्ठत । मै ४, २,१ ।

२. इलान्दं भवति, प्रजाभ्य एव सृष्टाभ्य इरां लूतामव रुन्धते । तैसं ७, ५, ९,१ ।

३. इलान्दा हि पशवः । मै ४, २, ७ ।

४. एतद्वै साक्षादन्नं यदिलान्दम् । तां ५, ३, २ ।

ऐल- ऐलमच्छावाकसाम भवति । जै १, १५५ ।

इलुवर्द- संवत्सरो वा इलुवर्दः । तै ३, ८,२०,५ ।

इष्-

१. अयं वै लोक इषमिति । ऐ ६, ७ ।

२. देवता (प्रजा [माश.]) वा इषः । काठ २७, १; क ४२.१; माश १, ७,३,१४; ४.१,२,१५ ।

३. वर्षं वा इषे, यदुपरिष्टाद् वर्षस्यैधते तदूर्जे । जै १, ८०; ८८ ।

४ वृष्ट्यै तदाह यदाहेषे पिन्वस्वेति । माश १४, २, २, २७ ॥ [इष्- अन्न- १२ द्र.] ।

इष- एतावेव शारदौ (मासौ) स यच्छरद्यूर्ग्रस ओषधयः पच्यन्ते तेनो हैताविषश्चोर्जश्च । माश ४, ३, १, १७ ।

इषिर- इषिर इति । क्षिप्र इत्येतत् । माश ९, ४, १, १० ।

इषीका- अमृतं (आयुर्) वा इषीकाः । तै ३, ८, ४, ३[२] ।

इषु-

१. इषवो वै दिद्यवः । माश ५, ४, २, २ ।

२. चतुःसंधिर्हीषुरनीकं शल्यस्तेजनं पर्णानि । ऐ १,२५ ।

३. चत्वारि हीष्वाः (हीषोः [मै.]) पर्णानि…त्रिषन्धिर्हीषुः । मै ३. ८, १; काठ २५, १; क ३८, ४ ।

४. तस्यान्वागतस्य (यज्ञस्य) सव्याद् धनुरजायत । दक्षिणादिषवः । तैआ ५, १, २ ।

५. रुद्रस्य हीषुः । माश २, ६, २, ३ ।

६. वीर्यं वाऽइषुस्तस्माद्रौद्रा भवन्ति । माश ६, ५, २, १० ।

इषु-धन्विन्- इषधन्वं पुण्यजन्म यज्ञजन्मा हि । …एकमिषुधन्विनं बहवोऽनिषुधन्वा नाभिधृष्णुवन्ति । तैआ ५, १, २-३ ।

इषु-हत- तस्मादिषुहतो वा दण्डहतो वा दशमीं (रात्रिम्) नैर्देश्यं (दुःखनिवृत्तिम्) गच्छति । तां २२,१४, ३ ।

इषुध्->√इषुध्य, इषुध्यसीति यदाह पतीयसीत्येव तदाह । ऐआ १, ३, ५ ।

इषोवृधीय- (सामन्-)

१. पशवो वा इषोवृधीयम् । तां १३, ९, ९ ।

२. मेथी (गवां बन्धने निखातस्थानम्) वा इषोवृधीयम् । तां १३, ९, १७ ।

इष्कर्तृ- इष्कर्तारमध्वरस्य प्रचेतसमिति । अध्वरो वै यज्ञः । प्रकल्पयितारं यज्ञस्य प्रचेतसमित्येतत् । माश ७, ३, १, ३३ ।

इष्टका-

१. अथो खल्वाहुरिष्टका वै देवा अहुताद इति । तैसं ५, ५, १०, ५ ।

२. अन्नं वा इष्टकाः । तैसं ५, ६, २, ५ ।

३. तद्यदस्माऽइष्टे कमभवत्तस्मादिष्टकाः । माश ६,१,२,२३ ।
४. तद्यदिष्टात्समभवंस्तस्मादिष्टकाः । माश ६, १, २, २२ ।
५. तद्यदिष्ट्वा पशुनापश्यत् तस्मादिष्टकाः । माश ६, २, १, १० ।
६. पशवो वा इष्टकाः । मै ३,२,३;६ ।
७. यदिष्ट्वापश्यत्तस्मादिष्टका । माश ६,३, १,२ ॥ [°का– अस्थि– १;२; अहोरात्र– ८; ११; ३५ द्र.] ।

इष्टर्ग– इष्टर्गो वा ऋत्विजामध्वर्युः । तै १, ४,६, ४ ।

इष्टापूर्त्त–

१. अयजतेत्यददादिति ब्राह्मणो गायतीष्टापूर्तं वै ब्राह्मणस्य । माश १३, १,५, ६ ।
२. इष्टी वा एतेन यद् यजते, य एव ओदनः पच्यते, तेन पूर्त्ती, (+एष वाविष्टापूर्ती य एतं पचति [काठ.]) । काठ ८,१३; क ८, १ ।
३. यज्ञेन वा इष्टी, पक्वेन पूर्ती । तैसं १,७,३,३ ।

इष्टि–

१. एष्टयो ह वै नाम ता इष्टय इत्याचक्षते परोक्षेण । परोक्षप्रिया इव हि देवाः । तै १,५,९,२; ३,१२,२,१; ४,१ ।
२. तम् (अश्वमेधं, स्वर्गं च लोकं प्रजापतिः) इष्टिभिरन्वैच्छत् । तमिष्टिभिरन्वविन्दत् । तदिष्टीनामिष्टित्वम् । तै ३,९,१३,१;१२,२,१; ४,१ ।
३. तम् (इन्द्रं देवाः) इष्टिभिरन्वैच्छन् । तमिष्टिभिरन्वविन्दन् । तदिष्टीनामिष्टित्वम् । तै १,५,९,२ ।
४. यज्ञो वै देवेभ्य उदक्रामत्तमिष्टिभिः प्रैषमैच्छन्यदिष्टिभिः प्रैषमैच्छंस्तदिष्टीनामिष्टित्वम् । ऐ १,२ ।

इष्टि-पशुबन्ध– अथ यदीष्टिपशुबन्धेषु वा दर्शपूर्णमासयोर्वा (यज्ञो भ्रेषं नीयात्) भुवस्स्वाहेत्यन्वाहार्यपचने जुहवाथ । सैव तत्र प्रायश्चित्तिः (इति प्रजापतिर्देवानुवाच) । जै १, ३५८ ।

इहनिधन– अस्मिन्नेव लोक इहनिधनेन (साम्ना देवाः) प्रत्यतिष्ठन् । तां १०,१२,३ ।

इहेड– अस्मिन्नेव लोक इहेडेन (साम्ना देवाः) प्रत्यतिष्ठन् । तां १०,१२,४ ।

इहेह अयं वै लोक इहेह । ऐ ४,३० ।

# ई

√ईड्, >ईडित– वाग्वीड ९ सर्वमीट्टे, वाचेद ९ सर्वमीडितम् । माश १,४,३,५ ।

ईडेन्य–

१. ईडामहै देवा ९ ईडेन्यान्··· । मनुष्या वा ईडेन्याः । तैसं २,५,९,६ (तु. माश १,५,२,३) ।
२. ईडेन्यो ह्येषः (अग्निः) । माश १,४,१, २९ ।
४. वाग्वाऽईडेन्या । माश १,४,३,५ ।

ईड्य– ईड्य इति यज्ञिय इत्येतत् । माश ९,२,३,९ ।

ईध्र->ईध्रिय- नम ईध्रियाय चाऽऽतप्याय च । तैसं ४,५,७,२ ।

ई-निधन (सामन्-)–

१. अन्तरिक्षमीनिधनम् । तां २१,२,७ ।

२. अमृतत्वमीनिधनेनागच्छन् ( देवाः) । तां १०,१२,३ ।

ईशान–

१. आदित्यो वाऽईशान आदित्यो ह्यस्य सर्वस्येष्टे । माश ६,१, ३,१७ ।

२. ईशानाय परस्वता आलभते । मै ३,१४,१० ।

३. ईशानो मे मन्यौ श्रितः । तै ३,१०,८, ९ ।

४. दक्षिणतो वासीशानो भूतो वासि । जैउ ३,५,२,२ ।

५. मन्यावीशानम् (प्रजापतिरावेशयत्) । शांआ ११,१ ।

६. यत् शानमिन्द्र इति प्रतिहरति नेशानो यजमानस्य पशून् अभिमन्यते, शान्ताः प्रजा एधन्ते । जै १,१३३ ।

७. यदीशानोऽन्नं तेन । कौ ६,८ ।

८. स ह स (असुः) ईशानो नाम । स दशधा भवति । स एष एतस्य (आदित्यस्य) रश्मिरसुर्भूत्वा सर्वास्वासु प्रजासु प्रत्यवस्थितः । जैउ १,९,३,३;४ ॥ [°न– अग्निरूप– द्र.] ।

ऐशान– या सा तृतीया (ओङ्कारस्य) मात्रैशानदेवत्या कपिला वर्णेन यस्तां ध्यायते नित्यं स गच्छेदैशानं पदम् । गो १,१,२५ ।

## उ

उक्थ–

१. अग्निर्वाऽउक्तस्याहुतय एव थम् । माश १०,६, २,८ ।

२. अपच्छिदिव वा एतद्यज्ञकाण्डं यदुक्थानि । तां ११,११,२;१३,६,२; १४,६,१ ।

३. आदित्यो वा उक् । तस्य चन्द्रमा एव थम् । माश १०,६,२,९ ।

४. इदं शरीरं परिगृह्योत्थापयति (प्राणः) । तस्मादेतदेवोक्थमुपासीतेति । शांआ ५,३; कौउ३,३ ।

५. उक्थमिति बह्वृचाः (उपासते) । एष हीद ९ सर्वमुत्थापयति । माश १०, ५,२, २० ।

६. उक्थैरुदस्थापयन् ( देवाः सोमम् ) । तदुक्थानामुक्थत्वम् । तै २,२,८,७ ।

७. एतदेषाम् (नाम्नां वागिति) उक्थमतो हि सर्वाणि नामान्युत्तिष्ठन्ति । माश १४, ४,४, १ ।

८. एष (अग्निः) उऽएवोक्तस्यैतदन्नं थं तदुक्थमृक्तः । माश १०,४,१,४ ।

९. ओजो वै वीर्यमुक्थानि । काठ ३७,८ ।

१०. तदिदमेवोक्थमियमेव पृथिवीतो हीदं सर्वमुत्तिष्ठति यदिदं किञ्च । ऐआ २,१, २ ।

११. तानुक्थैरुत्थापयति । तदुक्थानामुक्थत्वम् । जै २, २४ ।

१२. तान् ( असुरान् देवाः ) एतैरेवोक्थैः प्रत्युदतिष्ठन् । यदुक्थैः प्रत्युदतिष्ठंस्तदुक्थानामुक्थत्वम् । जै १,१७९ ।

१३. पशव उक्थानि । मै ४,४,१०; ऐ ४,१,१२; कौ २१,५; गो २,६,७; तै १,८,७,२ ।

१४. पशवो (प्रजा [मै., तै १,८,७,२] वा उक्थानि । मै ४,४,१०; काठ ३३,२; कौ २८,१०;२९,

८; जै १,२०१; २,७; ८४; तां ४,५,१८; १६,१०, २; १९, ६,३ तै १, २,२,२; ८,७,२; ष ३, ११ (तु. तैसं ६,६,११,३; जै २,३९६; तैआ ५,६,३)।

१५. पृथिवीवायुराकाश आपो ज्योतींषीत्येष वा आत्मोक्थं पञ्चविधमेतस्माद्धीदं सर्वमुत्तिष्ठत्येत-मेवाप्येति। ऐआ २,३,१।

१६. प्राण उऽ एवोक्तस्यान्नमेव थं तदुक्थमृक्तः। माश १०,४,१,२३।

१७. प्राणः (शरीरम्) प्राविशत्तत् (शरीरम्) प्राणे प्रपन्न उदतिष्ठत्तदुक्थमभवत् ...प्राण उक्थ-मित्येव विद्यात्। ऐआ २,१,४।

१८. प्राणापाना उक्थेन (स्पृणोति)। काठ १४,९।

१९. प्राणो वाऽउक्तस्यान्नमेव थम्। माश १०,६,२,१०।

२०. यदुक्थानि भवन्त्यनुसन्तत्या एव। तां १८,८,६।

२१. यदुक्थान्युक्थश ९ सिनः श ९ सन्ति तेनोक्थ्य उक्थवान्। क ४५, १।

२२. वागुक्थम्। ष १,५।

२३. विडुक्थानि। तां १८,८,६; १९,१६,६।

२४. विश्वानीत्युक्थानि (प्रजापतिरसृजत)। जै १, ९४।

२५. शिरो वै यज्ञस्योक्थ्यो ऽङ्गान्युक्थानि। काठ २७, १०॥ [°क्थ- अन्तरिक्ष- ३९; ५६; ९६; अन्न- ७७; अहन्- २२; ऐन्द्र-२८; ऐन्द्राग्न-८ द्र.]।

उक्थ-श ९ सिन्- ऋचः प्रणव उक्थशंसिनाम्। तैसं ३,२,९,६॥ [°सिन्- उक्थ- २१ द्र.]।

उक्था-मद्-

१. अङ्गानि वा एतानि यज्ञस्य यदुक्थामदानि। क ४४, १।

२. उक्थामदानां (वा एष वर्णो यत्) धेनुः। तैसं २,४,११, ६।

३. बृहस्पतिरुक्थामदानि (मन्त्रवाक्यविशेषान्) श ९ सिषत्। तैसं ३,३,२,१।

४. यथा वै लाङ्गलेनोर्वरां प्रभिन्दन्त्येवमुक्थामदानि यज्ञं प्रभिन्दन्ति। मै ४, ८, ६।

५. यद्धेनवो दीयन्त उक्थामदानां तत् (रूपम्)। मै २, ४, ५॥ [°द- इन्द्र- ३८ द्र.]।

उक्थ्य-

१. अथ ९ ह वा अस्यैषोऽनिरुक्तः प्राणो यदुक्थ्यः। काश ५, २, ३, १।

२. आत्मा यज्ञस्योक्थ्यः। काठ २७, १०।

३. उक्थ्यः षोडशिमान् भवति। तां १९, ६, ३।

४. उक्थ्यम् (ग्रहमवकाशमति) ओजसे मे...। माश ४, ५, ६, ३।

५ उक्थ्याद् वरुणप्रघासान् यज्ञक्रतुं निर्माय (°येमाः [मै.]) प्रजा वरुणेनाग्राहयत्। मै १, १०, ५; काठ ३५ २०; क ४८, १८।

६. उक्थ्या वाजिनः। गो २. १, २२।

७. एतावान्वै यज्ञो यावानुक्थ्यो ऽन्तः श्लेषणाय त्वा इतरे ग्रहा गृह्यन्ते। काठ २७,१०।

८. चक्षुर् (+वा एतद् यज्ञस्य यद् [तैसं.]) उक्थ्यः। तैसं ६, ५, १, ४; मै ४, ६, ५।

९. पशव उक्थ्यानि। कौ २१, ५।

१०. यज्ञियं वै कर्मोक्थ्यं वचः। ऐ १ २९।

११. स (प्रजापतिः) उक्थ्येन रुद्रानयाजयत्, तेऽन्तरिक्षमजयन्। तैसं ७,१, ५, ३।

१२. सोमराज्यमुक्थ्येन (अभिजयति)। मै १, ८, ६॥ [°क्थ्य- अङ्ग- १;६; अन्तरिक्ष- ५६; अन्न-१३; उक्थ- २५; ऐन्द्राग्न- ८ द्र.]।

उक्थ्य-पात्र-

१. अथैतदुक्थ्यपात्रं पुनः प्रयुज्यत आरण्यान्वा एतत् पशून् प्रति। मै ४, ८, ८।

२. यदुक्थ्यपात्रं प्रयुज्यत आरण्यानेव तेन पशून् दाधार। काठ २८, १०; क ४५, १।

३. सर्वेषां वा एतत् पात्राणामिन्द्रियं (+वीर्यं [काठ., क.]) यदुक्थ्यपात्रम्। तैसं ७,२,७, ४; काठ ३०, ३; क ४६, ६।

उक्षन्-

१. उक्षा च मे वशा च मे (यज्ञेन कल्पताम्)। तैसं ४, ७, १०, १।

२. उक्षाणो बृहत्यै। मै ३, १३, १८।

३. उक्षा वयः ककुप् छन्दः। मै २, ८, २; काठ १७, २।

४. उक्ष्णोरन्ध्रो वा एताभ्यां काव्योऽअसा स्वर्गं लोकमपश्यत् स्वर्गस्य लोकस्यानुख्यात्यै स्वर्गाल्लोकान्न च्यवते तुष्टुवानः। तां १३, ९,१९।

५. ततो यः प्रथमो द्रप्सः परापतत् तं बृहस्पतिरभिहायाभ्यगृह्णात्, स उक्षाऽभवत्, तदुक्षण उक्षत्वम्। अथो आहुर्यद्देवता अनुव्यौक्षत् स उक्षाऽभवत्, तदुक्ष्ण उक्षत्वमिति। मै २, ५, ७।

६. पापो वा एष पुरा सन् पश्चात् श्रियमश्नुते यः पुरानड्वान्त्सन् पश्चोक्षत्वं गच्छति। मै २, ५,४।

७. यदुदौक्षत (वषट्कारकृते गायत्र्याश्शिरच्छेदे) तद् बृहस्पतिरभ्यगृह्णात्, स उक्षाऽभवत्, तदुक्ष्ण उक्षत्वम्। काठ १३, ८॥ [°क्षन्- ऐन्द्रामारुत- द्र.]।

उखा-

१. इमे वै लोका उखा। माश ६,५,२,१७;७,१,२२; ७,५,१,२७।

२. उदरम् (नैऋती [तैसं.]) उखा। तैसं ५,६,६,२; माश ७,५,१,३८।

३. एतद्वै देवा एतेन कर्मणैतयावृतेमाँल्लोकानुदखनन् यदुदखनंस्तस्मादुखोखा ह वै तामुखेत्याचक्षते परोऽक्षम्। माश ६,७,१,२३।

४. एषां वा एतल्लोकानां ज्योतिः सम्भृतं यदुखा। तैसं ५,२, ९,१।

५. तस्य (+वा [मै.]) एतच्छिरो (मखस्य) यदुखा। तैसं ५,१,६,३; मै ३,१,७।

६. परम ९ वा एतत्पात्रं यदुखा। मै ३,१,८।

७. प्राजापत्यमेतत्कर्म यदुखा। माश ६, २,२,२३।

८. प्रादेशमात्रीं (उखाम्) कुर्यात्! एतावद्वै मुखम्। क ३०,४।

९. ब्रह्मणा वा एषा यजुषा सम्भृता यदुखा। तैसं ५, १,९, २।

१०. मातेव पुत्रं पृथिवी पुरीष्यमग्नि ९ स्वे योनावभारुखा। तैसं ४, २,५, २।

११. योखा सा शमी। मै १, ६, १२।

१२. योनिर्वा ऽउखा । माश ७, ५, २, २ ।
१३. वरुणो वा एतं गृह्णाति य उखां मुञ्चते । तैसं ५, २, १, ३ ।
१४. व्याममात्री ( उखा ) कार्या । मै ३, १, ७ ।
१५. शिर ( °रो वा [काठ.] ) एतद्यज्ञस्य यदुखा । काठ १९,६; माश ६,५,३,८;४,१५ ॥ [ °खा- अग्नि- ५५७; अन्तरिक्ष- १६; आग्नेय- १२; आत्मन्- ४९ द्र. ] ।

उख्य- अग्नि ३५८ द्र.

उग्र-

१. अशनायापिपासे ह वा उग्रं वचः । तै १, ५, ९, ६ ।
२. यदुग्रो देवं ओषधयो वनस्पतयस्तेन । कौ ६, ५ ।
३. वायुर्वा ऽउग्रः । माश ६, १, ३, १३ ॥ [ °ग्र- अग्निरूप-; इन्द्र- २०९ द्र. ] ।

उच्चाटन- हरितालेन गोहृदयशोणितेन चेत्युत्तरेण सन्नयेद् यं द्विष्यात्प्रम ९ हिष्ठीयेनास्य शय्यामवाकिरेदगारं च भस्मना नैकग्रामे वसति । सा २, ६, ६ ।

उच्चैस् (:)

१. अथ यदुच्चैः कीर्तयेदीश्वरो हास्य वाचो रक्षोभाषो जनितोः । ऐ २, ७ ।
२. उच्चैर्ऋचा क्रियत उच्चैः साम्नोपांशु यजुषा । मै ३, ६, ५; ४, ८, ७ ।
३. यदुच्चैस्तच्छरीरं तस्मादाविराविर्हि शरीरम् । ऐआ २, ३, ६ ।
४. यदुच्चैस् (शंसति) तदितरेषां (उपांश्वन्तर्यामाभ्यामितरेषाम् ) ग्रहाणाम् । तैसं ६,५,११,२-३ ।

उत्कर-

१. एष वेद्या आत्मा यदुत्करः । जै २, ७८ ।
२. वल्मीक उत्करः । मै ४, १, १३; काठ ३१, १२ ।

उत्तर, रा-

१. अयं वै ( भू- ) लोकोऽस्मय उत्तरः । माश १४, ३, १, २८ ।
२. आनुष्टुभैषा ( उत्तरा ) दिक् । माश १३, २,२, १९ ।
३. उत्तरा ह वै सोमो राजा । ऐ १, ८ ।
४. उत्तरोर्द्ध ओजस्वितरः । तैआ १, २४, ३ ।
५ एषा ( उत्तरा ) वै वरुणस्य दिक् । तै ३, ८, २०, ४ ।
६. एषा ( उत्तरा) हि दिक् स्विष्टकृतः । माश २, ३, १, २३ ।
७. तेषु हि वा एष एतदध्याहितस्तपति स वा एष ( सूर्यः) उत्तरोऽस्मात्सर्वस्माद् भूताद्भविष्यतः सर्वमेवेदमतिरोचते यदिदं किंच । ऐ ४, १८ ।
८. भ्रातृव्यलोक उत्तराणि ( छदी ९ षि ) । क ४०, ३ ।
९. येयमुत्तरा वेदिर्या अत्रीः प्रजास्तासामेषा योनिस्ता एतामनुप्रजायन्ते, येयं दक्षिणा वेदिर्या आद्याः प्रजास्तासामेषा योनिस्ता एतामनुप्रजायन्ते । मै १, १०, १३ ।
१०. योत्तरा वेदिर्या अत्रीः प्रजास्तासा ९ सा योनिः । काठ ३६, ७ ।
११. वर्षाभिर् ( विशा ) उत्तरम् ( पक्षमचिनुत ) । मै ३, ४,८ ।

उत्तरतस् (:)

१. अथास्येनाऽऽङ्गिरसेन ( उद्गात्रा ) मनुष्या उत्तरतः ( आगच्छन् ) । जैउ २, ३, १, २ ।
२. आश्रुतिरुत्तरत इति, आश्रावयन्नुत्तरत इत्येवैतदाह । माश १४, १,३, २२ ।
३. उत्तरत आयतनो वै होता । तै ३, ९, ५, २ ।
४. ओज एव उत्तरतो धत्ते, तस्मादुत्तरतो ऽभिप्रयायी जयति । तैसं ५, ३, २, ४ ।
५ तस्मादुत्तरतः पश्चादयं भूयिष्ठं पवमानः ( वायुः ) पवते सवितृप्रसूतो ह्येष एतत्पवते । ऐ १, ७ ।
६. तस्मादुद्गाता वृत उत्तरतो निवेशनं लिप्सेत । जैउ २, ३,२, २ ।
७. दक्षिणतः पक्षो राथन्तरो ऽथवा उत्तरतः पक्षो बार्हतः । शांआ २, ५ ।
८. देवस्य सवितुर्भागोऽसीत्युत्तरतः । तैसं ५, ३, ४, ४ ।
९. द्युतानस्त्वा मारुतो मरुद्भिरुत्तरतः (+रोचयत्वानुष्टुभेन छन्दसा [तैआ.]) पातु । तैसं ५, ५, ९, ४; तैआ ४, ६, २ ।
१०. ब्रह्मवर्चसमेवोत्तरतो धत्ते । तैसं ५, ३, ४, ४ ।
११. मरुत उत्तरतः ( पर्यपश्यन् ) । जै २, १४२ ।
१२. मित्रावरुणौ त्वोत्तरतः परिधत्तां (+ध्रुवेण धर्मणा [तैसं.], विश्वस्यारिष्ट्यै [माश.]) । तैसं १, १, ११,२; मै १, १, १२; माश १, ३,४, ४ ।
१३. मित्रावरुणौ त्वोत्तरतो मरुद्भी रोचयेताम् । मै ४, ९, ५ ।
१४. यदुत्तरतो ( वायुः ) वाति । सवितैव भूत्वोत्तरतो वाति । तै २, ३, ९, ७ ।
१५. यदुत्तरतो वासि सोमो राजा भूतो वासि । जैउ ३, ५, २, २ ।
१६. विवर्तो ऽष्टाचत्वारि ँ श इत्युत्तरतः । तैसं ५, ३, ४, ५ ।
१७. विश्वकर्मादित्यैरुत्तरतः ( अपानुदत ) । तैसं ६, २, ७, ५ ।
१८. विश्वे त्वा देवा उत्तरतोऽभिषिञ्चन्त्वानुष्टुभेन छन्दसा । तै २,७, १५, ५ ।
१९. शमीमयम् ( शङ्कुम् ) उत्तरतः, शं मेऽसदिति । माश १३, ८, ४,१ ।
२०. श्रोत्रमुत्तरतः (दधाति) । तैआ ५,४,७ ॥ [°तः आदित्य- ३३३;३३४;३३५; आश्रुति- द्र.]।

उत्तर-नाभि- वाग्वाऽउत्तरनाभिः । माश १४, ३, १, १६ ।

उत्तर-बर्हिस्- यजमान उत्तरबर्हिः । तैसं ६, २, ४, ६ ।

उत्तर-वेदि-

१. ऊधरुत्तरवेदिः ( इडायाः ) । मै ४, २, ७ ।
२. एतावती वा इयं पृथिव्यासीद्यावत्युत्तरवेदिः । काठ २५, ६ ।
३. खल उत्तरवेदिः । तां १६, १३, ७ ।
४. चत्वारि वा एतस्या नामानि नासिका, कशारिः, सिँ ह्युत्तरवेदिः । काठ २५,६; क ३९,३।
५. तदुत्तरँ वै श्रेयो विदामहीति, तदुत्तरवेद्या उत्तरवेदित्वम् । मै ३. ८, ३ ।
६. तां (उत्तरवेदिम्) युगमात्रीं वा सर्वतः करोति, यजमानस्य वा दश दश पदानि (सर्वतः), दशाक्षरा वै विराड्, वाग्वै विराड्, वाग्यज्ञः । माश ३,५, १,३४ ।
७. तेजो वा उत्तरवेदिः । तैआ ५, १०, २ ।

८. तेभ्य (अङ्गिरोभ्यः) एतां वाचं वडबां श्वेतां भूतां ···आनयन्। ···सा क्रुद्धा सिंह्युभयतोमुखी भूत्वोर्ध्वोदक्रामत्···सैषोत्तरवेदिः। जै २, ११५।
९. देवपात्र ँ वा उत्तरवेदिः। मै ३, ८, ५; काठ २५, ६; क ३९, ३।
१०. द्यौरुत्तरवेदिः। माश ७, ३, १, २७।
११. नासिका ह वा ऽएषा यज्ञस्य यदुत्तरवेदिः। अथ यदेनामुत्तरां वेदेरुपकिरति तस्मादुत्तरवेदिर्नाम। माश ३, ५, १, १२। (तु. तैसं ६,२,११,४;४,१०,३; मै ४,५, ९; ६,३)।
१२. पशव उत्तरवेद्याम्। काठ ३४, १४।
१३. पशवो (यज्ञो [माश.]) वा उत्तरवेदिः। तैसं ५,२,५,७;६,५,९,४; काठ २०,४;२१,४; क ३१, ६; ४४,९; तै १,६,४, ३; माश १४, ३, १,१५।
१४. प्रजापतेर्वै नासिकाऽशीर्यत सोत्तरवेदिरभवत्। काठ २५, ६; क ३९, ३।
१५. प्रजा (मुखम् [तैआ.]) उत्तरवेदिः। माश १२,९,१,११; तैआ ५, १०,३।
१६. यद्वेद्यं तदुत्तरवेद्या (अविन्दन्त), तदुत्तरवेद्या उत्तरवेदित्वम्। काठ २५, ६।
१७. योषा(योनिर् [माश ७,३,१,२८]) वाऽउत्तरवेदिः। माश ३. ५,१,३३; ७,३,१,२८।
१८. सा (सिंही = महिषी, उत्तरवेदिः) देवानुपावर्तत, ततो देवा अभवन् पराऽसुरा अभवन् यस्यैवं विदुषो वेदिश्च क्रियत उत्तरवेदिश् च न्युप्यते। काठ २५, ६ ॥ [°दि- अग्नि ४८५; अग्निचयन–२; अन्तरिक्ष– ५७; उत्तर– ९; १० द्र.]।

**उत्तर-सद्**- उत्तरसदो (देवाः) वरुणनेत्राः। तैसं १,८,७,१।

**उत्तर-सधस्थ**- द्यौर्वाऽउत्तर ँ सधस्थम् माश ८,६,३,२३;९,२,३,३५।

**उत्तरात्**

१. अयमुत्तरात्संयद्वसुस्तस्य ताक्ष्यश्चारिष्टनेमिश्च सेनानी- (°द्वसुस्तस्य सेनजिच्च सुषेणश्च सेनानि- [तैसं.]) ग्रामण्यौ, विश्वाची च घृताची चाप्सरसावापो हेतिर्वातः प्रहेतिः। तैसं ४,४,३,२; काठ १७,९।
२. अयम् (वायुः) उत्तराद् भूयिष्ठं पवते सवितृप्रसूतो ह्येष (वायुः) पवते। काठ २३,८।
३. इदमुत्तरात् सुवस्तस्य श्रोत्र ँ सौव ँ शरच्छ्रौत्र्यनुष्टुप्छारद्यनुष्टुभः स्वार ँ स्वारान्मन्थी, मन्थिन एकवि ँ श एकवि ँ शाद् वैराजं, वैराजाज्जमदग्निर्ऋषिः प्रजापतिगृहीतया त्वया श्रोत्रं गृह्णामि···। तैसं ४,३,२,२-३।
४. इदमुत्तरात्स्वः··· श्रोत्रं···शरत्··· अनुष्टुप्···ऐडं मन्थी··· एकवि ँ शः···वैराज ँ विश्वामित्रा ऋषिः। मै २,७,१९।
५. इन्द्रस्य भागोऽसि विष्णोराधिपत्यमित्युत्तरात्। काठ २१, १।
६. उत्तरात्पशुर्भूयश्शृणोति। काठ २०,९।
७. ओज एवोत्तराद्धाति तस्मादुत्तरादभिप्रयायी जयति। काठ २०,११;२१,१; क ३१,१५।
८. गह्वरोऽवस्थावानो नामस्थ, तेषां व उत्तराद् गृहा आपो व इषवः। तैसं ५,५,१०,४।
९. जागृविश्च मारुन्धती चोत्तराद्गोपायताम्। काठ ३७,१०।
१०. तपो नवदश इत्युत्तरात्। काठ २०, १३।
११. देवस्य सवितुर्भागोऽसि बृहस्पतेराधिपत्यमित्युत्तरात्। काठ २१,१।

१२. नाकष्पष्ट्रित्रि ९ श इत्युत्तरात्, स्वर्गो वै लोको नाकः। काठ २०,१३।
१३. ब्रह्मवर्चसमेवोत्तराद्धाति। काठ २१,१।
१४. यत्ते रुद्रोत्तराद् धनुस्तद् वातो अनु वातु ते, तस्मै ते रुद्रेदुवत्सरेण नमस्करोमि। तैसं ५,५,७,३-४।
१५. या उत्तरात्ताभिर्विश्वामित्रः (आघ्नोत्)। क ३१,११।
१६ या ओजस्वतीस्ता उत्तरादाऽस्य बली जायते य एवं वेद। काठ २१,-१।
१७ रथन्तरमुत्तराद् गायति। काठ २१, ५।
१८. वृष्णिर्वय इत्युत्तरात्। काठ २०, १०।
१९. षोडशस्स्तोम इत्युत्तरात् (°त्तरतः [तैसं.])। तैसं ५,३, ५,१; काठ २१, २, क ३१, १७।
२०. सम्भरणस्त्रयोवि ९ श इत्युत्तरात्, तस्मात् सव्यो हस्तयोस्सम्भार्यतरः। काठ २०,१३।

उत्तरात्-सद्- ये देवा उत्तरात्सदो मित्रावरुणनेत्राः रक्षोहणस्ते नोऽवन्तु। मै २,६,३।

उत्तरादायतन- उत्तरादायतनाः पशवः। काठ २५,५; क ३१,१; ३९, २।

उत्तराऽरणि-

१. एतद्वै विष्णुरूपं यदुत्तरारणिः, तद् गायत्र्या रूपम्। काटसंक १८ : ७-८।
२. पुरूरवा असीत्युत्तरारणिम् ...... जनयति। काश ४, ४,१,१४।

उत्तराऽर्ध-

१. उत्तरार्धे जुहोत्येषा (उदीची) ह्येतस्य देवस्य (रुद्रस्य) दिक्। माश १, ७, ३, २०।
२. याग्नेराज्यभागस्य (आहुतिः) सोत्तरार्धे होतव्या, ततो योत्तरा सा रक्षोदेवत्या। मै १, ४, १२ (तु. तैसं २,६, २, १)॥ [°र्ध- अग्नि ४११ द्र.]।

उत्तरा-सद्- मित्रावरुणनेत्रेभ्यो वा मरुन्नेत्रेभ्यो वा देवेभ्य उत्तरासद्भ्यः स्वाहा। माश ५, २,४,५।

उत्तरौष्ठ- असौ लोक उत्तरौष्ठः। कौ ३, ७।

उत्तान-

१. इयं (पृथिवी) वा उत्तान आङ्गीरसः। तै २, ३, २,५; ३, ४, ६।
२. उत्तानस्याङ्गिरसस्याप्राणत् प्रतिजगृहुषः षष्ठमिन्द्रियस्यापाक्रामत्। काठ ९, १२।
३. उत्तानायाङ्गिरसायाप्राणदनयन्। मै १,९,४।
४. नोत्तानः शयीत (दीक्षितः), यदुत्तानः शयीतेमे लोका ययेयुः। मै ३, ६,९।

उत्थान- यत्ततो यज्ञस्योदृचं गत्वोत्तिष्ठन्ति तदुत्थानम्। माश ४,६,८,२।

उत्स- असौ वै (द्यु-) लोक उत्सो देवः। जै १, १२१॥ [°त्स- अप्- ९४ द्र]।

उत्सेध (सामविशेष-)-

१. उत्सेधनिषेधौ ब्रह्म सामनी भवत उत्सेधेनैवास्मै पशूनुत्सिध्य निषेधेन परिगृह्णाति। तां १९,७,४।
२. उत्सेधेन वै देवाः पशूनुदसेधन्। तां १५, ९, ११।

३. ता होत्सेधेनैवोत्सिषिधुः··· । जै २,९०।

उद्

उदिति सोऽसावादित्यः । जैउ २, ३, ३, ८ ॥ [ उद्- अनुष्टुभ्- ३२ द्र. ]।

उदक-

१. एको वो देवो अप्यतिष्ठत् स्यन्दमाना यथावशम् । उदानीपुर्महीरिति तस्मादुदकमुच्यते। मै २,१३,१ ।

२. यत्पर्जन्यः पृथिवी ꣹ रेतसा(उदकेन)ऽवति (तद् इरा ······ जायते) । तैआ ६,६,३ ।

उदञ्च्-

१. उदगग्रेभिर् ( दर्भैः ) देवाः······समुपसरन्ति । काठसंक ५८ : ५-६ ।

२. उदङ्ङासीन उद्गायति । जै १, ७२ ।

३. उदङ्ङुद्दिशति, रुद्रं तेन निरवदयते । मै १, ८, ५ ।

४. उदङ् तिष्ठन् जुहोत्येषा वै रुद्रस्य दिक् । तैसं ५, ४, ३, ३ ।

५. उदञ्चं निरस्यति एषा वै रुद्रस्य दिक् । तैआ ५, ८, ९ ।

६. उदीच ( पशून् ) उत्सृजत्येषा वै देवमनुष्याणा ꣹ शान्ता दिक् । तैसं ५, २,५,३ ।

७. पङ्क्तिराधसः ( अग्निविशेषस्य ) उदग्दिश्यस्य । तैआ १, १८, १ ।

८. यदुदङ् तद् रुद्राणाम् । तैआ ५, ८, ५ ।

९. यदुदङ् प्रणीयते मनुष्यलोकं तेनाभिजयति । मै ३, ९,५ ।

१०. यदुदङ् ( पर्यावर्तेत ) मानुषस्स्यात् । काठ २१, १० ।

११. यदुदङ् ( पर्यावर्तेत ) रौद्रः ( स्यात् ) । मै ३, ३, १० ।

१२. यदुदञ्चः परेत्य त्र्यम्बकैश्चरन्ति रुद्रमेव तत्स्वायां दिशि प्रीणन्ति । कौ ५, ७ ।

१३. यदुदीच उत्सृजेद्रुद्राय पशूनपिदध्यात् । काठ २०, ३ ।

१४. स हाग्निरुवाच । उदञ्चो ( असुराः ) वै नः पलाय्य मुच्यन्त इति । माश १, २,४, १०। [ °दञ्च्- अग्नि [ग्नी] ध्- १२ द्र. ]।

उदग्-अयन- य एवं विद्वानुदगयने प्रमीयते देवानामेव महिमानं गत्वाऽऽदित्यस्य सायुज्यं गच्छति । तैआ १०,६४,१ ।

उदीचीन- प्राचीनमुदीचीनं मेध्यमुदक्रामद् दक्षिणा प्रतीचीनममेध्यम् । मै ४, १, १० ।

उदीचीन-दश- उदीचीनदशं वै तत्पवित्रं भवति येन तत्सोम ꣹ राजान ꣹ सम्पावयन्ति । माश १, ७, १, १३ ।

उदीचीन-देवत्य- उदीचीनदेवत्या उद्गातारः । जै २, ४५ ।

उदीचीन-वंशा- तस्मान्मानुषऽउदीचीनव꣹शामेव शालां वा विमितं वा मिन्वन्ति । माश ३,१, १, ७ ।

उदीची-

१. अथ यदुदीच्यां दिशि तत्सर्वमुद्गीथेनाप्नोति । जैउ १, १०, १, ६ ।

२. अथ यन्मैत्रावरुण्या पयस्यया प्रचरति । यदेवैनमुदीच्यां दिश ँ समारोहयति··· । माश ५,५,१,६ ।
३. अथैतस्यामुदीच्यां दिशि भूयिष्ठं विद्योतते । ष २, ४ ।
४. अथैनम् ( इन्द्रम् ) उदीच्यां दिशि विश्वे देवा···अभ्यषिञ्चन्···वैराज्याय । ऐ ८, १४ ।
५. आदित्या उदीचीम् ( उदजयन् ) । काठ ३१, ८; क ४७, ८ ।
६. उदीची दिगनुष्टुप्छन्दो, वैराज ँ साम, विश्वे देवा देवता, शरदृतुरेकवि ँ शस्स्तोमस्त्रिणववर्तनिस्तुर्यवाड्वय आस्कन्दोऽयानामुत्तराद्वातो वातः पुराण ऋषिः । काठ ३९,७।
७. उदीची दिङ् (°दिक् [तै.]) मित्रावरुणौ देवता । मै १,५,४; काठ ७,२; तै ३, ११,५, २ ।
८. उदीची दिशा ँ शरदृतूनां, मित्रावरुणौ देवता, पुष्टं द्रविणमेकवि ँ शः स्तोमः, स उ त्रिणववर्तनिस्तुर्यवाड् वय आस्कन्दोऽयानामुत्तराद्वातो वातः, प्रत्न ऋषिः । तैसं ४,३,३,२ ।
९. उदीचीमावृत्य दोग्धि मनुष्यलोकमेव तेन जयति । तै २,१,८,१; ३,२, १,३ ।
१०. उदीचीमेव दिशं पथ्यया स्वस्त्या प्राजानंस्तस्मादत्रोत्तराहि वाग्वदति कुरुपञ्चालत्रा । माश ३,२, ३, १५ ।
११. उदीची हि मनुष्याणां दिक् । माश १,२,५,१७; ७,१,१२ (तु. मै ३, ६,१; तै १,६,९,७) ।
१२. उदीच्या त्वा दिशा मित्रावरुणाभ्यां देवतयाऽऽनुष्टुभेन च्छन्दसाग्नेः पार्श्वमुपदधामि । काठ २२,५ ।
१३. उदीच्या त्वा दिशा सादयामि मित्रावरुणाभ्यां देवाभ्यां देवतयाऽऽनुष्टुभेन छन्दसाग्नेः पक्षमुपदधामि । मै २,८,११ (तु. तैसं ५,५,८,३) ।
१४. उदीच्या दिशाप ओषधयो वनस्पतयो मार्जयन्ताम् । तैसं १,६,५,२; मै १,४,२; काठ ५,५ ।
१५. उदीच्युद्गातुः (दिक् ) । माश १३,५,४, २४ ।
१६. उदीच्येव यशः । गो १,५,१५ ।
१७. एतस्या ँ ह (उदीच्यां प्राच्याम् ) दिशि स्वर्गस्य लोकस्य द्वारम् । माश ६,६, २, ४ ।
१८. एषा (उदीची) वै रुद्रस्य दिक् । तै १,७,८,६ (तु. माश २,६,२,७) ।
१९. एषा ह्युभयेषां देवमनुष्याणां दिग्यदुदीची प्राची । माश ६,४,४,२२, (तु. तै २,१,३,५) ।
२०. तस्मादुदीच्यां दिशि प्रज्ञाततरा वागुद्यत उदञ्च उ एव यन्ति वाचं शिक्षितुं यो वा तत आगच्छति तस्य वा शुश्रूषन्त इति । कौ ७,६ ।
२१. तस्मादेतस्यां (उदीच्याम् ) दिशि प्रजा अशनायुकाः । माश ७, ३,१, २३ ।
२२. तस्मादेतस्यां (उदीच्याम् ) दिश्येतौ पशू (अश्वश्चाविश्च) भूयिष्ठौ । माश ७,५,२, १५ ।
२३. तस्मादेतस्यामुदीच्यां दिशि ये के च परेण हिमवन्तं जनपदा उत्तरकुरव उत्तरमद्रा इति वैराज्यायैव तेऽभिषिच्यन्ते विराडित्येनानभिषिक्तानाचक्षते । ऐ ८, १४ ।
२४. धर्त्री (उदीची) दिशां क्षत्रमिदं दाधारोपस्थाऽऽशानां मित्रवदस्त्वोजः । मित्रावरुणा शरदाऽह्नां चिकित्नू अस्मै राष्ट्राय महि शर्म यच्छतम् । वैराजे सामन्नधि मे मनीषाऽनुष्टुभा संभृतं वीर्यं ँ सहः । तैसं ४,४,१२,३ ।
२५. नक्षत्राणां वा एषा दिग्यदुदीची । ष ३,१ ।
२६. मरुता उदीचीं (दिशमुदजयन् ) । मै ४,१,१० ।

२७. मामभ्यपक्रामेत्युदीची दिक् (आदित्याय) प्रायच्छद् रूपं च वर्णं च। जै २,२५।
२८. यदुदीचीरुपप्रवर्तयति मनुष्यलोकमेवैना (प्रजाः) उपप्रजनयति। मै ४,५,४।
२९. सवितारं यजतेत्यब्रवीत् तेनोदीचीम् (दिशं प्रज्ञारयथ)। काठ २३,८; क ३६,५।
३०. सवित्रोदीचीम् (दिशं हे देवा यूयं प्रजानाथ)। ऐ १,७।
३१. सा (पथ्या स्वस्तिः) उदीचीं दिशं प्राजानात्। कौ ७, ६।
३२. साम्नामुदीची महती दिगुच्यते। तै ३,१२,९,१।
३३. सुषदा नामास्युदीची दिक्, तस्यास्ते वरुणोऽधिपतिः स्वदागू रक्षिता। मै २,१३,२१।
३४. स्वराडस्युदीची दिक्। तैसं ४,३,६,२; मै २,८,३; काठ १७,३।
३५. स्वराडस्युदीची दिङ्मरुतस्ते (°दिग्विश्वे ते [तैसं.]) देवा अधिपतयो वरुणो हेतीनां प्रतिधर्तैकवि ऺशस्त्वा स्तोमः पृथिव्या ऺश्रयतु निष्केवल्यमुक्थमव्यथायै स्तभ्नोतु (°मुक्थमव्यथयत् स्तभ्नातु [तैसं.]) वैराज ऺसाम। तैसं ४,४,२,२; मै २,८,९।
[ °ची- अनुष्टुभ्- २९;३०;३१; अप्- १३९; अवस्थावन्- १; इन्द्र- २११; २६० द्र.]।

**उदपुरा**- अग्नि- ४१२ द्र.

**उदयनीय-**

१. अथ यदत्रावभृथादुदेत्य यजते तस्मादेतदुदयनीयम्। माश ४,५,१, २।
२. अदितिरस्युभयतः शीर्ष्णी (वाक्) इत्याह, यदेवादित्यः प्रायणीयो यज्ञानामादित्य उदयनीयस्तस्मादेवमाह। तैसं ६, १, ७, ५।
३. अपान (उदान [ऐ.]) उदयनीयः। काठ ३४, ६; ऐ १, ७।
४. अमुष्मिन् लोक उदयनीयेनातिरात्रेण प्रतिष्ठायोद्यन्ति। जै २, ४४।
५. उदान एवोदयनीयोऽतिरात्रः। जै २, ५८।
६. यत्पारे तीर्थं तदुदयनीयम्। काठ ३४, १६।
७. यदादित्यमुदयनीयं भवत्यस्मिन्नेव लोके प्रतितिष्ठति। क ३६, ५।
८. वागुदयनीयम्। कौ ७, ९॥ [°य- आदित्य- ८२; ८८;९२]।

**उदर-**

१. इदमेवोदरमेकविंशमहः। जै २, ५७।
२. इन्द्रो वै वृत्र ऺहत्वा त ऺशवे मानवे प्रौहत्, सोमो वै वृत्र उदर ऺश्वो मानवस्त-स्मादुदरे सोमः पीयते। काठ १२,३।
३. उदरं (+वै [शांआ.]) वशः। ऐआ ५, २, ५; शांआ २, ११।
४. उदरं वा ऽ उपयमन्युदरेण हीद ऺसर्वमन्नाद्यमुपयतम्। माश १४, २, १, १७।
५. उदर ऺवृत्रः पाप्मा क्षुद् भ्रातृव्यः पुरुषस्य। मै ३, ६, ७ (तु. तैसं २,४,१२,६)।
६. उदरं वै सप्तदश स्तोमानाम्। जै २, १३५।
७. उदर ऺ(+वै [कौ ११, ८]) सदः। मै ३,८,८;४,५,९; क ४०, ३; कौ ११,८;१७, ७।
८. उदरमेकवि ऺशो वि ऺशतिर्वा अन्तरुदरे कुन्तापान्युदरमेकवि ऺशम्। माश १२, २, ४, १२।

९. उदरमेवास्य ( यज्ञस्य ) सदः । माश ३, ५, ३, ५ ।
१०. उदरं ब्रह्मेति शार्कराक्ष्या उपासते । ऐआ २, १, ४ ।
११. उदरं मध्यमा चितिः । माश ८, ७, २, १८ ।
१२. उरु गृणीहीत्यब्रवीत्तदुदरमभवत् । ऐआ २, १, ४ ।
१३. एकविंशतिर्हि ता अन्तरुदरे विकृतयः । ऐआ १, ५, १ ।
१४. क्षुदुदरं ( °दारं [काठ]) पाप्मा भ्रातृव्यः । काठ २३, ४; क ३६,१ ।
१५. तं (वृत्रमिन्द्रः) द्वेधान्वभिनत्तस्य यत्सौम्यं न्यक्तमास तं चन्द्रमसं चकाराथ यदस्यासुर्यमास तेनेमाः प्रजा उदरेणाविध्यत् । माश १, ६, ३, १७ ।
१६. प्रजापतेर्वा एतदुदरं यत्सदः । जै १, ७१; तां ६, ४,११ ।
१७. प्रतिष्ठोदरमन्नाद्यानाम् । ऐआ १, ५, १ ।
१८ यदिमाः प्रजा अशनमिच्छन्ते ऽस्मा ऽएवैतद्वृत्रायोदराय बलिं हरन्ति । माश १,६,३,१७ ।
१९. स ( प्रजापतिः ) उदरादेव मध्यात् सप्तदशं स्तोममसृजत जगतीं छन्दो वामदेव्यं साम विश्वान् देवान् देवतां वैश्यं मनुष्यं गां पशुम् । जै १, ६९ ।
२०. समुद्र उदरम् ( समुद्रः =अन्तरिक्षम् ) । तैसं ७, ५, २५, २ ।
२१. समुद्रमुदरेण ( प्रीणामि ) । तैसं ५,७, १६, १; मैं ३, १५,७; काठ ५२,६ ॥ [°र- इडा-; उखा- द्र. ] ।

उदर्क- रसो वा उदर्कः । कौ ११, ५ ।

उदल-,>औदल- उदलो वा एतेन वैश्वामित्रः प्रजापतिं भूमानमगच्छत् प्रजायते बहुर्भवत्यौदलेन (साम्ना) तुष्टुवानः । तां १४, ११, ३२; ३३ ।

उदान-

१. उदस्त इव ह्ययमुदानः । ष २, २ ।
२. उदान एव पूर्णमा, उदानेन ह्ययं पुरुषः पूर्यत इव··· । ···उदान एवान्नप्रद उदानेन हीदमन्नं प्रदीयते··· । माश ११, २, ४, ५-६ ।
३. उदाना मासाः । तां ५, १०, ३ ।
४. उदाने पर्जन्यम् ( प्रजापतिरावेशयत् ) । शांआ ११,१ ।
५ उदानो बृहत् (यजमानः [ष.]) । जै १, २२९; ष २,७ ।
६. उदानो वै त्रिककुप्छन्दः । माश ८, ५, २, ४ ।
७. उदानो वै नियुतः ( बृहच्छोचाः [माश १, ४, ३, ३] ) । माश १,४,३,३;६, २, २, ६ ।
८. उदानो हृदये ( प्रतिष्ठितः ) । शांआ ११, ६ ।
९. उदानो ह्यन्तर्यामो ऽमु॑ ( दिवम् ) ह्येव लोकमुदनन्नभ्युदनिति । माश ४, १, २, २७ ।
१०. चन्द्रमा उदानः । जैउ ४, ११, १, ९ ।
११. तम् (संज्ञप्तं पशुम् ) उदीची दिगुदानेनत्यनुप्राणदुदानमेवास्मिँस्तददधात् । माश ११,८,३ ६ । [ °न- अन्तर्याम- ४;५; आ- ३; उदयनीय- ३; ५ द्र.] ।

उदावर्त- न गुदः पर्याकर्तवै, यद् गुदं पर्याकुर्यादुदावर्तः प्रजा हन्यात् । मैं ३, १०, ६ ।

उदीची-, उदीचीन- उदञ्च्- द्र. ।

**उदुब्रह्मीय-** ऋतवो वा उदुब्रह्मीयम् (सूक्तम् )। कौ २९, ६।

**उदुम्बर-**

१. अथास्य (प्रजापतेः) इन्द्र ओज आदायोदङ्ङुदक्रामत्स उदुम्बरोऽभवत्। माश ७,४,१,३९।
२. अथो सर्वऽ एते वनस्पतयो यदुदुम्बरः। माश ७, ५, १, १५।
३. उदुम्बर ऊर्जा ( त्वावतु )। तैसं ७, ४, १२, १; काठ ४४, १।
४. उदुम्बरः प्राजापत्यः लोहितं फलं पच्यते। मै १, ८, १।
५. उदुम्बरेणोर्जम् ( अन्वाभवत् )। काठ ४३, ४।
६. ऊर्गुदुम्बरः। तैसं ५, २, ७, ४; काठ ८, २; जै १, ७१;७२; तां ६, ४, ११; १६,६,४।
७. ऊर्ग्वा अन्नमुदुम्बरः। (°म्बरम् [ जै. ] )। तै १, २, ६, ५; जै २, १५९।
८. ऊर्जो वा एषोऽन्नाद्याद्वनस्पतिरजायत यदुदुम्बरः। ऐ ७, ३२।
९. तद्येषु वनस्पतिपूर्ग्यो रस आसीदुदुम्बरे तमदधुस्तस्यैतदूर्जा सर्वान्वनस्पतीन्प्रति पच्यते तस्मात्स सर्वदार्द्रः सर्वदा क्षीरी तदेतत्सर्वमन्नं यदुदुम्बरः सर्वे वनस्पतयः। माश ६,६,३,३।
१०. तस्माद् ( प्रजापतेः ) अग्निरध्यसृज्यत सोऽस्य मूर्ध्न ऊर्ध्व उदद्रवत् तस्य यल्लोहितमासीत् तदपामृष्ट, तद् भूम्यां न्यमार्ट् तत उदुम्बरोऽजायत, तस्मात्स लोहितं पच्यते। काठ ६,१।
११. तस्य ( प्रजापतेः ) यल्लोहितमासीत्तदपामृष्ट तद् भूम्यां न्यमार्ट्। तत उदुम्बरोऽजायत, तस्मात्स लोहितं पच्यते। क ३, १२।
१२. ते ह सर्व एव वनस्पतयो ऽसुरानभ्युपेयुरुदुम्बरो हैव देवान्न जहौ ते देवा असुरान् जित्वा तेषां वनस्पतीनवृञ्जत। माश ६, ६, ३, २।
१३. देवा यत्रोर्जं व्यभजन्त तत उदुम्बरा उदतिष्ठत्। मै १,६,५;३.१,९।
१४. प्रजापतिर्देवेभ्य (प्रजाभ्यः [जै.]) ऊर्जं व्यभजत्तत (°तदु° [जै.]) उदुम्बरः समभवत्। जै १,७०; तां ६,४,१।
१५. प्राजापत्य (त्यो वा [तां.]) उदुम्बरः। जै १,७०; तां ६,४,१; माश ४,६, १,३।
१६. भौज्यं वा एतद्वनस्पतीनाम् (यदुदुम्बरः)। ऐ ७,३२;८,१६।
१७. मा ९ सेभ्य एवास्योर्गस्रवत्स उदुम्बरोऽभवत्। माश १२,७, १,९।
१८. मासि मासि वा एषो (उदुम्बरः) ऽवान्तरमन्येभ्यो वनस्पतिभ्यः पच्यत एतद्वै पुष्ट्या रूपम्। मै २,५,१।
१९. यद्वैतद्देवा इषमूर्जं व्यभजन्त तत उदुम्बरः समभवत्तस्मात्स त्रिः संवत्सरस्य पच्यते। ऐ ५,२४।
२०. सोऽब्रवीद् (प्रजापतिः) अयं वाव मा सर्वस्मात्पाप्मन उदभार्षीदिति यदब्रवीदुदभार्षीन्मेति तस्मादुदुम्भर उदुम्भरो ह वै तमुदुम्बर इत्याचक्षते परोऽक्षम्। माश ७,५, १,२२।
[°र- अन्न- १४;७७;११२; अन्नाद्य- ४ द्र. ]।

**औदुम्बर-**

१. औदुम्बरमुलूखलं भवति। मै ३,२, ७।
२. औदुम्बरेण (पात्रेण) भ्रातृव्यः (अभिषिञ्चति)। मै ४,४, २।
३. औदुम्बरेण राजन्यः (अभिषिञ्चति)। ऊर्जमेवास्मिन्नन्नाद्यं दधाति। तै १,७,८, ७।

४. औदुम्बरेण स्रुवेण जुहोति । मै १,११,८ ॥ [°र- अन्नाद्यकाम- २ द्र.] ।

औदुम्बरी-

१. अस्मै वै (पृथिवी-) लोकायौदुम्बरी मीयते । काठ २५,१०; क ४०,३; ४१,३ ।

२. इयं (पृथिवी) वै कार्ष्मर्यमय्यसावौदुम्बरी (द्यौः) । तैसं ५,२,७,३; काठ २०,५; क ३१,७ ।

३. गृहपतिरौदुम्बरीं धारयति गृहपतिर्वा ऊर्जो यन्तोर्जमेवैभ्यो यच्छति । तां ४, ९, १५ ।

उद्गातृ-

१. अनभिजिता वा एषोद्गातृणां दिग् यत् प्राची । तां ६,५,२० ।

२. अयास्येनाऽऽङ्गिरसेन ( उद्गात्रा दीक्षामहा इति ) मनुष्या उत्तरतः ( आगच्छन् )। जैउ २,३,१,२ ।

३. उदङ्ङासीन उद्गायति । जै १,७२ ।

४. उद्गाता तृतीयस्सर्पति सर्वदेवत्यः प्रजापतिः । जै १,८५ ।

५. उद्गातैव यशः । गो १,५,१५ ।

६. उद्गात्रा पत्नी ९ संख्यापयति वृषा वा उद्गाता । काठ २६, १ ।

७. उद्गीथ एवोद्गातृणाम् । तैसं ३,२,९,५ ।

८. एकैकस्यै देवतायै होता वषट्करोति सर्वाभ्य उद्गाता । सर्वदेवत्यो ह्युद्गाता । जै १,११८ ।

९. एतद्वा उद्गातॄणा ९ हस्तकार्य्यं यत्पवित्रस्य विग्रहणम् । तां ६,६,१२ ।

१०. एष वै यजमानस्य प्रजापतिर्यदुद्गाता । तां ७, १०,१६ ।

११. तद् (वासः) बृहस्पतयऽउद्गायतेऽददात् । माश ४,३,४,२६ ।

१२. तस्य (उद्गातुः) तृतीयसवनमायतनम् । जै १,३४३ ।

१३. ते य एवेमे मुख्याः प्राणा एत एवोद्गातारश्चोपगातारश्च । जैउ १, ६,३,५ ।

१४. देवानां वै षडुद्गातार आसन् वाक् च मनश्च चक्षुश्च श्रोत्रं चाऽपानश्च प्राणश्च । जैउ २,१,१,१ ।

१५. पर्जन्यो ह (वा [माश.]) उद्गाता । माश १२,१,१,३; ष २,५ ।

१६. प्रजापतिर् ( +एष यत् [तैसं.; जै १, २५९]; वा [माश.]) उद्गाता । तैसं ६,५,८,६; जै १, ७०; ७२; २५९; माश ४, ३, २, ३ (तु. क ४०,३) ।

१७. प्राजापत्य ( °त्यो वा [मै ४,५,४; काठ.; क.]) उद्गाता । मै ३,८, ९; ४,५,४; काठ २८,५; क ४४,५; तां ६, ४, १; ५, १८ ।

१८. प्राण (बृहस्पतिर् [तैसं., जै.]) उद्गाता । तैसं ३,३, २,१; कौ १७,७; गो २, ५, ४; जै ३, १८८; तैआ १०, ६४,१ ।

१९. वर्षा उद्गाता तस्माद्यदा बलवद्वर्षति साम्न इवोपब्दिः क्रियते । माश ११, २, ७, ३२ ।

२०. वृणुते ऽन्यानृत्विजो नोद्गातारम् । जै १, ७० ।

२१. श्रोत्रं (समानो [ष २, ७]) ह उद्गाता । ष २, ६; ७ ।

२२. सूर्य्य (सौर्य्य [तां.]; सौर्यो वा [मै.]) उद्गाता । मै ४, ४, ८; गो १,१,१३; तां १८,९,८ ।

२३. स्तोत्राण्युद्गाता ( स्पाशयेत )। काठ ३५, १६ ।

२४. स्रगुद्गातुः । मै ४, ४, ८ ।

२५. स्रजमुद्गात्रे ( ददाति )। तैसं १, ८, १८,१; तै १,८,२,३ ॥ [°तृ- अयास्य- १; आत्मन्- २;१९;८४; आदित्य- १५७; उत्तरत- ६; उदीची- २२; उदीचीनदेवत्य- द्र.]।

उद्गातृ-चमस- देवानां वा एतद्यज्ञस्य मुखं यदुद्गातृचमसम्। ष २, ७।

उद्गीथ-

१. उद्गीथं देवेभ्योऽमृतम् ( प्रजापतिः प्रायच्छत् )। जैउ १, ३, १, ८।

२. ऋतव उद्गीथः। ष ३, १।

३. एष ( प्राणः ) उ वाऽउद्गीथः। प्राणो वाऽउत्प्राणेन हीद ९ सर्वमुत्तब्धं वागेव गीथोच्च गीथा चेति स उद्गीथः। माश १४, ४, १, २५।

४. एष ( वायुः ) वै सोमस्योद्गीथो यत्पवते। तां ६, ६, १८।

५. पुरुष उद्गीथः ( °षो ह्योद्गीथः [जैउ ४, ७, १, १] )। जैउ १, ११, १, ९; ४,७,१,१।

६. प्रजापतिरुद्गीथः [ °थेन (सहागच्छतु [तैआ.] )]। तै ३, ८, २२, ३; तैआ ३,८, २।

७. प्राणमुद्गीथम् ( प्रजापतिरकरोत् )। जैउ १, ३, ३, ५।

८. प्राणो वावोद्गाग्गी स उद्गीथः। जैउ ४, ११,२, २।

९. मासम् (वामदेव्यम् [जै.]) उद्गीथः। जै १, २९२; जैउ १,१२, २, ६।

१०. वर्षा ( माध्यन्दिन [जैउ.] ) उद्गीथः। ष ३, १; जैउ १, ३, २, ४।

११. वर्षाम् (सामानि [जैउ १, ३, २,३]) उद्गीथम् (प्रजापतिरकरोत्)। जैउ १,३,२, ३;७।

१२. श्रद्धा यज्ञो दक्षिणा एष उद्गीथः। जैउ १, ५, १, २।

१३. स एष वशी दीप्ताग्र उद्गीथो यत्प्राणः। जैउ २, २, २, १।

१४. साम्नोद्गीथः ( क्रियते )। जै १, ३५८।

१५. सोमबृहस्पती उद्गीथः। जैउ १, १८, २, ९।

१६. सोऽसावादित्यस्स एष एव उदग्निरेव गी चन्द्रमा एव थम्। सामान्येव उदच एव गी यजू ९ ष्येव थमित्यधिदेवतम्। अथाध्यात्मम्। प्राण एव उद्वागेव गी मन एव थम्। स एषोऽधिदेवतं चाऽध्यात्मं चोद्गीथः। जैउ १, १८, २, ७-८।

१७. स्तनयित्नुमुद्गीथम् ( प्रजापतिरकरोत् )। जैउ १, ३, ३,१ ॥ [ °थ- आदित्य- ८२; उदीची- १; उद्गातृ- ७ द्र. ]।

उद्ग्रभण->औद्ग्रभण-

१. औद्ग्रभणैर्वै देवा आत्मानमस्माल्लोकात्स्वर्गं लोकमभ्युदगृह्णत यदुदगृह्णत तस्मादौद्ग्रभणानि। माश ६,६,१,१२।

२. तदुद्गृभ्ण ९ स्तदौद्ग्रभणस्यौद्ग्रभणत्वम्। मै ३,६,५।

उद्ग्राभ- ब्रह्म वा उद्ग्राभो ब्रह्म निग्राभो (+ब्रह्मणा वा एतद् यजमानमुद्गृह्णाति, ब्रह्मणास्य भ्रातृव्यं निगृह्णाति [मै.])। मै ३,३,८; काठ २१,८ ॥ [°भ- आदित्य- २२; ४५ द्र.]।

उद्धि- अन्तरिक्ष ९ ह्येष उद्धिः। माश ६,५, २, ४।

उद्भिद् (यज्ञ-)-

१. उद्भिदा गा उदसृजन्त ( देवाः)। जै २, ९०।

२. यदुद्भिदा यजते बलमेवास्मै (यजमानाय) विच्यावयति। तां १९,७,३।
३. स ह स उद्भिदेव स्तोमः। इन्द्राग्नी एव तौ। तौ हीदं सर्वमाजिसृत्यायामुदभिन्ताम्। जै १,३१२।

उद्र- वनिष्ठोरुद्रः (अजायत)। जै २,२६७॥ [°द्र- अप्- २२ द्र.]।

उद्वंशीय (सामन्-)-
१. पृष्ठानि वा असृज्यन्त तेषां यत्तेजो रसोऽत्यरिच्यत तद्देवाः समभर ९स्तदुद्व ९शीयमभवत्। तां ८,९,६।
२. यदुद्वंशमिवोद्यत्यासुरान् (देवाः) अभ्यत्यक्रामंस्तदुद्वंशीयमभवत्। तदुद्वंशीयस्योद्वंशीयत्वम्। जै १,१८९।
३. सर्वेषां वा एतत्पृष्ठानां तेजो यदुद्व ९शीयम्। तां ८,९,७।

उन्नत- यः पशुकामः स्यात् स एतमैन्द्रमुन्नतमालभेत, …साहस्री वा एषा लक्ष्मी यदुन्नतो, लक्ष्मियैव पशूनवरुन्धे। तैसं २,१,५,१-२।

उन्नेतृ (ऋत्विज्-)-
१. अतिरिक्त (°क्तो वा [मै.]) एष ऋत्विजां यद् (य [मै.]) उन्नेता। मै ४,७,४; काठ २८,९; क ४४,९।
२. उन्नेतरुन्मा नय। जै २,६८।
३. विष्णुर्वा उन्नेता। जै २,६८।

उन्√मद् गन्धर्वाप्सरसो वा एतमुन्मादयन्ति य उन्माद्यति। तैसं ३,४,८,४।

उप
१. इयं (पृथिवी) वाऽउप। ह्येनेयमुप यद्धीदं किंच जायतेऽस्यां तदुपजायतेऽथ यम्न्यृच्छत्यस्यामेव तदुपोप्यते। माश २,३,४,९।
२. इयं (पृथिवी) वा उप स्वर्गम्। काठ ७,४।
३. उप वै रथन्तरम् (उपशब्दसम्बद्धं हि रथन्तरपृष्ठं ज्योतिष्टोम इति)। तां १६,५१४।
४. प्रजा वा इमा उप।…… या वै प्रजा आभविष्यन्तीस्ता उप। काठ ७,४।

उपख्यातृ- आदित्य- ८३ द्र.।

उपगातृ-
१. आर्त्तवा उपगातारः। तै ३,१२,९,४।
२. त य एवेमे मुख्याः प्राणा एत एवोद्गातारश्चोपगातारश्च। जैउ १,६,३,५।
३. तस्मादु चतुर एवोपगातॄन् कुर्वीत। जैउ १,६,३,६।
४. विश्वे देवा उपगातारः। तैसं ३,३,२,१।

उपगु- उपगुर्वै सौश्रवसः कुत्सस्यौरवस्य पुरोहित आसीत्। तां १४,६,८।

उपदीका-
१. इमा वै वम्रयो यदुपदीकाः। माश १४,१,१,८।

२. उपदीका यत्र क्व च खनन्ति । तदपोऽभितृन्दन्ति । वारे वृत ᳪ ह्यासाम् । तैआ ५.१, ४-५

**उपदेशन-** > **उपदेशन-वत्** ( स्तोम- )- प्राणो वै त्रिवृदर्द्धमासः पञ्चदशः संवत्सरः सप्तदश आदित्य एकवि ᳪ श एते वै स्तोमा उपदेशनवन्तः । तां ६, २,२ ।

**उपद्रव-**

१. अथ यदन्तरिक्षे तत्सर्वमुपद्रवेणाप्नोति । जैउ १, १०, १, ८ ।
२. आपः प्रजा ओषधय एष उपद्रवः । जैउ १, ५, १, २ ।
३. उपद्रवं गन्धर्वाप्सरोभ्यः (प्रजापतिः प्रायच्छत् ) । जैउ १, ३, २, १ ।
४. यदुपास्तमयं लोहितायति स उपद्रवः । जैउ १,३, २, ४ ।
५. विश्वे देवा उपद्रवः जैउ १, १८, ३, ९ ।

**उपद्रष्टृ-**

१. अग्निर्वा उपद्रष्टा । तैसं ३, ३, ८, ५; गो २, ४, ९; तै ३, ७, ५, ४ ।
२. ब्राह्मण ( °णो वा ⌊गो.⌋ ) उपद्रष्टा । मै ४, ६,९; गो २,२, १९ ॥ [°ष्टृ- अग्नि- ८४ द्र.] ।

**उपनति-** श्रोत्रमुपनतिः । जै १, १४ ।

**उपनयन-**

१. एतद्वै पत्न्यै व्रतोपनयनम् ( यद्योक्त्रेण संनहनम् ) । तै ३, ३, ३, २ ।
२. तं ( बालाकिम् ) होवाचाजातशत्रुः प्रतिलोमरूपमेतन्मन्ये यत् क्षत्रियो ब्राह्मणमुपनयते । शांआ ६, १९; कौउ ४, १९ ।
३. यमेवं विद्वानुपनयते । सोऽवश्यं वेदाध्यायी भवति । काठसंक १४२ : ३ ।

**उपपक्ष-** गुह्योपपक्षाभ्यामश्विना ( प्रीणामि ) । काठ ५३, ३ ।

**उपबर्हण-** छन्दसा ᳪ वा एतन्निरूप ᳪ यदुपबर्हणं सर्वसूत्रम् । मै १,६, ४ ।

**उपभृत्-**

१. अग्रमिव हि जुहूर्मध्यमिवोपभृन्मूलमिव ध्रुवा । माश १, ८, ३, १३ ।
२. असैव जुहूराद्य उपभृत् । माश १, ३, २,११ ।
३. अथेदमन्तरिक्षमुपभृत् । माश १, ३, २, ४ ।
४. अस्तु श्रौषडित्युपभृतम् [+तेन ( युनक्मि ⌊काठ.⌋)] । मै ४,१,११; काठ ३१, १३ ।
५. उपभृत्सव्यः (हस्तः ) । तै ३, ३, १, ५ ।
६. उपभृदेहि देवस्त्वा सविता ह्वयति ( ह्वयतु ⌊क.⌋ ) । तैसं १, १, १२, १; काठ १, १२; क १, १२ ।
७. भ्रातृव्य(प्रजा वा ⌊मै ४,१,१२⌋) उपभृत् । मै १, ४, १३;४,१,१२ ।
८. भ्रातृव्यदेवत्योपभृत् । तैसं२,५,९,५; काठ ३१, ९; क ४७, ९; तै ३, ३,५, ४;७, ९ ।
९. मन उपभृत् (प्रायश्चित्तार्थं वेदभागमध्येतुः पुरुषस्य ) । तैआ २, १७,२ ।
१०. यजमान एव जुहूमनु । योऽस्मा ऽ अरातीयति स उपभृतमनु । माश १, ३, २, ११ ।

११. यदष्टौकृत्व उपभृति गृह्णाति, त्रिष्टुब्जगतीभ्यां तद् गृह्णाति । माश १, ३, २,१६ ।
१२. सावित्र्युपभृत् । तै ३, ३,७, १ ॥ [°भृत्- अन्तरिक्ष- ४९;५७;९७; आश्वत्थी- द्र.] ।

उपयज्-

१. एकादशोपयजः । काठ २६, ९; क ४१,७ ।
२. यद्यजन्तमुपयजति तस्मादुपयजो नाम । माश ३, ८, ४, १० ।

उपयमन-> उपयमनी- अन्तरिक्षं वाऽ उपयमन्यन्तरिक्षेण हीद ॅ सर्वमुपयतम् । माश १४,२, १,१७ ॥ [°नी- उदर- ४ द्र.] ।

उपयाम-

१. इयं (पृथिवी) वाऽउपयामः (+ इयं वाऽइदमन्नाद्यमुपयच्छति पशुभ्यो मनुष्येभ्यो वनस्पतिभ्यः [माश.]) । तैसं ६,५,८,३; काठ २६,१०; क ४२,२; माश ४,१,२,८ ।
२. इयं (पृथिवी) वा उपयामो यदत्र स्कन्दत्यनया तद्यतम् । काठ २७, २ (तु. मै १, ८, ७; ४,५, ५) ।
३. उपयाममधरेणौष्ठेन (प्रीणामि) । मै ३, १५,२ ।

उपरव-

१. इन्द्रो वै वृत्रमहन्त्स इमां प्राविशत्, तं देवताः प्रैषमैच्छ ॅ स्तन्नाविद ॅ स्तं भूतान्युपारवन्त, यो नो ऽधिपतिरभूत् तन्न विन्दामा इति तदुपरवाणामुपरवत्वम् । मै ३,८,८ ।
२. प्राण उपरवेषु । (सोमः) । काठ ३४,१५ ।
३. प्राणा (+ वा [मै.]) उपरवाः । तैसं ६,२,११,१; मै ३, ८, ८; ४, ६, ६; काठ २५,९; क ४०,१ ।
४. स्तना उपरवाः (विराजः) । काठ २५,९; क ४०,२ ।

उपरिष्टात् त्वष्टा त्वा रूपैरुपरिष्टात् पातु । काठ २,९ ।

उपवक्तृ-

१. बृहस्पतिरुपवक्ता । मै १, ९, १; काठ ९, ८; तैआ ३, २,१ ।
२. मन (मित्र [काठ., तैआ ३,३,१]) उपवक्ता । मै १,९,१[२]; काठ ९.८; तैआ ३,१,१;३,१ । [°क्तृ- अच्युतमनस्- द्र.] ।

उपवसथ-

१. छन्दा ॅ स्युपवसथे (सोमः) । काठ ३४, १५ ।
२. त एतद्धविः प्रविशन्ति (विश्वे देवाः) । तऽ एतासु वसतीवरीपूपवसन्ति स उपवसथः । माश ३, ९, २, ७ ।
३. यदहरस्य श्वो ऽन्याधेय ॅ स्यात् । दिवैवाश्नीयान्मनो ह वै देवा मनुष्यस्याजानन्ति तेऽस्यैतच्छ्वोऽन्याधेयं विदुस्तेऽस्य विश्वे देवा गृहानागच्छन्ति तेऽस्य गृहेपूपवसन्ति स उपवसथः । माश २, १, ४, १ ।

उपवाक- यद्धलेष्मणस्ता उपवाकाः (अभवन्) । माश १२, ७, १, ३ ।

उपवीत- उपवीतं देवानाम्। तैसं २,५,११,१।

उपवेष-

१. उपेव वाऽएनेनैतद्वेवेष्टि तस्मादुपवेषो नाम। माश १, २,१, ३।
२, एष वै वनस्पतीनां परिवेष्टा यदुपवेषः। काठ ३१, १२।
३. धृष्टिर्वा उपवेषः। तै ३,३,११,२।
४. परिवेषो वा एष वनस्पतीनां यदुपवेषः। तै ३,३,११,१।
५. वनस्पतीनां वा एष परिवेष्टा यदुपवेषः। मै ४,१,१३।
६. सर्पं (°र्पो वा [मै.]) उपवेषः। मै ४,१,१३; काठ ३१, १२।

उपशद (यज्ञ-)-

१. यद्वेवैकैका स्तोत्रियोपशीयते तस्मादुपशदः। जै २,८१।
२. स (कश्यपः) एतं यज्ञमपश्यत्, तमाहरत्, तेनायजत। ततो वै तमुपोप प्रजाः पशवोऽशीयन्त। जै २,८१।

उपशय-

१. उपशयं वा अन्वारण्याः पशव उपतिष्ठन्ते। काठ २९, ८।
२. तान् (असुरान्) देवा उपशयेनैवापानुदन्त, तदुपशयस्योपशयत्वम्। तैसं ६, ६,४,४।
३. यद्दक्षिणत उपशय उपशये भ्रातृव्यापनुत्त्यै। तैसं ६,६,४, ४।
४. सर्वे वा अन्ये यूपाः पशुमन्तोऽथोपशय एवापशुस्तस्य यजमानः पशुः। तैसं ६, ६,४, ४।

उपश्रोतृ- वायुर् (+वा [गो., तै.]) उपश्रोता। तैसं ३,३,८,५; गो २,२, १९;४,९; तै ३,७,५, ४।

उपसद्-

१. अर्धमासा (ऋतव [माश १०,२,५,७]) उपसदः। माश १०,२,५,५;७।
२. अहोरात्राणि वाऽउपसदः। माश १०, २,५,४।
३. इमे लोका उपसदः। माश १०,२, ५,८।
४. इषुं वा एतां देवाः समस्कुर्वत यदुपसदस्तस्या अग्निरनीकमासीत् सोमः शल्यो विष्णुस्तेजनं वरुणः पर्णानि। ऐ १, २५।
५. इषुं वा एतां देवाः समस्कुर्वन् यदुपसदोऽग्निं शृङ्गं सोमं शल्यं विष्णुं तेजनम्। काठ २५,१; क ३८, ४।
६. उपसद्भिर्वै देवा इमांल्लोकान् व्यजयन् (अभ्यजयन् [क.]) । काठ २६,२; क ४०, ५।
७. एतदु ह यज्ञे तपः। यदुपसदस्तपो वाऽउपसदः। माश १०,२,५,३।
८. एताभिर्वै देवा उपसद्भिः पुरः प्राभिन्दन्निमाल्लोकान् प्राजयन्। माश ३, ४,४,५।
९. ग्रीवा उपसदः। मै ३,७,९; काठ २४,८; क ३८,१; ऐ १,२५; तैआ ५,६, १।
१०. ग्रीवा वा एता यज्ञस्य यदुपसदः। काठ २५,१ (तु. माश ३,४, ४,१)।
११. जितयो वै नामैता यदुपसदः। ऐ १, २४।
१२. त एताभिरुपसद्भिरुपासीदन् (देवाः)। तद्यदुपासीदंस्तस्मादुपसदो नाम। माश ३,४,४,४।
१३. तपो ह्युपसदः। माश ३,६,२,११।

१४. ता (उपसदः) वाऽआज्यहविषो भवन्ति। माश ३,४,४,६।
१५. ते (देवाः) ऽब्रुवन्नुपसीदामोपसदा वै महापुरं जयन्तीति त उपासीद ँस्तदुपसदामुपसत्त्वम्। मै ३,८,१।
१६. पृथिव्युपसद्यन्तरिक्षमुपसदि, द्यौरुपसदि (सोमः)। काठ ३४,१४।
१७. प्रातस्सायन्तनं तान् (असुरान् देवाः) उपसद्भिरेवैभ्यो लोकेभ्यो नुदमाना आयंस्ततो देवा अभवन् परासुराऽभवन्, सर्वेभ्य एवैभ्यो लोकेभ्यो भ्रातृव्यं नुदमान एति य एवं विद्वान् उपसद उपैति। काठ २४, १०।
१८. मासा उपसदः। माश १०,२,५,६।
१९. यदुपसद उपसद्यन्ते भ्रातृव्यपराणुत्त्यै। तैसं ६,२, ३,२।
२०. वज्रा (वीर्यं [काठ.]) वाऽउपसदः। काठ २९,२; माश १०,२,५,२।
२१. स्थानमुपसदः (प्रायश्चित्तार्थं वेदभागमध्येतुः पुरुषस्य)। तैआ २,१७,२।

उपस्थ- केनानन्दं रतिं प्रजाम् (आप्नोति) इति, उपस्थेनेति। शांआ ३, ७॥ [°स्थ- अमृत- ३५ द्र.]।

उपहव्य (एकाह-)-

१. इन्द्रो यतीन् सालावृकेयेभ्यः प्रायच्छत्तमश्लीला वागभ्यवदत् स प्रजापतिमुपाधावत्तस्मा एतमुपहव्यं प्रायच्छत्तं विश्वे देवा उपाह्वयन्त, यदुपाह्वयन्त तस्मादुपहव्यः। तां १८,१,९।
२. ते देवाः प्रजापतिमुपाधावन् स एतमुपहव्यमपश्यत्। तां १८, १,२।

उपहित- अङ्गानि (वाग्) उपहितम्। माश ६,१,२,१५[२]।

उपांशु (ग्रह-)-, °शु (वा. क्रिवि.)

१. अ ँशुर्ह वै नाम ग्रहः। स प्रजापतिस्तस्यैष प्राणः, स यद ँशोः प्राणस्तस्मादुपा ँशुर्नाम। काश ५,१,१,१ (तु. माश ४,१,१,२)।
२. अथ वा एष वाक्पूतो यदुपांशुः। मै ४,५,५।
३. अनिरुक्तं वाऽउपा ँशु। माश १,३,५,१०।
४. असौ (द्यौः) वा उपांशुः। मै ४,५, ५।
५. इयं ँ(पृथिवी) ह वाऽउपा ँशुः। माश ४, १, २, २७।
६. उत्तरादुपा ँशुं जुहुयात्। क ४२, १।
७. उपांशु यजुषा (क्रियते)। मै ३,६,५।
८. किम्पवित्र उपा ँशुरिति वाक्पवित्र इति ब्रूयात्। तैसं ६,४,५,३।
९. पावमानेन त्वा स्तोमेन गायत्रस्य वर्तन्योपा ँशोर्वीर्येण देवस्त्वा सवितोत्सृजतु। तैसं २,३,१०,२।
१०. प्राण (प्राणपवित्रो वा [काठ २६,१०]) उपांशुः। काठ २६, १०; क ४१,८; ४२,१ (तु. तैसं ६,४,५,१; मै ४,५,५;७,४; क ४४,८; कौ १२,४)।
११. प्राणो ह वाऽअस्य (यज्ञस्य) उपा ँशुः। माश ४, १,१,१।
१२. यज्ञमुखं वाऽउपा ँशुः। माश ५,२,४,१७।

१३. यदुपा ९ शु श ९ सति, तदुपा ९ श्वन्तर्यामयोर्, यदुच्चैस्तदितरेषां ग्रहाणाम्। तैसं ६,५,११,२-३।
१४. यदुपांशु स प्राणः···तत् (उपांशु) तिर इव, तिर इव ह्यशरीरमशरीरो हि प्राणः। ऐआ २,३,६।
१५. क्षत्रमुपा ९ शु। काठ २७,२; क ४२,२।
१६. स यदुपा ९ शु तत्प्राजापत्य ९ रूपम्। माश १,६,३, २७।

उपांशु-पात्र-
१. उपांशुपात्रमेवान्वजाः प्रजायन्ते। माश ४,५,५, २।
२. उपांशुपात्रं प्रयुज्यतेऽजा एव तत् पशूनामनुप्रजायन्ते। काठ २८,१०।
३. एक ९ ह त्वेव तत्पात्रं यदिमाः प्रजा अनु प्रजायन्तऽउपा ९ शुपात्रमेव। माश ४,५,५,११।
४. प्राणाय त्वेत्युपा ९ शुपात्रं ९ सादयति। काठ २७,२; क ४२,२।
५. यदुपांशुपात्रं प्रयुज्यतेऽजा एव तेन पशूनां दाधार। क ४५,१॥ [°त्र- अग्नि- ११४; अवि- १ द्र]।

उपांशु-याज- क्षत्रमुपांशुयाजः। माश ११,२,७,५।

उपांशु-सवन-
१. अन्तरिक्षमेवोपा ९ शुसवनः। माश ४,१,२,२७।
२. आत्मोपा ९ शुसवनः (यज्ञस्य)। माश ४,१, २,२५।
३. एष वै विवस्वानादित्यो यदुपा ९ शुसवनः। तैसं ६, ५,६,५।
४. प्राणो वा उपांशुसवनः। काठ २६,१०; २८,६; क ४१,८; ४४,६।
५. व्यान उपांशुसवनः। तैसं ६,४,४,१; ६,४; मै ४,५,६;९; माश ४,१, १,१।
६. व्यानं त उपांशुसवनः पातु। मै ४,८,७।
७. व्यानाय त्वेत्युपा ९ शुसवनम् (सादयति)। काठ २७,२; क ४२,२।
८. व्यानो वा (हि [माश.]) उपांशुसवनः। मै ४,५, ४; ६, ९; माश ४, १, २, २७॥ [°न- आत्मन्- १६ द्र.]।

उपांश्वन्तर्याम (ग्रह-)-
१. आयुरुपांश्वन्तर्यामयोः (सोमः)। काठ ३४,१५।
२. उपा ९ श्वन्तर्यामाव् (अनु) अजावयः (प्रजायन्ते)। तैसं ६,५,१०,१।
३. उपांश्वन्तर्यामौ वा अन्वन्ये पशवः, पुरुषस्त्वै यज्ञेन सम्मितः। मै ४,५, ७।
४. उपांश्वन्तर्यामौ वै पशवोऽनुप्रजायन्त इतरान् ग्रहानन्वन्याः प्रजाः। काठ २७,२; क ४२,२
५. तस्य (यज्ञरूपस्य देवरथस्य) एतौ रश्मी यदुपांश्वन्तर्यामौ। काठ २७, १, क ४२,१।
६. प्राणापाना (°नौ वा [मै., कौ.]) उपांश्वन्तर्यामौ। मै ४,५,६;९; ऐ २,२१; कौ १२,८;१२,१ जै २,३७।
७. प्राणापानौ त उपांश्वन्तर्यामौ पाताम्। मै ४,८,७।
८. वय इव ह वै यज्ञो विधीयते तस्योपा ९ श्वन्तर्यामावेव पक्षौ, आत्मोपा ९ शुसवनः। माश ४,१,२,२५॥ [°म- उपांशु- १३ द्र.]।

उपासन- अथातः सर्वजितः कौषीतकेस्त्रीण्युपासनानि भवन्ति । सर्वजिद्ध स्म कौषीतकिरुद्यन्तमादित्यमुपतिष्ठते यज्ञोपवीतं धृत्वोदकमानीय त्रिः प्रसिच्योदकपात्रं वर्गोऽसि पाप्मानं मे वृङ्ग्धीत्येतयैवाऽऽवृता, मध्ये सन्तमुद्वर्गोऽसि पाप्मानं म उद्वृङ्ग्धीत्येतयैवाऽऽवृताऽस्तं यन्तं संवर्गोऽसि पाप्मानं मे संवृङ्ग्धीति, तद्यदहोरात्राभ्यां पापं करोति सं तद् वृङ्क्ते । शांआ ४,७ ।

औपासन- या एवाग्निहोत्रे देवतास्ता औपासने, या (?य) एवाहिताग्नेर्धर्मः सा (?स) एव धर्मो, य एवाहिताग्नेर्लोकः स एवौपासनिकस्येति शाट्यायनिब्राह्मणं भवति । लु १०१.

उपोति- इयं (पृथिवी) वा उपोतिः । मै १, ५,५ ।

उपोदक- अयं वै (पृथिवी-) लोक उपोदकः । माश १३,८,३,३ ॥ [ °क- अग्नि- ४१४ द्र.] ।

उरस्-

१. उरस्त्रिष्टुप् ( °ष्टुभः [माश.] ) । माश ८, ६, २, ७; ष २, ३ ।
२ उरः सप्तदशः (स्तोमः) । अष्टावन्ये जत्रवो ऽष्टावन्यऽ उरः सप्तदशम् । माश १२,२,४,११ ।
३. उरः सान्तपनीया ( इष्टिः ) उरसा हि समिव तप्यते । माश ११, ५, २, ४ ।
४. उर्वेव मे कुर्वित्यब्रवीत्तदुरोऽभवत् । ऐआ २, १,४ ।
५. तस्मा उरुरभवत् । तदुरस उरस्त्वम् । जैउ ४, ११, ३, २ ।
६. स (प्रजापतिः) बाहुभ्यामेवोरसः पञ्चदशं स्तोममसृजत त्रिष्टुभं छन्दो बृहत् सामेन्द्रं देवतां राजन्यं मनुष्यमश्वं पशुम् । जै १,६८ ।

उर्वशी- वाग्वा उर्वशी, पुरूरवा असीति प्राण एव तन्मिथुनम् । मै ३,९,५ ।
[°शी- अर्वाग्वसु- २; अधरारणि-; आयु- १,२,३ द्र. ] ।

उर्वी-

१. यथेयं पृथिव्युर्व्येवमुरुर्भूयासम् । माश २, १, ४, २८ ।
२. षण्मोर्वीर॑ हसस्पान्त्वग्निश्च पृथिवी चापश्च वातश्चाहश्च रात्रिश्चेत्येता मा देवता आर्तेर्गोपायन्त्वित्येवैतदाह । माश १, ५, १, २२ ।

उलूक-

१. इत्थादुलूक आपप्तत् । हिरण्याक्षो अयोमुखः । रक्षसां दूत आगतः । तमितो नाशयाग्ने । तैआ ४, ३३,१ ।
२. वनस्पतया उलूकान् ( आलभते ) । मै ३,१४,४ ।

उलूखल-

१. उरु मे करदिति (प्रजापतिरब्रवीत्) तस्मादुरुकरमुरुकर॑ह वै तदुलूखलमित्याचक्षते परोक्षम् । माश ७, ५, १, २२ ।
२. प्रादेशमात्रमुलूखलं कार्यमेतावान् वै विष्णुः । मै ३, २, ७ ।
३. यदुलूखलमुपदधाति विष्णोरेव नाभावग्निं चिनुते । क ३१,९ ।
४. योनिरुलूखलम्··· शिश्नं मुसलम् । माश ७, ५, १, ३८ ।

५. वैष्णव ९ ह्युलूखलम् । मै ३,२,७ ॥ [ °ल- अग्नि- ४१६; अन्तरिक्ष- १८; औदुम्बर- १ द्र.] ।

उल्ब-

१. उल्बं घृतम् । माश ६, ६, २, १५ ।
२. उल्बं दीक्षितवसनम् । काठ २३, २ ।
३. उल्बम् ( +वा [माश ७, ३, १, ११.] ) ऊषाः । माश ७, १,१,८;३,१,११ ।
४. उल्बस्य वा एतन्निरूपं ९ यत् क्षौमम् ( वासः ) । मै १, ६, ४ ।
५. उल्बेन गर्भ आवृत इव च्छन्न इव । काठ २३, ३ ।

उशत्-

१. उशन्नुशन्तमिति प्रियः प्रियमित्येवैतदाह । माश ३, ३, ३, १० ।
२. वायुर्वा उशन् । तां ७, ५,१९ ।

उशनस्-

१. अग्निर्देवानां दूत आसीत् ( +उशना काव्यो ऽसुराणां, तौ प्रजापतिं प्रश्नमैताम् [ तैसं २, ५, ८, ५.] ) । तैसं २, ५, ८,५;११, ५ ।
२. उशनसा काव्येन ( उद्गात्रा ) असुराः पश्चात् ( आगच्छन् ) । जैउ २, ३, १, २ ॥ [°नस्- असुर- १४ द्र.] ।

औशन ( सामन् -)-

१. अथौशनमन्त्यं साम । अन्त्येन साम्नान्त्यं स्वर्गं लोकमश्नवामहा इति । जै २,१४ ।
२. उशना वै काव्यो ऽकामयत यावानितरेषां काव्यानां लोकस्तावन्त ९ स्पृणुयामिति स तपो ऽतप्यत स एतदौशनमपश्यत्तेन तावन्तं लोकमस्पृणोद्यावानितरेषां काव्यानमासीत्तद्वाव स तर्ह्यकामयत कामसनि सामौशनं काममेवैतेनावरुन्धे । तां १४, १२, ५ ।
३. उशना वै काव्यो ऽसुराणां पुरोहित आसीत्तं देवाः कामदुघाभिरुपामन्त्रयन्त तस्मा एतान्यौशनानि प्रायच्छन् । कामदुघा वा औशनानि । तां ७,५,२० ।
४. प्राणा वा औशनम् । तां ७, ५, १७ ।
५. यदुशना काव्यो ऽपश्यत् तस्मादौशनमित्याख्यायते । जै १, १२७ ।
६. वायुर्वा उश ९ स्तस्यैतदौशनम् । तां ७, ५, १९ ।

औशन-काव-

१. एष ह वै स्वर्गस्य लोकस्य पन्था अञ्जसायनो यदौशनकावे ( सामनी ) । जै २, ४२१ ।
२. रश्मी वा एतौ यज्ञस्य यदौशनकावे ( सामनी) । तां ८, ५, १६ ।

उशिज्-

१. उशिगसि कविः । तैसं १,३, ३,१; मै १, २,१२; काठ २, १३; क २,७ ।
२. उशिगसि, वसुभ्यस्त्वा···वसूञ्जिन्व । तैसं ४, ४,१,१-२, काठ ३७, १७ ।
३. उशिजा वसुभ्यो वसून् जिन्व । मै २, ८, ८ ।
४. ऋत्विजो वै वह्नय उशिजः । तैसं ६, ३, ६, १; काठ २६, ७; क ४१, ५ ।

५. एते वै वह्नय उशिजो यद् ऋत्विजश्च धिष्ण्याश्च। मै ३, ९, ६।

उशीनर- तस्मादस्यां ध्रुवायां प्रतिष्ठायां दिशि ये के कुरुपञ्चालानां राजानः सवशोशीनराणां राज्यायैव तेऽभिषिच्यन्ते राजेत्येनानभिषिक्तानाचक्षते। ऐ ८,१४।

उषस्-

१. उषा वा अश्वस्य मेध्यस्य शिरः। तैसं ७,५,२५, १।

२. ऋतूनां पत्नी प्रथमेयमाऽगादह्नां नेत्री जनित्री प्रजानाम्। एका सती बहुधोषो व्युच्छस्यजीर्णा त्वं जरयसि सर्वमन्यत्। तैसं ४,३,११,५-६।

३. तानीमानि भूतानि च भूतानां च पतिः संवत्सरऽउषसि रेतोऽसिञ्चत्स संवत्सरे कुमारो ऽजायत सोऽरोदीत्······यदरोदीत् तस्माद्रुद्रः। माश ६,१,३,८-१०।

४. तान् दीक्षितांस्तेपानान् (अग्निवाय्वादित्यचन्द्रमसः) उषाः प्राजापत्याऽप्सरोरूपं कृत्वा पुरस्तात्प्रत्युदैत्तस्यामेषां मनः समपतत्ते रेतोऽसिञ्चन्त ते प्रजापतिं पितरमेत्याब्रुवन् रेतो वा असिञ्चामहा इदं नो मामुया भूदिति। कौ ६,१।

५. प्रजापतिरुषसं स्वां दुहितरं बृहस्पतये प्रायच्छत्। जै १, २१३।

६. प्रजापतिरुषसमध्यैत् स्वां दुहितरं तस्य रेतः परापतत्तदस्यां न्यषिच्यत तदश्रीणादिदं मे मा दुषदिति तत्सदकरोन् पशूनेव। तां ८,२,१०।

७. प्रजापतिर्वै स्वां दुहितरमभ्यकामयतोषसम्। मै ४,२,१२।

८. प्रजापतिर्वै स्वां दुहितरमभ्यध्यायद्दिवमित्यन्य आहुरुषसमित्यन्ये। ऐ ३, ३३।

९. प्रजापतिर्ह वै स्वां दुहितरमभिदध्यौ। दिवं वोषसं वा मिथुन्येनया स्यामिति ता९ सम्बभूव। माश १,७,४,१।

१०. प्रजापतिर्होषसं स्वां दुहितरमभ्यध्यायत्···तस्य विद्धस्य रेतः पराऽपतत् तद्धिमवति प्रत्यतिष्ठत् तन्मानुषमभवत्। जै ३,२६२-६३।

११. भूतानां पतिर्गृहपतिरासीदुषाः पत्नी। माश ६,१,३,७।

१२. योषाः सा राका। ऐ ३,४८।

१३. रात्रिर्वा उषाः। तै ३,८,१६,४।

१४. समिधो यजत्युषस एव देवतानामव रुन्धे। तैसं २,६, १,१।

१५. सूर्यो देवीमुषस९ रोचमानां मर्यो न योषामभ्येति पश्चा। मै ४, १४,४॥ [°षस्- अरुण-३; अरुणी-; आरुणी- द्र.]।

उषस्य- उषस्यमन्वाह तदन्तरिक्षलोकमाप्नोति। कौ ११,२; १८, २।

उषासा-नक्त- अहोरात्रे वा उषासानक्ता। ऐ २,४।

उष्ट्र- त्वष्ट्रा उष्ट्रान् (आलभते)। मै ३,१४, १०।

उष्णिह्-, हा (छन्दस्-)-

१. अष्टाविंशत्यक्षरा (+वा [जै.]) उष्णिक्। कौ २६, १; जै १,३१।

२. उष्णिक् (उष्णिहा [काठ.]) छन्दस्तच्चक्षुः, पूषा देवता। मै २, १३, १४; काठ ३९,४।

३. उष्णिगुत्स्नानात् स्निह्यतेर्वा कान्तिकर्मणोऽपि वोष्णीषिणो वेत्यौपमिकम् । दै ३, ४ ।
४. उष्णिहं वै स (यजमानः) छन्दसां भृग्वङ्गिरसो देवान् देवानाम् । जै १,३१ ।
५. उष्णिहा जगत्यै ( वीर्यम् ) । तैसं २, ४, ११, १ ।
६. ककुभः पूर्वार्धे ऽक्षराणि भूयिष्ठानि…उष्णिहो जघनार्धे ऽक्षराणि भूयिष्ठानि । ते वा एते छन्दसी धेनुश्चैवानड्वांश्च…तस्मात्पशवः पूर्वार्धेन च जघनार्धेन च भूयिष्ठं भाजयन्ति वहन्ति पूर्वार्धेन दुह्रे च जघनार्धेन प्र च जनयन्ति । जै १,१५९ ।
७. ग्रीवा (वज्रो वा [जै.]) उष्णिहः । जै १, २०९; माश ८, ६, २, ११ ।
८. चक्षुर् (वीर्यम् [जै.]) उष्णिक् । जै १, ३०९; माश १०, ३, १,१ ।
९. तस्य ( प्राणस्य ) उष्णिग्लोमानि । ऐआ २, १, ६ ।
१०. तुर्यवाह उष्णिहे । मै ३, १३, १७ ।
११. त्रिवत्सो वय उष्णिहा छन्दः । तैसं ४, ३, ५, १; मै २, ८,२; काठ १७,२ ।
१२. देवपुरा वा एषा यदुष्णिहः । जै १, २२७ ।
१३. पशवो वा उष्णिक् । तां ८, १०, ४; जै १, २२९; (तु. जै १, ३०५; ३०९) ।
१४. पोतारं वृणीते । उष्णिहं तच्छन्दसां वृणीते । काठ २६, ९; क ४१, ७; (तु. मै ३, ९, ८) ।
१५. यजमानच्छन्दसमेवोष्णिक् । कौ १७, २ ।
१६. यस्य सप्त ता उष्णिहम् (अभिसंपद्यन्ते) । कौ ९, २ ।
१७. विश्वे देवा देवतोष्णिहा छन्द आग्रयणस्य पात्रमसि । तैसं ३, १,६,३ ॥ [ °ष्णिह्- अजाविक- १; आयुस्- १२] ।

उष्णिक्ककुभ्-

१. अथोष्णिक्ककुभौ चक्षुषी ते । जै १, २५४ (तु. जै २, ५८) ।
२. उष्णिक्ककुब्भ्यां वा इन्द्रो वृत्राय वज्रं प्राहरत् ककुभि पराक्रमतोष्णिा प्राहरत् । तां ८,५,२ ।
३. नासिके वा एते यज्ञस्य यदुष्णिक्ककुभौ । तां ८, ५, ४ ।
४. प्राणा वा उष्णिक्ककुभौ । तां ८, ५, ५ ।
५. संशीर्णमिवैतच्छन्दः पुरुषच्छन्दसमुष्णिक्ककुभौ । जै १,३३७ ॥ [°कुभ्- इन्द्र- २१२ द्र.] ।

औष्णिह-

१. औष्णिहो वै पुरुषः । ऐ ४, ३ ।
२. मरुतस्सप्ताक्षरयौष्णिहमुदजय ९ इचतुर्धा हि ( ह्ये [मै.] तस्यास्सप्त सप्ताक्षराणि । मै १, ११, १०; काठ १४, ४ ।
३. लोहमौष्णिहम् ( छन्दः ) । शांआ ११, ७ ।
औष्णिही- असौ वै लोको द्यौरौष्णिही तृचाशीतिः । ऐआ १, ४, ३ ।

उष्णीष- शल्यं निर्हृत्योष्णीषेण वेष्टयन्ति । मै २, ३, १ ।

उस्त्रिया> °त्व- ततो यद् (रेतः) अत्यस्रवत्तद् बृहस्पतिरुपागृह्णात् तदासां (गवाम्) उस्त्रियात्वम् । मै ४, २, १२ ।

# ऊ

ऊति- ऊतयः खलु वै ता नाम याभिर्देवा यजमानस्य हवमायन्ति । ये वै पंथानो याः स्रुतयस्ता वा ऊतयस्त उ एवैतत्स्वर्गयाणा यजमानस्य भवन्ति । ऐ १, २ ।

ऊतीक- यज्ञस्य वै यत्र शिरोऽछिद्यत तस्य यो रसः प्राणेदत् त एवोतीका अभवन् तमु तद् यज्ञमेव प्रत्यक्षमभिषुण्वन्ति यदूतीकान् । जै १,३५४ ।

ऊधस्- तस्या (विराजः ⌊पृथिव्याः⌋) एतदूधो यदधिषवणे...ऋत्विजो दुहन्ति । काठ २५,९ ।

ऊन-> ऊनातिरिक्त- न्यूनाक्षरा छन्द आपो देवतोनातिरिक्तानि । माश १०,३,२,१३ ।

ऊम-

१. ऊमा वै पितरः प्रातःसवने, ऊर्वा माध्यन्दिने काव्यास्तृतीयसवने । ऐ ७,३४ ।
२. भूतानि वै विश्व ऊमाः । ऐआ १,३,४ ।

ऊरु-

१. अनुष्टुप्छन्दो विश्वे देवा देवतोरू । माश १०,३,२,९ ।
२. ऊरुवोरोजः (अस्तु) । तैसं ५,५,९,२ ।
३. ऊरू तदस्य (पुरुषस्य) यद् वैश्यः । काठसंक १०१ : ५; तैआ ३,१२,६ ।
४. तदूर्ध्वमुदसर्पत्ता ऊरू अभवताम् । ऐआ २,१,४ ।
५. दक्षिण ऽ ह्यूरुमनु प्रजाः प्रजायन्ते । मै ४,५,४ ॥ [°रु- ऐन्द्राग्न- ७ द्र.] ।

ऊर्ज्-

१. अमुतो (दिवः)ऽर्वाचीमूर्जमुपजीवन्ति । काठ २१,९ ।
२. आपो वाऽऊर्जोऽद्भ्यो ह्यूर्जायते । माश ९,४,१, १० ।
३. ऊर्क् (+ वै ⌊मै.⌋) पशवः । तैसं २,१,१,७;५,४,४;३,५,९,३; मै २,५, १ ।
४. ऊर्गिति देवाः (उपासते) । माश १०,५,२,२० ।
५. ऊर्वा अन्नाद्यं दधि । तै २,७,२,२; तैआ ५,९,७ ।
६. ऊर्वा ओषधयः । मै ३,६,७;९,४ ।
७. ऊर्ग् (+ वै ⌊काठ.⌋) विराट् । काठ ३३,३; तै १,२,२,२ ।
८. ऊर्ग्वै दधि । तैसं ३.५,९,३; मै ३,२,७; काठ २८,६; क ४४, ६ (तु. काठ २१,९) ।
९. ऊर्ग्वै (ऊर्क् ⌊तैआ.⌋) मुञ्जाः । तैसं ५,१,९,४; काठ १९,१०; क ३०,८; तै ३,८,१,१; तैआ ५,४,४ ।
१०. ऊर्ग्वै यवः (रसः ⌊माश.⌋, सोमः ⌊काठ.⌋) । तैसं ६,२,१०,३; काठ २७,१; माश ५,१,२,८ ।
११. ऊर्ग्वै रसो यूः (हिङ्कारः ⌊शांआ.⌋) । मै ३, १०,४; शांआ २, १ ।
१२. ऊर्ग्वै स्वम्, यावद्वै पुरुषस्य स्वं भवति नैव तावदशनायति । माश ५,३,५,१२ ।
१३. ऊर्ज् ऽ वा एत ऽ रसं पृथिव्या उपदीका उद्दिहन्ति यद्वल्मीकम् । तै १, १,३,४; तैआ ५, २, ७, ८ ।
१४. ऊर्जे ऽ स ऽ सीदेन ( प्रीणामि ) । काठ ५३, १ ।

१५. ऊर्जं दधाथामिति रसं दधाथामित्येवैतदाह । माश ३, ९, ४, १८ ।
१६. ऊर्जे त्वेति यो वृष्टादूर्ग्रसो जायते तस्मै तदाह । माश १, २, २, ६ ।
१७. ऊर्जो वा एतद् रूप ँ यत्पूर्णम् । मै ३, ६, ५ ।
१८. ऊर्जौषधीः (आदित्योऽस्तं यन् प्रविशति ) । जै १, ७ ।
१९. तमेव ( चन्द्रमःस्थं अत्त्यन्नामानं यमं मृत्युम् ) ताभिराहुतिभिश्शमयित्वोर्जं लोकानां जयति । जै १, २८ ।
२०. देवा वै यत्रोर्जं व्यभजन्त ततश्शर उदतिष्ठत् । काठ २३,४ ।
२१. पितरो ( गाम् ) अदुह्र रजतेन पात्रेणोर्जं च स्वधां च । मै ४, २, १३ ।
२२. मध्यत ऊर्गूर्जयति । क ३१,९ ।
२३. मध्यत ऊर्जा भुञ्जते । तैसं ६, २, १०, ७ ।
२४. यास्ते अग्ने तनुव ऊर्जो नाम । ताभिस्त्वमुभयीभिः संविदानः । तैआ ४, १८,१ ।
२५. विश्वे देवा ऊर्जा (सहागच्छन्तु) । तैआ ३,८,२ ॥ [ ऊर्ज्- अन्न-१४; ११२; १४९;१५०; अन्नाद्य- ४; अप्- १३०;१४२;१४३; इष्- ३; उदुम्बर- ३;५;६;७;८;९;१३;१४;१७;१९; औदुम्बर- ३ द्र.] ।

√ऊर्जि > °र्जयत्- > °र्जयन्ती- जातवेदा ऊर्जयन्त्या पुनातु । काठसंक ९६ : ७ ।

ऊर्जस्- > उर्जस्वत्- वसन्तस्याहं देवयज्ययोर्जस्वान् पयस्वान् भूयासम् । काठ ४, १४ ।

ऊर्जस्वती- रसवतीरित्येवैतदाह यदाहोर्जस्वतीरिति । माश ५, ३,४,२ ।

ऊर्ज- अन्नमूर्जम् । कौ २८,५ ।

ऊर्ण- > ऊर्ण-नाभि- ये(कालकञ्जाख्या असुराः)ऽवाकीर्यन्त त ऊर्णनाभयोऽभवन् । तै १,१,२,५ ।

ऊर्ण-म्रदस्-

१. ऊर्णम्रदा इत्यूर्णमृद्वीत्येवैतदाह । काश ४, २, १, १० ।
२. साध्वी देवेभ्य इत्येवैतदाह यदाहोर्णम्रदसं त्वेति । माश १, ३, ३, ११ ।

ऊर्ण,र्णा-वाभि-

१. ये (कालकाञ्जेष्वसुरेषु) ऽपरे त ऊर्णावाभयः ( अभवन् ) । मै १, ६, ९ ।
२. यो (कालकाञ्जानामसुराणाम् ) व्यवृह्यत सोऽयम् ( स एष [क.] ) ऊर्णवाभिस् स्वैरान्त्रैस्संतित ँ सति । काठ ८, १; क ६, ६ ।

ऊर्णायु-

१. अङ्गिरसो वै सत्रमासत तेषामाप्तः स्पृतः स्वर्गो लोक आसीत् पन्थानन्तु देवयानं न प्राजान- ँ स्तेषाङ्कल्याण आङ्गिरसोऽध्यायमुदव्रजन् स ऊर्णायुङ्गन्धर्वमप्सरसां मध्ये प्रेङ्खयमाणमुपैत्स ईयामिति यां यामभ्यदिशत्सैनमकामयत तमभ्यवदत् कल्याणा३ इत्यासो वै वः स्पृतः स्वर्गो लोकः पन्थानं तु देवयानं न प्रजानीथेद ँ साम स्वर्ग्यं तेन स्तुत्वा स्वर्गं लोकमेष्यथ मा तु वोचोहमदर्शमिति । तां १२,११, १० ।
२. इममूर्णायुं वरुणस्य नाभिं त्वचं पशूनां द्विपदां चतुष्पदाम् । त्वष्टुः प्रजानां प्रथमं जनित्रमग्ने मा हि ँ सीः परमे व्योमन् । काठ १६,१७ ।

३. इममूर्णायुमित्यूर्णावलमित्येतत् । माश ७, ५, २, ३५ ।

और्णायव ( सामन्- )-

१. तदेतत् कामसनि साम…यदूर्णायुर्गन्धर्वो ऽपश्यत् तस्मादौर्णायवमित्याख्यायते । जै ३,७६ ।

२. तदेतत् ( और्णायवम् ) स्वर्ग्यं साम । जै ३, ७७ ।

ऊर्ध्व, र्ध्वा-

१. अथैतदन्तरिक्षम् ( ऊर्ध्वा दिक् ), एषा हि दिग् बृहस्पतेः । माश २, ३,४,३६ ।

२. अथैनम् ( इन्द्रम् ) ऊर्ध्वायां दिशि मरुतश्चाङ्गिरश्च देवाः … अभ्यषिञ्चन् … पारमेष्ठ्याय माहाराज्यायाऽऽधिपत्याय स्वावश्यायाऽऽतिष्ठाय । ऐ ८, १४ ।

३. अधिपत्न्यसि बृहती ( ऊर्ध्वा ) दिङ् मरुतस्ते देवा अधिपतयो, बृहस्पतिर्हेतीनां प्रतिधर्ता, त्रिणव-त्रयस्त्रिंशौ त्वा स्तोमौ…वैश्वदेवाग्निमारुते उक्थे…शाक्वररैवते सामनी । तैसं ४, ४, २, २-३ ।

४. अधिपत्न्यस्यूर्ध्वा दिक् (+विश्वे ते देवा अधिपतयो, बृहस्पतिर्हेतीनां प्रतिधर्ता, त्रिणव-त्रयस्त्रिंशौ त्वा स्तोमौ पृथिव्यां श्रयतां वैश्वदेवाग्निमारुते उक्थे अव्यथायै स्तभ्नुतां शाक्वररैवते सामनी [मै २, ८, ९.]) । मै २, ८, ३;९ ।

५. इयं ( पृथिवी ) वा अदितिः , ऊर्ध्वा वा अस्या दिक् । मै ३, ७,१ ।

६. ऊर्ध्वया त्वा दिशा (+सादयामि [मै.]) बृहस्पतिना (+देवेन [मै.]) देवतया पाङ्क्तेन च्छन्दसाग्नेः पृष्ठमुपदधामि । मै २, ८, ११; काठ २२, ५ (तु. तैसं ५,५,८,२) ।

७. ऊर्ध्वया दिशा यज्ञः संवत्सरो मार्जयताम् ( °यन्ताम् [काठ.] ) । मै १, ४, २; काठ ५, ५ ।

८. ऊर्ध्वा दिक् पङ्क्तिश्छन्दश्शाक्वरं रैवतं साम, मित्रावरुणौ देवता हेमन्तशिशिरा ऋतू त्रिणवस्स्तोमस्त्रयस्त्रिंशवर्तनिः, पष्ठवाड् वयोऽभिभूरयानां, विष्वग्वातो वातः सुपर्ण ऋषिः । काठ ३९, ७ ।

९. ऊर्ध्वा दिग् बृहस्पतिर् (°क् सोमो [मै.]) देवता । मै १,५,४; काठ ७,२; तै ३,११,५,३ ।

१०. ऊर्ध्वा दिशां रन्तिराशौषधीनां संवत्सरेण सविता नो अह्नाम् । रेवत्सामातिच्छन्दा उ छन्दो ऽजातशत्रुः स्योना नो अस्तु । तैसं ४, ४,१२, ४ ।

११. ऊर्ध्वा दिशां हेमन्तशिशिरावृतूनां बृहस्पतिर्देवता, वर्चो द्रविणं, त्रिणवः स्तोमः, स उ त्रयस्त्रिंशवर्तनिः पष्टवाड्वयो ऽभिभूरयानां, विष्वग्वातो वातः सुपर्ण ऋषिः । तैसं ४, ३,३, २-३ ।

१२. ऊर्ध्वामातिष्ठ । पङ्क्तिस्त्वा छन्दसामवतु, त्रिणवत्रयस्त्रिंशौ स्तोमौ, शाक्वररैवते सामनी, बृहस्पतिर्देवता, फलं ( वर्चो [तैसं.] ) द्रविणम् । तैसं १, ८,१३,२; मै २, ६,१० ।

१३. ऊर्ध्वामारोह । पङ्क्तिस्त्वावतु शाक्वररैवते सामनी, त्रिणवत्रयस्त्रिंशौ स्तोमौ, हेमन्तशिशिरावृतू, वर्चो द्रविणम् । माश ५, ४,१, ७ ।

१४. ऊर्ध्वामेव दिशं अदित्या प्राजानन्नियं ( पृथिवी ) वाऽ अदितिस्तस्मादस्यामूर्ध्वा ओषधयो जायन्तऽऊर्ध्वा वनस्पतयः । माश ३, २, ३, १९ ।

१५. ऊर्ध्वायां दिशि यज्ञः संवत्सरो यज्ञपतिर्मार्जयन्ताम् । तैसं १, ६,५, २ ।

१६. ऊर्ध्वो हि तिष्ठन् वीर्यवत्तरः (°र्या° [काठ.]) । मै ४, ५,५,८ ४; काठ १८, १९; ३७, ११; क २९, ७ ।

१७. एषा वा ऊर्ध्वा बृहस्पतेर्दिक् तदेष उपरिष्टादर्यम्णः पन्थाः । माश ५, ५,१,१२ ।

१८. एषोर्ध्वा बृहस्पतेर्दिगित्येवाहुः । माश ५, १, १, ४ ।

१९. ततो देवमनुष्याः पितरः । गन्धर्वाप्सरसश्चोदतिष्ठन् । सोर्ध्वा दिक् । तैआ १, २३, ७ ।

२०. पंक्तिरूर्ध्वा दिक् । माश ८, ३, १, १२ ।

२१. मामभ्युदयेत्यूर्ध्वा दिक् (आदित्याय) प्रायच्छत् क्षत्रं च राष्ट्रं च । जै २, २५ ।

२२. य ऊर्ध्व उदतृणत् स पूर्वपक्षस्तेन देवानसृजत । काठ ९, ११ ।

२३. यदाहुत्या ऊर्ध्वो धूम उदयते स्वर्गं तेन लोकम् ( अभिजयति ) । मै ३,९, ५ ।

२४. यदूर्ध्वस्तिष्ठञ्जुहोति स्वर्गं तेन लोकमभिजयति । काठ २६,७ ।

२५. सम्राड् ( ऊर्ध्वा ) दिशा ९ सहसाम्नी सहस्वत्यृतुर्हेमन्तो विष्ठया नः पिपर्तु । अवस्युवाता बृहतीर्नु शक्करीरिमं यज्ञमवन्तु नो घृताचीः । सुवर्वती सुदुघा नः पयस्वती दिशां देव्यवतु नो घृताची । त्वं गोपाः पुर एतोत पश्चाद् बृहस्पते याम्यां युङ्ग्धि वाचम् । ऊर्ध्वा दिशा ९ रन्तिराशौषधीना ९ संवत्सरेण सविता नो अह्नाम् । रेवत्सामातिच्छन्दा उ छन्दो ऽजातशत्रुः स्योना नो अस्तु । स्तोमत्रयस्त्रि ९ शे भुवनस्य पत्नि विवस्वद्वाते अभि नो गृणाहि । घृतवती सवितराधिपत्यैः पयस्वती रन्तिराशा नो अस्तु । तैसं ४,४,१२,३-५ (तु. मै ३, १६, ४; काठ २२, १४) ।

२६. सोर्ध्वां दिशं ( अदितिः ) प्राजानात् । कौ ७,६ ।

२७. स्वर्ग्यैवोर्ध्वा दिक् । ऐ १, ८ ॥ [ °र्ध्व, र्ध्वा- अदिति- ५५; अधिपति- ७; अधिपत्नी- १;२; आस्कन्द- द्र.] ।

**ऊर्ध्वसद्मन्-** प्रजापतिर्है खलु वा ऊर्ध्व-सद्म । जै १, २१९ ।

**ऊर्ध्व-सद्मन ( सामन्- )-**

१. असुरा वा एषु लोकेष्वास ९ स्तान्देवा ऊर्ध्वसद्मनेनैभ्यो लोकेभ्यः प्राणुदन्त । तां ९,२,११ ।

२. ऊर्ध्वसद्मनेन वै देवा एषु लोकेषूर्ध्वा असीदन् । यदेषु लोकेषूर्ध्वा असीदंस्तद् ऊर्ध्वसद्मनस्य ऊर्ध्वसद्मनत्वम् । जै १,२१८ ।

**ऊर्ध्व-स्तोभ-** यदूर्ध्वस्तोभं तेन बार्हस्पत्यम् । मै ४, ८, ५ ।

**ऊर्ध्वेड-** अमुम् ( स्वर्गं लोकं देवाः) ऊर्ध्वेडेन ( साम्नाऽभ्यजयन् ) । तां १०,१२, ४ ।

**ऊर्व-** ऊम- १ द्र.

**ऊष-**

१. ऊषान् एवासौ (द्यौः) अमुतोऽस्यै ( पृथिव्यै ) शुल्कमकरोत् । जै १,१४५ ।

२. ऊषा वै दिवः प्रियं धाम । काठ २०, १; क ३१, ३ ।

३. ऊषो हि पोषः । ऐ ४, २७ ।

४. एते हि साक्षादन्नं यदूषाः । तै १, ३, ७, ६ ।

५. तावद्वा अमुष्या (दिवः) इह यज्ञिय ९ यदूषाः । मै १,६,३ ।

६. ते ( ऊषाः ) ऽमुतः ( द्युलोकात् ) आगता अस्यां पृथिव्यां प्रतिष्ठितास्तमनयोर्द्यावापृथिव्यो रसं मन्यन्ते । माश २, १, १, ६ ।
७. पशव ( °वो वा [माश ५, २, १, १६] ) ऊषाः । माश ५,२,१,१६;७,१,१,६;२,१,८ ।
८. पशूनां वा एतत प्रियं धाम यदूषाः । काठ ८, २ ।
९. पुष्टिर्वा एषा प्रजननं यदूषाः । तैसं ५, २, ३,२; तै १, १, ३, १ (तु. मै ३,२,३) ।
१०. प्राजापत्या वा ऊषाः । मै १, ११, ८; काठ ८, २; १४, ८ ।
११. यदमुष्या ( दिवः ) यज्ञियमासीत् तदस्याम् ( पृथिव्याम् ) अदधात् त ऊषा अभवन् । तैसं ५, २, ३, ३ ।
१२. यदमुष्या (दिवः) यज्ञियमासीत् तदिमाम् ( पृथिवीम् )अभ्यसृज्यतोषाः । काठ ८, २ ।
१३. योनिर्वै सिकता, रेता ऊषाः । मै ३, २, ३ (तु. माश १३, ८, १, १४) ।
१४. संज्ञान ९ वा ( हि+ एतत् पशूनां यत् [तैसं., तै.] ) ऊषाः । तैसं ५, २,३, २; मै ३, २,३; तै १,१,३, २ ॥ [°ष– उल्ब– ३ द्र.] ।

ऊषर– तस्मात्पशव्यमूषरम् ( स्थानम् ) इत्याहुः । माश २, १, १, ६ ।

ऊष्मन्–
१. एष वा ऊष्मा योऽयं ( वायुः ) पवते । काश ४,८, ३, १२ ।
२. त्रीणि षष्टिशतान्यूष्मणां यानूष्मणो ऽवोचाम, रात्रयस्ताः । ऐआ ३, २, २ ।
३. य ऊष्माणः स प्राणः । ऐआ २, २, ४ ।
४. यानूष्मणो ऽधिदैवतमवोचाम मज्जानस्ते ऽध्यात्मम् । ऐआ ३, २, २ ।
५. वायो ( रूपम् ) ऊष्माणः । ऐआ ३, २, ५ ।
६. वृत्रस्योष्मा ( वत्सः ) । तैआ १, १०, ७, ।
ऊष्म-रूप– प्राण ऊष्मरूपम् । ऐआ ३, २, १; शांआ ८, १ । [°ष्मन्– अन्तरिक्ष– ७२ द्र. ] ।

√ऊह्
१. दूष्यते वा ऋचो ऽक्षरं यदेतदूहितं तस्मादृक्षु नोहेत्, ब्राह्मणवदूहेद् विकृती यथार्थं यजूंषि इति । काठसंक १४१ : १२-१३ ।
२. पूयति वा एतदृचो ऽक्षरं यदेनमूहति तस्मादृचं नोहेत् । काठसंक १४१ : १८ ।

# ऋ

ऋक्वन्– बृहस्पतिर् ऋक्वभिर्वावृधानः (इह मादयस्व) । मै ४, १४, १६ ।

ऋक्ष–
१. ऋक्षाणा ९ ( सप्तर्षीणाम् ) ह वा एता ( कृत्तिकाः ) अग्रे पत्न्य आसुः···यद्धेता अग्रेणोद्यन्तीहोत्तरेण सप्तर्षयः । काश १, १, २, २ ।
२. ऋक्षा वा इयम् ( पृथिवी) अग्र आसीत् । मै १, ६, ९ ।
३. केसरेभ्य ऋक्षा ऋक्षीकाः ( अजायन्त ) । जै २, २६७ ।
४. सप्तर्षीनु ह स्म वै पुरऽर्क्षा इत्याचक्षते ! माश २, १,२,४ ॥ [°क्ष– अमेध्य– ४ द्र ] ।

ऋच्-

१. अथ यवमयं ( पिण्डमधिश्रयति ), तद् ऋचा ९ रूपम् । माश ५, ५,५, ९ ।
२. अस्थि वा (ह्य् [माश १, ६, ३,२९; ३०]) ऋक् । माश १,६,३,२९; ३०;७, ५,२,२५ ।
३. इममेव लोकम् ( पृथिवीम् ) ऋचा जयति । माश ४,६, ७,२ ।
४. ऊर्ध्वं वै नामैष । तम् ऋगिति परोक्षमाचक्षते । जै ३,३७९ ।
५. ऋक् शतपदी । ष १, ४ ।
६. ऋगसि···सा साम गर्भमधत्थाः । मै २, १३, १५ ।
७. ऋग्घि रथन्तरं साम बृहत् । जै १, १३३ ।
८. ऋग्भिः (एनं महादेवम् ) शंसन्ति । काठसंक २७ : १ ।
९. ऋग्भ्यो जातं वैश्यं वर्णमाहुः । तै ३, १२, ९, २ ।
१०. ऋग्भ्यो जाता ९ सर्वशो मूर्त्तिमाहुः । तै ३, १२, ९, १ ।
११. ऋग् ( + वै [जै.] ) रथन्तरम् । जै १,१२८; तां ७, ६, १७ ।
१२. ऋग्वशा, बृहद्रथन्तरे गर्भः, प्रैषनिविदो जरायु, यज्ञो वत्सो, दक्षिणा पीयूषः । काठ ३९,८ ।
१३. ऋग् वा अयं (पृथिवी-) लोकः, सामासौ (द्युलोकः) । जै २,३८० ।
१४. ऋग्वै यज्ञस्य नेदीयो, यजुर्यजमानस्य । मै ३, १, १ ।
१५. ऋग् वै विज्ञात ९ साम विज्ञातिः । मै १, ४,१४ ।
१६. ऋचामग्निर्देवतं तदेव ज्योतिर्गायत्रं छन्दः पृथिवी स्थानम् । गो १, १,२९ ।
१७. ऋचां प्राची महती दिगुच्यते । ऋग्भिः पूर्वाह्ले दिवि देव ईयते । तै ३, १२, ९, १ ।
१८. ऋचा वै स्तोत्राय गृह्यते । क ४५,३ ।
१९. ऋचा स्तोम ९ समर्धय । तैसं ३, १, १०, १ ।
२०. ऋचा होतृत्वं क्रियते । जै १, ३५८ ।
२१. ऋचि साम गीयते । माश ८, १,३, ३ ।
२२. ऋचो वर्णो यच्छुक्लं कृष्णाजिनस्य । तैसं ६, १, ३, १ ।
२३. ऋचो वै ब्रह्मणः प्राणः । काठसंक ४ : १ ।
२४. एतावद्वाव साम यावान् स्वरः । ऋग्वा एषर्ते स्वराद्भवतीति । जैउ १, ६, २, ९ ।
२५. एष ( प्राणः ) वा ऋगेष ह्येभ्यः सर्वेभ्यो भूतेभ्योऽर्चत । ऐआ २, २, २ ।
२६. ओमित्यृचः प्रतिगर एवं तथेति गाथाया ओमिति वै दैवं तथेति मानुषम् । ऐ ७,१८ ।
२७. कृष्णमृक् । काठ २३,३ ।
२८. ज्योतिस्तद्यद् ऋक् । जै १, ७६ ।
२९. तद् ( ब्रह्म ) ऋगित्युपासीत, सर्वाणि हास्मै भूतानि श्रैष्ठ्यायाभ्यर्च्यन्ते । शांआ ४, ६; कौउ २, ६ ।
३०. तद् यद् रथन्तरस्यर्चैवापरिष्टुभ्य प्रस्तौति तस्माद् राथन्तराः पशवो ऽस्थिप्रतिष्ठानाः । जै १, २९७ ।
३१. तद्धै माध्यन्दिने च सवने तृतीयसवने च नर्चो ऽपराधोऽस्ति । जैउ १, ४, २, ५ ।
३२. तस्माद् यज्ञात् सर्वहुत ऋचः सामानि जज्ञिरे । काठसंक १०० : १७ ।

३३. तस्य ( दक्षिणनेत्रस्य ) यच्छुक्लं तदृचां रूपम् । जैउ ४, ११, ३ १२ ।
३४. देवपवित्रं वा एतद् यद् ऋक् । जै १, ५२ ।
३५. पय आहुतयो ह वा एता देवानां यदृचः । माश ११, ५, ६, ४ ।
३६. पशवो (ब्रह्म [मै.,कौ.] वा ऋक् । मै ३, २, ५; कौ ७,१०; जै ३,२९५ (तु. जै १,३२३) ।
३७. प्राणो वा ऋक् , प्राणो गायत्रम् (प्राणेन ह्यर्चति [माश.]' । जै १,११२; माश ७,५,२,१२ ।
३८. भूरिति (मनुष्यलोको [तैसं.]) वा ऋचः । तैसं ७,५,१,६; काठसंक ४७ : ५; तैआ ७, ५,२; तैउ १,५,२ ।
३९. भूरित्यृग्भ्योक्षरत् सो ऽयं ( पृथिवी- )लोको ऽभवत् । ष १, ५ ।
४०. मनुर्वैवस्वतो राजेत्याह । तस्य मनुष्या विशः···ऋचो वेदः······ऋचां सूक्तं व्याचक्षाण इवानुद्रवेत् । माश १३, ४, ३, ३ ।
४१. महदुक्थमृचाम् ( समुद्रः ) । माश ९, ५, २, १२ ।
४२. यदि यज्ञ ऋक्तो भ्रेषं नीयात् भूस्स्वाहा इति गार्हपत्ये जुहवाथ (इति प्रजापतिर्देवानब्रवीत् ) । जै १, ३५८ ।
४३. यद् ( यज्ञस्य ) ऋचा ( क्रियते ) विशं यज्ञस्याशीर्गच्छति । तैसं १, ६, १०, ४ ।
४४. यदृचोऽध्यगीषत ताः पय आहुतयो देवानामभवन् । तैआ २, ९, २ ।
४५. यदेतन्मण्डलं तपति । तन्महदुक्थं ता ऋचः स ऋचां लोकः । माश १०, ५, २,१ ।
४६. यद्वै यज्ञस्य साम्ना यजुषा क्रियते शिथिलं तद् , यदृचा तद् दृढम् । तैसं ६, ५,१०, ३-४ ।
४७. लोका (स्वर्गा ) ऋचः । काठ ३३, ७[२] ।
४८. वागेव ऽर्चश्च सामानि च । मन एव यजू ९ षि । माश ४, ६, ७, ५ ।
४९. वाग्वा ऋचस्सत्यं, मनः साम्नः ( सत्यम् ) । जै १,३२६ ।
५०. वाचं म ऋचो ऽनु दीक्षन्ताम् । जै २, ६५ ।
५१. विड्ढ्यृक् । जै १, ८८ ।
५२. वीर्यं वै देवतऽर्चः । माश १, ७, २, २० ।
५३. स ( प्रजापतिः ) ऋचैवाशंसद्यजुषा प्राचरत् साम्नोद्गायत् । कौ ६,१० ।
५४. स ऋचो व्यौहत् । द्वादश बृहती सहस्राणि ( १२०००×३६=४३२००० अक्षराणि ) एता हऽर्चो याः प्रजापतिसृष्टाः । माश १०, ४, २, २३ ।
५५. सामर्चा ब्रह्मणे समनमत् क्षत्राय समनमत् । तैसं ७, ५, २३, २ ।
५६. साम वाऽऋचः पतिः । माश ८, १, ३, ५ ।
५७. सा या सा वागृक् । जैउ १, ८, १, ८ ( तु. जैउ १,२,२,२;४,११,२,४) ।
[ ऋच्- अन्न- ८१; अन्नाद- १; अमृत- ५; असुर- १५; अस्थन्- १; अहन्- ४५; आदित्य- २९१; इन्द्र- २१४; उच्चैस् २; √रुह् १;२ द्र.] ।

ऋक्-पद्- अथेमानि प्रजापतिर्ऋक्पदानि शरीराणि सञ्चित्याऽभ्यर्चत् । यदभ्यर्चत्ता एवर्चो-ऽभवन् । जैउ १,४,१,६ ।

ऋक्-संमित- ऋक्संमिता वा इमे लोका अयं लोकः पूर्वोऽर्धर्चोऽसौ लोक उत्तरोऽथ यदर्धर्चा-वन्तरेण तदिदमन्तरिक्षम् । कौ ११, १ ।

ऋक्-सम (सामन्-)-

१. जाया (प्रजननं वा [ जै १,३०२]) ऋक्समम् । जै १,३००;३०२।

२. प्रजापतिरनुष्टुभऋक्समानि (असृजत) । जै १,२९९।

ऋक्-साम-

१. ऋक्सामयोर्वा एतद्रूपं यत् कृष्णाजिनम् । काठ ११, १०।

२. ऋक्सामयोर्हैते (शुक्लकृष्णे) रूपे । माश ६,७,१,७।

३. ऋक्सामानि वा एष्टयः । ऋक्सामैर्ह्याशासतऽइति नोऽस्त्विदर्थं नोऽस्त्विवति । माश ९, ४,१,१२।

४. ऋक्सामाभ्या ँ सन्तरन्तो यजुर्भी रायस्पोषे समिषा मदेम । काठ २, ४।

५. ऋक्सामे वै सारस्वता उत्सौ (°स्वतावु° [तै.]) । मै १, ८, ८; तै १, ४,४, ९।

६. ऋक्सामे वै हरी । माश ४, ४, ३, ६।

७. प्रजापतिः परमेष्ठी मनो गन्धर्वस्तस्य ऋक्सामाण्यप्सरसः स्तवा नाम । मै २, १२, २।

८. प्रजापतिर्विश्वकर्मा मनो गन्धर्वस्तस्यर्क्सामान्यप्सरसो वह्नयः (°प्सरस एष्टयो नाम [क.] ) । तैसं ३, ४, ७, १-२; क २९,३ ॥ [ °म- इन्द्र- २१३ द्र. ]।

ऋक्-सामन्-

१. ऋक्साम्ने उह वै स्वर्गस्य लोकस्येशाते । तं ह वा एते स्वर्गं लोकं गमयतः स स्वर्गस्य लोकस्येशे य एने एवं गायति । जै १, ३२६।

२ भूताय नमो भविष्यते नम इत्यृक्सामभ्यामेव नमस्करोति । काठसंक १२२ : ६-७।

ऋग्-यजुस्- स (ब्रह्मा) यदि पुरा मानुषीं वाचं व्याहरेत् । ततो वैष्णवीमृचं वा यजुर्वा जपेद्यज्ञो वै विष्णुस्तद्यज्ञं पुनरारभते तस्यो हैषा प्रायश्चित्तिः । माश १,७,४,२०।

ऋग्-वेद-

१. अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजं । होतारं रत्नधातममित्येवमादिं कृत्वा ऋग्वेद-मधीयते । गो १,१,२९।

२. अयं ( भू- ) लोक ऋग्वेदः । ष १, ५।

३. ऋग्वेद एव (°दो वै [माश.]) भर्गः । गो १, ५, १५; माश १२,३,४,९।

४. ऋग्वेदाद्गार्हपत्यः ( अजायत ) । ष ४, १।

५. भूरित्येव ऋग्वेदः [ °दात् ( उदैत् [जै.])] । जै १,३५७; ऐआ १,३,२।

६. वागेवऽर्ग्वेदः । माश १४, ४, ३, १२।

७. स ( प्रजापतिः ) भूरित्येवर्ग्वेदस्य रसमादत्त । सेयं पृथिव्यभवत् । तस्य यो रसः प्राणेदत् सो ऽग्निरभवद्रसस्य रसः । जैउ १,१,१,३ ॥ [ °द- अग्नि- २८८; ४१९ द्र.]।

ऋजीष-

१. अतिरिक्तं वा एतद् यज्ञस्य यद् ऋजीषः । मै ४,८,५।

२. पशवो वा ऋजीषम् (°षः [मै.]) । मै ४,८,५; काठ २९,३; क ४५,४।

३. वरुणो वा ऋजीषः । मै ४,८,५।

ऋजु-

१. असौ वै लोक ऋजुः सत्य ँ ऋजुः सत्यमेष य एष (सूर्यः) तपति । माश १४,१,२,२२ ।

२. इयं (पृथिवी) वा ऋजुः । तैआ ५,३,७ ।

ऋण-

१. अपूतो वा एषोऽमेध्योऽयज्ञियोऽनृतमूचिवान् य ऋणान्यनवदायाग्निमाधत्ते । काठसंक ६ : १-२ ।

२. ऋण ँ ह वै जायते योऽस्ति । स जायमान एव देवेभ्य ऋषिभ्यः पितृभ्यो मनुष्येभ्यः । माश १,६,२, १ ।

ऋत-

१. अयं वाऽअग्निर्ऋतमसावादित्यः सत्यं यदि वासावृतमय ँ सत्यमुभयं वेतदयमग्निः । माश ६,४, ४, १० ।

२. इयं (पृथिवी) वा ऋतम् [+असौ (द्यौः) सत्यम् [मै., काठ., क.])] । तैसं ५,१,५,८; मै ३, १,६; काठ १९,५; क ३०,३; तैआ ५,६,७ ।

३. इयं (पृथिवी) वा ऋतस्य व्योम । तैसं ३,३,५,४ ।

४. ऋतं वदिष्यामि । तैआ ७,१,१; तैउ १, १, १ ।

५. ऋतं वै सत्यं यज्ञः (हिरण्यम् [मै ४,५, २]) मै १,१०,११;४,५,२; काठ ३६,५ ।

६. ऋतं वै सत्यमग्निहोत्रम् । मै १,८,७ ।

७. ऋत ँ सत्येऽधाम् । तैसं ७,१,१८,२ ।

८. ऋतं च सत्यं च वदत । तैसं ३,२, ७,१ ।

९. ऋतं च सत्यञ्चाभीद्धात् तपसोऽध्यजायत । काठसंक १०४ : ११ ।

१०. ऋतमिति सत्यमित्येतत् । माश ६,७,३,११ ( तु. ऐ ४,२० ) ।

११. ऋतमेव परमेष्ठि । तै १,५,५,१ ।

१२. ऋतेनैवैन ँ स्वर्गं लोकं गमयन्ति । तां १८, २,९ ।

१३. एष वा ऋतस्य पन्था यद्यज्ञः । मै ४,८,२ ।

१४. ओमित्येतदेवाक्षरमृतम् । जैउ ३,६,८,५ ।

१५. ब्रह्म ह वा ऋतस्य योनिः । जै १,१०४ ।

१६. चक्षुर्वा ऋतं तस्माद्यतरो विवदमानयोराहाहमनुष्ठ्या चक्षुषादर्शमिति तस्य श्रद्दधति । ऐ २,४० ।

१७. तद्यद् ऋतमिति वाक् सा यत् सत्यमिति प्राणस्सः । जै ३, ३६० ।

१८. दिशो वा ऋतस्य सत्यम् । तैसं ३,३,५,५ ।

१९. द्यौर्वा ऋतस्य विधर्म । तैसं ३,३,५,४ ।

२०. ब्रह्म (मनो [जैउ.]) वाऽऋतम् । माश ४,१,४,१०; जैउ ३,६,८,५ ।

२१. ब्राह्मण ऋत ँ सत्यम् । मै १,८,७ ।

२२. मामभ्यस्तमयेति प्रतीची दिक् (आदित्याय) प्रायच्छद् ऋतं च रात्रिं च । जै २,२५ ।

२३. मित्रो वा ऋतं, ब्रह्म हि मित्रो ब्रह्म ऋतम् । काश ५,१,४,६ (तु. माश ४,१,४,१०) ।

२४. यज्ञो वाऽ ऋतस्य योनिः । माश १,३,४,१६ ।
२५. यो वै यज्ञियो मेध्यस्स ऋतस्य पन्थाः । काठ २८, ४ ।
२६. सत्यं वा ऋतम् । तैसं ६,३,६,३; तै ३,८,३,४; माश ७,३,१,२३;१४,३,१,१८ ।
२७. सत्येनर्तम् ( अन्वाभवत् ) । काठ ३५, १५ ।
२८. सुवर्गो वै लोक ऋतस्य ज्योतिः । तैसं ३, ३,५,५ ॥ [ °त– अग्नि– १६१; अन्तरिक्ष– १९; अमृत– २३; अहन्– ९; इन्द्र– २१५ द्र.] ।

ऋत-जा– ऋतजा इत्येष ( सूर्यः ) वै सत्यजाः । ऐ ४, २० ।

ऋत-धामन् ( लोक-)-

१. ऋतधाम ( अन्तरिक्षम् ) यस्मिन् वायुः । जै १,३३४;३,३४७ ।
२. ऋतधामाऽसि सुवर्ज्योतिः ( स्वर्ज्योतिः [मै., काठ.] ) । तैसं १, ३, ३, १; मै १, २,१२; काठ २, १३ ।

ऋत-निधन– अयं (भूलोकः) एवर्त्तनिधनम् । तां २१,२,७ ।

ऋत-सद्– ऋतसदिति सत्यसदित्येतत् । माश ६,७,३,११ ( तु. ऐ ४,२० ) ।

ऋत-सदस्– ऋतसदसि चक्षुष्पाभ्यां (मित्रावरुणाभ्याम् ) त्वा''' (गृह्णामि) । तैसं ३,२,१०,१ ।

ऋता-षाह्– ऋताषाड् ऋतधामाऽग्निर्गन्धर्वस्तस्यौषधयोऽप्सरस ऊर्जो नाम (°प्सरसो मुदा नाम [मै.]) । तैसं ३,४,७,१; मै २,१२,२ ।

ऋतु–

१. अग्नयो वा ऋतवः । माश ६,२,१,३६ ।
२. अग्निर्वा उत्सीदन् संवत्सरमनूत्सीदति, पञ्च वा ऋतवस्संवत्सरः, पञ्चधाद्वा अध्यृतोष्षष्ठ ऋतुर्बभूव, समानमेतद्यत्पञ्चथश्चर्तुष्षष्ठश्च । काठ ९, ३ ।
३ अग्निष्टोम उक्थ्योऽग्निर्ऋतुः प्रजापतिः संवत्सर इति । एतेऽनुवाका यज्ञक्रतूनाञ्चर्तूनाञ्च संवत्सरस्य च नामधेयानि । तै ३,१०, १०, ४ ।
४. अन्नमृतवः । मै १,७, ३ ।
५. अभक्तर्तुर्वै पुरुषो न हि तद् वेद यमृतुमभिजायते । काठ ७,१५; क ६,५ ।
६. असन्ना हीम ऋतवः । मै ४,६,७ ।
७. असौ वा आदित्य ऋतुस्तस्मादेष षण्मास उदङ्ङेति षड् दक्षिणा । काठ २८,३; क ४४,३।
८. असौ वा आदित्यश्शुक्रो रश्मय ऋतवः । काठ २८,१०
९. अहमस्तभ्नां पृथिवीमुत द्यामहमृतूꣳ रजनꣳसप्त साकम् । काठ ४०,९ ।
१०. इम ऋतवः सर्वेषां भूतानां प्राणैरप प्रसर्पन्ति चोत्सर्पन्ति च । तैआ १,१४, ३ ।
११. उभयतोमुखा हीम ऋतवो, न वै तद् विद्म यत ऋतूनां मुखम् । मै ४,६,७ (तु. काठ २८, ३; क ४४,३) ।
१२. उभये ह्येते (ऋतवः पशवश्च) सहासृज्यन्त । मै १,८, २ ।
१३. ऋतव एतं दक्षिणा पर्यहरन्, पितर ऋतवः । काठ २१,१२ ।
१४. ऋतव एव प्रवोवाजाः । १,५,२३ ।

१५. ऋतवः पितरः । कौ ५,७; गो २,१,२४;६,१५; माश २,४,२,२४;६,१,४ ।

१६. ऋतवः शिक्यमृतुभिर्हि संवत्सरः शक्नोति स्थातुं यच्छक्नोति तस्माच्छिक्यम् । माश ६,७,१,१८ ।

१७. ऋतवस्त्वा पचन्तु । तैआ ४,२६,१ ।

१८. ऋतवस्संवत्सरः । काठ ९,१६;२२,८; जै ३,१५४; तै ३,९,९, १ ।

१९. ऋतवः समिद्धाः प्रजाश्च प्रजनयन्त्योषधीश्च पचन्ति । माश १,३,४,७ ।

२०. ऋतवा आयवानः । संवत्सर एवास्यैतेना ऋतवोऽभीष्टाः प्रीताः भवन्ति । मै ३,४,४ ।

२१. ऋतवो (°वः खलु वै [तैसं.]) देवाः पितरः । तैसं ५,४,११,४; काठसंक ६९:१ ।

२२. ऋतवो वा एतानि पञ्च हवीꣳषि, पञ्च ह्यृतवः । मै १, १०, ५ ।

२३. ऋतवो वाव होत्राः । गो २, ६, ६ ।

२४. ऋतवो वै दिशः प्रजननः । गो २, ६,१२ ।

२५. ऋतवो वै देवाः (पंक्ति [जै.]) । जै १, १०२; २६१; ३१७; माश ७,२,४,२६ ।

२६. ऋतवो वै पृष्ठानि (मरुतः [मै.]) । मै ४, ६,८; काठ ३३,८; जै १,३४८;२,१०७;३०३; ३१४; ३१८; ३५०; ३,१५४; तै ३, ९, ९,१; माश १३,३,२,१ ।

२७. ऋतवो वै पृष्ठ्यः षडहः । जै ३,३१८ ।

२८. ऋतवो वै (हि [माश.]) प्रयाजाः (°याजानुयाजाः [कौ १,४]) । तैसं १,६,११, ५; मै १, ४, १२; ७, ३; कौ १,४; ३,४; माश १, ३, २, ८ ।

२९. ऋतवो वै वाजिनः (विश्वे देवाः [माश ७, १, १, ४३]) । कौ ५, २; गो २, १, १०; माश २,४,४, २२; ७,१,१,४३ ।

३०. ऋतवो वै सोमस्य राज्ञो राजभ्रातरो यथा मनुष्यस्य । ऐ १, १३ ।

३१. ऋतवो ह वै प्रयाजाः । तस्मात्पञ्च भवन्ति पञ्च ह्यृतवः । माश १, ५,३,१ ।

३२. ऋतवो हैते यदेताश्चितयः । माश ६, २, १, ३६ ।

३३. ऋतवो होत्राशंसिनः । कौ २९,८ ।

३४. ऋतुभिः प्रभुः (इन्द्रः) । तैसं ४, ४, ८,१ ।

३५. ऋतुमृतुं वर्षति । काठ १९, ५ ।

३६. ऋतुषु ह खलु वा एष संवत्सरं स्वर्गं लोकमभ्येति यश्चातुर्मास्ययाजी । जै २,२३४ ।

३७. ऋतून् पृष्ठैभिः (प्रीणामि) । काठ ५३, ७ ।

३८. ऋतूनां पञ्चमः । काठ ५३, ८ ।

३९. ऋषभो वा एष ऋतूनां यत्संवत्सरः । तस्य त्रयोदशो मासो विष्टपम् । तै ३,८, ३,३ ।

४०. एकादशभिरस्तुवतर्तवोऽसृज्यन्तार्तवोऽधिपतिरासीत् । तैसं ४, ३, १०, १ (तु. मै २, ८, ६) ।

४१. एतद्वा ऋतूनां मुखम् (यत्फल्गुनीपूर्णमासः) । काठ ८, १ ।

४२. किं नु ते ऽस्मासु (ऋतुषु) इति । इमानि ज्यायांसि पर्वाणि । जैउ ३,५,५,४ ।

४३. को हि तद्वेद यत ऋतूनां मुखम् । तैसं ६,५, ३,२ ।

४४. क्लृप्ता (तत्तल्लक्षणोपेताः) ऋतवः । तैसं ७,५,२०,१ ।

४५. चन्द्रमाः षड्ढोता । स ऋतून् कल्पयति । तैआ ३,७,३ ।
४६. त ँषड्ढोतारमृतुभिः कल्पमानम्··· कवयो निपान्ति । तैआ ३,११,५ ।
४७. त एते षड् ऋतवष्षड् दिशः । त एत ऋतवो दिग्भिर्मिथुना वसन्तेनेयं प्राची दिङ् मिथुना, ग्रीष्मेणेयं (दक्षिणा दिक्), वर्षाभिरियं (प्रतीची दिक्), शरदेयं (उदीची दिक्), हेमन्तेनासौ (ऊर्ध्वा दिक्), शिशिरेणेयम् (अधरा दिक्) । जै २, ५२ ।
४८. तद्यानि तानि भूतानि ऋतवस्ते । माश ६,१,३,८ ।
४९. तस्मादेकैकस्मिन्नृतौ सर्वेषामृतूना ँरूपम् । माश ८, ७,१,४ ।
५०, तस्माद्यथर्तु वायुः पवते । तां १०,९, २ ।
५१. तस्माद्यथर्त्वादित्यस्तपति । तां १०,७,५ ।
५२. तस्माद्यथर्त्वोषधयः पच्यन्ते । तां १०,८,१ ।
५३. तस्य (संवत्सरस्य) ऋतव एव मुखानि । जै १,२४६ ।
५४. तानि वाऽएतानि (भूर्भुवस्स्वरिति) पञ्चाक्षराणि । तान् पञ्चऽर्तूनकुरुत (प्रजापतिः), त इमे पञ्चर्तवः । माश ११,१,६,५ ।
५५. तेषां (ऋतूनाम्) वा एषो (संवत्सरः) ऽभिषिक्तो राजा । मै ४,३,७ ।
५६. त्रयो वाऽऋतवः संवत्सरस्य । माश ३,४,४,१७; ११,५,४,११ ।
५७. त्रयो ह वा ऋतवोऽनृतवोऽन्ये । ग्रीष्मो वर्षा हेमन्त एते ह वा ऋद्धा ऋतव उपश्लेषगा इवान्ये । जै २,३६० ।
५८. त्रीन् (ऋतून्) सतो (प्रजापतिः) अभ्यतप्यत । तान् द्वेधा व्यौहत् । ते षड् ऋतवोऽभवन् । स ग्रीष्मादेव वसन्तं निरमिमीत । वर्षाभ्यश्शरदं हेमन्ताच्छिशिरम् । तस्मादेत ऋतूनामुपश्लेषा इव निर्मिता हि । जै ३,१ ।
५९. द्वंद्वमृतवः । तैसं ५,४, २,१ (तु. तैसं ६,५,३,१) ।
६०. द्वौ द्वौ हि मासावृतुः । तां १०,१२,८ (तु. माश ७,४,२,२९) ।
६१. द्वौ द्वौ हीम (ह्य् [काठ., क.]) ऋतवः । मै ४,६,७; काठ २०, ६; २१,३; क ३१, ८; १८ ।
६२. द्वौ वा ऋतू अहश्च रात्रिश्च (रात्री च [काठ.]) । मै ३,७,१०; ४,४, ९; काठ ३७,१६ ।
६३. धाता षडक्षरेण षड् ऋतूनुदजयत् । तैसं १,७, ११, १ ।
६४. पञ्चथाद्धा अध्यृतोः षष्ठ ऋतुर्बभूव । समानमेतद्यत्पञ्चथश्चर्तुः षष्ठश्च । क ८,६ ।
६५. पञ्चर्त्तवः संवत्सरस्य । माश १,५,२, १६; ३,१,४,२० (तु. काठ ९, १६; २२, ८; माश ३, १,४, ५) ।
६६. पञ्चर्तवो हेमन्तशिशिरयोः समासेन । ऐ १,१ ।
६७. पञ्च वा (ह्य् [काठ २५,२०; ३६,१३; तां.]) ऋतवः । तैसं ५,३,१,२; मै ४,१,५; काठ २०, १०; ३१,१५; काठसं ६९:१ क ४७,३; तां १२,४,८; १३,२, ६; माश २,२,३,१४ ।
६८. पञ्च व्युष्टीरनु पञ्च दोहा गां पञ्चनाम्नीमृतवोऽनु पञ्च । पञ्च दिशः पञ्चदशेन क्लृप्ताः समानमूर्ध्नीरभि लोकमेकम् । तैसं ४,३,११,४; काठ ३९,१० ।
६९. पञ्चानां त्वर्तूनां यन्त्राय धर्त्राय गृह्णामि । तैसं १,६,१,२ ।
७०. पितरो वा ऋतवः । मै १,१०,१७;३,४,४ ।

७१. पिप्रीहि देवाँ उशतो यविष्ठ विद्वाँ ऋतूंरृतुपते यजेह । ये दैव्या ऋत्विजस्तेभिरग्ने त्व ९ होतॄणामस्यायजिष्ठः । काठ २,१५ ।

७२. पूषा षडक्षरया षड् ऋतून् उदजयत् । मै १,११,१०; काठ १४,४ ।

७३. प्रजापतिर्वा एतमग्रेऽग्निमचिनुतर्तुभिस्संवत्सरं वसन्तेन पूर्वार्धं, ग्रीष्मेण दक्षिणं पक्षं, वर्षाभिरुत्तरं शरदा पुच्छ ९ हेमन्तेन मध्यम् । काठ २२,४ ।

७४. फल्गुनीपूर्णमासो वा ऋतूनां मुखम् । मै १,६,९ ।

७५. मुखं वा एतदृतूनां यद्वसन्तः । तै १,१,२, ६-७ ।

७६. य एक ऋतुस्त्रय ऋतवश्च ये षट् चतुर्विंशतिर् ऋतवो ये द्वादश सप्तदशान्युत विंशतिश्च तानन्वारोहामि तपसा ब्रह्मणा च । जै २, ५२ ।

७७. यत्पश्चेऽहन्प्रवृज्यते ऋतुर्भूत्वा संवत्सरमेति । तैआ ५, १२, २ ।

७८. यद् ऋत्वियादसृजत तद् ऋतूनामृतुत्वम् । जै ३,१ ।

७९. यस्मिन्नेव कस्मिंश्चर्ता (अग्निम् ) आदधीत सोमेन यक्ष्यमाणः । काठ ८,१ ।

८०. याष्षड् विभूतय ऋतवस्ते । जैउ १,६,२,१ ।

८१. येनर्तवः पञ्चधोत क्लृप्ता उत वा षड्धा मनसोत क्लृप्ताः । तैआ ३, ११,५ ।

८२. यो वै म्रियतऽऋतवो ह तस्मै व्युह्यन्ते । माश ८,७,१,११ ।

८३. यौ ह खलु वै द्वौ मासावृतोस्सार्द्धिः । जै २,३५३ ।

८४. रश्मय ऋतवः । मै ४,८,८; क ४५,१ ।

८५. वर्षाहूर्ऋतूनाम् । मै ३,१४, १९ ।

८६. वसन्तमृतूनां प्रीणामि । काठ ३१, १५।

८७. वसन्तो ग्रीष्मो वर्षाः, ते देवा ऋतवः । शरद्धेमन्तः शिशिरस्ते पितरः । माश २,१,३,१ ।

८८. वसन्तो वै प्रथम ऋतूनां ग्रीष्मो द्वितीयो वर्षास्तृतीयाश्शरच्चतुर्थी हेमन्तः पञ्चमश्शिशिरष्षष्ठः । जै २,३५६ ।

८९. विंशतिशतं वा ऋतोरहानि (ऋतुः = चत्वारो मासाः) । कौ ११,७ ।

९०. षड् मृत्योर्मुखानि ऋतव एव । जै १,२४७ ।

९१. षड्वा ऋतवः (+संवत्सरः [जै १, १०२; १३१]; संवत्सरम् [माश.]) । मै १, १०, १७; ३, ४,४; ४,४,९; ८,४; काठ ११, ५;१०; काठसंक २१:२; गो २,१,१४; जै १,१०२;१३१; २,३६६; माश १,२,५,१२ (तु. जै १,३१८; २,४२०) ।

९२. संवत्सर ऋतवः । मै ४,६,८; जै १, ३४८;२,१०७;३५० ।

९३. स (प्रजापतिः) तपोऽतप्यत स आत्मन्न् ऋत्वियमपश्यत् । ततस्त्रीनृतूनसृजतेमानेव स लोकान्...... यत्प्रथममतप्यत ततो ग्रीष्ममसृजत । यद् द्वितीयमतप्यत ततो वर्षा असृजत । यत् तृतीयमतप्यत ततो हेमन्तमसृजत । तस्मात् स शीततम इव । जै ३,१ ।

९४. सदस्या ऋतवोऽभवन् । तै ३,१२,९,४ ।

९५. सप्तऽर्तवः संवत्सरः । माश ६,६,१, १४; ७,३,२,९; ९,१,१,२६ ( तु. माश ९,३,१,१९; ५,२,८ ) ।

९६. समानप्रभृतयो ह्यृतवः । काठ २०,१० ।

९७. समानाः सन्त ऋतवो न जीर्यन्ति । तैसं ५, ३, १,२ ।
९८. सर्वे ऋतवो वृष्टिमन्तः । मै ३, १, ५ ।
९९. सर्वानृतून् वर्षति (वायुरावरीवर्ति [तैसं ५,३,१,३]) । तैसं ५,१,५,२; ३,१,३ ।
१००. सेयं वागृतुषु प्रतिष्ठिता वदति । माश ७, ४, २, ३७ ॥ [ °तु- अग्नि- ५७६; अङ्ग- ८; अन्त- ६; अन्नाद्य- ५; उदुत्रह्मीय-; उद्गीथ- २; उपसद्- १; इन्द्राग्नि- ३५ द्र.] ।

आर्तव- ऋतु- ४० द्र. ।

ऋतव्या (इष्टका-)-

१. इमे वै लोका ऋतव्याः । माश ८,७,१,१२ ।
२. ऋतव एते यदृतव्याः । माश ८,७,१, १ ।
३. ऋतुभ्यो वा एता (इष्टकाः) देवा निरमिमत, तदृतव्यानामृतव्यात्वम् । काठ २१, ३; क ३१, १८ ।
४. ककुदमृतव्ये (इष्टके) । माश ७,५,१,३५ ।
५. क्षत्रं वाऽऋतव्या विश इमा इतरा इष्टकाः । माश ८,७,१,२ ।
६. संवत्सरो वा ऋतव्याः । माश ८,६,१,४;७,१,१ ।

ऋतु-ग्रह-

१. ऋतुग्रहैः प्रातःसवनमृतुमत् । मै ४,६,८ ।
२. सोमपा इन्द्रस्य सजाता यद् ऋतुग्रहाः । क ४४,२ ।

ऋतु-पात्र-

१. ऋतुपात्रमेवान्वेकशफं प्रजायते । माश ४,५,५,८ ।
२. ऋतुपात्रे (यदृतु° [क.]) प्रयुज्येते अश्वानेव तेन पशूनां दाधार । काठ २८, १०; क ४५,१ ।
३. स्तना ऋतुपात्रे । मै ४,५,९ ।
४. स्तनौ त ऋतुपात्रे पाताम् । मै ४,८,७ ॥ [°त्र- अश्व- ४ द्र.] ।

ऋतु-प्रैष- वाग्वा ऋतुप्रैषाः । गो २,६,१० ।

ऋतु-याज-

१. ऋतवो वा ऋतुयाजाः । गो २, ३,७ ।
२. प्राणा वा ऋतुयाजाः । ऐ २,२९; कौ १३,९; गो २,३,७ ।

ऋतु-याजिन्- यो वसन्तोऽभूत् प्रावृडभूच्छरदभूदिति यजते स ऋतुयाजी । मै १,१०,८ ।

ऋतु-सन्धि- ऋतुसन्धिषु वै (हि [कौ.]) व्याधिर्जायते । कौ ५,१; गो २,१, १९ ।

ऋत्वि(तु-इ)ज्-

१. आत्मा वै यज्ञस्य यजमानोऽङ्गान्यृत्विजः । माश ९,५,२,१६ ।
२. ऋतव ऋत्विजः । माश ११,२,७,२ ।
३. ऋत्विग्भ्यो ददाति, होत्रा एव तया (दक्षिणया) प्रीणाति । मै ४,८,३ ।
४. ऋत्विजो वै महिषाः । माश १२,८,१,२ ।

५. ऋत्विजो (+हैव [माश.]) देवयजनम् । गो १,२,१४; माश ३,१,१,५ ।
६. एतऽएव सरघो मधुकृतो यदृत्विजः । माश ३,४,३,१४ ।
७. एता उ ह वै यजमानस्य विशो यदृत्विजः । जै २,१४८ ।
८. छन्दा ९ सि वा ऋत्विजः । मै ३,९,८; काठ २६,९ ।
९. देवदूता वा एते यद् ऋत्विजः । तैसं १,७, ३,२ ।
१०. प्राच्या दिशा (°च्यां दिशि [तैसं.]) देवा ऋत्विजो मार्जयन्ताम् । तैसं १, ६, ५, १; मै १, ४,२; काठ ५,५ ।
यद् ऋतिवियादजनयत् तस्माद् ऋत्विज इत्याख्यायन्ते । जै ३,१ ।
११. वेदानामेवैतन्मूलं यद् ऋत्विजः प्राश्नन्ति । काठसंक ४ : ५ ।
१२. स (प्रजापतिः) आत्मन्नृत्वमपश्यत्तत ऋत्विजोऽसृजत यदृत्वादसृजत तदृत्विजामृत्विक्त्वम् (ऋत्वं = ऋतौ [ऋतुकाले] भवं गर्भस्य कारणं बीजमिति) । तां १०, ३,१ ।
१३. सप्तर्त्विजः सूर्या इत्याचार्याः । तेषामेषा ( ऋक् ) भवति । सप्त दिशो नानासूर्याः सप्त होतार ऋत्विजः । देवा आदित्या ये सप्त तेभिः सोमाभीरक्ष णः । तैआ १,७,४-५ ।
[°त्विज्- उशिज्- ४; ऋतु- ७१ द्र.] ।
आर्त्विज्य- अमानुष इव वाऽएतद्भवति यदार्त्विज्ये प्रवृत्तः । माश १,९,१,२९ ।

ऋद्धि-

१. अग्निमुखा ह्यृद्धिः । काठ ३७,३; तै ३, ३,८,९ ।
२. ऋद्ध्या एव रोहिण्याम् (अग्निः) आधेयः । काठ ८,१ ।

ऋबीस- ऋबीसेन (आहिताग्निः) पक्वं नाश्नीयात्, शमलं वा एतदग्नेः । काठसंक १२ : ४ ।

ऋभु-

१. ऋभूणां भागोऽसि, विश्वेषां देवानामाधिपत्यं, भूतं निशान्त ९ स्पृतं, त्रयस्त्रि ९ शः स्तोमः । तैसं ४,३,९,२; मै २ ८,५ ।
२. तृतीयसवनऽआर्भवे पवमाने । उद्गातारमन्वारभासा ऋभुरसि जगच्छन्दाः । माश १२, ३,४,५ ।
३. प्रजापतिर्वै पित ऋभून्मर्त्यान्त्सतो मर्त्यान् कृत्वा तृतीयसवन आभजत् । ऐ ६, १२ ।
४. भद्रा नः सन्त्वृभवो रत्नधातमाः । काठसंक ६२ : ५ ।
५ शारदेन ऋतुना (°देनर्तुना [काठ., तै.]) देवा एकवि ९ श (°शे [तै.]) ऋतवः स्तुतम् । वैराजेन श्रिया श्रियम् ( +हविरिन्द्रे वयो दधुः [तै.] ) । मै ३, ११, १२; काठ ३८, ११; तै २, ६, १९,२ ॥ [°भु- इन्द्र- २१६ द्र.] ।

ऋभु-मत्- संवत्सरो वै सवितर्भुमान् विभुमान् प्रभुमान् वाजवान् । तैआ ५, ७, ११ ।

आर्भव-

१. अथ यत्सप्तदशानि पृष्ठानि भवन्ति, सप्तदश आर्भवः (पवमानः), उदरादेव तेन पाप्मानमपघ्नते । जै २,१३५ ।

२. श्रोत्रमार्भवम् । कौ १६,४ ।
३. अथार्भवः पवमानः । स ह सो ऽसित एव स्तोमः । दिश एव ताः । दिशो ह व्युत्क्रामन्ति पाप्मा न सिषाय न हैनं पाप्मा सिनोति । य एवं वेद । जै १, ३१३ ।
४. सप्तहोतारं व्याख्यायार्भवेण पवमानेनोद्गायेत् । काठ ९, १४ ।

ऋश्य– यमाय राज्ञ ऋश्यः । तैसं ५, ५, ११, १; काठ ४७, १ ।

ऋषभ–
१. ऋषभमेवैतत् पशुष्वपि सृजन्ति मिथुनत्वाय प्रजननाय । जै ३,१३१ ।
२. ऋषभं ब्राह्मणाच्छ ंसिने ( ददाति ) । तैसं १, ८, १८, १; तै १, ८,२,४ ।
३. ऋषभश्च मे वेहच्च मे ( यज्ञेन कल्पताम् ) । तैसं ४,७,१०,१-२ ।
४. ऋषभाः ककुभे (आलभ्यन्ते) । मै ३, १३, १८ ।
५. ऋषभाय राज्ञे गवयः । तैसं ५, ५, ११,१; काठ ४७,१ ।
६. ऋषभेण त्वष्टा ( यज्ञं दाधार ) । तैसं ४, ४, ८,१ ।
७. ऋषभेष्वेव रेतो दधाति । मै १, १०, ९ ।
८. ऋषभो ब्राह्मणाच्छंसिनः सेन्द्रियत्वाय । मै ४, ४,८ ।
९. ऋषभो वयस्सतोबृहती छन्दः । काठ १७, २ ।
१०. ऋषभो वै पशूनामधिपतिः (°शूनां प्रजापतिः [माश.]) । तां १९,१२,३; माश ५,२,५,१७ ।
११. ऋषभो ऽसि शाकरो वायुर्जन्मना । काठ १,११ ।
१२. तस्य ( ऋषभस्य ) रुवतो यावन्तो ऽसुरा उपाशृण्वं स्ते पराभवन् । काठ ३०, १ ।
१३. परमा वा ऋषभो ( ?ऋषभस्य ) वाक् । जै २,४०४ ।
१४. योनिर्वामदेव्यं प्रजननमृषभः । जै १, १३९ ।
१५. यौ यमौ मिथुनौ जायेते, ऋषभ एवान्यो भवति वशाऽन्या । काठ १३, ४ ।
१६. वीर्यं वा ऋषभः । काठ १३, ७; तां १८,९, १४ ।
१७. वृषा ( वर्षणशीलः =रेतःसिक् ) वा ऋषभो योषा सुब्रह्मण्या । ऐ ६, ३ ।
१८. स ह्यैन्द्रो यदृषभः । माश ५, ३, १, ३ ।
१९. सौम्यमृषभम् ( आलभेत ) । काठ १३, ५ ।
२०. सौ हौ खा इत्येवर्षभः । जै १, १३९ ॥ [°भ– इन्द्र– ७८; २१७, २१८; ३४८; ऐन्द्र– ५; १७; १८; १९; २० द्र.] ।

आर्षभ ( सामन्- )–
१. अभि त्वा वृषभासुत इत्यार्षभं क्षत्रसाम क्षत्रमेवैतेन भवति । तां ९, २,१५ ।
२. स ( इन्द्रः ) एतत् सामापश्यत् । तेनास्तुत ततो वै स ऋषभस्सर्वासां प्रजानामभवदृषभता-मगच्छत् । तदेवार्षभस्यार्षभत्वम् । जै १, २२२ ।

ऋषि–
१. अजान् ह वै पृश्नी ंस्तपस्यमानान् ब्रह्म स्वयम्भ्वभ्यानर्षत् , तदृषयोऽभवन् , तदृषीणामृषि-त्वम् । तैआ २, ९,१ ।
२. अथ यदेवानुब्रुवीत तेनऽर्षिभ्य ऋणं जायते । तद्ध्येभ्य एतत्करोत्यृषीणां निधिगोप इति ह्यनूचानमाहुः । माश १,७, २, ३ ।

३. इमौ ते पक्षावजरौ पतत्रिणो याभ्या ९ रक्षा ९ स्यपह ९ स्यग्ने। ताभ्यां पतेम सुकृतामु लोकं यत्रर्षयः प्रथमजा ये पुराणाः। तैसं ४, ७, १३,१ (द्र. मै २, १२, ३; क २९, ४)।

४. ऋषयः कवयः। मै ४, १, २।

५. ऋषयोऽदुह्र (गाम्) चमसेन छन्दा ९ सि च पशू ९ श्च। मै ४, २, १३।

६. ऋषयोऽश्राम्यन्, ते तपो ऽतप्यन्त। तैसं ५, ३,५, ३-४।

७. ऋषयो ह वै स्वर्गं लोकं जिग्युः श्रमेण तपसा व्रतचर्येण। जै २, २१७।

८. ऋषिर्विप्राणाम् (पदवीमत्येति)। तैसं ३, ४, ११, १; काठ २३, १२; तैआ १०, १०,१।

९. ऋषिर्ह स्म मन्त्रकृद् ब्राह्मण आजायते। जै २,२६६।

१०. एते वै कवयो (विप्रा [माश १,४,२,७]) यदृषयः। माश १,४,२,७;८।

११. छन्दा ९ सि वा ऋषीणा ९ स्तुतम्। मै १, ५, ८; काठ ७, ६; क ५, ५।

१२. ततो वै स (अनूपः) उभयं ब्रह्म च क्षत्रं चावारुन्द्ध राजा सन्न् ऋषिरभवत्। उभयमेव ब्रह्म च क्षत्रं चावरुन्द्धे राजा सन्न् ऋषिर्भवति य एवं वेद। जै ३,९७।

१३. तान् (प्रजापत्यादीन्) ऋषयो ऽब्रुवन्नुप व आऽयामेति, केन न उपैष्यथेति, भूम्नेत्य-ब्रुवन् (ऋषयः)। तैसं ५, ७, ५, ७।

१४. ते यत्पुरास्मात्सर्वस्मादिदमिच्छन्तः श्रमेण तपसारिषंस्तस्मादृषयः। माश ६, १,१,१।

१५. नैतमृषिं विदित्वा नगरं प्रविशेत्। तैआ १, ११, ७।

१६. प्राणा (+उ वा [माश ८, ४, १, ५]) ऋषयः। माश ७,२,३,५; ८,४,१,५ (द्र. ऐ २, २७; माश ६,१,१,१; ८, ६,१,५; १४, ५,२,५)।

१७. ब्रह्मणः सायुज्यमृषयो ऽगच्छन्। तैआ २,९, २।

१८. भद्रं पश्यन्त उप सेदुरग्रे तपो दीक्षामृषयः सुवर्विदः। तैसं ५, ७, ४, ३।

१९. युक्ताश्वो वा आङ्गिरसः शिशू जातौ विपर्य्यहरत्तस्मान्संत्रो ऽपाक्रामत्स तपो ऽतप्यत स एतद्यौक्ताश्वम् (साम) अपश्यत्तं मन्त्र उपावर्त्तत। तां ११, ८,८।

२०. येनर्षयस् (येना ऋष° [मै.]) तपसा सत्रमासतेन्धना अग्नि ९ स्वराभरन्तः (सुवराभरन्तः [तैसं.])। तैसं ४, ७, १३, २-३; मै २, १२, ४; काठ १८, १८; क २९ ६।

२१. ये वै ते न ऋषयः पूर्वे प्रेतास्ते वै कवयः। ऐ ६, २०।

२२. यो वै ज्ञातो ऽनूचानः स ऋषिरार्षेयः। माश ४, ३, ४, १९।

२३. स हायमृषिरागत्य न शशाकोत्थातुमसुराशनेन। गरो हैनमाविवेश, यद् वा मित्राय दुद्रोह, यद्वा विद्विषाणानामशनमाश। जै २,८३॥ [°षि- अग्नि-१०२; अनुचान-; अरुन्धती- १ द्र.]।

ऋष्य- वसुभ्यो ऋष्यानालभते। मै ३, १४, ९।

## ए

एक- प्रजापतिर्वा एकः। तै ३, ८,१६,१।

एक-त- सो (अग्निः) ऽपो ऽङ्गारेणाभ्यपातयत्, तत एकतोऽजायत द्वितीयं ततो द्वित स्तृतीयं ततस्त्रितः। मै ४, १, ९।

एक-त्रिंश (स्तोम-)-

१. क्रतुरेकत्रिंशः। तैसं ४, ३, ८, १; मै २,८, ४।

२. दश पाण्या अङ्गुलयो, दश पाद्या, दश प्राणा आत्मैकत्रिं ऽ शः। माश ३,१,४,२३।

३. वाग्वा एकत्रिंशः। काठ २०,१३।

एक-त्रिक- अथैष एकत्रिकः (यज्ञविशेषः) प्रजापतेरुद्भित्। एतेन वै प्रजापतिरेषां लोकानामुदभिनत्। तां १६, १६, १-२।

एक-पातिनी- प्राणोऽपानो व्यान इति तिस्र एकपातिन्यः (ऋचः)। कौ १५,३; १६,४।

एक-पाद्- वायुरेकपात्तस्याकाशं पादः। गो १, २, ९।

एकर्च- अयं वै (पृथिवी-) लोक एकर्चः। जै १, ३११।

एक-विंशति- यानि एकविंशतिः (अक्षराणि) प्रतिष्ठा सा। जै १, २०४।

एक-विंश (स्तोम-)-

१. अथ यः पद्भ्यां पापं कृत्वा मन्येत, एकविंशेनाग्निष्टुता यजेत। जै २,१३५।

२. अथैष एकविंशो विषुवान् भवति। द्वादशमासाः, पञ्चर्तवस्त्रय इमे लोकाः, असावादित्य एकविंशः। जै २,३४३ (तु. जै २,१७५; २२४; ३९९; तां ४,६,४)।

३. असौ वा आदित्य एकविं ऽ शः। तां ६, २, २; तै १, ५, १०,६; ३, १२,५, ८।

४ आदित्य एवैकविंशस्यायतनं द्वादश मासाः पञ्चर्तवस्त्रय इमे लोकाः। तां १०, १, १०।

५. इदमहमानुष्टुभेन च्छन्दसैकविं ऽ शेन स्तोमेन वैराजेन साम्ना प्रजापतिना देवतयायुस्ते दीर्घायुत्वमाददेऽसौ। काठ ३६, १५।

६. एकविंशं वा अनु सर्वे यज्ञक्रतवस्संतिष्ठन्ते। अथो एष वाव दृढः प्रतिष्ठित स्तोमो यदेकविंशः। जै २,१११।

७. एकविंशं स्तोममनु शूद्रः। जै २, ३२।

८. एकविंश एव (स्तोमः) सर्वम्। गो १, ५, १५।

९. एकविंशं तृतीयसवनम्। मै ४,४,१०; जै २, १७१।

१०. एकविंशाय प्रतिष्ठायै। जै १, ६६।

११. एकविंशेन प्रतिष्ठाकामः (यजेत)। जै २,१३६।

१२. एकविं ऽ शो ऽग्निष्टोमः। तां १६, १३, ४।

१३. एकविंशो भवति, प्रतिष्ठित्या अथो रुचमेवात्मन् दधते। तैसं ७, २, १, ३।

१४. एकविंशोऽयं (+वै [माश.]) पुरुषो दश हस्त्या अङ्गुलयो दश पाद्या (पद्या [काठ.]) आत्मैकविंशः। काठ २३, १; ऐ १,१९; माश १३,५,१,६ (तु. मै ३,६,३; जै ३,३१९)।

१५. एकविं ऽ शो वा अस्य भुवनस्यादित्यः आदित्यलोकमेव तदभ्यारोहन्ति। तां ४, ६, ३।

१६. एकविं ऽ शो वा इतः स्वर्गो लोकः। तै ३, १२, ५, ७ (तु. माश १०,५,४,६)।

१७. एकविंशो वा एष य एव (सूर्य्यः) तपति। कौ २५, १ (तु. माश ५,५,३,४; ६,७,१,२)।

१८. एकविंशो वै चतुष्टोमः स्तोमानां परमः। कौ ११, ६; १४, ५; १६, ७।

१९. एकविंशो वै पुरुषः। तैसं ५, १, ८, १; काठ २०, ८; क ३१, १०; तै ३, ३, ७, १।

२०. एकविंशो वै प्रजापतिर्द्वादश मासाः पञ्चर्तवस्त्रय इमे लोकाः । ऐ १, ३० ।
२१. एकविंशो वै स्तोमानां प्रतिष्ठा । काठ २०, १; क ३१, ३; माश १३, ५, १, ७; ऐआ १, ४,२; ५, १ ( तु. तैसं २, ५, १०, २ ) ।
२२. एकविंशौ ते अग्न ऊरू । काठ ३९, २ ।
२३. क्षत्रम् (+वा [तां १८-१९]) एकवि ९ शः । तां २,१६,४;१८,१०,९;१९,१,५ ।
२४. जगत्यैकवि ९ शः (आयतनवान् ) । क ४४,३ ।
२५. तम् (एकविंशं स्तोमम् ) उ-देवतल्प इत्याहुः । तां १०,१,१२ ।
२६. तान् (पशून् ) विष्णुरेकवि ९ शेन स्तोमेनाप्नोत् । तै २,७,१४,२ ।
२७. त्रिवृद्भिरेव कनीयान् (भ्राता) राज्यं गच्छति, पञ्चदशैर्ज्यायान् स्वाराज्यं लोकम् । सप्तदशैरेव कनीयान् राज्यं गच्छत्येकविंशैर्ज्यायान् स्वाराज्यं लोकम् । जै २,९४ ।
२८. द्वादश वै मासाः संवत्सरस्य पञ्चर्तवस्त्रयो लोकास्तद्वि ९ शतिरेषऽएवैकवि ९ शो य एष (सूर्यः) तपति । सैषा गतिरेषा प्रतिष्ठा । माश १,३,५,११ ।
२९. धरुण एकविंशः । तैसं ४,३,८,१; मै २,८,४ ।
३०. नेष्टैकविंशेन पुच्छेन भद्रेण स्तोष्यन् पत्नीनां मध्य उपविशति । जै २,४०६ ।
३१. पञ्चदशश्चैकविंशश्च बार्हतौ तौ गौश्चाविश्चान्वसृज्येतां तस्मात्तौ बार्हतं प्राचीनं भास्कुरुतः । तां १०,२, ६ ।
३२. प्रतिष्ठा वा एकविंशः ( + स्तोमानाम् [तां.]; पद्भ्यामेव तेन पाप्मानमपघ्नते [जै.] ) । तैसं ५,२,३,६; जै २, १३५; तां ३, ७, २; ५,१,१७; ६, १, ११ । (तु. तैसं ५, १,८, ५; ७, ३, १०, ६; मै ३, २, १०; ४, ४; ऐ ८, ४; तां १६, १३, ४; २०, १०,१) ।
३३. ब्रह्म वै सप्तदशः क्षत्रमेकविंशः । जै २.३२७ ।
३४. यदेकवि ९ शो यदेवास्य (यजमानस्य) पदोरष्ठीवतोरपूतं तत्तेनापहन्ति । तां १७,५,६ ।
३५. रुग्वा (विड्वा [ मै., तै.]) एकविंशः । तैसं ५, १, ८, ५; ७,३, १०, ६; मै ४,४,१०; तै १, ८,८,५ ।
३६. शौद्रो वर्ण एकविंशः । ऐ ८,४ ।
३७. स (प्रजापतिः) पद्भ्यामेव प्रतिष्ठाया एकविंशं स्तोममसृजत । जै १,६९ ।
३८. सर्वाभ्यो वा एतं सप्तभ्यो होत्राभ्य इन्द्रो वज्रं निरमिमीत तिस्रस्तिस्र एव होत्रायै स एकविंशष् षोडशी समपद्यत । तेनेन्द्रो वृत्रमहन् । जै १,१९५ ॥ [°श- आदित्य- २३; २८; २९; १७५; २७२; ३४०; इन्द्र- २५६; उदर- १ द्र.] ।

एकविंश-व(त्>)ती- एकवि ९ शवतीं पश्चात् प्रतिष्ठित्यै । क ३१,१४ ।

एक-वीर-

१. एको ह तु सन्वीरो वीर्यवान् भवति । जैउ २,३,३,९ ।
२. एको ह्येवैष वीरो यत्प्राणः । जैउ २,३,१,१ ।
३. स एष वा एको वीरो य एष तपत्येष इन्द्र एष प्रजापतिः । जै १, ८ ।

एक-शत- शतायुर्वै पुरुष (+ शतवीर्यः [तै.]) आत्मैकशतः । तै १,७,६,४; माश १३,२,१,६ ।

एक-शफ- पशवो वा (श्रीर्वा [तै ३,९,८,२]) एकशफम् । तै ३,९,८,२;११,४ ।

**एक-स्तोम-** यदिममाहुरेकस्तोम इत्ययमेव योऽयम्पवते (वायुः) । जैउ ३,१,४, १२ ।

**एक-होतृ-** ब्राह्मण एकहोता । स यज्ञः । तैआ ३,७,१, ।

**एकातिथि-** एष (सूर्यः) ह वै स एकातिथिः स एष जुह्वत्सु वसति । ऐ ५, ३० ।

**एकादश->°रात्र (यज्ञ-)-**

१. एकादशरात्रो भवति, पञ्च वा ऋतव आर्तवाः पञ्चर्तुष्वेवाऽऽर्तवेषु संवत्सरे प्रतिष्ठा प्रजामव रुन्धते । तैसं ७,२,६,३ ।

२. य एवं विद्वा ९ स एकादशरात्रमासते, प्रजामेव सृजन्ते, प्रजामव रुन्धते, प्रजां विन्दन्ते, प्रजावन्तो भवन्ति । तैसं ७,२,६,२ ।

**एकादशिनी** ( एकादशयूपसंहति- )-

१. एकादशिनीं ग्राम्याः (पशव उपतिष्ठन्ते) । काठ २९, ८ ।

२. एकादशिनी वाऽइद ९ सर्वम् । माश १३,६,१,६ ।

३. एष वै सम्प्रति स्वर्गो लोको यदेकादशिनी । माश १३,२,५,२ ।

४. प्रजापतिर्ह्येकादशिनी । माश १३,६,१,६ ।

५. प्रजा वै पशव एकादशिनी । तै ३,९,२,३; माश १३,२,५,२ ।

६. प्राणा वा एकादशिनीः । काठ ३४,१ ।

७. वज्र एकादशिनी । तैसं ५,५,७,१; मै ४,७,९ ।

**एकाष्टका-**

१. इयं ( पृथिवी ) वावैषैकाष्टका । तैसं ५, ७, २, २ ।

२. एषा वै संवत्सरस्य पत्नी यदेकाष्टका । तैसं ७, ४, ८, १; तां ५, ९, २ ।

३. संवत्सरस्य प्रतिमां यां ( एकाष्टकारूपाम् ) त्वा रात्रि यजामहे । मं २,२,१८ ।

४. संवत्सरस्य या पत्नी (एकाष्टकारूपा) सा नो अस्तु सुमङ्गली । मं २,२,१६ ।

५. स (इन्द्रः) एकयाश्नुवत । यदेकयाश्नुवत तदेकाष्टकाया एकाष्टकात्वम् । जै २,३७२ । [°का- इन्द्र- २१९; २२३ द्र.] ।

**एकाह-**

१. ज्योतिर्वा (ब्रह्म वा [शांआ.]) एकाहः । कौ २५, ३; शांआ १, २ ।

२. प्रतिष्ठा वा एकाहः । ऐ ६, ८; कौ २४, २; २५,११; २७,२; २९, ५; शांआ २, १६ ।

३. शान्तिर्वै प्रतिष्ठैकाहः । ऐआ १, १, ३; २ १ ।

**ऐकाहिक-**

१. एता वै शान्ताः क्लृप्ता होत्रा यदैकाहिकाः । ऐ ८, ४ ।

२. एते वै शान्ते क्लृप्ते प्रतिष्ठिते सवने यदैकाहिके । ऐ ८, १ ।

**एणी-** अहन्- २४ द्र. ।

**ऐणेय-** विष्फुलिङ्गाभ्य एवाजाश्चैणेयाश्चासृज्यन्त । जै ३, २६३ ।

**एतदु-** एतदुर्वै नामाऽऽसुर आसीत्, स एतर्हि यज्ञस्याशिषमवृङ्क्त । तैसं २,६, ९, ४ ।

**एतश-**

१. एतशेन त्वा सूर्यो देवतां गमयतु । तैसं १, ६, ४,३; काठ ५, ३ ।

२. सजूः सूर ( °रा [मै.] ) एतशेन ( + इति सूर्यमेव प्रीणाति [मै ३, ४,४] ) । मै २, १२, ३; ३, ४, ४; काठ २२, ५ ।

**ऐतश->°श-प्रलाप-** आयुर्वा ऐतशप्रलापः । ऐ ६, ३३ ।

**एतीषादीय** (सामन्)- त (देवाः) उ स्वर्गं लोकं गत्वाब्रुवन्न् आत इव बत स्वर्गे लोके सदामेति । यदब्रुवन्नेति वै साद इति तदेतीषादीयस्यैतीषादीयत्वम् । जै ३,७८ ।

**एधस्-** एधोऽस्येधिषीमहि । मै १, १०, १३; काठ ४,१३ ।

**एनस्-**

१. ते (देवाः) ऽतिमृजाना आयन्, सूर्याभ्युदिते तेऽमृजत, सूर्याभ्युदितस्सूर्याभिनिम्रुक्ते, सूर्याभिनिम्रुक्तः कुनखिनि, कुनखी श्यावदति, श्यावदन् परिवित्ते, परिवित्तः परिविविदाने, परिविविदानो ऽग्रेदिधिषौ, अग्रेदिधिषुर्दिधिषूपतौ, दिधिषूपतिर्वीरहणि, वीरहा ब्रह्महणि, ब्रह्महा भ्रूणहनि, भ्रूणहनमेनो नात्येति । काठ ३१, ७; क ४७, ७ (तु. मै ४,१,९; तै ३, २, ८,११;१२ )।

२. निरुक्तं वाऽ एनः कनीयो भवति सत्य ँ हि भवति । माश २, ५, २, २० ।

३. पराचैः कृतं चिदेनः प्रमुमुग्ध्यस्मत् ( °स्मात् [काठ.] ) । काठ ४, १३; क ३, ११ ।

४. पूर्तं पवित्रेणेवाज्यमापश्शुन्धन्तु मैनसः । काठ ३८, ५ ।

५. यच्चिद्धि ते पुरुषत्रा यविष्ठाचित्तिभिश्चकृमा कच्चिदागः । कृधी ष्वस्माँ अदितेरनागान् व्येना ँसि शिश्रथो विष्वगग्ने । काठ २, १५ ।

६. यद् ग्रामे यदरण्ये यत् सभायां यदिन्द्रिये । यच्छूद्रे यदर्य एनश्चकृमा वयम् । यदेकस्याधि धर्मणि तस्यावयजनमसि स्वाहा । तैसं १, ८, ३, १-२ ।

**एनस्विन्-** आत्रेयी- १ द्र. ।

**एम-** अर्थ- द्र. ।

**एव-** अयं वै (पृथिवी-) लोक एवश्छन्दः । माश ८, ५, २, ३ ।

**एव-या->°या-मरुत्-**

१. प्रतिष्ठा वा एवयामरुत् ( एवयामरुदाख्यर्षिणा दृष्टं सूक्तम् ) । ऐ ६,३०; गो २,६,८;९ ।

२. यद्येवयामरुतं ( सूक्तविशेषम् [अन्तरियात्] ) प्रतिष्ठाया एनं ( यजमानम् ) च्यावयेद्दैव्यै च मानुष्यै च । ऐ ५, १५ ।

**एष्टि-** ऋक्सामानि वाऽएष्टय ऋक्सामैर्ह्याशासतऽ इति नोऽस्त्वित्थं नोऽस्त्विवति । माश ९,४, १,१२ ।

# ऐ

**ऐकाहिक-** एकाह- द्र. ।

**ऐतश-, °श-प्रलाप-** एतश- द्र. ।

**ऐड,डी-** इडा- द्र. । **ऐणेय-** एणी- द्र. ।

**ऐतिह्य-**इतिह- द्र. । **ऐन्द्र-** इन्द्र- द्र. ।

**ऐन्द्रवायव-**, °यवाग्र- इन्द्रवायु- द्र.।

**ऐन्द्राग्न-,°ग्नी-** इन्द्राग्नि- द्र.।

**ऐन्द्राबार्हस्पत्य-** इन्द्राबृहस्पति- द्र.।

**ऐन्द्रावरुण-** इन्द्रावरुण- द्र.।

**ऐन्द्रासौर-** इन्द्रासूर्य- द्र.।

**ऐल-** इला- द्र.।

**ऐन्द्रवारुण-** इन्द्रवरुण- द्र.।

**ऐन्द्रापौष्ण-** इन्द्रापूषन्- द्र.।

**ऐन्द्रामारुत-** इन्द्रामरुत्- द्र.।

**ऐन्द्रावैष्णव-** इन्द्राविष्णु- द्र.।

**ऐन्द्री-** इन्द्र- द्र.। **ऐर-** इरा- द्र.।

**ऐशान,नी-** ईशान- द्र.।

**ऐशिर-** ऐशिरं भवति प्रजातिर्वा ऐशिराणि प्रजायते बहुर्भवत्यैशिरेण (साम्ना) तुष्टुवानः। तां १४, ११,२०।

# ओ

**ओकस्-**

१. अयं वै (पृथिवी-) लोकः पुरुषस्यौकः। जै १,२१४।

२. गृहा वा ओकः। ऐ ८,२६।

३. प्राणा ह खलु वा ओकः। जै १, २१४।

**ओकोनिधन** (सामन्-)- एतत्कामसनि साम···। यदु वीतहव्य आश्रायसोऽपश्यत् तस्मादोकोनिधनं वैतहव्यमित्याख्यायते। जै १,२१४।

**ओजस्-**

१. अथ यदोजस्त्रिणव इति मरुतो हि सः। जै ३,३०९।

२. अदित्या भागोऽसि, पूष्ण आधिपत्यमोजः स्पृतं, त्रिणवः स्तोमः। मै २,८,५।

३. अपां य ऊर्मौ रसस्तेनाहमिमम्···ओजसे क्षत्रायाभिषिञ्चामि। काठ ३६,१५।

४. ओज इति पितॄन् (असृजत)। तैसं ५,३,६,१।

५. ओजः क्षत्रम् (+वीर्यं राजन्यः [ऐ.])। तैसं ५,३,४,२; ऐ ८,२;३;४।

६. ओजः (नो वै [मै.]) पञ्चदशः (स्तोमः)। तैसं ५,३,३,२;४,२; मै ३,२,१०; काठ २१,१।

७. ओजः सहः सह ओजः। कौ ३,५।

८. ओजसा पितृभ्यः पितॄन् जिन्व। मै २,८,८।

९. ओजस्त्रिणव इति पश्चादिमे वै लोकास्त्रिणवः। काठ २०,१३ (तु. तैसं ४,३,८,१; मै २,८,४)।

१०. ओजो ग्रीवाभिः (प्रीणामि)। तैसं ५,७,१८,१; काठ ५३,८।

११. ओजो मरुतः। मै ४,७,८।

१२. ओजो वा इन्द्र ओजो विष्णुरोजः पञ्चदश (स्तोमः) ओज एवोत्तराद्धाति (धत्ते [तैसं])। तैसं ५,३,४,२; काठ २१,१।

१३. ओजो (+वै [मै.]; वा इन्द्रियं [ऐ.]) वीर्यं त्रिष्टुप्। मै २,४,४; काठ ११,३; ऐ १,५; २८; जै १,९३।

१४. ओजो वै भान्तः [षोडशः (स्तोमः [तैसं ५,३,५,१])]। तैसं ५,३,३,२;५,१।

१५. ओजो वै माध्यन्दिन९सवनम्। मै ४,७,६।

१६. ओजो वै वीर्यं संवत्सरः। काठ १०,७; काठसंक १२१:२।

१७. ओजोऽसि पितृभ्यस्त्वा पितॄञ्जिन्व । तैसं ४,४,१,२; काठ १७,७।
१८. क्षत्रमोजो मे पिन्वस्व । काठ ५,२ ।
१९. ततोऽस्मिन् (इन्द्रे) एतदोज आस । माश ४,५,४,४।
२०. तिसृधन्वं राजन्याय (ददाति), ओजस्तेन परिक्रीणाति । काठ ३७, १ ।
२१. त्रिणवेनैव मरुत आयन् । ओजो वै वीर्यं मरुतः । ओजो वीर्यं त्रिणवः । जै २,२०९ ।
२२. धर्त्रमसि दिवं दृꣳहौजो देहि बलं देहि । काठ १,७; क १, ७।
२३. पञ्चदशेन (स्तोमेन), ओजसा वीर्येण···(ज्योतिरदधुः) । जै १,६६ ।
२४. बृहद्रथन्तरयोस्त्वा स्तोमेनेत्याहौज एवास्मिन् (आमयाविनि) एतेन दधाति । तैसं २,३,११,४ ।
२५. मरुतामोजसा (त्वाभिषिञ्चामि) । तैसं १,८,१४,२।
२६. मरुतामोजसे स्वाहा । काठ १५,८ ।
२७. येनैवौजसेमाः प्रजा वरुणोऽगृह्णात्तेनैव तदोजसा वरुणोऽनु समसर्पत् । माश ५,४,५,१२ ।
२८. वज्रो वाऽओजः । माश ८,४,१,२० ।
२९. वर्षाभिर्ऋतुनादित्याः स्तोमे सप्तदशे स्तुतम् । वैरूपेण विशोजसा । मै ३, ११, १२ ।
३०. षोडशः स्तोम (°शी स्तोमा [मै.]) ओजो द्रविणम् । तैसं ४,३,१२,१; मै २, ८, ७; काठ १७, ६ ॥ [°जस्- अग्नि- २७३; ४६२; अश्वत्थ- १०; इन्द्र- ६५;७०;७२; ९४; ९५; १०८; २४०; इन्द्राग्नि- ३२; ३४; उक्थ्य- ४; उत्तरतस् ४; उत्तरात् ७; ऊरु- २ द्र.] ।

**ओजस्-त्रिणव-** संवत्सरो वा ओजस्त्रिणवस्तस्य चतुर्विꣳशतिरर्धमासा द्वे अहोरात्रे संवत्सर एवौजस्त्रिणवस्तद्यत्तमाहौज इति संवत्सरो हि सर्वेषां भूतानामोजस्वितमः । माश ८, ४,१,२० ।

**ओजस्-वत्-** ग्रीष्मस्याहं देवयज्ययौजस्वाँस्तेजस्वान् भूयासम् । काठ ४, १४॥ [°स्वत्- इन्द्राग्नि- २७ द्र.] ।

**ओजस्वती-** उत्तरात् १६ द्र. ।

**ओजस्विन्->ओजस्वि-तर-** उत्तर- ४ द्र. ।

**ओजस्विनी-** इन्द्र- २३९ द्र. ।

**ओजो-भृत्-** इन्द्राग्नि- २० द्र. ।

**ओद(त्>)ती-** आपो वा ओदत्यो या दिव्यास्ता हीदं सर्वमुन्दन्त्यापो वा ओदत्यो या मुख्यास्ता हीदं सर्वमन्नाद्यमुन्दन्ति । ऐआ १,३,५ ।

**ओदन-**

१. ओदनेनान्नानि (अन्वाभवत्) । काठ ३५,१५ ।
२. ताभ्यो (प्रजाभ्यः) ऽवर्षत् । तत ओदनोऽजायत । तमश्नित्वोदानन् स उदनोऽभवत् । तदुदनस्योदनत्वम् । उदनो ह वै नामैष तमोदन इति परोक्षमाचक्षते । जै ३, २४६ ।
३. परमेष्ठी वा एषः । यदोदनः । तै १,७,१०,६ ।
४. प्रजापतिर्वाऽओदनः । तै ३,८,२,३;९,१८,२; माश १३,३,६,७ ।

५. ब्रह्मण ओदनम् (दद्यात्)। तैआ ३, १०,३।

६. रेतो वा ओदनः। तै ३,८,२,४; माश १३,१, १,४।

ओदन-पचन-

१. इयम् (पृथिवी) ओदनपचनः (अन्वाहार्यपचनः = दक्षिणाग्निः)। काठ ८, ६; क ७, २।

२. पितॄणामोदनपचनः। मै १,४,१०।

३. वह्निर्वै नामौदनपचनः। काठ ८,७; क ७,४।

ओम्

१. अथैकस्यैवाऽक्षरस्य रसं (प्रजापतिः) नाऽशक्नोदादातुम्। ओमित्येतस्यैव। सेयं वागभवत्। ओमेव नामैषा। तस्य उ प्राण एव रसः। जैउ १,१,१,६;७।

२. असावादित्य एतदक्षरम् (ओमिति)। तदेतत् त्रयस्य देवस्यापीळितमक्षरम्। स यदोमित्यादत्तेऽमुमेवैतदादित्यं मुख आधत्ते। स यथा मधुना लाजान् प्रयुयादेवमेवैतेनाक्षरेण सामत्रसं दधाति। जै १,३२६।

३. एतद् (ओमिति) एवाक्षरं त्रयी विद्या। जैउ १,४,४,१०।

४. एतद्ध वा (ओमिति) अक्षरं वेदानां त्रिविष्टपम्। जैउ ३,४,५,७।

५. एतद्ध (ओमिति) वा इदं सर्वमक्षरम्। जै २, १०।

६. एवमेवैवं विद्वान् ओमित्येतदेवाक्षरं समारुह्य यददो ऽमृतं तपति तत्प्रपद्य ततो मृत्युमा पाप्मना व्यावर्तते। जैउ १, ४,४, ११।

७. एष (ओमिति) उ ह वाव सरसः। जैउ १, २, १, ५; ११।

८. ओमिति ब्रह्म। ओमितीद ँ सर्वम्। ओमित्येतदनुकृति ह स्म वा अप्यो श्रावयेत्याश्रावयन्ति। ओमिति सामानि गायन्ति। ओ ँ शोमिति शस्त्राणि श ँ सन्ति। ओमित्यध्वर्युः प्रतिगरं प्रतिगृणाति। ओमिति ब्रह्मा प्रसौति। ओमित्यग्निहोत्रमनुजानाति। ओमिति ब्राह्मणः प्रवक्ष्यन्नाह ब्रह्मोपाप्नवानीति। ब्रह्मैवोपाप्नोति। तैआ ७,८, १; तैउ १, ८, १।

९. ओमिति वै साम…। ओमिति मनः। …ओमितीन्द्रः। जैउ १, २, २, २।

१०. ओमिति वै स्वर्गो लोकः। ऐ ५, ३२।

११. ओमित्यथर्वणां शुक्रम्। गो १, २, २४।

१२. ओमित्यृचः प्रतिगर एवं तथेति गाथाया ओमिति वै दैवं तथेति मानुषम्। ऐ ७, १८।

१३. ओमित्येव स्वर्गं लोकमारोहति। जै १, ३२३।

१४. ओं प्रपद्ये (ओङ्कारेण परमात्मोच्यते)। तैआ ४, ४२, २।

१५. तदिदम् (ओमिति) इमान् (लोकान्) अतिविध्य दशधा क्षरति शतधा सहस्रधाऽयुतधा प्रयुतधा (नियुतधा) ऽर्बुदधा न्यर्बुदधा निखर्वधा पद्मक्षितिर्व्योमान्तः। जैउ १,२,३,४।

१६. तस्मादो३मित्येव प्रतिगृणीयात्तद्धि सत्यं तद्देवा विदुः। माश ४, ३, २, १३।

१७. तानि (भूर्भुवः स्वः) शुक्राण्यभ्यतपत्तेभ्योऽभितप्तेभ्यस्त्रयो वर्णा अजायन्ताकार उकारो मकार इति तानेकधा समभरत्तदेतदो३मिति। ऐ ५, ३२।

१८. तासामभिपीडितानां (व्याहृतीनाम्) रसः प्राणेदत्। तदेतदक्षरमभवदोमिति यदेतद्। जैउ १, ७, १,७।

१९. ते देवा एतेन सत्येनाभिगीय ओमिति एतैर्यैधाजयस्य निधनैरसुरान्पाप्मानं भ्रातृव्यानघ्नन्। जै १, ३२३।

२०. दक्षिणोत्तरौ पाणी पादौ कृत्वा सपवित्रावोमिति प्रतिपद्यत एतद्वै यजुस्त्रयीं विद्यां प्रत्येषा वागेतत्परममक्षरम्। तैआ २, ११, ४।

२१. परागवा एतद्रिक्तमक्षरं यदेतदो३मिति, तद्यत्किञ्चोमित्याहात्रैवास्मै तद्रिच्यते······ तस्मात्काल एव दद्यात्काले न दद्यात्तत्सत्यानृते मिथुनीकरोति। ऐआ २, ३, ६।

२२. यथा सूच्या पलाशानि संतृण्णानि स्युरेवमेतेन (ओमिति) अक्षरेणेमे लोकास्सन्तृण्णाः। दशधा वा एतदतिविध्येमान् (तदिदमिमानतिविध्य दशधा [जैउ.]) क्षरति। जै २, १०; जैउ १, २, ३, ३; ४।

२३. यदेतदोमित्यादत्ते। असौ वा आदित्य एतदक्षरम्। जै १, ३२२ (तु. जै १,३३६)।

२४. यद्वै नेत्यृच्योमिति तत्। माश १, ४, १, ३०।

२५. स ओ३मिति प्रतिगृणाति, तद्धि सत्यं, तद्देवा विदुः। काश ५, ३,३,८।

२६. स (ब्रह्मा) ओमित्येतदक्षरमपश्यद् द्विवर्णञ्चतुर्मात्रं सर्वव्यापि सर्वविभ्वयातयाम ब्रह्म। गो १, १, १६।

२७. हन्तेति चन्द्रमा ओमित्यादित्यः। जैउ ३, २, १, २॥ [ओम् अनृत- १८; अप्- १६५; आदित्य- १६८;१६६; ऋच्- २७; ऋत- १४ द्र.]।

ओङ्कार-

१. को धातुर् (ओङ्कारस्य) इत्याप्धातुरवतिमप्येके रूपसामान्यादर्थसामान्यं नेदीयस्तस्मादापे-रोङ्कारः सर्वमाप्नोतीत्यर्थः। गो १, १, २६।

२. को विकारी च्यवते। प्रसारणमाप्नोतेराकारपकारौ विकार्यावादित ओङ्कारो विक्रियते। द्वितीयो मकार एवं द्विवर्ण एकाक्षर ओमित्योङ्कारो निर्वृत्तः। गो १, १, २६।

३. त ओङ्कारं ब्रह्मणः पुत्रं ज्येष्ठं ददृशुः (देवाः)। गो १, १, २३।

४. तदेतदक्षरं (ओङ्कारम्) ब्राह्मणो यं काममिच्छेत् त्रिरात्रोपोषितः प्राङ्मुखो वाग्यतो बर्हिष्युपविश्य सहस्रकृत्व आवर्त्तयेत् सिद्ध्यन्त्यस्यार्थाः सर्वकर्माणि च। गो १, १, २२।

५. रस ओङ्कारः। जै २,७८।

६. लातव्यो गोत्रो ब्रह्मणः पुत्रो गायत्रं छन्दः, शुक्लो वर्णः, पुंसो वत्सो रुद्रो देवता ओङ्कारो वेदानाम्। गो १, १,२५॥ [°र- इन्द्र- ३४८ द्र.]।

ओमन्- अन्न- १५ द्र.।

ओमन्-वत्-> °न्वती- अन्नवती- १ द्र.।

ओष-> ओष-वत्- > ओषिष्ठ- > ओषिष्ठ-हन्- ओषिष्ठ-हन २ शिङ्गीनिकोश्याभ्याम् [°कोशा° ([तैआ.] प्रीणामि)]। तैसं १, ४, ३६, १; तैआ ३, २१, १।

ओषधि,धी-

१. अग्रमोषधीनां बर्हिः। तैसं ६, ३, ९, ५।

२. अपा ऽ वा एष ओषधीना ऽ रसः (+यन्मधु [काठ.]; यद्दर्भाः [तैआ.] )। मै २, ४,८; काठ ११,१०; तैआ २,११,१।

३. अपामोषधयः, ओषधीनां पुष्पाणि, पुष्पाणां फलानि (रसः)। माश १४,९, ४, १।

४. अपोऽग्निमं लोकमागच्छति (चन्द्रमाः)। स इमा अप ओषधीः प्रविशति। जै २,३ (तु. माश १, ६, ४, ५)।

५. अवपतन्तीरवदन् दिव ओषधयः परि। यं जीवमश्नवामहै (°महे [मै.]) न स रिष्याति पूरुषः। तैसं ४, २, ६, ५; मै २,७,१३ (तु. काठ १६,१३)।

६. अश्वत्थे वो (ओषधीनाम्) निवेशनं पर्णे वो वसतिः कृता। गोभाजा इत्किलासथ यत्सनवाथ पूरुषम्। यदोषधयः संगच्छन्ते राजानः समिता इव। विप्रः स उच्यते कवी रक्षोहामीवचातनः। मै २, ७, १३।

७. असौ (द्यौः) रेतः सिञ्चति, तदस्यां (पृथिव्याम्) प्रति तिष्ठति, तत् प्र जायते, ता ओषधयो वीरुधो भवन्ति ता अग्निरत्ति। तैसं ५, ५,४, १-२।

८. इन्द्रस्य वृत्रं जघ्नुष इन्द्रियं वीर्यं पृथिवीमनुव्याच्र्छत् तदोषधयो वीरुधो ऽभवन्। तैसं २, ५, ३, २।

९. इय ऽ (पृथिवी) वाव प्रथमा चितिरोषधयः (वनस्पतयः [तैसं.]) पुरीषम्। तैसं ५, ६, १०, २; मै ३,३, ३; काठ २२, ४।

१०. उभय्यो (ओषधयः) ऽस्मै स्वदिताः पच्यन्ते ऽकृष्टपच्याश्च कृष्टपच्याश्च। तां ६,९,९।

११. ऊर्ध्वा ओषधय उत्पद्यन्ते। काठ २३, ४।

१२. एतद्धैतासा ऽ (ओषधीनाम्) समृद्ध ऽ रूपं यत्पुष्पवत्यः सुपिप्पलाः। माश ६,४, ४,१७।

१३. एष खलु वा ओषधीनां तेजो यद् यवः। मै ३, ९,३।

१४. एष ह वै सर्वासामोषधीनां रसो यत्पयः। कौ २, १।

१५. ओषधय आयुष्मतीस्ता अद्भिरायुष्मतीः। काठ ११, ७।

१६. ओषधय इव रूपं भूयासम्। ऐआ ५, १, १।

१७. ओषधय उ हापा ऽ रसः। माश ३, ६, १, ७।

१८. ओषधयः खलु वै वाजः। तै १, ३, ७, १।

१९. ओषधयः (+वै [मै १, १०,७ काठ.]) पशवः। मै २,५,१; काठ २५, २; क ३८, ५।

२०. ओषधयः (+वै [मै.]) पावकाः (छदी ऽ षि [क.])। मै १, ८, ९; काठ ६, ६; क ४०,३।

२१. ओषधयः प्रतिमोदध्वमेनं पुष्पवतीः सुपिप्पलाः। मै २, ७,५।

२२. ओषधयः प्राचुच्यवुर्यत् किं च तनुवा ऽरपः (°र्यत् किञ्चित् तन्वो रपः [काठ.])। तैसं ४, २, ६, ३; काठ १६, १३।

२३. ओषधयः शीर्षन् फलं गृह्णन्ति। मै ३, १, ६; ६, ८।

२४. ओषधयः संवदन्ते सोमेन सह राज्ञा। यस्मै करोति ब्राह्मणस्त ऽ राजन् पारयामसि। तैसं ४, २, ६, ६।

२५. ओषधयः सोमः (सोमस्य योनिः [मै ३, ७, ४])। मै २, ५,५; ३,७,४।

२६. ओषधयो ऽनभ्यक्ता रेभन्ति ( रेभन्ते [काठ., क.] )। तैसं ७, १, १, ३; काठ २६, ५; क ४१,३; जै १,६७।
२७. ओषधयो बर्हिः (लोमानि [तैसं.]) । तैसं ७,५,२५,१; मै १,८,७; ऐ ५, २८; तै २,१,५,१; माश १, ३, ३, ९;८,२,११; ९,२,२९ ।
२८. ओषधयो बर्हिषा (सहागच्छन्तु) । तैआ ३,८,१ ।
२९. ओषधयो मधुमतीः । मै ४,१,९; काठ ३?, ७; तै ३,२,८,२ ।
३०. ओषधयो मनुष्याणामन्नम् । तैसं ३,३,६, ३ ।
३१. ओषधयो मूलतो जायन्तेऽग्रतः पच्यन्ते । जै २,३७६; ३,३०७ ।
३२. ओषधयो वै देवानां पत्नीर्देवीर्विश्वदेव्यवतीः । मै ३,१, ८ (तु. माश ६, ५,४,४) ।
३३. ओषधयो वै पशुपतिस्तस्माद्यदा पशव ओषधीर्लभन्तेऽथ पतीयन्ति । माश ६,१,३,१२ ।
३४. ओषधयो वै मुदः । ओषधिभिर्हीदँ सर्वं मोदते । माश ९,४,१,७ ।
३५. ओषधयो वै सोमस्य विशः । तैसं ३,१, ८,२ ।
३६. ओषधीः प्रतितिष्ठन्तीः पशवोऽनु प्रति तिष्ठन्ति । तैसं ५,१,३,१ ।
३७. ओषधीनां वाऽएष परमो रसो यन्मधु । माश ११, ५,४, १८ ।
३८. ओषधीनां (°धिभ्यो [काठ.]) वेहतमालभेत प्रजाकामः । तैसं २,१,५,३; काठ १३,४ ।
३९. ओषधीनां पञ्चमी (प्रघातः [काठ २३,१]) । तैसं ५,७,२१,१; काठ २३,१; ५३,११ ।
४०. ओषधीरन्तगता दहति, तास् (ओषधयः) ततो भूयसीः प्रजायन्ते । तैसं १,५,९,१ ।
४१. ओषधीरिति मातरस्तद्वो देवीरुप ब्रुवे । रपाँसि विघ्नतीरित रपश् (रक्षश् [काठ., क.]) चातयमानाः । तैसं ४,२,६,१-२; मै २,७,१३; काठ १६,१३; क २५,४ ।
४२. ओषधीरेव देवेभ्यो रथन्तरेणादुह । मै ४,२,२ ।
४३. ओषधीर्वा इमा रुद्रा विषेणाञ्जँस्ताः पशवो नालिशन्त···उत बह्वीराहुतयो हूयन्ते, ता अग्निनान्वत्राकरोत्, ता अस्वदयत्, ताः पुनर्णवा अजायन्तैतर्हि खलु वा अग्निहोत्रिणे दर्शपूर्णमासिने सर्वा ओषधयः स्वदन्ते । मै १, ८, ४ ।
४४. ओषधीष्वेव पशून् प्रतिष्ठापयति । तैसं ३,५,२,४ ।
४५. ओषधे त्रायस्वैनम् । तैसं १,२,१,१; काठ २,१; क १, १३; २, ९ ।
४६. कृष्टे ह्याशिष्ठमोषधयः प्रतितिष्ठन्ति । क ३१, ५ ।
४७. कृष्टे ह्योषधयः (+क्षेपिष्ठं [मै.] ) प्रतितिष्ठन्ति । तैसं ५,२, ५,५; मै ३,२,५ ।
४८. जगत्य ओषधयः । माश १,२, २,२ ।
४९. तस्माच्छरदमोषधयोऽभिसंपच्यन्ते । तां २१, १५,३ ।
५०. तस्मादोषधयः केवल्यः खादिता न धिन्वन्त्योषधय उ ह्यापाँ रसस्तस्मादापः पीताः केवल्यो न धिन्वन्ति यदैवोभय्यः सँसृष्टा भवन्त्यथैव धिन्वन्ति । माश ३,६,१,७ ।
५१. तस्माद् गिरा ओषधयः शीर्षाहार्यं फलं पच्यन्ते । मै ३,७,८ ।
५२. तस्माद्दक्षिणतोऽग्र ओषधयः पच्यमाना आयन्त्याग्नेय्यो ह्योषधयः । ऐ १, ७ ।
५३. तां ( आहुतिं प्रजापतिः ) न्यौक्षद् (अग्नावत्यजत्) ओषं धयेति तत ओषधयः समभवंस्तस्मादोषधयो नाम । माश २,२,४,५ ।
५४. तासां (अपाम् ) यद् यज्ञियं मेध्यमासीत्तदुदक्रामत्, ता इमा ओषधयोऽभवँस्तासाँ वा

एतत्तेजो यद्गर्भा एता वै शुष्का आपः। मै ३,६,३।

५५. तास् (ओषधयः) ते यक्ष्मं विबाधन्ताम्। तैसं ४,२,६,४।

५६. दक्षिणतो निमार्ष्टयोषधीश्च तेन पितृँश्च प्रीणाति। मै १,८,५।

५७. देवानां रेत ओषधयः ओषधीनां रेतोऽन्नम्। ऐआ २, १, ३।

५८. दैवीर्वा एता विशो यदोषधयः। काठ २५, १०; क ४१, ४।

५९. द्वय्यो वा ओषधयः पुष्पेभ्यो ऽन्याः फलं गृह्णन्ति। मूलेभ्यो ऽन्याः। तै ३, ८, १७, ४।

६०. पयो (पशवो [मै.]) वा ओषधयः। मै ३, ८, ४; काठ ३५, १८; क ४८, १६; तै ३, ७, १, ५; ६; ७; ८; (तु. काठ २६,३)।

६१. पशवो वै वेद ओषधयो ह्येषः। मै १, ४, ८।

६२. पृथिवी शान्तिः, सौषधीभिश्शान्तिः। मै ४, ९, २७।

६३. पृथिव्या ओषधयः। ओषधीभ्यो ऽन्नम्। तैआ ८, १, १; तैउ २, १।

६४. प्रजापतिर्वा ओषधीः परुश्शो वेद। मै ४, १, २।

६५. प्रजापतेर्विस्रस्तस्य यानि लोमान्यशीयन्त ता इमाऽ ओषधयो ऽभवन्। माश ७,४, २, ११।

६६. फलवतीर्न (फलिन्यो न [तैसं.]) ओषधयः पच्यन्ताम्। तैसं ७, ५, १८, १ मै ३, १२, ६।

६७. भद्राः शिवा यक्ष्मन्नु दो न ओषधीः। काठसंक ६२:८।

६८. यथा जरत्कक्षमग्निनोपदीप्य तमद्भिरुपसिञ्चेत् तस्मिन् कल्याण्य ओषधयो जायेरंस्तासु पशवो रमेरन्। जै २, १३७।

६९. यदहं वाजयन्निमा (यदिमा वाजयन्नहं [मै.]) ओषधीर्हस्त आदधे। आत्मा यक्ष्मस्य नश्यति पुरा जीवगृभो यथा। तैसं ४, २, ६, २; मै २, ७, १३।

७०. यवेनौषधीः (अन्वाभवत्)। काठ ४३, ४।

७१. या ओषधीः सोमराज्ञीः। मं २, ८, ३; ४।

७२. रुद्र ओषधीर्विषेणालिम्पत्, ताः पशवो नालिशन्त। काठ ६, ५।

७३. रेवदस्योषधीभ्यस्त्वौषधीर्जिन्व। तैसं ३, ५, २, ४; ४, ४, १, २; काठ १७, ७; ३७, १७।

७४. रेवदित्योषधीः (असृजत)। तैसं ५, ३, ६, १।

७५. वर्षम् (वृष्टिम्) अन्वोषधय ओषधीरनु पशवः (प्रतितिष्ठन्ति)। मै ३, १, ५।

७६. वर्षवृद्धा वा ओषधयः। तै ३, २, २, ५; ५, १०।

७७. वसन्ते (वसन्ता [काठ.]) पुनराभवन्ति (ओषधयः)। काठ २५, ४; क ३९, १।

७८. वाग्देवत्यं साम वाचो मनो देवता मनसः पशवः पशूनामोषधय ओषधीनामापः। तदेतदद्भ्यो जातं सामाऽप्सु प्रतिष्ठितमिति। जैउ १, १८, ४, १४।

७९. विदेण वै ता९ समामोषधयो ऽक्ता भवन्ति या९ समां महादेवः पशून् हन्ति, यच्छ९ राजन्नोषधीभ्य इत्याहौषधीरेवास्मै स्वदयत्युभय्यो ऽस्मै स्वदिताः पच्यन्ते ऽकृष्टपच्याश्च कृष्टपच्याश्च। तां ६, ९, ९।

८०. विष्णोरध्योषधीरसृजत (प्रजापतिः)। तै २, ३, २, ४।

८१. शरदि ह खलु वै भूयिष्ठा ओषधयः पच्यन्ते। जैउ १, १२, १, ५।

८२. शिशिर ओषधयः पराभवन्ति। काठ २५, ४; क ३९, १।

१०८. शीर्यत ओषधयः फलं गृह्णन्ति । तैसं ६, ३, ४, ३ ।
१०९. सप्त (+वै [काठ., क.]) ग्राम्या ओषधयः, सप्तारण्याः । तैसं ५, २, ५, ५; ४, ९, १-२; काठ २०, ३; क ३१, ५; तै १, ३, ८, १ ।
११०. समोषधयो रसेन (संपृच्यन्ताम्) । तैसं १, १, ८, १ ।
१११. साम्राज्यं वा एतदोषधीनां यन्महाव्रीहयः । ऐ ८,१६ ।
११२. सुपिप्पला ओषधयः सन्तु । तैसं ७,५,२०,१ ।
११३. सुपिप्पलाभ्यस्त्वौषधीभ्यः···देवो वनस्पतिरूर्ध्वो मा पाहि । तैसं १, २, २, ३ ।
११४. सूर्यस्य च त्वौषधीनां च वर्चसा जुहोमि । मै ४, ७, ३ ।
११५. सैनान्यं वा एतदोषधीनां यद्यवाः । ऐ ८, १६ ।
११६. सोमं वै राजानं यत्सुपर्ण आहरन् समभिनत् तस्य या विप्रुषो अपतंस्ता एवेमा ओषधयोऽभवन् । सर्वा उ ह वै सौम्या ओषधयः । स एवास्य (सोमस्य) संन्यङ्गः । जै १, ३५५ ।
११७. सोम आयुष्मान् स ओषधीभिः (+आयुष्मान् [काठ.]) । तैसं २, ३,१०,३-४; काठ ११,७ ।
११८. सोमो वै राजौषधीनाम् । कौ ४, १२; तै ३, ९,१७,१ (तु. तैसं ३, ४,५,१; मै ४, ३, २; गो २,१,१७) ।
११९. सोऽयं सर्वो लोक ओषधिभिस्संछन्नोऽपि गिरयः । जै ३, २२६ ।
१२०. सौमीरतः प्राचीनमोषधयो, रौद्रीः प्रतीचीनं, शुष्यन्ति प्राचीनं, शुष्यन्ति प्रतीचीनं प्रत्यक्षम् । काठ ११, ५ (तु. मै २, १,५;१;४,८; ४,३,२;४,७) ।
१२१. स्वाशिरो वै नामाप्सरस इमा एवौषधयः । जै ३, २२६ ॥ [°धि- अग्नि- २६२;२९९; ४६३; ७४५; अप्- ९४; १२५; १४०; २०८; २११; २६३; असुर- २३; असुरी-; आग्नेय- ३२; उग्र- २; ऊर्ज्- ६; १८; ऋताषाह्- द्र.] ।

**ओषधि-लोक-** ओषधिलोको वै पितरः । माश १३, ८, १, २० ।

**ओषधि-वनस्पति-**

१. ओषधिवनस्पतयो मे लोमसु श्रिताः । तै ३, १०, ८, ७ ।
२. ओषधिवनस्पतयो वै लोमानि । जै २, ५४ ।
३. रसो वा एष ओषधिवनस्पतिषु यन्मधु । ऐ ८, २० ।
४. लोमभ्य ओषधिवनस्पतयः (निरभिद्यन्त) । ऐआ २, ४,१; ऐउ १,१,४ ॥ [°ति- अन्न- ११७ द्र. ] ।

**औषध-** औषधो हि सोमो राजा ऐ ३,४० ।

**ओष्ठ-** उपयाम- १ द्र. ।

# औ

**औदल-** उदल- द्र. । **औदुम्बर-, °री-** उदुम्बर- द्र. । **औदृग्रभण-** उदृग्रभण- द्र. ।
**औपासन-** उपासन- द्र. । **और्णायव-** ऊर्णायु- द्र. । **औशन-, °काव-** उशनस्- द्र.
**औषध-** ओषधि,धी- द्र. ।
**औष्णिह,ही-** उष्णिह्- द्र. ।

# क

क–

१. अथो सुखस्य वा (°खस्यवं ⌊कौ.⌋) एतन्नामधेयङ्कमिति । कौ ५, ४; गो २, १,२२ ।

२. कं वै प्रजापतिः प्रजाभ्यः कायेनैककपालेन पुरोडाशेनाकुरुत । माश २, ५, २, १३ ।

३. को नामासीति प्रजापतिर्वै को नाम । काठसंक १३८ : ५ (तु. काठसंक ४७ : २) ।

४. को वै प्रजापतिः । काठसंक ४८ : १; गो २, ६, ३; शांआ २, १ (तु. जै १, १८; माश ६, २,२,५) ।

५. प्रजापतिर्वै कः । तैसं १,६,८,५; ७,६,६; मै १,१०,१०; ऐ २, ३८; ६, २१; कौ ५, ४; २४,४;५;६; गो २,१,२२; जै १, २९०; ३२७; २, २३१; तां ७,८,३; तै २, २, ५, ५; माश ६, ४, ३, ४; ७,३,१,२०; जैउ ३, १,२,१० (तु. काठ ३६,५) ।

६. प्राणो वाव कः । जैउ ४, ११, २, ४ ।

७. यद्वै तद्वरुणगृहीताभ्यः (प्रजाभ्यः) कमभवत् तस्मात् कायः । मै १,१०,१० ।

८. स प्रजापतिरब्रवीद्रथ कोऽहमिति यदेवैतदवोच इत्यब्रवीत्ततो वै को नाम प्रजापतिरभवत्को वै नाम प्रजापतिः । ऐ ३, २१ ।

९. सुखं वै कम् । गो २, ६, ३ ॥ [क– अन्न– १९ द्र.] ।

क-व-(त् > )ती– यत् कवतीषु स्तुवन्ति तेन प्राजापत्यम् । जै १, १३८; १४२ ।

काय–

१. काय एककपालः (+पुरोडाशो भवति ⌊माश.⌋) । मै १,१०,१; काठ ९,४; ४५, १०; क ८, ७; माश २, ५, २, १३ ।

२. कायमेककपालं (पुरोडाशं निर्वपति) । तैसं १,८,३,१; मै ३, १५, १० ।

३. कायास्तूपराः (पशवः) । मै ३, १३, १३ ॥ [°य– क– ७द्र.] ।

ककुद्–

१. ऋषभो वयः ककुच्छन्दः । तैसं ४, ३, ५, १ ।

२. त्रिष्टुभो वा एतद्वीर्यं यत्ककुत् । तैसं २, ४, ११, १ ।

ककुद्-रूपि(न् > )णी– ककुप् ककुद्रूपिणीत्यौपमिकम् । दै ३, ५ ।

ककुभ्–

१. अग्निर्वा अस्य लोकस्य ककुप् । जै २,८७ ।

२. ककुप् च कुब्जश्च कुजतेर्वोब्जतेर्वा । दै ३, ६ ।

३. ककुभो राजपुत्रः प्राश्नाति । काठ १४, ८ ।

४. कीकसा ककुभः । माश ८, ६, २, १० ।

५. नेष्टारं वृणीते, ककुभं तच्छन्दसां वृणीते । काठ २६, ९; क ४१, ७ ।

६. पुरुषश्छन्दसं ककुप् । जै ३, १९४; २९० ।

७. पुरुषो वै ककुप् । जै १, २२९; २४३; तां ८, १०, ६; १३, ६, ४; १६, ११, ७; १९, ३, ४; २०, ४, ३ ।

८. प्राणो वै ककुप्छन्दः । माश ८, ५, २, ४ ।
९. बृहतीषु ककुप्सु च पक्षौ । जै २, ४७ ।
१०. यन्नेष्टारं ( वृणीते ), ककुभं तद् ( वृणीते ) । मै ३, ९, ८ ।
११. वीर्यं वै ककुप् । मै १, ११, ७; काठ १४, ८ ।
१२. शुक्रश्रीः क्षीरश्रीः ककुहस्सक्तुश्रीः पात्रेषु । काठ ३४,१६ ॥ [ °कुभ्- इन्द्र- ११३; उक्षन्- ३; उष्णिह्- ६; उष्णिक्ककुभ्- २; ऋषभ- ४; ककुद्रूपिणी- द्र. ] ।

काकुभ-

१. काकुभं हि माध्यन्दिनं सवनम् । जै १,१८० ।
२. सीसं काकुभम् ( छन्दः ) । शांआ ११,७ ।

कक्षीवत्-,>काक्षीवत ( सामन्- )-

१. अथ काक्षीवतम् । कक्षीवान् वा अकामयत बहुः प्रजया पशुभिः प्रजायेय, श्रियं राज्यं गच्छेयमिति । स एतत् सामापश्यत् । तेनास्तुत । ततो वै स बहुः प्रजया पशुभिः प्राजायत, श्रियं राज्यमगच्छत् । ते ह वै सहस्रं काक्षीवता आसुः । तैर्ह वै स पुत्रैः श्रियं राज्यं जगाम । जै ३,२२४ ।
२. कक्षीवान्वा एतेनौशिजः प्रजातिं भूमानमगच्छत् प्रजायते बहुर्भवति काक्षीवतेन तुष्टुवानः । तां १४,११,१७ ।

कङ्क- दिशां कङ्कः । मै ३,१४,१२ ।

कङ्क-चित्- कङ्कचितं चिन्वीत यः कामयेत शीर्षण्वानमुष्मिँल्लोके स्यामिति । तैसं ५,४,११,१ ।

कण्ठ- तेदनीमधरकण्ठेनापः शुष्ककण्ठेन (प्रीणामि) । मै ३,१५,२ ।

√कण्डूय यजुषा कण्डूयते ऽयजुषा हि मनुष्या कण्डूयन्ते । काठ २३, ४ ।

कण्व-

१. एतेन वै कण्व इन्द्रस्य सांविद्यमगच्छत् । तां ९,२,६ ।
२. तदेतत् प्रतिष्ठासाम । यदु कण्वो नार्षदोऽपश्यत् तस्मात् काण्वमित्याख्यायते । जै १,२१६ ।
३. स एतत् कण्वस्सामापश्यत् । तेनास्तुत । ततो वा इन्द्रो वृत्रमहन् । जै ३,१८९ ।

कण्व-रथन्तर ( सामन्- )-

१. तेजो वा एतद्रथन्तरस्य यत्कण्वरथन्तरम् । तां १४,३,१६ ।
२. पशवो वै कण्वरथन्तरम् । तां १८,४,९ ।

काण्व- वयमु त्वा तदिदर्था इति काण्वम् (साम) । तां ९,२,५ ।

कद्रू- इयं [+वै ([माश.] पृथिवी)] कद्रूः । तैसं ६,१,६,१; मै ३, ७,३; काठ २३, १०; क ३७, १; माश ३, ६, २, २ ।

कनानक- विद्युतौ कनानकाभ्याम् (प्रीणामि) । तैसं ५,७,१२,१ ( तु. मै ३,१५,१ ; काठ ५३,२) ।

कनीनक- शुष्णो दानवः प्रत्यङ् पतित्वा मनुष्याणामक्षीणि प्रविवेश स एष कनीनकः कुमारक इव परिभासते । माश ३,१,३,११ ।

**कनीनिका**- तस्य ( प्रजापतेः ) या कनीनिका परापतत्, स यवोऽभवत्। मै ४, ६, ३।

**कपाल**- कपालैश्छन्दा ऽ्सि ( भ्रातृव्यस्याप्नोति )। काठ १०,१।

**कपिञ्जल**-

१. अन्छराभिः ( अच्छलाभिः [तैसं.] ) कपिञ्जलान् (प्रीणामि)। तैसं ५,७,१३,१; काठ ५३,३।

२. तस्य ( विश्वरूपस्य त्वाष्ट्रस्य ) यत् सोमप ऽ्शिर आसीत् स कपिञ्जलोऽभवत्। मै २,४,१।

३. वसन्ताय कपिञ्जलानालभते। मै ३, १४, १।

४. वसुभ्यः (वसूनां [काठ.]) कपिञ्जलः। मै ३, १४, १९; काठ ५७, ६।

५. स यत्सोमपानं ( विश्वरूपस्य मुखम् ) आस। ततः कपिञ्जलः समभवत्तस्मात्स बभ्रुक इव बभ्रुरिव हि सोमो राजा। माश १,६,३,३; ५,५,४,४ (तु. तैसं २,५, १,१; जै २, १५४)।

**कपिवन**- एतेन वै कपिवनो भौवायन इष्ट्वा ऽरूक्षतामगच्छत्। अरूक्षो भवति य एवं विद्वानेतेन यजते। तां २०, १३, ४-५।

**कपोत**- मित्रावरुणाभ्यां कपोतान् ( आलभते )। मै ३, १४,४।

**कयाशुभीय**-

१. अगस्त्यस्य कयाशुभीय ऽ्शस्यम्। तां ९, ४,१७।

२. अगस्त्यो वै मरुद्भ्य उक्षणः प्रौक्षत्, तानिन्द्रायालभत, ते ( मरुतः ) वज्रमादायाभ्यपत ऽ्स्तान् वा एतेनाशमयत्। मै २, १, ८।

३. एतद्वै संज्ञानं सन्तनि सूक्तं यत् कयाशुभीयमेतेन ह वा इन्द्रो ऽगस्त्यो मरुतस्ते समजानत…तद्वायुष्यं, तद्यो ऽस्य प्रियः स्यात्कुर्यादेवास्य कयाशुभीयम्। ऐआ १, २, २।

४. कयाशुभीयं शस्त्रं भवति रक्षसामेवापहत्यै। जै १, ३४४।

५. यत् कयाशुभीयं शस्यते शान्त्या एव। तां २१, १४, ६।

**करम्ब,म्भ** ( आज्यसंयुतयवपिष्ट- )-

१. ते देवाः सर्वेभ्य आश्रेपाभ्य आज्ये करम्भं निरवपन्। तान् ( असुरान् ) एताभिरेव देवताभिरुपानयन्। तै ३, १, ४, ७।

२. पूषण्वान् करम्भः। इति पशवो वै पूषा। मै ३, १०, ६।

३. पूषण्वान् करम्भम् ( अत्तु )। काठ २९, १; क ४५, २; ऐ २,२४।

४. पूष्णः करम्भः। तै १, ५, ११, ३; माश ४, २, ५, २२।

५. यः करम्भं ( अत्ति ) निष्पद ऽ्सः ( अत्ति )। काठ ३४, ११।

६. विश्वेषां वा एतद्देवाना ऽ्रूपम् यत्करम्बाः। तै ३,८, १४,४।

**करम्भ-भाग**- तस्मादाहुरदन्तकः पूषा करम्भभाग इति। कौ ६, १३।

**करीर**-

१. कं ( सुखम् ) वै प्रजापतिः प्रजाभ्यः करीरैरकुरुत। माश २, ५,२, ११।

२. करीराणि न स्त्रियै दद्यान्न शूद्रायासोमपीथ इव ह्येषः। काठ ११, १०।

३. करीराणि भवन्ति वृष्ट्या अन्नाद्यस्यावरुद्ध्यै। मै २,४,८।

४. ततो यः प्रथमो रसः प्राक्षरत् तानि करीराण्यभवन् । मै १,१०,१३ (तु काठ ३६,७)।
५. यतीनामद्यमानानाᳪ शीर्षाणि पराऽपतन् ते खर्जूरा अभवन्, तेषाᳪ रस ऊर्ध्वोऽपतत्, तानि करीराण्यभवन्त्सौम्यानि वै करीराणि । तैसं २, ४, ९, २ ।
६. यस्सोमपीथस्स ऊर्ध्वोऽपतत्, तानि करीराणि । काठ ११, १० ।
७. सोमपीथो वा एषोऽस्याः ( पृथिव्याः) उदैवद्, यत् करीराणि, सौम्यानि वै करीराणि, सौमी ह्येवाहुतिरमुतो वृष्टिं च्यावयति, यत् करीराणि भवन्ति । मै १,१०,१२ ( तु. तैसं २,४, ९,२-३; काठ ३६,७; तै १,६,४,५ ) ।

कारी(र>)री (इष्टि-)- यत् कारीर्या याजयन्ति वृष्ट्या अन्नाद्यस्यावरुद्ध्यै । मै २, ४,८ ।

करीष- पुरीष्य इति वै तमाहुर्यः श्रियं गच्छति समानं वै पुरीषं च करीषं च । माश २,१,१,७ ।

कर्कन्धु-
१. तद् यत् (इन्द्रः) प्रथमं निरष्ठीवत् तद् एव कर्कन्ध्व् अभवत्, यद् द्वितीयं तद् बदरम्, यत् तृतीयं तत् कवलम् । तस्माद् एतेषाम् अन्नं चैव रसाः खादकृत्य चतुर्थं निरष्ठीवत् । तद् एवाम्रम् अभवत् । जै २,१५६ ।
२. यत् (इन्द्रः सोमं पीत्वा) तृतीयं ( निरष्ठीवत् ) तत् कर्कन्धु ( अभवत् ) । मै २,४,१; काठ १२,१० ।
३. यत्स्नेहस्तत्कर्कन्धु । माश १२, ७, १, ४ ।

कर्कन्धु-सक्तु- कर्कन्धुसक्तुभिस्सारस्वतम् ( श्रीणाति ) । मै २, ३, ९; काठ १२,१० ।

कर्ण- कर्णाभ्यामश्वकर्णौ ( अजायेताम् ) । जै २, २६७ ।

कर्ण-क- पशवो वै कर्णकाः । माश ९,२,३,४० ।

कर्ण-श्रवस्- कर्णश्रवा वा एतदाङ्गिरसः पशुकामः सामापश्यत्तेन सहस्रं पशूनसृजत यदेतत्साम भवति पशूनां पुष्ट्यै । तां १३, ११, १४ ।

कार्णश्रवस ( सामन्- )- कार्णश्रवसं भवति शृण्वन्ति तुष्टुवानम् । तां १३, ११, १३ ।

कर्दम- स ( भूतः ) न्यलयत स समुद्रं प्राविशत्, स यत् समुद्रे भस्माकुरुत ( विष्ठामकुरुत ), स एष कर्दमः । काठ २५, ७; क ३९, ५ ।

कर्मन्-
१. अस्मिन्यामे वृषण्वसूऽ इत्यस्मिन्कर्मणि वृषण्वसूऽ इत्येतत् । माश ६, ३, २, ३ ।
२. इषित ᳪ हि कर्म क्रियते । तैसं ६, ४, ३, ३ ।
३. कर्म च मे शक्तिश्च मे ( यज्ञेन कल्पताम् ) । तैसं ४, ७, ५, २ ।
४. कर्माणि धियः । गो १, १,३२ ।
५. कर्मेति हस्तयोः । तैआ ९, १०, २; तैउ ३, १०, २ ।
६. केन कर्माणीति, हस्ताभ्यामिति । शांआ ३, ७; कौउ १, ७ ।
७. तस्माद् द्वाभ्यां पक्षाभ्यां सर्वाणि कर्माणि समश्नुते । शांआ २,४ ।
८. पुण्यो वै पुण्येन कर्मणा भवति पापः पापेनेति । माश १४, ६, २, १४ ।
९. यज्ञो वै कर्म । माश १, १, २, १ ।

१०. यान्यनवद्यानि कर्माणि तानि सेवितव्यानि नो इतराणि । तैआ ७, ११, २; तैउ १,११,२ ।
११. यो वाव कर्म करोति स एव तस्योपचारं वेद । माश ६, ५, ४, १७ ।
१२. वाचो रेतः कर्म । ऐआ २, १, ३ ॥ [ °मन्- अन्नाद्य- २० द्र. ] ।

कलविङ्क ( पक्षि-विशेष- )-

१. अथ यत् सुरापानम् ( त्रिशीर्ष्णो मुखम् ) आसीत् स कलविङ्को ऽभवत् । तस्मात् स मत्त इवावक्रन्दति । जै २, १५४ ( तु. तैसं २,५,१,२; माश १, ६, ३, ४; ५, ५, ४, ५ ) ।
२. कलविङ्कः पुष्करसादो लोहिताहिस्ते त्वाष्ट्राः । मै ३, १४, १२ ।
३. ग्रीष्माय कलविङ्कान् ( आलभते ) । मै ३, १४, १९; काठ ५०, ४ ।
४. यत् सुरापं ( शिर आसीद् विश्वरूपस्य त्वाष्ट्रस्य ) स कलविङ्कः ( अभवत् ) । मै २, ४, १ ।

कलश-

१. कुक्षी कलशौ । मै ४, ५, ९ ।
२. कुक्षी ते कलशौ पाताम् । मै ४, ८, ७ ।
३. यस्य कलश उपदस्यति । कलशमेवास्योपदस्यन्तं प्राणो ऽनूपदस्यति । तां ९, ९,१ ।

कलि-

१. अथ ये पञ्च ( स्तोमाः ) कलिः सः । तै १, ५, ११, १ ।
२ एष वा ऽ अयानभिभूर्यत्कलिरेष हि सर्वानयानभिभवति । माश ५, ४, ४, ६ ।
३. कलिः शयानो भवति । ऐ ७, १५ ।

कालेय ( सामन्- )-

१. अथ कालेयं कं सुष्वाणायासद् इति । अथो कालं सुष्वाणो ऽश्नवाता इत्यथो तं कालयातं योऽस्य काल्यो ऽसदिति । जै २, १९४ ।
२. कालेयमछावाकसाम भवति । तां १५, १०, १५ ।
३. तान् ( असुरान् देवाः ) कालेयेनैव कालेयादकालयन्त । यदकालयन्त तत् कालेयस्य कालेयत्वम् । जै १, १५३ ।
४. तान् ( असुरान् देवाः ) कालेयेनैवानुपर्यायमकालयन्त । यदनुपर्यायमकालयन्त तच्चैव कालेयस्य कालेयत्वम् । जै १, १५३ ।
५. तेन ( कालेयेन साम्ना देवाः ) एनान् ( असुरान् ) एभ्यो लोकेभ्यो ऽकालयन्त यदकालयन्त तस्मात्कालेयम् । तां ८, ३, १ ।
६ पशवः कालेयम् । तां ११, ४, १०; १५, १०, १५ ।
७. यत्कालेयं भवति तृतीयसवनस्य सन्तत्यै । तां ८, ३, ५ ।
८. यदु कलिर्वैतदन्यो ऽपश्यत् तस्मात् कालेयमित्याख्यायते । जै १, १५५ ।
९. विश्वे देवाः कालेयम् । जै १, ३३५; ३, २९४ ।
१०. सलोके ( समानलोके ) वै कालेयञ्च रथन्तरञ्च । जै ३, १५ ।

कलिन्द- तेभ्यः ( कलिभ्यो गन्धर्वेभ्यो देवाः ) एताः कलिन्दाः प्रायच्छन्न् एतासु श्राम्यतेति तद्यत् कलिभ्यः कलिन्दाः प्रायच्छंस्तत् कलिन्दानां कलिन्दत्वम् । जै १, १५५ ।

**कल्प**- प्राणा वै कल्पाः। माश ९, ३,३,१२।

**कल्माष** (वर्ण-)-

१. कल्माषस्स्यात्, स हि सर्वदेवत्यः। काठ ८, १२।

२. कल्माषो मारुतः। मै ४, ७, ८।

**कल्याण**-

१. अहीयत (स्वर्गाल्लोकात्) कल्याणो ऽनृतं हि सोऽवदत्। तां १२, ११, ११।

२. तेषां (अङ्गिरसाम्) कल्याण आङ्गिरसो ऽध्यायमुदव्रजत् स ऊर्णायुं गन्धर्वमप्सरसां मध्ये प्रेङ्ख-यमाणमुपैत्। तां १२, ११, १०।

**कल्याणी** (प्रजापतेस्तनूविशेष-)- कल्याणी तत्पशवः। ऐ ५, २५; कौ २७, ५।

**कवि**-

१. असौ वाऽ आदित्यः कविः। माश ६, ७, २, ४।

२. कवयो ह्येते यच्छुश्रुवांसः। तैसं २, ५, ९, २ (तु. तै ३, २, २, ३)।

३. पदवीः कवीनाम् (त्वमग्ने दधासि)। तैसं ३, ४, ११, १; काठ २३, १२; तैआ १०, १०,१।

४. ब्राह्मणाः कवया ऋषयः कवयः। मै ४, १, २ (तु. काठ ३१, १; क ४७, १)।

५. ये वा अनूचानास्ते कवयः। ऐ २, २; ३८।

६. ये विद्वांसस्ते कवयः। माश ७, २, २, ४।

७. ये ह वा अनेन पूर्वे प्रेतास्ते वै कवयः। गो २, ६, २॥ [°वि-उशिज्- १; ऋषि- १०; २१; ओषधि- ६ द्र.]।

**काव** (सामन्-)-

१. अभिप्रियाणि पवत इति कावं प्राजापत्यं साम। प्रजा वै प्रियाणि पशवः प्रियाणि प्रजायामेव पशुषु प्रतितिष्ठति। तां ८, ५, १४-१५।

२. तदेतत् लोकवित् साम··· । यद्रु कविर्भार्गवोऽपश्यत् तस्मात् कावमित्याख्यायते। जै १, १६६।

३. विन्दते लोकं कावेन तुष्टुवानः। तां ११, ५, २५।

**काव्य**- त्रयी वै विद्या काव्यं छन्दः। माश ८, ५, २, ४॥ [°व्य- ऊम- द्र.]।

**कव्य**->°**वाहन**- कव्यवाहनः पितॄणाम् (अग्निः)। तैसं २, ५, ८,६।

**कश**- दिवे कशान् (आलभते)। मैसं ३, १४, ७।

**कशारि**- उत्तरवेदि- ४ द्र.।

**कश्यप**-

१. कश्यपः पश्यको भवति। यत्सर्वं परिपश्यतीति सौक्ष्म्यात्। तैआ १, ८, ८।

२. कश्यपो मासाम्। मै ३, १४, १८ (तु. काठ ४७, ७)।

३. कश्यपो वै कूर्मः। माश ७, ५, १, ५।

४. कश्यपो वै समुद्रमतिपारयितुमर्हति। जै ३, २७३।

५. कश्यपोऽष्टमः। स महामेरुं न जहाति।···यत्ते शिल्पं कश्यप रोचनावत्।···यस्मिन् सूर्या (अरोगादयो विभासान्ताः सप्तसूर्याः) अर्पिता सप्त साकम्।···ते ऽस्मै कश्यपा-

ज्योतिर्लभन्ते । तान्त्सोमः कश्यपादधि निर्धमति । अस्माकमेकदिवैवम् । तैआ १, ७, १-२ ॥ [ °प- अकूपार- २;३; अप्- २६६ द्र. ] ।

**काकुभ-** ककुभ्- द्र. । **काक्षीवत-** कक्षीवत्- द्र. ।

**काण्डवीणा-** काण्डवीणा वदन्ति यौषधिषु वाकां तेनावरुन्धते । काठ ३४, ५ ।

**काण्व-** कण्व- द्र. ।

**काम-**

१. अग्नये वैश्वानराय द्वादशकपालं (पुरोडाशम्) निर्वपेत् कामाय······संवत्सरे काम आप्यते। मै २, १, २ ।
२. आनन्दनन्दथुभ्यां कामम् ( प्रीणामि ) । काठ ५३, ९ ।
३. इयं ( पृथिवी ) वै विराडस्यै वा ऽएष दोहऽ एव ह वा ऽ अस्मा ऽ इयं विराट् ( पृथिवी ) सर्वान् कामान् दुहे । य ऽ एवमेतं विराजो दोहं वेद । माश १, ५, २, २० ।
४. काम ᳪ समुद्रमाविश । तैआ ३, १०, २ ।
५. कामं प्रत्यासाभ्याम् ( प्रीणामि ) । तैसं ५, ७, १९, १; काठ ५३, ९ ।
६. कामश्च मे सौमनसश्च मे ( यज्ञेन कल्पताम् ) । तैसं ४, ७, ३, १ ।
७. कामाय परस्वान् ( आलभते ) । काठ ४७, ११ ।
८. कामाय पिकः ( आलभ्यते ) । मै ३, १४, २० ।
९. कामाय मनुष्यरथः ( युज्यते ) । मै ३, ४, ४ ।
१०. कामा वै वसोर्धारा (विश्वे देवाः [काठ.]) । तैसं ५, ४, ८, १; काठ १३, ८ ।
११. कामो वै वैश्वानरः । मै ३, १, १०; ३, १० ।
१२. कामो हि दाता कामः प्रतिगृहीता । तै २, २, ५, ६ ।
१३. छन्दांसि वै सर्वे कामाः । जै १,३३२ ।
१४. दक्षिणा (समुद्रो वै) कामः । मै १, ९,४² ।
१५. मनसि वै सर्वे कामाः श्रिताः । ऐआ १, ३, २ ।
१६. यत्र वै देवाः । इमा विद्याः ( ऋचः, यजूंषि, सामानि ) कामान् दुदुहे, तद्ध यजुर्विद्यैव भूयिष्ठान् कामान् दुदुहे । माश ४, ६, ७, १४ ।
१७. वाग्वै सर्वान् कामान् दुहे वाचा हि सर्वान् कामान् वदति । ऐआ १, ३, २ ।
१८. विश्वादमग्निᳪ यमु काममाहुर्यं दातारं प्रतिग्रहीतारमाहुः । मै २, १३, १३ ।
१९. श्रद्धां कामस्य मातरं हविषा वर्द्धयामसि । तै २, ८, ८, ८ ।
२०. समुद्र इव हि कामः । नैव हि कामस्यान्तोऽस्ति न समुद्रस्य । तै २, २, ५, ६ (तु. काठ ९,१२) ।
२१. सर्वेभ्यो हि कामेभ्यो यज्ञः प्रयुज्यते । तैसं २, ४, ११, २ ।
२२. सर्वे वै कामा मधु । ऐआ १, १, ३ ।
२३. सविता भूत्वा प्रथमे ऽहन् प्रवृज्यते । तेन कामाँ एति । तैआ ५, १२, १ ॥ [°म- अग्नि- ६; ४६४; अनन्त-; आज्य- २०; आधि-; आयुस्- १८; आहुति- २ द्र.] ।

काम-दुघ, घा-

१. अष्टौ वा एताः (गायत्रीत्रिष्टुबाद्याः) कामदुघा आस ँ स्तासामेका समशीर्यत सा कृषिरभवत्, ऋध्यते ऽस्मै कृषौ य एवं वेद। तां ११,५,८।

२. एताष्षट् कामदुघा उदाहरन् (देवाः) गां चाश्वं चाजां चाविं च व्रीहिं च यवं च। जै १, १८१।

३. एषा वै प्रजापतेः कामदुघा, तयैव यजमानोऽमुष्मिँल्लोकेऽ ग्निं दुहे। तैसं ५,७,२,२।

४. कामं कामदुघे धुक्ष्व मित्राय वरुणाय च। इन्द्रायाग्नये पूष्ण ओषधीभ्यः प्रजाभ्यः (इन्द्रायाश्विभ्यां पूष्णे प्रजाभ्य ओषधीभ्यः [काठ., क.])। तैसं ४, २, ५, ६-७; काठ १६, १२; क २५, ३।

५. कामदुघा अस्मै रेवतयो भवन्ति। जै ३, १४६।

६. ता (इष्टकाः) एनं (यजमानम्) कामदुघा अमुत्रामुष्मिँल्लोक उपतिष्ठन्ते। तैसं ५,४,२,४।

७. पशवः कामदुघाः। जै २, ८४।

८. पशूनेवैतत्कामदुघोऽवरुन्द्धे। क ४४ ९।

९. सा यैषा शबली पष्ठौह्युपन्नमेषामुष्मिन् लोके कामदुघा भूत्वा तिष्ठते। जै २,२५१॥ [°घा- औशन- ३ द्र.]।

काम-धरण- पशवः कामधरणम्। माश ७, १, १,८।

काम-प्र- अमृतं वै कामप्रम्। माश १०, २, ६,४।

काम-सनि- और्णायव- १ द्र.।

का(म्य>)म्या- तां (गाम्) वा अकामयन्त मयि स्यान्मयि स्यादिति, तां देवाः काम्ये! इत्याह्वयन्त्सा वा एनानभ्यकामयत। मै ४, २, १।

काय- क- द्र.। कारीरी- करीर द्र.। कार्णश्रवस- कर्णश्रवस्- द्र.।

कार्तयश- कृतयशस्-द्र.। कार्तवेश- कृतवेश- द्र.। कार्ष्णायस- कृष्णायस्- द्र.।

कार्ष्मर्य (भद्रपर्णी-)-

१. त एत ँ रक्षोहणं वनस्पतिमपश्यन्कार्ष्मर्यम् (देवाः)। माश ७, ४, १, ३७।

२. देवा ह वाऽ एतं वनस्पतिषु राक्षोघ्नं ददृशुर्यत्कार्ष्मर्य्यम्। माश ३, ४, १, १६।

३. प्रजापतेर्विस्रस्तस्याक्षिभ्यस्तेज आदाय दक्षिणाकर्षत्सोऽत्रोदरमद्यत्कृष्ट्वोदरमत्तस्मात्कार्ष्मर्यः। माश ७, ४, १, ३९।

४. यत्र वै देवा अग्रे पशुमालेभिरे तदुदीचः कृष्यमाणस्यावाङ् मेधः पपात स एष वनस्पतिरजायत तद्यत्कृष्यमाणस्यावाङपतत्तस्मात्कार्ष्मर्यः। माश ३, ८, २, १७।

५. वज्रः (वज्रो वै [काठ.]) कार्ष्मर्यः। तैसं ५, २, ७, ४; काठ २०, ५; क ३१, ७।

कार्ष्मर्य-मय- कार्ष्मर्यमयाः परिधयो भवन्ति रक्षसामपहत्यै। मै ३, ७, ९; काठ २४, ८; क ३८, १।

कार्ष्मर्यमयी-

१. इयं (पृथिवी) वै कार्ष्मर्यमयी। तैसं ५, २, ७, ३; काठ २०, ५; क ३१, ७।

२. यत् कार्ष्मर्यमयीं दक्षिणत उपदधाति (सादयति [मै.]) रक्षसामन्तर्हित्यै (°सामपहत्यै [मै.])। मै ३, २, ६; क ३१, ७।

**काल-** अप्- १५५ द्र.। **कालक** [ का ] ञ्ज- इन्द्र- २४२ द्र.।

**कालेय-** कलि- द्र.। **काव-**, काव्य- कवि- द्र.।

**काश-** काशाना ऽ स्तम्बमाहर रक्षसामपहत्यै। तैआ ६, ९, १।

**काष्ठ,ष्ठा-**

१. यदु (देवाः) गिरिं काष्ठामकुर्वन् तस्मादसौ गिरिः काष्ठो नाम। जै १, १०५।

२. सुवर्गो वै लोकः काष्ठा। तै १, ३, ६, ५।

**किक्किटाकार-**

१. किक्किटाकारं ग्राम्याः पशव उपतिष्ठन्ते। काठ १३, १२।

२ किक्किटाकारं जुहोति ग्राम्याणां पशूनां धृत्यै। तैसं ३, ४, ३, ५।

३. किक्किटाकारादारण्याः (पशवः) प्रत्रसन्ति। काठ १३, १२।

४. किक्किटाकारेण वै ग्राम्याः पशवो रमन्ते, प्राऽऽरण्याः पतन्ति। तैसं ३, ४, ३, ५।

**किम्पुरुष-**

१. अथैनमुत्क्रांतमेधं (पुरुषं देवाः) अत्यार्जन्त स किम्पुरुषोऽभवत्। ऐ २, ८।

२. किम्पुरुषो वै मयुः। माश ७, ५, २, ३२।

**किरिक-** नमो वः किरिकेभ्य इति। एते हीद ऽ सर्वं कुर्वन्ति। माश ९, १, १, २३।

**किल्विष->** °स्पृत्- एष (सोमः) उ एव किल्विषस्पृत्। ऐ १, १३।

**कीर्त्ति-** कीर्तिर् होतारम् (अनु)। ष २, ८।

**कीर्षा-** इन्द्राण्यै कीर्षा। काठ ४७, १०।

**कुक्षि-** हृदान् कुक्षिभ्याम् (प्रीणामि)। मै ३, १५, ७॥ [°क्षि- कलश- १; २ द्र.]।

**कुटरु-** अग्नि- ७ द्र.।

**कुत्स-** कुत्सश्च लुशश्चेन्द्रं व्यह्वयेता ऽ स इन्द्रः कुत्समुपावर्त्तत त ऽ शतेन वार्ध्रीभिराण्डयोरबध्नात्तं लुशो ऽभ्यवदत् प्रमुच्यस्व परि कुत्सादिहागहि किमु त्वावानाण्डयोर्बद्ध आसाता इति ताः संच्छिद्य प्राद्रवत्स एतत् कुत्सः सामापश्यत्तेनैनमन्ववदत्स उपावर्त्तत यदेतत्साम भवति सेन्द्रत्वाय। तां ९,२,२२;२३॥ [°त्स- उपगु- द्र. ]।

**कौत्स** (सामन्-)-

१. इन्द्रसुतेषु सोमेष्विति कौत्सम्। तां ९, २, २१।

२. एतेन वै कुत्सोऽन्धसो विपानमपश्यत् स ह स्म वै सुरादृतिनोपवसथं धावयत्युभयस्यान्नाद्यस्यावरुध्यै कौत्सं क्रियते। तां १४, ११, २६।

३. तदेतत् सेन्द्रं साम। यदु कुत्सो अपश्यत्तस्मात् कौत्समित्याख्यायते। जै १, २२८।

**कुनखिन्-** यद्धस्तेन मूलं छिन्द्यात्। कुनखिनीः प्रजाः स्युः। तै ३, २, ९, १०।

**कुन्ताप-**

१. कुयं ह वै नाम कुत्सितं भवति तद्यत्तपति तस्मात्कुन्तापाः, तत्कुन्तापानां कुन्तापत्वम्। गो २, ६, १२।

२. वि ९ शतिर्वा अन्तरुदरे कुन्तापान्युदरमेकवि ९ शम् । माश १२, २, ४, १२ ।

कुन्ताप-सूक्त- अथैतत्कुन्तापं यथाछन्दसं शंसति सर्वेषामेव कामानामाप्त्यै । नाराशंसीः, रैभीः, कारव्याः, इन्द्रगाथाः, भूतेछदः, पारिक्षितीः, एतशप्रलापमिति । कौ ३०, ५ ।

कुबेर- कुबेरो वैश्रवणो राजेत्याह तस्य रक्षा ९ सि विशः । माश १३, ४, ३, १० ।

कुमार-

१. कुमारं नवजातं सर्पिराशयन्ति । काठसंक १२ : ८-९ ।

२. कुमारे सद्योजात एनो न ( भवति ) । तां १८, १,२४ ।

३. कुमारो जायमान एव वाचमभिव्याहरति । जै १, २९७ ।

४. तस्मात्कुमारं जातं घृतं वैवाग्रे प्रतिलेहयन्ति स्तनं वानुधापयन्ति । माश १४,४, ३, ४ ।

५. तस्मात्संवत्सरवेलायां प्रजाः वाचं प्रवदन्ति । माश ७, ४, २, ३८ ।

६. तस्मादु संवत्सरऽ एव कुमारो व्याजिहीर्षति । माश ११, १, ६, ३ ।

७. तस्मादेकाक्षरद्व्यक्षराण्येव प्रथमं वदन्कुमारो वदति । माश ११, १, ६, ४ ।

८. तानीमानि भूतानि ( षड्ृतवः ) च भूतानां च पतिः संवत्सरऽ उषसि रेतोऽसिञ्चन्त्स संवत्सरे कुमारो ऽजायत सोऽरोदीत् ।···यदरोदीत् तस्माद् रुद्रः । माश ६, १, ३, ८-१० ।

९. यथा कुमाराय वा जाताय वत्साय वा स्तनमपिदध्यात् । माश २, २, १,१ ।

१०. यथा छिद्रतः कुमारस्य सातं स्यात् । जै २, ८३ ।

११. संवत्सरऽ एव कुमार उत्तिष्ठासति । माश ११, १, ६, ५ ॥ [°र- अग्निरूप- द्र.] ।

कुमारी-

१. एतदु हैवोवाच कुमारी गन्धर्वगृहीता । ऐ ५, २९ (तु कौ २, ९) ।

२. कुमारीं रूपं ( गच्छति ) । गो १, २, २ ।

३. तस्यासीद् ( पतञ्जलस्य काप्यस्य ) दुहिता गन्धर्वगृहीता । माश १४,६,३,१ ।

कुम्ब्या ( विध्यर्थवादात्मकब्राह्मणवाक्य- )- स्वाध्यायो ऽध्येतव्यस्तस्मादप्यृचं वा यजुर्वा साम वा गाथां वा कुंब्यां वाभिव्याहरेद् व्रतस्याव्यवच्छेदाय । माश ११, ५, ७, १० ।

कुरु- अप्येतर्हि वसिष्ठाः कुरुष्वग्र्याश्चैव मुख्याश्च मन्यन्ते···अपि ह स्म तेन पथा पुरा कुरवो न यान्ति, येन भारद्वाजा ययुः । जै २, २१७ ॥ [°रु- उदीची- २३ द्र.] ।

कुरु-क्षेत्र-

१. तस्मादाहुः कुरुक्षेत्रं देवानां देवयजनमिति । माश १४, १, १, २ (तु. जै २, ३००) ।

२. ते देवा अब्रुवन्नेतावती वाव प्रजापतेर्वेदिर्यावत् कुरुक्षेत्रमिति । तां २५, १३, ३ ।

३. देवा वै सत्रमासत कुरुक्षेत्रे । अग्निर्मखो वायुरिन्द्रः । मै ४, ५,९ ।

४. शर्यणावद्ध नाम कुरुक्षेत्रस्य जघनार्धे सरस्कम् । जै ३,६४ ।

कुरु-पञ्चाल-

१. तस्माच्छिशिरे कुरुपञ्चालाः प्राञ्चो यन्ति । तै १, ८, ४, १ ।

२. तस्माज्जघन्ये नैदाघे प्रत्यञ्चः कुरुपञ्चाला यन्ति । तै १, ८, ४, २ ॥ [°ल- अगस्ति-; उदीची- १०; उशीनर- द्र.] ।

कुलङ्ग-

१. साध्येभ्यः कुलङ्गान् ( आलभते )। मै ३, १४, ९।

२. सोमाय ( सोमस्य राज्ञः [तैसं.]) कुलङ्गः। तैसं ५, ५, ११, १; मै ३, १४, १३।

कुलाय ( क्रतु- )-

१. अथैष इन्द्राग्न्योः कुलायः प्रजाकामो वा पशुकामो वा यजेत। तां १९, १५, १।

२. प्रजा वै कुलायं पशवः कुलायं ( +गृहाः कुलायं कुलायमेव भवति [तां १९, १५, १])। मै ३, ४, ७; तां २, ३, २; १९, १५, १।

कुल्म(,न्म)लबर्हिस्-,>कौल्म(,न्म)लबर्हिष (सामन्-)-

१. अथ कौन्मलबर्हिषम्। एतेन वै कुन्मल-बर्हिरुभयान् पशून-स्पृणोत् गव्यांश्चाश्व्यांश्च। जै ३, २५४।

२. कुल्मलबर्हिर्वा एतेन स्वर्गं लोकमपश्यत् प्रजातिं भूमानमगच्छत् प्रजायते बहुर्भवति कौल्मलबर्हिषेण तुष्टुवानः। तां १५, ३, २१।

कुवल-

१. यत्प्रथमं ( इन्द्रः सोमं पीत्वा ) निरष्ठीवत् तत् कुवलमभवत्। मै २, ४, १; काठ १२, १०।

२. यदश्रुभ्यः ( तेजो ऽस्रवत् ) तत्कुवलम् ( अभवत् )। माश १२, ७, १, २।

कुवल-सक्तु- आश्विन- १२ द्र.।

कुश- आपो हि कुशाः। माश १, ३, १,३।

कुशल- कुशलान्न प्रमदितव्यम्। तैआ ७, ११, १; तैउ १, ११, १।

कुशिक- >कौशिक,->°कता, °कत्व-

१. अथ यत्सुवर्णरजताभ्यां कुशीभ्यां परिगृहीत आसीत्। सास्य ( आदित्यरूपस्य चात्वालस्य ) कौशिकता। तै १, ५, १०, २।

२. चत्वारो वै पृश्नेः स्तना आस ऽ स्ततस्त्रिभिर्देवेभ्यो ऽदुहत्, कुशीभिरेको ऽनुनद्ध आसीत्, त ऽ वा इन्द्र एवापश्यत्, तेनेन्द्रायैवादुहत्, तद्वा अस्य ( इन्द्रस्य ) कौशिकत्वम्। मै ४, ५, ७॥ [°क- इन्द्र- ३४६ द्र]।

कुषीतक-,>कौषीतकि- एतेन वै ( स्तोमेन ) शमनीचामेढ्रा अयजन्त तेषां कुषीतकः सामश्रवसो गृहपतिरासीत्तान् लुशाकपिः खार्गलिरनु व्याहरदवाकीर्षत कनीया ऽ सौ स्तोमावुपागुरिति तस्मात्कौषीतकीनां न कश्चनातीव जिहीते यज्ञावकीर्णा हि। तां १७, ४, ३।

कुष्ठिका- कुष्ठिकाभ्यो वर्तकाः ( अजायन्त )। जै २, २६७।

कुसुरुविन्द ( दशरात्र- )-

१. एतेन वै कुसुरुविन्द औद्दालकिरिष्ट्वा भूमानमाश्नुत। तां २२, १५, १०।

२. यः कामयेत बहु स्यामिति स एतेन यजेत। तां २२, १५, २।

कुहू-

१. कुहूमह ऽ सुभगां···सुहवां जोहवीमि। सा नो ददातु श्रवणं पितृणाम्। तैसं ३,३,११,५।

२. कुहूर्देवानाममृतस्य पत्नी। तैसं ३, ३, ११, ५।
३. कुह्वै त्रयो ऽरुणैताः। काठ ४२, ८।
४. प्रजास्वेव प्रजातासु कुह्वा वाचं दधाति। तैसं ३, ४, ९, १।
५. योत्तरा (+अमावास्या [गो., ष.]) सा कुहूः। मै ४, ३, ५; काठ १२, ८; ऐ ७,११; गो २, १,१०; ष ४, ६॥ [°हू- अनुष्टुभ्- २; ५९; अपरपक्ष- १द्र.]।

कूप->कूप्या- एता (कूप्याः) वै तेजस्विनीरापः। तैआ १, २४,२।

कूर्म-

१. अङ्गिरसः सुवर्गं लोकं यतः पुरोडाशः कूर्मो भूत्वा ऽनु प्रासर्पत्…एवमेवैनं कूर्मः सुवर्गं लोकमञ्जसा नयति। तैसं ५, २, ८, ४-५।
२. कूर्मान्छफैः (प्रीणामि)। काठ ५३, ३।
३. ता ९ (पृथिवीम्) संक्लिश्याप्सु प्राविध्यत्तस्यै यः पराङ् रसो ऽत्यक्षरत्स कूर्मोऽभवत्। माश ६, १, १, १२।
४. तेऽपश्यन् (देवाः) पुरोडाशं कूर्मं भूत ९ सर्पन्तम्। तैसं २, ६, ३, २-३।
५. द्यावापृथिवीयः (°थिव्यो हि [माश.]) कूर्मः। मै ३, १४, १५; माश ७, ५, १, १०।
६. न कूर्मस्याश्नीयात् (आरुणकेतुकचित्) नोदकस्याघातुकान्येन मोदकानि भवन्ति। अघातुका आपः। तैआ १, २६, ७।
७. प्राणो वै कूर्मः प्राणो हीमाः सर्वाः प्रजाः करोति। माश ७, ५, १, ७।
८. मेध्यो वा एष पशूनां यत्कूर्मः। तैसं ५, २,८, ५; काठ २०,७; क ३१,९ (तु. मै ३,२,७)।
९. यो वै स एषां लोकानामप्सु प्रविद्धानां पराङ् रसो ऽत्यक्षरत्स एष कूर्मः। माश ७, ५,१,१।
१०. वास्तव्यो वा एष यत् कूर्मः। तैसं ५, २, ८, ५।
११. शिरः (रसो वै [माश ७,५,१,१]) कूर्मः। माश ७, ५, १, १; ३५।
१२. स यत्कूर्मो नाम। एतद्वै रूपं कृत्वा प्रजापतिः प्रजा असृजत यदसृजताकरोत्तद्यदकरोत्तस्मात्कूर्मः कश्यपो वै कूर्मस्तस्मादाहुः सर्वाः प्रजाः काश्यप्य इति। माश ७, ५, १,५।
१३. सुवर्गाय वा एष लोकायोपधीयते यत् कूर्मः। तैसं ५, ७, ८, २॥ [°र्म- अप्- १५६; आदित्य- ३६८ द्र.]।

कूवर- नाक्रो मकरः पुलीकयस्ते कूवरस्य। काठ ४७,३।

कूश्म,ष्म-

१. कूश्मान्छकभिः [°ष्मान् शकपिण्डैः [मै.] (प्रीणामि)]। मै ३, १५,९; काठ ५३, १३।
२. शकृत्पिण्डेभ्यः कूश्माः (अजायन्त)। जै २, २६७।

कृकवाकु- कृकवाकुः सावित्रः। मै ३, १४, १५; काठ ४७, ८।

कृत-

१. कृतं सपद्यते चरन्। ऐ ७, १५।
२ ये वै चत्वारः स्तोमाः कृतं तत्। तै १, ५, ११, १।
३. श्रद्धा वै कृतम्। जै २, २९०।

**कृतमय**- अग्नि- ५८५ द्र.।

**कृतयशस्->कार्त्तयश** (सामन्-)- अप पाप्मान ९ हते कार्त्तयशेन तुष्टुवानः। तां १४, ५, २३।

**कृत-वेश-,>कार्तवेश** (सामन्-)- अथ कार्तवेशम्। त्रेधा भरतेषु राष्ट्रमासीत् वैतहव्येषु तृतीयं, मित्रवत्सु तृतीयं, कृतवेशे तृतीयम्। सो ऽकामयत कृतवेशो ह त्विमे द्वे राष्ट्रे एकधा राष्ट्रं स्यादिति। स एतद् द्विनिधनं सामापश्यत्। तेनास्तुत। तेनेमे द्वे राष्ट्रे ह त्वैकधा राष्ट्रमभवत्। तदेतच्छ्रीर्भ्रातृव्यहा साम…यदु कृतवेशो ऽपश्यत्तस्मात् कार्तवेश-मित्याख्यायते। जै ३, १९६।

**कृतान्न**- यत् कृतान्नं ददाति मा ९ सं तेन निष्क्रीणीते। मै ४, ८, ३।

**कृत्ति->कृत्त्यधीवास**- अन्तरिक्षस्य (रूपं) कृत्त्यधीवासः। तै ३, ९, २०, २।

**कृत्तिका** (नक्षत्र)-

१. अग्नये स्वाहा कृत्तिकाभ्यः स्वाहा, अम्बायै स्वाहा दुलायै स्वाहा नितत्न्यै स्वाहाऽभ्रयन्त्यै स्वाहा मेघयन्त्यै स्वाहा वर्षयन्त्यै स्वाहा चुपुणीकायै स्वाहेति। तै ३, १, ४, १।

२. अग्निना वै देवाः सुवर्गं लोकमायन् ता अमूः कृत्तिका अभवन्। तैसं ५, ३, ९, १।

३. अग्निर्देवता, कृत्तिका नक्षत्रम्। काठ ३९, १३।

४. एकं द्वे त्रीणि चत्वारीति वाऽ अन्यानि नक्षत्राण्यथैता एव भूयिष्ठा यत्कृत्तिकाः। माश २, १, २, २।

५. एतद्वा अग्नेर्नक्षत्रं यत् कृत्तिकाः। तै १, १, २, १; ५, १, १; ३, १ १, १ (तु. माश २, १, २, १)।

६. एता (कृत्तिकाः) ह वै प्राच्यै दिशो न च्यवन्ते। सर्वाणि ह वाऽ अन्यानि नक्षत्राणि प्राच्यै दिशश्च्यवन्ते। माश २, १, २, ३।

७. पुर एताः (कृत्तिका उयन्ति)। अग्निर्वाऽ एतासां (कृत्तिकानाम्) मिथुनम्। माश २,१,२,५।

८. प्रजापतेर्वा एतच्छिरो यत् कृत्तिकाः। काठ ८, १; क ६, ६।

९. मुखं वा एतन्नक्षत्राणां यत्कृत्तिकाः। तै १, १, २, १।

१०. सप्त (+ वै [काठ., क]) कृत्तिकाः। मै १, ६, ९; काठ ८, १; क ६, ६। [°का- अग्नि- ४६५; आग्नेय- १३; आग्नेयी- ६; ऋक्ष- १ द्र.]।

**कृत्या**- यदा वै कृत्यामुत्खनन्त्यथ सालसा मोघा भवति तथोऽएवैष एतद्यद्यस्माऽअत्र कश्चिद् द्विषन् भ्रातृव्यः कृत्यां वलगान्निखनति तानेवैतदुत्किरति। माश ३, ५, ४, ३।

**कृमुक** (वृक्ष-विशेष-)- तस्मात्स स्वादू रसो हि तस्मादु लोहितोऽर्चिर्हि स एषोऽग्निरेव यत्कृमुकः। माश ६, ६, २, ११।

**कृशानु**- सम्राडसि कृशानुः। तैसं १, ३, ३, १; मै १, २, १२; काठ २, १३; क २, ७।

**कृषि**-

१. अधो दूरं खनेदधो वा अस्याः (पृथिव्याः) वीर्यम्। वीर्यस्याभिक्लृप्त्यै (°भितृत्त्यै [काठ.]) तस्मात् सुकृष्टे व्रीहियवाः पच्यन्ते। तदाहुरुत्तरार्धे वा अस्याः वीर्यम्। तदिमाः प्रजा उपजीवन्ति। तस्मान्नातिखेयेति। आ प्रतिष्ठायाः खनेत्। काठ २५, ४; क ३९, १।

२. अन्नं वै कृषिः । माश ७, २, २, ६ ।
३. कृषि ९ सुसस्यामुत्कृधि । काठ २, ३ ।
४. बृहती छन्दस्तत् कृषिः ( वृष्टिः [का०.] ) पर्जन्यो देवता । मै २, १३, १४; काठ ३९, ४ ।
५. सर्वदेवत्या वै कृषिः । माश ७, २, २, १२ ॥ [°षि- कामदुघा- १ द्र.] ।

१कृष्ण,ष्णा-

१. अथ यत्कृष्णं तदपां रूपमन्नस्य मनसो यजुषः । जैउ १, ८, १, ९ ।
२. आर्तम्वेतद्रूपं यत्कृष्णम् । माश ८, ७, २, १६ ।
३. एतद्वै पाप्मनो रूप ९ यत् कृष्णम् । कृष्ण इव हि पाप्मा । मै २, ५, ६; काठ १३,२ ।
४. कृष्णमृक् । काठ २३, ३ ।
५. कृष्णा भवति, वारुणी ह्येषा देवतया । तैसं २, १, ९, २ ।
६. कृष्णा भौमाः (वारुणाः [मै ३, १३, १२]) । मै ३, १३, ११;१२ ।
७. कृष्णा ( पशवः ) वर्षाभ्यः । मै ३, १३, १९ ।
८. कृष्णो भवत्येतद्वै वृष्ट्यै रूपम् । तैसं २, १, ८, ५ ।
९. कृष्णो राज्याः । मै ३, १४, १७ ( तु. ३,१४,१९) ।
१०. तद्धि वारुणं यत् कृष्णम् । माश ५. २, ५, १७ ।
११. तमो वै कृष्णम् । मै २, १, ६; ५, ६ (तु. काठ १०, ६; ११, ५) ।
१२. निऋत्यै रूपं कृष्णम् । तैसं ५, २, ४, २ ।
१३. नैर्ऋतं चरुं परिवृक्त्यै गृहे कृष्णानां व्रीहीणां नखनिर्भिन्नम् । कृष्णा कूटा दक्षिणा । तैसं १, ८, ९, १ ।
१४. नैर्ऋतमेककपालं कृष्णं वासः कृष्णतूषं दक्षिणा । तैसं १, ८, १, १ ।
१५. पाप्मा वै कृष्णा त्वक् । जै ३,६० ।
१६. प्राजापत्यं कृष्णमालभेत वृष्टिकामः । तैसं २, १, ८, ५ ।
१७. यत् कृष्णं तद्रात्रेः ( रूपम् ) । मै २, ५, ७; ३, ६, ६; जै २, ४२९ (तु. काठ १३,५) ।
१८. यत् कृष्णा एष हि तं वर्णः सचते यं निर्ऋतिर्गृह्णाति । काठ २०, २ ।
१९. यत् कृष्णानां (व्रीहीणाम्) वारुणं ( चरुं निर्वपति ), तस्माद्धूम्र इव राजन्यः । काठ ११, ६ ।
२०. ये (व्रीहयः) कृष्णास् (+स्युः [तैसं.]) तं वारुणं चरुं निर्वपेत् । तैसं २, ३,१,४; काठ ११,६ ।
२१. रात्रिर्वै कृष्णा शुक्लवत्सा ( गौः ) तस्या असावादित्यो वत्सः । माश ९ २, ३, ३० ।
२२. वारुणं कृष्णमेकशितिपादमालभेत । तैसं २, १, २, १ (तु. तैसं २,१, ९, २) ।
२३. स ( इन्द्रः ) एवं वरुणाय शतभिषजे भेषजेभ्यः पुरोडाशं दशकपालं निरवपत् कृष्णानां व्रीहीणाम् । ततो वै स दृढो ऽशिथिलोऽभवत् । तै ३,१,५,९ ।
२४ सौर्ययामौ श्वेतश्च कृष्णश्च पार्श्वयोः । मै ३, १३, २ ॥ [°ष्ण- अग्नि- १२; अनृत- ७; अन्नाद्य- १६; अभि√चर् १२; अश्वतर- ३; असुर- ६७ द्र.] ।

कृष्ण-ग्रीव- अग्नि- १६; आग्नेय- २८; २९ द्र. ।

कृष्णग्रीवी- आग्नेयी- १२ द्र. ।

कृष्ण-मृग- स कृष्णमृगोऽभवत्, स कृष्णमृगो भूत्वा पृथिवीमन्वचरत्, तमनु धर्मश्चचार। छ ११३।

कृष्ण-विषाणा-

१. कृष्णविषाणां प्रयच्छति सयोनिमेव यज्ञं करोति, सयोनिं दक्षिणा ५ सयोनिमिन्द्र ५ सयोनित्वाय। तैसं ६, १, ३, ७।

२. यो सा योनिः सा कृष्णविषाणा। माश ३, २, १, २८ (तु. तैसं ६, १, ३, ८)।

कृष्णाक्षी- या रोहिणी कृष्णाक्षी कृष्णवाला कृष्णशफा (गौः), सा पितृदेवत्या। मै ३, ७, ४।

कृष्णाऽजिन-

१. असौ (द्यौः) कृष्णाजिनम्। काठ १९, ४; क ३०, २।

२. इयं (पृथिवी) वै कृष्णाजिनम्। तैसं ५, १, ४, ३; माश ६, ४, १, ९।

३. एतद्वै ब्रह्मणो रूपं यत् कृष्णाजिनम् (यद् बभ्रुः [काठ १३, ८])। काठ १३,८;१९,४।

४. कृष्णाजिनं वाव दीक्षितयशसम्। एतद्धि सर्वेषां वेदानां रूपम्। यानि शुक्लानि तानि साम्नां रूपं यानि कृष्णानि तान्यृचाम्। यदि वेतरथा। यान्येव बभ्रूणीव हरीणि तानि यजुषाम्। जै २,६६।

५. कृष्णाजिनं वै सुकृतस्य योनिः। माश ६, ४, २, ६।

६. कृष्णाजिन ५ होतृषदनम्। माश ६, ४,२,७।

७. कृष्णाजिनेऽध्यभिषिच्यते (यजमानः)। एतद् वै प्रत्यक्षं ब्रह्मवर्चसम्। तां १७,११,८।

८. जरायु कृष्णाजिनम्। काठ २३, २।

९. तस्य (अग्नेः) एष स्वो लोको यत्कृष्णाजिनम्। माश ६, ४, २, ६।

१०. तेजसा कृष्णाजिनस्य लोमभिः स ५ सृजति। तैसं ५, १, ६, २-३।

११. प्राचीनग्रीवं कृष्णाजिनमुपस्तृणीतेति ब्रूयादुदीचीनग्रीवं वा। जै २,१३०।

१२. ब्रह्म कृष्णाजिनम्। तैसं ५, १, १०, ५।

१३. ब्रह्मण (°णो वा [तै.]) एतद्रूपं यत् कृष्णाजिनम्। तैसं ५, ४, ४, ४; तै २, ७, १, ४।

१४. ब्रह्मणो वा एतदृक्सामयो रूपं यत्कृष्णाजिनम्। तै २, ७, ३, ३।

१५. यज्ञो (ब्रह्म [कौ.]) वै कृष्णाजिनम्। तैसं ५, १, ४, २; काठ १९, ४; कौ ४, ११; माश ६, ४, १, ६; तैआ ५, २, १३ (तु. माश ३, २, १, ८)।

१६. यज्ञो हि कृष्णः (मृगः) स यः स यज्ञस्तत्कृष्णाजिनम्। माश ३, २, १, २८।

१७. यतो वै लोमानि कृष्णाजिनस्य ततो यज्ञः। मै ३, ६, ६।

१८. यत् कृष्णाजिनेन दीक्षत ऋक्सामे एवालभते...... अहोरात्रयोरेवौजो वीर्यमालभते...... द्यावापृथिव्योरेव तेजो यज्ञियमालभते। काठ २३, ३।

१९. लोमतः सं भरत्यतो ह्यस्य (कृष्णाजिनस्य) मेध्यम्। तैसं ५, १, ४, ३।

२०. स (ब्रह्मचारी) यन्मृगाजिनानि वस्ते तेन तद् ब्रह्मवर्चसमवरुन्धे। गो १,२,२ [°न- अहोरात्र- २३; ऋक्साम- १ द्र.]।

कृष्णाऽयस्->कार्ष्णायस- लोहायसेन कार्ष्णायसम् (संदध्यात्)। जैउ ३,४,३,३

**२कृष्ण (ऋषि-)**- कृष्णो हैतदाङ्गिरसो ब्राह्मणच्छंसीयायै तृतीयसवनं ददर्श । कौ ३०, ९ ।

**केत**- अग्नि- ४६७; अन्न- ६७ द्र. ।

**केतु**- छन्दांसि केतवः । जै ३,५८ ।

**केश**-

१. अवभृथादुदेत्य श्मश्रूण्येव वपते न केशान् । श्रीर्वै शिरः । शिर उ ह वै सुष्वाणस्य श्रीर्गच्छति । स यत् पुरा संवत्सरात् केशान् वपेत श्रियमेव वपेत न केशान् । अथ यदुपरिष्टात् संवत्सरस्य केशान् वपते संवत्सरेणैव तदात्मन् श्रियं परिगृह्य केशान् एव वपते, न श्रियम् । तस्मादुपरिष्टादेव वपेत । जै २, २०४ ।

२. एतद्वै केशानां रूपं यदतिरात्रः । ये शुक्ला अहस्ते रूपं ये कृष्णा रात्र्यै ते । जै २,२०४ ।

३. यस्य दक्षिणतः केशा उन्मृष्टास्तमाहुर्ज्येष्ठलक्ष्मीति । मै १, ८, १ ।

४. रश्मयः केशाः । तैसं ७,५,२५,१ ।

५. वेदेनाभिवासयति, तस्मात् केशैः शिरश्छन्नम् । तैसं २,६,३,४-५ ।

**केशव**-

१. केशवस्य ( क्लीवस्य ) पुरुषस्य लोहायसमास्यऽआविध्यति । माश ५,४,१,१ ।

२. तद्दक्षिणतः प्रतिवेशतः केशवात् पुरुषात् सीसेन परिस्रुतं क्रीणाति न वाऽएष स्त्री न पुमान् यत् केशवः पुरुषो यदाह पुमांस्तेन न स्त्री यदु केशवस्तेनो न पुमान् नैतदयो न हिरण्यं यत्सीसं, नैष सोमो न सुरा यत्परिस्रुत् । माश ५,१,२,१४ (तु. ५,४,१,२) ।

**केसर**- केसरेभ्य ऋक्षा ऋक्षीकाः ( अजायन्त ) । जै २,२६७ ।

**कोसल-विदेह**- सैषा (सदानीरा नदी) अप्येतर्हि कोसलविदेहानां मर्यादा । माश १ ४,१,१७ ।

**कौत्स**- कुत्स- द्र. ।

**कौन्मल-बर्हिष**- कुल्मलबर्हिस्- द्र. ।

**कौलीक**- त्वष्ट्रे कौलीकान् (आलभते) । मै ३,१४,५ ।

**कौल्मलबर्हिष**- कुल्मलबर्हिस्- द्र. ।

**कौशिक-**, °ता-, °त्व- कुशिक- द्र. ।

**कौषीतकि**- कुषीतक- द्र. ।

**क्रतु**-

१. क्रतुं दक्षं वरुण सꣳशिशाधि । तैसं १,२,२,२; ऐ १,१३ ।

२. क्रत्वा शचीपतिः । तैसं ४,४,८,१ ।

३. धीतिश्च मे क्रतुश्च मे ( यज्ञेन कल्पताम् ) । तैसं ४,७,१,१ ।

४. प्रजापतिर्वै भगो, यज्ञः क्रतुः । मै १, ४,१४;१५ ।

५. मित्र एव क्रतुः । माश ४,१,४,१ ।

६. वाग्वै क्रतुर्यज्ञमुखम् । तैसं ५,३,३,५ ।

७. विश्वेषां त्वा देवानां क्रतुनाभिषिञ्चामि । मै २,६,११;४,४,५ ।

८. संवत्सरो वाव क्रतुरेकत्रिꣳशस्तस्य चतुर्विꣳशतिरर्धमासाः षडृतवः संवत्सर एव क्रतुरेकत्रिꣳशस्तद्यत्तमाह क्रतुरिति संवत्सरो हि सर्वाणि भूतानि करोति । माश ८,४,१,२१ ।

९. स यदेव मनसा कामयतऽ इदं मे स्यादिदं कुर्वीयेति स एव क्रतुः । माश ४,१,४,१ ।

१०. हृत्सु क्रतुं वरुणः [वरुणम् [मै.] (अदधात्)] । तैसं १, २, ८, १-२ मै १, २, ६; काठ २,६; क १,१९ ।

११. हृत्सु ह्ययं क्रतुर्मनोजवः प्रविष्टः । माश ३,३,४,७ ॥ [°तु- एकत्रिंश- १; अपान- ३८ द्र.] ।

**क्रतुस्थला-** अग्नि- ५६५ द्र. ।

**क्रय-** अथ यत्क्रयेण चरन्ति । सोममेव देवतां यजन्ते । माश १२, १, ३, ३ ।

**क्रव्य-** अवस्वान् क्रव्या नाम स्थ पार्थिवास्तेषां व इह गृहा अन्नं व इषवः । तैसं ५,५,१०,४-५ ।

**क्रव्याद्-** अथ येन पुरुषं दहन्ति स क्रव्यात् । माश १, २, १,४ ।

**क्रिमि-** नीलङ्गोः क्रिमिः । तैसं ५, ५, ११, १; काठ ४७, १ ।

**क्रिवि-** क्रिवय इति ह वै पुरा पञ्चालानाचक्षते । माश १३. ५, ४, ७ ।

**क्रुञ्च्-**

१. क्रुङ्ङाङ्गिरस ईर्ष्यमिवाहरविन्दत् ·····स क्रुङ्ङाङ्गिरसोऽकामयत······स एतत् (क्रौञ्चम्) सामापश्यत्, तेनास्तुत···यद्ध वा इदमाहुः क्रुङ् क्षीरं विपिपीत इति न ह वै तत् क्रुङ् विपिपीते । क्रुङ् ह स्म वै तदाङ्गिरसोऽह्न एवाहर्विपिपीते । जै ३,३२ ।

२. क्रुङ्ङैर्ष्यमहरविन्ददैर्ष्यमिव वै षष्ठमहरेवैतेन विन्दन्ति । तां १३, ९, ११; ११, २० ।

३. सोममद्भ्यो व्यपिबत् । छन्दसा हंसः शुचिषत् । ······ अद्भ्यः क्षीरं व्यपिबत् क्रुङ्ङाङ्गिरसो धिया । तै २, ६,२,१-२[१] (तु. मै ३,११,६; काठ ३८,१) ।

**क्रुञ्च-**

१. इन्द्राग्निभ्यां क्रुञ्चान् ( आलभते ) । मै ३, १४, ३ ।

२. क्रुञ्चौ श्रोणिभ्याम् ( प्रीणामि ) । मै ३, १५, ६ ।

**क्रौञ्च-**

१. अथ क्रौञ्चम् । क्रुङ् आङ्गिरस ईर्ष्यमिवाहरविन्दत् । ईर्ष्या इवैते यच्छन्दोमाः । तस्माच्छन्दोमेषु क्रियते । जै ३, २२९ ।

२. रज्जुः (वाग्वै [तां ११, १०, १९]) क्रौञ्चम् । तां ११,१०,१९;१३. ९, १७ ।

३. वाचे क्रौञ्चः ( आलभ्यते ) । तैसं ५, ५, १२, १; मै ३, १४, १२; काठ ४७, २ ।

४. सक्थिभ्यां क्रौञ्चौ ( अजायेताम् ) । जै २,२६७ ।

५. सोऽब्रवीत् (बृहस्पतिः प्रजापतिम्) क्रौञ्चं साम्नो वृणे ब्रह्मवर्चसमिति । जैउ १,१६,२,१२ ।

**क्रुमुक** ( वृक्ष-)- अग्नि- १३४; ४४९ द्र. ।

**क्रूर-** सङ्ग्रामो वै क्रूरम् । माश १, २, ५, १९ ।

**क्रोध-**

१. अथ य एने ( श्रद्धाऽश्रद्धे ) सोऽन्तरेण पुरुषः । कृष्णः पिङ्गाक्षो दण्डपाणिरस्थात्क्रोधो वै

---

१. हंसः सर्वप्राणिहृदि स्थितो जीवात्मा तद्रूपधारीन्द्रः, क्रुङ् क्रौञ्चपक्षी, आङ्गिरसः सर्वाङ्गसम्बन्धिसारयुक्तः पुष्टशरीर इत्यर्थ इति सा. ।

सो ऽभूत् । माश ११, ६, १,१३ ।

२. वराहं क्रोधः ( गच्छति ) । गो १, २, २ ।

क्रोश ( सामन्- )-

१. एतेन वा इन्द्रः इन्द्रक्रोशे विश्वामित्रजमदग्नी इमा गाव इत्यक्रोशत् पशूनामवरुध्यै क्रोशं क्रियते । तां १३, ५,१५ ।

२. क्रोशेनैव स्वर्गं लोकमगच्छन्ननुक्रोशेनास्मिन् प्रत्यतिष्ठन् । जै २, ४०० ।

३. देवानां वा अन्तं जग्मुषामिन्द्रियं वीर्यमपाक्रामत् तत्क्रोशेनावारुन्धत तत् क्रोशस्य क्रोशत्वम् । तैसं ७, ५, ८, १ ।

क्रोष्टृ- क्रोष्टा मायोः । मै ३, १४, १३ ।

क्रौञ्च- कुञ्च- द्र. ।

क्लीब- क्लीबं सीसेन विध्यति ।······क्लीबं दन्दशूकाः । तै १,७,८,२ (तु. मै २,४,२; काठ १२,११) ॥ [°ब- अनृत- ५द्र. ] ।

क्लैब्य-

१. रेतो हि वा एतस्माद्वाजिनमपक्रामत्यथैष क्लैब्याद् विभाय । तैसं २, ३, ३,४ ।

२. सोमाय वाजिने श्यामाकं चरुं निर्वपेद्यः क्लैब्याद् बिभीयात् । तैसं २, ३,३,४ ।

क्लोमन्-

१. क्लोमा वरुणः । माश १२, ९, १, १५ ।

२. क्लोम्नो वै त ९ ( मेधम् ) हृदयान् प्लाक्षारय ९ स्तस्मादेतत् सुषिरम् । मै ३,१०, २ ।

३ वल्मीकान् क्लोम्ना ( प्रीणामि ) । तैसं ५, ७, १६, १; मै ३, १५, ७; काठ ५३, ६ ।

क्लल- यत् क्लैः ( आतञ्च्यात् ), राक्षसं तत् । तैसं २, ५, ३, ५ ।

क्षत्तृ-

१. क्षत्तुर्गृहान्परेत्य सावित्रं द्वादशकपालं वाष्टाकपालं वा पुरोडाशं निर्वपति । माश ५,३,१,७ ।

२. प्रसविता वै क्षत्ता । माश ५,३,१,७ ।

३. सावित्रं द्वादशकपालं क्षत्तुर्गृह उपध्वस्तो दक्षिणा । तैसं १, ८,९,१-२ ।

४. सावित्रोऽष्टाकपालः क्षत्तुर्गृहे (+ प्रसूत्यै [मै ४,३,८]) । मै २,६,५; ४,३,८ ।

क्षत्र-

१. अथ विशोविशीयं सत्रसाम, क्षत्रेणाभिषिच्यमानोऽभिषिच्याता इति । अथो अयं सुन्वाणो विशोविशो राजासदिति । जै २, १९५ ।

२. अथाकामयत विश्वामित्रो राज्यं मे प्रजा गच्छेदिति । स एतं त्रयस्त्रिंशं स्तोममपश्यत् । तमाहरत् । तेनायजत । क्षत्रं वै त्रयस्त्रिंश स्तोमानाम् । ततो वै तस्य राज्यं प्रजागच्छत् । अष्टको हास्य प्रजायामभिषिषिचे । जै २, २१९ ।

३. अथैते रत्निनः क्षत्रस्य वा एतान्यङ्गानि यस्य वा एतान्योजस्वीनि भवन्ति, तद्राष्ट्रमोजस्वि भवति । मै ४,३,८ ।

४. अदो वै क्षत्रं यद् बार्हतम्। अथेदं विड् राथन्तरमिति। जै ३, २३१।
५. अपभ्रंशो ह वै ब्रह्मणः क्षत्रम्। जै २,२२३।
६. अपां य ऊर्मौ रसस्तेनाहमिमम्…ओजसे क्षत्रायाभिषिञ्चामि। काठ ३६, १५।
७. अयं वाऽअग्निर्ब्रह्म च क्षत्रं च। माश ६,६,३,१५।
८. अवलम्ब उ ह वै ब्रह्मणः क्षत्रं च विट् च। जै २,१२३।
९. आदित्यो वै दैवं क्षत्रमादित्य एषां भूतानामधिपतिः। ऐ ७, २०।
१०. इदम् उ वाव क्षत्रं यच् चतुश्चत्वारिंशं त्रैष्टुभम्। जै ३, २३१।
११. उभयमेव ब्रह्म च क्षत्रं चावरुन्धे राजा सन्नृषिर्भवति य एवं वेद। जै ३,९७।
१२. एतानि क्षत्रस्यायुधानि यदश्वरथः कवच इषुधन्व। ऐ ७, १९।
१३. एतानि वै क्षत्रे शिल्पानि हस्तिनिष्कोऽश्वतरी रथोऽश्वरथो रुक्मः कंसः। जै १,२६३।
१४. क्षत्रं वयो मयन्दं (मयन्तं [मै.]) छन्दः। तैसं ४, ३, ५, २; मै २,८,२; काठ १७,२।
१५. क्षत्रं वरुणः (राजन्यः [ऐ.; माश ५,१,५ ३;१३,१,५,३]) । ऐ ८,६; कौ ७,१०; १२,८; माश ४,१,४,१;५,१,५,३; १३,१,५,३; गो २,६,७।
१६. क्षत्रं वा एतदारण्यानां पशूनां यद्व्याघ्रः। ऐ ८,६।
१७. क्षत्रं वा एतदोषधीनां यद्दूर्वा (यद् व्रीहयः [ऐ ८,१६]) । ऐ ८,८;१६।
१८. क्षत्रं वा एतद्वनस्पतीनां यन्न्यग्रोधः। ऐ ७, ३१;८,१६।
१९. क्षत्रं वा एते साम्नां यद् बृहद्रथन्तरे। जै २,४२३।
२०. क्षत्रं वै त्रयस्त्रिंश स्तोमानाम्। जै २, २१९।
२१. क्षत्रं वै त्रिष्टुप् (पयः [माश.]) । कौ ७,१०; जै १, २६३;२७२;३५०; २,१९२; ३,२०५; ३०९; माश १२,७,३,८।
२२. क्षत्रं वै प्रजापतिः (बृहत् [जै २,४१६]) । जै २,४१६;३,३४।
२३. क्षत्रं वै प्रस्तरो विश इतरं बर्हिः। माश १,३,४,१०।
२४. क्षत्रं वै लोकम्पृणा (इष्टका) (+ विश इमा इतरा इष्टकाः [माश ८, ७,२,२]) । माश ८, ७,२,२;९,४,३,५।
२५. क्षत्रं वै वरुणः (स्वार्हः [जै.]) । काठ ३६,७; जै २,१९७; माश २,५,२,६;३४।
२६. क्षत्रं वै वैश्वानरः (°रो विण्मरुतः [काठ.]) । मै ३, ३, १०; काठ २१,१०; माश ६,६,१, ७;९,३,१,१३।
२७. क्षत्रं वै श्रीः (श्रेयः [मै.]) । मै ४,२,६; जै १,२७२ (तु. जै २,१४०;२७५)।
२८. क्षत्रं वै साम (+ विट् शस्त्रम् [जै २,४६]) । गो २,५,७; जै २,४६; माश १२,८,३,२३।
२९. क्षत्रं वै सोमः (स्तोत्रम् [ष.]) । जै ३,२४; १९१; माश ३,४,१,१०; ९,३,३; ७;५,३,५, ८; ष १,४ (तु. ऐ २,३८; कौ ७,१०;९,५;१०,५;१२,८; जै १,९०)।
३०. क्षत्रं वै स्विष्टकृत् (होता [ऐ.; गो.]) । ऐ ६,२१; गो २, ६, ३; माश १२,८,३,१९।
३१. क्षत्रं हि ग्रीष्मः (राष्ट्रम् [ऐ.]; साम [जै.]) । ऐ ७,२२; जै १,८८; माश २,१,३,५।
३२. क्षत्रं चतुश्चत्वारिंशः (त्रयस्त्रिंशः [ जै २,१०५]; त्रिष्टुप् [कौ., माश.]) । कौ ३,५; जै २, १०५;२७९;३,३०९; माश ३,४,१,१०।

३३. क्षत्रं तेन यत् त्रैष्टुभम् (पंचदशस्तोमः) । जै ३,२६[१] ।
३४. क्षत्रं तेन यद् ऐन्द्रम् (बार्हतम्) । जै ३,२६[२] ।
३५. क्षत्रं त्रिवृत् यत् स वज्रस् तेन क्षत्रम् । जै ३,३३८ ।
३६. क्षत्रमश्वः (क्षत्रमसावादित्यः [जै २.३४४]) । जै २,२७५ ।
३७. क्षत्रमिन्द्रः ( + क्षत्रियेषु ह पशवो ऽभविष्यन् [माश.] ) । जै १,१८२; माश ४,४,१,१८ ।
३८. क्षत्रमिव श्रियां भूयासम् । ऐआ ५,१,१ ।
३९. क्षत्रमुपांशुयाजः । माश ११,२,७,१५ ।
४०. क्षत्रमु विशो ज्यायः (°मु वै वाक् [जै २,१९६]) । जै २,३२;१९६ ।
४१. क्षत्रमेका ( कामदुघा ), तां राजानुचर्य्येण ( अन्विच्छन्ति ) । जै २,८४ ।
४२. क्षत्रमेतद् यत् पार्थम् (सोमसामनी) । जै ३,२६[२] ।
४३. क्षत्रं पञ्चदशः (पृष्ठ्यः [जै २,४२९])। मै ४,४,१०; ऐ ८,४; जै २,३२; तां १९,१७,३ ।
४४. क्षत्रं बृहत् ( बृहती [जै २,१४२]) । ऐ ८,१;२; जै १,१२८;२,११९;१९२; ३,३१६ ।
४५. क्षत्रं माध्यन्दिनं सवनम् । कौ १६,४ ।
४६. क्षत्रस्य वाऽ एतद्रूपं यद्राजन्यः (यद्रात्रिः [माश १३,१,५,५]) । माश १३,१,५,३;५ ।
४७. क्षत्रस्य विडनुवर्त्मा । जै १,९५; २,१९७; ३,२०५ ।
४८. क्षत्रस्येव प्रकाशो भवति । जै १,२४३ ।
४९. क्षत्रस्यैतद्रूपं यद्धिरण्यम् । माश १३,२,२,१७ ।
५०. क्षत्रायैवैतद्विशं कृतानुकरामनुवर्तमानं करोति । माश २,५,२,३४ ।
५१. क्षत्रेण दक्षिणं पक्षम् (अचिनुत) । तैसं ५,६,१०,१; मै ३,४,८ ।
५२. क्षत्रेण मनुष्यान् ( इन्द्रो दाधार ) । तैसं ४,४,८,१ ।
५३. क्षत्रेण यशसा सह ……तस्य दोहमशीमहि । तैआ ४,२१,१ ।
५४. गायत्री नामेष्टिरथो आहुः क्षत्रस्य संवर्ग इति । काठ १०,७ (तु. मै २,१,११) ।
५५. तदेतद् ब्रह्म च क्षत्रं च सन्धायान्ततः पाप्मानमपहतः । जै १,२३२ ।
५६. तद्यत्र ब्रह्मणः क्षत्रं वशमेति तद्राष्ट्रं समृद्धं तद्वीरवदाहास्मिन् वीरो जायते । ऐ ८,९ ।
५७. तस्य नार्तिर्न ह्वला भवति ब्रह्मणा च क्षत्रेण चोभयतः परिगृहीतस्य । काश ७,२,४,५ ।
५८. तस्य ( बृहस्पतिसवस्य ) अष्टशतं स्तोत्रिया भवन्ति । ततो यच् छतं सा विराट् । क्षत्रं विराट् । अथ या अष्टौ सा गायत्री । तेजोब्रह्मवर्चसं गायत्री । तेज एव तद्ब्रह्मवर्चसं क्षत्रस्य पुरस्ताद्दधाति । तस्माद्ब्राह्मणः क्षत्रियस्य पुरोहितः । जै २,१३१ ।
५९. त्रैष्टुभं क्षत्रस्य रूपम् । जै ३,२१ ।
६०. द्वयं वावेदं ब्रह्म चैव क्षत्रं च । तदुभयं द्रोणकलशे । जै १,७८ ।
६१. धाता क्षत्राय ( जुहोतु ) । तैसं ३, ३, १०, १ ।
६२. निरुक्तमिव हि क्षत्रम् । माश ९, ३, १, १५ ।
६३. प्रजापतिर्वै क्षत्रम् । माश ८ २, ३,११ ।
६४. प्राणो हि वै क्षत्रं त्रायते हैनं प्राणः क्षणितोः प्र क्षत्रमात्रमाप्नोति क्षत्रस्य सायुज्य ँ सलोकतां जयति य एवं वेद । माश १४, ८, १४, ४ ।

६५. ब्रह्म क्षत्रेण राज्ञि समनमद् , विशे समनमत् । तैसं ७, ५, २३, २ ।
६६. ब्रह्म च क्षत्रं च पयस्वितमे । मै ४, ५, ८ ।
६७. ब्रह्मणः क्षत्रं निर्म्मितम् । तै २, ८, ८, ९ ।
६८. ब्रह्मणश्च त्वा क्षत्रस्य चौजसे जुहोमि (इन्द्र) । तैसं ३, ३, १, १-२ ।
६९. ब्रह्मणा च क्षत्रेण च संयुग्भ्यां स्वर्गं लोकं गच्छामेति । जै २,११९ ।
७०. ब्रह्मणा च हैव क्षत्रेण च सयुग्भ्यां द्विषन्तं पाप्मानं भ्रातृव्यं हन्ति य एवं वेद । जै २,२३३ ।
७१. ब्रह्मणि वै क्षत्रं प्रतिष्ठितम् । काठ ३७, ११ ।
७२. ब्रह्मणैव क्षत्र ॅस ॅश्यति, क्षत्रेण ब्रह्म । तैसं ५, १, १०, ३ ।
७३. ब्रह्मपुरोहितं क्षत्रम् (+अत्यन्यानि क्षत्राणि [काठ १९, १०) । काठ २७, ४; क ४२, ४ ।
७४. ब्रह्म वै क्षत्राज्ज्यायः । जै २, ३२ ।
७५. ब्रह्म वै त्रिणवः, क्षत्रं त्रयस्त्रिंशः । जै २, ३२७ ।
७६. ब्रह्म वै त्रिवृत् क्षत्रं पञ्चदशः । जै १, २३२; २, ३२७ ।
७७. ब्रह्म वै मित्रः, क्षत्र ॅ वरुणः । तैसं ५,१,९,३; मै ४,५,८; काठ १९, ७; २४,३; क ३०,५
७८. ब्रह्म वै रथन्तरं क्षत्रं बृहत् (चतुश्चत्वारिंशः [जै २, १६४]) । जै २,१०३; १३२;१६४
७९. ब्रह्म हि पूर्वं क्षत्रात् । तां ११, १, २ ।
८०. भुव इति ( प्रजापतिः ) क्षत्रम् ( अजनयत ) । माश २, १, ४, १२ ।
८१. सामभ्युदयेत्यूर्ध्वा दिक् ( आदित्याय ) प्रायच्छत् क्षत्रं च राष्ट्रं च । जै २, २५० ।
८२. मित्रः क्षत्रं क्षत्रपतिः । तै २, ५, ७, ४; माश ११, ४, ३, ११ ।
८३. यत्सुरा भवति क्षत्ररूपं तदथो अन्नस्य रसः । ऐ ८, ८ ।
८४. यत् स्तोभवत् ( साम ), तत् क्षत्रम् । जै १, १२४ ।
८५. यस्तान्तवं वस्ते क्षत्रं वर्द्धते न ब्रह्म । गो १, २, ४ ।
८६. यां ( दक्षिणाम् ) भीषा (ददाति), क्षत्रं तया ब्रह्मात्ति । मै ४, ८, ३ ।
८७. यो जन्यो मित्रं स नैय्यग्रोधेन (पात्रेणाभिषिञ्चति) । मित्रेण वै क्षत्र ॅ व्यवततमवरोधैर्न्यग्रोधो, मित्रेण वा एतत् क्षत्र ॅ व्यवतनोति द्रढिम्नेऽशिथिरत्वाय । मै ४, ४, २ ।
८८. स ॅ शितं मे ब्रह्म स ॅ शित ॅ वीर्यं बलम् । स ॅ शितं क्षत्रं मे जिष्णु यस्याहमस्मि पुरोहितः । ब्रह्म क्षत्र ॅ सयुजा न व्यथेते ब्रह्माह क्षत्रं जिन्वति क्षत्रियस्य । क्षत्रं ब्रह्म जिन्वति ब्राह्मणस्य यत् समीची कृणुतो वीर्याणि । मै २, ७, ७ (तु. मै ३,१,९) ।
८९. सैषा क्षत्रस्य योनिर्यद्ब्रह्म । माश १४, ४, २, २३ ॥ [°त्र- अग्नि- ५३५; अधिवास-; अनुष्टुभ्- ३५; अन्तरिक्ष- १२५; अभिप्लव-; अमावास्या- २०; अहन्- ३४; इन्द्र- ६५; २१५; २४४; ३०८; इन्द्राग्नि- ४५; ओजस्- ५; १८ द्र.] ।

क्षत्रिय-

१. अथास्य ( क्षत्रियस्य ) एष स्वो भक्षो न्यग्रोधस्यावरोधाश्च फलानि चौदुम्बराण्याश्वत्थानि प्लाक्षाण्यभिपुणुयात्तानि भक्षयेत्सोऽस्य स्वो भक्षः । ऐ ७, ३० ।
२. अन्नं वै क्षत्रियस्य विट् । माश ३, ३, २, ८ ।
३. अपरिमितो वै क्षत्रियः । ऐ ८, २० ।
४. अभिगन्तैव ब्रह्म कर्ता क्षत्रियः । माश ४, १, ४, १ ।

५. एतद्ध त्वेवानवक्लृप्तं यत्क्षत्रियोऽब्राह्मणो भवति तस्मादु क्षत्रियेण कर्म करिष्यमाणेनोपसर्तव्य एव ब्राह्मणः। माश ४, १, ४, ६।

६. एतद्वै परार्ध्यमन्नाद्यं यत्क्षत्रियः। कौ २५, १५।

७. एतर्ह्यपि ब्राह्मणः क्षत्रियमाश ९ समानोऽनुचरति। काश २, २, १, १६।

८. क्षत्रिय उ वा अरण्यस्यातिनेता (अन्नाद्यस्य प्रदाता [जै २,३६४; ३,१९१]) । जै २,४२३।

९. क्षत्रिय उ वै पशूनां प्रदाता। जै १, ३४८।

१०. क्षत्रियस्यो अयं ( पृथिवी- ) लोकः। जै २, १९२।

११. क्षत्रियो ऽजनि विश्वस्य भूतस्याधिपतिरजनि विशामत्ता ऽजन्यमित्राणां हन्ता ऽजनि ब्राह्मणानां गोप्ता ऽजनीति। ऐ ८, १७।

१२. क्षत्रियो विश्यध्यूढः। जै २, १४०; ३४४; ४१६।

१३. तस्मात्क्षत्रियं प्रथमं यन्तमितरे त्रयो वर्णाः पश्चादनुयन्ति। माश ६, ४, ४, १३।

१४. तस्मादु क्षत्रियमायन्तमिमाः प्रजा विशः प्रत्यवरोहन्ति तमधस्तादुपासते। माश ३,९,३,७।

१५. तस्मादु क्षत्रियो भूयिष्ठं हि पशूनामीष्टे। गो २, ६, ७।

१६. तस्माद्ब्राह्मणः क्षत्रियस्य पुरोहितः। जै २, १७१; ३४०।

१७. तस्मान्न कदाचन ब्राह्मणश्च क्षत्रियश्च वैश्यं च शूद्रं च पश्चादन्वितः। माश ६, ४, ४, १३।

१८. नैन ९( क्षत्रियम् ) सुरा पीता हिनस्ति। काठ १२, १२।

१९. ब्राह्मणश्च वैश्यश्च क्षत्रियमधस्तादुपासाते। जै १,२८५।

२०. ब्राह्मणेन क्षत्रियाय न द्रोग्धव्यं, न क्षत्रियेण ब्राह्मणाय। जै १,२८७।

२१. य ९ हि वाग्जुषते स क्षत्रियः। मै ३,७,५ (तु. काठ २४,३)।

२२. यजुर्वेदं क्षत्रियस्याहुर्योनिम्। तै ३,१२,९,२।

२३. यदा वै क्षत्रियं श्रद्धा विन्दति ब्राह्मणं वात्र स तर्हीच्छति। सोऽस्मै (ब्राह्मणाय) ददाति। जै १, २६६।

२४. यान्येतानि देवत्रा क्षत्राणीन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशान इति क्षत्रात्परं नास्ति तस्माद्ब्राह्मणः क्षत्रियमधस्तादुपास्ते राजसूये। माश १४,४,२,२३।

२५. विशा वै क्षत्रियो बलवान् भवति। माश ४,३,३,६।

२६. स (क्षत्रियः) ह दीक्षमाण एव ब्राह्मणतामभ्युपैति। ऐ ७,२३।

क्षपा- रात्रयः क्षपाः। ऐ १, १३।

क्षय-

१. क्षयो वै देवाः। काठ ३७, १७; गो २. २,१३ (तु. तैसं ३,५,२,२)।

२. रश्मिरसि क्षयाय त्वा क्षयं जिन्व। तैसं ४,४,१,१ ॥ [°य- अन्त- २ द्र.]।

क्षवथु- अथ ह स्म ततः (इन्द्रस्य छिद्रेभ्यः सोमस्य निर्गमनान्तरम्) पुरा क्षुत्वैव म्रियन्ते…तस्माद् इदमप्येतर्हि क्षुक्वांसमाहुर्जीवेति। जै २, १५६।

क्षिप्र- यद्वै क्षिप्रं तत्तूर्त्तम्। माश ६, ३,२,२।

क्षिप्र-श्येन- क्षिप्रसेनस्य (क्षिप्रसेनाय [मै.]) वर्तिका। तैसं ५,५,११,१; मै ३,१४,११; काठ ४७,१।

क्षीर- यदत्यक्षरत् तत् क्षीरस्य क्षीरत्वम्। जै २,२२८ ॥ [°र- क्रुञ्च्- ३ द्र.]।

क्षुद्र->क्षुद्र-सूक्त- सोऽब्रवीदहमिदं सर्वमसानि यच्च क्षुद्रं यच्च महदिति ते क्षुद्रसूक्ताश्चा-भवन्महासूक्ताश्च । ऐआ २,२,२ ।

क्षुध्-

१. क्षुत्खलु वै मनुष्यस्य भ्रातृव्यः । तैसं १, ६, ७, ४;२,४,१२,६ ।

२. क्षुद्दुदारं (°दरं [क.]) पाप्मा भ्रातृव्यः । काठ २३, ४; क ३६, १ ।

३. भूतानि क्षुधमघ्नन्त्सद्यो मनुष्या अर्धमासे देवा मासि पितरः संवत्सरे वनस्पतयः । तैसं २,५,६,६ ।

क्षुमा- अथ ययाऽऽपैव राध्नोति सा तृतीया सासौ द्यौः सैषा क्षुमा ( इषुः ) नाम । माश ५,३,५,२९ ।

क्षुर- असौ वाऽआदित्यः क्षुरो भ्रजश्छन्दः । माश ८,५,२,४ ।

क्षेत्र-

१. असौ (द्यौः) वै क्षेत्रस्य पतिरमुतो वर्षति । काठ ३०,४ ।

२. इयं वै क्षेत्रं पृथिवी । कौ ३०, ११; गो २,५,१० ।

३. इयं [+ वै (पृथिवी) [तैसं.]] क्षेत्रस्य पतिः । तैसं २,२,१,५; काठ ९,१७; २६,१; क ४०,४ ।

४. इयं (पृथिवी) क्षेत्रस्य पत्नी । मै २,१,१; ४,३,१ ।

५. क्षेत्रस्य पतये चरुः । मै २,६,१३ ।

क्षेत्र-पति- सोमो वै देवानां क्षेत्रपतिः । जै १, ८४ ।

क्षैत्रपत्य- क्षैत्रपत्यं चरुं निर्वपेज्जनतामागत्य । तैसं २,२,१,५ ।

क्षेम-

१. अनु मामातपेति पृथिवी (आदित्याय) प्रायच्छत् क्षेमं च विमोकं च । जै २, २५-२६ ।

२. क्षेम इति वाचि । तैआ ९,७,२; तैउ ३,१०,२ ।

३. तत् (स्थूरू यवाचितम् ) स्थूरि भवति क्षेमस्य रूपम् । जै २,२०३ ।

४. यत्प्रक्रमान् प्रक्रामति यामं तेन दाधार, यदुपतिष्ठते क्षेमं तेन । काठ १९,१२ ।

५. यदास्ते । स क्षेमः । तै ३,३,३,३ ।

क्षेम्य- यायावरः क्षेम्य(°म° [काठ., क.]) स्येशे तस्माद् यायावरः क्षेम्यमध्यवस्यति (+ मुष्टी-करोति, वाचं यच्छति; यज्ञस्य धृत्यै [तैसं.]) । तैसं ५,२,१,७ । काठ १९,१२; क ३१,२ ।

क्षैत्रपत्य- क्षेत्रपति- द्र. । क्षौम- उल्ब- ४ द्र. ।

## ख

ख- छिद्रं खमित्युक्तम् । गो २, २, ५ ।

खड्ग- खड्गो वैश्वदेवः । मै ३, १४, २१ ।

खदिर (वृक्ष-)-

१. अस्थिभ्य एवास्य ( प्रजापतेः ) खदिरः समभवत् । तस्मात्स दारुणो बहुसारः । माश १३, ४,४,९ ।

२. एतत्खलु वै पर्णस्य सारं यत् खदिरः । मै ३, ९, ३ ।

३. खदिरेण ह सोममाचखाद । तस्मात्खदिरो यदेनेनाखिदत् । माश ३,६, २, १२ ।
४. यः ( वषट्कारकृत-गायत्रीशिरश्छेदादुद्भूतो रसः ) पृथिवीं प्राविशत्, स खदिरोऽभवत् । तैआ ५, २, ३-४ ।
५. वषट्कारो वै गायत्रियै शिरोऽच्छिनत्, तस्यै रसः पराऽपतत्, स पृथिवीं प्राविशत् स खदिरोऽभवत् । तैसं ३, ५, ७, १ ।

खादिर-
१. खादिरं ( यूपं करोति ) बलकामस्य । ष ४, ४ ।
२. खादिरं ( यूपं कुर्वीत ) स्वर्गकामः । कौ १०, १ ।
३. षट् खादिराः ( यूपाः ) । तेजसोऽवरुध्यै । तै ३, ८, २०, १ ।
खादिरी- यत्खादिर्यभ्रिर्भवति । छन्दसामेव रसेन यज्ञस्य शिरः सम्भरति । तैआ ५,२,४ ।

खर्जूर- यतीन् वै सालावृकेया आदँस्तेषामेतानि शीर्षाणि यत् खर्जूराः । काठ ३६, ७ । [°र- इन्द्र- १८९; करीर- ५ द्र. ] ।

खल- उत्तरवेदि- ३ द्र. ।

खाद-
१. अन्तो वै खादः । ऐ ५,१२ ।
२. आदकां खादेन ( प्रीणामि ) । काठ ५३, १ ।

खिल- यद्वा उर्वरयोरसंभिन्नं भवति खिलमिति (खिल इति [माश.]) वै तदाचक्षते । कौ ३०, ८; माश ८, ३, ४, १ ।

ख्यातृ- संवत्सरो वै ख्याता । काठसंक १२२ : ३ ।

# ग

गण- मरुतो गणानामधिपतयः । तैसं ३, ४, ५,१ ।
गण-पति->गाणपत्य- रुद्रस्य गाणपत्यान् (°त्ये [काठ.] मयोभूरेहि । तैसं ४, १, २, २; मै २, ७, २; ३, १, ३; काठ १६, १ ।

गण्डूपद- यानि स्नावानि ते गण्डूपदाः ( अभवन् ) । ऐ ३,२६ ।

गतनिधन (सामन्-)-
१. गतनिधनं वाभ्रवं भवति गत्यै । तां १५, ३, १२ ।
२. वभ्रुर्वा एतेन कौम्भ्यो ऽञ्जसा स्वर्गं लोकमपश्यत् स्वर्गस्य लोकस्यानुख्यात्यै स्वर्गाल्लोकान्न च्यवते तुष्टुवानः । तां १५, ३, १३ ।

गतश्री- त्रयो वै गतश्रियः शुश्रुवान् ग्रामणी राजन्यस्तेषां महेन्द्रो देवता । तैसं २, ५, ४,४ ।

गति- गतिरिति पादयोः । तैआ ९,१०,२; तैउ ३,१०,२ ॥ [°ति- आदित्य- ४२; इति- द्र.] ।

गन्ध-
१. गन्धं हिरण्यस्य (आदित्य आदत्त ) । जै २,२६ ।
२. गन्धर्वाप्सरसो ( गाम् ) अदुह्र पुष्करपर्णेन पुण्यं गन्धम् । मै ४,२,१३ ।
३. गन्धो मे मोदो मे प्रमोदो मे । तन्मे युष्मासु ( गन्धर्वेषु ) । जैउ ३,५,६,४ ।

४. सोम इव गन्धेन ( भूयासम् ) । मं २,४,१४ ।
५. सोमो गन्धाय (भूयासम् )। तां १,३,९; सा ३,८,१ ॥ [°न्ध- अप्सरस् ३ द्र.]।

**गन्धर्व-**

१. अग्निर्ह गन्धर्वः । माश ९,४,१,७ ।
२. असौ वाऽ आदित्यो दिव्यो गन्धर्वः । माश ६,३,१,१९ ।
३. ऋश्यो मयूरः सुपर्णस्ते ( श्येनस्ते [काठ.] ) गन्धर्वाणाम् । मै ३,१४,१८; काठ ४७,६ ।
४. गन्धर्वान्छेपेन ( प्रीणामि ) । तैसं ५,७,१५,१; काठ ५३,५ ।
५. गन्धर्वाः सप्तविंशतिः ( गन्धर्वाः =नक्षत्राणि ) । माश ५,१,४,८ ।
६. गन्धर्वो अस्य रशनामगृभ्णात् । काठ ४०,६ ।
७. चन्द्रमा गन्धर्वः । माश ९,४,१,९ ।
८. तं ( सोमम् ) ह्यग्नयो गन्धर्वा जुगुपुरेत एव धिष्ण्याः । त उ एवाशीविषाः । जै १,२८७ ।
९. तमेते गन्धर्वाः सोमरक्षा जुगुपुरिमे धिष्ण्या इमा होत्राः । माश ३,६,२,९ ।
१०. तस्यै (वाचे) गन्धर्वा वेदानेव प्रोचिरे । माश ३,२,४,५।
११. ते गन्धर्वा अन्वागत्य ( देवान् ) अब्रुवन् सोमो युष्माकं वागेवास्माकमिति । माश ३,२,४,४।
१२. त्रयो गन्धर्वाः । तेषामेषा भक्तिः । अग्नेः पृथिवी, वायोरन्तरिक्षम्, असावादित्यस्य द्यौः । जै २,२४१ ।
१३. पंचविंशेन स्तोमेन बृहतीमभ्यक्रन्दत् । ततो गन्धर्वानसृजत मिश्रमुखान् । जै ३,३८१ ।
१४. प्राणो वै गन्धर्वः । जैउ ३,६,८,३ ।
१५. मनो ( यज्ञो [माश ९,४,१,११] ) गन्धर्वः । माश ९,४,१,१२ ।
१६. योषित्कामा वै गन्धर्वाः । माश ३, २,४, ३; ९, ३,२० (तु. तैसं ६, १,६, ५; मै ३, ७, ३; काठ २४, १; क ३७,२; ऐ १,२७; कौ १२,३) ।
१७. रूपमिति गन्धर्वाः ( उपासते ) । माश १०,५,२,२० ।
१८. वातो गन्धर्वः । माश ९,४,१,१० ।
१९. वायुर्वा त्वा मनुर्वा त्वा गन्धर्वाः सप्तविंशतिः । ते अग्रे अश्वमयुञ्जंस्ते अस्मिन् जवमादधुः तैसं १,७,७,२; मै १,११,१ ।
२०. सूर्यो गन्धर्वः । माश ९,४,१,८॥ [°र्व–अथर्वन्– १६; अप्सरा–, अश्व– ८७; आयुत– १द्र.]।

**गन्धर्व-गण-** अथ गन्धर्वगणाः । स्वानभ्राट् । अङ्घारिर्बम्भारिः । हस्तः सुहस्तः । कृशानुर्विश्वावसुः । मूर्धन्वान्सूर्यवर्चाः । कृतिरित्येकादश गन्धर्वगणाः । तैआ १, ९, ३ ।

**गन्धर्व-गृहीता-** कुमारी- १; ३ द्र. ।

**गन्धर्वाप्सरस्,रा-**

१. अथो गन्धेन च वै रूपेण च गन्धर्वाप्सरसश्चरन्ति । माश ९, ४, १, ४ ।
२. उपद्रवं गन्धर्वाप्सरोभ्यः (प्रजापतिः प्रायच्छत्) । जैउ १, ३,२, १ ।
३. ऋतधामा नाम लोको वयोभिर्विष्टो गन्धर्वाप्सरसो गोप्तारो वायुरधिपति श्वेतं रूपं प्राणे प्रतिष्ठितः । जै ३, ३४८ ।

४. एते खलु वै गन्धर्वाप्सरसो यद्राष्ट्रभृतः । तैसं ३, ४, ८, ४ ।
५. गन्धर्वाप्सरसो वा एतमुन्मादयन्ति य उन्माद्यति । तैसं ३, ४, ८, ४ ।
६. गन्धर्वाप्सरसो वै मनुष्यस्य प्रजाया वाऽप्रजस्ताया वेशते । तां १९, ३, २ ।
७. गन्धर्वाप्सराभ्यः स्रगलङ्करणे । तैआ ३, १०, ३ ।
८. नैयग्रोध औदुम्बर आश्वत्थः प्लाक्ष इतीध्मो भवत्येते वै गन्धर्वाप्सरसां गृहाः, स्व एवैनामायतने शमयति । तैसं ३, ४, ८, ४-५ ।
९. भद्रा गन्धर्वा अप्सरसः सुदृंसः । काठसंक ६२ :७ ॥ [°रस्- गन्ध- २ द्र.] ।

गभः- विड् वै गभः । तै ३, ९, ७, ३; ५; माश १३, २,९, ६ ।

गभस्ति-

१. पाणी वै गभस्ती । माश ४, १, १, ९ ।
२. तस्य ( इन्द्रस्य ) हस्तौ गभस्ती । काठ २७, १ ।

गभस्ति-पूत- वाचस्पतये पवस्व विष्णो अंशु ९ भ्यां गभस्तिपूतः । मै १, ३, ४ ।

गभीर- गभीरमिममध्वरं कृधीति । अध्वरो वै यज्ञो महान्तमिमं यज्ञं कृधीत्येवैतदाह । माश ३, ९, ४, ५ ।

गय-

१. प्राणा वै गयाः । माश १४, ८, १५, ७ ।
२. स यदाह गयोऽसीति सोमं वा एतदाहैष ह वै चन्द्रमा भूत्वा सर्वांल्लोकान्गच्छति तद्यद्गच्छति तस्माद्गयस्तद्गयस्य गयत्वम् । गो १, ५, १४ ॥ [°य- अन्न- १७ द्र.] ।

गय-स्फान- गयस्फानः प्रतरणः सुवीर इति गवां नः स्फावयिता प्रतारयितैधीत्याह । ऐ १, १३ ।

गर्त-

१. पितृदेवत्यो वै गर्तः । माश ५, २, १, ७ ।
२. पुरुषो गर्तः । माश ५, ४, १, १५ ।

गर्दभ-

१. अथ यदासाः पा ९ सवः पर्यशिष्यन्त । ततो गर्दभः समभवत्तस्माद्यत्र पा ९ सुलं भवति गर्दभस्थानमिव वतेत्याहुः । माश ४, ५, १, ९ ।
२. अभि वा एष ( गर्दभः ) एतर्हि प्रजाः शोचयति । क ३०,३ ।
३. अश्वं पूर्वं नयन्ति गर्दभम् अपरं···, तस्माच् श्रेया ९ सं पूर्वं यन्तं पापीयान् पश्चादन्वेति । मै ३,१,३ ।
४. अश्वाद् गर्दभोऽसत्तरः । तैसं ५,१,२,१ ।
५. एष (गर्दभः) हि पशूनामनुपजीवनीयतमः । मै ३,१,३ ।
६. एषो (गर्दभः) ऽस्यां जीवितृतमः (जीविततमः [काठ.]) । काठ १९,२; क २९, ८ ।
७ गर्दभ एव स्थेमानं दधाति । तस्मादेष पशूनां भारभारितमः । काठ १९, ५; क ३०, ३ ।
८. गर्दभः सर्वमायुरेति । तस्माद् गर्दभे (+ पुराऽऽयुषः [तैसं.]) प्रमीते बिभ्यति । तैसं ५, १, ५,७; काठ १९,५; क ३०,३ ।

९. गर्दभेन संभरति तस्माद् गर्दभः पशूनां भारभारितमः । तैसं ५,१,५,५ ।

१०. गर्दभो द्विरेताः (+सन् कनिष्ठं पशूनां प्र जायतेऽग्निर्ह्यस्य योनिं निर्दहति [तैसं ५,१,५,५]) । तैसं ५,१,५,५; ७,१,१,२; जै १, ६७ (तु. ऐ ४, ९) ।

११. गर्दभोऽप्यनालेशेऽत्यन्यान् पशून् मेद्यति । तैसं ५,१,५, ५ ।

१२. पापीयान् ह्यश्वाद् गर्दभः । तैसं ५,१,२,२-३ ।

१३. भस्मन एव गर्दभोऽसृज्यत, तस्मात्स भस्मनः प्रतिरूपं तस्माद् म्रियमाणो जीवति। जै ३,२६४ ।

१४. रासभ इति ह्येतम् (गर्दभम्) ऋषयोऽवदन् । तैसं ५,१,५,७ ।

१५. वृषाऽग्निं वृषणं भरन्नित्याह, वृषा ह्येष (गर्दभः) वृषाऽग्निः । तैसं ५,१,५,७ ।

१६. सर्वेषां पशूनां गर्दभो वीर्यवत्तमः । मै ३,१,६ ।

गर्भ-

१. अनश्नन्तो गर्भाः प्राणन्ति । कौ २,२ ।

२. उत्तानेव वै योनिर्गर्भं बिभर्त्ति । माश ३,२,१,२९ ।

३. एष वै गर्भो देवानां य एष (सूर्यः) तपत्येष हीद९ सर्वं गृह्णात्येतेनेद९ सर्वं गृभीतम्। माश १४,१,४,२ ।

४. गर्भः प्राजापत्यः (समित् [माश.]) । माश ६,६,२,१५; तैआ १,१३,३ ।

५. गर्भाः पञ्चवि९शः (स्तोमः) । तैसं ४,३,८,१; मै २,८,४ ।

६. गर्भाः पञ्चवि९श इति दक्षिणतोऽन्नं वै पञ्चवि९शः । काठ २०,१३ ।

७. गर्भा जायमानाः पर्यावर्तन्ते । जै २, ३८१ ।

८. गर्भानेव वैरूपेण (साम्ना) दधाति । जै २,२ ।

९. गर्भान्वो वृञ्जे पाङ्क्तेन छन्दसा । मै ४,२,११ ।

१०. गर्भो (+वै [क ३०, ८]) दीक्षितः । काठ १९,१०; २३, २; क ३५, ८; माश ३,१,३,२८ ।

११. तस्मात्पराञ्चो गर्भाः सम्भवन्ति प्रत्यञ्चः प्रजायन्ते । तां १५, ५,१६ ।

१२. तस्य (मनुष्यस्य) वै सम्भविष्यतः प्राणा अग्रे प्रविशन्त्यथ रेतः सिच्यते । जै १,१७ ।

१३. दशमास्या गर्भा योनेश्च्यवन्ते प्रजात्यै । जै ३,२९० ।

१४. दशमे मासि गर्भा हिताः प्रजायन्ते । काठ २८,६ ।

१५. नाभ्यो ह वै धृता गर्भा अवाचीनबिलेभ्यो नावपद्यन्ते, नाभिधृता ह वै गर्भाः । जै १,३०६।

१६. न्यक्काङ्गुल्य इव हि गर्भाः । माश ३, २, १, ६ ।

१७. पञ्चमे मासि गर्भा विक्रियन्ते । जै १, २६७।

१८. पुरुष उ गर्भः । जैउ ३, ६, ८,३ ।

१९. प्रजा वै पशवो गर्भः । माश १३, २, ८, ५; तै ३, ९, ६, ४ ।

२०. प्रादेशमात्रो वै गर्भो विष्णुः । माश ६, ५, २, ८; ६, २, १२; ७, ५,१, १४ ।

२१. प्रावृता वै गर्भाः उल्बेनेव जरायुणेव । माश ३, २, १, १६ ।

२२. यदा वै गर्भः समृद्धो भवति प्रजननेन वै स तर्हि प्रत्यङ्ङेति । माश ४, ५, २, ३ ।

२३. यदा वै गर्भः समृद्धो भवत्यथ दशमास्यः । माश ४, ५, २, ४ ।

२४. यावद्धा अजातो गर्भो मातुर्वैव तावत्प्राणमनु प्राणिति । काश १, २, १, ६ ।
२५. यो वै षण्मास्यो जायते यस्सप्तमास्यः प्र वै स मीयते । काठ ३३, ८ ।
२६. वायव्या गर्भाः । तै ३, ९, १७, ५ ।
२७. विषुरूपा इव हि गर्भाः । माश ४, ५, २, १२ ।
२८. षण्मास्या वाऽ अन्तमा गर्भा जाता जीवन्ति । माश ९, ५, १, ६३ ।
२९. संवत्सरे वृद्धा गर्भाः प्रजायन्ते । मै १, ६, १२ ।
३०. संवत्सरो वाव गर्भाः पञ्चवि ꣹ शस्तस्य चतुर्वि ꣹ शतिरर्धमासाः संवत्सर एव गर्भाः पञ्चवि ꣹ शस्तद्यत्तमाह गर्भा इति संवत्सरो ह त्रयोदशो मासो गर्भो भूत्वऽर्तून्प्रविशति । माश ८, ४, १, १९ ॥ [°र्भ- अन्न- १९; आयु- ३; इन्द्रिय- १; उल्ब- ५ द्र.] ।

गर्मुत्-

१. ताः (प्रजापतिसृष्टाः प्रजाः) यत्रावसन् ततो गर्मुदुदतिष्ठत् । तैसं २, ४, ४, १ ।
२. ते (पशवः) यत्रावस ꣹ स्ततः शक्नो गर्मुदजायत । मै २, २, ४ (तु. तैसं २, ४, ४, २)।
३. ते (पशवः) यत्रावस ꣹ स्तद्गर्मुत ꣹ शक्नो जाताम् (पूषा) अविन्दत्, तामाच्छिद्याहरत् । काठ १०, ११ ।
४. पृश्निर् (पृथिवी) वै यददुहत् स गर्मुदभवत्…तस्याः (पृथिव्याः) वा एतच्छिरो यद् गर्मुतस्तस्मादेतदाण्डमिव पीयूष इव । मै २, २, ४ ।

गार्मुत-

१. यः पशुकामः स्यात् तस्मा एत ꣹ सोमापौष्णं गार्मुतं चरुं निर्वपेत् । तैसं २, ४,४, ३ ।
२. यः प्रजाकामः स्यात् तस्मा एतं प्राजापत्यं गार्मुतं चरुं निर्वपेत् । तैसं २, ४, ४,१ ।
३. सौमापौष्णं चरुं निर्वपेद् गार्मुतमप्सु प्रजाकामो वा पशुकामो वा । काठ १०, ११ ।

गवय- बृहस्पतये गवयान् (आलभते) । मै ३,१४, १० ॥ [°य- ऋषभ- ५ द्र.] ।

गवयी- वृषभाय गवयी । मै ३, १४, ११ ।

गवाशिर्-

१. गवाशीर्ज्जगती । तां १२, १, २ ।
२. पशवो गवाशिरः । जै १,९३ ।

गवेधुका-

१. यज्ञस्य शीर्षच्छिन्नस्य रसो व्यक्षरत्तत एता ओषधयो (गवेधुकाः) जज्ञिरे । माश १४, १, २, १९ ।
२. यत्र वै सा देवता (रुद्रः) विस्रस्ताशयत्ततो गवेधुकाः समभवन्त्स्वेनैवैनम् (रुद्रम्) एतद्भागेन स्वेन रसेन प्रीणाति (यजमानः) । माश ९,१,१,८ ॥ [°का- अक्षावाप- १ द्र.] ।

गह्वर- गह्वरोऽवस्थावानो नाम स्थ, तेषां व उत्तराद् गृहा आपो व इषवः । तैसं ५, ५, १०, ४ ।

गातु- गातुं वित्त्वेति यज्ञं वित्त्वेत्येवैतदाह । माश १, ९, २, २८; ४, ४, ४, १३ ।

गातु-विद्- गातुविदो हि देवाः । माश ४,४,४,१३ ।

गाथा-

१. ओमित्यृचः प्रतिगर एवं तथेति गाथाया ओमिति वै दैवं तथेति मानुषम् । ऐ ७, १८ ।

२. गाथाभ्यः स्वाहा, नाराश ँसीभ्यः स्वाहा, रैभीभ्यः स्वाहा । तैसं ७, ५, ११, २ ।

३. विवाहे गाथा गीयते । मै ३, ७, ३ ॥ [°था- अनृत- ९ द्र.] ।

गाथा-नाराश ँसी- यद्ब्रह्मणः शमलमासीत् सा गाथानाराश ँस्यभवत् । तै १,३,२,६ । [°सी- अनृत- ३१ द्र.] ।

गायत्-

१. गायन्त ँस्त्री कामयते न ब्रह्म वदन्तम् । काठ २४, १; क ३७, २ ।

२. तस्माद्‌ु गायतां ना ऽश्नीयात् । मलेन ह्येते जीवन्ति । जैउ १, १८, २, १ ।

३. गायते न देयम् । तैसं ५, १, ८, २ ।

गायत्र-

१. अग्निर्गायत्रः । माश १६,१,१,१५ ।

२. अध्वर्युस्त्रिवृता शीर्ष्णा गायत्रेणोद्गायति । इदं तच्छिरः प्रतिदधाति । जै २, ४०६;४०७ ।

३. अभिमातिहा (क्रमः), गायत्रं छन्द आरोह, पृथिवीमनुविक्रमस्व । तैसं ४, २,१,१ ।

४. अयातयाम वै गायत्रम् । जै ३,३०५ ।

५. इदमहं गायत्रेण च्छन्दसा त्रिवृता स्तोमेन रथन्तरेण साम्नाग्निना देवतया तेजस्ते वर्च आददेऽसौ । काठ ३६,१५ ।

६. इमे वै लोका गायत्रम् (साम) । तां ७,१,१ ।

७. उशिक्त्वं देव सोम । गायत्रेण च्छन्दसाग्नेः पाथ उपेहि । काठ ३०,६ ।

८. एकं वाव किल सामास, गायत्रमेव । जै १,३२१ ।

९. एष वै गायत्रो देवानां यत् सविता । तैसं ६,५,७,१ ।

१०. गायत्रं वाऽअग्नेश्छन्दः । माश १,३,५,४ ( तु. कौ १०,५;१४,२;२८,५) ।

११. गायत्रं वै (हि [गो.]) प्रातःसवनम् (रथन्तरम् [तां ५,१,१५]) । ऐ ६,२;९; गो २,३,१६; तां ५,१,१५;६,३,११; ष १,४ (तु. तैसं २,२,९,५;३,२,९,१; जै १,१४१; ३,५७; जैउ ४, २,१,२) ।

१२. गायत्रं वै व्रतस्य शिरः, तदु्धि ब्रह्म । जै २,४१५ ।

१३. गायत्रं साम ( हविर्धानम् [मै., काठ.]) । मै ३,४,४; काठ २१,१२; जैउ १,१,१,८ ।

१४. गायत्रं हि शिरः । माश ८,६,२,६ (तु. जै १,२९२;२,१८) ।

१५. गायत्रः (+उ वै [कौ., तै.]) प्राणः । कौ ८,५; जै २,२४२; तां २०,१६,५; तै ३,३,५,३ ।

१६. गायत्रं चक्षुः । तैसं ४,१,१०,५; मै २,७,८; काठ १६,८ ।

१७. गायत्रमेव हिंकारः । जै २,४३३ ।

१८. गायत्रः सप्तदशः स्तोमः । तां ५,१,१५ ।

१९. गायत्राः पशवः । तै ३,२,१,१ ।

२०. गायत्रेण रथन्तरम् (समर्धय)। तैसं ३,१,१०,१।
२१. गायत्रेऽस्मिंल्लोके गायत्रोऽयमग्निरध्यूढः। कौ १४,३।
२२. गायत्रोऽयं (भू-) लोकः। कौ ८,९।
२३. गायत्रो यज्ञः। गो १ ४,२४; जै २,४३१।
२४. गायत्रो वै देवानां सविता। मै ४,७,१।
२५. गायत्रो वै पुरुषः ( हि प्राणः [तैआ.]) । ऐ ४,३; तैआ ५,४,३।
२६. गायत्रो वै बृहस्पतिः ( मैत्रावरुणः [तां.]) । जै २,१३१; तां ५,१,१५।
२७. गायत्रो वै (हि [तैसं., मै.]) ब्राह्मणः। तैसं ५.१,४,५; मै ३,१,५, ऐ १,२८; जै २,१०२।
२८. गायत्रो हि यूपः। मै ३,९;३।
२९. घर्म या ते दिवि शुक्। या गायत्रे छन्दसि। या ब्राह्मणे या हविर्धाने तां त एतेनावयजे। तैआ ४,११,१।
३०. चन्द्रमा गात्रस्य (ज्योतिः)। जै १,२९२; २, ४३३।
३१. तम् (ताः [जै.]) एतदेव (गायत्रम्) साम गायन्नत्रायत। यद्गायन्नत्रायत तद्गायत्रस्य गायत्रत्वम्। जै १, १११; जैउ ३,६,९,४।
३२. तस्य (महाव्रतस्य) गायत्रं शिरः। तां १६,११,११।
३३. नमस्ते गायत्राय यत्ते शिर इति। ऐआ ५ १,२।
३४. पृथिव्यां विष्णुर्व्यक्रंस्त। गायत्रेण छन्दसा ततो निर्भक्तो योऽस्मान्द्वेष्टि यं च वयं द्विष्मः। माश १,९,३,१० (तु. काठ ५,५,५)।
३५. प्राणा एव सप्तममहर्गायत्रम्। जै ३,३१९।
३६. प्राणो (+ वै [जै १,१११; जैउ.]) गायत्रम्। जै १,१११;११२; २,२६; तां ७,१,९;३,७; जैउ १,१२,३,७ (तु. जै २,१८)।
३७. प्राणो वा एष प्रविशति यद् गायत्रम् (छन्दः)। जै २,१८।
३८. मनो वै गायत्रम्। जै ३,३०५।
३९. रेतो वा एतदग्रे प्रविशति यद् गायत्रं (छन्दः)। जैब्रा २,१८।
४०. रोहिणीर्वो वृञ्जे गायत्रेण छन्दसा। मै ४,२,११।
४१. वसवस्त्वा गायत्रेण छन्दसा संमृजन्तु। तां १,२,७।
४२. वसवस्त्वा परिगृह्णन्तु गायत्रेण छन्दसा। मै १.१,१०; क ३९,२।
४३. वसवस्त्वा पुनन्तु (प्रोहन्तु [जै १,७८]) गायत्रेण छन्दसा। जै १,७३;७८।
४४. वसवस्त्वा संमृजन्तु (पुरस्तादभिषिञ्चन्तु [तै.]) गायत्रेण छन्दसा। जै १, ८१; तै २,७,१५,५।
४५. सविता हि देवानां गायत्रः। काठ २८,७; क ४४,७।
४६. सुवर्णं गायत्रम् (छन्दः)। शांआ ११, ७।
४७. सोऽयास्य आङ्गिरसस्त्रिरनवानं गायत्रमगायत्। तेनेमांश्च लोकान् समजयत् प्राणापानव्यानांश्च समिमांश्च लोकाञ् जयति प्राणापानव्यानांश्च य एवं विद्वांस्त्रिरनवानं गायत्रं गायति। जै ३,२८१॥ [°त्र- अग्नि- ४७४;४७५; आयुस्- १७; ऐन्द्रवायव- २८.]।

**गायत्र-चित्**- यो जानुदघ्नस्स गायत्रचित् । काठ २१,४ ।

**गायत्र-छन्दस्**-

१. गायत्रं वै रथन्तरं गायत्रछन्दः । तां १५, १०, ९ ।

२. गायत्रछन्दा अग्निः ( अग्निः [तां ७, ८, ४.] ) । तां ७,८,४; १६, ५,१९ ।

३. गायत्रछन्दा वै ब्राह्मणः । तै १, १, ९, ६ ।

४. प्रातःसवने बहिष्पवमाने···श्यनोऽसि गायत्रछन्दाः । माश १२, ३, ४, ३ ।

५. यस्ते राजन् वरुणदुहः पाशो गायत्रच्छन्दाः पृथिवीमन्वाविवेश ब्रह्मणि प्रतिष्ठितः । काठ १७, १९ ।

६. श्येनो ऽसि गायत्रछन्दाः । तैसं ३, २, १, १ ।

**गायत्र-पार्श्व** ( सामन्- )-

१. अहर्वा एतदम्लीयत तद्देवा गायत्रपार्श्वेन समतन्व ५ स्तस्माद्गायत्रपार्श्वम् । तां १४,९,२६ ।

२. इमे वै लोका गायत्रपार्श्वम् । जै ३,२१४ ।

३. ते ऽब्रुवन् ( देवाः ) स्वर्गं लोकं गत्वा गायत्रं वाव नो ऽस्य साम्नः पक्षावभूतामिति । तदेव गायत्रपक्षस्य गायत्रपक्षत्वम् । गायत्रपक्षं ह वै नामैतत् । तद् गायत्रपार्श्वमित्याख्यायते । जै ३, २१४ ।

**गायत्र-मुख**- यस्माद्गायत्रमुखः प्रथमः ( त्रिरात्रः ) तस्मादूर्ध्वोऽग्निर्दीदाय । तां १०, ५, २ ।

**गायत्री**-

१. अग्निर्हि गायत्री । जै ३, १८४; १९१ ।

२. अथ गायत्री एकपदां द्विपदामक्षरपंक्तिं विष्टारपंक्तिं विराजमतिच्छन्दसममितं छन्द इत्येतानि मृगच्छन्दसानि प्राजायत । सैषा स्तोमानां च छन्दसां च प्रजापतिः । जै ३,३२४ ।

३. अथ माध्यन्दिनस्य पवमानस्य गायत्री । योऽयमवाङ् प्राणः ( पायुः ) एष एव सः । जै १, २५४ ।

४. अथ यान्यष्टावहानि सा गायत्री । तया देवा स्वर्गं लोकमायन् । जै ३, ९ ।

५. अयं वै ( पृथिवी- ) लोको गायत्री तृचाशीतिः । ऐआ १, ४,३ ।

६. अयमेव ( भूलोकः ) गायत्री । तां ७, ३, ९ ।

७. अयं पुरो भूस्तस्य प्राणो भौवायनो वसन्तः प्राणायनो गायत्री वासन्ती, गायत्र्या गायत्रं, गायत्रादुपा ५ शुरुपा ५ शोस्त्रिवृत् त्रिवृतो रथन्तरं, वसिष्ठ (°ष्ठा [मै.]) ऋषिः । मै २,७,१९; काठ १६,१९ ।

८. अष्टाक्षरा ( + वै [माश.]) गायत्री । ऐ २,१७; ३, १२; कौ ९, २; १९, ४; गो १,४,२४; ३,२,१०; जै १,११२; ३,१४१; २४२; तां ६, ३, १३; तै १, १,५, ३; माश १,४,१,३३; जैउ १,१,८ ।

९. अष्टौ वसवो ऽष्टाक्षरा गायत्री । तैसं ३,४, ९,६-७ ।

१०. अस्कन्नमेव तद्यत् प्रयाजेष्विष्टेषु स्कन्दति, गायत्र्येव तेन गर्भं धत्ते, सा प्रजां पशून् यजमानाय प्र जनयति । तैसं २, ६, १, ७ ।

११. अस्मादेवैनान् ( असुरान् देवाः पृथिवी- ) लोकाद् गायत्र्या ऽन्तरायन् । जै १, ९९

१२. इमे वै लोका गायत्री । तां १५, १०, ९ ।

१३. इयं [इयमेव (जैउ.) (पृथिवी)] वै गायत्री । मै १, ५, १०; ३, १,२; काठ १९, १; क २९, ८; जै १,३३९;२,१९; तां ७, ३, ११;१४,१,४; जैउ १, १७, ३, ३ ।

१४. एतद्धि (गायत्री) छन्द आशिष्ठम् । माश ८, २, ३, ९ ।

१५. एते वाव छन्दसां वीर्य्यवत्तमे यद्गायत्री च त्रिष्टुप् च । तां २०, १६, ८ ।

१६. एते ह खलु वै छन्दसां वीर्यतमे यद् विराट् च गायत्री च । जै २,३३५ ।

१७. एषा वै गायत्री ज्योतिष्पक्षा तयैव स्वर्गं लोकमेति । काठ २१, १०;२२,६; क ३४, १ ।

१८. एषा वै गायत्री पक्षिणी चक्षुष्मती ज्योतिष्मती भास्वती यद् द्वादशाहस्तस्य यावभितो ऽतिरात्रौ तौ पक्षौ यावन्तराग्निष्टोमौ ते चक्षुषी ये ऽष्टौ मध्य उक्थ्याः स आत्मा । ऐ ४, २३ ।

१९. गायत्रींल्लोमभिः प्रविशामि । काठ ३८, १४ ।

२०. गायत्रीं सर्वाणि छन्दांस्यपियन्ति । जै १,२९० ।

२१. गायत्री गायतेः स्तुतिकर्म्मणः । दै ३, २ ।

२२. गायत्री छन्दसाम् (मुखम्) । तां ६, १, ६ ।

२३. गायत्री छन्दो ऽग्निर्देवता शिरः । माश १०, ३, २, १ ।

२४. गायत्री छन्दोभिः (अवतु) । तैसं ७, ४, १२, १; काठ ४४, १ ।

२५. गायत्रीं छन्दः (प्रजापतिः शीर्षत एव मुखतोऽसृजत) । जै १, ६८ ।

२६. गायत्री त्वा छन्दसावतु त्रिवृत्स्तोमो रथन्तरं सामाग्निर्देवता ब्रह्म द्रविणम् । काठ १५,७ ।

२७. गायत्री देवेभ्यो ऽपाक्रामत् । तां देवाः प्रवर्ग्येणैवानुव्यभवन् । प्रवर्ग्येणाप्नुवन् । तैआ ५, ११,३ ।

२८. गायत्री पक्षिणी भूत्वा स्वर्गं लोकमपतत् । काठ २१, ४; क ३१, १९ ।

२९. गायत्री ब्रह्मवर्चसम् । (वाक् (मै)) । मै ४,३,१; जै १, ९३; तां ५,१,९; तै २,७,३,३ ।

३०. गायत्रीभिः पुरस्तात् सादयति । मै ३, ३, २ ।

३१. गायत्रीमेव प्रातस्सवनं संपद्यते, त्रिष्टुभं माध्यन्दिनं सवनं जगतीं तृतीयसवनम् । जै २,१०१ ।

३२. गायत्री वसूनाम् (पत्नी) । मै १, ९, २; काठ ९, १०; गो २, २, ९ (तु. तैआ ३,९,१) ।

३३. गायत्री वा ऽअग्निः । माश १, ८, २, १३ ।

३४. गायत्री वा ऽइयं (पृथिवी) । माश ४, ३, ४, ९; ५, २, ३, ५ (तु. तैसं ५, २, १, १; मै ४,३,१) ।

३५. गायत्री वाव सर्वाणि छन्दांसि । तां ८, ४, ४ ।

३६. गायत्री वै छन्दसामग्र्यं ज्यैष्ठ्यम् । जै २, २२७ ।

३७. गायत्री वै छन्दसामयातयाम्नी । जै ३, ३०५ ।

३८. गायत्री वै प्राची दिक् । माश ८, ३, १, १२ ।

३९. गायत्री वै प्राणः । माश १, ३, ५, १५ ।

४०. गायत्री वै प्रातःसवनं वहति, गायत्री माध्यन्दिनं सवनं, गायत्री तृतीयसवनम् । जै १,२८९ ।

४१. गायत्री वै यज्ञस्य प्रमा । काठ ३२, ४ ।

४२. गायत्री वै रथन्तरस्य योनिः । तां १५, १०, ५ ।
४३. गायत्री वै रेवती । तां १६, ५, १९ ।
४४. गायत्री वै श्येनः सोमभृत् । मैं ३, ७, ९ ।
४५. गायत्री वै सोममपाहरच्छ्येनो भूत्वा तस्य सोमरक्षिरनुविसृज्य नखमच्छिनत्, ततो यो ऽऽशुरसुच्यत स पूतीको ऽभवदूतीका वै नामैते यदूतीकानभिषुण्वन्त्यूतिमेव यज्ञाय कुर्वन्ति । काठ ३४, ३ ।
४६. गायत्रीषु शिरो भवति । जै २, ४७ ।
४७. गायत्री सुवर्गं लोकमञ्जसा वेद । तैसं ५, २, ३, ५; काठ २०,१; क ३१,३ ।
४८. गायत्र्ययातयाम्न्यभिनिवर्त ऽऽ सर्वाणि सवनानि वहति । काठ २७, ९ ।
४९. गायत्र्या एष लोके सोमो गृह्यते यदाग्रायणः । मै ४, ७, १ ।
५०. गायत्र्या छन्दा ऽऽसि ( अन्वाभवत् ) । काठ ३५, १५; ४३, ४ ।
५१. गायत्र्यां प्रस्तुतायां प्राणेन वायुं सन्दध्यात् । जै १, २७० ।
५२. गायत्र्या वसवः (अन्वारभ्यन्त) । काठ ७, ६ ।
५३. गायत्र्या वा एते लोके सर्वे सोमा गृह्यन्ते, ता ऽऽ वा एतत् सर्वाणि सवनान्यभिप्रतिधावन्ति । मै ४, ६, ४ ।
५४. गायत्र्या वै देवा इमान् लोकान् व्याप्नुवन् । तां १६, १४, ४ ।
५५. गायत्र्या वै देवाः पाप्मानं शमलमपाघ्नत । ऐ २, १७ ।
५६. गायत्र्या वै पतन्त्या यत्र पर्णं परापतत् , ततः पर्णोऽजायत । मै ३, ९, ३ ।
५७. गायत्र्युदपतत् , तामनुष्टुम्माता प्रत्यन्वैक्षत । जै १, २८८ ।
५८. गायत्र्येव भर्गः । गो १, ५, १५ ।
५९. गायत्र्यैव तच्छन्दसा प्रजापतिश्चेन्द्रश्च वसुषु देवेषु प्रातस्सवने ऽध्यपचितिमगच्छताम् । जै २, १०१ ।
६०. चतुर्विंशत्यक्षरा ( + वै [ऐ., जै., माश.] ) गायत्री । तैसं २,५, १०, ३; मै १,६, १०; ऐ ३, ३९; कौ १२, ३; जै १, ३०,२.२६६;३०८; ३,६; माश ३,५,१,१०; जैउ १,४,३,२ ।
६१. छन्दा ऽऽसि वा अमुष्माल्लोकात् सोममाहरन् , गायत्री श्येनो भूत्वा । काठ २४,१ ।
६२, ज्यैष्ठ्यं वै गायत्री । जै २, ३४६; ३५३ ।
६३. ज्योतिर्वै गायत्री (+छन्दसाम् [तां.]) । तैसं ७,५,१,५; कौ १७,६; तां १३, ७,२ ।
६४. तस्य ( यज्ञस्य ) गायत्र्येव प्रतिष्ठा (°त्र्येवोधः) । जै १,११९[२] ।
६५. तस्य ( प्राणस्य ) त्वग्गायत्री । ऐआ २, १, ६ ।
६६. तस्या (गायत्र्यै) अग्निस्तेजः प्रायच्छत् , सोऽजोऽभवत् । मै १,६,४ ।
६७. तानीमानि छन्दांस्यब्रुवन्नियं (गायत्री) वाव नश् श्रेष्ठेयं वीर्यवत्तमा या सोममाहार्षीत् । जै १,२८९ ।
६८. ता वा एता गायत्र्यो यत्त्रिपदाः । तां १६, ११, १० ।
६९. तृतीयस्या ऽऽ वै दिवि सोम आसीत्, तं गायत्री श्येनो भूत्वाहरत्, तस्य (श्येनस्य) पर्णमच्छिद्यत, ततः पर्णोऽजायत । मै ४,१,१ (तु. तैसं ३,५,७,१; तै १,१,३,१०; ३,२,१,१)।

७०. तेजसा वै गायत्री प्रथमं त्रिरात्रं दाधार पदैर्द्वितीयमक्षरैस्तृतीयम् । तां १०,५, ३ ।

७१. तेजो (+वै [ऐ., गो., जै १,२३२; ऐआ.]) ब्रह्मवर्चसं गायत्री । ऐ १, ५; २८; कौ १७, २;९; गो २,५,५; जै १,१३१; तां १५,१,८; ऐआ १,१,३; (तु. मै ३,२,६; ४,२,११) ।

७२. तेजो वै गायत्री (+छन्दसाम् [तां.]) । तैसं ३,२, ९,३; ५,१, ३, ५; ३, ८,१; काठ १९,३; गो २,५,३; जै २,८९;३४६;३५३; तां १५,१०,७; तै ३,९,४,६ ।

७३. तेजो वै गायत्री, तमः पाप्मा रात्रिः, तेन तेजसा (गायत्रीरूपेण) तमः पाप्मानं (रात्रिरूपम्) तरन्ति । गो २,५,३ ।

७४. तेषां (असुराणां देवाः) प्राणमेव गायत्र्याऽवृञ्जत । जै १,९९ ।

७५. त्रीणि वा एतानि सम्यञ्चि सन्धीयन्ते । गायत्रीछन्दश्च चतुर्विंशस्तोमो रथन्तरं साम । जै ३,२९२ ।

७६. त्रिपदा गायत्री । जै ३,६; तां १०,५,४ ।

७७. त्रियविर्वयो (त्र्यवि° [क.]) गायत्री छन्दः । काठ १७,२; क २६,१ ।

७८. त्रिवृद्वै गायत्र्यास्तेजः । तां १०,५,४ ।

७९. त्र्यवयो गायत्र्यै । मै ३,१३,१७ ।

८०. दविद्युतती वै गायत्री । जै १,९३; तां १२,१,२ ।

८१. दिवि सोम आसीत्, तं गायत्र्याऽहरत्, तस्य पर्णमच्छिद्यत, तत् पर्णोऽभवत् ।

८२. देवाश्च वा असुराश्च संयत्ता आस९स्तान् गायत्र्यन्तरातिष्ठदोजो वीर्यमन्नाद्यं परिगृह्य संवत्सरो वावैनान् सोऽन्तरातिष्ठच्चतुर्वि९शतिर्गायत्र्या अक्षराणि चतुर्वि९शतिस्संवत्सरस्यार्धमासास्तेऽविदुर्यतरान् वा इयम् (गायत्री) उपावर्त्स्यति त इदं भविष्यन्तीति तां व्यह्वयन्त दाभीत्यसुरा अह्वयन् विश्वकर्मन्निति देवास्सा नान्यतरा९श्चनोपावर्तत ते देवा एतद्यजुरपश्यन्नोजोऽसि सहोऽसि बलमसि भ्राजोऽसि देवानां धाम नामासि विश्वमसि विश्वायुस्सर्वमसि सर्वायुरभिभूरिति, सा (गायत्री) देवानुपावर्तत, ततो देवा अभवन् परा असुरा अभवन् आग्नेयमष्टाकपालं निर्वपेद् भ्रातृव्यवान् वा स्पर्धमानो वा तमासाद्यैतैर्यजुर्भिरभिमृशेदोजो वै वीर्यं संवत्सर ओज एव वीर्यं भ्रातृव्यस्य वृङ्क्ते, स निर्वीर्यः पराभवति, गायत्री नामेष्टिरथो आहुः क्षत्रस्य संवर्ग इति । काठ १०, ७ ।

८३. देवासुराः संयत्ता आसन्, तेषां गायत्र्योजो बलमिन्द्रियं वीर्यं प्रजां पशून्त्संगृह्याऽऽदायाप-क्रम्यातिष्ठत्, तेऽमन्यन्त यतरान् वा इयमुपावर्त्स्यति त इदं भविष्यन्तीति । तैसं २,४,३,१ ।

८४. नवाक्षरा वै गायत्र्यष्टौ तानि यान्यन्वाह प्रणवो नवमः । माश ३, ४, १, १५ ।

८५. पञ्चाविर्वयो गायत्री छन्दः । तैसं ४,३, ५,१; मै २,८,२ ।

८६. पशवो गायत्री । जै २,३११ ।

८७. पुंसो वा एतद्रूपं यद् बृहत्, स्त्रियै गायत्री । जै ३,१८९ ।

८८. पूर्वार्धो वै यज्ञस्य गायत्री । माश । ३, ५, १, १०; ६, ४, २० ।

८९. पूषा षडक्षरया गायत्रीमुदजयत्, चतुर्धा ह्येतस्याः (हि तस्याः [काठ.]) षट् षडक्षराणि । मै १, ११, १०; काठ १४, ४ ।

९०. प्राचीमारोह गायत्री त्वावतु, रथन्तर ँ साम, त्रिवृत्स्तोमो, वसन्त ऋतुर्ब्रह्म द्रविणम् । माश ५, ४, १, ३ ।

९१. प्राण एव गायत्री । जै २,५८ ।

९२. प्राणं गायत्र्या ( समीरयति ) । जै १, २५३ ।

९३. प्राणो (+ हि [जै १,२३२]) गायत्री । क ४६,५; जै १,२६९; २,१८१; ४२५; तां ७, ३, ८; १६,३,६; माश ६, २,१,२४; ६,२,७; १०, ३,१,१ (तु. तां १६, १४, ५; १६, ७; १९, ५,९; ७, ७) ।

९४. प्राणो वै गायत्री (गायत्र्यः [कौ.]) । मै २,४,४; ३,४, ४; ४,६,६; काठ २८,१; कौ १५,२; १६,३; १७,२; जै १,१०२; २,८९;३११; ३४६; ३५३; माश ६,४,२,५; ष ३,७ ।

९५. प्रेति च वा एति च गायत्र्यै रूपम् । जै ३, १२ ।

९६. बृहस्पतिरष्टाक्षरेण गायत्रीमुदजयत् । तैसं १, ७, ११, १ ।

९७. ब्रह्म गायत्री ( +क्षत्रं त्रिष्टुप् [माश १, ३, ५, ५]) । मै ३,४, ४; माश १, ३,५, ४; ५;४, ४, १, १८ (तु. जैउ १,१,१,८ ) ।

९८. ब्रह्मवर्चसं (यज्ञो [माश.] ) वै गायत्री । तैसं २, ५, १०, २; माश ४,२,४,२० ।

९९. ब्रह्म वै (हि [तां.]) गायत्री । मै ४, ७, ३; ऐ ४, ११; कौ ३,५; जै १,२६३; २,८९;१३१; तां ११, ११, ९; ऐआ १, १,१;३ ।

१००. मयूखो वा एष वा धरुणो यद् गायत्री । तस्यां द्वादशाहो धृतो ऽसंव्याथाय ( ऽसंसर्पाय [जै ३,७] ) । जै ३,६; ७ ।

१०१. मुखं गायत्री ( +छन्दसाम् [जै २, १३] ) । जै २, १३; तां ७, ३, ७; १४, ५, २८; १९, ११, ४ (तु. कौ ११,२) ।

१०२. मैत्रावरुणं वृणीते, गायत्रीं तच्छन्दसां वृणीते । काठ २६, ९; क ४१, ७ (तु. मै ३,९, ८) ।

१०३. यदष्टमे ऽहन्प्रवृज्यते । बृहस्पतिर्भूत्वा गायत्रीमेति । तैआ ५, १२, २ ।

१०४. यदेवादस्सोममाहरत् तस्माद् गायत्री यज्ञमुखं, तस्मात्तेजस्वितमा । काठ २३,१०; क ३७,१ ।

१०५. यद्गायत्री श्येनो भूत्वा दिवः सोममाहरत्तेन सा श्येनः । माश ३, ४, १, १२ ।

१०६. यातयामान्यन्यानि छन्दा ँ स्ययातयामा गायत्री । तां १३,१०,१ (तु. जै ३,१५४) ।

१०७. या द्यौः साऽनुमतिः सो एव गायत्री । ऐ ३,४८ ।

१०८. यावग्निष्टोमौ तौ पक्षौ येऽन्तरेऽष्टावुक्थ्याः स आत्मैषा वै गायत्री ज्योतिःपक्षा ज्योतिषा भासा सुवर्गं लोकमेति । तैसं ७,२,९,२-३ ।

१०९. या वै सा गायत्र्यासीदियं वै सा पृथिवी । माश १, ४,१, ३४ ।

११०. या हि का च गायत्री सा रेवती । तां १६,५,२७ ।

१११. यो वा अत्राग्निर्गायत्री स निदानेन । माश १,८,२, १५ ।

११२. यो वै स प्राण एषा सा गायत्री । माश ७,५,१, २१ ।

११३. यो ह वै गायत्रीं ज्योतिष्पक्षां वेद, ज्योतिष्मता भासा स्वर्गं लोकमेति, या अतिरात्रौ तौ पक्षौ, या अग्निष्टोमौ ते ज्योतिषी, येऽष्टा अन्तर उक्थ्यास्स आत्मैषा गायत्री ज्योतिष्पक्षा । काठ ३४,८ ।

११४. रेतो वै गायत्र्यै रथन्तरं, योनिर्वै रथन्तरस्य गायत्री । जै ३, २९२ ।
११५. वषट्कारोऽभ्यत्य गायत्र्याश् शिरोऽच्छिनत् । काठ १३,८ ।
११६. वसवो गायत्रीं समभरन् । जैउ १,४,४,४ ।
११७. वाग्वै गायत्री (+ शताक्षरा [मै.]) । मै १,४,१३; काठ २३, ५; क ३६,२ ।
११८. वीर्यं (+ वै [तां]) गायत्री । जै १,३०९; तां ७,३,१३; माश १,३,५,४;९,१,१७ ।
११९. शिरो गायत्री (गायत्र्यः [माश.]) । मै ३,३,५; माश ८,६,२,३; ष २,३ ।
१२०. श्येनो वै भूत्वा गायत्र्यमुं लोकमपतत् स्वर्गस्य लोकस्य समष्ट्यै । मै ३, ४, ७ ।
१२१. संवत्सरो वै गायत्री । तैसं २,४,३,२; मै २,१, ११ ।
१२२. स त्रिवृता स्तोमेन गायत्रीमध्यैत् । ततो वसूनसृजत । जै ३,३६३ ।
१२३. समिधमातिष्ठ, गायत्री त्वा छन्दसामवतु त्रिवृत्स्तोमो रथन्तर ँ सामाग्निर्देवता ब्रह्म द्रविणम् । तैसं १,८,१३,१; मै २,६,१० ।
१२४. स यच्चतुर्जुह्वां गृह्णाति, गायत्र्यै तद् गृह्णाति । माश १,३,२,१६ ।
१२५. सा गायत्री गाथयाऽपुनीता । जैउ १,१८,२,१ ।
१२६. सा गायत्री समिद्धान्यानि छन्दा ँसि समिन्धे । माश १, ३,४,६ ।
१२७. सा वै गायत्रीयं (पृथिवी) । माश १,७,२, १५ ।
१२८. सा हैषा (गायत्री) गयांस्तत्रे । प्राणा वै गयास्तत्प्राणांस्तत्रे तद्यद्गयांस्तत्रे तस्माद्गायत्री नाम । माश १४,८,१५,७ ।
१२९. सेयँ सर्वा कृत्स्ना मन्यमानागायद्यदगायत्तस्मादियं (पृथिवी) गायत्री । माश ६,१,१,१५ । [°त्री- अग्नि- ४७५; ५८५; अज, जा- २१; २२; ४७; ४८; अनुमति- ९;१४; आग्रयण- ८; आग्रायण- २; ५; उत्तरारणि- १; खदिर- ४; ५ द्र.] ।

**गायत्री-छन्दस्-** ब्राह्मणो गायत्रीछन्दाः । जै १,६८ ।

**गायत्री-मात्र-** गायत्रीमात्रो वै स्तोमः । कौ १९,८ ।

**गार(सामन्-)-**

१. इदं वसो सुतमन्ध इति गारमेतेन वै गर इन्द्रमप्रीणात्प्रीत एवास्यैतेनेन्द्रो भवति । तां ९,२,१६ ।
२. तेन (गारेण साम्ना देवाः) इमान् गरान् गीर्णानपाघ्नत । त एवेमे गिरयोऽभवन् । तद्यद् गरान् गीर्णानपाघ्नत तदेव गारस्य गारत्वम् । जै १,२२२ ।
३. प्र वो रिरिक्ष ओजसेत्येतासु गारं ब्रह्मसाम भवति गरस्यैवापहत्यै । जै २,८४ ।
४. स यो गरगीर्मन्येत अप्रतिगृह्यस्य प्रतिगृह्य अनाश्यान्नस्यान्नमशित्वा स एतेन (गारेण साम्ना) स्तुवीत । अप हैव तं गरं गीर्णं हते । यदनेन किं च पापं कृतं भवति तदपहते । जै १,२२२ ।

**गार्मुत-** गर्मुत्- द्र. । **गार्हपत्य-** गृहपति- द्र. ।

**गिर्-**

१. वाग्वै गीः । माश ७,२,२,५ ।
२. विशो गिरः । माश ३,६,१,२४ ॥ [गिर्- अन्न- २० द्र.] ।

गिर्वन्- इन्द्रो वै गिर्वा । माश ३,६,१,२४ ।

गिरि-

१. गिरयश्च मे पर्वताश्च मे (यज्ञेन कल्पन्ताम्) । तैसं ४,७,५,१ ।

२. गिरिर्वै रुद्रस्य योनिः । अतो वा एषोऽन्वभ्यवचारं प्रजा शमायते । मै १,१०,२० ।

३. गिरीन् प्लाशिभिः [प्लाशिभ्याम् ⌊मै.⌋ (प्रीणामि)] । तैसं ५, ७,१६,१; मै ३, १५,७; काठ ५३, ६ ।

४. तस्य (वृत्रस्य) एतच्छरीरं यद्गिरयो यदश्मानः । माश ३,४,३,१३;१,४,२;४,२,५,१५ ।

५. शीर्षहार्यं गिरौ जीवनम् । तैसं ६, १,९,४ ।

६. सददि गिरा अग्निर्दहति, गिरौ सोमः । मै २, १, ४ ॥ [°रि- अद्रि- २; काष्ठा- १; गार- २ द्र] ।

गिरि-पर- रुद्र यत्ते गिरिपरं नाम तस्मिन् हुतमसि । मै २, ६, ८ ।

गिरि-बुध्न- गिरिबुध्ना उ वा आपः । माश ७, ५,२,१८ ।

गुग्गु,ल्गुलु-

१. यन्मा ऽ समासीत् तद् गुग्गु (°ल्गु ⌊काठ.⌋ ) ल्वभवत् । काठ २५,६; तां २४, १३, ५ (तु. मै ३,८,५; माश ३, ५, २, १६) ।

२. यन्मा ऽ समुपमृतं तद् गुल्गुलु । तैसं ६, २, ८, ६ ।

गुङ्गु->गौङ्गव (सामन्-)-

१. अग्निरकामयतान्नादः स्यामिति स तपोऽतप्यत स एतद्गौङ्गवमपश्यत्तेनान्नादोऽभवद्यदन्नं वित्वा गर्द्दयदङ्गूयत्तद्गौङ्गवस्य गौङ्गवत्वम् । तां १४, ३,१९ ।

२. अन्नाद्यस्यावरुद्ध्यै गौङ्गवं क्रियते । तां १४, ३, १९ ।

३. गौङ्गवेन वै देवा असुरान् हत्वा घोषं गङ्गणिमकुर्वत । तद्वेव गौङ्गवस्य गौङ्गवत्वम् । तद् (गौङ्गवम्) ऊर्ध्वमिव च तिर्यग् इव च गीयते । जै ३, १८५ ।

४. ते (देवाः) ऽब्रुवन् गां गां वावासुराणाम् अवृक्ष्महीति । तदेव गौङ्गवस्य गौङ्गवत्वम् । जै ३, १८५ ।

गुद,दा- प्राणा (प्राणो ⌊माश.⌋) वै गुदः । मै ३,१०,४; माश ३, ८,४,३ ॥ [°द,दा- अजगर- ३; उदावर्त- द्र.] ।

√गुप्>गोपायमान- अहर्वै गोपायमानः । काठ ३७, १० ।

गुल्म- ग्लौभिर्गुल्मान् (प्रीणामि) । मै ३,१५, ७ ।

गूर्द (सामन्-)-

१. गौपायनानां वै सत्रमासीनानां किरातकुल्यावसुरमाये अन्तःपरिध्यसून् प्राकिरतां तेऽग्ने त्वन्नो अन्तम, इत्यग्निमुपासीद ऽ स्तेनासूनस्पृण्व ऽ स्तद्गाव ते तर्ह्यकामयंत कामसनि साम गूर्दः काममेवैतेनावरुन्धे । तां १२, १२, ५ ।

२. ते (देवाः) एतत् सामापश्यंस्तेनास्तुवत तेन गूर्दमन्नाद्यमसुराणामवृञ्जत, तस्मिन्नगूर्द

न्यदगृर्दंस्तद् गृर्दस्य गृर्दत्वम् । जै ३,१७१ ।

गृत्समद (ऋषि-)- स यत्प्राणो गृत्सो ऽपानो मदस्तस्माद् गृत्समदस्तस्माद् गृत्समद इत्याचक्षत एतमेव( प्राणे ) सन्तम् । ऐआ २, २, १ ।

गृध्र- श्येनो गृध्राणाम् ···पवित्रमत्येति । तैसं ३, ४, ११,१ ।

गृभीत- गृभीत इति धारित इत्येतत् । माश ९, २, ३, ९ ।

गृह-

१. ऋतवो (प्राणा [जै.]) गृहाः । ऐ ५, २५; जै २, ३९ ।

२. गृहा गार्हपत्यः ( अग्निः ) । मै १, ५,१०; काठ ८, ७; क ७, ४ (तु. जै १, ६१) ।

३. गृहाणा ९ ह ( हि [माश २, ६, १, ४२] ) पितर ईशते । माश २, ४, २,२४;६,१,४२ ।

४. गृहा वै दुर्याः । ऐ १, १३; माश १, १,२, २२; ३,३, ४, ३० ।

५. गृहा वै प्रतिष्ठा । माश १, १,१,१९; ९, ३, १९; २, ४,१, ७ (तु. जै १, ६१) ।

६. गृहाः ( + वै [गो.] ) सूक्तम् । ऐ ३, २३; गो २, ३, २१; २२ ( तु. ऐ ३, २४) ।

७. प्रतीच्या दिशा ( प्रतीच्यां दिशि [तैसं.]) गृहाः पशवो मार्जयन्ताम् । तैसं १, ६,५,२; मै १, ४, २; काठ ५, ५ ।

गृह-पति-

१. अग्निर्गृहपतिरिति हैक आहुः । सोऽस्य लोकस्य ( पृथिव्याः ) गृहपतिः । ऐ ५, २५ ।

२. अथ यदग्निं गृहपतिमन्ततो यजति ······। कौ ३, ९ ।

३. अयं वै ( पृथिवी-) लोको गृहपतिः । गो १, ४, १; माश १२, १, १, १ ।

४. असावेव गृहपतिर्यो ऽसौ ( सूर्यः ) तपत्येष ( सूर्यः ) हि गृहाणां पतिस्तस्यर्तव एव गृहाः । कौ २७, ५ (तु. ऐ ५,२५) ।

५. तप आसीद् गृहपतिः । तै ३, १२, ९, ३ ।

६. प्रजापतिरेव गृहपतिरासीत् । जै ३, ३७४ (तु. जै १,३५३)।

७. वायुर्गृहपतिरिति हैक आहुः । सोऽन्तरिक्षस्य लोकस्य गृहपतिः । ऐ ५, २५ ॥ [°ति- अग्नि- १२०; २७४ द्र.] ।

गार्हपत्य ( अग्नि- )-

१. अथ य इहाहीयत स गार्हपत्यः । माश १, ७, ३, २२ ।

२. अथैष एव गार्हपत्यो यमो राजा । माश २, ३, २, २ ।

३. अयं ( पृथिवी- ) लोको रथन्तरमयं गार्हपत्यः । काठसंक ९ : ३ ।

४. अयं ( गार्हपत्यः ) वावैक आसीन्नाहवनीयो न दक्षिणाग्निः । काठसंक १४ : १ ।

५. अयं वै लोको गार्हपत्यः । माश ७,१,१,६;८,६,३,१४; प १,५; तैआ ५, ९,११ । (तु. जै १, ५१) ।

६. अष्टाविंशत्यङ्गुलो ( गार्हपत्यः ) भवति शर्कर्या संमितः । काठसंक १६ : २ ।

७. इमं तेन ( गार्हपत्येन यजमानः पृथिवी- ) लोकमभिजयति । काठ २६, २ ।

८. कर्मेति गार्हपत्यः । जैउ ४, ११, ५, १५ ।

९. गार्हपत्यं वै पशवो ऽनूपतिष्ठन्त एष पशूनां योनिः । काठ २४,६; क ३७,७ (तु. मै ३,७,७)।

१०. गार्हपत्य ऋक् पृथिवी रथन्तरम् । तैआ १०, ६३,१ ।
११. गार्हपत्यायैव प्रजां परिदाय प्रैति । मै १, ५, १४ ।
१२. गार्हपत्येनामुं (पृथिवी-) लोकम् (देवा अभ्यजयन्) । मै ३. ९, १ (तु. क ४०,५) ।
१३. गार्हत्ये मारुतम् (अधिश्रयति) । तैसं २, २, ११, १ ।
१४. गार्हपत्यो वा अग्नेर्योनिः । तै १, ४, ७, ४ ।
१५. द्वाभ्यां गार्हपत्ये जुहोतीमां (पृथिवीम्) तेनाक्रमते । मै ४, ८, ३ (तु. क ४०, ५) ।
१६. पशवो वै (प्रजापतिर्वै [कौ.]) गार्हपत्यः । काठ ६, ४; क ४,३; कौ २७, ४ ।
१७. प्रतिष्ठा (जाया [ऐ.]) गार्हपत्यः । तैसं ५, २, ३, ६; काठ २०, १; क ३१, ३; ऐ ८, २४ ।
१८. प्रतीची श्रोणी, गार्हपत्यं (+एव [क.]) परिगृह्णाति । मै ४, १,१०; क ४७, ८ ।
१९. प्राणोदानावेवाहवनीयश्च गार्हपत्यश्च । माश २, २, २, १८ ।
२०. प्राणो वै गार्हपत्यः । जै १, ६१ ।
२१. मण्डलं गार्हपत्यस्य लक्षणं कुर्यान् मण्डलो ह्ययं (पृथिवी-) लोकः । काठसंक १५ : ११ ।
२२. मनुष्याणां गार्हपत्यः । मै १, ४, १०; काठ ३२, ७ (तु तैसं १,६,७,१) ।
२३. य इहाहीयत स गार्हपत्यः । माश १, ७, ३, २२ ।
२४. यजमानदेवत्यो वै गार्हपत्यः । माश २, ३, २, ६ ।
२५. यदि यज्ञ ऋक्तो भ्रेषं नीयात् भूस्स्वाहेति गार्हपत्ये जुहवाथ । जै १, ३५८ ।
२६. यद्गार्हपत्यं (उपतिष्ठते) पुरुषांस्तद्याचते । माश २, ३, ४, ३२ ।
२७. यद्गार्हपत्यं (उपतिष्ठते) पृथिवीं तत् (उपतिष्ठते) । माश २, ३, ४, ३६ ।
२८. यद्वाचा यन्मनसा बाहुभ्यामूरुभ्यामष्ठीवद्भ्या ँ शिश्नैर्यदनृतं चकृमा वयम् । अग्निर्मा तस्मादेनसः गार्हपत्यः प्रमुञ्चतु, चकृमा यानि दुष्कृता । तैआ २, ३, १ ।
२९. योनिर्वै गार्हपत्या चितिः । माश ७, १,१, ८; ८, ६, ३, ८ ।
३०. श्रपणो वै गार्हपत्यः । कौ २, ९ ।
३१. स (प्रवत्स्यन्) गार्हपत्यमुपतिष्ठते । नर्य प्रजां मे पाहीति प्रजाया हैष (गार्हपत्यः) ईष्टे । माश २, ४, १, ४ ॥ [°त्य- अन्न- २०; आहवनीय- २; २१; गृह- २ द्र.] ।

गृह-मेध-

१. गृहमेधो वै पाकयज्ञः । काठसंक १४० : १ ।
२. पशवो वै गृहमेधाः । काठ ३६, ९ ।
३. यद् धानाः करम्भो भवति, तेन गृहमेधः । जै २, ३८ ।

गृहमेधीय- पुष्टिकर्म्म वै गृहमेधीयः । गो २, १, २३; (तु. कौ ५, ५) ।

गो-

१. अदन्तीति वै गा आहुः । अश्नन्तीति मनुष्यान् । मै ३, ६,६ ।
२. अन्तरिक्षं गौः (एकाहः) । तैसं ७, २, ४, २; काठ ३३, ३; ऐ ४, १५ ।
३. अप्सु गौः । माश ७, ५, २, १९ (तु. तैसं ७,२,१०,२) ।
४. अयं वै लोक आयुः । असौ (द्यौः) गौः । जै २,४३९ (तु. जै २,१६६) ।
५. अयं (अन्तरिक्षलोकः) गौः । जै २,३१७ (तु. तां ४,१,७) ।

६. आग्नेयो वै गौः । माश ७,५,२,१९ ।
७. आग्रयणपात्रमुक्थ्यपात्रमादित्यपात्रमेतान्येवानु गावः प्रजायन्ते । माश ४,५,५,८ ।
८. इन्द्रियं वै वीर्यं गावः । माश ५,४,३,१० ।
९. इमे वै लोका गौर्यद्धि किं च गच्छतीमांस्तल्लोकान् गच्छति । माश ६,१,२, ३४ (तु. माश ६,५,२,१७)।
१०. इयं (पृथिवी) वै गौः । काठ ३७,६ ।
११. गवा वै देवा असुरानेभ्यो लोकेभ्योऽनुदन्तैभ्यो लोकेभ्यो भ्रातृव्यन्नुदते य एवं वेद । तां १६,२,२ ।
१२. गां पशुम् (प्रजापतिरुदरादेवासृजत) । जै १, ६९ ।
१३. गाव इव पुनर्भुवो…भूयासम् । ऐआ ५,१,१ ।
१४. गावो वा एतदग्रे सत्रमासताश्राधमवरुरुत्समानाः । जै २, ३७४ ।
१५. गावो वै शक्वर्यः । जै ३,१०३ ।
१६. गोनामैः स ऽ स्तुत्या गोर्मूर्धन् पशुकामः । काम्यायै स्वाहा, अघ्न्यायै स्वाहेलान्दायै स्वाहा । मै ४,२,१ ।
१७. गोभिर्यज्ञं दाधार (इन्द्रः) । तैसं ४,४, ८,१ ।
१८. गोभिर्वपात्रान्त्स्याद्वीरैः शक्तीवान् , रथैः प्रथमयावा, हिरण्यैश्चन्द्री । मै ४, १३,२ ।
१९. गौरेव (गौर्वै [जं २,३४]) रथन्तरम् । जै १,३३३; २,३४ ।
२०. गौर्घृताची । तैसं २,५,७,४ ।
२१. गौर्वाऽइद ऽ सर्वं बिभर्ति । माश ३,१,२,१४ ।
२२. गौर्वाव सर्वस्य मित्रम् । तैसं २,५,२,६ ।
२३. गौर्वै (गौर्हि [ऐ.]) देवानां मनोता । ऐ २, १०; कौ १०,६ ।
२४. गौर्वै राथन्तरी नीचीव न्युब्जिता । सा बार्हतीं वाचं वदति भा इति पराचीमेव । जै १,२९३ ।
२५. गौर्वै वाग्, गौर्विराड् , गौरिडा, गौः खल्वेव गौः, गौरिद ऽ सर्वम् । मै ४,२, ३ ।
२६. गौर्वै सार्पराज्ञी (स्रुचः [तै.]) । कौ २७, ४; तै ३,३,५,४ ।
२७. गौर्हि यज्ञिया मेध्या । मै १,८,९ ।
२८. गौस्त्रिष्टुक् । तैसं ७, ५,१,५ ।
२९. गौस्सायं प्रातस्तनमाप्यायते । काठ २४,१० ।
३०. जगती छन्दस्तद् गौः, प्रजापतिर्देवता । मै २,१३,१४; क ३९,४ ।
३१. ततो या योनिरुदशिष्यत, सा गौरभवद्, योनिर्वै नामैषैतद्वा अस्याः (गोः) प्रत्यक्षं नामाऽथो आहुः परोक्षमिति । मै ४,२,१ ।
३२. तस्मादाहुर्गावः पुरुषस्य रूपमिति । माश १२,९,१,४ ।
३३. तस्मादाहुर्गावो लवणमिति । तस्मादु यो लवणेन पणम् चरति, गाव एव भवन्ति । जै ३,२३६ ।
३४. तस्मादु संवत्सरऽएव स्त्री वा गौर्वा वडवा वा विजायते । माश ११,१,६,२ ।

३५ तस्मादेषा (गौः) उपजीवनीया। माश २,२,४,१२।
३६. तां (गाम्) रुद्राय होत्रेऽददात्। माश ४,३,४,२५।
३७. तासां (गवाम्) द्वादशे मासि शृङ्गाणि प्रावर्तन्त। जै २,३७४।
३८. तृतीयाम् (आहुतिम्) अजुहोत्, ततो गौरसृज्यत। मै १,८,१।
३९. नो ह्यन्ते गोर्नग्नः स्यात्। वेद ह गौरहमस्य त्वचं बिभर्मीति सा बिभ्यती त्रसति त्वचं मऽआदास्यतऽ इति तस्माद् गावः सुवाससमुपैव निश्रयन्ते। माश ३, १, २,१७ (तु. जै २, १८२)।
४०. पशवो वै सृष्टा एतानि नक्षत्राण्यन्वपाक्रामन् पौर्णमासीमष्टकाममावास्यां चित्रामश्वत्थे, तस्मात्तेषु गौर्नोपाकृत्या, यामुपाकुर्यात्तामस्य पशवोऽन्वपक्रामेयुः। मै ४,२, १२।
४१. प्राणाद्गाम् (प्रजापतिर्निरमिमीत)। माश ७, ५,२,६।
४२. मनुष्याणा ऽ ह्येतासु (गोषु) कामाः प्रविष्टाः। माश २,३,४,२४।
४३. महांस्त्वेव गोर्महिमेत्यध्वर्युः (आह)। गोर्वै प्रतिधुक्। तस्यै शृतं तस्यै शरस्तस्यै दधि तस्यै मस्तु तस्याऽआतञ्चनं तस्यै नवनीतं तस्यै घृतं तस्याऽआमिक्षा तस्यै वाजिनम्। माश ३, ३,३,२।
४४. मह्य इति ह वाऽएतासामेकं नाम यद्गवाम्। माश १,२,१,२२;३,१,३, ९।
४५. माता रुद्राणां दुहिता वसूना ऽ स्वसादित्यानाममृतस्य नाभिः प्र नु वोचं चिकितुषे जनाय मा गामनागामदितिं वधिष्ट। मं २, ८,१५।
४६. मुखादेवास्य बलमस्रवत्। स गौः पशुरभवदृषभः। माश १२,७,१,४।
४७. यज्ञो वै (प्राणो हि [माश.]) गौः। तै ३, ९, ८, ३; माश ४,३,४,२५।
४८. यज्ञो ह्येवेयं (गौः), नो ह्यृते गोर्यज्ञस्तायते। अन्न ऽ ह्येवेयं (गौः), यद्धि किञ्चान्नं, गौरेव तदिति। माश २, २, ४, १३।
४९. यदन्यतोदंस्तद् गवाम् (रूपम्)। जै २, ३७१।
५०. यद् गां ददात्यायुस्तेन स्पृणोति। काठ २८, ५; क ४४, ५।
५१. यद् गोः पयः। तत् साम्नां पयः। तैआ ५, १०, १-२।
५२. यद्गौस्तेन रौद्री। मै ४, ३, ४; माश ५, २,४, १३ (तु. तै २, २, ५, २)।
५३ यद्वै तद्देवा असुरानेभ्यो लोकेभ्यो गोवय ऽ स्तद्गोर्गोत्वम्। तां १६, २,३।
५४. या गौः सा सिनीवाली सो एव जगती। ऐ ३, ४८।
५५. या वै सा प्रफर्व्यासीत् सा गौरभवत् सेडा सा मानवी घृतपदी मैत्रावरुणी। मै १, ६,१३।
५६. या वो देवास्सूर्ये रुचो गोष्वश्वेषु या रुचः। इन्द्राग्नी ताभिस्सर्वाभी रुचं नो धत्त बृहस्पते। तैसं ५, ७, ६, ३; काठ १६, १६।
५७. रुद्राय गाम् (+अनयन् [मै.]) । मै १, ९, ४; काठ ९, ९; क ८,२; तै २,२,५,२; तैआ ३, १०, २।
५८. वत्सं जातं गौरभिजिघ्रति। तैसं ६, ४, ११, ४।
५९ वराहं गावोऽनुधावन्ति स्वं पयो जानानाः। मै १,६, ३।
६०. विराजो वा एतद्रूपं यद्गौः। तां ४, ९,३ (तु. माश ७, ५,२, १९)।

६१. वृषभेण गाः (अन्वाभवत्)। काठ ४३, ४।
६२. वैश्वदेवी (+मै [गो.]) गौः। मै ४, ८, ३; गो २, ३, १९।
६३. षट्त्रिंशदवदाना गौः। गो १, ३, १८; ४, १२।
६४. स ह्येषा हिता विश्वरूपा गौः। काठ ७, ७।
६५. स नः पवस्व शं गवे शं जनाय। शमर्वते श ऽ राजन्नोषधीभ्यः। तैसं ३,२,३,१।
६६. सरस्वती हि गौः। माश १४, २, १, ७।
६७. सर्वस्य वै गावः प्रेमाणं सर्वस्य चारुतां गताः। ऐ ४, १७।
६८. स हैष सोमो ऽजस्रो यद्गौः। माश ७, ५, २, १९।
६९. सा या बभ्रूः पिङ्गाक्षी (गौः)। सा सोमक्रयण्यथ या रोहिणी सा वार्त्रघ्नी यामिद ऽ राजा संग्रामं जित्वोदाकुरुते ऽथ या रोहिणी श्येताक्षी सा पितृदेवत्या यामिदं पितृभ्यो घ्नन्ति। माश ३, ३, १, १४।
७०. साहस्रो वाऽएष शतधार उत्सः यद्गौः। माश ७, ५, २, ३४।
७१. सा (गौः) हैनान् (देवान्) उदीक्ष्य हिंचकार, ते देवा विदाञ्चक्रुरेष साम्नो हिङ्कार इत्यप हिङ्कार ऽ हैव पुराततः साम आस, स एष गवि साम्नो हिङ्कारः। माश २,२, ४, १२।
७२. सुवर्णे गोषु यद्वर्चो मयि तद्धस्तिवर्चसम्। शांआ १२, १॥ [गो- अग्नि- १६२; अज- २०; अदिति- ५०; अन्न- ६३; अन्नाद्य- ११; अरुण- ३; आदित्य- १२०; आदित्यपात्र- १; २; ३; इडा- ९; ऋतु- ६८ द्र.]।

गव्य-

१. अपशवो वा एते। यदजावयश्चारण्याश्च। एते वै सर्व्वे पशवो यद्गव्या इति। तै ३, ९, ९, २ (तु. माश. १३,३,२,३)।
२. आयुर्दा अग्ने हविषो जुषाणो घृतप्रतीको घृतयोनिरेधि। घृतं पीत्वा मधु चारु गव्यं पितेव पुत्रमभिरक्षतादिमम् (यजमानम्)। तैसं ३,३,८,१; मै ४,१२,४; काठ ११,१३।
३. एवा अग्ना इति गव्याः पशवः। जै ३,१०९।

गो-अश्व- अपशवो वा अन्ये गोअश्वेभ्यः पशवः। तैसं ५, २,९,४।

गो-आयुस् (स्तोम-)-

१. अथ यद्गोऽआयुषी उपयन्ति। मित्रावरुणावेव देवते यजन्ते। माश १२, १, ३, १६।
२. एष वाव देवयानः पन्था यद् गोआयुषी। जै २,४२।
३. द्यावापृथिवी वै गोआयुषी। कौ २६,२।
४. प्राणापानावेतौ यद् गोआयुषी। जै २,४२ (तु. कौ २६,२; जै २,५८)।
५. यदेवेदं द्वितीयमहर्यच्च तृतीयमेते वा उ गोआयुषी। कौ २६, २। [°युस्- अहोरात्र- २१ द्र.]।

गो-घ्न- आरात् ते (हे रुद्र) गोघ्नं उत पूरुषघ्ने……ते अस्तु। तैसं ४, ५,१०, ३।

गो-जा- एष (सूर्य्यः) वै गोजाः। ऐ ४,२०।

गौपूक्त-, °क्ति-( सामन्- )-

१. तावेते ( गौपूक्तिश्चाश्वसूक्तिश्च ) सामनी अपश्यताम्······यो गरगीर्मन्येताप्रतिगृह्यस्य प्रतिगृह्यानाश्याश्वस्यान्नमशित्वा स एताभ्यां (गौपूक्ताश्वसूक्ताभ्यां सामभ्याम् ) स्तुवीत । जै३,२५१ ।

२. यद् उ गौपूक्तिश् चाश्वसूक्तिश् चैताव् अपश्यतां तस्माद् गौपूक्ताश्वसूक्ते इत्याख्यायते । जै ३, २५१ । [°क्ति- आश्वसूक्ति- द्र.] ।

ग्ना-

१. छन्दा ऽ᳚सि वै ग्नाः ( +देवीर्विश्वदेव्यवतीः [मै.] ) । तैसं ५,१, ७, २; मै ३,१,८; काठ १९, ७; क ३०, ५; माश ६, ५, ४, ७ ।

२. छन्दा ऽ᳚सि वै ग्नाश्छन्दोभिर्हि स्वर्गं लोकं गच्छन्ति । माश ६, ५, ४, ७ ।

ग्रन्थि-

१. पूषा ते ग्रन्थिं ग्रथ्नातु । तैसं १,१,२,२; काठ १, २; क १,२ ।

२. वरुण्यो वै (हि [माश ५,२,५,१७]) ग्रन्थिः । माश १,३,१,१६; ५,२,५,१७ ।

ग्रह-

१. अथ ग्रहान्गृह्णाति । माश ४, ५,९,३ ।

२. अष्टौ[1] ग्रहाः । माश १४,६,२,१ ।

३. एष वै ग्रहः । य एष (सूर्यः) तपति येनेमाः सर्वाः प्रजा गृहीताः । माश ४,६, ५,१ ।

४. ग्रहान् वा अनु प्रजाः पशवः प्रजायन्ते । तैसं ६,५, १०, १ ।

५. ग्रहा ह वा ऋतस्य योनिः । जै १,१०४ ।

६. तं ( यज्ञम् ) ग्रहेणानूद्द्रुत्यागृह्णात् तद् ग्रहस्य ग्रहत्वम् । काठ ९,१६ ।

७. तद्यदेनं पात्रैर्व्यगृह्णत तस्माद् ग्रहा नाम । माश ४,१,३,५ ।

८. तं ( सोमम् ) अघ्नन् । तस्य यशो व्यगृह्णत । ते ग्रहा अभवन् । तद् ग्रहाणां ग्रहत्वम् । तै २,२,८,६ ।

९. तम् ( ध्रुवं ग्रहम् ) उत्तमं गृह्णाति । मै ४, ६,६ ।

१०. तान् पुरस्तात् पवित्रस्य व्यगृह्णात् ते ग्रहा अभवन् । तद् ग्रहाणां ग्रहत्वम् । तै १,४,१,१ ।

११. ते (देवाः) सोममन्वविन्दन् । तमघ्नन् । तस्य यथाभिज्ञायं तनूर्व्यगृह्णत । ते ग्रहा अभवन् । तद् ग्रहाणां ग्रहत्वम् । तै १,३,१,२ ।

१२. तौ (दर्शपूर्णमासौ) ग्रहेणागृह्णात् (प्रजापतिः )तद् ग्रहस्य ग्रहत्वम् । तै २,२,२, १ ।

१३. नवैते प्रातर्ग्रहा गृह्यन्त इमे वा एते गृह्यन्ते नव प्राणा आश्विनो दशमो (ग्रहः) गृह्यते व्यानो वा एष गृह्यते नाभिरेव दशमो (ग्रहः = प्राणः) गृह्यते । मै ४,६, १ ।

१४. नामैव ग्रहः । नाम्ना हीद ऽ᳚ सर्वं गृहीतम् । माश ४,६, ५,३ ।

१५. पुत्रा (प्राणा [तैसं.]) ग्रहाः । तैसं ७,२,७,५; काठ २७,९ ।

१६. प्राणा वा एत इतरे ग्रहा, आयुर्ध्रुवः (ग्रहः) । मै ४, ६, ६ ।

१७. प्राणा ( अङ्गानि [माश ४,५,९,११] ) वै ग्रहाः । काठ ३०,२; क ४६,५; माश ४, २,४,१३; ५,९,३; ११ ।

---

१. प्राणः, जिह्वा, वाक् , चक्षुः, श्रोत्रम् , मनः, हस्तौ, त्वक् ।

१८. यद् गृह्णाति तस्माद् ग्रहः । माश १०,१,१,५ ।
१९. यद्विित्तं (यज्ञम्) ग्रहैर्व्यगृह्णत तद् ग्रहाणां ग्रहत्वम् । ऐ ३,९ ।
२०. वागेव ग्रहः । वाचा हीद ँ सर्वं गृहीतम् । माश ४,६,५,२ ।
२१. वाय्वग्रा ग्रहा गृह्यन्ते । काठ २७, ३; क ४२. ३ ।
२२. साम ( प्राणो वै [जै.] ) ग्रहः । जै १, ३५३; माश ४, २, ३, ७ ॥ [°ह- अन्न- ८३, आग्रयण- ६ द्र.] ।

ग्राम- छन्दा ँसीव खलु वै ग्रामः । तैसं ३, ४,९,२ ।

ग्राम-काम-
१. ऐन्द्रमेकादशकपालं निर्वपेन्मारुत ँ सप्तकपालं ग्रामकामः । तैसं २,२, ११,१ ।
२. पृश्नियै दुग्धे प्रैयङ्गवं चरुं निर्वपेन्मरुद्भ्यो ग्रामकामः । तैसं २,२, ११, ४ ।
३. बार्हस्पत्य ँ शितिपृष्ठमालभेत ग्रामकामः···स (बृहस्पतिः) एवैनं पृष्ठ ँ समानानां करोति ग्राम्येव भवति । तैसं २,१,६ १ ।
४. ब्राह्मणस्पत्यमेकादशकपालं निर्वपेद् ग्रामकामः । तैसं २, ३, ३, ४ ।
५. वायवे नियुत्वत आलभेत ग्रामकामः । तैसं २,१,१,२ ।

ग्रामणी-
१. एको बहूनां ग्रामणीः । काठ २७, १० ।
२. ग्रामणीः सजातैः पर्यूढः । तैआ ५,४,९ ।
३. पञ्चानां ह वै पुरुषाणां राज्यायाभिषिच्यमानोऽभिषिच्यते राज्ञे राजन्याय सूताय ग्रामण्ये शूद्राय दासाय । जै २,१९६ ।
४. ग्रामण्यो गृहान् परेत्य मारुत ँ सप्तकपालं पुरोडाशं निर्वपति । माश ५,३,१,६ ।
५. मनोस्त्वा ग्रामण्यो व्रतेनादध इति वैश्येन (अग्निः) आधेयः । काठ ८,४ ।
६. मारुत ँ सप्तकपालं ग्रामण्यो गृहे पृश्निर्दक्षिणा । तैसं १,८, ९,१ (तु. मै २, ६,५) ।
७. मारुतः सप्तकपालो वैश्यस्य ग्रामण्यो गृहे । मै २,६,५; ४,३,८ ।
८. वैश्यस्यादध्यात्···मनोष्ट्वा ग्रामण्यो व्रतेनादधा इति । मै १, ६, ५ ।
९. वैश्यो वै ग्रामणीः । माश ५,३,१,६ ।
ग्रामणी-थ->°णीथ्य- ग्रामणीथ्येन खलु वैश्यो भद्रो भवति । मै १,६,५ ।

ग्राम्या- त एवास्मै (यजमानाय विश्वे देवाः) सजातान् प्रयच्छन्ति, ग्राम्येव भवति । तैसं २,१,६,४-५ ।

ग्रावन्-
१. ग्रावाणो दन्ताः । तैसं ६,२,११,४; मै ३,८,८; ४,५,९ (तु. २५,९; क ४०,२) ।
२. ग्रावाणो वै सोमस्य राज्ञो मलिम्लुसेना । तैसं ६, ३,२,६ ।
३. ग्रावा शेपः । तैसं ७,५,२५,२ ।
४. ग्राव्णा पर्वताः । काठ ३५,१५ ।
५. प्राणा (मारुता [तां.]) वै ग्रावाणः । तां ९, ९, १४; माश १४, २, २, ३३ ।
६. बार्हता (जागता वै [कौ.]) ग्रावाणः । कौ २९, १; माश १२, ८, २, १४ ।

७. यज्ञमुखं ग्रावाणः। मै ४,५,२।

८. यदि ग्रावापि शीर्येत पशुभिर्यजमानो व्यृध्यते। तां ९, ९, १३।

९. यं द्विष्याद्विमुखान् ग्राव्णः कृत्वेदमहममुष्यायणममुष्याः पुत्रममुष्या विशोऽमुष्मादन्नाद्या-न्निरूहामीति निरूहेद्विश एवैनमन्नाद्यन्निरूहति। तां ६, ६, २।

१०. राष्ट्रं वै द्रोणकलशो विशो ग्रावाणः। जै १,८०।

११. वज्रो वै ग्रावा। मै ४,५,४; माश ११,५,९,७।

१२. वत्सा (पशवो हि [काठ ३५, १६; ४८, १४]) ग्रावाणः काठ २५,९; क ४०,२ (तु. तां ९, ९,१३)।

१३. विड्वै (विद्वांसो हि [माश.]) ग्रावाणः। तां ६,६,१; माश ३,९,३,१४ (तु. माश ३,९,३,३)। [°वन्- आदित्य- ११९, १२६ द्र.]।

ग्राव-स्तुत्- अर्वुदो ग्रावस्तुत्। जै ३,३७४।

ग्राव-स्तोत्रीया- मनो वै ग्रावस्तोत्रीया। ऐ ६, २।

ग्रीवा-

१. इमा एव ग्रीवाः पञ्चदशमहः। ओजो वै वीर्यं ग्रीवा ओजो वीर्यं पञ्चदशः, तस्मात् पशवो ग्रीवाभिर्भारं वहन्ति। जै २,५७।

२. उष्णिक् छन्दः सविता देवता ग्रीवाः। माश १०, ३, २, २।

३. ग्रीवा अणिष्ठास्सतीर्वीर्यावत्तमाः। काठ २५, १; क ३८, ४।

४. ग्रीवाः पञ्चदशः। चतुर्दश वाऽएतासां करूकराणि वीर्यं पञ्चदशं तस्मादेताभिरण्वीभिः सती-भिर्गुरुं भार ँ हरति। माश १२, २, ४, १०; (तु. गो १, ५, ३)।

५. त्रीणि वा आसां ग्रीवाणां पर्वाणि। शांआ २, ३॥ [°वा- उपसद्- ९;१०; उष्णिह् -७; ओजस्- १० द्र.]।

ग्रीष्म (ऋतु-)-

१. अनिरुक्त ऋतूनां ग्रीष्मः। जैउ १, १२, १, ३।

२. एतावेव (शुक्रश्च शुचिश्च) ग्रैष्मौ (मासौ)। स यदेतयोर्बलिष्ठं तपति तेनो हैतौ शुक्रश्च शुचिश्च। माश ४, ३, १, १५।

३. ग्रीष्म उपर्युष्णो ऽधश्शीतमधिगम्यते। तस्मादु ग्रीष्मे शीताः कूप्या अप उदाहरन्ति। जै १, १६७।

४. ग्रीष्म ऋतुः (राजन्यस्य)। तां ६, १, ८।

५. ग्रीष्म एव महः। गो १, ५, १५।

६. ग्रीष्मः प्रस्तावः। ष ३, १।

७. ग्रीष्मम्प्रस्तावम् (प्रजापतिरकरोत्)। जैउ १, ३, ३, ७।

८. ग्रीष्मेण दक्षिणं पक्षम् (अचिनुत)। तैसं ५, ६, १०, १; मै ३, ४, ८।

९. ग्रीष्मेण देवा ऋतुना रुद्राः पञ्चदशे स्तुतम्। बृहता यशसा बलम् (हविरिन्द्रे वयो दधुः [तै.])। मै ३, ११, १२; काठ ३८, ११; तै २, ६, १९, १।

१०. ग्रीष्मे वा इन्द्रो वृत्रमहन्। मै १, ६,९।
११. ग्रीष्मो दक्षिणः पक्षः। तै ३, ११, १०, २; तैआ ४, १९,१।
१२. ग्रीष्मो दक्षिणं पक्षम्। वर्षा उत्तरम् (पक्षम्)। मै ४, ९,१८।
१३. ग्रीष्मो ऽध्वर्युस्तप्त इव वै ग्रीष्मस्तप्तमिवाध्वर्युर्निष्क्रामति। माश ११, २, ७, ३२।
१४. ग्रीष्मो वै तनूनपाद् ग्रीष्मो ह्यासां प्रजानां तनूस्तपति। माश १, ५, ३, १०।
१५. ग्रीष्मो वै राजन्यस्यर्तुः। काठ ८,१; तै १,१,२, ७।
१६. ग्रीष्मो हि तन्वं तपति। कौ ३, ४।
१७. तनूनपातं यजति ग्रीष्ममेव (ग्रीष्ममेवावरुन्धे [तैसं.]) । तैसं २, ६, १, १; कौ ३,४।
१८. तस्मात्क्षत्रियो ग्रीष्मऽ आदधीत क्षत्र ँ हि ग्रीष्मः। माश २, १, ३, ५।
१९. यत्स्तनयति तद् ग्रीष्मस्य (रूपम्)। माश २, २, ३, ८।
२०. वाग् ग्रीष्मः'''अग्निर्ग्रीष्मः। जै २, ५०।
२१. श्वेता (पशवः) ग्रीष्माय। मै ३, १३, १९।
२२. षड्भिरैन्द्रैः (पशुभिः) ग्रीष्मे (यजेत)। माश १३, ५, ४, २८।
२३. स (प्रजापतिः) ग्रीष्माद् एव वसन्तं निरमिमीत, वर्षाभ्यश् शरदं, हेमन्ताच् छिशिरम्''''''। स यत् प्रथममतप्यन् ततो ग्रीष्ममसृजत। तस्मात् स बलिष्ठं तपति। जै ३, १।
२४. सौरीं (अजाम्) ग्रीष्मे (आलभेत)। काठ १३, १॥ [°ष्म- इध्म- ३; ऐन्द्री- ७; ओजस्वत्-; कलविङ्क- ३ द्र.]।

ग्रैष्म-
१. ग्रैष्मौ मासौ प्रयच्छेति। एतौ ते प्रयच्छानीत्यन्नमन्नमित्येव पतित्वास्यै दक्षिणायै दिशो बृहद् भा आदत्त। जै ३, ३६६।
२. तस्य (वायोः) रथस्वनश्च रथेचित्रश्च सेनानीग्रामण्याविति ग्रैष्मो तावृतू। माश ८,६,१,१७।
३. शुक्रश्च शुचिश्च ग्रैष्मा ऋतू। मै २, ८, १२।
४. समग्निरग्निना गतेत्याह ग्रैष्मावेवास्मा ऋतू कल्पयति। तैआ ५, ६, ५-६।
५. सारङ्गास्त्रयो ग्रैष्माः। काठ ५०, ३।

ग्रुमुष्टि- प्राजापत्यो वै ग्रुमुष्टिः। तैसं ५,४, ५,२-३।

# घ

घर्म-
१. अग्निश्च मे घर्मश्च मे (यज्ञेन कल्पताम्)। तैसं ४, ७, ९, १।
२. असौ वा आदित्यो घर्मः (+ तस्य दिशः कपालानि [काठ.]) । काठ ३१, ६; माश ९, ४, २, १९।
३. एष वै घर्मो य एष (सूर्यः) तपति। माश १४, १, ३, १७; (तु. कौ २,१)।
४. घर्म इति दिवाऽऽचक्षीत। सम्राडिति नक्तम्। तैआ ५, ११, २।

५. घर्मः प्रवृक्तो महावीर उद्वासितः······स एतानि नामान्यकुरुत । तैआ ५, ११, १ ।

६. घर्मः शिरस्तदयमग्निः संप्रियः पशुभिर्भव पुरीषमसि, (°दयमग्निः पुरीषमसि सम्प्रियं प्रजया पशुभिर्भुवत् [तैआ.] ) । मै १, ६, १; २; तैआ ४, १७,१ ।

७. घर्मः शिरस्तदयमग्निः सम्प्रियः पशुभिः स्वदितं नः पितुं पच, पशून् मे यच्छ। काठ ७,१४; तैआ ७, १४, १ ।

८. तदेतद्देवमिथुनं यद् घर्मः स यो घर्मस्तच्छिश्नम् । ऐ १, २२ ।

९. तद्यद् ( छिन्नं विष्णोश्शिरः ) घृङ्ङित्यपतत्तस्माद् घर्मः । माश १४, १, १, १० ।

१०. तेजो (तप्त इव [माश.] ) वै घर्मः । मै २, २, ८; माश १४, ३,१, ३३ ।

११. देवमिथुनं वा एतद् यद् घर्मः । गो २, २, ६ ।

१२. ब्रह्मवर्चसं वै घर्मः । तैसं २, २, ७, २ ।

१३. यद् घ्रा ३ इत्यपतत् । तद् घर्मस्य घर्मत्वम् । तैआ ५, १, ५ ।

१४. शुग्घर्मः । तैआ ५, १०, ५ ॥ [ °र्म- अग्नि- १७५; ६४२; अग्निहोत्र- २४; आदित्य- ६०; १६० द्र. ] ।

घर्म-प- पितृभ्यो घर्मपेभ्यः । स्वाहा । मै ४, ९, ९ ।

घर्म-वत्- यदिन्द्राय घर्मवते निर्वपति शिर एवास्य तेन करोति । तैसं २, २, ७, ३ ।

घृत-

१. अथ यद् घृतस्यैता वा आपो ऽनाधृष्यास्ताभी राष्ट्रमनाधृष्यं करोति । मै ४,४, १ ।

२. अन्तो वै पयसां घृतम् । जै १, २२४ ।

३. अन्नस्य घृतमेव रसस्तेजः । मं २, ६, १५ ।

४. आयुर्दा देव जरसं वृणानो घृतं वसानो घृतपृष्ठो अग्ने । घृतं पिबन्नमृतं चारु गव्यं पितेव पुत्रं जरसे नयेमम् । काठ ११,१३ ।

५. एतद्रूपा वै पशवो यद् घृतम् (दधि [काठ ११,२]) । काठ ११,२; २४,५; क ३७,६ ।

६. एतद्वै प्रत्यक्षाद्यज्ञरूपं यद् घृतम् । माश १२,८,२,१५ ।

७. घृत ९ रसेन (प्रीणामि) । मै ३,१५, ८, काठ ५३,१० ।

८. घृतं वै देवानां फाण्टं मनुष्याणाम् । माश ३,१,३,८ ।

९. घृतं वै देवानां मधु । काठ २६,३; क ४१,१;३; ( तु. मै ३,९,३ ) ।

१०. घृतं वै देवा वज्रं कृत्वा सोममघ्नन् । मै ३,८,२;१०,५;४,५,२;७,४; गो २,२,४ ।

११. घृतं च मे मधु च मे (यज्ञेन कल्पताम् ) । तैसं ४, ७,४,१ ।

१२. घृतं च वै मधु च प्रजापतिरासीत्···आज्येन प्रचरन्त्ययातयाम ९ वा एतत्प्राजापत्यं घृतम्, अयातयामा देवानां प्रजापतिः । मै ४,१,१२ ।

१३. घृतं दुहानादितिर्जनाय, सा मे धुक्ष्व सर्वान् भूतिकामान् । काठ ३१, १४ ।

१४. घृतं देवानामायुतं (निष्पक्वम् [काठ.]) मनुष्याणाम् । मै ३,६, २; काठ २३,१ ।

१५. घृतमन्तरिक्षस्य (रूपम् ) । माश ७, ५,१,३ ।

१६. घृतं मनुष्याणाम् (सुरभि) । ऐ १,३ ।

१७. घृतेन ते (अग्नेः) तन्वं वर्धयामि । काठ ३८,१२ ।

१८. घृतेन प्रचरन्त्ययातयाम ९ ह्येतत्प्राजापत्यं यदाज्यम् । काठ ३१,९ ।

१९. तद्धै सुपूतं यं घृतेनापुनन् । माश ३, १,२, ११ ।

२०. तेजो वा एतत्पशूनां यद् घृतम् । ऐ ८,२० ।

२१. तेजो वै घृतम् (+ तेजश्चक्षुः [तैसं.]) । तैसं २,२,९,४; मै १, ६, ८; २, १, ७; ३, ६, १; काठ १०,१; २१,१०; २६,५; क ४१, ३; (तु. मै ३,१,९; ९,३; काठ २२, ६; ३७, १६; क ३०, ८) ।

२२. तेनैव (गव्येन घृतेन) श्रोत्रियस्य मुख ९ विमृज्यादुभये ह्येते देवमनुष्या विदुरेतेन कुमार्या एतेन पतिकामाया एतद्धै गोवर्चसं न सर्वस्मा इव कुर्याद्, यस्मै तु कुर्यात्, तेजस्वी स्यात् मै ४, २,१३ ।

२३. देवव्रतं ( बहुदेवत्यम् [कौ.] ) वै घृतम् । कौ २०,४; तां १८, २,६ ।

२४ पयो वै घृतं, पयश्चक्षुः, पयसैवास्मै (यजमानाय) पयश्चक्षुर्दधाति (°क्षुर्जनयतः [ मै २, १,७] ) । मै २,१,७;३,६ ।

२५. पशवो (+ वै मै ३,७,५;७; ४,२,१०; ११; काठ २४,४ ) घृतम् । मै १, १०, ७; ३, ४,४; काठ २२, ६; ३६, १; क ३४, १ ।

२६. भूतिर्दध्ना घृतेन वर्धताम् । तैसं ३, २, ६, १; मै ४, ८, ९ ।

२७. यदम्रियत ( °म्रियत [तैसं.] ) तद् घृतम् ( +अभवत् [तैसं] ) । तैसं २,३,१०,१; मै २,३,४ ।

२८. यदम्रियथास्तद् घृतमभवः । काठ ११, ७ ।

२९. यदिदं घृते हुते प्रतीवार्चिरुज्ज्वलत्येषा वा अस्य ( अग्नेः ) सा तनूर्ययापः प्राविशत् । काठ ८, ९ ।

३०. रेतः सिक्तिर्वै घृतम् । कौ १६, ५ ।

३१. रेतो ( +वै [माश.] ) घृतम् । काठ २६, ७; क ४१,५; माश ९, २, ३, ४४ ।

३२. वज्रो घृतम् । काठ २०, ५; क ३१, ७ ।

३३. स घृङ्ङकरोत् तद् घृतस्य घृतत्वम् । काठ २४, ७; क ३७, ८ ।

३४. समिधाग्निं दुवस्यत घृतैर्बोधयतातिथिम् । काठ १६, १० ।

३५. सर्वदेवत्यं वै घृतम् । कौ २१, ४ ॥ [ °त- अग्नि- २९२; ४२३; ४२४; ४५१; ४७७; अनड्वह्- ११; अमृत- २७; आग्नावैष्णव- २; आग्नेय- ८; आयुर्दा-; आयुष्काम- २; आयुस्- ९; इडा- १९;२६; उल्ब- १द्र. ] ।

घृत-पदी-

१. तौ ( मित्रावरुणौ ) ततो गा ९ समैरयता ९ सा यत्रयत्र न्यक्रामत् ततो घृतमपीड्यत तस्माद् घृतपद्युच्यते । तैसं २, ६, ७, १ ।

२. यदेवास्यै पदाद् घृतमपीड्यत तस्माद् ( घृतपदीति ) एवमाह । तैसं २, ६, ७, ४ ॥ [ °दी- इडा- १९; २२ द्र.] ।

घृत-भाग- आदित्य- २०५ द्र. ।

२७. चक्षुर्हृदये (प्रतिष्ठितम्)। तै ३, १०, ८, ५; शांआ ११, ६।
२८. चक्षुश्चतुर्होता। मै १, ९, ५; काठ ९,१३।
२९. चक्षुश्च मनश्च मैत्रावरुणः। ऐ २,२६।
३०. चक्षुषश्श्रोत्रꣳ सन्तनु। काठ ३९,८।
३१. चक्षुषी ते शुक्रामन्थिनौ पाताम्। मै ४, ८, ७।
३२. चक्षुषी आजाभ्राजे (सामनी)। जै २, ३७।
३३. चक्षुषी युक्ते (पुरुषस्य युगपार्श्वद्वये)। ऐआ २, ३,८।
३४. चक्षुषी वै रौहिणौ (पुरोडाशौ)। माश १४. २, १, ५।
३५. चक्षुषी (+ह वा ऽस्य [माश.]) शुक्रामन्थिनौ। मै ४, ५,९; माश ४,२,१,१।
३६. चक्षुषे कं दर्शपूर्णमासा इज्येते। मै १, ९, ५ (तु. काठ ९,१३)।
३७. चक्षुषे मशकान् (आलभते)। मै ३, १४, ८।
३८. चक्षुषोरधि सूर्यः (जातः)। काठसंक १०१ : ६।
३९. चक्षुस्त्रिष्टुप्। जै १,२६९।
४०. चक्षुस् त्रिष्टुभा (समीरयति)। जै १,२५३।
४१. चक्षुस् (असुराणाम्) त्रिष्टुभा (देवा अवृञ्जत)। जै १,९९।
४२. चक्षुस्सर्वाण्यङ्गानि प्रति। काठ २७, १०।
४३. चत्वारि चक्षुषो रूपाणि, द्वे शुक्ले द्वे कृष्णे। तैसं ५,३,१,४; क ३५,१।
४४. जमदग्नेः सप्तहं विद्वथं चक्षूंषीति। जै २, १७०।
४५. ततो वै तं (प्रजापतिम्) चक्षुः पुनराविशत्। अश्व एव शुचिर्भूत्वैनं पुनराविशत्। तज्ज्योतिर्वै चक्षुः। ज्योतिर्वावैनं तदाविशत्। तदेतच्च चक्षुष्यं (शैशवम्) साम। जै ३,१०२।
४६. तत्सत्यं, सदिति प्राणस्तीत्यन्नं यमित्यसावादित्यस्तदेतत् त्रिवृत् त्रिवृदिव वै चक्षुः, शुक्लं कृष्णं कनीनिकेति। ऐआ २,१,५।
४७. तद्यत्तच्चक्षुरादित्यस्सः। जैउ १,९,१,७।
४८. तस्मादेकं सच्चक्षुर्द्वेधा। ऐ २,३२।
४९. तस्माद् विरूपं चक्षुः कृष्णमन्यच्छुक्लमन्यत्। ष २,२।
५०. त्रिवृद्वै चक्षुः शुक्लं कृष्णं लोहितमिति। कौ ३,५ (तु. जै १,२५४)।
५१. त्रैष्टुभमिदं चक्षुश्शुक्लं कृष्णं पुरुषः। जै १,३२४ (तु. जै २,२४२; तां २०,१६,५)।
५२. पूर्वार्धे (प्रवाहुक्) चक्षुषी। तैसं २,६,२,१।
५३. प्रजापतेर्वा एते चक्षुषी यच् शुक्रामन्थिनौ। मै ४,६,३।
५४. यच्चक्षुः स बृहस्पतिः। गो २,४,११।
५५. यज्ज्योत्स्नायां पश्यामस्तत् पितॄणां चक्षुषा पश्यामश्चन्द्रमा वै पितॄणां चक्षुः। मै ४,२,१।
५६. यत्तच्चक्षुरसौ स आदित्यः। माश १०,३,३,७।
५७. यत्तमिस्रायां पश्यामस्तन् मनुष्याणां चक्षुषा पश्याम एतावद् वाव नः स्वं चक्षुः। मै ४,२,१।
५८. यदग्नेरन्ते पश्यामस्तदसुराणां चक्षुषा पश्यामः। मै ४,२,१।

५९. यद्दिवा पश्यामस्तद्देवानां चक्षुषा पश्यामोऽसौ वा आदित्यो देवानां चक्षुः । मै ४,२, १ ।
६०. यद्वै चक्षुस्तद्धिरण्यम् । गो १,२,२१ ।
६१. रजनो वै कौणेयः क्रतुजितं जानकिं चक्षुर्वन्यमयात्, तस्मा एतामिष्टिं निरवपदग्नये भ्राजस्वते पुरोडाशमष्टाकपाल ᳲ सौर्यं चरुं··· तयैवास्मिन् चक्षुरदधात् । तैसं २,३,८,१ ।
६२. विराट् खलु वै चक्षुर्ज्योतिश्छन्दसाम् । मै ३,२, ९ ।
६३. विष्णवुरुक्रमैष ते सोमस्त ᳲ रक्षस्व, तं ते दुश्चक्षा माऽवख्यत् । तैसं ३,२,१०,१-२ ।
६४. शश्वद्ध वै रेतसः सिक्तस्य चक्षुषीऽएव प्रथमे सम्भवतः । माश ४,२,१, २८ ।
६५. शुक्रामन्थिनौ चक्षुर्भ्यां मे ··· वर्चसे पवेथाम् । माश ४,५,६,२ ।
६६. स ᳲ सर्पेण चक्षुषे चक्षुर्जिन्व । मै २,८,८ (तु. तैसं ४,४,१,३; काठ ३७,१७) ।
६७. सक्तुभिश्श्रीणाति प्रजापतेरेव चक्षुस्सम्भरति । काठ २७,८ ।
६८. सत्यं वै चक्षुः । मै १,८,१; ३,६,३; काठ ८,३; माश ४,२,१,२६ ।
६९. सत्य ᳲ हि वै चक्षुस्तस्माद्यदिदानीं द्वौ विवदमानावेयातामहमदर्शमहमश्रौषमिति य एव ब्रूयादहमदर्शमिति तस्माऽएव श्रद्दध्याम । माश १,३,१, २७ ।
७०. समान ᳲ सच्चक्षुर्द्वेधा । काठ ११,१; २७,७ ।
७१. समान ᳲ हि (संसर्प इति [तैसं ५,३,६,२]) चक्षुः । तैसं २,३,८, २-३; ५,३,६,२ ।
७२. सुषदा पश्चात् सवितुराधिपत्ये, चक्षुर्मे दाः । मै ४,९,३ ।
७३. सूर्यं चक्षुर्गमयतात् । मै ४,१३,४ (तु तैआ ३,४,१; ६,१,४) ।
७४. सूर्यश्चक्षुः । तैसं ७,५,२५,१; काश ४, २, २,१२ ।
७५. सूर्यस्य (चक्षुषा) देवाः (विपश्यन्ति) । तैसं २,३,८,२ ।
७६. सूर्याग्नी चक्षुर्भ्याम् (प्रीणामि) । तैसं ५,७,१२,१; काठ ५३,२ ।
७७. सूर्यो मे चक्षुषि श्रितः । तै ३,१०,८,५ ।
७८. सौरीभिरादधाति, चक्षुरस्मिन् (यजमाने) दधाति । मै २, ३,६ ॥ [°क्षुस्- अग्नि- २१७; ३०४; ३०६; ३०७; ५२७; अग्नीषोम- २५; अध्वर्यु- १७; अन्तरिक्ष- ११३; अप्- १६०; अर्क- २; आज्यभाग- १; आदित्य- ९३;१६०;२०६;२०७;२०८;२३०;२५४; २९५; ३०४; ३६३; आनति-; उक्थ्य- ८; उष्णिक्ककुभ्- १; उष्णिह्- २;८; गायत्र- १६; घृत- २३; २५ द्र. ] ।

चक्षुष्-काम- तामेव (पूर्वोक्तामेवेष्टिम्) निर्वपेच्चक्षुष्कामो यदग्नये पवमानाय निर्वपति प्राणमेवास्मिन् तेन दधाति, यदग्नये पावकाय, वाचमेवास्मिन् तेन दधाति, यदग्नये शुचये चक्षुरेवास्मिन् (यजमाने) दधात्युत यद्यन्धो भवति, प्रैव पश्यति । तैसं २, २,४,३ । [°म- आग्नावैष्णव- २ द्र. ] ।

चक्षुष्-पा- विदद्वसुश्चक्षुष्पाः । तैसं ३,२,१०,२ ॥ [°पा- ऋतसदस्- द्र.] ।

चक्षुष्-मत्- अग्नीषोम- ३; ८ द्र. ।

चतुरवत्त-

१. तेभ्यः (छन्दोभ्यो देवाः) एतच्चतुरवत्तमधारयन् पुरोऽनुवाक्यायै याज्यायै, दैवतायै, वषट्काराय । यच्चतुरवत्तं जुहोति, छन्दा ᳲ स्येव तत्प्रीणाति, तान्यस्य प्रीतानि देवेभ्यो

हव्यं वहन्ति । तैसं २, ६,३,२ ।

२. पशवश्चतुरवत्तम् । तैसं २,६,८,१ ।

चतुर्गृहीत-

१. चतुर्गृहीतेभ्य (छन्दोभ्यः) एतच्चतुर्गृहीतमधारयन् । पुरोऽनुवाक्यायै, याज्यायै, देवतायै, वषट्-कारायै । यच्चतुर्गृहीतं जुहोति, छन्दाᳯंस्येव तत् प्रीणाति । तैसं ५,१, १,१ ।

२. तेभ्य (छन्दोभ्यो देवाः) एतच्चतुर्गृहीतं प्रायच्छन्ननुवाक्यायै, याज्यायै, देवतायै, वषट्काराय । काठ १८,१९ ।

चतुर्थ-

१. आनुष्टुभमेतदहर्यच्चतुर्थम् । तां १२, ८, ८; ९, ९ ।

२. आयतमिव वै चतुर्थमहः । तां १२, १०, १ ।

३. जनद्वद्वा एतदहर्यच्चतुर्थमन्नाद्यञ्जनयति विराजञ्जनयत्येकविंशᳯं स्तोमञ्जनयति । तां १२, ७, ६;८,२ ।

४. यद्वै चतुर्थं तत्तुरीयम् । माश ४, १, ३, १४; ५, २,४, १३; १४, ८,१५, ४ ।

५. वैराजं हि चतुर्थमहः । कौ २९, ५ ।

चतुर्थी (चिति-)-

१. यज्ञ एव चतुर्थी चितिः । माश ८, ७, ४, १५ ।

२. यदूर्ध्वं मध्यादवाचीनं ग्रीवाभ्यस्तच्चतुर्थी चितिः । माश ८, ७, ४, २१ ।

चतुर्दश (स्तोम-)-

१. रुद्राश्चतुर्दशाक्षरया चतुर्दश रात्रीरुदजयन् या इमा अन्तरार्धमासाः । काठ १४,४ ।

२. रुद्राश्चतुर्दशाक्षरेण चतुर्दशᳯंस्तोममुदजयन् । तैसं १, ७, ११, २ ।

चतुर्दश-रात्र (यज्ञ-)-

१. चतुर्दशरात्रो भवति, सप्त ग्राम्या ओषधयः, सप्ताऽऽरण्या उभयीषामवरुद्ध्यै । तैसं ७, ३, ४, १ ।

२. य एवं विद्वाᳯंसश्चतुर्दशरात्रमासत उभयोरेव लोकयोर्ऋध्नुवन्त्यस्मिᳯंश्चामुष्मिᳯंश्च । तैसं ७, ३, ४, १ ।

चतुर्विंश (स्तोम-)-

१. चतुर्विᳯंश एव स्तोमो भवति तेजसे ब्रह्मवर्चसाय । तां १५, ११, १६ ।

२. चतुर्विंशं प्रातस्सवनं । जै २, २७९ ।

३. चतुर्विंशः स्तोमो भवति तच्चतुर्विंशस्य चतुर्विंशत्वं चतुर्विंशतिर्वा अर्धमासाः । अर्धमासश एव तत्संवत्सरमारभन्ते । ऐ ४, १२ ।

४. चतुर्विंशो वै संवत्सरोऽन्नं पञ्चविᳯंशम् । तां ४, १०,५ ।

५. तेजश्चतुर्विंश स्तोमानाम् । तां १५, १०, ६ ।

६. ब्रह्म वै चतुर्विंशः । जै २, २७९ ।
७. मुखं वा एतत्संवत्सरस्य यच्चतुर्विंशम् । कौ १९, ८ ।
८. यज्ञमुखं चतुर्विं ९ शो यज्ञमुखमेव पुरस्ताद्धाति । काठ २१, १ ।
९. योनिश्चतुर्विंशः ( +इति पुरस्ताद्यज्ञमुखं वै चतुर्विंशः [काठ.] ) । तैसं ४,३,८,१: मै २,८,४; काठ २०, १३ ।

चतुर्विंशति->°रात्र (यज्ञ-)- य एवं विद्वा ९ सश्चतुर्विंशतिरात्रमासते, श्रदेभ्यो मनुष्या दधते गच्छन्ति पुरोधाम् । तैसं ७, ४, १, १ ।

चतुर्होतृ-

१. एतद्वै देवानां परमं गुह्यं ब्रह्म यच्चतुर्होतारः । तै २,२,१,४;६,३ ।
२. एतद्वै देवानां ब्रह्मानिरुक्तं यच्चतुर्होतारः । काठ ९, १६ ।
३. एतान्य् उ ह वै देवानां गुह्यानि नामानि यच्चतुर्होतारः । जै ३,३०६ ।
४. एते वै चतुर्होतारो ऽनुसवनं तर्पयितव्या यद् ब्राह्मणा बहुविदः । मै १, ९, ५ ।
५. चतुर्होत्रा पूर्णमासे हवी ९ ष्यासन्नान्यभिमृशेत् । काठ ९, १४ ।
६. चतुर्होत्रा याजयेत्पुत्रकामं, चतुर्होत्रा वै देवा इन्द्रमजनयन्निन्द्रियं पुत्रः । काठ ९, १४ ।
७. चतुर्होत्रा याजयेद्राजानं संग्रामे संयत्तम् । काठ ९,१४ ।
८. चतुर्होतारं व्याख्यायाज्यैरुद्रायेत् । काठ ९, १४ ।
९. चतुर्होतारं प्रयाजानां पुरस्ताद् व्याचक्षीत । काठ ९, १४ ।
१०. चतुर्होतारो वै यज्ञस्य योनिः । मै १, ९,७ ।
११. चत्वारो वा एते यज्ञास्तेषां चत्वारो होतारस्तदेषां चतुर्होतृत्वम् । काठ ९,१५ (तु. मै १, ९,७) ।
१२. त एकवि ९ शमेवायतनमचाय ९ स्त इन्द्रमजनयन् । काठ ९,११ ।
१३. तस्मै ( ब्रह्मणे ) चतुर्थ ९ हूतः प्रत्यशृणोत् । स चतुर्हूतो ऽभवत् । चतुर्हूतो ह वै नामैषः । तं वा एतं चतुर्हूत ९ सन्तं चतुर्होतेत्याचक्षते परोक्षेण । तै २, ३ ११,४ ।
१४. ते चतुर्होत्रा सोमगृहपतयो न्यसीदन्निन्द्रं जनयामेति, तेषां पृथिवी होतासीद् द्यौरध्वर्युस्त्वष्टाग्निर्मित्र उपवक्ता । काठ ९,११ ।
१५. ते वै चतुर्होतारो न्यसीदन्त्सोमगृहपतया इन्द्रं जनयिष्याम इति, पृथिवी होतासीद्, द्यौरध्वर्युस, त्वष्टाग्नीत्, मित्र उपवक्ता··· ( त एकवि ९ शेन ) इन्द्रमजनयन् । मै १, ९, ४ ।
१६. दर्शपूर्णमासौ चतुर्होता । मै १, ९, ५; काठ ९, १३ ।
१७. दर्शपूर्णमासौ चतुर्होतुः ( निदानम् ) । तै २, २, ११, ६ ।
१८. देवानामेव तद्यज्ञियं गुह्यं नाम यच्चतुर्होतारः । ऐ ५, २३ ।
१९. पृथिवी होता चतुर्होतॄणाम् । तै ३, १२, ५, १ ।
२०. प्रजाकामं चतुर्होत्रा याजयेत् । मै १, ९, ६ ।
२१. प्रजापतिर् (यशो [तै २, २, ८, २]) वै चतुर्होता । तै २, २, ३, ५; ८, २ ।
२२. ब्रह्मण ( °णो वा [मै.] एतदुदरणं यच्चतुर्होतारः । मै १, ९, ७; काठ ९, १५।

२३. ब्रह्म वै चतुर्होतारः । तै ३, १२, ५, १।
२४. यज्ञं सृष्ट्वा सो ( प्रजापतिः ) ऽकामयत दर्शपूर्णमासौ सृजेयेति, स एतं चतुर्होतारमपश्यत्''' तेन दर्शपूर्णमासा असृजत । काठ ९, १६ ।
२५. यद्देवेषु चतुर्धा होतारः । तेन चतुर्होतारः । तस्माच्चतुर्होतार उच्यन्ते । तच्चतुर्होतॄणां चतुर्होतृत्वम् । तै २, ३,१, १ ।
२६. यद्वा इदं किञ्च । तत्सर्वं चतुर्होतारः । तै २, ३, ५,५ ।
२७. वरो हि पुत्रश्चतुर्होत्रा याजयेत् । काठ ९, १४ ।
२८. संवत्सरं चतुर्णामेको नाश्नीयात् तदेषां ( चतुर्होतॄणाम् ) व्रतम् । काठ ९, १५ ।
२९. संग्रामिणं चतुर्होत्रा याजयेत् । मै १, ९,६ ।
३०. सोमश्चतुर्होतॄणां होता । तै २, ३, ५, ६ ।
३१. सोमश्चतुर्होत्रा । तै २, २, ८, ४ ।
३२. सोमो वै चतुर्होता । तै २, ३, १, १ ॥ [ °तृ- अनाहिताग्नि- १; अन्तरिक्ष- ४२; अन्न- २२; इन्द्र- १७५;२४६; चक्षुस्- ५३ द्र.] ।

चातुर्होत्रिय- कमग्निं चिनुते चातुर्होत्रियमग्निं चिन्वानः । ब्रह्म प्रत्यक्षेण । तैआ १, २२,११।

चतुश्चत्वारिंश (स्तोम-)-

१. चतुश्चत्वारिंशं माध्यन्दिनं सवनम् । जै २, २७९ ।
२. चतुश्चत्वारिंशः स्तोम इति दक्षिणतः । तैसं ५,३, ५,१; काठ २१,२ ।
३. चतुश्चत्वारिंशः स्तोमो वर्चो द्रविणम् । तैसं ४,३,१२,१; काठ १७,६ ।
४. त्रैष्टुभश्चतुश्चत्वारिंशः । काठ २१,२ ।
५. ब्रह्मवर्चसं वै चतुश्चत्वारिंशः । तैसं ५.३,५,१; काठ २१,२; क ३१,१७ ।
६. यवानां भागोऽस्ययवानामाधिपत्यं प्रजास्स्पृताश्चतुश्चत्वारिंशस्स्तोमः । काठ १७,४ ।
७. वज्रो वै चतुश्चत्वारिंशः । तैसं ५,३,५,२ ॥ [ °श- क्षत्र- ३२ द्र.] ।

चतुश्चत्वारिंशिन्- चतुश्चत्वारिंशी स्तोमो, वर्चो द्रविणम् । मै २,८, ७ ।

चतुष्टोम-

१. अन्तश्चतुष्टोम स्तोमानाम् । तां २१,४, ६ ।
२. धर्त्रं चतुष्टोम इति पुरस्ताद्यज्ञमुखं वै चतुष्टोमो, यज्ञमुखमेव पुरस्ताद् दधाति । काठ २१,१ ।
३. परमश्चतुष्टोमः स्तोमानाम् । तैसं ५,४,१२, १; माश १३,३,३,१ ।
४. प्रतिष्ठा (+ वै [तां.]) चतुष्टोमः । तां ६,३,१६; माश ८, १,४,२६ ।
५. ब्रह्म ( धर्त्रं [मै.] ) चतुष्टोमः । तैसं ५,३,४,४; मै २,८,४; काठ २१,१ ।
६. यच्चतुष्टया देवाश्चतुर्भिः स्तोमैरस्तुवंस्तस्माच्चतुःस्तोमस्तं चतुःस्तोमं सन्तं चतुष्टोममित्याचक्षते । ऐ ३,४३ ।
७. सरघा वा अश्वस्य सक्थ्यावृहत्तद्देवाश्चतुष्टोमेन प्रत्यदधुर्यच्चतुष्टोमो भवत्यश्वस्य सर्वत्वाय । तां २१,४,४ ।

चतुष्पथ-

१. एतद्ध वाऽअस्य (रुद्रस्य) जान्धितं प्रज्ञातमवसानं यच्चतुष्पथम् । माश २,६,२,७ ।

२. चतुष्पथे वै रुद्राणां गृहाः । मै १,१०,२०; काठ ३६,१४ ।

चतुष्पद्- सोमश्चतुरक्षरया ( °रेण [तैसं.]) चतुष्पदः पशूनुदजयत् । तैसं १,७,११,१; मै १,११, १०; काठ १४,४ ।

चतुष्पद- चतुष्पदाः (+वै [जै १,१६०]) पशवः । जै १,१६०;२,४३१ ।

चतुष्पाद्-

१. चतुष्पादः (°दो वै [मै.]) पशवः । मै १,५,१०; ३,२,१;७,५; गो २,१,४; ३,१६; तै २,१, ३,५ (तु. मै २,४,४)

२. तस्माद् द्विपाच्चतुष्पादमत्ति । तै २, १,३,९;३, ९,१२,३ ।

चतुष्पाद-

१. चतुष्टया वै पशवोऽथो चतुष्पादाः । कौ १६,३;११;२८,१०;२९,८ ।

२. चतुष्पादाः (+वै [ऐ.; ऐआ.]) पशवः । ऐ २, १८; ३, ३१;५,३; १७,१९; जै १,१३१; तां ३,८,३; ऐआ १,१,२ ।

३. चतुष्पादा वा अश्वाः सन्तश्चतुश्शफाः । जै २, १७३ ।

चतुस्त्रिंश (स्तोम-)-

१. अश्वश्चतुस्त्रि ९ शो दक्षिणानां प्रजापतिश्चतुस्त्रि ९ शो देवतानाम् । तां १७, ११,३ ।

२. तस्य चतुस्त्रि ९ शोऽग्निष्टोमः प्रजापतिश्चतुस्त्रि ९ शो देवतानाम् । तां २२, ७,५ ।

३. प्रजापतिर्वै चतुस्त्रिंशः । मै ४,४,१० ।

४. ब्रध्नस्य विष्टपं चतुस्त्रिंशः । तैसं ४,३, ८,१; मै २,८,४ ॥ [ °श- आदित्य- २८७ द्र.] ।

चतुस्त्रिंशिन्- स्वाराज्यमु चतुस्त्रिंशी । जै २, १९६ ।

चतुःस्रक्ति- एष वै चतुःस्रक्तिर्य एष (सूर्यः) तपति । दिशो ह्येतस्य स्रक्तयः । माश १४,३,१,१७ ।

चतूरात्र-

१. जमदग्निः पुष्टिकाम एतम् (चतूरात्रम्) आहरत् स इमान् पोषानपुष्यत् । तां २१, १०,१ ।

२. दिश एव चतूरात्रः । जै २,२८४ ।

३. दिश एवानु चतूरात्र इति । चतस्रो दिशः । ऊर्ध्वा दिक् पञ्चमी । चत्वार्यैतान्यहानि भवन्ति । रात्रिः पञ्चमी । जै २, २८७ ।

४. प्रजननकामो हैतेन (चतूरात्रेण) यजेत । जै २,२८५ ।

चन्द्र-

१. असौ वै चन्द्रः पशुस्तं देवाः पौर्णमास्यामालभन्ते । माश ६, २,२,१७ ।

२. असौ वै चन्द्रः प्रजापतिः । माश ६,२,२, १६ ।

३. चन्द्र ९ ह्येतच्चन्द्रेण क्रीणाति यत्सोम ९ हिरण्येन । माश ३, ३, ३, ६ ।

४. चन्द्र (चन्द्रमा [गो.]) एव सविता । जैउ ४, १२, १,१३; गो १,१,३३ ।

५. चन्द्रा ह्यापः । चन्द्र ९ हिरण्यम् तै १,७,६,३ ।

चन्द्रमस्-

१. अथ पौर्णमास्यां पुरस्ताच्चन्द्रमसं दृश्यमानमुपतिष्ठेतैतयैवाऽऽवृता । शांआ ४,९ ।

२. अथ मासि मास्यमावास्यायां वृत्तायां पश्चाच्चन्द्रमसं दृश्यमानमुपतिष्ठेतैतयैवाऽऽवृता हरिततृणे वा प्रत्यस्य यन्मे सुसमिद्धृदयं··· इति । शांआ ४, ८ ।
३. अथ यत्तन्मन आसीत् स चन्द्रमा अभवत् । जैउ २,१,२,२ ( तु. जैउ १,९,१,५ ) ।
४. अथ यस्स प्रजानां जनयित ऋषभेऽन्नलोकेऽप्स्वन्तः, चन्द्रमा हैव सः । स उ हैव प्रजापतिः । जै ३, ३५१ ।
५ अथ यो दक्षिणे (अयने) प्रमीयते पितृणामेव महिमानं गत्वा चन्द्रमसः सायुज्यं गच्छति। तैआ १०,६४,१ ।
६. अथ शिवो (नाम लोकः) यस्मिँश्चन्द्रमाः । जै ३,३४७ ।
७. अथैष एव वृत्रो यच्चन्द्रमाः । माश १, ६,४,१३;१८ ।
८. अथैष चन्द्रमा दक्षिणेनैति । ष २,४ ।
९. अथो चन्द्रमा वै भान्तः पञ्चदशः स च पञ्चदशाहान्यापूर्यते पञ्चदशापक्षीयते तद्यत्तमाह भान्त इति भाति हि चन्द्रमाः । माश ८,४,१,१० ।
१०. अन्नमु (+ वै [जैउ.]) चन्द्रमाः । माश ८,३, ३,११; जैउ १,१,३,४ ।
११. अपराजितो नाम लोको नक्षत्रैर्विष्टश्चन्द्रमा गोप्ता, आदित्योऽधिपतिर्यदुद्यतश्च सूर्यस्य रूपमस्तं च यतस्तद् रूपं, मनसि प्रतिष्ठितः । जै ३, ३४८ ।
१२. अमावास्यायां सो (चन्द्रमाः) ऽस्य (सूर्यस्य) व्यात्तमापद्यते । (सूर्यः) तं ( चन्द्रमसम्) ग्रसित्वोदेति । स (चन्द्रमाः) न पुरस्तान्न पश्चाद्ददृशे । माश १,६,४,१८-१९ ।
१३. असौ य (चन्द्रमाः) आपूर्यति । स सर्वेषां भूतानां प्राणैरापूर्यति । असौ यो ( चन्द्रमाः) ऽपक्षीयति । स सर्वेषां भूतानां प्राणैरपक्षीयति । तैआ १, १४,१-२ ।
१४. असौ वै सोमो राजा विचक्षणश्चन्द्रमाः । कौ ४,४;७, १० ।
१५. एतद्वा इयम् (भूमिः)। अमुष्यां (दिवि) देवयजनमदधाद्यदेतच्चन्द्रमसि कृष्णमिव । ऐ ४,२७।
१६. एतद्वै देवसत्यं (देवसोमं [ऐ.]) यच्चन्द्रमाः । ऐ ७, ११; कौ ३,१।
१७. एतद्वै स्वर्गस्य लोकस्य द्वारं यच्चन्द्रमाः । शांआ ३, २; कौउ १, २, ।
१८. एष ( चन्द्रमाः ) वै पवमान एष सोमो राजा । जै २, १४५ ।
१९. एष वै यमो य एषो ऽन्तश्चन्द्रमसि । एष हीदं सर्वं यमिति । जै १, २८ ।
२०. एष ( चन्द्रमाः ) वै रेतः । माश ६, १, २, ४ ।
२१. एष वै शशो य एषो ऽन्तश्चन्द्रमसि । एष हीदं सर्वं शास्ति । जै १, २८ ।
२२. चन्द्रमसस्तृतीया । तैसं ५, ७, २२, १; काठ ५३,१२ ।
२३. चन्द्रमसा नक्षत्राणि ( अन्वाभवत् ) । काठ ३५, १५; ४३, ४ ।
२४. चन्द्रमसो रोहिणी ( पत्नी ) । तैआ ३, ९,२ ।
२५. चन्द्रमा अस्मै पूर्वपक्षापरपक्षान्विचिनोति पुण्याय कर्मणे । ऐआ २, १, ७ ।
२६. चन्द्रमा अस्यादित्ये श्रितः । नक्षत्राणां प्रतिष्ठा । तै ३, ११, १, १२ ।
२७. चन्द्रमा इव पुनर्भूर्भूयासम् । ऐआ ५, १, १ ।
२८. चन्द्रमा उदानः । जैउ ४, ११, १, ९ ।
२९. चन्द्रमा उ वै सोमः । माश ६, ५, १, १ ।
३०. चन्द्रमा एव ( संवत्सरस्य ) द्वारपिधानः । माश ११, १, १, १ ।

३१. चन्द्रमा एव धाता (+च विधाता च [गो.]) । मै ४, ३, ५; काठ १२, ८; गो २,१, १० ।
३२. चन्द्रमा एव मन्थी ( सर्वम् [गो.]) । गो १, ५,१५; माश ४, २, १, १ ।
३३. चन्द्रमा एव (वै [जैउ १, १,३, ४]) हिङ्कारः । जैउ १, १,३,४;११,१, ५ ।
३४. चन्द्रमाः पुनरसुः (प्रतिहारः [जैउ.]) । तै २, ५, ७, ३ ; जैउ १, १२, २,९ ।
३५. चन्द्रमा देवता सतोबृहती छन्दो मन्थिनः पात्रमसि । तैसं ३, १, ६, ३ ।
३६. चन्द्रमा द्विपात्तस्य पूर्वपक्षापरपक्षौ पादौ । गो १, २, ८ ।
३७. चन्द्रमा (+वै [प.]) धाता । तैसं ३, ४,९, ६; ष ४, ६ ।
३८. चन्द्रमा नक्षत्राणाम् (अधिपतिः) । तैसं ३, ४, ५, १ ।
३९. चन्द्रमा नक्षत्रेषु (दीप्यते) । जै २, ३३३; ४३३ (तु. जै १, २९२) ।
४०. चन्द्रमा नक्षत्रैरनुत्वावीत् । काठ ३७, ९ ।
४१. चन्द्रमा नक्षत्रैर्वरुणाय समनमदृद्धयः ससनमत् । तैसं ७, ५, २३, १ ।
४२. चन्द्रमा (+मे [ष.]) ब्रह्मा (आसीत्) । गो १,१,१३; ष २, ५ ।
४३. चन्द्रमा भूत्वार्धमासान्( प्रजापतिः ) पर्यगृह्णात् । जै १, ३१४ ।
४४. चन्द्रमा मनः ( मनुष्यलोकः [जैउ.] ) । ऐआ २, १,५; जैउ ३,३,३,१२ (तु. जै २,५३) ।
४५. चन्द्रमा मनसो जातः । काठसंक १०१ : ६; तैआ ३, १२, ६ ।
४६. चन्द्रमा मे मनसि श्रितः । तै ३, १०,८, ५ (तु. शांआ १०,१) ।
४७. चन्द्रमा वा अमावास्यायामादित्यमनुप्रविशति । ऐ ८,२८ ।
४८. चन्द्रमा वाऽअस्य (सोमस्य) दिवि श्रव उत्तमम् । माश ७, ३,१,४६ ।
४९. चन्द्रमा वै जायते पुनः । तै ३, ९,५,४ ।
५०. चन्द्रमा वै पञ्चदशः । एष हि पञ्चदश्यामपक्षीयते पञ्चदश्यामापूर्यते । तै १,५,१०, ५ ।
५१. चन्द्रमा वै पितॄणां चक्षुः । मै ४, २, १ ।
५२. चन्द्रमा वै प्राणः (वरेण्यम् [जैउ ४, १२, २, १]) । जैउ ४, ११, १, ११;१२,२,१ ।
५३. चन्द्रमा वै ब्रह्म । ऐ २,४१ ।
५४. चन्द्रमा वै ब्रह्माकृष्णः । माश १३, २, ७,७ (तु. गो १, २, २४; माश १२, १,१,२) ।
५५. चन्द्रमा वै ब्रह्मा ऽधिदैवं मनो ऽध्यात्मम् । गो १, ४, २ ।
५६. चन्द्रमा वै भर्गः (सोमः [काठसंक.]) । काठसंक २२ : २;३; जैउ ४, १२,२,२ ।
५७. चन्द्रमा वै मा मासः । तस्मान्मेत्याह । मा इति हैतत्परोक्षेणेव । जैउ ३, ३,२, ६ ।
५८. चन्द्रमा वै यज्ञायज्ञियं यो हि कश्च यज्ञः संतिष्ठत ऽएतमेव तस्याहुतीनाᳩ रसो ऽप्येति तद्यदेतं यज्ञो यज्ञो ऽप्येति तस्माच्चन्द्रमा यज्ञायज्ञियम् । माश ९, १, २, ३९ ।
५९. चन्द्रमा वै सोमो रुद्रवान् । तैआ ५, ७, १० (तु. काठ ११, ५) ।
६०. चन्द्रमाश्चतुर (चतुर्थो मृत्युः) उच्यते । तैआ १, ८, ४ ।
६१. चन्द्रमाः श्रोत्रम् । तैसं ७, ५, २५, १ ।
६२. चन्द्रमास्सर्वेषु नक्षत्रेषु समावद् वसति । काठ ११, ३ ।

६३. चन्द्रमा ह्येतस्यान्नं य एष ( सूर्यः ) तपति । माश ४, ६, ७, १२ ।

६४. ततो वै स ( सोमः ) सर्वेषां देवानां राज्यायासूयत । सूयते स्वानां श्रेष्ठतायै य एवं वेद । तेभ्यस्तिरोऽभवत् । तदन्वैच्छन् । तेभ्य एतेन रूपेणादृश्यत यदेतच्चन्द्रमसः। जै ३, २५ ।

६५. तं ( चन्द्रमसम् ) देवाः कलशो भक्षयन्ति । काठसंक २२ : ३ ।

६६. तं ( वृत्रमिन्द्रः ) द्वेधान्वभिनत्तस्य यत्सौम्यं न्यक्तमास तं चन्द्रमसं चकाराथ यदस्या-सुर्यमास तेनेमाः प्रजा उदरेणाविध्यत् । माश १, ६,३,१७ ।

६७. तम् (रुद्रं प्रजापतिः ) अब्रवीन्महा देवो ऽसीति । तद्यदस्य तन्नामाकरोच्चन्द्रमास्तद्रूपम-भवत्प्रजापतिर्वै चन्द्रमाः प्रजापतिर्वै महान् देवः । माश ६, १, ३, १६ ।

६८. तस्मादिमौ सूर्याचन्द्रमसौ प्रत्यञ्चौ यन्तौ सर्व एव पश्यति । माश ४, २, १, १८ ।

६९. तस्या एतस्यै (लोकत्रयरूपायै दिव्यै विराजे) चन्द्रमा एवापिधानम् । एतद्धि देवानां प्रत्यक्षमन्नं यच्चन्द्रमाः । जै १,२४६ ।

७०. तस्यैतच्चन्द्रं मे चन्द्रं म इत्येव वदत एतत् तेज आदत्त येनैष एतत् तपति । स यच्चन्द्रं म इत्यब्रवीत् तस्माच्चन्द्रमाः । जै ३, ३६८ ।

७१. तस्यैतदन्नं ( अर्कस्य ) कयमेष चन्द्रमास्तदर्क्यं यजुष्टः । माश १०, ४, १, २२ ।

७२. तेभ्यः ( देवेभ्यः सोमः) तिरोऽभवत् । तमन्वैच्छंस्तेभ्य एतेन रूपेणादृश्यत यदेतच्चन्द्रमसः। जै ३,१५ ।

७३. तौ हैतौ पितापुत्राविव यच्चन्द्रमाश्चादित्यश्च । पिता चन्द्रमा आदित्यः पुत्रः । जै ३,३६८ ।

७४. नक्षत्राणि स्थ चन्द्रमसि श्रितानि । संवत्सरस्य प्रतिष्ठा । तै ३,११,१,१२ ।

७५. पुरुषमृगश्चन्द्रमसः (°मसे [काठ.]) । मै ३,१४,१६; काठ ४७,५ ।

७६. प्र चन्द्रमास्तिरति दीर्घमायुः । तैसं २, ४, १४,१ ।

७७. प्रजापतिरेव चन्द्रमाश् चतुर्थो ब्रह्मा दक्षिणत आस्ते । जै २, २६२ (तु. जै २,६; माश ६, १,३, १६) ।

७८. भां चन्द्रमसः (आदित्य आदत्त) । जै २,२६ ।

७९. मनो मे रेतो मे प्रजा मे पुनस्सम्भूतिर्मे तन्मे त्वयि (चन्द्रमसि) । जैउ ३,५, ८, १४ ।

८०. मह इति चन्द्रमाः । चन्द्रमसा वाव सर्वाणि ज्योती ँषि महीयन्ते । तैआ ७,५,२; तैउ १, ५,२ ।

८१. यच्चन्द्रमा अमावस्याया अधि प्रजायते तन्मिथुनम् । काठ १२,८ ।

८२. यत्ततः पर आकाशस्तस्यैष आत्मा समुमूढो(?) यच्चन्द्रमाः । जै २, ५६ ।

८३. यत्तन्मन एष स चन्द्रमाः । माश १०, ३,३,७ (तु. जैउ ३,१,२,६) ।

८४. यत्पञ्चमेऽहन् प्रवृज्यते । चन्द्रमा भूत्वा नक्षत्राण्येति । तैआ ५,१२,१ ।

८५. यददश्चन्द्रमसि कृष्णं पृथिव्या हृदय ँ श्रितम् । मं १,५,१३ ।

८६ यदस्याः (पृथिव्याः ) यज्ञियमासीत्तदमुष्यामदधात् (दिवि) । तददश्चन्द्रमसि कृष्णम् । तैसं ५,२,३,३; तै १,१,३,३ ।

८७. यद्वृत्रश्चन्द्रमास्तेन । कौ ६,७ ।
८८. ये वै के चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति। शांआ ३,२; कौउ १,२ ।
८९. यो वा एष चन्द्रमा एष वाव संवत्सर एष प्रजापतिरेष मास इति । जै २,३ ।
रात्रिर्वै ( वागिति [जैउ.] ) चन्द्रमाः । माश १२, ४,४,७; जैउ ३,३, ३,१२ ।
९०. वाग्घ चन्द्रमा भूत्वोपरिष्टात्तस्थौ । माश ८,१, २, ७ ।
९१. वायुरापश्चन्द्रमा इत्येते भृगवः । गो १,२,९ ।
९२. वृष्टिर्वै वृष्ट्वा चन्द्रमसमनुप्रविशति । ऐ ८.२८ ।
९३. षोडशकलो वै चन्द्रमाः । ष ४,६ ।
९४. स (इन्द्रः) चन्द्रं म आहरेति प्रालपत् तच्चन्द्रमसश्चन्द्रमस्त्वम् । तै २,२,१०,३ ।
९५. स (चन्द्रमाः) पञ्चदश रात्रीरूर्ध्व एति, पञ्चदशार्वाङ् । या आपूर्यते ता ऊर्ध्व एत्यथ या अपोक्षस्ता अर्वाङ् । स आपूर्यमाणोऽमुं लोकं गच्छति । सोऽमुना लोकेन संस्पृश्यान्नं भवति । स यदस्य तत्र स्वधं तत्स्वद इत्यपोक्षन्निमं लोकमागच्छति । स इमा अप ओषधीः प्रविशति । स इमा अप ओषधीः प्रविश्याप्स्वोषधीष्वात्मानं न्युप्यापूर्यमाणोऽमुं लोकं गच्छति । जै २,३ ।
९६. स यदस्यै पृथिव्याऽ अनामृतं देवयजनमासीत्तच्चन्द्रमसि न्यदधत तदेतच्चन्द्रमसि कृष्णम् । माश १, २, ५, १८ ।
९७. स ( चन्द्रमाः ) वै देवानां वस्वन्न ९ ह्येषाम् । माश १, ६, ४, ५ ।
९८. सा हैषा चन्द्रमा एव यद् रेतस्या । स एष रेतसः प्रतिरूपो देवभक्षः सोमो राजा । सर्वस्यास्य रसः समुदूढः । तं सर्वे देवा उपजीवन्ति । सोम एव राजा ब्रह्म । जै १, ३१६ ।
९९. सुषुम्णः ( °म्नः [तैसं.]) सूर्यरश्मिश्चन्द्रमा गन्धर्वः । तस्य नक्षत्राण्यप्सरसो बेकुरयो नाम । तैसं ३, ४, ७, १; मै २, १२, २; क २९, ३ ।
१००. सूर्यस्येव हि चन्द्रमसो रश्मयः । माश ९, ४, १, ९ ।
१०१. सोमो वै (+ राजा [माश १०, ४, २, १] ) चन्द्रमाः । मै २, १, ५; कौ १६, ५; तै १, ४,१०,७; माश १०,४,२,१; १२,१,१,२ ॥ [°मस्- अनुख्यातृ-; अन्न- १२२;१४२; अप्- १६३; १६४; अपराह- ३; अहन्- ४३; आदित्य- २६; ऊर्ज्- १९; ऋतु- ४५; ओम् २७; गायत्र- ३०; चन्द्र- ४ द्र ] ।

चमस- ऋषि- ५ द्र. ।

चमसाध्वर्यु-

१. रश्मयो वै चमसाध्वर्यवः । ष २, ५ ।
२. लोमानि मे चमसाध्वर्यवः । ष २, ७ ॥ [ °र्यु- अङ्ग- २ द्र. ] ।

चरण-

१. आदित्य एव चरणं यदा ह्येवैष उदेत्यथेद ९ सर्वं चरति । माश १०, ३, ५, ३ ।
२. चक्षुरेव चरणं चक्षुषा ह्ययमात्मा चरति । माश १०, ३, ५, ७ ।

चरत्- वायुर्वै चरन् । तै ३, ९, ४, १ ।

चरु-

१. अस्मिन्नेव ( पृथिवी- ) लोके पुरोडाशेन ऋध्नोति, चरुणामुष्मिन् ( दिवि )। मै ३,१,१०।

२. इमे ( + वै [मै.]) लोकाश्चरुः पञ्चबिलः। मै १, ४, ९; काठ ३२, ६।

३. ओदनो हि चरुः। माश ४, ४, २, १।

४. चरुणाऽस्मिन् ( देवाः पृथिवीलोक आर्ध्नुवन् )। तैसं ५, ५, १, ५।

५. चरोस्त्वा पञ्चबिलस्य यन्त्राय धर्त्राय गृह्णामि। तैसं १, ६, १, २।

६. स चरुं कुर्वीताग्नेर्घृतं विष्णोस्तण्डुलाः। तैसं ५, ५, १, ५।

चर्मन्-

१. चर्म वा ऽ एतत् कृष्णस्य ( मृगस्य ) तन्मानुष ९, शर्म देवत्रा। माश ३, २, १, ८।

२. जिह्वा चर्म। तैसं ६, २, ११,४।

चषाल- चषालाद् वै देवतास्स्वर्गं लोकमायन्। काठ २६, ४॥ [°ल- ऐन्द्र- १० द्र.]।

चातुर्मास्य (<चतुर्मास-)-

१. उत्सन्नयज्ञ इव वा ऽ एष यच्चातुर्मास्यानि। माश २, ५, २, ४८; ६,२, १९।

२. चातुर्मास्यानि पञ्चहोता। मै १, ९, ५।

३. चातुर्मास्यानि पञ्चहोतुः ( निदानम् )। तै २, २, ११, ६।

४. त्रेधाविहितानि चातुर्मास्यानि। मै १,१०,७।

५. भैषज्ययज्ञा वा एते यच्चातुर्मास्यानि तस्मादृतुसंधिषु प्रयुज्यन्त। कौ ५,१; गो २,१,१९।

६. य एवं विद्वांश्चातुर्मास्यैर्यजते परा भ्रातृव्यं नुदते, प्र प्रजया प्र पशुभिर्जायते। काठ ३५,२०।

७. यच्चतुरश्चतुरो मासोऽयुवन्त तच्चातुर्मास्यानां चातुर्मास्यत्वम्। काठ ३६,२।

८. यत् पयस्या तेन चातुर्मास्यानि। जै २, ३८।

९. यं द्वितीयं सुवसुन्नयति तद्वै चातुर्मास्यानां रूपम्। जै १,४०।

१०. यश्चातुर्मास्यैर्यजते स सहस्रयाजी। मै १,८,६।

११. विराजो वा एषा विक्रान्तिर्यच्चातुर्मास्यानि। तै १, ४,९,५।

१२. वैश्वदेवेन चतुरो मासोऽयुवत, वरुणप्रघासैः परा ९ श्चतुरः साकमेधैः परा ९ श्चतुरः मै १,१०,८।

१३. श्रोत्राय कं चातुर्मास्यानि हूयन्ते। मै १, ९,५।

१४. संवत्सर ९ वै चातुर्मास्यानि। मै १,१०,७।
सर्वं चातुर्मास्यानि। गो २,१,२६।

१५. स वा एष प्रजापतिश्चतुर्विंशो यच्चातुर्मास्यानि। गो २,१,२६॥ [°स्य- असुर- २१ द्र.]।

चातुर्मास्य-याजिन्-

१. अक्षय्य ९ ह वै सुकृतं चातुर्मास्ययाजिनो भवति। माश २,६,३,१

२. देवानां वा एष आनीतो यश्चातुर्मास्ययाजी। तै १,५, ६, ७।

३. यस्त्रयोदशं मास ९ संपादयति त्रयोदशं मासमभिजयते स चातुर्मास्ययाजी। मै १,१०,८।

४. स परममेव स्थानं परमां गतिं गच्छति चातुर्मास्ययाजी। माश २,६, ४, ९।

५. संवत्सरसद् ध खलु वा एष यश्चातुर्मास्ययाजी । जै २,२३४ ॥ [°जिन्- ऋतु- ३६ द्र.]।

चात्वाल-

१. अग्निरेष यच्चात्वालः । माश ७,१,१,३६;९,१,१,४२ ।

२. एष (चात्वालः) वा अग्नीना ९ योनिः । मै ३,९,७ ।

३. एष वाव स समुद्रः यच्चात्वालः । तै १, ५, १०,१ ।

४. योनिर्वै यज्ञस्य चात्वालः (चात्वालम् [तैसं.]) । तैसं ६,१,३,८;४,३,४; जै ३, ११५ ।

चाष- चाषान् पित्तेन (प्रीणामि) । मै ३,१५,९ ॥ [°ष- अग्नीषोम- १२ द्र.] ।

चिकित्वस्- चिकित्वानिति विद्वानित्येतत् । माश ६,४,२,६ ।

चित्-

१. चितः स्थ, प्रजामस्मै रयिमस्मै··· यजमानाय पर्यूह । तैसं १,१,७,२ ।

२. चिदसीत्याह, यद्धि मनसा चेतयते तद्वाचा वदति । तैसं ६,१,७,४ ।

चित्त्व- यद्वाव चिकित्सत इत्थमसा३दित्थमसा३दिति, तदस्याश्चित्त्वम् । मै ३,७,५

चित्पति-

१. प्रजापतिर् (ब्रह्म [काठ., क.]) वै चित्पतिः । काठ २३,१; क ३५,७ माश ३,१,३,२२ ।

२. मनो (यज्ञो [मै.]) वै चित्पतिः । तैसं ६,१,१,९; मै ३,६,३ ।

चिति-

१. इयं (पृथिवी) वाव प्रथमा चितिरोषधयः पुरीषं···, अन्तरिक्ष ९ वाव द्वितीया चितिर्वयाꣳसि पुरीषं···, असौ (द्यौः) वाव तृतीया चितिर्नक्षत्राणि पुरीषं···, यज्ञो वाव चतुर्थी चितिर्दक्षिणा पुरीषं···, यजमानो वाव पञ्चमी चितिः प्रजा पुरीषम् । मै ३,३,३ ।

२. ऋतवो ह्येते यदेताश्चितयः । माश ६,२,१,३६ ।

३. तद्यत्पञ्च चितीश्चिनोत्येताभिरेवैनं तत्तनूभिश्चिनोति यच्चिनोति तस्माच्चितयः । माश ६, १,२,१७ ।

४. पञ्च तन्वो व्यस्र ९ सन्त लोम त्वङ् मा ९ समस्थि मज्जा ता एवैताः पञ्च चितयः । माश ६, १,२,१७ ।

५. पञ्च वा एतेऽग्नयो यच्चितय उदधिरेव नाम प्रथमो दुभ्रो द्वितीयो गह्वस्तृतीयः कि ९ शिलश्चतुर्थो वन्यः पञ्चमः । तैसं ५,५,९,१-२ ।

६. पञ्च ह्येते ऽग्नयो यदेताश्चितयः । माश ६,२,१,१६ ।

७. यच्चेतयमाना अपश्यꣳस्तस्माच्चितयः । माश ६,२,२,९ ।

८. सप्त योनीः इति चितीरेतदाह । माश ९,२,३,४४ ।

चित्त-

१. चित्त ९ विज्ञातम् । तैसं ४,१,९,१; मै २,७,७ ।

२. चित्त ९ सन्तानेन (प्रीणामि) । तैसं १,४,३६,१; तैआ ३,२१,१ ।

३. चित्तं मन्याभिः (प्रीणामि) । मै ३,१५,२ ।

४. मनो वै चित्तम् (+ वाक् चित्तिः [मै १,४,१४]) । मै ४,२,६ ॥ [°त्त - आज्य- २१ द्र.]।

चित्त-पाजस्- चित्तपाजा अग्नीत् । काठ ९,९ ।

चित्ति-

१. चित्तिः स्रुक् । मै १,९,१; क ८,११; तैआ ३,१,१ ।

२. स (प्रजापतिः) चित्तिं स्रुचमकुरुत । मै १,९,३ ।

चित्य-

१. चेतव्यो ह्यस्य भवति तस्माद्वेव चित्यः । माश ६,१,२,१६ ।

२. चेतव्यो ह्यासीत्तस्माच्चित्यः । माश ६,१,२,१६ ।

चित्र-

१. चित्ररूपा वै पशवः । जै ३,१०१ ।

२. चित्राण्येव नक्षत्राणाम् (रूपम्) । जै २,४२९ ।

३. सर्वाणि हि चित्राण्यग्निः । माश ७,४,१,२४ ॥ [°त्र- आदित्य- ११० द्र. ।

चित्र-रथ->चैत्ररथ (द्विरात्र-)- > चैत्ररथि- एतेन वै चित्ररथं कापेया अयाजयं-स्तमेकाकिनमन्नाद्यस्याध्यक्षमकुर्वं रतस्माच्चैत्ररथीनामेकः क्षत्रपतिर्जायते नुलम्ब इव द्वितीयः । तां २०,१२,५ ।

१चित्रा (इष्टि-)- चित्रया यजेत पशुकामः, इयं (पृथिवी) वै चित्रा , यद्वा अस्यां विश्वं भूतमधि-प्रजायते तेनेयं चित्रा । तैसं २,४,६,१ ।

२चित्रा (नक्षत्र-)-

१. इन्द्रस्य चित्रा । तै १,५,१,३ ।

२. चित्रा नक्षत्रं, त्वष्टा देवता । मै २,१३,२० ( तु. काठ ३९, १३ ) ।

३. चित्रा शिरः (नक्षत्रियस्य प्रजापतेः) । तै १,५,२,२ ।

४. ते ह देवाः समेत्योचुः । चित्रं वाऽअभूम यऽइयतः सपत्नानवधिष्मेति तद्वै चित्रायै चित्रात्वं चित्रं ह भवति हन्ति सपत्नान्हन्ति द्विषन्तं भ्रातृव्यं य एवं विद्वाँश्चित्रायामाधत्ते तस्मादेतत्क्षत्रिय एव नक्षत्रमुपेप्सेज्जिघां सतीव ह्येष सपत्नान्वीव जिगीषते । माश २, १, २, १७ ।

५. त्वष्टा नक्षत्रमभ्येति चित्राम् । तै ३,१,१,९ ।

६. यः सपत्नवान् भ्रातृव्यवान् वा स्यात् स चित्रायामग्निमादधीत । मै १.६,९ ।

७. यां तामिष्टकाम् ( इन्द्रः ) आवृहत् सा चित्राऽभवत् । मै १,६,९ ॥ [°त्रा- इन्द्र- २५० द्र.] ।

चित्रा-पूर्णमास- चक्षुर्वा एतत्संवत्सरस्य यच्चित्रापूर्णमासः । तां ५,९,११ ।

चित्रावसु- रात्रिर्वै चित्रावसुः सा हीयं संगृह्येव चित्राणि वसति । माश २, ३,४,२२ (तु. तैसं १,५,७,५; मै १,५,९; काठ ७,६) ।

चूड- यदु वाऽअतिरिक्तं चूडः सः । माश ८,६,१,१४ ।

चेकितान- अग्नि- ७२० द्र. ।

च्यवन-

१. च्यवनो वै दाधीचोऽश्विनोः प्रिय आसीत्सोऽजीर्यत्तमेतेन (वौङ्केन) साम्नाप्सु व्यैङ्कयतान्तं पुनर्युवानमकुरुताम् । तां १४,६,१० ।

२. तं ( च्यवनमश्विनौ ) होचतुर्ऋषे ऽकुर्वाव तव तं कामं यस्तव कामोऽभूत् । पुनर्युवाभूः । जै ३,१२५ ।

३. यत्र ह वा अङ्गिरसो वा भृगवो वा स्वर्गं लोकमाय१ँस्तद्ध च्यवनो भार्गवो वाङ्गिरसो वेहैवाहीयत जीर्णिः । काश ५,१,५,१ ।

४. सा (सुकन्या) होवाच ( हे ऽश्विनौ) पतिं (च्यवनं) नु मे पुनर्युवाणं कुरुतम् । माश ४,१,५,११ ।

च्यावन (सामन्- )-

१. एभ्यो वै लोकेभ्यो वृष्टिरपाक्रामत्तां प्रजापतिश्च्यावनेनाच्यावयद्यदच्यावयत्तच्च्यावनस्य च्यावनत्वञ्च्यावयति वृष्टिञ्च्यावनेन तुष्टुवानः । तां १३ ५,१३ ।

२. तद्वै च्यवनो भार्गव एतेन साम्ना स्तुत्वा पुनर्युवाभवत् ···यद्‌ु च्यवनो भार्गवोऽपश्यत् तस्माच्च्यावनमित्याख्यायते । जै ३,१२८ ।

३. प्रजापतिर्वै च्यावनम् । तां १९,३,६ ।

४. प्रजापतिर्वै च्यावनं प्रजायते बहुर्भवति च्यावनेन तुष्टुवानः । तां १३,५,१२ ।

## छ

छदिस्-

१. अतिच्छन्दा वै छदिश्छन्दः सा हि सर्वाणि छन्दा१ँसि छादयति । माश ८,२, ४,५ ।

२. अन्तरिक्षं वै छदिश्छन्दः । माश ८, ५ । २, ६ ।

३. सिंहो वयश्छदिश्छन्दः । तैसं ४, ३, ५, २; मै २, ८, २ ।

छन्दस्-

१. अति वा एषो अन्यानि छन्दांसि यदतिच्छन्दाः । जै २, ३९२ ।

२. अद्भ्यः सोम१ँव्यपिबच्छन्दोभिर्ह१ँसः शुचिषत् । मै ३, ११, ६ ।

३. अष्टास्तनां करोति छन्दसां दोहाय । तैसं ५, १, ६, ४ ।

४. इन्द्रियं वीर्यं छन्दा१ँसि । तां ६, ९, २६ ।

५. उपबर्हणं ददाति । एतद्वै छन्दसां रूपम् । क ४४, ४ ।

६. ऋत्विजो वृणीते, छन्दा१ँस्येव वृणीते, सप्त वृणीते, सप्त ग्राम्याः पशवः, सप्ताऽऽरण्याः, सप्त छन्दा१ँसि । तैसं ६, ३, ७, ५ ।

७. एकाक्षरं वै देवानामवमं छन्द आसीत्सप्ताक्षरं परमन्नवाक्षरमसुराणामवमं छन्द आसीत् पञ्चदशाक्षरं परमम् । तां १२,१३, २७ (तु. जै १,१९३; १९७) ।

८. एतद्वै छन्दसां वीर्यमाश्रावयास्तु श्रौषड् यज ये यजामहे वषट्कारः । तैसं ३, ३,७,२-३ ।

९. एतानि [ एतावन्ति [काठ.] (गायत्री, त्रिष्टुप्, जगती, अनुष्टुभ्) ] वै छन्दा१ँसि यज्ञं वहन्ति । मै १, ४, ११; काठ १२,६ ।

१०. कतम एते देवा इति छन्दा१ँसीति ब्रूयाद्गायत्रीं त्रिष्टुभं जगतीमिति । तैसं २, ६,९,३-४ ।

११. कपालैश्छन्दा१ँसि ( भ्रातृव्यस्याप्नोति ) । काठ १०, १ ।

१२. गायत्रं छन्दो ऽनुप्रजायस्व त्रैष्टुभं जागतमित्येतावन्ति वै छन्दा ऽ सि। काठ २६, ७; क ४१, ५।

१३. गायत्र्यै…त्रिष्टुभे जगत्या अनुष्टुभे…एतावन्ति वै छन्दा ऽ सि। काठ ३४, ४।

१४. चत्वारि छन्दांसि (+यज्ञवाहो गायत्री, त्रिष्टुब्जगत्यनुष्टुप् [जै.])। तैसं ५, १, १, ४; २, १, ३; ३, ४; जै १, ३००; २, ४३१ (तु. मै ३, १, २; २, ३; काठ १९, ४; २१, ८; क ३१, ३)।

१५. छन्दः प्रतिष्ठानो वै यज्ञः (+ छन्दःसु वावास्यैतद् यज्ञं प्रतिष्ठापयामकः [मै.])। मै ३, ६, ५; काठ २३, २।

१६. छन्दसां वा एतन्निरूप ऽ यदुपबर्हणं सर्वसूत्रम्। मै १, ६, ४।

१७. छन्दसां वा एष रसो यद् वशा। तैसं २, १, ७, २।

१८. छन्दसां धेनवः (रूपम्)। काठ १२, ४।

१९. छन्दा ऽ सि खलु वा एतं नोपनमन्ति यं मेधा नोपनमति। तैसं ३, ४, ९, ५।

२०. छन्दा ऽ सि खलु वा एतमभिमन्यन्ते यस्य ज्योगामयति छन्दोभिरेवैनमगदं करोति। तैसं ३, ४, ९, ३।

२१. छन्दा ऽ सि खलु वै सोमस्य राज्ञः साम्राज्यो लोकः। तैसं ३, १, २, १।

२२. छन्दा ऽ सि गच्छ स्वाहेत्याह, पशवो वै छन्दा ऽ सि। तैसं ६, ४, १, ३।

२३. छन्दांसि छन्दयतीति वा। दै ३, १९।

२४. छन्दांसि जज्ञिरे तस्मात् (यज्ञात्)। काठसंक १०० : १८।

२५. छन्दा ऽ सि देविकाः (देव्यः [माश.])। काठ १२, ८; माश ९, ५, १, ३९ (तु. तैसं ३, ४, ९, १; मै ४, ३, ५; कौ १९, ७)।

२६. छन्दा ऽ सि मीयमानः (सोमः)। काठ ३४, १४।

२७. छन्दांसि यदयजन्त तेषां बृहत्येवोदगायत्। जै ३, ३६९।

२८. छन्दा ऽ सि वरुणपाशाः (+ वै वरुणस्य [मै.])। मै २, ३, ३; काठ १२, ६।

२९. छन्दा ऽ सि वा अग्नेर्वासः। छन्दा ऽ स्येष वस्ते (छन्दोभिरेवैनं परिदधाति [काठ.])। मै ३, १, ५; काठ १९, ५ (तु. क ३०, ३)।

३०. छन्दा ऽ सि वाऽअस्य सप्त धाम प्रियाणि। माश ९, २, ३, ४४।

३१. छन्दा ऽ सि (+ वै [मै १, १०, ९; काठ.]) वाक्। मै १, १०, ९; ४, ८, ८; काठ ३६, ३।

३२. छन्दांसि वाव देवानां गृहाः।…गायत्र्यैव वसवो गृहिणः।…त्रिष्टुभैव रुद्रा गृहिणः।… जगत्यैवादित्या गृहिणः। अनुष्टुभैव विश्वेदेवाः। जै १, २८०।

३३. छन्दांसि वाव देवाश्वा, स्तोमा देवरथाः। जै ३, ३१३।

३४. छन्दांसि वृषगणा. (°सि वै दिशः [माश.])। जै ३, १७४; माश ८, ३, १, १२; ९, ५, १, ३९।

३५. छन्दा ऽ सि वै देवाः प्रातर्यावाणः। मै ४, ५, ३; माश ३, ९, ३, ८।

३६. छन्दा ऽ सि वै देवानां वामं पशवः। तैसं ५, ३, ८, १ मै ३, २, ६; ३, २।

३७. छन्दा ऽ सि वै देवा वयोनाधाः। छन्दोभिर्हीद ऽ सर्वं वयुनं नद्धम्। माश ८, २, २, ८।

३८. छन्दांसि वै दैवानि पवित्राणि। तां ६, ६, ६।

३९. छन्दांसि वै धुरः (विराट् [मै.])। मै ३, ८, ४; जै ३, २१०।

४०. छन्दांसि वै पञ्च पञ्चजनाः । मै १, ४, ९; काठ ३२, ६ ।

४१. छन्दा ९सि वै लोमानि । माश ६, ४, १, ६; ७, १, ६; ९, ३, ४, १० ।

४२. छन्दांसि वै वाजिनः । मै १, १०, ९; गो २, १, २०; तै १, ६, ३, ९ ।

४३. छन्दा ९सि वै व्रजो गोस्थानः । मै ४, १, १०; काठ ३१, ८; तै ३, २, ९, ३ (तु. क. ४७, ८) ।

४४. छन्दा ९सि वै संवेश उपवेशः । तैसं ३, १, ७, २; ७, ५, ५, १; तै १, ४, ६, ४ ।

४५. छन्दांसि वै सर्वा देवताः (वाक् ⌊जै २, ३०१⌋) । जै १, ३४२; २, ३०१ ।

४६. छन्दांसि वै साध्या देवास्ते ऽग्रे ऽग्निमयजन्त ते स्वर्गं लोकमायन् । ऐ १, १६ ।

४७. छन्दांसि वै स्वर्गो (स्वाराज्यो ⌊जै २, ३४७⌋) लोकः । जै २, २२४; ३४७; ३८१ ।

४८. छन्दा ९सि वै हारियोजनः ( ग्रहः ) । माश ४, ४, ३, २ ।

४९. छन्दा ९सि समिद्धानि देवेभ्यो यज्ञं वहन्ति । माश १, ३, ४, ६ ।

५०. छन्दांसि सावित्री । गो १, १, ३३; जउ ४, १२, १, ७ ।

५१. छन्दा ९सि (+ वै ⌊काठ.⌋ ) सौपर्णानि (सौपर्णेयाः ⌊तैसं.⌋ ) । तैसं ६, १, ६, १; काठ २३, १; क ३७, १ ।

५२. छन्दा ९सीव खलु वै पशवः । तैसं ३, ४, ९, १-२ ।

५३. छन्दा ९सीव खलु वै प्रजाः ( रुक् ⌊तैसं ३, ४, ९, ६⌋ ) । तैसं ३, ४, ९, १; ६ ।

५४. छन्दा ९स्येवैतद् यज्ञमन्वायातयति, यथामुमादित्य ९रश्मयः । माश ३, ४, १, २३ ।

५५. छन्दोभिर् ( देवाः ) अमुष्मिन् ( द्युलोक आर्ध्नुवन् ) । तैसं ५, २, १, ६ ।

५६. छन्दोभिरेव तद् रक्षः पाप्मानमपघ्नते । जै १, ८६ ।

५७. छन्दोभिरेव भ्रातृव्यमवबाधते । काठ २५, ९; क ४०, २ ।

५८. छन्दोभिर् ( +वै ⌊तैसं.⌋ ) देवाः स्वर्गं ( सुवर्गं ⌊तैसं.⌋ लोकमायन् । तैसं ५, २, ३, ४; क ४६, ५ ।

५९. छन्दोभिर्बृहस्पतिर्गणी । मै २, २, ३ ।

६०. छन्दोभिर्यज्ञस्तायते । जै २, ४३१ ।

६१. छन्दोभिर्वै देवा आदित्य ९स्वर्गं लोकमहरन् । तां १२, १०, ६ ।

६२. छन्दोभिर्हि स्वर्गं लोकं गच्छन्ति । माश ६, ५, ४, ७ ।

६३. ज्यैष्ठ्यं वै जगती छन्दसाम् । जै २, २८६ ।

६४. तं (सोमं देवाः) छन्दोभिरसुवन्त तच्छन्दसां छन्दस्त्वम् । तै २, २, ८, ७ ।

६५. तद्यदेनान् ( देवान् ) छन्दांसि मृत्योः पाप्मनोऽछादयंस्तच्छन्दसां छन्दस्त्वम् । जै १, २८४ ।

६६. तव छन्दसेत्यग्निमब्रुवन् (देवाः) । जै १, २११ ।

६७. तानीमानि छन्दांस्यब्रुवन्नियं (गायत्री) वाव नश् श्रेष्ठेयं वीर्यवत्तमा या सोममाहार्षीत् । जै १, २८९ ।

६८. तान्यस्मा (प्रजापतये) अच्छदयंस्तानि यदस्माऽअच्छदयंस्तस्माच्छंदा ९सि । माश ८, ५, २, १ ।

६९. तान्यस्य (यजमानस्य छन्दांसि) प्रीतानि देवेभ्यो हव्यं वहन्ति । तैसं ५, १, १, १ ।

७०. ते (देवाः) छन्दोभिरात्मानं छादयित्वोपायन् तच्छन्दसां छन्दस्त्वम् । तैसं ५, ६, ६, १ ।

७१. ते देवा अब्रुवन् या एवेमा देवताश्छन्दांसि पुरुषे प्रविष्टा एताभिरेवासुरान् धूर्वामैवेति ।

जै १,९८।

७२. त्रीणि ह वै छन्दांसि यज्ञं वहन्ति गायत्री त्रिष्टुब् जगती। जै १, १२० (तु. जै २,३६०)।

७३. देवा असुरान् हत्वा मृत्योरबिभयुस्ते छन्दा ऽ स्यपश्य ऽ स्तानि प्राविश ऽ स्तेभ्यो यद्यदछदयत्तेनात्मानमछादयन्त, तच्छन्दसां छन्दस्त्वम्। मै ३,४,७।

७४. देवा वै छन्दा ऽ स्यब्रुवन् युष्माभिः स्वर्गं लोकमयामेति। तां ७,४,२।

७५. देवासुरा (छन्दस्सु) अधिसंयत्ता आसन्। जै १, १९६।

७६. न वा एकेनाक्षरेण छन्दांसि वियन्ति न द्वाभ्याम्। ऐ १,६;२,३७।

७७. नवाक्षरम् (छन्दः) असुराणामवममासीत् पञ्चदशाक्षरं परमम्। जै १,१९७।

७८. न ह्येकेनाक्षेरणान्यच्छन्दो भवति नो द्वाभ्याम्। कौ २७, १।

७९. नाक्षराच्छन्दो व्येत्येकस्मान्न द्वाभ्यां न स्तोत्रियया स्तोमः। माश १२, २,३, ३।

८०. पञ्च च्छन्दांसि रात्रौ शंसत्यनुष्टुभं गायत्रीमुष्णिहं त्रिष्टुभं जगतीमित्येतानि वै रात्रिच्छन्दांसि। कौ ३०, ११।

८१. परमा वा एषा छन्दसां यदनुष्टुक्। तैसं ५,४,१२,१।

८२. पशवश्छन्दा ऽ सि। मै ४,३,५; काठ १२,८; १९, १०; क ३०, ८; ऐ ४, २१; कौ ११,५; तां १९,५,११ (तु. तैसं ५, २, ३, ५; ३ ८,१; मै १,६,४; ३,२,८; ४,७,५; क ३१,१९; जै २,१०३; माश ७,५,२,४२; ८,३,१,१२)।

८३. पशवो वै देवानां छन्दा ऽ सि तद्यथेदं पशवो युक्ता मनुष्येभ्यो वहन्त्येवं छन्दा ऽ सि युक्तानि देवेभ्यो यज्ञं वहन्ति। माश १,८,२,८;४,४,३,१।

८४. प्रजापतिर् (प्राणा [कौ.]) वै छन्दा ऽ सि। मै ४,५,३;७,५; कौ ७,९;११,८;१७,२।

८५. प्रजापतेर्वा एतान्यङ्गानि यच्छन्दांसि। ऐ २, १८।

८६. प्राणा वा एतानीतराणि छन्दा ऽ सि। वागनुष्टुप्। मै ३,१,९।

८७. बृहती छन्दसा ऽ स्वाराज्यं परीयाय। तैसं ५,३,२,४।

८८. बृहतीरुष्णिहाः पङ्क्तीरक्षरपङ्क्तीरिति विषुरूपाणि छन्दा ऽ स्युपदधाति ··· विषुरूपानेव पशूनवरुन्धे। तैसं ५,३,८,२-३।

८९. बृहती वाव (वै [जै.]) छन्दसां स्वराट्। जै ३, ५; तां १०, ३, ८।

९०. बृहस्पतिश् (यज्ञश् [काठ.]) छन्दा ऽ सि। मै २, ३, ३; काठ ३२, ६।

९१. बृहस्पतिश्छन्दोभिः (उदक्रामत्)। मै १,९, २; ८; काठ ९, १०।

९२. ब्रह्म (ब्राह्मणा [तैसं २, ६,९, ४]) वै छन्दा ऽ सि। तैसं २, ६, ९,४; ५, ६, ६, १; मै ३, १, २; ७; २, ३;३,५;६,३ (तु. जै १, ३१३)।

९३. मुखं विराट् छन्दसाम्। जै ३, ३००।

९४. यच्चतुर्गृहीतं जुहोति, छन्दा ऽ स्येव तत् प्रीणाति। तैसं ५, १,१, १।

९५. यच्छन्दोभिश्छन्नस्तस्माच्छन्दांसीत्याचक्षते। ऐआ २, १, ६।

९६. यदुपतिष्ठते, छन्दोभिर्वा एतत्पशूननुपश्यति, छन्दोभिरेनान् पुनरुपह्वयते। मै १, ५, १२।

९७. यातयामानि वै देवैश्छन्दा ऽ सि छन्दोभिर्हि देवाः स्वर्गं लोक ऽ समाश्नुवत। माश ३, ९, ३, १०।

९८. यानि क्षुद्राणि छन्दा ँसि तानि मरुताम् । तां १७, १, ३ ।
९९. याम् ( दक्षिणाम् ) आर्षेयाय शुश्रुवुषे ददाति छन्दा ँसि तया प्रीणाति । मै ४, ८,३ ।
१००. वाक् सुपर्णी, छन्दा ँसि सौपर्णानि । गायत्री त्रिष्टुब् जगती । मै ३, ७, ३ ।
१०१. वाग् (रसो [माश.]) वै छन्दा ँसि । मै १, ११, ८; ३, ६, ५; काठ १४, ८; माश ७,३, १, ३७ ।
१०२. विराट् (+हि [तां.]) छन्दसां ज्योतिः । तैसं ५, ३, २, ३; काठ २०, ११; क ३१, १३; तां १०, २, २ ।
१०३. विराड् वै सर्वाणि छन्दा ँसि । मै ३, ४, ६ ।
१०४. विष्णुमुखा वै देवाश्छन्दोभिरिमांल्लोकाननपजय्यमभ्यजयन् । तैसं ५, २, १, १ ।
१०५. वीर्यं वै छन्दा ँसि । तैसं ५, १, ६, ४; तैआ ५, ३, ४ ।
१०६. श्रीर्वै यशश्छन्दसां बृहती । ऐ १, ५ ।
१०७. स ( अग्निः ) गायत्रिया त्रिष्टुभा जगत्या देवेभ्यो हव्यं वहतु प्रजानन् । तैसं २, २,४,८ ।
१०८. सप्त चतुरुत्तराणि छन्दांसि । जै ३, ८६ ।
१०९. सप्त (षड् वै [मै ३, ४, ४; जै.] छन्दा ँसि । तैसं २, ४,६,२; ५, १, ९, १; ७, २, २,१; मै ३,४,४; ७, ६; जै १, ८६; १३१; माश ९, ५, २, ८ ।
११०. सप्त वै छन्दा ँसि (+सप्त ग्राम्याः पशवः, सप्तारण्यास्तानेवैतदुभयान् प्रजनयति [माश.]) । मै १, ११, ८; ३,१, ७;३,५; ६, ३; काठ १४, ८; क ३५,७; कौ १४,५; १७, २; जै २, १२७; २००; ३०१; ३४७; ४३१; माश ३, ८, ४, १६; शांआ २, ६ (तु. काश ४, ८, ४, ११) ।
१११. सप्त वै पात्राणि पुनः प्रयोगमर्हन्ति । तानि हि बन्धुमन्ति सप्त छन्दा ँसि । मै ४,८,८ ।
११२. सप्त हस्तास इति, सप्त छन्दांसि, तस्मात् सप्तार्चिषः सप्त समिधः सप्त इमे लोका येषु चरन्ति प्राणा गुहाशया निहिताः सप्त सप्त । काठसंक २५ : २-४ ।
११३. सर्वाणि छन्दांसि बृहतीमभिसंपन्नानि । जै १, ३१६ ।
११४. सर्वैर्वै छन्दोभिरिष्ट्वा देवाः स्वर्गं लोकमजयन् । ऐ १, ९ ।
११५. साम वै देवाः प्रजाश्छन्दांसि । जै १, २७७ ।
११६. स्तोमाश्च ह खलु वै छन्दांसि च सर्वा देवताः । जै २, ३५० ।
११७. स्वाराज्यं छन्दसां बृहती । तां २४, ६, ३ ।
११८. हिरण्यममृतानि छन्दा ँसि । माश ६, ३, १, ४२ ॥ [°न्दस्- अग्नि- ४०; ४४९; ४८२; ४८३; ४८५; अङ्ग- ९; अतिछन्दस्- १; ८; ११; अनुष्टुभ्- ४-८; २४; अभीवर्त- ४; असुर- १९; २२; ऋत्विज्- ८; काम- १३; केतु-; गायत्री- १६; २०; २६; ३७; ६१; १०१; १०६; ग्ना- १; २; ग्राम-; चतुर्गृहीत- २; चतुरवत्त- २; छदिस्- १-३ द्र. ] ।

छन्दस्य, स्या-

१. अन्नं वा एकच्छन्दस्यमन्न ँ ह्येकं भूतेभ्यश्छदयति । मै २, ६, १३ ।
२. पशवः (+ वै [तैसं., क.]) छन्दस्याः (इष्टकाः) । तैसं ५, २, १०, २; काठ २०, ९; क ३१, ११ ।

छन्दोम ( स्तोमविशेष- )-

१. अथ यच्छन्दोमानुपयन्ति । इमानेव लोकान्देवता यजन्ते । माश १२,१, ३, १९ ।
२. अभिषज्या इवैते यच् छन्दोमाः । जै ३, २२९ ।
३. अभ्याघात्यसामानो हि छन्दोमाः । तां १४, ९, ३० ।
४. अयं ( भू- ) लोकः प्रथमश्छन्दोमोऽन्तरिक्षलोको द्वितीयोऽसौ ( द्यु- ) लोक उत्तमः । कौ २६, ११ ।
५. अस्तोमा वा एते यच्छन्दोमाः । तां ३, ९, ३ ।
६. उग्रगाधमिव वा एतद्यच्छन्दोमास्तद्यथात उग्रगाधे व्यतिषज्य गाहन्त एवमेवैतद्रूपे व्यतिषजति छन्दोमानामसंव्याथाय । तां १४, ८, ४; ८; १५, २, ६; ९ ।
७. किंछन्दसश्छन्दोमा इति पुरुषश्छन्दस इति ब्रूयात् । तां १४, ५,२६;११,३५; १५,५,३२ ।
८. किंछन्दसश्छन्दोमा इत्येतच्छन्दसो यदेता अक्षरपङ्क्तय इति ब्रूयात् । तां १४, ११,५; १५, ५, ५ ।
९. छन्दांस्येव छन्दोमानामायतनम् । तां १०, १, १९ ।
१०. छन्दोमा अस्तम् । जै ३, १७४ ।
११. तद्यच्छन्दोभिर्मितास्तस्माच्छन्दोमाः । कौ २६, ७ ।
१२. तद्यच्छन्दोभ्यो निरमिमत तच्छन्दोमानां छन्दोमत्वम् । जै ३, १७३ ।
१३. तम इव वा एतान्यहानि यच्छन्दोमास्तेभ्य एतेन ( भासेन ) साम्ना विवासयति । तां १४, ११,१५ ।
१४. तान् ( छन्दोमान् ) उ पुष्टिरित्याहुः । तां १०, १, २१ ।
१५. दिशश् छन्दोमाः । जै ३, ३१८ ।
१६. धीता इवैते यच् छन्दोमास्तृतीयसवनायतनाः । जै ३, २२३ ।
१७. नाथविन्दून्येतान्यहानि यत् छन्दोमा नाथमेवैतैर्विन्दते । तां १४,११,२४ ।
१८. पशवश्छन्दोमाः । ऐ ५,१६;१७;१८; १९; तां १४,७,६; जै ३,२४८ (तु. तैसं ७,३,३,२; काठ ३३, ८; कौ २६, ९; १२; १६; १७; जै २,१०८; १०९; २७५; ३,१७४;१९२; २०६; तां ३,८,२; १०,१,२१) ।
१९. पशूञ्छन्दोमैः (अवरुन्धते) । तैसं ७, ३, ६, २ ।
२०. समुद्रो वै छन्दोमाः (+ शिंशुमारो वै समुद्रमतिपारयितुमर्हति [जै ३,१९४]) । जै ३,१९५; २०५;२१३;२२२;२७३ ।

छन्दोमय->°यी- हिरण्ययीमिति हिरण्मयी ह्येषा या छन्दोमयी । माश ६, ३,१,४१ ।

छ(वि>)वी- छवीं(कवीं [काठ.]) छव्या (प्रीणामि) । तैसं ५,७,२०,१; काठ ५३, १० ।

छाग-

१. बृहस्पतये छागमालभते । काठ १९,१३ ।
२. यत्र बृहस्पतेश्छागस्य हविषः प्रिया धामानि । काठ १८, २१ ।
३. लोहितग्रीवश्छागैः (त्वावतु) । तैसं ७, ४, १२, १; काठ ४४,१ ॥ [°ग- अश्विन्- २४; ३८; इन्द्राग्नि- २ द्र.] ।

छाया-

१, तद्वापि छायां पर्यवेक्षेतात्मनोऽप्रणाशाय । जै १, १६७ ।

२. तस्मादु छायामभि च ष्ठीवेदभि च मेहेत । जै २,३७० ।

३. मृत्युर्वै तमश्छाया । ऐ ७,१२ ।

# ज

जगत्-

१. इयं (पृथिवी) वै जगत्यस्या ह्येद ँ सर्वं जगत् । माश ६,२,१,२९; २,३२ ।

२. यः पुरुषमात्रस्स जगच्चित् । काठ २१,४ ।

३. यस्ते राजन् वरुणद्रुहः पाशो जगच्छन्दा दिवमन्वाविवेश विशि प्रतिष्ठितः । काठ १७,१९ ।

४. सर्वं वाऽइदमात्मा जगत् । माश ४,५,९,८ ।

जगती(छन्दस्-)-

१. अथ जगती । श्रोत्रमेव तत् । जै १, २५४ (तु. १,१०२;२६९; २,५८) ।

२. अनूकं जगत्यः । माश ८,६,२,३ ।

३. अन्धस्वद् वै जगत्यै रूपम् । जै २,२३७ ।

४. अमुष्मात् ( द्युलोकाद्दिवा असुरान् ) जगत्या (अन्तरायन्) । जै १,९९ ।

५. अयं पश्चाद् विश्वव्यचास्तस्य चक्षुर्वैश्वव्यचसं, वर्षाणि चाक्षुषाणि, जगती वार्षी, जगत्या ऋक्सममृक्समाच्छुक्रश्शुक्रात्सप्तदशस्सप्तदशाद्वैरूपं जमदग्निर्ऋषिः । काठ १६,१९ ।

६. अष्टाचत्वारि ँ शदक्षरा जगती । तैसं २,५,१०,४; काठ ३४,९; जै २, २८५; तै ३,८,८,४; जैउ ४, २, ८ (तु. जै १, ३६; ३,२४२; माश ६, २,२,३३) ।

७. असौ (द्यौः) जगती । जै १, ३३९; जैउ १,७,३,३ ।

८. अस्थि (प्राणस्य) जगती । ऐआ २, १,६ ।

९. आदित्या जगतीं समभरन् । जैउ १,४,४,६ ।

१०. इति यद् वै शतवत् सहस्रवत् तज्जगत्यै रूपम् । जै ३, ४८ ।

११. इयं (पृथिवी) वै जगती । माश १२,८,२,२० ।

१२. चतुर्धा ह्येतस्या (जगत्याः) द्वादश द्वादशाक्षराणि । मै १, ११, १० ।

१३. जगती गततमं छन्दः । जज्जगतिर्भवति क्षिप्रगतिर्जज्मलाकुर्वन्नसृजतेति ? हि ब्राह्मणम् । दं ३,१७ (या ७,१३ द्र. ) ।

१४. जगती छन्दसां पशव्यतमा । काठ २३, १० ।

१५. जगतीं छन्दः (प्रजापतिरुदरादेव मध्यादसृजत) । जै १,६९ ।

१६. जगतीं तृतीयसवनं संपद्यते । जै २,१०२ ।

१७. जगती प्रतीची (दिक्) । माश ८,३,१,१२ ।

१८. जगतीभिः पश्चात् ''' पशूनेवावरुन्द्धे । मै ३,३,२ ।

१९. जगतीं मा ँ सेन प्रविशामि । काठ ३८,१४ ।

२०. जगती वै छन्दसां परमं पोषं पुष्टा । तां २१, १०,९ ।

२१. जगती सर्वाणि छन्दा ५सि । माश ६, २,१,३० ।
२२. जगती सिनीवाली । तैसं ३,४,९,६; मै ४, ३,५ ।
२३. जगती हीयम् (पृथिवी) । माश २, २,१,२० ।
२४. जगत्यां प्रस्तुतायां श्रोत्रेण दिशः संदध्यात् । जै १, २७० ।
२५. जगत्युन्मा ( यज्ञस्य ) । काठ ३२,४ ।
२६. जगत्येव यशः । गो १, ५, १५ ।
२७. जगत्यैव तच्छन्दसा प्रजापतिश्चेन्द्रश्चादित्येषु देवेषु तृतीयसवने ऽध्यपचितिमगच्छताम् । जै २,१०१ ।
२८. जगत्यैवास्मै ( वैश्याय ) पशून् गृह्णाति । तैसं २, ५, १०, २ ।
२९. तदाहुः प्लवमिव वा एतच्छन्दो यज्जगती । जै २, ३७९ ।
३०. तदिद ५ सर्वं जगदस्यां तेनेयं जगती । माश १, ८, २, ११ ।
३१. ता वा एता जगत्यो यद् द्वादशाक्षराणि पदानि । तां १६, ११, १० ।
३२. दित्यवाहो ( धेनवो [मै ३, १३, १८]) जगत्यै । मै ३,१३,१७; १८ ।
३३. द्यौर्जगती । मै ३, १, २; काठ १९, १; क २९, ८ ।
३४. द्वादशाक्षरा (द्वादशाक्षरपदा [ष.]) जगती । जै १,१४१; तां ६,३, १३; ष २,१ (तु. ऐ ३, १२; गो २, ३, १०; जै १, १३२; २,८४; १७३; २७३; तै ३,८,१२,२; माश ४,१,१,१२; ६, २,१, २९) ।
३५. धेनुर्वयो जगती छन्दः । तैसं ४, ३, ५, १; मै २, ८,२; काठ १७, २ ।
३६. पशवो जगती ( जगतीः [मै., काठ.] ) मै ४, १, ९; काठ ३१, ७; कौ १६, २;६; १७, २; ९; जै १, १३२; ३३९; २,८४; ८९;१७३; २८५; ३, २४२; तै ३, २, ८, २; माश ३, ४, १, १३; ८, ३, ३, ३; ष २, १; (तु. तैसं ३, २, ९, ४; मै ४, ५, २; गो २, ५, ५; जै १,२२९; २८९; २,२७३; ३४६; ३,१३०) ।
३७. पुंसो वा एतद् रूपं यद् बृहत् स्त्रियै जगती । जै ३,२६१ ।
३८. प्रजननं ( मध्यं [ष.] ) जगती । जै १, ९३; ष २, ३ ।
३९. प्रतीचीमारोह । जगती त्वावतु वैरूप ५ साम सप्तदश स्तोमो वर्षा ऋतुर्विड् द्रविणम् । माश ५, ४, १, ५ ।
४०. प्राचीमातिष्ठ, जगती त्वा छन्दसामवतु (छन्दसावतु [काठ.]) सप्तदशः स्तोमो वैरूप ५ साम विश्वेदेवा देवता (मरुतो देवता [काठ.]), विड् द्रविणम् । मै २, ६, १०; काठ १४, ७ ।
४१. बलं वीर्यंसुपरिष्टाज्जगती । कौ ११, २ ।
४२. बलं वै वीर्यं ( ब्रह्म ह वै [गो.] ) जगती । कौ ११, २; गो २,५,५ ।
४३. भूमा वै प्रजातिर् जगती छन्दसाम् । जै १, २७२ ।
४४. यदष्टौ कृत्व उपभृति गृह्णाति, त्रिष्टुब्जगतीभ्यां तद् गृह्णाति । माश १, ३, २, १६ ।
४५. यदा ह्येष ( आदित्यः ) उदेत्यथ जगदेतस्यैव प्रयाणमनुप्रैति । तस्माज्जगतीष्वेव दिवाकीर्त्यं पृष्ठं कार्यमिति । जै २, ३६ ।
४६. यद्धोतारं वृणीते जगतीं तद् वृणीते । मै ३, ९, ८ ।
४७. यद् विवर्तो विशां स्तोमो ऽष्टाचत्वारिंश इति जगती हि सा विड् वै जगती । विश उ वा

इदं सर्वं विवर्तम् । जै ३, ३०९ ।

४८. यद् विश्वान् देवान् (देवाः) अब्रुवन् युष्माकमायतनेनेति तस्माज् जगत्योऽनुशंसन्ते । जै १, २११ ।

४९. यद्वै शतवत् सहस्रवत् तज्जगत्यै रूपम् । जै ३,४८;५१ ।

५०. यस्य द्वादश ता जगतीम् (अभिसंपद्यन्ते) । कौ ९,२ ।

५१. या सिनीवाली सा जगती । ऐ ३, ४७ ।

५२. यो ऽयमवाङ् प्राण एष जगती । माश १०, ३, १, १ ।

५३. रैभ्या जगती (अपुनीत)। जैउ १, १८, २, १ ।

५४. विड् (+ वै [जै १, २६३]) जगती । जै १,२६३; २८६ ।

५५. विराजमातिष्ठ जगती त्वा छन्दसामवतु, सप्तदश स्तोमो, वैरूप ँ साम, मरुतो देवता, विड् द्रविणम् । तैसं १ ८, १३, १ ।

५६. विश्वे देवा द्वादशाक्षरया (द्वादशाक्षरेण [तैसं.]) जगतीमुदजयन् । तैसं १, ७, ११, २; मै १,११, १०; काठ १४, ४ ।

५७. श्रोणी जगत्यः । माश ८, ६, २, ८ ।

५८. श्रोत्रं (असुराणाम्)जगत्या (देवा अवृञ्जत) । जै १, ९९; २५३ ।

५९. स ँ रेवतीर्जगतीभिः ······सृज्यध्वम् । तैसं १, १, ८, १ ।

६०. सा (जगती) पशुभिश्चागच्छद्दीक्षया च, तस्मात्पशवा इति जगतीमाहुः । मै ३, ७,३ ।

६१. सिनीवाली जगती । काठ १२, ८ ।

६२. होतारं वृणीते जगतीं तच्छन्दसां वृणीते । काठ २६, ९ ॥ [°ती- अपान- १८; अहभून-; आग्रायण- ६; आदित्य- ११३; २१२; २१३; २१४; २१५; २६८; २७६; इन्द्र- १३३; उष्णिह्- ५; ओषधि- ४८; गवाशिर्- १; गो- ३०; ५४; चक्षुस्- ३; छन्दस्- १०; १२; १४;३२;७२;८०,९९;१०६ द्र. ] ।

जगती-छन्दस्-

१. जगतीछन्दा वै वैश्यः । तै १, १, ९, ७ ।

२. वैश्यो जगतीछन्दाः । जै १, ६९ ।

३. सघाऽसि जगतीछन्दाः (सघा= गृध्रो वा भासो वा) । तैसं ३, २, १,१ ।

जागत-

१. अरातीयतो हन्ता, जागतं छन्द आरोह दिवमनुविक्रमस्व । तैसं ४, २, १, १ ।

२. अश्मा जागतम् (छन्दः) । शांआ ११, ७ ।

३. अस्मत्सखा देव सोम जागतेन च्छन्दसा विश्वेषां देवानां पाथ उपेहि । काठ ३०, ६ ।

४. इदमहं जागतेन च्छन्दसा सप्तदशेन स्तोमेन वैरूपेण साम्ना विश्वैर्देवैर्देवतया प्रजां ते पुष्टिमाददे ऽसौ । काठ ३६, १५ ।

५. गौरीवीं वृञ्जे जागतेन छन्दसा । मै ४, २, ११ ।

६. घर्म या ते पृथिव्या ँ शुक्; या जागते छन्दसि या वैश्ये या सदसि तां त एतेनावयजे । तैआ ४, ११, २ ।

७. जागतं श्रोत्रम् (सदः [मै., काठ]) । मै ३, ४, ४; काठ २१, १२; जै २, २४२; तां २०, १६,५ ।

८. जागतं हि तृतीयसवनम् । कौ १६, १; गो २, ४, १८; तां ६, ३,११; ष १, ४; (तु. तैसं ३,२,९, ४; ऐ ६,२; १२; गो २, २,२२; जै १,१४१; ३,५७) ।

९. जागतं तृतीयमहः । तैसं ७, २, ८, १ ।

१०. जागताः पशवः (+ वै [तैसं., ऐ., ऐआ.]) । तैसं २, ५, १०,२; मै ३, ४, २, काठ ३४,९; ऐ १,५; २१; २८; ३,१८; ४,३; ५,६; कौ ३०, २; गो २,४,१६; ष ३, ७; ऐआ १,१,३।

११. जागते ऽमुष्मिँल्लोके जागतो ऽसावादित्यो ऽध्यूढः । कौ १४, ३ ।

१२. जागतो वा एष य एष ( सूर्यः ) तपति । कौ २५, ४; ७ ।

१३. जागतो (+ वै [जै २, ३८१] ) विषुवान् । जै २, ३६;३८१ ।

१४. जागतो (+वै ऐ.; हि [मै]) वैश्यः । ऐ १, २८; मै ३, १, ५; जै २,१०२ ।

१५. जागतो ऽश्वः प्राजापत्यः । तै ३, ८,८, ४ ।

१६. जागतो ऽसौ (द्यु- ) लोकः । कौ ८, ९ ।

१७. जागतो हि होता । जै १, ३१८ ।

१८. त्रैष्टुब्जागतो वा आदित्यः । तां ४, ६, २३ ।

१९. दिवं विष्णुर्व्यक्रँ स्त जागतेन च्छन्दसा । काठ ५, ५; माश १, ९, ३, १० ।

२०. यज्जागतमैळं वैश्वदेवं तद्देवतया । जै १, २९९ ।

२१. यत्क्षुद्रं पशूनां तज्जागतम् । जै २, १७३ ।

२२. वैखानसं भवति जागतं साम । जै २, २३७ ।

२३. वैश्वदेवं जागतं तृतीयसवनम् । काठ २२, ३ ।

२४. श्रोत्रमेव नवममहर्जागतम् । जै ३, ३१९ ।

२५. साम्नामादित्यो देवतं तदेव ज्योतिर्जागतं च्छन्दो द्यौः स्थानम् । गो १, १, २९ ॥ [ °त- आग्रायण- ६; आदित्य- १३२; १३३; १३५; २१६; ग्रावन्- ६ द्र. ] ।

जागती- जागती द्यौः । तैसं ५, २, १, १ ।

जङ्घा- जवं जङ्घाभिः (प्रीणामि) । तैसं ५, ७,१३,१; काठ ५३, ३ ।

जठर- मध्यं वै जठरम् । माश ७, १,१,२२ ।

जत्रु- दिशां (प्रीणनाय) जत्रवः । मै ३,१५,७; काठ ५३, ६ ।

जन-

१. अथ या जने वसेद् , वैश्ये वा ह ता भ्रातृव्ये वा वसेत् । जै २, १८३ ।

२. अन्तो वा एषा ऋद्धीनां यज्जनः । मै २, २,९ ।

३. इयं (पृथिवी) वाव जनो यो वा इमामेति न स पुनरागच्छति । काठ २५, ७; क ३९, ५ ।

४. एति वा एषोऽस्माल्लोकाद्यो दीक्षते, जनं ह्येति देवलोकमभ्यारोहति । मै ३, ६, १ ।

५. एष ह वै पद्भ्यां पापं करोति यो जनमेति । जै २, १३५ ।

६. एष ह वै ब्राह्मणस्य जनो यद् वैश्यो वा भ्रातृव्यो वा जनं वा एतस्यान्नाद्यमितं भवति यः सर्वं ददाति । जै २,१८३ ।

७. जनं वा एतद्यज्ञस्यैति यत्स्कन्दति । काठ ३२,६ (तु. मै १, ४,९) ।
८. जनं वा एतस्मादन्नाद्यं क्रामति योऽलमन्नाद्याय सन्नथान्नं नात्ति । प १,७ ।
९. जने (समाने जने [तां १६ ६,९]) तिस्रो (रात्रीर्यजमानः) वसति । तां १६,६,८;९ ।
१०. जनो वा इतः पितरो दूरे जनादागच्छति प्रमायुकः स्यात् । काठ २३,५ ।
११. न प्रत्यङ् सदोऽतीयादध्वर्युरुदरं वा एतद्यज्ञस्य यत्सद उदरं यज्ञस्य संकर्षेत् प्रमीयेत, जनो वा एषोऽध्वर्योर्, जनमेति । काठ २६, १ ।
१२. माता पुत्रं जनं यन्तं प्रत्यन्वीक्षेत जीवन्नाहरन्नागच्छेति । जै १, २८८ ।
१३. यथा जनं यते (जनमेष्यते [काठ.]) ऽवसं करोति । तैसं २,२.५,५; ५,४, ६, १; काठ २१, ८; तै १,६,१०,५ ।

जन-कल्प- प्रजा वै जनकल्पाः । ऐ ६,३२ ।

जन-ता-

१. ऐन्द्राग्नमेकादशकपालं निर्वपेज्जनतामेष्यन् । तैसं २,२,१,४ ।
२. क्षैत्रपत्यं चरुं निर्वपेज्जनतामागत्य । तैसं २,२,१,५ ।

जनक ( वैदेह-)- जनको ह वैदेह अहोरात्रैः समाजगाम । तै ३,१०.९,९ ।

जनत्-

१. जनदित्यङ्गिरसाम् (शुक्रम् ) । गो १,२,२४ ।
२. तमाङ्गिरसं वेदमभ्यश्राम्यदभ्यतपत्समतपत्तस्माच्छ्रान्तात्तप्तात्सन्तप्ताज्जनदिति द्वैतमक्षरं व्यभवत् । गो १,१,८ ।

जनि-

१. देवानां वै पत्नीर्जनयः । तैसं ५, १, ७, २; काठ १९, ७ ।
२. नक्षत्राणि वै जनयो ऽच्छिन्नपत्रा देवीर्विश्वदेव्यवतीः । मै ३, १, ८ ।
३. नक्षत्राणि वै जनयो ये हि जनाः पुण्यकृतः स्वर्गं लोकं यन्ति तेषामेतानि ज्योतींषि । माश ६, ५, ४, ८ ॥ [°नि-अप्- ९७ द्र.] ।

जनित्र-

१. एतद्वै दैव्यं मिथुनं प्रजननं यद्वसिष्ठस्य जनित्रे । जै २, ८२ ।
२. वसिष्ठस्य जनित्रं प्रजाकामाय ब्रह्मसाम कुर्यात् । तां ८, २, ३ ।
३. वसिष्ठस्य जनित्रे (सामनी) प्रजननकामः कुर्वीत ।······यद्‌ वसिष्ठो ऽपश्यत तस्माद्वसिष्ठस्य जनित्रे इत्याख्यायेते । जै १, १५० ।
४. वसिष्ठो वा एते ( जनित्रे ) पुत्रहतः सामनी अपश्यत् स प्रजया पशुभिः प्राजायत । तां १९, ३, ८ ।
५. विड् वै जनित्रम् । माश ८, ४, २, ५ ॥ [°त्र- अन्न- २६ द्र.] ।

जन्तु- मनुष्या वै जन्तवः । माश ७, ३, १, ३२ ।

जन्य-

१. अप जन्यं भयं नुद । तै ३, ७,७, १४ ।
२. यत्प्राशनीयाज् (स्थालीशिष्टमन्नम् ) जन्यमन्नमद्यात् । प्रमायुकः स्यात् । तै १, ३,१०,६ ।

३ सपत्ना वै द्विषन्तो भ्रातृव्या जन्यानि। ऐ ८, २६।

जप- ब्रह्म वै जपः। कौ ३, ७।

जमदग्नि-

१. अथाकामयत जमदग्निर्भूमानं प्रजया पशुभिर्गच्छेयमिति, स एतं सप्तदशं स्तोममपश्यत्तमाहरत्तेनायजत। जै २, २१८।

२ जमदग्निर्वा अकामयत बहु प्रजया पशुभिः प्रजायेयेति स एतं चतूरात्रं यज्ञमपश्यत्'''। जै २, २८५।

३. जमदग्निर्वै पुष्टिमपश्यत्, तामाऽमन्नभक्त, यत्कर्करिणीः कुरुते, पशुष्वेव पुष्टिं धत्ते। मै ४, २, ९।

४. जमदग्निर्ह वै माहेनानां पुरोहित आस। जै २, ३१०।

५. जमदग्नेः सप्तहं विद्रथं चक्षूंषीति (घोराणि सामानि)। जै २, १७०।

६. जमदग्नेः सप्ताहमभिचरन् वा भ्रातृव्यवान् वा कुर्वीत। जमदग्निर्वै माहेनानां पुरोहित आस'''स एतत् सामापश्यत्। तेनास्तुत। ततो वै स तेषां (माहेनानाम्) सप्त सप्तैकाहानि ग्राम्याणां पशूनामहन्। जै १,१५१।

७. तां (विराजम्) जमदग्निस्तपसाऽपश्यत् तया वै स पृश्नीन् कामानसृजत तत् पृश्नीनां पृश्नित्वम्। तैसं ३, ३, ५, २।

८. प्रजापतिर्वै जमदग्निः। माश १३, २, २, १४।

९. विश्वामित्रजमदग्नी वसिष्ठेनास्पर्धेताम्, स एतज्जमदग्निर्विहव्यमपश्यत्, तेन वै स वसिष्ठस्येन्द्रियं वीर्यमवृङ्क्त। तैसं ३, १, ७,३ (तु तैसं ५, ४, ११, ३)॥ [°ग्नि- चक्षुस्- ३;४४; चतूरात्र- १ द्र.]।

जामदग्नी (ऋच्-)- सर्वरूपा वै जामदग्न्यः सर्वसमृद्धाः। ऐ ४, २६।

जम्भ- मण्डूकान् जम्भैः (प्रीणामि)। काठ ५३,१।

जय-

१. जया ह वै नामैते स्तोमा यत् पवमानाः। पवमानैर्वै देवा असुरान् पराञ्च एव जयन्त आयन्। जै १, २७६।

२. यज्जयैर् (देवा असुरान्) अजयन् तज्जयानां जयत्वम्। तैसं ३, ४, ६, २ (तु. तैसं ३,४,४,२)।

३. यत् प्रजापतिर्जयान् प्रायच्छन् तस्माज्जयाः प्राजापत्याः। तैसं ३, ४, ६,१।

जरा- आयुस्- २८ द्र.

जराबोधीय- (सामन्-)-

१. अन्नं वै जराबोधीयम्। तां १४,५,२८।

२. जराबोधीयं भवत्यन्नाद्यस्यावरुद्ध्यै। तां १४,५,२७।

३. तं ह स्मैतेन साम्ना प्रातर्वोधयति। जार बुध्यस्वेति तदेव जराबोधीयस्य जराबोधीयत्वम्। ...... तदेतद् भेषजं प्रायश्चित्तिः साम। जै ३,१९७।

४. रुद्रस्य वा एतद् देवस्य साम यज्जराबोधीयम् । जै ३,११ ।

५. सो (प्रजापतिः)ऽग्निमब्रवीदेतान्मे (पशून्) वारयस्वेति । तान्स जराबोधीयेन नावारयत । स इन्द्रमब्रवीदेतान्मे वारयस्वेति । तान् स सत्रासाहीयेन नावारयत । स ईशानं देवमब्रवीदेतान्मे वारयस्वेति । तान्स मार्गीयवेण नैवावारयत । स विष्णुमब्रवीदेतान्मे वारयस्वेति । तान्स वैष्णवीषु वारवन्तीयेनैवावारयत । जै २, ११२ ।

जरायु- शणा जरायु । माश ६,६,२,१५ ॥ [°यु- कृष्णाजिन ८ द्र.]

जरितृ- यजमानो जरिता । ऐ ३, ३८ ।

जर्तिल- उभयं वेतदन्नं यज्जर्तिला यच्च ग्राम्यं यच्चारण्यं यदह ,तिलास्तेन ग्राम्यं यदकृष्टे पच्यन्ते तेनारण्यम् । माश ९, १,१,३ ।

जर्भुराण- नाभिमृशे तन्वा जर्भुराण इति न ह्येषो (अग्निः)ऽभिमृशे तन्वा दीप्यमानो भवति । माश ६,३,३,२० ।

जव- वीर्यं वै जवः । माश १३,४,२,२ ॥ [°व- गन्धर्व- १९; जङ्घा- द्र.] ।

जहका-

१. ऋतूनां जहका । काठ ४७,८ ।

२. जहका वैष्णवी । मै ३,१४,१७ ।

जह्नु- अधीयत देवरातो रिक्थयोरुभयोर्ऋषिः । जह्नूनां चाऽऽधिपत्ये दैवे वेदे च गाथिनाम् । ऐ ७,१८ ।

जाह्नव- जह्नुवृचीवन्तो राष्ट्र आहिंसन्त स विश्वामित्रो जाह्नवो राजैतम् ( चतूरात्रम् ) अपश्यत् स राष्ट्रमभवदराष्ट्रमितरे । तां २१, १२,२ ।

जागरित- ज्योतिर्वै जागरितम् । कौ १७,९ ।

जागृवि- यज्ञो वै जागृविः । काठ ३७, १० ।

जातवेदस्-

१. उदु त्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यम् । तैसं १, ४, ४३, १ ।

२. जातवेदः शिवो भव । तैसं ४, १, ९, ४ ।

३. जातवेदस उपदिश्यस्य स्थाने स्वतेजसा भानि । तैआ १, १८,१ ।

४. तद्यज्जातं जातं विन्दते तस्माज्जातवेदाः । माश ९, ५,१, ६८ ।

५. प्राणो वै जातवेदाः स हि जातानां वेद । ऐ २, ३९ ।

६. यज्जातः पशूनविन्दत तज्जातवेदसो जातवेदस्त्वम् । मै १,८,२ ।

७. या वा अग्नेर्जातवेदास्तनूस्तयैष प्रजा हिनस्त्यग्निहोत्रे भागधेयमिच्छमानः । काठ ६, ७ ।

८. वायुर्वै जातवेदा वायुर्हीदं सर्वं करोति यदिदं किंच । ऐ २, ३४ ।

९. सो ऽब्रवीज्जाता वै प्रजा अनेनाविदमिति यदब्रवीज्जाता वै प्रजा अनेनाविदमिति तज्जातवेदस्यमभवत्तज्जातवेदसो जातवेदस्त्वम् । ऐ ३, ३६ ॥ [°दस्- ऊर्जयन्ती- द्र.] ।

जातवेदस्या ( ऋच्- )-

१. जातवेदसे सुनवाम सोमम्, इति जातवेदस्याऽच्युता । ऐ ४,३२;५,२;८;१५;१७;१९;२१ ।

२. स्वस्त्ययनं वै जातवेदस्या । ऐआ १,५, ३ (तु. ऐ ४, ३०) ॥ [°स्या- अग्नि- ४५७ द्र.] ।

**जानकि-** चक्षुस्- ६१ द्र. ।

**जानु-** मगदं जानुभ्याम् ( प्रीणामि ) । तैसं ५, ७, १३, १; काठ ५३, ३ ।

**जायमान-** शीर्षतो वै मुखतो जायमानो जायते । माश ६, ५, २, २ ।

**जाया-**

१. अर्धो ह वा ऽ एष आत्मनो यज्जाया तस्माद्यावज्जायां न विन्दते नैव तावत्प्रजायते ऽसर्वो हि तावद् भवत्यथ यदैव जायां विन्दते ऽथ प्रजायते, तर्हि हि सर्वो भवति सर्व एतां गतिं गच्छानीति तस्माज्जायामामन्त्रयते । माश ५, २, १, १० ।

२. एको द्वे जाये विन्दते । तैसं ६, ६, ४, ३ ।

३. एको बह्वीर्जाया विन्दते । तैसं ६, ५, १, ४ ।

४. जाया पूर्वरूपं पतिरुत्तररूपं पुत्रः सन्धिः प्रजननं सन्धानम् । ऐआ ३, १,६ ।

५. तद्यदब्रवीद् ( ब्रह्म ) आभिर्वा अहमिदं सर्वं जनयिष्यामि यदिदं किञ्चेति तस्माज्जाया अभवंस्तज्जायानां जायात्वं यच्चासु पुरुषो जायते । गो १, १, २ ।

६. तस्माज्जायाया अन्ते नाश्नीयाद्वीर्यवान्हास्माज्जायते वीर्यवन्तमु ह सा जनयति यस्या अन्ते नाश्नाति । माश १०, ५, २, ९ ।

७. तस्मादपि स्वया जायया तिर इवैव चिचरिषति । माश ६, ४, ४, १९ ।

८. तस्मादेकस्य बह्व्यो जाया भवन्ति नैकस्यै ( न हैकस्याः [गो.]) बहवः सहपतयः । ऐ ३, २३; गो २, ३, २० ( तु. माश ९, ४, १, ६ ) ।

९. द्वे द्वे रशने यूपमृच्छतस्तस्मात्स्त्रियः पुंसो ऽतिरिक्तास्तस्मादुतैको बह्वीर्जाया विन्दते नैका बहून्पतीन् । काठ २९.८ ।

१०. पतिर्जायां प्रविशति गर्भो भूत्वा स मातरं तस्यां पुनर्भवो भूत्वा दशमे मासि जायते तज्जाया जाया भवति यदस्यां जायते पुनः । ऐ ७, १३ ।

११. पतिर्यथाकामं जायां नेनीयते । जै ३, ३२३ ।

१२. पुरुषो जायां वित्त्वा कृत्स्नतरमिवात्मानं मन्यते । ऐआ १, ३, ५ ।

१३. य एवं वेद, अभि द्वितीयां जायामश्नुते । तै १, ३, १०, ३ ।

१४. यदेकस्मिन्यूपे द्वे रशने परिव्ययति तस्मादेको द्वे जाये विन्दते यन्नैका ऽ रशनां द्वयोर्यूपयोः परिव्ययति तस्मान्नैका द्वौ पती विन्दते । तैसं ६, ६, ४, ३ ।

१५. यस्मा एव मा पितादात्, तस्य जाया भविष्यामीति ( सुकन्याश्विनावुवाच) । जै ३, १२३ । [°या- ऋक्सम-; गार्हपत्य- १७ द्र.] ॥ **जाह्नव-** जह्नु- द्र. ।

**जित-** अन्तो वै जितम् । ऐ ५,१२;२१ ।

**जिति-** तां (ब्रह्मणः) जितिं जयति······य एवं वेद । शांआ ३, ७; कौउ १,७ ।

**√जिन्व्** जिन्व यजमानं मदेनेति तेन प्रीणीहि यजमानं मदेनेत्येवैतदाह । माश १२, ८,१,४ ।

**जिह्वा-**

१. उत्सादेन जिह्वाम् (प्रीणामि) । तैसं ५,७,११,१; काठ ५३,१ ।

२. केनान्नरसान् (आप्नोषि) इति, जिह्वयेति । शांआ ३,७; कौउ १,७ ।
३. जिह्वाया अवद्यति, वाच एव तेनावद्यति । मै ३,१०,३ ।
४. जिह्वाया उत्सादः । मै ३,१५,१ ।
५. जिह्वा सरस्वती । माश १२,९,१,१४ ।
६. जिह्वैव शम्या । माश १,२,१,१७ ।
७. लोहिनीव हीयं जिह्वा । माश ३,५,४,२३ ॥ [°ह्वा- अधिषवण- १ द्र.] ।

जीमूत-

१. जीमूतान् प्रस्तावम् ( प्रजापतिरकरोत् ) । जैउ १, ३,३,१ ।
२. जीमूतान् हृदयौपशाभ्याम् (प्रीणामि) । मै ३,१५,७; काठ ५३, ६ ।
३. ये ( पर्वतानाम् ) पक्षा आस ९ स्ते जीमूता अभव ९ स्तस्मात्ते गिरिमुपप्लवन्ते । योनिर्ह्येषामेष तस्माद् गिरौ भूयिष्ठं वर्षति । काठ ३६,७ ( तु. मै १,१०,१३ ) ।

जीर्ण- जीर्णस्य वाचं शुश्रूषन्ते । जै १, २६७ ।

जुम्बक- वरुणो वै जुम्बकः । तै ३, ९,१५,३; माश १३,३,६,५ ।

जुषाण- ब्रह्म वै जुषाणः । कौ ३,५ ।

जुहू-

१. असौ (द्यौः) वै जुहूः । काठ ३१,९ तै ३,३,१,१;६,११ ।
२. आग्नेयी वै जुहूः । तै ३,३,७,६ ।
३. आश्रावयेति जुहूं तेन युनक्ति । काठ ३१, १३ ।
४. ओं श्रावय, इत्याह, जुहूं तेन युनक्ति । मै ४,१,११ ।
५. क्षत्रं वै जुहूर्विश इतराः स्रुचः । माश १,३,४,१५ ।
६. जुहूर्दक्षिणो हस्तः । तै ३,३,१,५ ।
७. जुहूर्वै यज्ञमुखम् । मै ३,१,१ (तु. काठ १८, १९; क २९, ७) ।
८. जुह्वा वै देवा विराजमह्वय ९ स्तज्जुह्वा जुहूत्वम् । काठ १८,१९; क २९, ७ ।
९. जुह्वेहि घृताची द्यौर्जन्मना··· । काठ १,११; क १,११ ।
१०. तस्यासावेव द्यौर्जुहूः । माश १, ३, २, ४ (तु मै ४, १, ११; १२ ) ।
११. द्यौरसि जन्मना जुहूर्नाम । मै १, १, १२; ४, १, १२ ।
१२. पर्णमयी जुहूः । तैसं ३, ५, ७, २ ।
१३. यजमानदेवत्या वै जुहूः । तैसं २, ५, ९, ५; मै ४, १, १२; काठ ३१,९; क ४७, ९; तै ३, ३, ५, ४; ७, ९; ९, ७ ।
१४. यजमानो वै जुहूः । मै १, ४, १३ ।
१६. वाग्जुहूः ( प्रायश्चित्तार्थं वेदभागमध्येतुः पुरुषस्य ) । तैआ २,१७,२ ॥ [°हू- अग्नि- ४८७; अन्न- ६७; आत्मन्- २४; उपभृत्- १; २; १०; गायत्री- १२४ द्र.] ।

जू-

१. जूरसीत्याह, यद्धि मनसा जवते, तद्वाचा वदति । तैसं ६, १, ७, २ ।

२. जूरसीत्येतद्ध वा अस्या ( वाचः ) एकं नाम । माश ३, २,४, ११ ।

जू-त्व- यद्वाव जवत इत्थमसा३ दित्थमसा३दिति तदस्या (वाचः) जूत्वम् । मै ३,७,५ ।

ज्यायस्-

१. कनीयान् ज्याया९ सं परिवेवेष्टि । मै १, १०, १३; काठ ३६, ७ ।

२. ज्याया९ सं कनीयान् प्रत्यवरोहति । तैसं ७, ५, ४, १ ।

ज्येष्ठ-

१. प्रजापतिर्वाव ज्येष्ठः । तैसं ७, १, १, ४ ।

२. यद्वै ज्येष्ठं तन्महत् । ऐआ १. ३, ७ ।

ज्येष्ठ-घ्नी- ज्येष्ठमेषामवधिष्मेति । तज्ज्येष्ठघ्नी (= ज्येष्ठानक्षत्र) । तै १, ५, २, ८ ।

ज्येष्ठ-बन्धु- इन्द्रिय-२ द्र. ।

ज्यैष्ठ्य- ज्यैष्ठ्यं वा अग्निष्टोमः । जै २, ३७८ ।

ज्येष्ठा (नक्षत्र-)-

१. इन्द्रो ज्येष्ठामनु नक्षत्रमेति । तै ३, १, २,१ ।

२. इन्द्रो देवता, ज्येष्ठा नक्षत्रम् । काठ ३९, १३ ।

३. ज्येष्ठा नक्षत्र९, वरुणो देवता । मै २, १३,२० ।

ज्योतिस्-

१. अग्निर्ज्योतिर्ज्योतिरग्निरिन्द्रो ज्योतिर्ज्योतिरिन्द्रस्सूर्यो ज्योतिर्ज्योतिस्सूर्यः । काठ ४०, ६ ।

२. अथो हास्यैतान्येव (हैषामेता° [जै २, ४३३]) पञ्च ज्योतींषीद्धान्येषु लोकेषु दीप्यन्ते । अग्निः पृथिव्यां वायुरन्तरिक्ष आदित्यो दिवि चन्द्रमा नक्षत्रेषु विद्युदप्सु । जै १, २९२; २,४३३ ।

३. अयं वै (भू-) लोको ज्योतिः । काठ ३३, ३; ऐ ४, १५; जै २,३१७ (तु. तां ४, १,७) ।

४. अयमग्निर्ज्योतिः । माश ९, ४,२, २२ ।

५. असौ (सूर्यः) वाव ज्योतिस्तेन सूर्यं नातिशंसति । ऐ ४, १०; १५ ।

६. अहर्ज्योतिः । माश १०, २, ६, १६ ।

७. इदमेवान्तरिक्षं ज्योतिः । जै २, १६६; ४३९ ।

८. इयं (पृथिवी) वाव (वै [तां.]) ज्योतिः । तैसं ७, २, ४, २; तां १६, १, ७ ।

९. एतद्ध ज्योतिरुत्तमं य एष (सूर्यः) तपति । जै २,६८ ।

१०. एतद्ध वाव सर्वेषु लोकेषु ज्योतिर्यद्धिरण्यम् । जै १, ८० (तु. कौ २५,३;९) ।

११. एतद्वै प्रज्ञातं देवतीर्थं यज्ज्योतिरतिरात्रः । जै २,३०५ ।

१२. चत्वार्यु ह वै देवानामाविष्टमानाव्रतिज्योतींष्यग्निः पृथिव्यामादित्यो दिवि चन्द्रमा नक्षत्रेषु विद्युदप्सु । जै २, ३३३ ।

१३. ज्योतिः प्रवर्ग्यः (°तिरमृतम् [माश.]) । माश १४, ४, १, ३२ । तैआ ५, १०, ४ ।

१४. ज्योतिरिति नक्षत्रेषु । तैआ ९, १०, ३; तैउ ३, १०, ३ ।

१५. ज्योतिर्वामम् । तैसं ५, ५, ३, ४ ।
१६. ज्योतिर्वै यज्ञः । काठ ३१, ११; ३२, ५; क ४७, ११ ।
१७. ज्योतिर्वै (+शुक्रं [ऐ.]) हिरण्यम् । तैसं ५, ५, ३, ४; ऐ ७, १२; गो २, ५, ८; तां ६,६, १०; १८, ७-८; तै १, ४, ४, १; माश ६, ७, १,२; ७. ४, १, १५, (तु. गो १, २,२१; माश ४, ३,४, २१ ) ।
१८. ज्योतिर्हि स्वर्गो लोकः । मै १, ४, ७ ।
१९. ज्योतिश्च मे सुवश्च मे ( यज्ञेन कल्पताम् ) । तैसं ४. ७, १, १ ।
२०. ज्योतिषे हिङ्कुरु··· इति पुरस्तान्माध्यन्दिनस्य पवमानस्य वदेत् । मै ४, २, ४ ।
२१. ज्योतिषैव तमस्तरति । मै १,८,६; ३,९,३ ।
२२. ज्योतिस्तद्यत् साम, ज्योतिस्तद्यद् देवता । जै १,७६ ।
२३. त्रीणि ज्योती ँषि सचते स षोडशी । काठसंक १०५:१६ ।
२४. दिवि ते बृहद्भा इत्याह सुवर्ग एवास्मै लोके ज्योतिर्दधाति । तैसं ३,४, ३,६ ।
२५. प्रजा (प्राणो वै [माश.]) ज्योतिः । काठ ३३,७; माश ८,३, २, १४ ।
२६. यत्ते सोम दिवि ज्योतिर्यत् पृथिव्या ँ यदुरा अन्तरिक्षे तेनास्मै यज्ञपतय उरु राये कृधि । मै १,३,३ ।
२७. यथाऽमूनि त्रीणि ज्योतींष्येवमिमानि पुरुषे त्रीणि ज्योतींषि यथाऽसौ दिव्यादित्य एवमिदं शिरसि चक्षुर्यथाऽसावन्तरिक्षे विद्युदेवमिदमात्मनि हृदयं, यथाऽयमग्निः पृथिव्यामेव-मिदमुपस्थे रेतः । शांआ ७,४ ।
२८. यद्धिरण्यशल्कैः प्रोक्षति, ज्योतिषैवास्मै संवत्सरं विवासयति । काठ २१, ६ ।
२९ या पृषती तां पिशङ्गी ता ँ सारङ्गी तां कल्माषी, तां पृश्निस्ता ँ श्वेता । तन्मरुता उदाजन्त ज्योतिर्नाम रूपं पशूनाम् । मै ४, २, ४ ।
३०. येन देवा ज्योतिषोर्ध्वा उदायन् येनादित्या वसवो येन रुद्राः येनाङ्गिरसो महिमानमानशु-स्तेनैतु यजमानस्स्वस्ति । काठ ३८ १३ ।
३१. वाक् प्राणानां ज्योतिरुत्तमम् । काठ २०, ११ ।
३२. विराजा ज्योतिषा सह (घर्मो विभाति) । मै ४,९,१३; तैआ ४, २१,१ ।
३३. सं ज्योतिषाभूमेति सं देवैरभूमेत्येवैतदाह । माश १, ९,३,१४ ।
३४. सं त्वमग्ने दिव्येन ज्योतिषा भाहि समन्तरिक्ष्येण सं पार्थिवेन । क ६,३ ।
३५. सुवर्गो वै लोको ज्योतिः । तै १, २,२,२ ।
३६. सुववैं पूर्वमहर्ज्योतिरुत्तरम् । जै २,२३७ ।
३७. हिङ्कारेण वै ज्योतिषा देवास्त्रिवृते ब्रह्मवर्चसाय ज्योतिरदधुः । जै १, ६६ ।
३८. हिरण्यं सम्प्रदायं षोडशिना स्तुवन्ति । षोडशिनमेव तज्ज्योतिष्मन्तं कुर्वन्ति । जै १,२०५ । [°तिस्- अग्नि- ३७२; ४८८; अन्तरिक्ष- १२०; १३५; अन्न- १०८; अप्- २६; आदित्य- ६१; गायत्री- ६३; चक्षुस्- १३; छन्दस्- १०१ द्र. ] ।

**ज्योतिष्टोम-**

१. अथ यदेनमूर्ध्वं सन्तं ज्योतिर्भूतमस्तुवंस्तस्माज्ज्योतिःस्तोमस्तं ज्योतिःस्तोमं सन्तं

ज्योतिष्टोममित्याचक्षते । ऐ ३,४३ ।

२. अथो यद् यज्ञस्संस्तुतो विराजमभिसंपद्यते, ज्योतिर्विराट्, तस्मात् ज्योतिष्टोम इत्याख्यायते । जै १,६६ ।

३. एष वाव प्रथमो यज्ञानां य एतेनानिष्ट्वाथान्येन यजते गर्तपत्यमेव तज्जीयते प्र वा मीयते । तां १६,१,२ ।

४. किञ्ज्योतिष्टोमस्य ज्योतिष्टोमत्वमित्याहुर्विराज ९ स ९ स्तुत: सम्पद्यते विराड् वै छन्दसां ज्योतिः । तां ६,३,६ ।

५. ज्योतिष्टोमो वै स्तोमानां मुखम् । तैसं ७,४,१०,१; काठ ३३,२ ।

६. तस्माद्यो विराज ९ स्तोमः सम्पद्यते तं ज्योतिष्टोमोऽग्निष्टोम इत्याचक्षते । तां १०, २, २ ।

७. पुरुषसंमितो वा एष यज्ञो (ज्योतिष्टोमः) ऽस्थूरियं कामं कामयते तमेतेनाभ्यश्नुते सर्व ९ ह्यस्थूरिणाऽभ्यश्नुते । तैसं ७, १,१,१-२ ।

८. यद्वै तज्ज्योतिरभवत्तत् ज्योतिषो ज्योतिष्ट्वम् (ज्योतिः=ज्योतिष्टोमः) । तां १६,१,१ ।

९. स्तोमे ज्योतिर्दधत इति । तस्माज्ज्योतिष्टोम इत्याख्यायते । जै १, ६६ ।

१०. स्वर्ग्या वा एते स्तोमा यज् ज्योतिर्भवति ज्योतिरेवास्मै (यजमानाय) स पुरस्ताद्धरति (ज्योतिः = ज्योतिष्टोमः) । तां १६,३,७ ।

**ज्योतिष्मत्** (पथिन्-)-

१. देवयाना वै ज्योतिष्मन्तः पन्थानः । ऐ ३,३८ ।

२. प्रजापतये त्वा ज्योतिष्मते ज्योतिष्मन्तं गृह्णामि । मै १,३,३५ ।

३. विराजा ज्योतिष्मान् । तैसं ४,४,८,१ ।

# ण

**णकार**- तस्यै वा एतस्यै संहितायै णकारो बलं षकारः प्राण आत्मा (+संहिता [शांआ.]) आयुष्यमिति विद्यात् । ऐआ ३,२,६; शांआ ८,११ ।

# त

**तक्षन्**- तस्मात्तक्षणश् (°क्षणे [मै.]) शिरो धृतं तस्मादस्यान्नमन्नाद्यम् । मै २, ४,१; काठ १२,१० । [°क्षन्- अन्न- १३० द्र.] ।

**तक्ष-रथकार**- वैष्णवस्त्रिकपालस्तक्षरथकारयोर्गृहे, सर्वायसानि दक्षिणा । मै २,६,५; ४, ३, ८ ।

**तण्डुल**-

१. यत्तण्डुलैः (आतन्च्यात्) वैश्वदेवं तत् । तैसं २, ५, ३, ५ ।

२. वसूनां वा एतद्रूपं यत्तण्डुलाः । तै ३, ८, १४, ३ ॥ [°ल- अनडुह्- ११; अहन्- ११; चरु- ६ द्र.] ।

**तत**-

१. ततो ह वै प्रजापतिः । ततो (पिता) ह वा एष सर्वासां देवतानाम् । जै २, ९ ।

२. स यथा पुत्रः पितरमागत्य तत ततेति ह्वयेत् । जै २, ९ ।

ततुरि- उपहूतेडा ततुरिरिति । तदेनां प्रत्यक्षमुपह्वयते ततुरिरिति सर्वं ७ ह्येषा पाप्मानं तरति तस्मादाह ततुरिरिति । माश १, ८, १, २२ ।

तथा तथेति वायुः पवते । जैउ ३, २, १, २ ।

तद्- तदिति वा एतस्य महतो भूतस्य (परमात्मनः) नाम भवति यो ऽस्यैतदेवं नाम वेद ब्रह्म भवति । ऐआ ५, ३, ३ ।

तनू-

१. अग्ने यन्मे तनुवा ऊनं तन्म आपृणेत्याह यन्मे प्रजायै पशूनामूनं तन्म आपूरयेति वावैतदाह । तैसं १, ५, ७, ५ ।

२. साम ते ( सुपर्णस्य गरुत्मतः ) तनूर्वामदेव्यम् । मै २, ७, ८; काठ १६, ८ ॥ [°नू- आत्मन्- १०; २४; ३३ द्र. ] ।

तनू-धस्- सौहार्द्येन तनूधाः···साम्ना तनूपाः (इन्द्रः ) । तैसं ४, ४, ८, १ ।

तनू-नपात्-

१. तनूनपातं यजति, यज्ञमेवावरुन्धे । तैसं २, ६, १, १ ।

२. तनूनपाद्धि यज्ञः प्रसृतः । काठ ३६, ३ ।

३. प्राणो वै तनूनपात् स हि तन्वः पाति । ऐ २,४ ।

४. यो वा ऽ अयं ( वायुः ) पवते एष तनूनपाच्छाक्करः सोऽयं प्रजानामुपद्रष्टा प्रविष्टस्ताविमौ प्राणोदानौ । माश ३, ४, २, ५ ।

५. रेतो वै तनूनपात् । माश १, ५, ४,२ ॥ [°पात्- अन्तरिक्ष- १०८; ग्रीष्म- १४;१७ द्र.] ।

तनू-नप्तृ-

१. तनूनप्त्रा इतीन्द्राय तेन मरुद्भ्यः,···तनूनप्त्रा इति, यज्ञं तेन ( गृह्णाति ) । मै ३, ७,१० ।

२. यो वाऽयं ( वायुः ) पवत ऽ एष तनूनप्ता शाक्करः । माश ३, ४, २, ११ ।

तानूनप्त्र-

१. अग्निना वा एष तन्वं विपरिधत्ते तानूनप्त्रे । क ४०, ५ ।

२. ते यद्वरुणस्य राज्ञो गृहे तनूः सन्न्यदधत तत्तानूनप्त्रमभवत्तत्तानूनप्त्रस्य तानूनप्त्रत्वम् । ऐ १, २४ ।

३. यत्तन्वः समवाद्यन्त तत्तानूनप्त्रस्य तानूनप्त्रत्वम् । क ३८, २; गो २, २, २ ।

तन्तु-

१. तन्तुरसि प्रजाभ्यस्त्वा प्रजा जिन्व (+ इत्याह पितृनेव प्रजा अनुसंतनोति [तैसं ३,५,२,४]) । तैसं ३,५,२,४;४,४,१,२; काठ १७,७; ३७, १७; क २६,६ ।

२. तन्तुरिति प्रजाः (असृजत) । तैसं ५,३, ६, १ ।

३. प्रजा वै तन्तुः । ऐ ३, ११; ३८ ।

तन्त्रायिन्- एष वै तन्त्रायी य एष (सूर्यः) तपत्येष हीमाँल्लोकांस्तन्त्रमिवानुसंचरति । माश १४, २,२,२२ ।

तन्द्र-

१. पङ्क्तिर्वै तन्द्रं छन्दः । माश ८, २,४,३; ५,२, ६ ।

२. पुरुषो वयस्तन्द्रं छन्दः । मै २, ८,२ ।

तपस्-

१. अजा भवति, सतपसमेवैतत् (सोमम्) क्रीणाति । माश ३, ३.३, १८ ।

२. अमा ऽ साश्यनुब्रूते तपस्व्यनुब्रवाऽइति । माश १४,१,१,२९ ।

३. असौ वाऽआदित्यस्तपः । माश ८,७,१,५ ।

४. ऋतेन तपः (अन्वाभवत्) । काठ ३५,१५ ।

५. एतत् खलु वाव तप इत्याहुर्यः स्वं ददातीति । तैसं ६, १,६,३ ।

६. एतद् वाव तपो यत्स्वं ददाति । क ३७,१ ।

७. एतद्वै तपो यो दीक्षित्वा पयोव्रतोऽसत् । माश ९, ५,१ ८ ।

८. एतावु (तपश्च तपस्यश्च) एव शैशिरौ (मासौ) । स यदेतयोर्बलिष्ठं श्यायति तेनो हैतौ तपश्च तपस्यश्च । माश ४,३,१,१९ ।

९. एष ह त्वै जायते यस्तपसोऽधि जायते । तैसं ७,२,१०,३ ।

१०. तद्धि जातं यत् तपसोऽधिजायते, न यत् स्त्रियाः । काठ ३४,१२ ।

११. तप आसीद् गृहपतिः । तै ३,१२, ९,३ ।

१२. तपसा देवा देवतामग्र आयन् तपसर्षयः सुवरन्वविन्दन्, तपसा सपत्नान्प्रणुदामारातीस्तपसि सर्वं प्रतिष्ठितं तस्मात्तपः परमं वदन्ति । तैआ १०,६३,१ ।

१३. तपसा ब्रह्मणा सह तस्य दोहमशीमहि । मै ४, ९, १३ ।

१४. तपसा ब्रह्म विजिज्ञासस्व । तैआ ९, २,१; तैउ ३,२,१ ।

१५. तपसा वै प्रजापतिः प्रजा असृजत । काठ ६, ७ ।

१६. तपसा वै लोकं जयन्ति । माश ३, ४, ४, २७, ।

१७. तपः स्विष्टकृत् । माश ११, २, ७, १८ ।

१८. तपो दीक्षा [नवदशः [तैसं., मै.] (सोमः)] । तैसं ४,३,८,१; मै २,८,४; माश ३, ४,३,२ ।

१९. तपो नवदश इत्युत्तरात्, तस्मात् सव्यो हस्तयोस्तपस्वितरः । काठ २०, १३ ।

२०. तपो वा एष उपैति यो वाच ऽ यच्छति । मै १, ८, ४ ।

२१. तपोऽवान्तरदीक्षायाम् (सोमः) । काठ ३४, १४ ।

२२. तपो वै पुष्करपर्णम् । तैआ १, २५, १ ।

२३. तपो वै यज्ञस्य श्लेष्म, यथा वै रथस्य श्लेष्मैवं यज्ञस्य तपो यो ऽतपस्वी भवत्यस ऽ श्लिष्टो ऽस्य यज्ञस्तपस्वी स्याद्यज्ञमेव स ऽ श्लेषयते । काठ ३४, ९ ।

२४. तपोऽसि लोके श्रितम् । तेजसः प्रतिष्ठा । तै ३, ११, १, २ ।

२५. तपो हि स्वाध्यायः । तैआ २, १४, २ ।

२६. तस्मादु तमेव तपस्तप्यमानं मन्यन्ते यो ददत् । जै १, २८७ ।

२७. तेजो ऽसि तपसि श्रितम् । समुद्रस्य प्रतिष्ठा । तै ३, ११, १, ३ ।

२८. दीक्षा च मे तपश्च मे (यज्ञेन कल्पताम्) । तैसं ४, ७,९, १-२ ।

२९. दीक्षायै च त्वा (अग्ने) तपसश्च तेजसे जुहोमि । तैसं ३, ३, १, १ ।
३०. ब्रह्म तपसि (प्रतिष्ठितम्) । ऐ ३, ६; गो २, ३, २ ।
३१. मनो ह वाव तपः । जै ३, ३३४ (तु. जै ३,३६०) ।
३२. संवत्सरो वाव तपो नवदशस्तस्य द्वादश मासाः षडृतवः संवत्सर एव तपो नवदशस्तद्यत्तमाह तप इति संवत्सरो हि सर्वाणि तपति । माश ८, ४,१, १४ ।
३३. सत्येन तपसा सह तस्य (घर्मस्य) दोहमशीमहि । तैआ ४, २१,१ ।
३४. सा (त्रिष्टुप्) दक्षिणया चागच्छत्तपसा च...... तस्मान्मध्यन्दिने तपस्तपनीयमिति । मै ३, ७, ३ ।
३५. सा (त्रिष्टुप्) दक्षिणां च तपश्चादायापतत्, तस्मात् त्रिष्टुभो लोके दक्षिणा नीयन्त एतद्वाव तपो यत् स्वं ददाति । काठ २३, १० ।
३६. स्वाध्यायप्रवचने एवेति नाको मौद्गल्यः । तद्धि तपस्तद्धि तपः । तैआ ७, ९,१; तैउ १,९,१ । [°पस्- अग्नि- ६७; २८१; ५००; ५३८; अङ्गिरस्- ३०; अजा- २; अनशन- १; अनाधृष्- २; अन्न- १२७; आदित्य- २३२; ऋषि- ६; ७ द्र.] ।

**तप्यमान-** तस्मात्तप्यमानस्य भूयसी कीर्तिर्भवति भूयो यशः । जैउ १, २, १, १३ ।

**तमस्-**

१. कृष्णं वै तमः । माश ५, ३, २, २ (तु. तां ६,६,१०; काठ ११,१०) ।
२. तमो मृत्युः । काठ १०, ६; क ११,१० (तु. मै २,१,६; माश १४,४,१,३२; गो २,५,१) ।
३. तस्य (तमसाविद्धस्य सूर्यस्य) देवास्तमोऽपाघ्नन् । मै ४, ५, ७ ।
४. पाप्मा वै तमः । तैसं ५, १, ८, ६; क ३१, १; माश १२, ९, २, ८ ।
५. वि सप्तरश्मिरधमत् तमांसि । काठ ११, १३ ॥ [°मस्- कृष्ण- ११; छाया- ३; ज्योतिस्- २१ द्र.] ।

**तरस्-**

१. तरो वै यज्ञः । जै १, १५३ ।
२. स्तोमो वै तरः । तां ११,४,५;१५,१०,४ ।
३. स्तोमो वै देवेषु तरो नामासीत् । तां ८,३,३ ।

**तरुतृ-** एष (तार्क्ष्यः [वायुः]) वै सहावांस्तरुतैष हीमाँल्लोकान्सद्यस्तरति । ऐ ४, २० ।

**तल्प-** मानवो वै तल्पः । तै २,२,५,३ ।

**तस्कर-** ये जनेषु मलिम्लवः स्तेनासस्तस्करा वने । ये कक्षेष्वघायवस्तांस्ते (अग्नेः) दधामि जम्भयोः । तैसं ४,१,१०,२-३ ।

**तानूनप्त्र-** तनूनप्तृ- द्र.

**तारका-**

१. सलिलं वा इदमन्त (अन्तरिक्षे) आसीत् । यदतरन् तत्तारकाणां तारकत्वम् । तै १,५,२,५ ।
२. सिध्मास्तारकाः । मै ३,१३,११ ॥ [°का- अश्वत्थ- २ द्र.] ।

तार्क्ष्य-

१. अयं वै तार्क्ष्यो योऽयं (वायुः) पवते, एष स्वर्गस्य लोकस्याभिवोढा । ऐ ४, २० ।

२. तस्य (यज्ञस्य) तार्क्ष्यश्चारिष्टनेमिश्च सेनानीग्रामण्याविति शारदौ तावृतू । माश ८,६,१,१९ ।

३. तार्क्ष्यो वै पश्यतो राजेत्याह तस्य वयांऽसि विशः'''पुराणं वेद । माश १३,४,३,१३ ।

४. भद्रस्तार्क्ष्यः सुप्रजास्त्वाय । काठसंक ६० : ५ ।

५. वायुर्वै तार्क्ष्यः । कौ ३०,५ ।

६. स्वस्त्ययनं वै तार्क्ष्यः (तार्क्ष्यदेवताकमंत्रः) । ऐ ४, २९; ऐआ १,५,२ ।

तार्प्य-

१. अस्य वै (भू-) लोकस्य रूपं तार्प्यम् । तै ३,९,२०,२ ।

२. तार्प्यं ददाति पशूनेवावरुन्धे । तैसं २, ४, ११, ६ ।

३. तार्प्यं देयऽ सयोनित्वाय । मै २, ५,१ ।

४. यजुषां वा एतद्रूपं यत् तार्प्याणि त्रिषीव्यन्ति । काठ १२,४ ।

५. यजुषां (वा एष वर्णो यत्) तार्प्यम् । तैसं २, ४,११,६ ।

६. यज्ञो वै तार्प्यम् । तै १,३,७,१; ३,९, २०,१ ।

तालु- अवक्रन्देन तालुम् [तालु [मै.](प्रीणामि) ] । तैसं ५, ७, ११, १; मै ३, १५, १; काठ ५३,१ ।

तित्तिर- वर्षाभ्यस्तित्तिरान् (आलभते) । मै ३,१४,१ ।

तित्तिरि-

१. अथ यदन्नादनम् (त्रिशीर्ष्णो मुखम्) आसीत्, स तित्तिरिरभवत् । तस्मात् स बहुरूप इव । बहुरूपमिव ह्यन्नम् । जै २,१५४ ।

२. अथ यदन्यस्माऽअशनाय (विश्वरूपस्य मुखम्) आस । ततस्तित्तिरिः समभवत्तस्मात्स विश्वरूपतम इव, सन्त्येव घृतस्तोका इव त्वन्मधुस्तोका इव त्वत्पर्णेष्वाश्चुतिता एवऽ रूपमिव हि स तेन (मुखेन) अशनमावयत् । माश १,६,३,५; ५,५,४,६ ।

३. येन (शिरसा विश्वरूपस्त्वाष्ट्रः) अन्नमावयत्स तित्तिरिः । मै २,४,१ ।

४. रुद्राणां तित्तिरिः । काठ ४७,६ ॥ [°रि- अन्नादन- द्र.] ।

तिथि- यां पर्यस्तमियादभ्युदियादिति सा तिथिः । ऐ ७,११ (तु. कौ ३,१) ।

तिरश्चराजि- अवस्थावन्- १ द्र. ।

तिरश्चिराजि- तिरश्चिराजिना सर्पाः । काठ ३५, १५ ।

तिर्यङ्च्(सामन्-)- अङ्गिरसः स्वर्गं लोकं यन्तो रक्षाऽस्यन्वसचन्त तान्येतेन तिरश्च्याङ्गिरसस्तिर्यङ् पर्य्यैवैद्यत्तिर्य्यङ् पर्य्यैवैत्तस्मात्तैरश्च्यं पाप्मा वाव स तानसचत तन्तैरश्च्येनापाघ्नतापपाप्मानंऽ हते तैरश्च्येन तुष्टुवानः । तां १२,६,१२ ।

तिलवत्सा- एणीर्धाना हरिणीरर्जुनीः सन्तु धेनवः । तिलवत्सा ऊर्जमस्मै दुहाना विश्वाहा सन्त्वनपस्फुरन्तीः । तैआ ६,७,१ ।

तिल्वक-> तैल्व(क>)की- तैल्वकीम् (समिधम्) अभिचरन्नादध्यादेष वै वनस्पतीनाऽ वज्रस्ताजग्घ प्रमीयते । मै ३,१,९ ।

तिष्य (नक्षत्र-)-

१. तिष्यो नक्षत्रं बृहस्पतिर्देवता । तैसं ४,४,१०,१; मै २,१३,२० (तु. काठ ३९,१३) ।

२. तिष्यो वै रुद्रः । काठ ११,५ ।

३. बृहस्पतेस्तिष्यः । तै १,५,१,२;३,१,१,५ ।

४. रुद्रस् (रुद्रो वै [तैसं.]) तिष्यः । तैसं २,२,१०,१;२; मै २,१,५ ।

५. स (बृहस्पतिः) एतं बृहस्पतये तिष्याय नैवारं चरुं पयसि निरवपत् । तै ३ १,४,६ ।

तीर्थ-

१. अप्सु स्नाति साक्षादेव दीक्षातपसी अवरुन्धे, तीर्थे स्नाति, तीर्थे हि (अङ्गिरसः) तां (दीक्षाम्) प्रावेशयन्, तीर्थे स्नाति, तीर्थमेव समानानां भवति । तैसं ६,१,१,२;३ ।

२. तद्यत्प्रायणीयमतिरात्रमुपयन्ति यथा तीर्थेन समुद्रं प्रस्नायुस्तादृक्तत् । माश १२,२,१,१ ।

३. तीर्थेन हि प्रतरन्ति तद्यथा समुद्रं तीर्थेन प्रतरेयुः । गो १,५,२ ।

४. दक्षिणतस्तीर्थानां गाधम् । काठ २९,८ ।

तीव्रसोम-

१. आमयाविनं याजयेत् प्राणा वा एतमतिपवन्ते य आमयावी यत्तीव्रसोमेन (एकाहेन) यजते पिहित्या एवाछिद्रतायै । तां १८,५,११ ।

२. ग्रामो वा एतमतिपवते योऽलं ग्रामाय सन् ग्रामन्न विन्दते यत्तीव्रसोमेन यजते पिहित्या एवाछिद्रतायै । तां १८, ५, ८ ।

३. छिद्र इव वा एष य ९ सोमोऽतिपवते यत्तीव्रसोमेन यजते पिहित्या एवाछिद्रतायै । तां १८, ५, ४ ।

४. पशवो वा एतमतिपवन्ते यो ऽलं पशुभ्यः सन् पशून्न विन्दते यत्तीव्रसोमेन यजते पिहित्या एवाछिद्रतायै । तां १८, ५, १० ।

५. प्रजा वा एतमतिपवते योऽलं प्रजाया सन् प्रजान्न विन्दते यत्तीव्रसोमेन यजते पिहित्या एवाछिद्रतायै । तां १८, ५, ९ ।

६. यस्माच्छ्रीरपक्रामेत् स एतेन (तीव्रसोमेन) यजेत । जै १, १५२ ।

७. विड् वा एतमतिपवते यो राजावरुध्यते यत्तीव्रसोमेन यजते पिहित्या एवाछिद्रतायै । तां १८, ५, ६ ।

तुग्र- अन्वेति तुग्रः ( आदित्यः ) । तैआ १, १०, ४ ।

तुथ-

१. तुथो ऽसि जनधाया देवास्त्वा··· प्रणयन्तु । मै १, ३, १२ ।

२. तुथो ऽसि विश्ववेदाः । तैसं १, ३, ३, १; मै १,२,१२; काठ २, १३; क २, ७ ।

३. तुथो ह स्म वै विश्ववेदा देवानां दक्षिणा विभजति । तैसं ६, ६, १, २ ।

४. ब्रह्म वै तुथः । माश ४, ३, ४, १५ ।

५. सत्यं वै तुथो (तूथो [क.]) विश्ववेदाः । काठ २८,४; क ४४,४ ॥ [°थ- अग्नि- ४४० द्र. ] ।

तुरश्रवस्-> तौरश्रवस (सामन्-)- तुरश्रवसश्च वै पारावतानाञ्च सोमौ स ९ सुतावास्तान्तत एते तुरश्रवाः सामनी अपश्यत्ताभ्यामस्मा इन्द्रः शल्मलिनां यमुनाया हव्यं निरावहद्यत्तौरश्रवसे

भवतो हव्यमेवैषां वृङ्क्ते। तां ९, ४, १०।

**तुरायणयज्ञ-** स एष (तुरायणयज्ञः) स्वर्गकामस्य यज्ञः। कौ ४, ११।

**तुरीय-** चतुर्थ- ४ द्र.।

**तुला-** तुलाया ऽ ह वा ऽअमुष्मिँल्लोकऽआदधति यतरद्यंस्यति तदन्वेष्यति यदि साधु वासाधु वेति। माश ११, २, ७, ३३।

**तुष-**

१. एतद्वै निर्ऋत्या भागधेयं यत्तुषाः। काठ २०, २।

२. निर्ऋत्यै वा एतद् भागधेयं यत्तुषाः। तैसं ५, २,४,२।

**तूथ-** तुथ- ५ द्र.।

**तूपर-**

१. तूपरो भवति, प्राजापत्यो ह्येष देवतया। तैसं २, १, ६, ५।

२. यत्तूपरस्तदश्वानाम् ( रूपम् )। जै २, ३७१॥ [°र- काय- द्र ३]।

**तूर्णि-**

१. तूर्णिर्हव्यवाडित्याह, सर्वं ऽ ह्येष ( अग्निः ) तरति। तैसं २, ५, ९, ३।

२. वायुर्वै तूर्णिर्वायुर्हीदं सर्वं सद्यस्तरति यदिदं किंच। ऐ २, ३४।

३. सर्वं ऽ ह्येष पाप्मानं तरति तस्मादाह तूर्णिर्हव्यवाडिति। माश १,४,२,१२।

**तूर्त-** क्षिप्र- द्र.।

**तूष्णीम्** यदा वै तूष्णीमास्ते प्राणमेव वागप्येति। जै २, ५०।

**तूष्णींशंस-**

१. चक्षूंषि वा एतानि सवनानां यत्तूष्णींशंसः। चक्षुर्वा एतद्यज्ञस्य यत्तूष्णींशंसः। ऐ २, ३२।

२. तूष्णींसारो वा एष यत्तूष्णींशंसः। ऐ २, ३१।

३. मूलं वा एतद्यज्ञस्य यत्तूष्णींशंसः। ऐ २, ३२।

४. षडक्षरस्तूष्णींशंसः। जै १, १६९।

**तृच-**

१. अन्तरिक्षदेवत्यस्तृचो भवति। तां १२, १, ८।

२. इमे हि ( त्रयः ) लोकास्तृचः। जै १, ३११; तां २, १, ४; २, २;३, ५।

**तृतीय** ( अहन्- )-

१. अन्तरिक्षदेवत्यमेतदहर्यत्तृतीयम्। तां १२, १, ८; २, ७; ३, १९; ५, ८।

२. अन्तस् ( अन्तो वै [तां.] ) तृतीयमहः। कौ २२,५; ६; तां १२, ५, ४।

३. उद्धतमिव वै तृतीयमहः। तां १२, ४, ४।

४. उद्वद्वा एतत् त्रिवदहर्यत् तृतीयम्। तां १२, ५,२ (तु. तां १२,३,२)।

५. जागतमेतदहर्यत्तृतीयम्। तां १२, ७, ३।

६. बहुदेवत्यं तृतीयमहः। कौ २०, ४।

तृतीय-रजस्- द्यौर्वै तृतीय ँ रजः । माश ६, ७, ४, ५ ।

तृतीय-सवन-

१. अथैतन्निर्धीतशुक्रं यत्तृतीयसवनम् । माश ४, ३, ३, १९; ५, १७ ।
२. अथैतन्मिश्रं यत् तृतीयसवनम् । काश ५, ४,४, २ ।
३. अदस् ( द्युलोकः ) तृतीयसवनम् । जै ३, ५७ ।
४. अनुष्टुभैव तच्छन्दसा प्रजापतिश्चेन्द्रश्च विश्वेषु देवेषु तृतीयसवने ऽध्यपचितिमगच्छताम् । जै २, १०१ ।
५. अष्टाचत्वारिंशं तृतीयसवनम् । जै २, २७९ ।
६. असौ वै ( द्यु- ) लोकस्तृतीयसवनम् । गो २, ४, १८ ।
७. असौ यन्तं ( सूर्यम् ) तृतीयसवनेन ( ईप्सन्ति ) । कौ १८, ९ ।
८. आदित्येभ्यस्तृतीयसवनं (इन्द्रः प्रायच्छत्) विश्वेभ्यश्च देवेभ्यः । जै २, १३९ ।
९. आनुष्टुभं हि तृतीयसवनम् । जै १, १८० ।
१०. काव्याः ( पितरः ) तृतीयसवने । ऐ ७, ३४ ।
११. चतुर्वि ँ शैकवि ँ शौ ( स्तोमौ ) तृतीयसवनम् ( वहतः ) । तां १६, १०, ५ ।
१२. चित्रवत् तृतीयसवनम् । तां १८, ६, ७ ।
१३. तद्वा ऽअमिश्रमेव वसूनां प्रातःसवनममिश्र ँ रुद्राणां माध्यन्दिन ँ सवनं, मिश्रमादित्यानां तृतीयसवनम् । माश ४, ३, ५, १ ।
१४. तया ( वैश्वदेव्याऽऽगया ) तृतीयसवनस्योद्गेयम् । जैउ १, १२, ३, ४ ।
१५. तस्य ( उद्गातुः ) तृतीयसवनमायतनम् । जै १, ३४३ ।
१६. तृतीयसवनं वै स्विष्टकृत् । माश १, ७, ३, १६ ।
१७. तृतीयसवन ऋजीषमभिषुण्वन्ति धीतमिव हि मन्यन्ते । तैसं ६, १, ६, ४ ।
१८. तृतीयसवने पितृयज्ञमवाकल्पयन्, तृतीयसवने त्र्यम्बकान् । काठ २३,७ ।
१९. तृतीयसवने वै यज्ञस्याशिषं कुरुते । क ४०, ४ ।
२०. त्र्यम्बका ँ स्तृतीयसवनमकुर्वत । तैसं ३, २,२, ३ (तु. मै ३, ६,१०) ।
२१. दधि तृतीयसवने ( अवनयेत् ) । जै १, ३५५ ।
२२. दधि तृतीयसवने ऽधायीव वा अनेनेति तस्माद् दधि । जै २, १५७ ।
२३. द्यौर्वै तृतीयसवनम् । माश १२, ८, २, १० ।
२४. द्वादशकपालान् ( पुरोडाशान् ) तृतीयसवने ( निर्वपन्ति ) । तैसं ७, ५, ६, ४ ।
२५. द्वे सवने शुक्रवती, धीतमिव तृतीयसवनम् । काठ २३, १० ।
२६. द्वौ ( स्तोमौ ) तृतीयसवनं ( वहतः ), यथा वाक् च प्रतिष्ठा च । तैसं ७, १,१, १ ।
२७. द्वौ स्तोमौ तृतीयसवनं वहतो यथा मध्यं च प्रतिष्ठा च तथा तत् । जै १, ६६ ।
२८. धीतमिवैतद् यत् तृतीयं सवनम् । जै ३,२८ (तु. क ३७, १; जै १,१५६;२८८; ३,२२३) ।
२९. धीतरसं वा एतत्सवनं यत्तृतीयसवनम् । कौ १६,१; ३०,१; गो २,४,१८ (तु. ऐ ६, १२) ।
३०. धीता इवैते यच्छन्दोमास्तृतीयसवनायतनाः । जै ३, २२३ ।
३१. निर्वीर्यं ( विट् [कौ.] ) तृतीयसवनम् । काठ २९, २; कौ १६, ४ ।

३२. पशवो वै ( हि ⌊तैसं.⌋ ) तृतीयसवनम् । तैसं ६. १, ९, २; मै ३, ७,४; ४,७, ६; काठ २४, २; क ३७, ३ (तु. तैसं ३, २, ९, ४; ६, ६, ११, ३) ।
३३. पशू ९ स्तृतीयसवने ( आत्मन् दधीत ) । तैसं ३, २, ९, २ ।
३४. पितृभ्यस्तृतीयसवनं क्रियते । काठ २३, ४; क ३६, १ ।
३५. मदवद् वै रसवत्तृतीयसवनम् । तां ११, ५, १; १०,२; १२, ६, ३ ।
३६. मद्वद्धि तृतीयसवनम् । कौ १६, १; २; ३; ४; गो २, ४, १६; १७; (तु. ऐ ३,२९; ४,४) ।
३७. यदङ्गैस् तृतीयसवने (चरन्ति) तेन तृतीयसवनं पशुमत् । मै ३, ९, ५ ।
३८. यदाशिरा तृतीयसवने (चरन्ति), तेन तत्पशुमद्वीर्यवत् (°द्वीर्या° ⌊काठ.⌋) । काठ २९,५; क ४५,६ ।
३९. यदि तृतीयसवने (स्कन्देत्), पितॄन्नमगन्यज्ञः···इत्यनुमन्त्रयेत काठ २५, ७ ।
४०. येऽवाञ्चः (प्राणाः पुरुषस्य) तत्तृतीयसवनम् । कौ २५, १२ ।
४१. लेलिहितमिव हि तत् तृतीयसवनम् । जै १,४ ।
४२. विदद्वसु वै तृतीयसवनम् । तां ८, ३, ६ ।
४३. विश्वे देवा द्वादशकपालेन तृतीयसवने ( आदित्यमभिषज्यन् ) । तै १, ५,११, ३ ।
४४. विश्वेषां वै देवानामृतुमतां (°मृभुमतां ⌊तैसं.⌋) तृतीयसवनम् । तैसं ७,५,७,३; काठ ३३,७ ।
४५. विश्वेषां देवानां (विश्वे देवाः ⌊तैआ.⌋ ) तृतीयसवनम् । कौ १४,५;१६,११; तैआ ५,१,६ ।
४६. वैश्वदेवं (+ वै ⌊तैसं., ऐ., माश., जैउ.⌋) तृतीयसवनम् । तैसं ७, ५, ६, ५; मै ४, ५, ९; काठ ३४,१६; ऐं ६, १५; माश १,७,३,१६;४,४,१,११; जैउ १, १२,३,४ ।
४७. शुक्रवती वै पूर्वे (द्वे) सवने, अशुक्रं तृतीय ९ सवन ९ (+ यज्ज्योतिष्मतीस्तृतीयसवने व्याघारयन्ति, तेन तृतीयसवन ९ शुक्रवत् ⌊ मै ३,८,१० ⌋ ) । मै ३, ८,१०; ४,६,९ ।
४८. सावित्रेण (ग्रहेण) तृतीयसवनम् ( ऋतुमत् ) । मै ४,६,८ ॥ [°न- आग्नावैष्णव- ३; आदित्य- ८;८१;११४; इन्द्र- ३७६; ऋभु- २; एकविंश- ९; जगती- १६; जागत- ८; २३ द्र. ] ।

**तृतीया चिति-**

१. अन्तरिक्षं वै तृतीया चितिः । माश ८, ४,१,१ ।
२. द्यौरेव तृतीया चितिः । माश ८,७,४,१४ ।
३. मध्यमेव तृतीया चितिः । माश ८, ७, ४, २१ ।

**तृप्ति-**

१. तृप्तिरानुष्टुभम् (छन्दः) । शांआ ११,७ ।
२. तृप्तिरिति वृष्टौ । तैआ ९,१०,२; तैउ ३, १०,२ । [आभीशव- द्र. ] ।

**तृष्टावरुत्री-** असुर- १७ द्र. ।
**तेजन-** वज्रो वै तेजनम् । मै ४,२,९ ।
**तेजनी-** पाप्मा वै तेजनी । तै ३, ८,१९,२ ।
**तेजस्-**

१. अग्ने यत्ते तेजस्तेन तं प्रतितितिग्धि योऽस्मान् द्वेष्टि······ । मै १, ५, २ ।
२. अग्नेश्च त्वा ब्रह्मणश्च तेजसा जुहोमि । मै ४, ७,३ ।

३. अपां यो द्रवणे रसस्तेनाहमिमं···तेजसे ब्रह्मवर्चसायाभिषिञ्चामि । काठ ३६,१५।
४. अश्विनोस्त्वा तेजसा ब्रह्मवर्चसायाभिषिञ्चामि । मै ३, ११,८ ।
५. तेज उद्यतः (प्रवर्ग्यः) । तैआ ५,११, ४ ।
६. तेज एव श्रद्धा । माश ११, ३, १, १ ।
७. तेजः प्रवर्ग्यः ( सूर्यः [मै.] ) । मै २, २,८; तैआ ५, ३, २; १०,३ ।
८. तेजः प्रातःसवन आत्मन् दधीत । तैसं ३, २, ९, २ ।
९. तेजसे कं पूर्णमा इज्यते । मै १, ९, ५; काठ ९, १३ ।
१०. तेजो वसोर्धारा । तैसं ५, ४,८,१ ।
११. तेजो वा ऽग्निष्टोमस्तेजो विषुवत् । जै २, ३८७ ।
१२. तेजो वै त्रिणव स्तोमानाम् । जै २, २१९ ।
१३. तेजो वै त्रिवृत् (पृष्ठानि [तैसं.]) । तैसं ५, ५, ८, १; मै ४, ४,१० ।
१४. तेजो वै प्रातःसवनम् (यज्ञायज्ञीयम् [जै.]) । मै ४, ७, ६; जै ३, २९० ।
१५. तेजो वै ब्रह्मवर्चसं ज्योतिरग्निष्टोमः । जै २, ३१२ ।
१६. तेजो वै मदन्तीः । मै ३, ७,१० ।
१७. तेजो वै यूपः । मै ३, ९, ३ (तु. काठ २६, ५; क ४१, ३) ।
१८. तेजो वै वायुः ( वेणुः [तैआ.] ) । तै ३, २, ९, १; तैआ ५, २, ४;३,२ ।
१९. तेजो वै शुक्रो ब्रह्मवर्चसम् । मै ४, ६, ३; ८, ९ ।
२०. तेजो वै हिरण्यम् । तैसं ५, १, १०, ५; मै १, ११, ८; काठ ११, ४; ८; २१, ७; तै १, ८, ९, १ । (तु. मै ३, ७, ५; काठ २४,५; तै ३, १२, ५,१२) ।
२१ तेजो ऽसि, तेजो मे यच्छ, पृथिवीं यच्छ । तैसं ५, ७, ६, १ ।
२२. तेजोऽसि शुक्रमस्यमृतमसि ( आज्य ! ) । माश १, ३, १, २८ ।
२३. त्रिवृदग्निष्टोमो (+ऽग्निष्टुदाग्नेयीषु [तैसं ७,२,५,५]) भवति । तेज एवावरुन्धे । तैसं ७,२, ३, २;५,५ ।
२४. नवरात्रो भवत्यभिपूर्वमेवास्मिन् तेजो दधाति । तैसं ७, २, ४, ३ ।
२५. नवारत्निः कार्यस्तेजसा त्रिवृता संमितः । मै ३, ९, २ ।
२६. पशवो वै तेजो ब्रह्मवर्चसम् । मै १, ८, ३ ।
२७. बृहस्पतिर्वा एतद्यज्ञस्य तेजः समभरद्यत् स्तोमभागाः । तैसं ५, ३, ५,५ ।
२८. ब्रह्मणा तेजसा सह तस्य दोहमशीमहि । तैआ ४, २१,१ ।
२९. ब्रह्म तेजो मे पिन्वस्व । काठ ५, २ ।
३०. मदन्तीभिः प्रोक्षति । तेज एवास्मिन्दधाति । तैआ ५, ४, १ ।
३१. यत्तेजस्ते दर्भास्तस्मात्ते पवित्रं तस्माद्दर्भैरपः पुनन्ति । काठ २३,१; क ३५, ७ ।
३२. यन्नवकपालस्त्रिवृतैवास्मिन् ( यजमाने ) तेजो दधाति । तैसं २, २,५, ३ ।
३३. वसन्तेन ऋतुना ( वसन्तर्तुना [तै.]) देवा वसवस्त्रिवृता स्तुतम् । रथन्तरेण तेजसा हविरिन्द्रे वयो दधुः । मै ३, ११, १२; तै २, ६, १९, १ ।
३४. समुद्रो ऽसि तेजसि श्रितः, अपां प्रतिष्ठा । तै ३, ११,१, ४ ।

३५. सूर्येण तेजः ( अन्वाभवत् )। काठ ३५, १५; क ४८, १३।
३६. हिरण्यं ब्रह्मणे ददाति तेजस्तेन परिक्रीणाति। काठ ३७, १ (तु. तैसं २, ४, ११, ५-६)।
[ °जस्- अग्नि- ३१७; ३१८; ५२०; ५२१; ५२२; ६०२; अन्तरिक्ष- १२०; अप्- ४२; आग्नेय- ३८; आग्नेयी- ८; आज्य- १०;२५; आदित्य- ५४; उत्तरवेदि- ७; ओषधि- १३; कृष्णाजिन- १०; गायत्री- ७१; ७२; तपस्- २४; २७; २९ द्र. ]।

तेजस्काम-
१. तेजस्कामो हैतेन यजेत यन्नवरात्रः जै २, ३१६।
२. श्वेत ९ वायवे नियुत्वता आलभेत तेजस्कामः। मै ३, १,१०।

तेजस्वत्- अग्नये त्वा तेजस्वते एष ते योनिः । तैसं १, ४,२९,१; काठ ४,११; क ३,९।
[ °वत्- ओजस्वत्- द्र. ]।

तेजस्विन्->तेजस्वितर- दक्षिणोऽर्द्धस्तेजस्वितरः। तैआ १, २४, २।
तेजस्विनी- कूप्या- द्र.।

तोक- प्रजा वै तोकम्। माश ७, ५,२, ३९।

तोत- तोतो राय इति······त्वयि त्वयि पशव इत्येवैनदाह। काश ४, ३,१,९।

तौरश्रवस- तुरश्रवस्- द्र.।

त्रपु-
१. रजतेन त्रपु त्रपुणा लोहायसम् ( सन्दध्यात् )। जैउ ३, ४,३,३।
२. सीसं च मे त्रपुश्च मे ( यज्ञेन कल्पताम् )। तैसं ४, ७, ५, १।
३. सीसेन त्रपु ( सन्दध्यात् )। गो १, १, १४।

त्रयस्त्रिंशत्- दश हस्त्या अंगुलयो दश पद्या दश प्राणा मनो वाग् धृदयं तत् त्रयस्त्रिंशत्। जै ३, ३१९।

त्रयस्त्रिंश-
१. अग्रं त्रयस्त्रिंश स्तोमानाम्। जै ३,१३५।
२. अनूकं त्रयस्त्रि ९ शः। द्वात्रि ९ शद्वाऽएतस्य करूकराण्यनूकं त्रयस्त्रि ९ शम्। माश १२, २,४,१४।
३. अन्तो वै त्रयस्त्रि ९ शः परमो वै त्रयस्त्रि ९ श स्तोमानाम्। तां ३,३,२।
४. एष वाव दृढः प्रतिष्ठितस् सर्वदेवत्य स्तोमो यत् त्रयस्त्रिंशः। तस्मात् त्रयस्त्रिंश एव स्तोमोऽन्ततः कार्य इति। जै ३, २०२।
५. एष वै समृद्धः स्तोमो यत् त्रयस्त्रि ९ शः। तां १५,१२,६।
६. ज्योतिस्त्रयस्त्रिंशः स्तोमानाम्। तां १३,७,२।
७. तम् (त्रयस्त्रिंशं स्तोमम् ) उ नाक इत्याहुः। तां १०,१,१८।
८. त्रयस्त्रि ९ श एव स्तोमो भवति प्रतिष्ठायै। तां १५, १२,८ (तु. तां ४, ८,१०)।
९. त्रयस्त्रिंशद् इमानि पृष्टिकाण्डानि सह किंकालुकाभिः। तदेव त्रयस्त्रिंशमहः। जै २,५८।
१०. त्रयस्त्रिंशं स्तोममन्वारण्याः पशवः। जै २,३२।

११. त्रयस्त्रिंशं ते अग्ने प्रतिष्ठानम् । काठ ३९,२ ।
१२. त्रयस्त्रिंशेन च ह वा इद ँ सप्तहोत्रा च संततं यदिदं देवमनुष्या अन्योऽन्यस्मै प्रददति । काठ ९, १२ ।
१३. त्रयस्त्रिंशेन श्रीकामः (यजेत) । जै २,१३६ ।
१४. त्रयस्त्रिंशेन स्तोमेनातिच्छन्दसमध्यैत् ( °समभ्यक्रन्दत् [जै ३,३८१] ) । ततः साध्यांश्चाप्त्यांश्चासृजत ( +सवितृमुखान् [जै ३, ३८१] ) । जै ३,३६३;३८१ ।
१५. त्रयस्त्रिंशेनैव विश्वेदेवा आयन् । ते स्वर्गं लोकं गत्वा सार्धमेवाव्यवसिता आसन् । जै २,२०९ ।
१६. त्रयस्त्रिंशो भवति प्रतिष्ठित्यै । तैसं ७,२,१, ३; ३,२ ।
१७. त्रयस्त्रि ँ शो वै स्तोमानामधिपतिः । तां ६,२,७ ।
१८. त्रयस्त्रिंशो वै स्तोमो महान् । जै ३,१३७ ।
१९. देवता एव त्रयस्त्रि ँ शस्यायतनम् । तां १०, १,१६ ।
२०. प्रजापतिर्वै त्रयस्त्रिंशः ( प्रजापतिः प्रजननम् । स यः प्रजननं स मा प्रजनयादिति । [जै.]) । तैसं ७,४, ३,३; जै २, १४७ ।
२१. प्रतिष्ठा त्रयस्त्रिंशः (+इति पश्चात् त्रयस्त्रि ँ शद्देवता, देवतास्वेव प्रतितिष्ठति [काठ.]) । तैसं ४,३,८,१; मै २,८,४; काठ २०,१३ (तु. जै ३, ३०९) ।
२२. यस्य त्रयस्त्रि ँ शमन्तर्यन्ति, देवतास्तस्यान्तर्यन्ति । तैसं ७,१,३,३ ।
२३. वर्म्म वै त्रयस्त्रि ँ शः । तां १९, १०, १० ।
२४. संवत्सरो वाव प्रतिष्ठा त्रयस्त्रि ँ शः । तस्य चतुर्वि ँ शतिरर्धमासाः । माश ८,४,१,२२ ।
२५. सद् ध खलु वै वामदेव्यं स्तोत्राणां सदग्निर्देवतानां सद् विराट् छन्दसां सत् त्रयस्त्रिंशः स्तोमानाम् । जै ३,३०१ (तु. तां १५,१२,२) ॥ [°श- ऋभु- १; क्षत्र- १;३२; ७५ द्र.] ।

त्रयस्त्रिंशदह ( यज्ञ- )- द्वे वाव देवसत्रे द्वादशाहश्चैव त्रयस्त्रिंशदहश्च । तैसं ७, ४,५, १ ।

त्रयी विद्या-

१. अथ केन ब्रह्मत्वं क्रियत इति । अनया (ऋग्यजुःसामाख्यया ) त्रय्या विद्ययेति ह ब्रूयात् । जै १, ३५८ ।
२. अथाह । स्तोमश्च यजुश्चऽऋक् च साम च बृहच्च रथन्तरं चेति त्रयी हैषा विद्याऽसं वै त्रयी विद्या । माश ९, ३, ३, १४ ।
३. एतावान्नु वै यज्ञो यावत्येषा त्रयी विद्यैतया हि त्रय्या विद्यया यज्ञं तन्वते । काश ७, ५,३,८ ।
४. एवमेवैता ( भूर्भुवःस्वरिति ) व्याहृतयस्त्रय्यै विद्यायै संश्लेषिण्यः । कौ ६, १२ ।
५. तद्यत्तत्सत्यम् । त्रयी सा विद्या । माश ९, ५, १, १८ ।
६. तस्य ( एकविंशसाम्नः ) त्रय्येव विद्या हिङ्कारः । जैउ १, ५,१,२ ।
७. त्रयी विद्या निर्वपणम् । माश ७, ५, २, ५२ ।
८. त्रयी वै विद्या । ऋचो यजू ँ षि सामानि । माश ४, ६, ७, १ ।
९. त्रयी वै विद्या काव्यं छन्दः । माश ८, ५, २, ४ ।

१०. त्रय्यां वाव विद्याया ँ सर्वाणि भूतानि । माश १०, ४, २, २२ ।

११. प्रजापतिस्त्रय्या विद्यया सहापः प्राविशत् । माश ६, ३, १, १० ।

१२. भूर्भुवस्स्वरिति सा त्रयी विद्या । जैउ २, ३,३, ७ ।

१३. मनसो वै समुद्राद्वाचाभ्रया देवास्त्रयीं विद्यां निरखनन् । माश ७, ५, २, ५२ ।

१४. यत्र वै देवाः, इमा विद्याः ( ऋग्यजुःसामानि ) कामान्दुदुहे, तद्ध यजुर्विद्यैव भूयिष्ठान् कामान् दुदुहे । माश ४, ६, ७, १४ ।

१५. स ( प्रजापतिः ) श्रान्तस्तेपानो ब्रह्मैव प्रथममसृजत त्रयीमेव विद्याम् । माश ६, १,१, ८ ।

१६. सैषा त्रयी विद्या ( ऋक्सामयजूंषि ) यज्ञः । माश १, १, ४, ३ ।

१७. सैषा त्रयी विद्या सौम्ये ऽध्वरे प्रयुज्यते । माश ४, ६,७,१ ।

त्रयोदश-

१. अतिरिक्तं वै त्रयोदशम् । मै २, २, ११ ।

२. त्रयोदशारत्निः कार्यस्त्रयोदशेन प्रजापतिना संमितः । मै ३, ९, २ ।

३. नैवारश्चरुस्त्रयोदशो भवत्यस्ति मासस्त्रयोदशः । मै ३, ४,१० (तु. मै ४, ६, ७) ।

४. वसवस्त्रयोदशाक्षरया त्रयोदशं मासमुदजयन् । मै १, ११, १०; काठ १४, ४ ।

५. वसवस्त्रयोदशाक्षरेण त्रयोदश ँ स्तोममुदजयन् । तैसं १, ७, ११, २ ।

६. स ( आदित्यः ) एतं त्रयोदशरात्रमपश्यत् । तमुपैत् । ततो वै स सर्वेषां देवानां श्रैष्ठ्यमगच्छत्, त्रयोदशो मासो भूत्वेदं सर्वमभ्यारोहत् । संवत्सरो वा इदं सर्वम् । जै २, ३३४ ।

त्रयोदश-रात्र (यज्ञ-)- प्राणापानोदानेष्वेवान्नाद्ये प्रतितिष्ठन्ति सर्वमायुर्यन्ति य एवं विद्वा ँ-सस्त्रयोदशरात्रमासते । तैसं ७, ३, ३, १ ।

त्रयोदशी- यमस्य त्रयोदशी । मै ३, १५, ४ ।

त्रयोवि ँश ( स्तोम-)- सम्भरणस्त्रयोदश इत्युत्तरात्, तस्मात् सव्यो हस्तयोस्सम्भार्यतरः । काठ २०, १३ (तु. तैसं ४, ३, ८, १; मै २, ८, ४) ।

त्रयो वेद- एतावान् वै सर्वो यज्ञो यावानेष त्रयो वेदः । माश ५, ५, ५,१० ।

त्रिंश ( स्तोम-)- विराट् त्रिंशः । मै २, ८, ४ ।

त्रिककुद् ( पर्वत-)- यत्र वा ऽइन्द्रो वृत्रमहंस्तस्य यदक्ष्यासीत्तं गिरिं त्रिककुदमकरोत् । माश ३, १, ३, १२ ।

त्रिककुभ- तद्यदेतेषां त्रयाणां लोकानां तिस्रः ककुभोऽन्नाद्यमवारुन्धत तत् त्रिककुभस्य त्रिककुभत्वम् । जै १, १८५ ॥ [ °भ- उदान- ६ द्र. ] ।

त्रैककुभ ( सामन्- )-

१. इन्द्रियं वै वीर्यं त्रैककुभम् । जै २, ३७८ ।

२. ओजस्येव तद्वीर्ये प्रतितिष्ठत्योजो वीर्यं त्रैककुभम् । तां १५, ६, ५ ।

३. ता ँ स्त्रिककुबधिनिधायाचरत्स एतत्सामापश्यद्यत्त्रिककुबपश्यत्तस्मात्त्रैककुभम् । तां ८, १, ४ ।

४. त्रिवीर्यं वा एतत्साम ( त्रैककुभम् ) त्रीन्द्रियमैन्द्रय ऋच ऐन्द्र ँ सामैन्द्रेति निधनमिन्द्रिय एव वीर्ये प्रतितिष्ठति । तां ८, १,७ ।

५. त्रैककुभं पशुकामाय ब्रह्मसाम कुर्य्यात् त्वमङ्ग प्रश ॰ सिष इत्येतासु । तां ८, १, ३ ।

त्रिणव (स्तोम- )-

१. इमे वै ( त्रयः ) लोकास्त्रिणवः । तैसं ५, ३, ३, ४; ७, ४, ३, ५; काठ २०, १३; तां ६, २, ३; १९, १०, ९ ।
२. तं ( त्रिणवस्तोमम् ) पुष्टिरित्याहुस्त्रिवृद्ध्येवैष पुष्टः । तां १०, १,१५ ।
३. ते त्रिणवमेवायतनमचायं स्तं स्वराय ॰ स्त ॰ सेतुं कृत्वा तत्पशवोऽसृज्यन्त । काठ ९,११ ।
४. त्रयोदशेमाः परिशवस्त्रयोदशेमा अण्डपरिशुस्ससप्तविंशी तदेव त्रिणवमहः । जै २, ५८ ।
५. त्रिणवं स्तोममनु ग्राम्याः पशवः । जै २, ३२ ।
६. त्रिणव एव स्यादिति । त्रयो ह ते त्रिवृतः । जै २, १४७ ।
७. त्रिणवं ब्राह्मणाच्छंसिनः । जै २, २२४ ।
८. त्रिणवा इमे लोकाः । काठ ३३, ८; क ४१, १; जै २,२२४; ३, ८६ ।
९. त्रिणवाभिर्भ्रातृव्यवतस्त्रिवृतमेव वज्र ॰ सम्भृत्य भ्रातृव्याय प्रहरति । तैसं ५, २, ६, ३ ।
१०. त्रिणवेन स्तोमेन पंक्तिमध्यैत् । ततो मरुतो ऽसृजत । जै ३, ३६३ ।
११. त्रिणवेनौजस्कामः ( यजेत ) । जै २, १३६ ।
१२. त्रिणवो भवति विजित्यै । तैसं ७, २, १, ३; ३, २ ।
१३. त्रिणवौ ते अग्ने अष्ठीवन्तौ । काठ ३९, २ ।
१४. त्रिवृच्च त्रिणवश्च राथन्तरौ तावजश्चाश्वश्चान्वसृज्येतां तस्मात्तौ राथन्तरं प्राचीनं प्रधूनुतः । तां १०, २, ५ ।
१५. त्रिवृदेव त्रिणवस्यायतनम् । तां १०, १, १३ ।
१६. पार्श्वे त्रिणवः । त्रयोदशान्याः पर्शवस्त्रयोदशान्याः पार्श्वे त्रिणवे । माश १२,२,४,१३ ।
१७. प्रतिष्ठा त्रिणवः । तैसं ५, ३, ४, ४; काठ २१, १ ।
१८. यत्त्रिणवो ( भवति ) वज्रं भ्रातृव्याय प्रहरति । तां १९, १८, ३ ।
१९. यस्य त्रिणवमन्तर्यन्त्यृतू ॰ श्च तस्य नक्षत्रियां च विराजमन्तर्यन्ति । तैसं ७, १, ३, २ ।
२०. वज्रस् (वज्रो वै [माश १३,४,४,१; तां.]) त्रिणवः । तां ३,१,२; माश ८,४,१,२०; ष ३,४ ।
२१. सप्तवि ॰ शयरत्निः कार्यस्त्रिणवेन संमितः । मै ३,९,२ ॥ [°व- अत्रि- १; अदिति- २१; ओजस्- १;९; २१; क्षत्र- ७५; तेजस्- १२ द्र.] ।

त्रिणिधन (सामन्-)-

१. एतेन वै माध्यन्दिन ॰ सवनं प्रतिष्ठितं यत्त्रिणिधनम् । तां ७,३,२ ।
२. यौत्रिणिधनम् । तां २१,२,७ ।

त्रित->त्रैत (सामन्-)-

१, त्रैतं नाथकामः कुर्वीत···तदु भ्रातृव्यहा साम···अथो हास्मै वर्षुक एव पर्जन्यो भवति (य एवं वेद)। तदु पशव्यमेव। यदु त्रित आप्त्योऽपश्यत् तस्मात्त्रैतमित्याख्यायते । जै १,१८४ ।
२. त्रैतं भवति प्रतिष्ठायै । तां १४,११,२२ ।

३. नाथविन्दु (त्रैतम्) साम विन्दते नाथम् । तां १४,११,२४ ।

त्रिधातु-

१. तदिमान् लोकानभ्यत्यरिच्यतेन्द्र ऽ राजानमिन्द्रमधिराजमिन्द्र ऽ स्वराजानं ततो वै स (प्रजापतिः) इमान् लोका ऽ स्त्रेधाऽदुहत्, तत् त्रिधातोस्त्रिधातुत्वम् । यं कामयेतान्नादः स्यादिति तस्मा एतं त्रिधातुं निर्वपेत् । तैसं २,३,६,१ ।

२. यज्ञस्त्रिधातुः । जै २,३९६ ।

३. यत् त्रिः प्रायच्छत् त्रिः प्रत्यगृह्णात् तत् त्रिधातोस्त्रिधातुत्वम् । तैसं २,४,१२,७ ।

४. यदस्मिन् (इन्द्रे) त्रीणि वीर्याण्यधत्तां तस्मात् त्रिधातुः । मै २,४,६ ।

त्रैधातवीय- सर्वो वा एष यज्ञो यत् त्रैधातवीयम् । तैसं २,४,११,२ ।

त्रैधातव्या (इष्टि-)-

१. त्रिरात्रस्य वा उपेप्सायै त्रैधातव्याऽऽह्रियते । यावद्वै त्रिरात्रेणोपाप्नोति तावत् त्रैधातव्यया ऽवरुन्द्धे । मै २,४,४ ।

२. त्रिर्मा धाः इति तद्वाव त्रैधातव्या, सहस्र ऽ वा अस्मै तत्प्रायच्छदृचः सामानि यजू ऽ षि । यद्वा इदं किं च तत् त्रैधातव्या । मै २,४,३ ।

३. यद्वै त्रिस्त्रिस्तत् त्रैधातव्यायाः समृद्धम् । मै २,४, ५ ।

४. यो भूतिकामः स्यात्तमेतया (त्रैधातव्यया) याजयेत्, तेज एवास्मिन् (यजमाने) अग्निर्दधातीन्द्रियमिन्द्रो ब्रह्म बृहस्पतिर् भवत्येव । मै २,४,६ ।

५. सो (वृत्रः) ऽब्रवीत् सकृन्मा धा विष्णो, द्विर्मा धा विष्णो, त्रिर्मा धा विष्ण इति, तत त्रैधातव्यायास्त्रैधातव्यात्वम् । काठ १२;३ ।

त्रिपाद्- आदित्य- ९६ द्र. ।

त्रिपुर- तस्मादु हैतत्पुरां परम ऽ रूपं यत्त्रिपुरम् । माश ६, ३,३,२५ ।

त्रिरात्र (क्रतु-)-

१. अन्तस्त्रिरात्रो यज्ञानाम् । तां २१,४,६ ।

२. असावेव त्रिरात्रो योऽसौ (आदित्यः) तपति । जै २,२४८ ।

३. इमे (+वै [जै]) लोकास्त्रिरात्रः । जै २,२८४; तां १६,११,४;२१,७,२ ।

४. को यज्ञानां वर्षिष्ठः को वरिष्ठ इति··· त्रिरात्र एव यज्ञानां वर्षिष्ठ इति । जै २, २८४ ।

५. तद्यथा अदो मणौ सूत्रमोतमेवमेषु लोकेषु त्रिरात्र ओतः, शोभते ऽस्य मुखं य एवं वेद । तां २०, १६, ६ ।

६. तस्याः (शबल्याः) त्रिरात्रो वत्सः । तां २१, ३, १ ।

७. त्रिरात्रेण वै देवा ऊर्ध्वा स्वर्गं लोकमायन् । जै २, २५६ ।

८. परमस्त्रिरात्रो यज्ञानाम् । तैसं ५, ४, १२, १ ।

९. पुरुषस्त्रिरात्रः । जै २,२४५ ।

१०. मूर्द्धा वा एष दिवो यस्तृतीयस्त्रिरात्रः । तां १४, २, २ ।

११. वाग्वै त्रिरात्रः । जै २, २४१; तां २०, १५,२ ॥ [ °त्र- त्रैधातव्या- १ द्र. ] ।

**त्रिवत्-** अन्तो वै त्रिवत् । ऐआ १, ५, ३ ।

**त्रिविक्रम-** सा (सलावृकी) वा इमाम् (पृथिवीम्) त्रिः समन्तं पर्यैत्, तद्वै देवा इमां अविन्दन्त······ स (विष्णुर्वामनः) वा इदम् (पृथिवीम्) एवाग्रे व्यक्रमताथेदम् (अन्तरिक्षम्) अथादः (द्युलोकम्) । मै ३,८,३ ॥ [°म- इन्द्र- ३७८ द्र. ] ।

**त्रिवृत्-**

१. अग्रं वै मुखं त्रिवृत् स्तोमानाम् । जै २, २१७ ।
२. अष्टौ सावित्राणि भवन्त्याहुतिर्नवमी त्रिवृतमेव यज्ञमुखे वियातयति । तैसं ५, १,१,३ ।
३. आशुस्त्रिवृत् । तैसं ४, ३, ८, १; मै २, ८, ४ ।
४. इमे वै (त्रयः) लोकास्त्रिवृतः । जै १, २१२; २३० ।
५. एष (त्रिवृत्) हि स्तोमानामाशिष्ठः । माश ८, ४, १, ९ ।
६. गायत्र्या वै त्रिवृदायतनवान् । क ४४, ३ ।
७. तदु वा आहुर्ब्रह्म वै त्रिवृद्, ब्रह्म गायत्री । जै ३, ३३८ ।
८. तम् (ऋषिम्) एताभ्यां त्रिवृद्भ्यां सवनाभ्यां (प्रातःसवनतृतीयसवनाभ्याम्) यथा दृतिमुभयत आदृत्य निक्षालयेदेवं हैवास्य सर्वं पाप्मानं निक्षालयांचकार । जै २, ८३ ।
९. तस्मात् त्रिवृत् स्तोमानां मुखम् । तां ६, १, ६ ।
१०. तस्य (अग्निष्टोमस्य) त्रिवृत् प्रातःसवनम् । मै ४, ४, १० ।
११. तस्य (अग्निष्टोमस्य) यत् त्रिवृद् बहिष्पवमानं भवति, मुखादेव तेन पाप्मानमपघ्नते । जै २, १३५ ।
१२. तान् (पशून्) अग्निस्त्रिवृता स्तोमेन नाप्नोत् । तै २, ७, १४, १ ।
१३. तेजो वै स्तोमानां त्रिवृत् । ऐ ८,४ ।
१४. त्रिवृतं हि स्तोमं पुरुषोऽन्वायत्तो धिष्ण्यानन्ये पशवः । जै १,२५० ।
१५. त्रिवृतमेव वज्रꣳसम्भृत्य भ्रातृव्याय प्रहरति । तैसं २,६,२,५ ।
१६. त्रिवृता तेजस्कामो ब्रह्मवर्चसकामोऽग्निष्टुता यजेत । जै २,१३६ ।
१७. त्रिवृता ब्रह्मवर्चसेन (देवाः)··· ज्योतिरदधुः । जै १, ६६ ।
१८. त्रिवृता वै स्तोमेन प्रजापतिः प्रजा असृजत । मै ३, ६, ७; काठ २३,४ ।
१९. त्रिवृति प्रातस्सवने पञ्चदशमच्छावाकस्याज्यम् । जै २, १७१ ।
२०. त्रिवृतैव ब्राह्मणः श्रेष्ठतां गच्छति, पञ्चदशेन राजन्यः । जै २, १३२ ।
२१. त्रिवृत्ते (+अग्ने [ काठ३९, २ ]) शिरः । तैसं ४, १, १०, ५; मै २, ७,८; काठ १६, ८ ;
२२. त्रिवृत् त्रिषामा । जै ३, १३ ।
२३. त्रिवृत् स्तोमैः (त्वावतु) । तैसं ७, ४,१२,१; काठ ४४, १ ।
२४. त्रिवृदेव भर्गः । गो १, ५, १५ ।
२५. त्रिवृदेव स्तोमो भवति तेजसे ब्रह्मवर्चसाय । तां ११,१,७ ।

२६. त्रिवृद् बर्हिर्भवति (°द् ब्रह्मवर्चसम् [तां.]) । तां १७, ६, ३; २०, १०, १; तै १,६,३, १ ।
२७. त्रिवृद्वज्रस्तस्य स्तोभमिवेत्यौपमिकम् । दै ३,१६ (तु. मै ३,६,७; काठ २३,४, प ३,३;४)।
२८. त्रिवृद्वा अग्निरङ्गारा अर्चिर्धूम इति । कौ २८,५ ।
२९. त्रिवृद् वाव स्तोमानामवमस्त्रिवृत् परमः । तद्ध होवाच प्र(?वद्) कुर्वाण्णस् त्रिवृतं स्तोमं त्रयस्त्रिंशं भवन्तमपश्यम् । जै १, २४८ ।
३०. त्रिवृद्वै स्तोमानां क्षेपिष्ठः । तां १७,१२,३; ष ३,८ ।
३१. त्रिवृद्वै स्तोमानामग्र्यं ज्यैष्ठ्यम् । जै २,२२७ ।
३२ नवभिर्नवभिरभिचरतस्त्रिवृद् वज्रः । क ३१, ६ ।
३३. नवारत्निं तेजस्कामस्य, त्रिवृता स्तोमेन संमितम् । तैसं ६,३,३,६ ।
३४. न्यूनं वै त्रिवृत् । जै २, ८१; ८३ ।
३५. प्राणा वै त्रिवृत् (त्रिवृतः [जै.]) । जै १, ३४६; तां २, १५, ३; ३,६,३ ( तु. जै १,२३०; २, १९७; तां ६,२,२; ९,३,४; ८,१५) ।
३६. प्राणा वै त्रिवृत् स्तोमानां प्रतिष्ठा । तां ९,३,४ ।
३७. ब्रह्मवर्चसं (यज्ञमुखं [तैसं., काठ.]) वै त्रिवृत् । तैसं ५,३,३,१; काठ २०,१३; तै २,७,१,१ ।
३८. ब्रह्म वै त्रिवृत् । क्षत्रं पञ्चदशः । त्रिवृतैवाग्नि श्रेष्ठतामगच्छत् पञ्चदशेनेन्द्रः । जै २,१३२ ( तु. जै २,३२;८४;१०४;१२९;३४०;४१६;३,१२; तां २, १६,४; १९,१७,३; २३,७,५; जैउ ३,१,४,११) ।
३९. ब्रह्म वै स्तोमानां त्रिवृत् । ऐ ८,४ ।
४०. मित्रो नवाक्षरेण त्रिवृत ँ स्तोममुदजयत् । तैसं १,७,११,१ ।
४१. मुखं वै त्रिवृत् स्तोमानाम् । जै २,१३५; तां १७, ३,२ (तु. जै २, ३०५ )
४२. यत्त्रिवृद्भवति यदेवास्य (यजमानस्य) मुखतोऽपूतं तत्तेनापहन्ति । तां १७, ५, ६ ।
४३. वायुर्वाऽआशुस्त्रिवृत्स एषु त्रिषु लोकेषु वर्तते । माश ८,४,१, ९ ।
४४. शिर एव त्रिवृत् । गो १,५,३ ।
४५. स (वसिष्ठः) एतं त्रिवृतं स्तोममपश्यत् । तमाहरत् । तेनायजत । ततो वै तस्याग्रया मुख्या प्रजाभवत् । जै २,२१७ ।
४६. स (प्रजापतिः) त्रिवृतमेवायतनमचायत् । प्राणाँस्ततः प्रजा असृजत । काठ ९,११ ।
४७. स यमेव हरति स त्रिवृत् । जै १, २५३ ।
४८. स यो मुखेन पापं कृत्वा मन्येत, त्रिवृताग्निष्टुता यजेत । जै २, १३५ ।
४९. स (प्रजापतिः) शीर्षत एव मुखतस् त्रिवृतं स्तोममसृजत, गायत्रीं छन्दो रथन्तरं सामाग्निं देवतां ब्राह्मणं मनुष्यमजं पशुम् । जै १, ६८ ।
५०. स्वर्गमेव लोकमभिनिर्मृष्टो यत्त्रिवृत् स्तोमः । जै २,१६७ ॥ [°वृत्- अग्नि- ११७;१७८; २९३;५३०; ५३१; एकविंश- २७; क्षत्र- ३५;७६; गायत्री- १२२; तेजस्- १३; २३; २५; ३२; ३३; त्रिणव- १४; १५ द्र.] ।

**त्रिशीर्षन्**- त्रिशीर्षा ह वै त्वाष्ट्र आस। तस्य त्रीणि मुखान्यासुस्सोमपानमेकं, सुरापानमेकमन्नादनमेकम्। जै २,१५३।

**त्रिशोक->त्रैशोक (सामन्-)**-

१. अप पाप्मान ५ हते त्रैशोकेन तुष्टुवानः। तां १२,१०,२२।

२. इमे वै लोकाः सहास ५ स्तेऽशोच ५ स्तेषामिन्द्र एतेन साम्ना शुचमपाहन्यस्त्रयाणां शोचतामपाह ५ स्तस्मात्त्रैशोकम्। तां ८,१,९।

३. तद्यदेषां त्रयाणां लोकानां तिस्रश्शुचोऽपाघ्न ५ स्तत् त्रैशोकस्य त्रैशोकत्वम्। जै ३, ७२।

४. त्रैशोकं ज्योगामयाविने ब्रह्मसाम कुर्य्यात्। तां ८,१,८।

५. यद्वु त्रिशोकोऽपश्यत् तस्मात् त्रैशोकमित्याख्यायते। जै ३, ७४।

**त्रिश्रेणि (अग्नि-)**- त्रिश्रेणिरिति च्छन्दांस्येव श्रेणीरकुरुत। ऐ ३,३९।

**त्रिषत्या**- त्रिषत्या हि देवाः। तै ३,२, ३,८; ष १,१।

**त्रिषन्धि**- त्रिषन्धिना (देवाः) समदधुः। जै २, २५६।

**त्रिष्टावरुत्रि**-

१. अथेन्द्रो ऽचायन्मनुं श्रद्धादेवं त्रिष्टावरूत्री (त्वष्टावरूत्री [क.]) असुरब्रह्मौ जायया व्यर्धयत इति। काठ ३०, १; क ४६,४।

२. त्रिष्टावरूत्री आस्तामसुरब्रह्मौ, ता असुरा अब्रुवन्निमानि मनुकपालानि याचेथामिति। काठ ३०,१।

**त्रिष्टुभ् (छन्दस्-)**-

१. अथ त्रिष्टुप्। नाभिरेव सा। जै १,२५४।

२. अथैतदधीतरसं शुक्रियं छन्दो यत्त्रिष्टुप्। ऐ ६, १२।

३. अयं दक्षिणा विश्वकर्मा तस्य मनो वैश्वकर्मणं, ग्रीष्मो मानसस्त्रिष्टुब् ग्रैष्मी त्रिष्टुभस्स्वार ५ स्वारादन्तर्यामो ऽन्तर्यामात्पञ्चदशः पञ्चदशाद् बृहद्भरद्वाज (°जा [मै.]) ऋषिः। मै २,७,१९; काठ १६, १९।

४. असावुत्तमः (द्युलोकः) त्रिष्टुप्। तां ७, ३, ९।

५. आत्मा त्रिष्टुभः। माश ८, ६,२, ३।

६. इन्द्रस्त्रिष्टुप्। माश ६, ६, २, ७।

७. इन्द्रियं वीर्यं त्रिष्टुप्। जै १, १३२; ३, २०६ (तु. तै १,७,६,८)।

८. एकादशाक्षरा वै त्रिष्टुप्। ऐ ३, १२; ८, २; कौ ३, २; १०, २; गो २, १,१८; ३, १०; तां ६, ३, १३; तै ३, ८, १२, १; माश १, ३,५,५; (तु. तैसं ३, ४,९,७; जै १, १३२; १४१)।

९. एतद्वै बृहतः स्वमायतनं यत्त्रिष्टुप्। तां ४, ४, १०।

१०. एते वाव छन्दसां वीर्य्यवत्तमे यद्गायत्री च त्रिष्टुप् च। तां २०,१६,८।

११. क्षत्रस्यैवैतच्छन्दो यत्त्रिष्टुप्। कौ १०,५।

१२. चतुश्चत्वारिंशदक्षरा (+वै [जै., माश.]) त्रिष्टुप् (त्रिष्टुक् [तैसं.])। तैसं २, ५, १०, ४; कौ १६,७; जै १, ३५; ३,२०६;२०८; माश ८,५,१,११; जैउ ४,२,१,५।

१३. चतुर्धा ह्येतस्याः (त्रिष्टुभः) एकादशैकादशाक्षराणि । मै १,११,१० ।
१४. चतुष्पदा त्रिष्टुप् । तैसं ३,२,९,१ ।
१५. त्रिष्टुप्छन्दा वै राजन्यः । तै १,१,९,६ (तु. तां ६,१,८) ।
१६. त्रिष्टुप् शुक्रः (ग्रहः) । मै ४,८,८ ।
१७. त्रिष्टुप् स्तोभ इत्युत्तरपदा का तु त्रिता स्यात्तीर्णतमं छन्दो भवति । दै ३, १४;१५ ।
१८. त्रिष्टुबभिमा (यज्ञस्य) । काठ ३२,४ ।
१९. त्रिष्टुबसौ (द्यौः) । माश १,७,२,१५ ।
२०. त्रिष्टुबिन्द्रस्य वज्रः । ऐ २,२ ।
२१. त्रिष्टुबेव महः । गो १,५,१५ ।
२२. त्रिष्टुब्दक्षिणा (दिक्) । माश ८,३,१,१२ ।
२३. त्रिष्टुब्भिर्दक्षिणतः (सादयति) । मै ३,३,२ ।
२४. त्रिष्टुब्भीयम् (पृथिवी) । माश २,२,१,२० ।
२५. त्रिष्टुब् (त्रिष्टुग् [तैसं.] ) राका । तैसं ३,४,९,६; मै ४,३,५ ।
२६. त्रिष्टुब् रुद्राणाम् (+पत्नी [गो.]) । मै १,९,२; काठ ९,१०; गो २,२,९ (तु. तैआ ३,९,१) ।
२७. त्रिष्टुभं वै छन्दसां जयति रुद्रान् देवान् देवानाम् । जै १,३५ ।
२८. त्रिष्टुभं छन्दः (प्रजापतिर्बाहुभ्यामेवोरसोऽसृजत) । जै १,६८ ।
२९. त्रिष्टुभं त्वचा प्रविशामि । काठ ३८,१४ ।
३०. त्रिष्टुभं माध्यंदिनं सवनं संपद्यते । जै २,१०२ ।
३१. त्रिष्टुभा रुद्राः (अग्निमन्वारभन्त) । काठ ७,६ ।
३२. त्रिष्टुभि प्रस्तुतायां चक्षुषादित्यं संदध्यात् । जै १,२७० ।
३३. त्रिष्टुभैव तच्छन्दसा प्रजापतिश्चेन्द्रश्च रुद्रेषु देवेषु माध्यंदिने सवनेऽध्यपचितिमगच्छताम् । जै २, १०१ ।
३४ त्रिष्टुभो लोके दक्षिणा नीयन्ते ( दीयन्ते [मै.]) । मै ३,७,३; क ३७,१; जै १,२८७ ।
३५. त्रिष्टुम्मांसम् (प्राणस्य) । ऐआ २,१,६ ।
३६. त्र्यविर्वयस्त्रिष्टुप् छन्दः । तैसं ४,३,५,१; मै २,८,२ ।
३७. दक्षिणामारोह, त्रिष्टुप्त्वावतु । बृहत्साम पञ्चदशस्तोमो ग्रीष्म ऋतुः क्षत्रं द्रविणम् । माश ५,४,१,४ ।
३८. दित्यवाड् वयस्त्रिष्टुप् छन्दः । काठ १७,२ ।
३९. नाराशँस्या त्रिष्टुप् (अपुनीत) । जैउ १,१८,२,१ ।
४०. पञ्चदशेन स्तोमेन त्रिष्टुभमध्यैत् । ततो रुद्रानसृजत । जै ३, ३६३ ।
४१. पञ्चावयस्त्रिष्टुभे । मै ३,१३,१७ ।
४२. पुंसो वा एतद् रूपं यत् त्रिष्टुप्, स्त्रियै रथन्तरम् । जै ३, २१९ ।
४३. बलं वै वीर्यं त्रिष्टुप् । कौ ७,२;८,२;११,२;१६,१; गो २,५,५ (तु. कौ ११,२, जै २,५८) ।
४४ ब्रह्म गायत्री क्षत्रं त्रिष्टुप् । माश १,३,५,५ ।
४५. ब्राह्मणाच्छंसिनं वृणीते, त्रिष्टुभं तच्छन्दसां वृणीते । काठ २६,९; क ४१,७ (तु. मै ३,९,८) ।

४६. यऽएवायं प्रजननः प्राण एष त्रिष्टुप् । माश १०,३,१,१ ।
४७. यदब्रवीत् त्रिरहं ष्टुब् अस्मीति तस्मात् त्रिष्टुप् । जै १, ३२४ ।
४८. यदैन्द्रं तत् त्रिष्टुभो रूपम् । जै ३, २०६ ।
४९. यद् वै न्नद्वत् तत् त्रिष्टुभो रूपम् । जै ३,२८ ।
५०. यस्यैकादश तास्त्रिष्टुभम् (अभिसंपद्यन्ते) । कौ ९,२ ।
५१. या राका सा त्रिष्टुप् । ऐ ३,४७;४८ (तु. काठ. १२,८ ) ।
५२. रुद्रास्त्रिष्टुभं समभरन् । जैउ १,४,४,५ ।
५३. वज्रस् (वज्रो वै [माश ७,४,२,२४]) त्रिष्टुप् । मै ३,२, १०; काठ २१,२; कौ ७, २; माश ३,६,४,२२; ७,४,२,४ (तु. ऐ २,१६) ।
५४. वीर्यं त्रिष्टुप् । माश ७,४,२,२४ ( तु. काठ १९,३; ऐ १,२१, ४,३;११; ६,१५; ष ३, ७; ऐआ १,१,३;५,१ ) ।
५५. वृषा वै त्रिष्टुब् योषानुष्टुप् । ऐआ १,३,५ (तु. कौ २०,३) ।
५६. व्यानस्त्रिष्टुप् । मै ३,४,४; काठ २१,१२ ।
५७. हरिवद् वै त्रिष्टुभो रूपम् । जै ३,२३ ॥ [°ष्टुभ्- अन्तरिक्ष- ४४;७३;१३५; अन्तर्यामपात्र- ४; अपान- २; आत्मन्- ११; ६०; इन्द्र- ४४; ९२; २१०; २८९; २९०; २९५; ३४४; इन्द्रिय- ३;९; उरस्- १; ओजस्- १३; ककुद्- २; क्षत्र- २१; ३२; गायत्री- ३१; चक्षुस्- २२; ३९;४०; जगती- ४४; तपस्- ३४;३५ द्र.] ।

त्रिष्टुप्-चित्- यो नाभिदघ्नस्स त्रिष्टुप्चित् । काठ २१,४ ।

त्रिष्टुप्-छन्दस्-

१. राजन्यस् त्रिष्टुप्छन्दाः । जै १, ६८ ।
२. सुपर्णोऽसि त्रिष्टुप्छन्दाः । तैसं ३, २, १, १ ।

त्रैष्टुभ-

१. अभिशस्तिहा ( क्रमः ), त्रैष्टुभं छन्द आरोहान्तरिक्षमनु विक्रमस्व । तैसं ४, २, १, १ ।
२. अरुणा वो वृञ्जे त्रैष्टुभेन छन्दसा । मै ४, २, ११ ।
३. इदमहं त्रैष्टुभेम च्छन्दसा पञ्चदशेन स्तोमेन बृहता साम्नेन्द्रेण देवतयौजस्ते क्षत्रमाददेऽसौ । काठ ३६, १५ ।
४. त्रैष्टुभं वै बृहत् । तां ५, १, १४ ।
५. त्रैष्टुभः पञ्चदश स्तोमः । तां ५, १,१४ ।
६. त्रैष्टुभं क्षत्रस्य रूपम् । जै ३, २१ ।
७. त्रैष्टुभं द्वितीयमहः । तैसं ७, २, ८, १ ।
८. त्रैष्टुभं (+वै [ऐ.]) माध्यन्दिनं सवनम् । तैसं ३, २, ९, १; ऐ ६, ११; जै १, १४१; ष १, ४ ( तु. कौ २९,२; गो २,४,४; जै ३,५७; ऐआ १,२,२) ।
९. त्रैष्टुभः( त्रैष्टुभो वै [तैसं., मै.]) शुक्रः । तैसं ७,२,८,१; मै ४,८,१०; काठ ३०,२; क ४६,५।
१०. त्रैष्टुभाः पशवः । कौ ८, १; १०, २ ।

११. त्रैष्टुभेन च्छन्दसाऽहरुपदधे। काठ ३८, १२।
१२. त्रैष्टुभेऽन्तरिक्षलोके त्रैष्टुभो वायुरध्यूढः। कौ १४, ३।
१३. त्रैष्टुभोऽन्तरिक्षलोकः। कौ ८, ९।
१४. त्रैष्टुभो (+हि [जै.]) ब्राह्मणाच्छ ंसी। जै १, ३१९; तां ५, १, १४।
१५. त्रैष्टुभो राजन्यः (वज्रः [गो.])। गो २,१,१८; जै २,१०२ ( तु. ऐ १,२८;८,२)।
१६. त्रैष्टुभो वा एष य एष ( सूर्यः ) तपति। कौ २५, ४।
१७. त्रैष्टुभो वै पुरुषस्त्रिष्टुब्योनिः। जै २, ४७।
१८. त्रैष्टुभो हि वायुः (राजन्यः [तैसं., मै.])। तैसं ५,१,४,५; मै ३,१,५; माश ८, ७,३,१२।
१९. यजुषां वायुर्दैवतं तदेव ज्योतिस्त्रैष्टुभं छन्दोऽन्तरिक्षं स्थानम्। गो १,१, २९।
२०. रुद्रास्त्वा परिगृह्णन्तु (संमृजन्तु [जै.]) त्रैष्टुभेन छन्दसा। मै १, १, १०; क ३९,२; जै १,८१।
२१. रुद्रास्त्वा पुनन्तु (प्रोहन्तु [जै १,७८]) त्रैष्टुभेन छन्दसा। जै १, ७३;७८।
२२. वशी त्वं देव सोम त्रैष्टुभेन च्छन्दसेन्द्रस्य पाथ उपेहि। काठ ३०, ६ ॥ [°भ- अन्तरिक्ष- २२;११०; अयस्- १; अहन्- २९; आग्नीध्र- १३;१४; आदित्य- २५६;२५७; इन्द्र- २९१; क्षत्र- ३३; चक्षुस्- ११;५१; चतुश्चत्वारिंश- ४ द्र.]।

त्रिहोतृ- पृथिवी त्रिहोता स प्रतिष्ठा। तैआ ३, ७,१।

त्रेता- उत्तिष्ठंस्त्रेता भवति। ऐ २,१५। [°ता इन्द्र- २९५ द्र.]।

त्रैककुभ- त्रिककुभ्- द्र.।

त्रैत- त्रित- द्र. ॥ त्रैधातवीय-, °तव्या- त्रिधातु- द्र.।

त्रैशोक- त्रिशोक- द्र.

त्र्यनीक- त्र्यनीक (अग्निः)- इति सवनान्येवानीकानि। ऐ ३,३९।

त्र्यम्बक-

१. अप्रतिष्ठितास्त्र्यम्बकाः। काठ ३६, १४।
२. अम्बिका ह वै नामास्य (रुद्रस्य) स्वसा, तयास्यैष सह भागस्तद्यदस्यैष स्त्रिया सह भागस्तस्मात् त्र्यम्बकाः (पुरोडाशाः) नाम। माश २,६,२,९।
३. तृतीयसवने त्र्यम्बकान् (अवाकल्पयन्)। काठ २३,७; क ३६, ४।
४. त्र्यम्बकं यजामह इति परियन्ति। या पतिकामा स्यात् सापि परीयात्। पतिविदनमेवास्यै कुर्वन्ति। ······ भगमेवास्यै समावपन्ति। अम्बी वै स्त्री भगानाम्नी तस्मात् त्र्यम्बकाः। काठ ३६,१४ (तु. मै १,१०,२०)।
५. त्र्यम्बका ऽस्तृतीयसवनमकुर्वत। तैसं ३,२,२,३ ( तु. मै ३,६,१०)।
६. रुद्रास्त्र्यम्बकाः। काठ ३६,१४।

त्र्यह- त्र्यहाभ्यामस्मिंल्लोके (ऋध्नुवन्ति)। तैसं ७, ३,५,२।

त्र्यह-विध- अथैतत् त्र्यहविधं भवति। ······ त्रीणि वाव छन्दांसि, त्रीणि सवनानि, त्रयः

प्राणापानव्यानास्त्रय इमे लोकाः । यत् किं च त्रिस्त्रिस्तत्स्यैषा सर्वस्यर्द्धिस्तस्योपाप्तिः । जै २,३६० ।

ञ्यालिखिता (इष्टका-)-

१. इमे वै (त्रयः) लोकास्त्र्यालिखिताः । तैसं ५, २, ८, ४; काठ २०, ६; क ३१,८ ।

२. देवलक्ष्मं वै त्र्यालिखिता तामुत्तरलक्ष्माणं देवा उपादधताधरलक्ष्माणमसुराः । तैसं ५, २, ८, ३ ।

त्वच्-

१. त्वक् प्रस्तावः । जैउ १, १२, २,६ ।

२. त्वक्सूददोहाः । माश ८, १,४, ५ ॥ [त्वच्-अधिषवण- ३ द्र. ] ।

त्वष्टावरूत्रि ( =त्रिष्टावरूत्रि-)- असुरब्रह्म- द्र.

त्वष्टृ-

१. एष वै दैव्यस्त्वष्टा यो यजते । तैसं १,५,९,२ ।

२. त्वष्टः समिधां पते··· आ रुचा रोचे ऽह ९ स्वयम् । तै ३, ११, ४, १ ।

३. त्वष्टा पशुकाम (°मा[मै.]) आधत्त, त इमे त्वाष्ट्राः पशवः । मै १,७,२; काठ ८,१५ ।

४. त्वष्टा पशूनां मिथुनाना ९ रूपकृद्रूपपतिः । तै २, ५, ७, ४ ।

५. त्वष्टा यजमानः । काठ ७, १० ।

६. त्वष्टारं पत्नीषु संयजन्ति । जै २, १५५ ।

७. त्वष्टा रूपाणां विकर्ता तस्याहं देवयज्यया विश्वरूपं प्रियं पुषेयम् । काठ ५, ४ ।

८. त्वष्टा रूपाणाम् (अधिपतिः) । तैसं ३, ४,५, १ ।

९. त्वष्टा (श्रियः) रूपाणि (आदत्त) । माश ११, ४,३, ३ ।

१०. त्वष्टा रूपाणि विकरोति । तैसं २,४,६,१ ( तु. मै १, १०,९; ३, ७,७; ९, ६; ४, ७,४; तै २,७,२,१ ) ।

११. त्वष्टा रूपेण नवमे (अहन् प्रायुङ्क्त) । तै १, ८, १, २ ।

१२. त्वष्टा रेतो भुवनस्य पत्नीर्विकृण्वानास्तनयं भूरिपश्वः । मै ४,१४,९ ।

१३. त्वष्टा वै पशूनामीष्टे । माश ३,७,३,११ ।

१४. त्वष्टा वै पशूनां मिथुनाना ९ रूपकृत् ( प्रजनयिता [तैसं.] ) । तैसं २, १, ८, ३;४; तै ३,८,११,२ ।

१५. त्वष्टा वै भूत्वा प्रजापतिः प्रजा असृजत । काठ ७, १० ।

१६. त्वष्टा वै ( + पशूनां [ता.] ) रूपाणां विकर्ता । काठ ३२, ४; क ४४,८; तां ९, १०,३ ।

१७. त्वष्टा वै रूपाणामीशे ( °मीष्टे [माश.]) । तै १, ४, ७,१; माश ५, ४, ५, ८ ।

१८. त्वष्टा वै सिक्त ९ रेतो विकरोति । माश १,९,२,१०; ३,७,२,८; ४,४,२,१६ (तु. कौ ३,९) ।

१९. त्वष्टा वो रूपैरुपरिष्टादुपदधताम् । तैआ १,२०,१ ।

२०. त्वष्टा समिधा (सहागच्छतु) । मै १,९,२; काठ ९, १० ।

२१. त्वष्टा (°ष्टुर् [माश.] )हि पशवः । काश ४,८,३,७; माश ३,८,३,११ ।

२२. त्वष्टुरर्वा जायत आशुरश्वः । त्वष्टेदं विश्वं भुवनं जजान । काठ ४६, २ (तु. तैसं ५,१,११,४ ।
२३. त्वष्टुरहं देवयज्यया पशूना ९ रूपं पुषेयम् । तसं १,६,४,४ ।
२४. त्वष्टुरुन्नीयमानस् (पयः) । मै १,८,१० ।
२५. त्वष्टुर्दशमी (नवमी [तैसं.]) । तैसं ५,७,२२,१; मै ३,१५,४; काठ ५३,१२ ।
२६. त्वष्टुर्हं वै पुत्रः त्रिशीर्षा षडक्ष आस तस्य त्रीण्येव मुखान्यासुस्तद्यदेव ९ रूप आस तस्माद्विश्वरूपो नाम । माश १,६,३,१; ५,५,४,२ ।
२७. त्वष्ट्र रेवती । मै २,३,७; काठ १२,५ ।
२८. त्वष्ट्रे तुरीपाय स्वाहा, त्वष्ट्रे पुरुरूपाय स्वाहा । काठ ४३,५ ।
२९. भद्रस्त्वष्टा विदधद्रूपाण्यद्भुतः । काठसंक ६० : ४ ।
३०. रेतोधा यस्य भुवनस्य देवः ससाद योनौ जनिता जनिष्ठः । रूपाणि कृण्वन् विदधद् वपू ९ षि त्वष्टा पत्नीभिश्चरति प्रजानन् । मै ४,१४,९ ।
३१. वाग्वै त्वष्टा वाग्घीदं सर्वं ताष्टीव । ऐ २,४ ।
३२. संवत्सरो वै त्वष्टा । मै ४,४,७ ॥ [°ष्टृ- अग्निध्- ९; अजा- २९; अधिपति- ४; इध्म- ४; इन्द्र- १७८; उपरिष्टात्; उष्ट्र-; ऋषभ- ६; कौलीक-; चित्रा (नक्षत्र)- २ द्र.] ।

त्वाष्ट्र-

१. कौम्भीनसः पुष्करसादो लोहिताहिस्ते त्वाष्ट्राः । काठ ४७,४ ।
२. छगलः कल्माषः किकिदिवीविदीगयस ( °दीविर्विदी° [तैसं.] ) तौ त्वाष्ट्रौ ( ते त्वाष्ट्राः [तैसं.]) । तैसं ५,६,२२,१; काठ ५०,२ ।
३. त्वाष्ट्रं वडबमालभेत पशुकामः (प्रजाकामः [गो.]) । तैसं २,१,८,३; गो २,२,१ ।
४. त्वाष्ट्र ९ शुण्ठमालभेत । काठ १३,५ ।
५. त्वाष्ट्रं दशकपालं पुरोडाशं (श्रीरपश्यत्) । माश ११,४,३,५ ।
६. त्वाष्ट्रं दशकपालं पुरोडाशं निर्वपति । माश ५,४,५,८ ।
७. त्वाष्ट्रमविम् (प्रजापतिरालिप्सत) । माश ६, २,१,५ ।
८. त्वाष्ट्रमष्टाकपालम् (+ शुण्ठो दक्षिणा [तैसं १, ८,१७,१]) । तैसं १, ८, १७, १; २०, १ (तु. मै २,६,१३; काठ १५,९;३७,३ ) ।
९. त्वाष्ट्रा वै पशवस्त्वष्टा पशूनां प्रजनयिता । मैसं २, ५,५ ( तु. तैसं. १, ५,१,३; ६,३,११, २; मै ४,८,१ ) ।
१०. त्वाष्ट्राणि वै रूपाणि । माश २,२,३,४ ।
११. त्वाष्ट्रौ लोमशसक्थौ । काठ ४८,२ ।
१२. त्वाष्ट्रौ लोमसक्थौ सक्थ्योः । मै ३,१३,२ ।
१३. प्लीहाकर्णः शुण्ठाकर्णोऽधिरूढाकर्णस्ते त्वाष्ट्राः । मै ३,१३,५ ।
१४. रेतःसिक्तिर्वै त्वाष्ट्रः । कौ १९, ६ ॥ [°ष्ट्र- कलविङ्क- २; त्रिशीर्षन्-; त्वष्टृ- ३ द्र.] ।

त्वाष्ट्री- अवि- १२ द्र. ।

त्वाष्ट्री-सामन्-

१. अथ त्वाष्ट्रीसाम वीरजननं साम। जै ३, ५४।

२. इन्द्रं वा अपयामयिणं भूतानि नास्वापय ऽ स्तमेतेन त्वाष्ट्र्यो ऽस्वापय ऽ स्तद्वाव तास्त-र्ह्यकामयन्त। कामसनि साम त्वाष्ट्रीसाम काममेवैतेनावरुन्धे। तां १२,५,१९-२०।

३. इन्द्रो वृत्राद् बिभ्यद्गां प्राविशत्तं त्वाष्ट्र्यो ऽन्ववञ्जनयामेति तमेतैः सामभिरजनयञ्जायामहा इति वै सत्रमासते जायन्त एव। तां १२, ५, २१।

४. तैरिन्द्रमजनयन्। तानि वा एतानि ( त्वाष्ट्रीसामानि ) वीरजननानि सामानि। आस्य वीरो जायते य एवं वेद। अथो पशवो वै त्वाष्ट्र्यः। तद्यदेतानि सामानि भवन्ति पशूनामेवाव-रुद्ध्यै। यदु त्वाष्ट्र्यो ऽपश्यंस्तस्मात्त्वाष्ट्रीसामेत्याख्यायते। जै ३, १९।

त्विषि-

१. परमा वै सन्नद्धे त्विषिः। जै २, ४०५।

२. मनो वै श्रीस्त्विषिः। मै २, २, १२; काठ १०, ८।

३. सर्वा ह्येतास्त्विषीरवारुद्ध यागनौ या सर्पे या सूर्ये। क ३१, ७।

४. सिंहे व्याघ्र उत या पृदाकौ। त्विषिरग्नौ ब्राह्मणे सूर्ये या…या राजन्ये दुन्दभावाय-तायाम्। अश्वस्य क्रन्द्ये पुरुषस्य मायौ। या हस्तिनि द्वीपिनि या हिरण्ये। त्विषिरश्वेषु पुरुषेषु गोषु।…रथे अक्षेषु वृषभस्य वाजे। वाते पर्जन्ये वरुणस्य शुष्मे। तै २,७,७,१-२।

५. सोमे वा एका त्विषिर् व्याघ्र एका, सर्प एका। मै ३, २, ६; ४,४, ४।

त्वेष-

१. एनश्च वैरहत्यञ्च त्वेषं वचः। तै १, ५, ९, ६।

२. त्वेषः स भानुरर्णवो नृचक्षा इति महान्त्स भानुरर्णवो नृचक्षा इत्येतत्। माश ७, १, १, २३।

# द

दंष्ट्रा- तेगान्द ऽ ष्ट्राभ्याम् ( प्रीणामि )। काठ ५३, १।

दंसस्- सजोषा अश्विना द ऽ सोभिः… स्वाहा। मै २, १२,३; काठ २२,५।

दक्ष-

१. अथ यदस्मै तत्समृध्यते स दक्षः। माश ४, १, ४, १।

२. क्रतुं दक्षं वरुण संशिशाधि ( + इति वीर्यं प्रज्ञानं वरुण संशिशाधीति [ऐ.] )। तैसं १,२, २,२; ऐ १, १३।

३. दक्षश्च मे बलं च मे ( यज्ञेन कल्पताम् )। तैसं ४, ७, १, २।

४. दक्षो ह वै पार्वतिरेतेन यज्ञेनेष्ट्वा सर्वान् कामानाप। कौ ४, ४।

५. प्राणा वै दक्षाः ( दक्षः [ जै ३,६२] )। जै १,१५१;३,६२;१५;१९२।

६. वरुणो दक्षः। माश ४, १, ४, १।

७. स ( प्रजापतिः ) वै दक्षो नाम। माश २, ४, ४, २।

८. स्वैर्दक्षैर्दक्षपितेह सीदेति । स्वेन वीर्येणेह सीदेत्येतत् । माश ८, २,१,६ ॥ [ °क्ष- अपान- ३८ द्र. ] ।

**दक्ष-क्रतु-** दक्षक्रतू ते मैत्रावरुणः ( ग्रहः ) पातु । मै ४, ८,७ ( तु. मै ४,५,९) ।

**दक्ष-णिधन** (सामन्-)- तासु (प्रजासु प्रजापतिः) एतेन ( दक्षणिधनेन ) साम्ना दक्षायेत्योजो वीर्य्यमदधाद्यदेतत्साम भवत्योज एव वीर्य्यमात्मन्धत्ते । तां १४, ५, १३ ।

**दाक्षायण->दाक्षायण-यज्ञ-**

१. क्षुरपविर्ह्येष ( दाक्षायण- ) यज्ञस्ताजक् पुण्यो भवति प्र वा मीयते । तस्यैतद् व्रतं नानृतं वदेन्न मा९समश्नीयान्न स्त्रियमुपेयान्नास्य पल्पूलनेन वासः पल्पूलयेयुरेतद्धि देवाः सर्वं न कुर्वन्ति । तैसं २, ५, ५, ६-७ ।

२. दाक्षायणयज्ञेन सुवर्गकामो यजेत । तैसं २, ५, ५,४ ।

३. स ( प्रजापतिः ) वै दक्षो नाम । तद्यदेनेन सो ऽग्रे ऽयजत तस्माद्दाक्षायणयज्ञो नामोतैनमेके वसिष्ठयज्ञ इत्याचक्षते । माश २, ४, ४, २ ।

**दक्षस्->दक्षोणिधन** (साम-)- आयुष्काम- १ द्र. ।

**दक्षिण,णा** (दिश्- )-

१. अग्निं यजतेत्यब्रवीत्तेन दक्षिणाम् (दिशं प्रज्ञास्यथ) । काठ २३,८; क ३६,५ ।

२. अग्निना दक्षिणाम् (दिशं देवा यूयं प्रजानाथ) । ऐ १,७ ।

३. अतीर्थं वै प्रातस्सवनं दक्षिणानाम् , अतीर्थं तृतीयसवनम् । माध्यंदिन एव सवने दद्यात् । तदेव तीर्थं, तदायतनम् । नैवेतरयोः सवनयोर्मनसा च न ददद्द्रियेतेति । जै २,१३० ।

४. अथ दक्षिणं परिदधाति । इन्द्रस्य बाहुरसि दक्षिणो विश्वस्यारिष्ट्यै । माश १,३,४,३ ।

५. अथैनं (इन्द्रम् ) दक्षिणस्यां दिशि रुद्रा देवाः···अभ्यषिञ्चन्···भौज्याय । ऐ ८,१४ ।

६. अयं दक्षिणा विश्वकर्मा, तस्य मनो वैश्वकर्मणं, ग्रीष्मो मानसस्त्रिष्टुग्ग्रैष्मी, त्रिष्टुभ ऐडमैडादन्तर्यामोऽन्तर्यामात् पञ्चदशः, पञ्चदशाद् बृहद् , बृहतो भरद्वाज ऋषिः । तैसं ४, ३,२,१-२ ।

७. अयं दक्षिणा विश्वकर्मा, तस्य रथस्वनश्च रथेचित्रश्च सेनानि- (सेनानी- [मै.]) ग्रामण्यौ, मेनका च सहजन्या चाप्सरसौ । दङ्क्ष्णवः पशवो हेतिः, पौरुषेयो वधः प्रहेतिः । तैसं ४, ४, ३, १; मै २,८,१० ।

८. अयं (दक्षिणः) बाह्वोर्वीर्यवत्तरः । तस्माद् उ दक्षिणं पक्षं वयांस्यनुपरिप्लवन्ते । जै २,४०७ ।

९. उग्रा ( दक्षिणा ) दिशामभिभूतिर्वयोधाः शुचिः ( आषाढमासः ) शुक्रे ( ज्येष्ठमासे ) ···इन्द्राधिपतिः···बृहत्साम क्षत्रभृद् वृद्धवृष्णियं त्रिष्टुभौजः शुभितमुग्रवीरम् । ···स्तोमेन पञ्चदशेन मध्यमिदं वातेन सगरेण रक्ष । तैसं ४, ४, १२, १-२ ( तु. मै ३,१६, ४; काठ २२,१४) ।

१०. एषा वै (दक्षिणा) दिक् पितॄणाम् । माश १,२,५,१७ ।

११. ओजश्स्या नामासि, दक्षिणा दिक्, तस्यास्ता इन्द्रोऽधिपतिस्तिरश्चीनराजी रक्षिता। मै २,१३,२१।

१२. किंदेवतोऽस्या दक्षिणाया दिश्यसीति। यमदेवत इति। माश १४,६,९,२२।

१३. घोरा वा एषा दिग्दक्षिणा शान्ता इतराः। गो १,२,१९।

१४. तं (इन्द्रम्) हेमास्तिस्रो दिशो (पत्नीरूपाः प्रतीच्याद्याः) ऽतिचेरुः। इयं हैवास्यानुव्रततमा (पत्नी) आस। येयं दक्षिणा दिक्। तस्मादेष (आदित्यः) एतामेवाभ्युपावर्तते। यद्यप्युत्तरत उदेत्यथैतामेवाभ्युपावर्तते। जै २,६२।

१५. तं (संज्ञप्तं पशुम्) दक्षिणा दिग्व्यानेत्यनुप्राणद्व्यानमेवास्मिंस्तद्दधात्। माश ११,८,३,६।

१६. तस्मादेतस्यां दक्षिणस्यां दिशि ये के च सत्वतां राजानो भौज्यायैव ते ऽभिषिच्यन्ते भोजेत्येनानभिषिक्तानाचक्षते। ऐ ८,१४।

१७. तस्मादेतस्यां (दक्षिणस्याम्) दिश्येतौ पशू (गौश्चाजश्च) भूयिष्ठौ। माश ७,५,२,१६।

१८. तस्मादेष (वायुः) दक्षिणैव भूयिष्ठं वाति। माश ८,१,१,७;६,१,१७।

१९. दक्षिण९ं हस्तमनु देवानसृजत, ते वीर्यावन्तोऽभवन्। काठ ९,११।

२०. दक्षिण ऊरौ मन्थन्ति। तस्मादेष (दक्षिणः) पुरुषस्यार्धो वीर्यावत्तरः। जै ३,७०।

२१. दक्षिणमर्ध९ं वया९ंस्यनुपर्यावर्तन्ते। मै ३,२,१०; ७,६।

२२. दक्षिणं पक्षं वया९ंस्यनुपरिप्लवन्ते। क ३१,१४।

२३. दक्षिणया दिशा मासाः पितरो मार्जयन्ताम्। मै १,४,२; काठ ५,५।

२४. दक्षिणाग्रैभिर् (दर्भैः) वा अस्य (यजमानस्य) पितरः समुपसरन्ति। काठसंक ५८ : ४।

२५. दक्षिणा दिक् त्रिष्टुप् छन्दो बृहत्सामेन्द्रो देवता ग्रीष्म ऋतुः पञ्चदशस्तोमस्सप्तदशवर्तनिर्दित्यवाड्वयस्त्रेतायानां दक्षिणाद्वातो वातः प्रत्न ऋषिः। काठ ३९,७।

२६. दक्षिणा दिशां ग्रीष्म ऋतूनामिन्द्रो देवता, क्षत्रं द्रविणं, पञ्चदशः स्तोमः, स उ सप्तदशवर्तनिर्दित्यवाड्वयस्त्रेताऽयानां, दक्षिणाद्वातो वातः, सनातन ऋषिः। तैसं ४,३,३,१।

२७. दक्षिणा (दिक्) ब्रह्मणः। माश १३,५,४,२४।

२८. दक्षिणामाहुर्यजुषामपाराम्। तै ३,१२,९ १।

२९. दक्षिणामेव दिश९ं सोमेन प्राजानन्। माश ३,२,३,१७।

३०. दक्षिणायां दिशि मासाः पितरो मार्जयन्ताम्। तैसं १,६,५,१;२।

३१. दक्षिणा वर्तयति। एषा वा आदित्यस्य प्रजनिष्णुस्तनूः। तामेवानुप्रजायते। क ४१,५।

३२. दक्षिणा समुद्रः। मै ४,७,८।

३३. दक्षिणैव दिक् सर्वम्। गो १,५,१५।

३४. दक्षिणोऽर्ध (दक्षिणार्ध [क.]) आत्मनो वीर्यावत्तरः (वीर्यवत्तरः [मै.]) तैसं ५,२,१,३; मै ३,२,१०; ७,६; काठ ९,११; १९,११; २४,४; क ३७,५।

३५. दक्षिणोऽर्धो ब्रह्मवर्चसितरः। तैसं ५,३,२,५।

३६. दक्षिणोऽर्धो मनस्वितरस्तस्माद् दक्षिणतो मन उपचरन्ति। काठ २०,९।

३७. दक्षिणो वा अर्द्ध आत्मनो (शरीरस्य) वीर्यवत्तरः। तां ५,१,१३।

३८. पितॄणां वा एषा दिग्यद्दक्षिणा। प ३,१ (तु. मै १,१०,१७; ४,७,२; काठ ३६,११; तैआ

५,८,४।

३९. प्राचीनमुदीचीनं मेध्यमुदक्रामद् दक्षिणा प्रतीचीनममेध्यम्। मै ४,१,१०।

४०. भुवनपतये स्वाहेति दक्षिणा। काठ २५,७।

४१. आतृदेवत्यो दक्षिणः (अग्निः)। तै १, ६, ५, ४।

४२. मामभ्यपक्रामेति दक्षिणा दिक् (आदित्याय) प्रायच्छदन्नं च रथं च। जै २,२५।

४३. यजमानलोके वा एतानि यानि दक्षिणानि (छदीꣳषि) | क ४०, ३।

४४. यत् ते रुद्र दक्षिणा धनुस्तद्वातो अनु वातु ते, तस्मै ते रुद्र परिवत्सरेण नमस्करोमि। तैसं ५,५,७,३।

४५. यद्दक्षिणा (पर्यावर्तेत) पितृदेवत्यस्स्यात्। काठ २१,१०।

४६. यद्दक्षिणा (पशून् उत्सृजेत्), पितृभ्यो निधुवेत्। तैसं ५,२,५,३।

४७. यद्दक्षिणा प्रवर्तयेत् पितृलोक एना निधुवेत्। मै ४,५,४।

४८. यद्दक्षिणा (अङ्गारस्स्कन्देत्) ब्रह्मणे च यजमानाय चाकꣳ स्यात्। काठ ३५,१८; क४८,१६।

४९. यद्दक्षिणा, यमदेवत्या स्याद्। मै ३, ३,१०।

५०. वसवो (रुद्रा [मै.]) दक्षिणाम् (दिशमुदजयन्)। मै ४,१,१०। काठ ३१,८; क ४७, ८।

५१. विराडसि दक्षिणा दिक्। तै ४, ३, ६, २; मै २, ८, ३; काठ १७,३।

५२. स (सोमः) दक्षिणां दिशं प्राजानात्। कौ ७, ६।

५३. सलिलो निलिम्पा नाम स्थ तेषां वो दक्षिणा गृहाः पितरो व इषवः। तैसं ५,५,१०,३-४। [°ण,णा- अग्नि- ४९२; अन्न- १४०; असुर- ४२; आदित्य- ९९; २६०; इन्द्र- ७३; ९३; २३९; २९३; २९४; २९५; ३६५; ऋतु- १३; क्षत्र- ५१; ग्रीष्म- १; ८; ग्रैष्म- १; तेजस्वितर-; त्रिष्टुभ्- ३; २३; ३७ द्र. ]।

दक्षिण-तस्-

१. अतो हीन्द्रस्तिष्ठन्दक्षिणतो नाष्ट्रा रक्षाꣳस्यपाहन्। माश १,४, ५, ३।

२. अन्नमेव दक्षिणतोऽवरुन्द्धे। काठ २१, १; क ३१, १६।

३. अस्वप्नश्च मानवद्राणश्च दक्षिणतो गोपायताम्। काठ ३७, १०।

४. एतद्वै देवा अबिभयुर्यद्वै नो यज्ञं दक्षिणतो रक्षाꣳसि नाष्ट्रा न हन्युरिति। माश ७,४,१,३७।

५. ते (देवाः) ऽब्रुवन् वामदेवं, त्वं न इमं यज्ञं दक्षिणतो गोपायेति, मध्यतो वसिष्ठमुत्तरतो भरद्वाजं सर्वाननु विश्वामित्रम्। गो २, ३, २३।

६. दक्षिणत उपसृजति। पितृलोकमेव तेन जयति। तै २, १,८, १।

७. दक्षिणतोऽनयन् (देवपितरो दक्षिणाग्निम्)। काठसंक १५ : २।

८. दक्षिणतो नीविः। क ४७, १०।

९. दक्षिणतो वासीशानो भूतो वासि। जैउ ३, ५, २, २।

१०. दक्षिणतो वृषभो हव्य एधि (इन्द्र)। मै ४, १२, २।

११. दक्षिणतो वै देवानाꣳ यज्ञꣳ रक्षाꣳस्यजिघाꣳसन् (+ तानि ब्रह्मणाऽपाघ्नत [काठ २२, ११])। मै ३, ३, ७; काठ २२,११; २९, ८।

१२. पितरस्त्वा यमराजानः पितृभिर्दक्षिणतो रोचयन्तु। मै ४, ९, ५।

१३. पुमान् दक्षिणतो योषामुपशेते। जै २, ४०७।
१४. प्रजां दक्षिणतः …दधाति। तैआ ५, ४, ७।
१५. बम्बेनाऽऽजद्विषेण (उद्गात्रा दीक्षामहा इति) पितरो दक्षिणतः (आगच्छन्)। जैउ २,३,१,२।
१६. बस्तो वय इति दक्षिणतः। काठ २०, १०।
१७. बृहद् दक्षिणतः (गायति)। काठ २१, ५; क ३१, २०।
१८. ब्रह्मवर्चसमेव दक्षिणतोऽवरुन्द्धे। काठ २०,१३।
१९. मनोजवसस्त्वा दक्षिणतः पितरः पान्तु। क २,३।
२०. मनोजवसो वः पितृभिर्दक्षिणत उपदधताम्। तैआ १,२०,१।
२१. मनोजवास्त्वा पितृभिर्दक्षिणतः पातु। माश ३,५,२,६ (तु. काठ २,९)।
२२. मा छन्द इति दक्षिणत उपदधाति, तस्माद् दक्षिणावृतो मासाः। काठ २०,११।
२३. मैत्रावरुणः पञ्चदशेन पक्षेण बृहता स्तोष्यन् दक्षिणत उपविशति। जै २,४०६।
२४. यद्दक्षिणत उपसाद्यते पितृलोकं तेन (अभिजयति)। मै ३,९,५।
२५. यद्दक्षिणतो वाति (वायुः) मातरिश्वैव भूत्वा दक्षिणतो वाति। तै २,३,९,५।
२६. यवानां भागोऽस्ययवानामाधिपत्यमिति दक्षिणतः। काठ २१,१ (तु. तैसं ५, ३,४,५)।
२७. या दक्षिणतस्ताभिर्भरद्वाज (आर्ध्नोत्)। क ३१,११।
२८. रुद्रा दक्षिणतः (पर्यपश्यन्)। जै २,१४२।
२९. रुद्रास्त्वा दक्षिणतोऽभिषिञ्चन्तु त्रैष्टुभेन छन्दसा। तै २,७,१५,५।
३०. वृत्रशङ्कुं दक्षिणतोऽधस्यैवानत्ययाय। माश १३,८,४,१।
३१. व्योम सप्तदश इति दक्षिणतः। तैसं ५, ३,३,२ ॥ [°तस् अन्न- १७०; अन्नवती- २; असुर- ४१; आग्नेय- ३२; आदित्य- २८७; इन्द्र- ६३; २९२;३०९; उत्तरतस् ७; ओषधि- ५६; गर्भ- ६; चतुश्चत्वारिंश- २; त्रिष्टुभ्- २४ द्र.]।

दक्षिण-दिश्य- सहोजसो (अग्नेः) दक्षिणदिश्यस्य… । तैआ १,१८,१।

दक्षिणाग्नि-

१. तस्य योऽग्नेस्तृतीयो भागस्तं देवपितरः पर्यगृह्णन् दक्षिणतोऽनयन् स दक्षिणाग्निरभवत् तद् दक्षिणाग्नेर् दक्षिणाग्नित्वम्। काठसंक १५ : १-३।
२. यजुर्वेदाद्दक्षिणाग्निः (अजायत)। ष ४,१ ॥ [°ग्नि- अनुष्टुभ्- ४४; अन्तरिक्ष- ४५; १०३; अन्न- १३९; आहवनीय- २१ द्र.]।

दक्षिणायन- अथ यो दक्षिणे प्रमीयते पितृणामेव महिमानं गत्वा चन्द्रमसः सायुज्यं गच्छति। तैआ १०,६४,१।

दक्षिणार्ध-

१. दक्षिणार्धे सोमाय (जुहोति)। तैसं २,६,२,१।
२. या सोमस्याज्यभागस्य (आहुतिः) सा दक्षिणार्धे होतव्या, ततो या दक्षिणा सा पितृदेवत्या। मै १,४,१२ (तु. तैसं २,६,२,१)।

दक्षिणा-संस्थ- दक्षिणासंस्थो वै पितृयज्ञः। कौ ५,७; गो २,१,२५।

दक्षिणा-सद्-, °णात्-सद्-

१. दक्षिणासदो ( देवाः) यमनेत्राः । तैसं १,८,७,१ ।

२. यमनेत्रेभ्यो देवेभ्यो दक्षिणासद्भ्यः स्वाहा । माश ५,२,४,५ ।
ये देवा दक्षिणात्सदो यमनेत्राः ''' रक्षोहणस्ते नोऽवन्तु । मैसं २,६,३ ।

दक्षिणासीन- दक्षिणाऽऽसीनः प्रतिहरति । जै १,७२ ।

२दक्षिणा-

१. अन्नं दक्षिणा । ऐ ६,३ ।

२. अर्धा ह स्म वै पुरा ब्रह्मणे दक्षिणा नयन्तीति । अर्धा इतरेभ्य ऋत्विग्भ्यः । जैउ ३,४,३,५।

३. आदित्या दक्षिणाभिः (सहागच्छन्तु) । तैआ ३,८,२ ।

४. एषा ह वै यज्ञस्य पुरोगवी यद्दक्षिणा । गो २,६,१४ ।

५. चतस्रो वै दक्षिणाः । हिरण्यं गौर्वासो ऽश्वः । माश ४,३,४,७ ।

६. तद्यद्दक्षिणाभिर्यज्ञं दक्षयति तस्माद्दक्षिणा नाम । कौ १५,१ ।

७. तं (यज्ञम् ) देवा दक्षिणाभिरदक्षयंस्तद्यदेनं (यज्ञम्) दक्षिणाभिरदक्षयंस्तस्माद्दक्षिणा नाम । माश २,२,२,२; ४,३,४,२ ।

८. तस्मादप्येतर्हि यदेवैतेन माध्यन्दिनेन पवमानेन स्तुवतेऽथ विजिते ऽभये ऽनाष्ट्रे दक्षिणा नीयन्ते । माश ४, ३, ३, ५ ।

९. तस्माद् ऋत्विग्भ्य एव दक्षिणा दद्यान्नानृत्विग्भ्यः । माश ४, ३, ४, ५ ।

१०. तस्य ( यज्ञस्य ) दक्षिणा आयुष्कृतः । मै २, ३, ४ ।

११. दक्षिणया वै देवास्स्वर्गं लोकमायन् । काठ १४,७ (तु. तैसं ४,४,८,१) ।

१२. दक्षिणा पितृषु (आसीत्) । क ३६१ ।

१३. दक्षिणा प्रतिनुत्ता न प्रतिगृह्याः । काठ २८, ४ ।

१४. दक्षिणा वै यज्ञानां पुरोगवी । ऐ ६, ३५ ।

१५ दक्षिणा वै स्तावा दक्षिणाभिर्हि यज्ञ स्तूयतेऽथो यो वै कश्च दक्षिणां ददाति स्तूयतऽएव सः । माश ९, ४, १, ११ ।

१६. दक्षिणासु त्वेव न संवदितव्य ऽ संवादेनैवऽर्त्विजोऽलोका इति । माश ९, ५, २, १६ ।

१७. दक्षिणाः सावित्री । गो १, १, ३३ ।

१८. भुजी (भुज्युः ⌊तैसं.⌋) सुपर्णो यज्ञो गन्धर्वस्तस्य दक्षिणा अप्सरसा एष्टयः (अप्सरसः स्तवाः ⌊तैसं., क.⌋) । तैसं ३, ४, ७, १; मै २,१२, २; क २९, ३ ।

१९. यज्ञ आयुष्मान्त्स दक्षिणाभिः (+आयुष्मान् ⌊काठ.⌋) । तैसं २,३,१०,४; काठ ११,७ ।

२०. यज्ञ आयुस्तस्य दक्षिणा आयुष्कृतः । मै २, ३, ४ ।

२१. यज्ञोऽदक्षिणो रिष्यति तस्मादाहुर्दातव्यैव यज्ञे दक्षिणा भवत्यल्पिकापि । ऐ ६, ३५ ।

२२. यज्ञो वाव चतुर्थी चितिर्दक्षिणा पुरीषम् । मै ३, ३,३ (तु. काठ २२,४) ।

२३. यज्ञो वै दक्षिणामभ्यकामयत ता ऽ समभवत् , सा गर्भमधत्त । काठ १३, ३ ।

२४. यज्ञो वै देवेष्वासीद् दक्षिणा पितृषु, स यज्ञो दक्षिणामभ्यकामयत । काठ २३,४; क ३६,१ ।

२५. यद् दक्षिणा दीयन्ते यज्ञ ऽ वा एतद्दक्षयन्ति, तद् दक्षिणानां दक्षिणात्वम् । मै ४,८,३ ।

२६. यन्माध्यन्दिने सवने दक्षिणा दीयन्ते, स्वगर्स्य लोकस्याक्रान्त्यै । मै ४, ८, ३ ।
२७. यन्माध्यन्दिने सवने दक्षिणा नीयन्ते स्वर्गं एतेन लोके हिरण्यं हस्ते भवति । गो २,३;१७ ।
२८. याम् ( दक्षिणाम् ) अब्राह्मणाय ददाति वनस्पतयस्तया ( दक्षिणया ) प्रथन्ते । यां कण्व-कश्यपेभ्यो ददाति नीहारस्तया प्रथते । यां ब्राह्मणायाश्रोत्रियाय ददाति मरीचयस्तया प्रथन्ते । या ९ श्रोत्रियायार्षेयाय ददाति तयामुष्मिंल्लोक ऋध्नोत्यस्मि ९ श्चास्य लोके पुनर्भोगाय भवति । काठ २८,४ ।
२९. यां ( दक्षिणाम् ) प्रतिनुदते सा व्याघ्री दक्षिणा, यत्तां पुनः प्रतिगृह्णीयाद् व्याघ्र्यैनं भूता प्रव्लिनीयादन्यया सह प्रतिगृह्या, तथा हैनं न प्रव्लिनाति । मै ४, ८,३ ।
३०. शुभो वा एता यज्ञस्य यद्दक्षिणाः । तां १६, १, १४ ।
३१. श्लेष्म वा एतद्यज्ञस्य यद्दक्षिणा । तां १६,१,१३ ॥ [°णा- अध्वर्यु- २; अश्व- ६२; आकूत-; काम- १४; तपस्- ३५; त्रिष्टुभ्- ३४ द्र. ] ।

दक्षिणा-त्व- यत्स्विद्वाचा दीयते तदस्या ( वाचः ) दक्षिणात्वम् । मै ३,७, ५ ।

दण्ड-

१. मुखसंमितो (दण्डः) भवति । माश ३,२,१,१४ ।
२. वज्रो वै दण्डो विरक्षस्तायै । माश ३,२,१,३२ ।

दण्ड-हत- तस्मादिषुहतो वा दण्डहतो वा दशमीं ( रात्रिम् ) नैर्देश्यं (दुःखनिवृत्तिम्) गच्छति । तां २२,१४,३ ।

दधि-

१. अथ यदनडुह्यै वहलायाऽ ऐन्द्रं दधि भवति स इन्द्रस्य चतुर्थो भागः । माश ५,२,४,१३ ।
२. अथ यदि दधि (आहरेत्) वैश्यानां स भक्षः । ऐ ७,२९ ।
३. अन्नं (+वै [काठ., क.]) दधि । मै ३,२,६; काठ २०, ५; क ३१,७ ।
४. अपामेष रसो यद्दधि । काठ २९,५ ।
५, इन्द्रियं वा एतदस्मिन् लोके यद्दधि । ऐ ८,१९ (तु. तै २,१,५,६) ।
६. एतद्रूपा वै पशवो यद्दधि । काठ ११, २ ।
७. ऐन्द्रं दध्यमावास्यायां तेनामावास्या सेन्द्रा । तैसं २,५,४,१ ।
८. ग्राम्यं वा एतदन्नं यद्दध्यारण्यं मधु, यद्दध्ना मधुमिश्रेणाभ्यनक्त्युभयस्यावरुद्ध्यै । तैसं ५, २,८,६ ।
९. तदस्मै (इन्द्राय) दध्यकुर्वन् तदेनमधिनोत्, तद् दध्नो दधित्वम् । तैसं २,५,३,४ ।
१०. दधि हैवास्य लोकस्य रूपम् । माश ७,५,१,३ ।
११. दध्नातनक्ति सेन्द्रत्वाय । तैसं २,५,३, ५-६ ।
१२. दध्ना मधुमिश्रेणावोक्षति दध्नैव हुतादः (देवान्) प्रीणाति, मधुनाऽहुतादः (देवान्) । तैसं ५,४,५,२ ।
१३. पशवो वै दधि । तैसं ५,२,७, ४; काठ २८,६; क ४४,६ ।
१४. महेन्द्रीयं (मृदु [काठ ३७,३]) दधि । काठ १५,१;३७,३ ।
१५. मेध्यो वा एष पशूनामूर्ग् दधि । काठ २०, ७ ।

१६. यदब्रवीद्धिनोति मेति (इन्द्रः) तस्माद्दधि । माश १,६, ४,८ ।
१७. वहन्त्यस्मै मधुक्षीरघृतं दधि । लु ९७ ।
१८. वाजिनं त्वां ( दधिद्रव्यम् ) वाजिनो ऽवनयामः । ऊर्ध्वं मनः सुवर्गम् । तैआ ४,१२,१ ।
१९. सरस्वत्यै दधि । माश ४, २, ५, २२ ।
२०. सोमो वै (हि [काठ.]) दधि । काठ ३०,७; कौ ८,९ ॥ [°धि- अप्- ३४; अमावास्या- २२; आमावास्य- ५; ऊर्ज्- ५; ८; ऐन्द्र- ७; १५; घृत- २६; तृतीयसवन- २१;२२ द्र.] ।

दधि-ग्रह-
१. ज्येष्ठो वा एष ( दधिग्रहः ) ग्रहाणाम् । तैसं ३, ५, ९, १ ।
२. दधिग्रहं गृह्णीयात् पशुकामस्य । तैसं ३, ५,९, ३ ।
३. सर्वासां वा एतद्देवताना ऽ रूपं यदेष ( दधि- ) ग्रहः । तैसं ३, ५,९, १ ।

दधि-क्रा-
१. अन्नं वै दधिक्राः । गो २, ६, १६ ।
२. देवपवित्रं वै दधिक्राः (?) । ऐ ६, ३६ ।

दधिक्रावती- अग्नि- ४५३ द्र. ।

दधि-क्रावन्- दधिक्राव्णा एकादशकपालं ( पुरोडाशं निर्वपेत् ) । मै २,१,३ ।

दधृषी- वाग्वै दधृषी । मै ४, २, ६ ।

दध्यञ्च्-
१. आसीद्वेदमश्वशीर्षं येनाश्विभ्यां (दध्यङ् ) देववेदं प्राब्रवीत् । जै ३, ६४ ।
२. इन्द्रो दधीचो अस्थभिर्वृत्राण्यप्रतिष्कुतः । जघान नवतीर्नव । तै १, ५, ८, १ ।
३. दध्यङ् वा आङ्गिरसो देवानां पुरोधानीय आसीत् । तां १२, ८, ६ ।
४. वाग्वै दध्यङ्ङाथर्वणः । माश ६, ४, २,३ ।
५. स (इन्द्रः) ह तैरेव (दधीचः) अस्थिभिर्नवनवतीर्जघानासुराणाम् । जै ३,६५ ॥ [°ध्यञ्च्- अग्नि- १०६; अथर्वन्- १२ द्र.] ।

दनायु, दनु- अथ ( वृत्रः ) यदपात्समभवत्तस्मादहिस्तं दनुश्च दनायुश्च मातेव च पितेव च परिजगृहतुस्तस्मादानव इत्याहुः । माश १, ६, ३,९ ।

दन्त-
१. यस्मादधर (दन्ताः) एवाग्रे जायन्ते ऽथोत्तरे यस्मादणीया ऽ स एवाधरे प्रथीया ऽ स उत्तरे यस्माद् ऽ ष्ट्रा वर्षीया ऽ सो यस्मात्समा एव जम्भ्याः । माश ११, ४, १, ५ ।
२. शार्दं दद्भिः ( प्रीणामि ) । काठ ५३,१ ॥ [°न्त- ग्रावन्- १ द्र.] ।

दन्त-मूल- अवकान् दन्तमूलैः ( प्रीणामि ) । काठ ५३, १ ।

दन्दशूक-
१. अवेष्टा दन्दशूका इति । ......नैतदयो न हिरण्यं, यल्लोहायसं, नैते क्रिमयो नाऽक्रिमयो यद्दन्दशूका । अथ यल्लोहायसं भवति, लोहिता ऽइव हि दन्दशूकाः । माश ५,४,१,१-२ ।

२. लोहितायसं केशवापाय दन्दशूकान् एवास्मात्तेन निरवदयते । मै ४, ४,४ ॥ [°क- क्लीब- द्र.] ।

दम-

१. दम इति नियतं ब्रह्मचारिणः । तैआ १०,६२,१ ।

२. दमः शमयिता ( संन्यासिनो यज्ञस्य ) । तैआ १०, ६४,१ ।

३. दमेन दान्ताः किल्बिषमवधून्वन्ति । तैआ १०,६३,१ ।

दर्भ-

१. अपां वा एतत्तेजो वर्चः यद्दर्भाः । तै २, ७, ९, ५ ।

२. अपां वा एतदोषधीनां तेजो यद्दर्भाः । काठ ३०, १०; ३७, १; क ४६, ८ ।

३. आपो ( +वै [तै.] ) दर्भाः । तै ३, ३, २, १; माश २, २, ३, ११ ।

४. उभयम्वेतदन्नं यद्दर्भा आपश्च ह्येता ओषधयश्च या वै वृत्राद् बीभत्समाना आपो धन्व दभन्त्य उदायंस्ते दर्भा अभवन्यदृदभन्त्य उदायंस्तस्माद्दर्भास्ता हैताः शुद्धा मेध्या आपो वृत्राभिप्रक्षरिता यद्दर्भा यदु दर्भास्तेनौषधयः । माश ७, २, ३, २ ।

५. एतर्हि पाञ्चाला दर्भान् कुशा इत्येवाचक्षते । जै २,१०० ।

६. तासां ( अपाम् ) यन्मेध्यं यज्ञिय ऽ सदेवमासीत् तदपोदक्रामत् ते दर्भा अभवन् । तैसं ६,१,१,७ ।

७. ते (दर्भाः) हि शुद्धा मेध्याः । माश ७,३,२,३; ९,२,१,१२ ।

८. दर्भाणा ऽ स्तम्बमाहर पितृणामोषधीं प्रियाम् । अन्वस्मै मूलं जीवादनुकाण्डमथो फलम् । तैआ ६,९,१ ।

९. दर्भो वा ओषधीनामपहतपाप्मा । ऐआ १,२,३ ।

१०. मेध्या (पवित्रं [तै.]) वै दर्भाः । तै १, ३,७,१; ३, ८,२,३; माश ३,१,३, १८; ५,२,१, ८ (तु. मै ३,६,३) ॥ [°र्भ- अग्नि- १७८; अप्- ६३; १४८;१८४; ओषधि- २; ५४; तेजस्- ३१ द्र. ] ।

दर्भ-मय- दर्भमयं वासो भवति पवित्रत्वाय । मै १,११,८; काठ १४,७ ।

दर्भ-स्तम्ब- अग्निवान् वै दर्भस्तम्बः । तै २,२,१,५; ३,७,३,३ ।

दर्वि-

१. एष खलु वै स्त्रिया हस्तो यद् दर्विः । मै १,१०,१६ (तु. काठ ३६,१०) ।

२. निर्ऋतिगृहीता वै दर्विः तस ऽ ह्यवचरति (°ह्येषाव° [काठ]) । मै १,१०,१६; काठ ३६,१० ।

दर्श- तया प्रातर्ददर्श यद्ददर्श तद्दर्शस्य दर्शत्वम् । काठसंक २३ : ८ ।

दर्श-पूर्णमास-

१. अथ यदीष्टिपशुबन्धेषु वा दर्शपूर्णमासयोर्वा ( यज्ञो भ्रेषं नीयात् ) भुवस्स्वाहेत्यन्वाहार्यपचने जुहवाथ (इति प्रजापतिर्देवानुवाच) । जै १,३५८ ।

२. अथाध्यात्मम् । उदान एव पूर्णमा उदानेन ह्ययं पुरुषः पूर्यतऽइव, प्राण एव दर्शो ददृश इव ह्ययं प्राणस्तदेतावन्नादश्चान्नप्रदश्च दर्शपूर्णमासौ । प्राण एवान्नादः । प्राणेन हीदमन्नमद्यतऽ

उदान एवान्नप्रद उदानेन हीदमन्नं प्रदीयते । माश ११,२,४,५-६ ।

३. अहरेव दर्शोऽहरु हीदं ददृश इव, रात्रिरेव पूर्णमा राज्या हीद ऽ सर्वं पूर्णमसावेव द्यौर्दर्श एषा हीयं ददृश इवेयमेव (पृथिवी) पूर्णमा अनया हीद ऽ सर्वं पूर्णमिति न्वधिदेवतम् । काश ३,२,९,१ ।

४. एतद्वै देवानामास्यं यद् दर्शपूर्णमासौ, य एवं विद्वान् दर्शपूर्णमासौ यजते, साक्षादेव देवानामास्ये जुहोति । तैसं २,५,६,३ ।

५. एतानि वा अङ्गापरू ऽ षि संवत्सरस्य यद् दर्शपूर्णमासौ, य एवं विद्वान् दर्शपूर्णमासौ यजते ऽङ्गापरू ऽ ष्येव संवत्सरस्य प्रति दधाति । तैसं २,५,६,१ ।

६. एते वै संवत्सरस्य चक्षुषी यद् दर्शपूर्णमासौ, य एवं विद्वान् दर्शपूर्णमासौ यजते, ताभ्यामेव सुवर्गं लोकमनुपश्यति । तैसं २,५,६,१ ।

७. एतौ वै देवाना ऽ हरी यद् दर्शपूर्णमासौ, य एवं विद्वान् दर्शपूर्णमासौ यजते, यावेव देवाना ऽ हरी ताभ्यामेवैभ्यो हव्यं वहति । तैसं २,५,६,२-३ ।

८. एष वै देवयानः पन्था यद् दर्शपूर्णमासौ, य एवं विद्वान् दर्शपूर्णमासौ यजते य एव देवयानः पन्थास्त ऽ समारोहति । तैसं २,५,६,२ ।

९. एष वै देवरथो यद् दर्शपूर्णमासौ । तैसं २,५,६,१ ।

१०. एष वै पूर्णमाः । य एष (सूर्यः) तपत्यहरहर्ह्येवैष पूर्णोऽथैष एव दर्शो यच्चन्द्रमा ददृश इव ह्येषः । अथोऽइतरथाहुः । एष एव पूर्णमा यच्चन्द्रमा एतस्य ह्यनुपूरणं पौर्णमासीत्याचक्षते ऽथैष एव दर्शो य एष (सूर्यः) तपति ददृश इव ह्येषः । माश ११,२,४,१-२ ।

११. एषा वै देवानां विक्रान्तिर्यद् दर्शपूर्णमासौ, य एवं विद्वान् दर्शपूर्णमासौ यजते देवानामेव विक्रान्तिमनुविक्रमते । तैसं २,५,६,१-२ ।

१२. तौ वा एतौ पूतौ मेध्यौ यद् दर्शपूर्णमासौ । तैसं २,५,६,४ ।

१३. दर्शपूर्णमासौ वा अश्वस्य मेध्यस्य पदे । तै ३,९,२३,१ ।

१४. द्वादश मासाः संवत्सरो द्वादश द्वंद्वानि दर्शपूर्णमासयोस्तानि सम्पाद्यानीत्याहुर्वत्सं चोपावसृजत्युखां चाधिश्रयत्यव च हन्ति दृषदौ च समाहन्त्यधि च वपते कपालानि चोपदधाति पुरोडाशं चाधिश्रयत्याज्यं च स्तम्बयजुश्च हरत्यभि च गृह्णाति वेदिं च परिगृह्णाति पत्नीं च संनह्यति प्रोक्षणीश्चाऽऽसादयत्याज्यं चैतानि वै द्वादश द्वन्द्वानि दर्शपूर्णमासयोस्तानि य एवं ऽ सम्पाद्य यजते...... प्र प्रजया पशुभिर्मिथुनैर्जायते । तैसं १,६,९,३-४ ।

१५. मन एव पूर्णमाः । पूर्णमिव हीदं मनो वागेव दर्शो, ददृशऽइव हीयं (वाक्) । माश ११,२,४,७ ।

१६. य एवं विद्वान् दर्शपूर्णमासौ यजते परमामेव काष्ठां गच्छति । तैसं १,६,९,३ ।

१७. यो दर्शपूर्णमासौ यजते स देवयाजी । मै १,८,६ ।

१८. सवृतयज्ञो (सम्र्तयज्ञो [मै.]) वा एष यद्दर्शपूर्णमासौ । मै १,४,५; गो २,२,२४ ।

१९. स यं प्रथमं स्रुवमुन्नयति तद्वै दर्शपूर्णमासयो रूपम् । जै १,४० ।

२०. स यो हैवं विद्वानग्निहोत्रं च जुहोति दर्शपूर्णमासाभ्यां च यजते मासि मासि हैवास्याश्वमेधेनेष्टं

भवति । माश ११,२,५,५ ।

२१. सुवर्गाय हि लोकाय दर्शपूर्णमासाविज्येते । तैसं २,२,५,४ ॥ [°स- ओषधि- ४३; चक्षुस्- ९;३६; चतुर्होतृ- १६;२४ द्र. ]।

दर्शपूर्णमास-याजिन्-

१. एष वै हविर्धानी यो दर्शपूर्णमासयाजी । तैसं २,५,६,३ ।

२. दर्शपूर्णमासयाजीमाँल्लोकानभिजयन्नेति सोमस्य सार्ष्टितां सायुज्यं सलोकतामाप्नोति य एवं विद्वान् दर्शपूर्णमासाभ्यां यजते । काठसंक २३ : १०;२४ : १-२ ॥ [°जिन्- अग्नि- २३ द्र.] ।

दार्श- यद्दार्शं तमाग्नेयं (पशुमकुर्वत), योऽनुसवनमालभ्यते । क ३६,४ ।

दार्श्य- आग्नेय- ३३ द्र. ।

दविद्युतती- गायत्री- ८० द्र. ।

दशन्-

१. एतद्ध वै परमं वाचः क्रान्तं यद् दशेति । एतावद्ध परमं वाक् चक्रमे । ...... अथ यदत ऊर्ध्वं विंशतिश् शतं सहस्रमित्यङ्गान्येवास्यैतानि पर्वाणि । वाच एव सा प्रभूतिः । तद्ु हास्यैव सर्वां विराजमाप्नोति । जै १, २३५; २,३२३ ।

२. दशेति वै सर्वमेतावती हि संख्या । ऐआ २,३,४ ।

दश-पेय-

१. अथ यद्दशमे ऽहन्प्रसूतो भवति तस्माद्दशपेयोऽथो यद्दश दशैकैकं चमसमनुप्रसृप्ता भवन्ति तस्माद्वेव दशपेयः । माश ५,४,५,३ ।

२. वरुणस्य ह वै सुष्वाणस्य षोडशतयैरापो भर्गं निरघ्नन् । तदिमां दशमपतत् । तच्चतुर्धाभवद् भृगुस्तुरीयं सरस्वती तुरीयं दशपेयस्तुरीयं श्रायन्तीयं तुरीयम् । जै २,२०१ ।

दशम (अहन्-)-

१. अथ यद्दशममहरुपयन्ति । संवत्सरमेव देवतां यजन्ते । माश १२,१,३,२० ।

२. अन्तो वा एष यज्ञस्य यद्दशममहः । तै २,२,६,१ ।

३. एभ्य ( देवेभ्यः) एतदग्निर्हव्यं नवमादह्नो दशममहरभ्यत्यपारयत् । जै ३,२६९ ।

४. कृत्स्नं प्रजापतिमाप्नोति दशममहः । ऐ ५,२५ ।

५. प्रजापतिरेव दशममहः । जै ३,३०८ ।

६. प्रतिष्ठा दशममहः । कौ २७,२; २९,५ ।

७. मितमेतद्देवकर्म्म यद्दशममहः । कौ २७, १ ।

८. श्रीर्वै दशममहः । ऐ ५, २२ ।

९. सो(प्रजापतिः)ऽब्रवीन्न वै म इदमकमभूदिति । यदब्रवीन् न वै म इदमकमभूदिति तन् नाकस्य नाकत्वम् । स एष वाव नाको यद् दशममहरेष स्वर्गो लोक एतद् ब्रध्नस्य विष्टपम् । जै ३,३४५ ।

१०. स्वर्गो ह्येष लोको यद् दशममहः । जै ३,२८३ ।

दश-रात्र-

१. अथ यद्दशरात्रमुपयन्ति । विश्वानेव देवान्देवतां यजन्ते । माश १२, १,३,१७।
२. अथो आहुरन्नाद्यकाम एवैनेन (दशरात्रेण) यजेतेति । जै २,३२३ ।
३. अभिचर्यमाणो दशरात्रेण यजेत । तैसं ७,२,५,३ ।
४. अभिचर्यमाणो हैतेन यजेत यद् दशरात्रः । अथो आहुरभिचरन्नेवैनेन यजेतेति । जै २,३२२।
५. इम एव दश प्राणा दशरात्रः । जै २, ५८ ।
६. एतद्ध वै ज्यैष्ठ्यं कर्मणां यदेष सौम्योऽध्वरो दशरात्रो विधया विधीयते । जै २, ३२१।
७. दशरात्राय दीक्षिष्यमाणो दशहोतारं जुहुयाद्दशहोत्रैव दशरात्रं सृजते, तेन दशरात्रेण प्रजायते । तैसं ७,२,५,१ ।
८. प्रजापतिरकामयत प्र जायेयेति, स एतं दशहोतारमपश्यत् , तमजुहोत्, तेन दशरात्रमसृजत, तेन दशरात्रेण प्राजायत । तैसं ७,२,५,१ ।
९. प्राजापत्यो वा एष यज्ञो यद्दशरात्रः । तैसं ७, २,५,१ ।
१०. यो भ्रातृव्यवान्त्स्यात् स दशरात्रेण यजेत । तैसं ७,२,५,४ ।
११. स्वर्ग एष लोको यद् दशरात्रः । जै २,४२ ।

दश-स्तोभ- अन्नं (वाग् [जै २,३७]) दशस्तोभम् (साम-) । जै २,३७;३९० ।

दश-होतृ-

१. अग्निहोत्रं (+वै [मै.]) दशहोता । मै १, ९,५; काठ ९,१३ ।
२. अभिचरन् दशहोत्रा जुहुयान्नव वै पुरुषे प्राणा नाभिर्दशमी, प्राणानेवास्योपदासयति । काठ ९, १६ ।
३. तस्मै (ब्रह्मणे) दशमं हूतः प्रत्यशृणोत् । स दशहूतोऽभवत् । दशहूतो ह वै नामैषः । तं वा एतं दशहूतं सन्तं दशहोतेत्याचक्षते परोक्षेण, परोक्षप्रिया इव हि देवाः । तै २,३,११,१ ।
४. दशहोतारं व्याख्याय बहिष्पवमानेनोद्गायेत् । काठ ९, १४ ।
५. दशहोतारं सामिधेनीष्वनूच्यमानासु व्याचक्षीत । काठ ९,१४ ।
६. प्रजापतिर्वै दशहोता (+एकः सन् भूयिष्ठभाग् व्याहृतीनाम् [मै १,९,५]; स इदं सर्वम् [तैआ.]) । मै १,९,५;६; काठ ९,१३; तै २,२,१,१;३,२;८,५;९,३; तैआ ३, ७,४ ।
७. प्रजापतिर्वै दशहोतृणां होता । तै २,३,५,६ ।
८. प्राणो (यज्ञो [तै.]) वै दशहोता । मै १,९,५; तै २,२,१,६ । (तु. काठ ९, १३) ।
९. यः प्रजया पशुभिरेव प्रभवेद् वरासीं परिधाय तप्तं पिबन् द्वादश रात्रीरधश्शयीत, द्वादश्याः प्रातः प्राङुद्द्रुत्य दशहोतारं व्याचक्षीत । काठ ९,१४ ।
१०. वाचस्पतिर्होता दशहोतृणाम् । तै ३,१२,५,१ ।
११. स (प्रजापतिः) दशहोतारं यज्ञमात्मानं व्यधत्त, स चित्तिं स्रुचमकुरुत, चित्तमाज्यं ... स दशधात्मानं विधाय मिथुनं कृत्वायतनमैच्छत् स ...... तैः (त्रिवृद्भिः प्राणैः) प्रजा असृजत । मै १,९,३ ॥ [°तृ- अग्निहोत्र- ३; दशरात्र- ७; ८ द्र.] ।

दशाह-

१. दशाहेन वै प्रजापतिः प्रजा असृजत । जै ३,८ ।

२. विराड् वा एषा समृद्धा यद्दशाहानि । तां ४,८,६ ।

दस्यु-

१. एकाष्टका तपसा तप्यमाना जजान गर्भं महिमानमिन्द्रम् । तेन दस्यून् व्यसहन्त देवा हन्ताऽसुराणामभवच्छचीभिः । तैसं ४,३,११,३; काठ ३९,१० ।

२. त एतेऽन्ध्राः पुण्ड्राः शबराः पुलिन्दा मूतिबा इत्युदन्त्या बहवो वैश्वामित्रा दस्यूनां भूयिष्ठाः । ऐ ७,१८ ।

दातृ- अग्नि- १७९ द्र. ।

√दा,>दान-

१. ओ३मिति सत्यं नेत्यनृतम्'''अथैतत् पूर्णमभ्यात्मं यन्नेति'''तस्मात्काल एव दद्यात् काले न दद्यात् तत् सत्यानृते मिथुनीकरोति, तयोर्मिथुनात् प्रजायते । ऐआ २, ३,६ ।

२. दानमिति सर्वाणि प्रश ९सन्ति । तैआ १०,६२,१ ।

३. दानेन द्विषन्तो मित्रा भवन्ति । तैआ १०,६३,१ ।

४ दानेन वा वै श्रमेण वैतं (स्वर्गं लोकम् ) प्रजानन्नेति । जै २,२७८ ।

५ बहु देयम् । तस्मादिह बहु दत्तं प्रश ९सन्ति । क ४४,४।

६. यादृग्ह वा अस्मिन् लोके अन्नं ददाति, तादृगस्यामुष्मिन् लोकेऽन्नं भवति । जै २,१६० ।

७. यो ददाति सोऽर्यमा, दानमर्यमा । मै २,३,६ ।

८. श्रद्धया देयम् । अश्रद्धयाऽदेयम् । श्रिया देयम् । ह्रिया देयम् । भिया देयम् । संविदा देयम् । तैआ ७,११,३; तैउ १,११,३ ।

दात्यौह- मासेभ्यो दात्यौहान् (आलभते) । मै ३,१४,६ ।

दायाद- पुमान् दायादः, स्त्र्यदायात् (प्र१<०य—+√अद्) । मै ४, ६,४ ।

दारु-

१. कार्ष्णायसेन दारु (संदध्यात्) । जैउ ३,४,३,३ ।

२. दारु च चर्म च श्लेष्मणा (संदध्यात्) । जैउ ३,४,३,३ ।

दारु-पात्र- अग्निमद्धै (अग्निवद्धै [तै.]) दारुपात्रम् । मै ४,१,३; काठ ३१,२; क ४७,२; तै ३, २,३,८ ।

दार्श-, दार्श्य-, दर्श- द्र. ।

दावसुनिधन- आशिषमेवास्मा एतेन (दावसुनिधनेन साम्ना) आशास्ते । तां १५,५,१३ ।

दाशस्पत्य (सामन्)-

१. तस्मै विजित्यासीनाय (इन्द्राय) दशपतये दशपतय आ इत्येवोद्गारानुदहरन् (देवाः) तदेव दाशस्पत्यस्य दाशस्पत्यत्वम् । जै १,१७२ ।

२. यां वै गां प्रश ९सन्ति दाशस्पत्येति तां प्रश ९सन्त्यहरेवैतेन प्रश ९सन्ति । तां १३,५,२७ ।

दाश्वस्- यजमानो वै दाश्वान् । माश २,३,४,३८;४०;७,३,१,२९;५,२,३९ ।

दिङ्निधन- अन्तरिक्ष- ४६ द्र. ।

दिति-

१. ततश्चक्षाथामदितिं दितिं च इति, ततः पश्यत ९ स्वं चारणं चेतयेवैतदाह। माश ५,४, १,१५; (तु. तैसं १,८,१२,३)।
२. दितिश्च मे द्यौश्च मे (यज्ञेन कल्पताम्)। तैसं ४,७, ९,१।

दिद्यु- इषु- १ द्र.।

दिधिषु- उदीर्ष्व नार्यभिजीवलोकमितासुमेतमुपशेष एहि। हस्तग्राभस्य दिधिषोस्त्वमेतत्पत्युर्जनित्वमभिसंबभूव। तैआ ६,१,३।

दिव्-, द्यु-, द्यौस्-

१. अथ तृतीययाऽऽवृताऽमुमेव लोकं (दिवम्) जयति यद्‌ चाऽ मुष्मिँल्लोके। तदेतया चैनं श्रद्धया समर्धयति यथैवैनमेतच्छ्रद्धया ऽग्नावभ्यादधति समयमितो भविष्यतीति। एतं चास्मै लोकं प्रयच्छति यमभिजायते। जैउ ३, ३,१,७।
२. अथ यत्कपालमासीत्सा द्यौरभवत्। माश ६, १, २, ३।
३. अथ यत्रैते सप्त ऋषयस्तद् दिवो मध्यम्। जैउ ४, ११, ५,१२।
४. अथ यद् (आण्डस्य) उत्तरम् (कपालम्) आसीत्साऽसौ द्यौरभवत्। जै ३,३६१।
५. अद (द्यौः) एव नौधसम्। बृहतो ह्येषा तनूः। जै २,४३६ (तु. जै १,२९३;२९८;२,८६)।
६. अदो वै ब्रध्नस्य विष्टपं यत्र (दिवि) असौ (सूर्यः) तपति। कौ १७, ३।
७. अदो (द्यौः) वै स्वाराज्यम्। जै २, ८६।
८. अद्युतदिव वा अद इति तद्दिवो दिवत्वम्। तां २०, १४, २।
९. अन्विततिरिति दिवम् (असृजत)। तैसं ५, ३, ६, १।
१०. अप्रतिष्ठितो दरिद्रः क्षिप्रे ऽमुं (द्यु-) लोकमेष्यसि। माश १, ६, १, १८।
११. अमुतः (दिवः) प्रदानात् पशवो जीवन्ति। जै २, ८।
१२. अमुतः (दिवः) प्रदानान्मनुष्याः (प्रदानाद्धि प्रजा उपजीवन्ति [जै.])। काठ ३६,१; जै १,१४५।
१३. अमुतो (दिवः) ऽर्वाचीमूर्जमुपजीवन्ति। काठ २१, ९।
१४. अमुं (द्युलोकम्) बर्हिर्णिधनेन (देवा अभ्यजयन्)। तां १०, १२, ३।
१५. अमुष्मात् (द्युलोकात्) जगत्या (देवा असुरानन्तरायन्)। जै १, ९९।
१६. अमुष्मिँस्तेन (द्यु-) लोके प्रतितिष्ठति, सूर्यं ज्योतिरवरुन्द्धे। काठसंक १० : १।
१७. अमुष्मिन् (द्यु-) लोक उदयनीयेनातिरात्रेण प्रतिष्ठायोद्यन्ति। जै २, ४४।
१८. अयं वै (पृथिवी-) लोको मित्रो ऽसौ (द्युलोकः) वरुणः। माश १२, ९, २, १२।
१९. असा अस्यां (पृथिव्याम्) रेतः सिञ्चतीयं (पृथिवी) प्रजनयति। काठ २०,६ (तु. मै ३,२,६)।
२०. असावादित्यस्य द्यौः। जै २,२४१।
२१. असावुत्तमस (द्युलोकः) त्रिष्टुप्। तां ७, ३, ९।
२२. असाविव द्यौर्दर्श एषा हीयं (द्यौः) ददृश इवेयमेव (पृथिवी) पूर्णमा, अनया (पृथिव्या) हीद ९ सर्वं पूर्णमिति न्वधिदेवतम्। काश ३, २, ९, १।

२३. असावेव (द्यु-) लोको निधनं गतिः प्रतिष्ठा । जै १, ३०७ ।
२४. असावेव (द्यु-) लोको भूतानां पतिः । जै २, ४१ ।
२५. असावेवान्तर्यामः (द्युलोकः) । माश ४,१,२,२७ ।
२६. असाव् (द्यौः) औदुम्बरी (गौः [जै.]) । तैसं ५, २, ७, ३; जै २,१६६ ।
२७. असौ [+ वाव [मै.] (द्यौः)] तृतीया (+ चितिः [मै.]), नक्षत्राणि पुरीषम् । तैसं ५, ६, १०, २; मै ३, ३, ३ ।
२८. असौ (द्यौः) पिता (पुष्करपर्णम् [तैसं.]) तैसं ५,१,४,३; तै ३, ८, ९, १; माश १३, १,६,१ ।
२९. असौ (द्यौः) बृहत् (प्रतिमा [मै ३,२,९]) । तैसं ३, १, ७, २; मै ३, २,९;३, ५; क २९,७; कौ ३,५; तां ७,६,१७; तै १,४,६,२; (तु. ऐ ८,२; जै १,२२९) ।
३०. असौ (द्युलोकः) भविष्यत् (आयुः [जै.]) । जै २,३१७; तै ३,८,१८,६ ।
३१. असौ (द्यु-) लोक उत्तरौष्ठः (°कः स्वः [ऐ]) । ऐ ६,७; कौ ३,७ ।
३२. असौ (द्यौः) विश्वकर्म्मा (विश्वजित् [जै.]) । जै २,८;३००; तै ३,२,३,७ ।
३३. असौ (द्यौः) वै जुहूः । तै ३, ३,१,१;६,११ ।
३४. असौ वै दिवो मूर्धा योऽसौ (आदित्यः) तपति । जै २,३९० ।
३५. असौ वै (द्यु-) लोकः प्रत्नम् (स्वराट् [माश.]) । मै १,५,५; माश ७,४,२,२३ ।
३६. असौ वै (द्यु-) लोकस्तृतीयसवनम् । गो २,४,१८ ।
३७. असौ वै (द्यु-) लोकः समुद्रो नभस्वान् । माश ९,४,२,५ ।
३८. असौ वै (द्यु-) लोको बृहत् । काठसंक १० : १; ।
३९. असौ वै (द्यु-) लोको विष्पर्धाश्छन्दः । माश ८,५,२,६ ।
४०. असौ (द्यौः) वै (वाव [मै.]) विश्वायुः । मै ४,१,३; काठ ३१,२; क ४७,२ ।
४१. असौ (द्यौः) वै स्वयमातृण्णा । तैसं ५,३,७,४; काठ २१,९ (तु. तैसं ५,४,७,३) ।
४२. असौ (द्यौः) वै स्वराडियं (पृथिवी) विराट् । काठ २०,६ (तु. मै २, ५,१०; ३, २,६; क ३१,८) ।
४३. असौ (द्यौः) सत्यम् (सुक्षितिः [तैआ.]) । तैसं ५,१,५,७-८; तैआ ५,३,७ ।
४४. असौ (द्यौः) स्वराट् (हरिणी [मै., तै.]) । तैसं ५,५,४,१; मै ४,४,४; तै १,८,९,१ ।
४५. असौ (द्यौः) ह्यस्यै (पृथिव्यै) प्रयच्छतीयम् (पृथिवी) अमुष्यै (दिवे) । काठ ३१,१३ ।
४६. अस्कान्द्यौः पृथिवीम् (प्रजनयतु) । तैआ ४,१३,१ ।
४७. अस्मिन्नेव लोके पुरोडाशेन ऋध्नोति, चरुणामुष्मिन् (दिवि) । मै ३,१,१० ।
४८. अहं दिव इति रुद्रस्ततो वै देवा वृत्रमघ्नन् । मै ४,३,४ ।
४९. आदित्येन दिवा नक्षत्रैस्तेनासौ लोकस्त्रिवृत् । तां १०,१,१ ।
५०. इतः (पृथिवीलोकतः) प्रदानाद्ध्यसौ लोको जीवति । या हीत आहुतयो गच्छन्ति ता असौ (द्यु-) लोक उपजीवति । जै १,२९१ ।
५१. इदं वै रथन्तरम् (पृथिवी) अदो बृहत् (द्यौः) । जै १,१२८;३४३ ।
५२. इन्द्रो वै वृत्रमहꣳ स्तस्येमे द्यावापृथिव्यौ रूपाण्युपैतां, चित्राणीयं (पृथिवी), नक्षत्राण्यसौ (द्यौः) । मै ४,४,७ ।

५३. इयं (पृथिवी) वै रजता, असौ (द्यौः) हरिणी । मै २,२,२; काठ ११,४।

५४. इयं (पृथिवी) वै स्तोत्रियोऽसाव् (द्यौः) अनुरूपः । जै ३,२१।

५५. उत्तानायाꣳ स्त्रियां पुमान्रेतः सिञ्चति । असौ (द्यौः) अस्यां (पृथिव्यां) रेतः सिञ्चतीयं (पृथिवी) प्रजनयति । क ३१,८।

५६. उद् दिवꣳ स्तभान । तैसं १,३,१,२; (तु. काठ २,१२; क २,६)।

५७. उपहूतं बृहत्सह दिवा । तै ३,५,८,१; माश १,८,१,१९।

५८. उपहूतो द्यौष्पिता । माश १,८,१,४१।

५९. ऋग्वा अयं (पृथिवी-)लोकः, सामासौ (द्यौः)। जै ३,१४५।

६०. एतद् वै प्रत्यक्षं दिवो रूपं यन् मूर्धा । जै २,४०४।

६१. एष वाऽ अतिष्ठा वैश्वानरः (यद् द्यौः)। माश १०,६,१,९।

६२. ऐन्द्रोऽसौ (द्यु-)लोकः । जैउ १,१२,३,३।

६३. किं नु ते मयि (दिवि) इति । तृप्तिरिति । जैउ ३,५,७,४।

६४. घर्म या ते दिवि शुग्या दिवि, या बृहति, या स्तनयित्नौ, या जागते छन्दसीयं ते तामवयजे । मै ४,९,१०।

६५. जाया भूमिः पतिर्व्योम (द्यौः)। तैआ १,१०,१।

६६. जीमूतैश्च नक्षत्रैश्च दिवम् (प्रजापतिरदृंहत्)। माश ११,८,१,२।

६७. ज्योतिषा दिवमुत्तभान । तैसं ४,६,५,३।

६८. तन्माता पृथिवी तत्पिता द्यौः । तै २,७,१६,३; ८,६,५;३,७,५,४-५;६,१५।

६९. तस्य ते (प्रजापतेः) द्यौर्महिमा, नक्षत्राणि रूपमादित्यस्ते तेजः । तैसं ७,५,१६,१; काठ ४५, ११।

७०. तस्या अमुष्या (दिवः) अन्तो नास्ति । जै १,२९३।

७१. तस्या (इडायाः) वा अद (द्युलोकाख्यम्) एव पृष्ठमन्तरिक्षम् । मै ४,२,२।

७२. तस्यै वाऽएतस्यै वसोर्धारायै । द्यौरेवात्मा । माश ९,३,३,१५।

७३. त्रिषाहस्रो वा असौ (द्यु-)लोकः । तैसं ५,६,८,३।

७४. दिवं रूपेण [वृक्काभ्याम् [मै.] (प्रीणामि)]। मै ३,१५,७; काठ ५३ १०।

७५. दिवं गच्छ, ततो नो वृष्टिमेरय । तैसं १,१,१३,१-२।

७६. दिवं ते धूमो गच्छत्विति हविर्धानात्तेनान्तरिक्षं ज्योतिः । मै ३,९,४।

७७. दिवमेव साम्ना (जयति)। माश ४,६,७,२।

७८. दिवं पितरमुपश्रये बृहन् (द्यौः) मा मा हिंसीः । जै १,१२९।

७९. दिवं पृष्ठेन (प्रीणामि)। काठ ५३,७।

८०. दिवस्त्वा परस्पाय । अन्तरिक्षस्य तन्वस्पाहि । पृथिव्यास्त्वा धर्मणा । मै ४,९,१०।

८१. दिवः (रूपम्) स्वराः (हरिण्यः [तै.])। तै ३,९,६,५; ऐआ ३,२,५; शांआ ८,८।

८२. दिवि देवान् दृꣳह । तैसं ३,२,८,६।

८३. दिवि सूर्यम् (वरुणोऽदधात्) । क १,१९ ।
८४. दिवे नमस्सूर्याय नमो भविष्यते नमो मनसे नमः । काठ ५१,६ ।
८५. दिवो रात्रिः (वत्सः) । तैआ १,१०,५ ।
८६. दिवो (रूपम्) हिरण्यकशिपु । तै ३.९,२०,२ ।
८७. द्यौरधिपतिः (पूषा) । काठ ७,९ ।
८८. द्यौरपराजितामृतेन नष्टाऽऽदित्या रक्षितारस्सूर्योऽधिवियत्तः । काठ ४०,५ ।
८९. द्यौरसि वायौ श्रिता । आदित्यस्य प्रतिष्ठा । तै ३.११,१,१० ।
९०. द्यौरिवानाधृष्यो भूयासम् । ऐआ ५, १,१ ।
९१. द्यौरेव यशः (तृतीया चितिः [माश.]) । गो १,५,१५; माश ८,७,४,१४ ।
९२. द्यौर्बर्हिः (°र्बृहत् [तां.]) । तां १६,१०,८; माश १२,८,२,३६ ।
९३. द्यौर्ब्राह्मणी । जैउ ३,१,५,९ ।
९४. द्यौर्भूत्वा ( प्रजापतिः ) सर्वमनुष्यभवत् । जै १, ३१४ ।
९५. द्यौर्महदुक्थम् (°र्यशः [माश १२,३,४,७]) । माश १०, १, २, २; १२,३,४,७ ।
९६. द्यौर्मे पिता । काठ ३७, १५ ।
९७. द्यौर्लोक ँ शस्यया ( जयति ) । माश १४, ६, १, ९ ।
९८ द्यौर्वशा स्तनयित्नुर्गर्भो नक्षत्राणि जरायु सूर्यो वत्सो वृष्टिः पीयूषः । काठ ३९, ८ ।
९९. द्यौर्वाऽउत्तर ँ सधस्थम् । माश ८, ६, ३, २३; ९, २,३, ३५ ।
१००. द्यौर्वै बृहद् (शम्भूश्छन्दः [माश ८, ५,२, ३]) । माश ८,५,२,३; ९, १, २, ३७ ।
१०१. द्यौर्वै वृष्टिः पूर्वचित्तिः । माश १३, २, ६,१४; तै ३, ९,५,२ ।
१०२. द्यौर्वै सर्वेषां देवानामायतनम् । माश १४, ३, २, ८ ।
१०३. द्यौर्हविर्धानम् । तै २, १, ५,१ ।
१०४. द्यौर्ह्यस्मै वृष्टिमन्नाद्यं सम्प्रयच्छति । ऐआ २, १,७ ।
१०५ द्यौः शान्तिः, सा वृष्ट्या शान्तिः । मै ४, ९, २७ ।
१०६. द्यौस्तृतीया ( चितिः ), नक्षत्राणि पुरीषम् । काठ २२, ४ ।
१०७. द्यौस्ते नक्षत्रैः सह रूपं कृणोतु साधुया । तैसं ५, २, १२, २ ।
१०८. द्यौः समित्, तामादित्यः समिन्द्धे । मै ४, ९, २३ ।
१०९. द्यौः सावित्री । गो १,१,३३; जैउ ४, १२, ०,११ ।
११०. द्यौस्सूक्तम् (°स्सुपर्णी [काठ.]) । काठ २३, १०; जैउ ३, १, ४, २ ।
१११. धर्त्रमसि, दिवं दृ ँह । मै १,१,८: ४,१,८; काठ १,७; क १,७; माश १, २,१,११ ।
११२. ध्रुवक्षिदसि दिव ँ स्कभान । क २, ३ ।
११३. नक्षत्रविहिताऽसौ (द्यौः) । तैसं २, ५, २, ५ ।
११४. नमो अस्तु रुद्रेभ्यो ये दिवि, येषा ँ वर्षमिषवः । मै २, ९, ९ ।
११५. नाऽस्या ( पृथिव्याः ) रूपं नाऽमुष्याः ( दिवः ) । मै २,४,५ ।
११६. परमेष्ठी त्वा सादयतु दिवः पृष्ठे··· सूर्यस्तेऽधिपतिः । मै २, ७, १६; काठ १७, १० ।
११७. परमेष्ठी दिवं तृतीया ँ स्वयमातृण्णां चितिमपश्यत् ··· तमसावादित्योऽब्रवीत् ।

१८०. स्वस्त्वमसीत्यमूम् (दिवं प्रजापतिरब्रवीत्)। जै ३, १०६।
१८१. हरिणीं (पुरम्) हादो दिवि (असुराः) चक्रिरे। कौ ८, ८ (तु. ऐ १, २३; माश ३,४, ४,३)।
१८२. हरिणी (पूः) दिवि (आसीत्)। मै ३,८,१ (तु. काठ २४, १०; क ३८,३; गो २,२,७; माश १४,१,३,२९)।
१८३. हविर्धानं दिवः [दिवि [मै.] (देवाः प्रत्यकुर्वत)]। मै ३ ८,१; काठ २४, १०; क ३८,३।
१८४. द्यो इति तृतीयमूर्ध्वमुदस्यत्। तद् अदोऽभवत्। अद्युतद् इव वा अद इति। तद् दिवो दिवत्वम्। जै २,२४४॥ [ दिव्- अक्षरपङ्क्ति- १; अग्नि- ८५;३०६;५४९; अग्निहोत्री- २; अच्युत-क्षित्-; अध्वर्यु- १२;२२; अनाधृष्य- ४; अन्तरिक्ष- ६७;१२७;१४२;१६३; अन्नाद्य- १२; अन्विति- २; अप्- ७५;८९; १०६;१८९; अमृत- ३४; अर्काश्वमेध- १; आकाश- १०; आदित्य- ७;३५;९१;१४०;१४५; १४८; १६९; २६१;२६२;२६३;३०४; ३४८; आहवनीय- ५;९;२२; इन्द्र- १८;६१;२९८; उत्तरवेदि- १०; उत्स-; उपांशु- ४; ऊष- १;२;५; ऋत- २;१९; ऐन्द्र- ३; ऐन्द्री- ३; ओषधि- ७; औष्णिही-; कश-; कृष्णाजिन- १; गायत्र- २९; गायत्री- १०७; चक्षुस्- १८; चन्द्रमस्- ४८; छन्दस्- ५५; जगती- ७; ३३; जागत- १६; १९; २५; जागती-; जुहू- ९; १०; ११; ज्योतिस्- २४; तृतीयरजस्-; तृतीयसवन- ३;२३; त्रिष्टुभ्- १९; दिति- २ द्र. ]

**दिवस्पुत्र-** दिवस्पुत्राय सूर्याय श ९ सत। तैसं १,२,९,२; काठ २,७; क २,१।

**दिवा-** व्युष्टिर्वै दिवा, व्येवास्मै वासयति। तां ८,१,१३॥ [°वा- अग्नि-३०६; अन्नाद्य-१२ द्र.]।

**दिवाकीर्त्य-**

१. अथो हैतत्प्राणस्यैव रेतो निर्मितं यद् दिवाकीर्त्यम्। जै २,३६।
२. जगतीष्वेव दिवाकीर्त्यं पृष्ठं कार्यम्। जै २, ३६।
३. पृष्ठं वै दिवाकीर्त्यम्। तैसं ७,३,१०,३।
४. प्राण एव दिवाकीर्त्यम्। जै २, ३७।
५. यजमाना वै दिवाकीर्त्यम्। तैसं ७,३, १०,२।
६. रश्मयो वै (वा + एत आदित्यस्य यद् [तां.]) दिवाकीर्त्यानि। ऐ ४, १९; तां ४,६,१३; तै १,२,४,२ (तु. काठ ३३, ६)।
७. शिरो वै दिवाकीर्त्यम्। तां २४,१४,४; २५,१,८॥ [ °र्त्य- आदित्य- २९;३८८ द्र. ]।

**दिवि-क्षित्-** नमः सूर्याय दिविक्षिते। तैसं ७,५,२४,१।

**दिवि-षद्-** सूर्यो देवो दिविषद्भ्यः ज्योतिष्मतीं जुहोतु। तैसं ३,३,१०,१।

**दिव्य, व्या-**

१. आराड्यौ दिव्या ऋषभौ परिमरौ (अराड्यौ = दीर्घोच्छ्रितशृङ्गौ)। काठ ५०, १।
२. इमे वै लोका दिव्यानि धामानि। माश ६, ३, १, १७।
३. तेषां (कालकाञ्जानामसुराणाम्) मिथुनौ दिवमाक्रमेताम् ··· तावेतौ दिव्यौ श्वानौ। क ६,६ (तु. मै १, ६, ९; काठ ८, १; तै १, १,२, ५-६)।
४. दिव्यः सुपर्णः प्रतिख्यातः (सोमः)। काठ ३४, १४।

५. या दिव्या वृष्टिस्तया त्वा श्रीणामि । काठ ४, १०; क ३, ८ ।
६. सुवर्गो लोको दिव्यं धाम । तैसं २,६,७,६ । [°व्य- अप्- ९८; आदित्य - ६२ द्र.] ।
दिव्यायतन- दिव्यायतनं प्रतृण्णम् । ऐआ ३, १, ३ ।

दिश्-
१. अथ यत्तच्छ्रोत्रमासीत्ता इमा दिशो ऽभवन् । जैउ २, १, २, ४ (तु. माश १०,३,३,७; जैउ १, ९, १, ९) ।
२. अपरिमिता हि दिशः । माश ६, ५, २, ७ ।
३. आनुष्टुभीर्दिशः । तैसं ५, २, १, १ ।
४. आशा दिश आपृण । काठ १९,७; तैआ ४, ३, २ ।
५. इमा ह वै ता अम्नया नामैता एव दिशः । जै ३, ३६७ ।
६. एतद्देवत्या ( वायुदेवत्याः ) वा इमा दिशः । मै २, ३, ५ ।
७. एतद्वै देवा इमाँल्लोकानुखां कृत्वा दिग्भिरद ९ हन्दिग्भिः पर्यतन्वन् माश ६, ५,२,११ ।
८. एष उ ह वै चतुर्थो लोको यद्दिशः । जै २, १७९ ।
९. चतस्रो दिशः (+चतस्र उपदिशाः [काठ ११,१०]) । काठ ११,१०;२१,३; क ४५,७; जै १, १३१; २, १७८; १७९; २००; ३८२; ४३१; तैआ ५, २, १ ।
१०. चतस्रो दिशश्चत्वारो ऽवान्तरदेशाः । जै २, ३६७ (तु. तैसं २, ४, ९, २) ।
११. चतुर्धा (पुरोडाशम्) व्यूहति, दिक्ष्वेव प्रतितिष्ठति । तैसं २, ३, १३, ३ ।
१२. चतुःशरावो भवति , दिक्ष्वेव प्रतिष्ठिति । तैसं ३, ४, ८, ७ ।
१३. चत्वार आर्षेयाः प्राश्नन्ति, दिशामेव ज्योतिषि जुहोति । तैसं ३, ४,८, ७ ।
१४. चन्द्रमा दिक्षु ( उपदधातु ) । तैआ १, २०, २ ।
१५. त एते षड् ऋतवष्षड् दिशः । त एत ऋतवो दिग्भिर्मिथुना वसन्तेनेयं प्राची दिङ् मिथुना, ग्रीष्मेणेयं ( दक्षिणा दिक् ), वर्षाभिरियं ( प्रतीची दिक् ), शरदेयं ( उदीची दिक् ), हेमन्तेनासौ ( ऊर्ध्वा दिक् ), शिशिरेणेयम् ( अधरा दिक् ) । जै २, ५२ ।
१६. तदष्टौ चतस्रो दिशश्चतस्रो ऽवान्तरदिशः, सर्वासु तद्दिक्षु वाचं दधाति । माश ६,३,१,४४ ।
१७. तद्यथा पतिं जाया अनिमेषमीक्षेरन्नेवमेवैना ( दिशः ) एवंविदं दीक्षमाणमीक्षन्ते । तद्यद् दिग्भिरीक्षितस्तस्माद्दीक्षितः । जै २, ५२ ।
१८. तद्या अमुष्मादादित्यादर्वाच्यः पञ्च दिशस्ता नाकसदः । माश ८, ६, १, १४ ।
१९. तस्य ( धर्मरूपस्यादित्यस्य ) दिशः कपालानि । काठ ३१, ६ ।
२०. ता ( दिशः ) अयं वायुः पवमान आविष्ट इति वाजसनेयः । जै २, २२९ ।
२१. ता ( दिशः ) उ एव विश्वे देवाः । जैउ २, १, २, ४; ४, १, ५ ।
२२. ता वा ऽएता देव्यः । दिशो ह्येताः । माश ९, ५, १, ३९ ।
२३. तेजसा दिश उद् द९ह । तैसं ४, ६, ५, ३ ।
२४. ते देवा अदितिम् (पृथिवीम्) अब्रुव ९ स्त्वया मुखेनेमा दिशः प्रजानामेति । मै ३,७,१ ।
२५. दश (+वै [जै.]) दिशः । जै ३, ३७२; माश ६, ३, १, २१; ८, ४, २, १३ ।
२६. दिग्भ्यश्चक्रवाकः । काठ ४७,३ ।

२७. दिग्भ्यो नकुलान् (आलभते)। मै ३, १४, ७।
२८. दिग्भ्यो हैनमायन्ती ९ ३ दिग्भ्यो विश्रृणोति। ऐआ २, १, ७।
२९. दिशः परिधयः ( परिधानीया ⌊जैउ.⌋)। मै १, ८,७; काठ ६, ६; ऐ ५, २८; तै २,१,५,२; जैउ ३, १, ४, २।
३०. दिशः पादाः [पार्श्वे ⌊मै.⌋ (इडायाः) ]। तैसं ७, ५, २५, १; मै ४, २, २।
३१. दिशः शिक्यं दिग्भिर्हीमे लोकाः शक्नुवन्ति स्थातुं यच्छक्नुवन्ति तस्माच्छिक्यम्। माश ६, ७, १, १६।
३२. दिशः (+वै ⌊जै.⌋) श्रोत्रम्। जै २,५४; ऐआ २,१,५ (तु. शांआ १०,१)।
३३. दिशः (पुरुषस्य) श्रोत्रात् तथा लोकाँ अकल्पयन्। काठसंक १०१ : ९; तैआ ३, १२,६।
३४. दिशः सप्तहोत्राः। माश ७,४,१,२०।
३५. दिशः समित्, तां प्रजापतिः समिन्द्धे। मै ४,९,२३।
३६. दिशः स्रक्तयः (समानः ⌊जैउ.⌋)। काश ५,८,१,६; जैउ ४,११,१,९।
३७. दिशां वा एतत्साम यद्वैरूपम्। तां १२,४,७।
३८. दिशि दिक् प्रोता। तैसं ५,७,९, ५।
३९. दिशो भूतिः (लोगेष्टकाः ⌊माश.⌋)। माश ७, ३,१,१३;२७; तैआ ५, ३,८।
४०. दिशो मे श्रोत्रे श्रिताः। तै ३,१०, ८,६।
४१. दिशो वाऽअस्य (सूर्यस्य) बुध्न्या उपमा विष्ठाः। ता ह्येष उपवितिष्ठते। माश ७,४,१,१४।
४२. दिशो वा ऋतस्य सत्यम्। तैसं ३,३,५,५।
४३. दिशो विष्णुर्व्यक्र ९ स्तानुष्टुभेनच्छन्दसा ··· सूर्यस्यावृतमन्वावर्ते। काठ ५, ५।
४४. दिशो वै परिभूश्छन्दः (विष्टारपङ्क्तिश्छन्दः ⌊माश ८,५,२,४⌋)। माश ८,५,२,३;४।
४५. दिशो वै पृष्ठानि (प्रजापतिः ⌊जै १, ८९⌋; प्राणः ⌊जैउ.⌋)। जै २,२१; जैउ ४,११,१,११।
४६. दिशो वै यज्ञस्य स्कन्नस्याशीर्गच्छति। काठ २५,७।
४७. दिशो वै लोहमय्यः (सूच्यः)। माश १३,२,१०, ३।
४८. दिशो वै श्रोत्रं दिशः पर ९ रजः। माश ७,५, २,२०।
४९. दिशो वै स्वर्गो लोकः (+ एतद्देवत्या वा इमा दिशो यथादेवतं वा एतदाभ्यो दिग्भ्योऽधि-स्वर्गं लोकमेति ⌊मै.⌋)। मै ४,४, ४; काठ २३,९; क ३५,६ (तु. माश ८,६,१,४)।
५०. दिशो (+ वै ⌊जै.,माश.⌋) हरितः। जै २, २२९; माश २,५,१,५; ऐआ २, १,१।
५१. दिशो ह वा अनु नवरात्रः। ···ऊर्ध्वा दिङ्नवम्यर्वाची दशमी। जै २,३१६।
५२. दिशो ह वा अन्वष्टरात्रः। ···ऊर्ध्वा दिङ्नवमी। जै २,३११।
५३. दिशो ह्येतस्य (सूर्यस्य) स्रक्तयः। माश १४, ३,१,१७।
५४. धर्मासि दिशो द ९ ह, रयिं देहि पोषं देहि। काठ १,७; ३१,६; क १,७; ४७,६।
५५. धर्मासि विश्वा विश्वानि द ९ ह (+ इति दिश एव द ९ हति ⌊मै ४,१,८.⌋)। मै १,१,८।
५६. नव (सप्त ⌊माश ९,५,२,८⌋ ) दिशः। माश ६,३,१,२१; ८,२,१०;९,५,२,८।
५७. पञ्च दिशः (+ पञ्चदशेन क्लृप्ताः ⌊काठ ३९,१०⌋)। तैसं ७,३,७,४; मै २,१३,१०; काठ २१, ८;३९,१०।

५८. पञ्च दिशो दैवीर्यज्ञमवन्तु देवीरपामतिं दुर्मतिं बाधमानाः । रायस्पोषं (रायस्पोषे [मै.]) यज्ञपतिमाभजन्तीः''' । तैसं ४, ६,३,२; मै २,१०,५ ।

५९. पञ्च वा इमा दिशश्चतस्रस्तिरश्च एकोर्ध्वा ऐ ६,३२ (तु. जै ३,३६; माश ५,४,४,६) ।

६०. पञ्चानां त्वा दिशां (+ यन्त्राय [तैसं.]) धर्त्राय गृह्णामि । तैसं १,६,१, २; काठ ३२,६ ।

६१. पृष्ठानि हि दिश इति । जै २,२१५ ।

६२. बृहस्पतिरष्टाक्षरयाष्टौ दिशा (दिशः [काठ.]) उदजयच्चतस्रो दिशश्चतस्रोऽकुशलीः (चतस्र उपदिशाः [काठ.]) । मै १,११,१०; काठ १४,४ ।

६३. यांः (अमुष्मादादित्यात्) पराच्यः (पञ्च दिशः) ताः पञ्च चूडाः । माश ८,६,१,१४ ।

६४. वायुर्दिशां यथा गर्भः । माश १४,९,४,२१ ।

६५. विश्वे त्वा देवा वैश्वानराः कृण्वन्त्वानुष्टुभेन छन्दसाङ्गिरस्वद् दिशोऽसि (+ इति दिशो हैतद्यजुरेतद्वै विश्वे देवा वैश्वानरा एषु लोकेषूखायामेतेन चतुर्थेन यजुषा दिशोऽदधुः [माश.]) । तैसं ४,१,५,४; माश ६, ५,२,६ ।

६६. व्यूहति, दिशस्तर्पयति ( मैत्रो ब्राह्मणः ) । काठ १२, १ ।

६७. शक्करीरङ्गुलयो दिशश्च । तैसं ४, ७, ९, १ ।

६८. श्रोत्रं वै मनुष्यधूर्दिशो देवधूः । जै १, २७०; जैउ ३,१,२,८; ऐआ २,४,१; ऐउ १,४,१ ।

६९. स (आदित्यः) इमाः पञ्च दिशो ऽनुतेजस्व्यभवत् । काठ ११, ४ ।

७०. स ( इन्द्रः ) इमा दिशो वज्रेणाभिपर्यावर्तत । मै २, १,१२ ।

७१. सविता पञ्चाक्षरया पञ्च दिश ( दिशा [मै.] ) उदजयत् । मै १, ११, १०; काठ १४, ४ ।

७२. स ( प्रजापतिः ) विश्वान्देवानसृजत तान्दिक्षूपादधात् । माश ६, १, २, ९ ।

७३. सेयं प्राची दिक् प्रथमायजत । जै २, २१४ ।

७४. सोमो वा इमा दिशोऽभ्यकामयत प्रागपागधरागुदग् इति । मै ४, ५, ७ ।

७५. सोमो वै राजा दिशो ऽभ्यध्यायत्, स दिशो ऽनुप्राविशत्, प्रागपागुदगधरागित्याह, दिग्भ्य एवैनं सम्भरति । तैसं ६, ४,४,३ ।

७६. स्वर्गो हि लोको दिशः । माश ८,१,२,४ ॥ [दिश्– अग्नि– १३५; ५३७; अनुष्टुप्छन्दस्– १; २; अनुष्टुभ्– ४२; अन्तरिक्ष– ९२; १२०; अयस्मयी– ३; अश्वीवि– १; आज्यधानी– १; आदित्य– २४४; आनुष्टुभ– ६; आर्भव– ३; आशा– १; इडा– २४; इन्द्र– ४०५; ऋतु– २४;६८; ऐन्द्राग्न– १४; कङ्क–; चतूरात्र– २; ३; छन्दस्– ३४; छन्दोम– १५; जगती– २४; जत्रु– द्र. ] ।

## √दीक्ष्

१. अग्नीषोमौ वा ऽएतमन्तर्जम्भऽ आदधाते यो दीक्षते । माश ३, ३, ४, २१; ६, ३, १९ ।

२. अथ य एतमेतद्दीक्षयन्ति तद् द्वितीयम्म्रियते । वपन्ति केशश्मश्रूणि । निकृन्तन्ति नखान् । प्रत्यञ्जन्त्यङ्गानि । प्रत्यचत्यङ्गुलीः । अपवृतो ऽपवेष्टित आस्ते । न जुहोति । न यजते । न योषितं चरति । अमानुषीं वाचं वदति मृतस्य वावैष तदा रूपं भवति । जैउ ३, २, ४,४ ।

३. उद्गृभ्णीते वा ऽएषो ऽस्माल्लोकाद्देवलोकमभि यो दीक्षते । माश ३, १,४, १ ।

४. उभयं वा ऽएषो ऽत्र भवति यो दीक्षते विष्णुश्च यजमानश्च । माश ३, २,१, १७ ।

५. एति वा एषो ऽस्माल्लोकाद्यो दीक्षते, जन ९ ह्येति, देवलोकमभ्यारोहति । मै ३, ६,१ ।

६. एवं वा एष यज्ञ ँ सम्भरति यो दीक्षते । माश ३, २, २, ३ ।
७. गर्भो वा एष भवति यो दीक्षते छन्दा ँसि प्रविशति तस्मान्न्यक्नाङ्गलिरिव भवति । माश ३,२,१,६ (तु. तैसं ६, १,३,२;२,५,३) ।
८. यज्ञादु ह वा एष पुनर्जायते यो दीक्षते । ऐ ७,२२ ।
९. यदह दीक्षते तद्विष्णुर्भवति । माश ३,२,१,१७ ।
१०. यदा पशून् विन्दते ऽथ दीक्षते । मै ३, ७, ३ ।
११. यद्वै दीक्षन्ते । अग्नाविष्णू एव देवते यजन्ते । माश १२,१,३,१ ।
१२. रक्षा ँ स्येत ँ सचन्ते यो दीक्षते । काठ २३,१; क ३५,७ ।
१३. सपत्नीको दीक्षेत । जै ३,३५९ ।
१४. सर्वान् वा एतद् वरुणो गृह्णाति यद्दीक्षते । मनुष्यान् , पितॄन् देवान् । काठ २६,२ ।
१५. सर्वाभ्यो वा एष देवताभ्या आप्यायते यो दीक्षते । मै ३, ६, ७ ।

**दीक्षमाण-** तानि वा एतानि दीक्षमाणाद् उत्क्रामन्ति । अग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुबन्धः पितृयज्ञो गृहमेधो ब्रह्मौदनो मिथुनम् । जै २, ३८ ॥ [°ण- क्षत्रिय- २६; दिश्- १७ द्र.] ।

**दीक्षा-**

१. अन्तरिक्षं दीक्षा । तया वायुर्दीक्षया दीक्षितः । ···आपो दीक्षा । तया वरुणो राजा दीक्षया दीक्षितः । तै ३, ७, ७,५-६ ।
२. ऋतं वाव दीक्षा सत्यं दीक्षा । ऐ १, ६ (तु. जै २, २०० ।
३. दिशो दीक्षा । तया चन्द्रमा दीक्षया दीक्षितः । ···ओषधयो दीक्षा । तया सोमो राजा दीक्षया दीक्षितः । तै ३, ७,७, ६-७ ।
४. दीक्षया विराडाप्तव्या । काठ २१,५ ।
५. दीक्षयैवात्मानं पुनीते । काठ ३४, ७ ।
६. दीक्षा पत्नी । तैआ ३, ६,१ ।
७. दीक्षा सोमस्य राज्ञः पत्नी । गो २,२,९ (तु. मै १,९,२; काठ ९, १०; तैआ ३,९,१) ।
८. देवसवितस्त्वं दीक्षाणां दीक्षापतिरसि । काठ २, २; क १, १४ ।
९. द्यौर्दीक्षा । तयादित्यो दीक्षया दीक्षितः । तै ३, ७, ७, ५ ।
१०. धाता ( यज्ञसम्बन्धी विग्रहः ) दीक्षायाम् । तैसं ४, ४, ९, १; काठ ३४, १४ ।
११. पशुमन्तं दीक्षोपनमति । तैसं ६, १,६, २; काठ २३, १०; क ३७, १ ।
१२. पृथिवी दीक्षा । तयाग्निर्दीक्षया दीक्षितः । तै ३, ७, ७, ४-५ ।
१३. प्रजापतिरकामयताश्वमेधेन यजेयेति । स तपोऽतप्यत । तस्य तेपानस्य सप्तात्मनो देवता उदक्रामन् । सा दीक्षाभवत् । तै ३, ८, १०, १ ।
१४. प्राणा ( सत्यं [जै.] ) दीक्षा । जै १, ४; तै ३, ८, १०, २; माश १३,१, ७, २ ।
१५. य एव पशुमान् भवति तं दीक्षोपनामुका । जै १, २८७ ।
१६. या वै दीक्षा सा निषत् । तत्सत्रं तस्मादेनानासदित्याहुः । माश ४, ६, ८, १ ।
१७. वाग्दीक्षा ( + तया प्राणो दीक्षया दीक्षितः [तै.] ) । कौ ७,१; तै ३, ७, ७, ७ ।
१८. सत्ये ह्येव दीक्षा प्रतिष्ठिता भवति । माश १४, ६, ९, २४ ।

१९. स (प्रजापतिः) दीक्षाभिरेव पौर्णमासीरवारुन्धोपसद्भिरष्टकाः प्रसुतेनामावास्या। जै ३,२।

२०. सोमो दीक्षया (सहागच्छतु)। तैआ ३, ८, १॥ [°क्षा- अग्नि- ७५;१२३; २९३;३८४; अनशन- २; अप्- ४८; अवान्तरदीक्षा-; जगती- ६०; तपस्- १८;२८; २९ द्र.]।

**दीक्षा-तपस्-** विष्णुर्दीक्षातपोभ्याम् (समागच्छतु)। मै १,९,२; काठ ९,१०॥ [°पस्- अङ्गिरस्- ३ द्र.]।

**दीक्षित-**

१. अथ न दीक्षितः काष्ठेन वा नखेन वा कण्डूयेत। माश ३, २, १, ३१।

२. अथ यद्दीक्षितः। अवत्यं वा व्याहरति क्रुध्यति वा तन्मिथ्या करोति। माश ३,२,२,२४।

३. अथाध्यात्मम्। अयमेव दीक्षितो योऽयं चक्षुषि पुरुषः। जै २, ६३।

४. आर्येणेव (दीक्षितः संवदेत) ब्राह्मणेन वा क्षत्रियेण वा वैश्येन वैते हि यज्ञियाः। काश ४,१,१,६।

५. एता वा अपां दीक्षिताः पशुमतीर्यास्स्थावरा लोमशास्संतताः। काठ २२, १३।

६. एष (आदित्यः) दीक्षितः। गो १, २, १।

७. कस्य स्विद्धेतोर्दीक्षित इत्याचक्षते श्रेष्ठां धियं क्षियतीति। गो १,३,१९।

८. तद्यथा पतिं जाया अनिमेषमीक्षेरन्नेवमेवैना (दिशः) एवंविदं दीक्षमाणमीक्षन्ते। तद्यद् दिग्भिरीक्षितस्तस्माद्दीक्षितः। जै २,५२।

९. तस्मादपि (दीक्षितम्) राजन्यं वा वैश्यं वा ब्राह्मण इत्येव ब्रूयाद् ब्राह्मणो हि जायते यो यज्ञाज्जायते। माश ३,२,१,४०।

१०. तस्माद्दीक्षितः कृष्णविषाणयैव कण्डूयेत नान्येन कृष्णविषाणायाः। माश ३, २,१,३१।

११. त्रेधा वा एतस्य पाप्मानं विभजन्ते यो दीक्षितो योऽन्नमत्ति स तृतीयं योऽश्लीलं कीर्तयति स तृतीयं यो नाम गृह्णाति स तृतीयम्। काठ २३,५।

१२. दीक्षितस्यैव प्राचीनवंशा (शाला) नादीक्षितस्य। माश ३,१,१,७।

१३. देवगर्भो वा एष यद्दीक्षितः। कौ ७,२।

१४. न ह वै दीक्षितोऽग्निहोत्रं जुहुयान्न पौर्णमासेन यज्ञेन यजेत ··· न मिथुनं चरेत् ··· कृष्णाजिनं वसीत कुरीरं धारयेन्मुष्टी कुर्यादङ्गुष्ठप्रभृतयस्तिस्र उच्छ्रयेन्मृगशृङ्गं गृह्णीयात्तेन कषेत। गो १,३,२१।

१५. नैनम् (दीक्षितम्) अन्यत्र चरन्तमभ्यस्तमियात्। न स्वपन्तमभ्युदियात्। माश ३, २, २, २७।

१६. नैष देवत्रा न मनुष्यत्रा यो दीक्षितः। काठ २३,१; क ३५, ७।

१७. नोत्तानो दीक्षितश्शयीत, यदुत्तानश्शयीत देवलोकमुपावर्तेत, न न्यङ् शयीत, यन्न्यङ् शयीत पितृलोकमुपावर्तेत ··· तिर्यङ्ङेव शयीत ······ नाभेः पराङ् शयीत। काठ २३,५।

१८. प्रावृत इव हि दीक्षितः। मै ३,६,६।

१९. मैत्रो दीक्षितस्समृद्ध्यै। काठ २३,१।

२०. यज्ञव्रतो वै दीक्षितः। तैसं ६,१,४,४।

२१. यद्वै दीक्षितो ऽमेध्यं पश्यत्यपास्माद्दीक्षा क्रामति, नीलमस्य, हरो व्येत्यबद्धं मनो दरिद्रं चक्षुः
२२. योक्त्रेण पत्नी संनह्यते, मेखलया दीक्षितः । मै ३,६,७ ।
तैसं ३,१,१,२ ।
२३. योनिर्वै दीक्षितस्य दीक्षितविमितं, जरायु कृष्णाजिनमुल्बं दीक्षितवासो नाभिर्मेखला, गर्भो
दीक्षितः । मै ३,६,७ ।
२४. यो वै दीक्षितानां पापं कीर्त्तयति तृतीयं ( अंशम् ) एषाऽऽस पाप्मनो हरत्यन्नादस्तृतीयं
पिपीलिकास्तृतीयम् । तां ५,६,१० ।
२५. रेतो दीक्षितः । मै ३,६,१ ।
२६. वायुर्दीक्षितो ऽन्तरीक्षं दीक्षा आदित्यो दीक्षितो द्यौर्दीक्षा, प्रजापतिर्दीक्षितो मनो दीक्षा
जै २,५३ ।
२७. स यः सत्यं वदति स दीक्षितः । कौ ७, ३ ।
२८. सर्वदेवत्यो दीक्षितः । काठ २३, १; क ३५, ७ ।
२९. सर्वस्य वा एष मित्रं ऽऽ यो दीक्षितः । मै ३, ९, ३ ।
३०. स वै धीक्षते । वाचे हि धीक्षते यज्ञाय हि धीक्षते यज्ञो हि वाग् धीक्षितो ह वै
नामैतद्यद्दीक्षित इति । माश ३, २, २, ३० ।
३१. सिषासवो ( लुब्धकामाः फलार्थिनः ) वा एते यद्दीक्षिताः । ऐ ६, ७ ।
३२. हविर्वै दीक्षितः । मै ३, ६, २; ६; काठ २३, १; क ३५,७; तैआ ५, २,२ ॥ [ °त- अग्नि-
१८०;१८१; अग्नीषोम- १०; अन्तरिक्षदेवत्य- १; आदित्य- १८६; गर्भ- १०; दिश्- १५;
दीक्षा- १;३;९;१२;१७ द्र. ] ।

**दीक्षित-विमित-** योनिर्दीक्षितविमितम् । काठ २३,२ ॥ [ °त- दीक्षित- २३ द्र. ] ।

**दीद्यत्-** अग्ने दीद्यतं बृहदिति । चक्षुर्वै दीदयेव । माश १, ४, ३,७ ।

**दीप्ति-** दीप्तिरेव ब्रह्मवर्चसस्य रूपम् । जै ३, ८८; २०७ ।

**दीप्यमान-** वि पाजसा पृथुना शोशुचान ( दीप्यमानः ) इति । वि पाजसा पृथुना दीप्यमान
इत्येतत् । माश ६, ४, ४, २१ ।

**दीर्घ-** आयुर्वै दीर्घम् ( साम ) । तां १३, ११, १२ ।

**दीर्घ-तमस्-** दीर्घतमा मामतेयो दशपुरुषायुषाणि जिजीव । शांआ २,१७ ।

**दीर्घ-श्मश्रु-** एष (आदित्यः) दीर्घश्मश्रुः । गो १,२, १ ।

**दीर्घ-श्रवस्-,> दैर्घश्रवस** (सामन्- )-

१. अन्तरिक्षं दैर्घश्रवसम् । वामदेव्यं ह्येतन्निदानेन । जै २,४३६ ।
२. दीर्घश्रवा वै राजन्य ऋषिर्ज्योगपरुद्धो ऽशनाय ऽऽ श्चरन् स एतद्दैर्घश्रवसमपश्यत्तेन सर्वाभ्यो
दिग्भ्योऽन्नाद्यमवारुन्ध सर्वाभ्यो दिग्भ्यो ऽन्नाद्यमवरुन्धे दैर्घश्रवसेन तुष्टुवानः । तां १५,
३, २५ ।
३. यद् उ दीर्घश्रवा अपश्यत् तस्माद् दैर्घश्रवसमित्याख्यायते । जै ३,२५७ ।
[°स- अन्न- २४ द्र. ] ।

**दुच्छुन-** यो वा अभिचरति यो ऽभिदासति यः पापं कामयते स वै दुच्छुनः। जै १, ९३।

**दुन्दुभि-**

१. एषा वै परमा वाग्या सप्तदशानां दुन्दुभीनाम्। माश ५, १,५, ६।

२. परमा वा एषा वाग्या दुन्दुभौ। तैसं ७, ५, ९, २; तै १, ३,६, २-३।

**दुर्-** वृष्टिर्वै दुरः। ऐ २, ४।

**दुराध्य-** ये वै स्तेना रिपवस्ते दुराध्यः। तां ४, ७,५।

**दुराश-** ते (असुराः) ऽब्रुवन्, दुराशं बतेदं देवा अक्रतेति। तदेव दुराशस्य दुराशत्वम्। ···सूर्याचन्द्रमसोर्ह्येष (दुराशः) यज्ञः। जै २, ९९।

**दुरोणसद्-** दुरोणसदिति विषमसदित्येतत्। माश ६, ७, ३,११।

**दुर्ब्राह्मण-**

१. अश्विनावेतस्य देवता यो दुर्ब्राह्मणः सोमं पिपासति। तैसं २, १, १०, १।

२. आश्विनं धूम्रललाममालभेत यो दुर्ब्राह्मण ऽ सोमं पिपाययिषेत्। काठ १३,६।

३. स्तायदिव हि दुर्ब्राह्मणो ब्राह्मणो बुभूषति, धूम्र इव वा एष यो दुर्ब्राह्मणः। काठ १३, ६।

**दुर्य-** गृह- ४ द्र.।

**दुर्वर्ण-**

१. यद् गर्भस्य शमलं तद् दुर्वर्णं (सुवर्णरजतव्यतिरिक्तो धातुः) तस्माद् ब्राह्मणेन दुर्वर्णं न भर्त्तव्यं शमलं हि तत्। काठ ८,५ (तु. क ७,१)।

२. सोऽसुरानसृजत (प्रजापतिः)। तदस्याप्रियमासीत् तद् दुर्वर्णं ऽ हिरण्यमभवत्। तै २, २,४,४-५।

**√दुवस्य** समिधाग्निं दुवस्यतेति समधाग्निं नमस्यतेत्येतत्। माश ६, ८,१,६।

**दुवस्वत्-** अवस्यु- ३ द्र.

**दुश्चरित-**

१. पाहि माग्ने दुश्चाताद् आ मा सुचरिते भज। काठ १,१२; क १,१२।

२. वृजिनमनृतं दुश्चरितम्। तै ३,३,७,१०॥ [°त- अग्नि- ५९३ द्र]।

**दुश्चर्मन्-**

१. अति ब्रह्मवर्चसं क्रियत इत्याहुरीश्वरो दुश्चर्मा भवितोरिति, मानवी ऋचौ धाय्ये कुर्याद्यद्वै किं च मनुरवदत् तद् भेषजं, भेषजमेवास्मै करोति। तैसं २, २,१०,२-३।

२. यदि बिभीयाद् दुश्चर्मा भविष्यामीति सोमापौष्णं चरुं निर्वपेत्। तैसं २,२,१०,३।

३. स्वयैवास्मै (यजमानाय) देवतया (सोमेन) पशुभिस्त्वचं करोति, न दुश्चर्मा भवति। तैसं २,२,१०,३।

**दुःशीर्ततनु-** अग्ने दुःशीर्ततनो जुषस्व···एषा वा अस्य (अग्नेः) शृणाती तनूः क्रूरतया वा एष पशून्शमायते। मै १,८, ६।

दुष्टर- दुष्टरस्तरन्नरातीरिति दुस्तरो ह्येष रक्षोभिर्नाष्ट्राभिः । माश ५, २,४,१६ ।

दूडभरथ- आदित्य- ६३ द्र. ।

दूत- इदमप्येतर्हि दूतमाहुः । अपेहि मन्त्रयित्वा त्वा प्रतिवक्ष्याम इति । जै ३,१८७ ।

दूरोह- असौ वै दूरोहो योऽसौ (सूर्यः) तपति । ऐ ४, २० ।

दूरोहण-

१. असौ वाऽआदित्यो दूरोहणं छन्दः । माश ८, ५, २, ६ ।

२. स्वर्गो वै लोको दूरोहणम् । ऐ ४,२०;२१ ।

दूर्वा-

१. क्षत्रं वा एतदोषधीनां यद् दूर्वा । ऐ ८, ८ ।

२. तदेतत्क्षत्रं प्राणो ह्येष रसो ( यद् दूर्वा ) । लोमान्यन्या ओषधयः एताम् ( दूर्वाम् ) उपदधत्सर्वा ओषधीरुपदधाति । माश ७,४, २, १२ ।

३. लोमभ्यो दूर्वाः (प्रजापतेरजायन्त) । जै २, २६७ ।

४. सोऽब्रवीत् (प्रजापतिः) । अयं (प्राणः) वाव माधूर्वीदिति यदब्रवीदधूर्वीन्मेति तस्माद् धूर्वा, धूर्वा ह वै तां दूर्वेत्याचक्षते परोऽक्षम् । माश ७, ४, २, १२ ।

दूर्वेष्टका-

१. दूर्वेष्टकामुपदधाति पशूनां धृत्यै । तैसं ५, २,८,३ ।

२. प्राणो (पशवो वै [माश ७,४,२, १०; १९]) दूर्वेष्टका । माश ७,४,२,१०;१९;२० ।

दृति- संवत्सरो वै वाकुरो दृतिः । जै २,३९६ ।

दृबा- स यया प्रथमया (इष्वा) समर्पणेन पराभिनत्ति सैका सेयं पृथिवी सैषा दृबा नाम । माश ५, ३,५,२९ ।

दृशान- व्यचिष्ठमन्नै रभसं दृशानमित्यवकाशवन्तमन्नैरन्नादं दीप्यमानमित्येतत् । माश ६, ३,३,१९ ।

दृषदुपल- हनू एव दृषदुपले । माश १,२,१,१७ ।

देव-

१. अग्नयो वै सर्वे देवाः । जै २,२२५ ।

२. अग्निर्वायुरादित्य एतानि ह तानि देवानाꣳ हृदयानि माश ९,१,१,२३ ।

३. अग्निर्वै देवानामयातयामा ...... । इन्द्रो वै देवानामयातयामा...... । विश्वे वै देवा देवानामयातयामानः । जै २,३२५ ।

४. अथ देवाः । अन्यो ऽन्यस्मिन्नेव जुह्वतश्चेरुस्तेभ्यः प्रजापतिरात्मानं प्रददौ । माश ५,१,१,२; ११,१,८,२ ।

५. अथ देवा ऊर्ध्वं पृष्ठेभ्यो ऽपश्यन् । त उपपक्षावग्रे ऽवपन्त । अथ श्मश्रूणि । अथ केशान् । ततस्ते ऽभवन् । सुवर्गं लोकमायन् । यस्यैवं वपन्ति । भवत्यात्मना । अथो सुवर्गं लोकमेति । तै १,५,६,२ ।

६. अथ ह वै स एव देवस्सोऽमर्त्यो यस्य वीरस्य सतो वीरो वीर्यत्रानाजायते । जै १,९६ ।

७. अथो आहुराश्वेन (साम्ना) वै देवा अश्वा भूत्वा स्वर्गं लोकमायन्निति । जै ३,१४ ।

८. अन्नमु देवानां सोमः । जै ३,१७४ ।
९. अपहतपाप्मानो देवाः (+स्वर्गं लोकमायन् [तैआ.]) । माश २,१,३,४; तैआ २,९,२ ।
१०. अपहतपाप्मानो वै देवाः । ते न स्वपन्ति । जै ३,३५४ ।
११. अभिषिक्तो (राजा) वै देवानाᳪ वरुणः । मै ४,३,७ ।
१२. अर्धमासे देवाः (क्षुधमघ्नन्) । अर्धमासे देवा इज्यन्ते । तैसं २,५,६,६ (तु. तै १,४,९,१)।
१३. अष्टौ वसवः । एकादश रुद्रा द्वादशादित्या इमे ऽ एव द्यावापृथिवी त्रयस्त्रिᳪशौ त्रयस्त्रिᳪशद्वै देवाः प्रजापतिश्चतुस्त्रिᳪशः । माश ४, ५, ७, २ ।
१४ अष्टौ वसव एकादश रुद्रा द्वादशादित्याः प्रजापतिश्च वषट्कारश्च (°दित्या एतावन्तो वै देवाः [तैसं.]) । तैसं ३, ५,२,३; ऐ २, १८;३७;३,२२ (तु.गो २, २, १३; जै २,२०१)।
१५. अस्याᳪ (पृथिव्याम्) वै प्रतिष्ठाय देवा यज्ञमतन्वत । मै ३, ७,१ ।
१६. अहरेव देवाः । माश २, १, ३,१ ।
१७. अहर्वै देवा आश्रयन्त (अश्र° [ऐ.]) रात्रीमसुराः । ऐ ४, ५; गो २, ५, १ ।
१८. अह्नः पूर्वाह्णे देवाः । माश २, १, ३, १ ।
१९. आदित्यस्य वै रश्मयो देवा मरीचिपाः । तैसं ६, ४, ५, ५ ।
२०. आनन्दात्मानो हैव सर्वे देवाः । माश १०, ३, ५, १३ ।
२१. आहुतिभिरेव देवान्प्रीणाति दक्षिणाभिर्मनुष्यदेवान्ब्राह्मणाँ छुश्रुवुषोऽनूचानान् । माश २, २, २, ६ ।
२२. आहुतिभिरेव देवान् हुतादः प्रीणाति । मै १,४,६ ।
२३. इतः प्रदानाद्धि देवा जीवन्त्यमुतः प्रदानान् मनुष्याः । नेत ऊर्ध्वा आहुतयोऽगच्छन्, नामुतो ऽर्वाची वृष्टिः प्रादीयत । जै ३, २१६ (तु. मै १,७,५; जै १,११६;१४५; माश १, २,५, २४) ।
२४ इतः प्रदानाद्धि देवा यज्ञमुपजीवन्ति । मै १, ७, ५ (तु. तैसं ३,२,९७) ।
२५. इतः प्रदाना ह्येते (देवाः) इतः सम्भृताः । मै २, १, ८ ।
२६. ईड्या वा अन्ये देवास्सपर्येण्या अन्ये, देवा ईड्या ब्राह्मणास्सपर्येण्याः । काठ ८,१३ ।
२७. उत्तरावती वै देवा आहुतिमजुहवुः । अवाचीमसुराः । तै २, १,४,१ ।
२८. उदगग्रैभिर् (दर्भैः) देवाः (समुपसरन्ति) । काठसंक ५८ : ५ ।
२९. उपमूलं बर्हिर्दाति, तेन पितृणां यदते मूलं तेन देवानाम् । मै १, १०, १७ ।
३०. उभयं वैतत् प्रजापतिर्यच्च देवा यच्च मनुष्याः । माश ६,८,१,४ ।
३१. उभये ह वाऽइदमग्रे सहासुर्देवाश्च मनुष्याश्च । माश २,३,४,४ ।
३२. ऋच्छति वा एष देवान् य एनान्त्सददि याचति । मै १,५,१२ ।
३३. एकं वा एतद्देवानामहर्यत्संवत्सरः । काठ ३३, ५; तै ३,९,२२,१ ।
३४. एकᳪ ह वै देवा व्रतं चरन्ति यत्सत्यम् (+तस्मादु सत्यमेव वदेत् [माश १४,१,१,३३]) । माश ३,४,२,८;१४,१,१,३३ ।
३५. एकाक्षरं वै देवानामवमं छन्द आसीत्सप्ताक्षरं परमन्नवाक्षरमसुराणामवमं छन्द पञ्चदशाक्षरं परमम् । तां १२, १३,२७ ।

३६. एतं (वायुम्) हि सर्वे देवा अनुयन्ति । तस्माद् यामेष दिशं वाति तां दिशमोषधयो वनस्पतयोऽनुप्रतिहृते । जै १,३६१ ।
३७. एत इति वै प्रजापतिर्देवानसृजत । तां ६, ९,१५; १२,१,४ ( तु. जै १, ९४ ) ।
३८. एत एवापि सर्वे देवा यत् स्तोत्राणि । जै १, २७९ ।
३९. एतदु ह वै देवानां वा देवक्षेत्रं यत्पवमानः । जै ३, २९० ।
४०. एतद्धि देवानां प्रत्यक्षमन्नं यच्चन्द्रमाः । जै १, २४६ ( तु. माश १, ६, ४, ५; २, ४, २७; ११,१,४,४ ।
४१. एतद्वै देवानामपराजितमायतनं यद्यज्ञः । तै ३, ३, ७, ७ ।
४२. एतद्वै देवानां परममन्नं यत्सोमः । एतन्मनुष्याणां यत्सुरा । तै १, ३,३,२-३ ।
४३. एतद्वै देवानां परममन्नं यन्नीवाराः । तै १,३, ६,८ ।
४४. एते वाव देवा प्रातर्यावाणो यदग्निरुषा अश्विनौ । ऐ २,१५ ।
४५. एते वै त्रया देवा यद्वसवो रुद्रा आदित्याः । माश १, ३,४,१२; ५,१,१७;८,३,८ ।
४६. एते वै देवा अहुतादो यद् ब्राह्मणाः । मै १,४,६; गो २,१,६ ।
४७. एते वै देवा मनुजाता मनोयुजो यदिमे प्राणाः । मै ३, ६,९ ।
४८. एषा ह वै देवानां राज्ञी यच्छ्रद्धा । जै २,४२६ ।
४९. ओषधयो वै देवानां पत्न्यः । मै ३,१,८; माश ६,५,४,४ ।
५०. कतमे ते ( देवाः ) त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेति । स (याज्ञवल्क्यः) होवाच । महिमान एवैषाम् । एते त्रयस्त्रि ९ शत्त्वेव देवा इति। माश ११,६,३,४-५ (तु. जै २,७७)।
५१. कतमे ते त्रयो देवा इति । इमऽएव त्रयो लोका एषु हीमे सर्वे देवा इति, कतमौ तौ द्वौ देवावित्यन्नं चैव प्राणश्चेति, कतमोऽध्यर्ध इति योऽयं पवत इति, कतम एको देव इति प्राण इति । माश ११,६,३,१० (तु. जै २, ७७)।
५२. कनीया ९ सो (प्रजापतेः पुत्राः) देवाः । तां १८,१,२ ।
५३. गातुविदो हि देवाः । माश ४,४,४,१३ ।
५४. गृहा वै देवानां द्वादशाहः । तां १०,५,१६ ।
५५. चत्वारो वै देवाना ९ होतार आसन् भूतपतिर्भुवनपतिर्भूतानां पतिर्भूतस्तेषां त्रयो होत्रेण प्रामीयन्ताथो भूत उदशिष्यत् । काठ २५, ७ ।
५६. छन्दोभिर्हि देवाः स्वर्गं लोकं समाश्नुवत । माश ३,९,३,१० ।
५७. जाग्रति देवाः । माश २,१,४,७ ।
५८. जीवं वै देवाना ९ हविरमृतममृतानाम् । माश १, २, १, २० ।
५९. त आसत ( देवाः ) । श्रियं गच्छेम यशः स्यामान्नादाः स्यामेति । माश १४,१,१,३ ।
६०. तत एते देवानां वीरा अजायन्ताग्निर्यो ऽयं पवते (वायुः)सूर्यः । माश २,२,४,१० ।
६१. ततो देवा यज्ञोपवीतिनो भूत्वा दक्षिणं जान्वाच्योपासीदन् । (प्रजापतिः) तान् ( देवान् ) अब्रवीद् यज्ञो वो ऽन्नममृतत्वं व ऊर्क्वः सूर्यो वो ज्योतिरिति । माश २, ४, २, १ ।
६२. ततो वै ते ( देवाः ) सर्व एव ज्योतिरिवासन् । जै २, २९० ।
६३. ततो हाभिराधयत्तरा इव देवा आसुरनभिराधयत्तरा इवासुराः । जै २, १५० ।

६४. तद् देवानां देवत्वं यद् दिवमभिपद्यासृज्यन्त । माश ११, १, ६, ७ ।

६५. तद्धि देवानां यच्छृतम् । माश ३, ८, ३, ७ ।

६६. तद्यदिदमाहुः । अमुं यजामुं यजेत्येकैकं देवम् , एतस्यैव ( स्रष्टुरात्मनः ) सा विसृष्टिरेष उ ह्येव सर्वे देवाः । माश १४, ४, २, १२ ।

६७. तद्यदेतस्मिन्नाके स्वर्गे लोके देवा असीदंस्तस्माद्देवा नाकसदः । माश ८, ६, १, १ ।

६८. तद्यदेनान् ( देवान् ) छन्दांसि मृत्योः पाप्मनो ऽछादयंस्तच्छन्दसां छन्दस्त्वम् । जै १,२८४ ।

६९. तद्वेव देवानां देवत्वं यदस्मै ससृजानाय दिवेवास । माश ११, १, ६, ७ ।

७०. तं (शर्यातिं मानवम्) देवा बृहस्पतिनोद्गात्रा दीक्षामहा इति पुरस्तादागच्छन् । जैउ २,३,१,२ ।

७१. तं ( अग्निम् ) देवा रोहिण्यामादधत ततो वै ते सर्वान् रोहानरोहन् । तै १, १,२,२ ।

७२. तं ( प्राणम् ) भूतिरिति देवा उपासाञ्चक्रिरे, ते बभूवुः । ऐआ २, १,८ ।

७३. तं मा देवा अवन्तु शोभायै पितरोऽनु मदन्तु । तैसं ३, ३, २,२ ।

७४. तस्मात्प्राणा देवाः । माश ७, ५, १, २१ ।

७५. तस्मादाहुर्विष्णुर्देवाना ऽ श्रेष्ठ इति । माश १४, १, १, ५ ।

७६. तस्माद् ( देवाः ) यशः । माश ३, ४, २, ८ ।

७७. तस्मै पितॄन्त्ससृजानाय दिवाभवत् , तेन देवानसृजत, तद् देवानां देवत्वम् । मै ४, २, १ ।

७८. तस्मै मनुष्यान्त्ससृजानाय ( प्रजापतये ) दिवा ( दिवसः ) देवत्रा ( द्योतनशीलः ) अभवत् । तदनु देवानसृजत । तद् देवानां देवत्वम् । तै २, ३,८, ३ ।

७९. तस्मै (वृत्राय, चन्द्रमसे) ह स्म पूर्वाह्णे देवा अशनमभिहरन्ति मध्यन्दिने मनुष्या ऽपराह्णे पितरः । माश १, ६, ३, १२ ।

८०. तस्य ( अमृतस्य ) देवा आयुष्कृतः । मै २, ३, ४ ।

८१. तस्य ( सूर्यस्य ) ये रश्मयस्ते देवा मरीचिपाः । माश ४,१,१,२५ ।

८२. तस्य वा ऽएतस्य वाससः । अग्नेः पर्यासो भवति वायोरनुछादो नीविः । पितॄणा ऽ सर्पाणां प्रघातो विश्वेषां देवानां तन्तव आरोका नक्षत्राणामेव हि वा ऽ एतत्सर्वे देवा अन्वायत्ताः । माश ३, १, २, १८ ।

८३. तस्यै (वाचे) द्वौ स्तनौ देवा उपजीवन्ति स्वाहाकारं च वषट्कारं च । माश १४, ८,९,१ ।

८४. ताः ( भूर्भुवःसुवर्मह इत्येताश्चतस्रो व्याहृतीः ) यो वेद । स वेद ब्रह्म । सर्वे ऽस्मै देवा बलिमावहन्ति । तैआ ७,५,३; तैउ १,५,३ ।

८५. तिर इव वै देवा मनुष्येभ्यः । माश ३,१,१,८; ३,३,४,६ ।

८६. ते देवाः प्रजापतिमेवाभ्ययजन्त । अन्योऽन्यस्यासन्नसुरा अजुहवुः । ......प्रजापतिर्देवानुपावर्तत । गो २,१,७ ।

८७. ते (वसवः) परार्ध्या देवानाम् । ते हि प्रथम आयन् । जै २,२०८ ।

८८. ते मनुष्या एव देवानत्याचरन् । काठ ८,७ ।

८९. ते ये शतं पितॄणां चिरलोकलोकानामानन्दाः । स एक आजानजानां देवानामानन्दः ...... ते ये शतमाजानजानां देवानामानन्दाः । स एकः कर्मदेवानां देवानामानन्दः । ये

कर्मणा देवानपियन्ति ...... ते ये शतं कर्मदेवानामानन्दाः । स एको देवानामानन्दः । तैआ ८,८,२-३; तैउ २,८,२-३ ।

९०. ते (देवाः) रुद्रमब्रुव ँ स्त्वं वै न ओजिष्ठोऽसि । काठ २५,१; क ३८,४ ।

९१. ते (आदित्याः) व्यावृतमगच्छञ्छ्रैष्ठ्यं देवानाम् । काठ २१, ५ ।

९२. ते ( देवाः ) सामन्नेवाश्रयन्त । तैसं २, ५, ७, १ ।

९३. त्रयस्त्रिंशद्वै देवाः सोमपास्त्रयस्त्रिंशदसोमपा ...एते देवाः सोमपा एकादश प्रयाजा एकादशानुयाजा एकादशोपयाजा एते ऽसोमपाः पशुभाजनाः । ऐ २,१८ (तु. काठ ३३,२; क ४१,८; माश १२,६,१,३७) ।

९४. त्रया वै देवाः वसवो रुद्रा आदित्याः । माश ४,३,५,१ ।

९५. त्वत्पितारो अग्ने देवास्त्वामाहुतयस्त्वद्विवाचनाः । तैसं १,५,१०,२ ।

९६. दाम्यतेति न आत्थेति ( देवाः प्रजापतिमब्रुवन् ) । माश १४,८,२,२ ।

९७. दिवं तृतीयं देवान्यज्ञो ऽगात् । ऐ ७, ५ ।

९८. दिवा वै नो ऽभूदिति । तद् देवानां देवत्वम् । तै २,२,९,९ ।

९९. दिवा वै मनुष्या यज्ञेन चरन्ति, नक्तं देवाः । मै ४,५,१; काठ २३,५ ।

१००. दिवे त्वा सूर्याय त्वेत्याह, देवेभ्य एवैतेन करोति । तैसं ६,४,३,१ ।

१०१. देवा एकरूपाः सर्वे शुक्लाः । जै १, २७८ ।

१०२. देवा देवेषु श्रयन्तां प्रथमा द्वितीयेषु श्रयन्तां द्वितीयास्तृतीयेषु श्रयन्तां ये स्थ त्रय एकादशास्त्रयश्च त्रि ँ शच्च त्रयश्च त्री च शता च त्रयश्च त्री च सहस्रा । काठ ३५, ६ ।

१०३. देवाननुवया ँ स्योषधयो वनस्पतयः । माश १,५,२,४ ।

१०४. देवानां वा एतद्यज्ञियं गुह्यं नाम यद्दतुहोतारः । ऐ ५,२३ ।

१०५. देवानां वाऽ एतद्रूपं यत्सक्तवः ( यद्धिरण्यम् [माश १२,८,१,१५]); माश १३,२,१,३ ।

१०६. देवानां वा एषा दिग्यत्प्राची । ष ३, १ ।

१०७. देवानां वै यज्ञ ँ रक्षा ँ स्यजिघा ँ सन् । तां १४,१२,७ ।

१०८. देवानां वै विधामनु मनुष्याः । माश ६,७,४,९; ९,१,१,१९ ।

१०९. देवान्वाऽ एष उपावर्तते यो दीक्षते स देवानामेको भवति । माश ३,१,१,८;९ ।

११०. देवान्वाऽ एष अपोत्क्रामति यो दीक्षते । ३,१,१,१ ।

१११. देवान् ह्येष उपावर्तते यो वाजपेयेन यजते, स देवतानामेवैको भवति । काश ६,२,३,९ ।

११२. देवा यज्ञियाः (महिमानः [ माश १०,२,२,२]) । तैसं २, ५, ९, ६; माश १,५,२,३ ।

११३. देवा वै छन्दा ँ स्यब्रुवन् युष्माभिः स्वर्गं लोकमयामेति । तां ७,४,२ ।

११४. देवा वै देवाश्वान् देवरथेषु युक्त्वेमान् लोकानभ्यारोहन् । जै ३,३१३ ।

११५. देवा वै नृचक्षसः (स्वः [माश] १, ९, ३, १४) । माश ८,४,२,५ ।

११६. देवा वै पवमानाः (+प्रजाः पृष्ठोक्थानि [जै १,२७४]) । जै १,२७४;२७६ ।

११७. देवा वै प्रजापतेरजायन्त । जै १, ८ ।

११८. देवा वै प्रत्नम् (भूताः [काठ २५,६]) । मै १, ५, ५; काठ ७,४;२५,६ ।

११९. देवा वै मृत्योरबिभयुस्ते प्रजापतिमुपाधाव ँ स्तेभ्य एतेन नवरात्रेणामृतत्वं प्रायच्छत् । तां २२, १२, १ ।

१२०. देवा वै यशस्कामाः सत्रमासत । तां ७, ५, ६ ।
१२१. देवा वै श्रमेण तपसा व्रतचर्येणासुरान् रक्षांस्यभ्यभवन् । जै ३,३५२ ।
१२२. देवा वै सर्पाः । तेषामियं ( पृथिवी ) राज्ञी । तै २, २, ६, २ ।
१२३. देवा वै सर्वे सहान्तर्वन्तो ऽभवं स्ते सर्वे सह व्यजायन्त । मै ४, २, १३ ।
१२४. देवा श्वोभूते ( आहवनीयम् ) प्राञ्चमनयन् । काठसंक १४:५ ।
१२५. देवा ह धर्मणा ध्रुवाः । काठ ३५, ७ ।
१२६. देवा हविष्मन्तः । तैसं २, ५, ७, ४ ।
१२७. देवा ह्येव बृहद् (भूताः [मै ३.८.५]) । मै ३,८,५;८ ।
१२८. द्वया उ ह वा अग्रे प्राजापत्या आसुर्देवाश्चैवासुराश्च । जै २,१५० ।
१२९. द्वया वै देवाः । अहैव देवा अथ ये ब्राह्मणाः शुश्रुवां सो ऽनूचानास्ते मनुष्यदेवाः । माश २, २, २, ६; ४, ३,४, ४ ।
१३०. द्वया वै देवा यजमानस्य गृहमागच्छन्ति, सोमपा अन्येऽसोमपा अन्ये, हुतादो ऽन्ये ऽहुतादो ऽन्ये । एते वै देवा अहुतादो यद् ब्राह्मणाः । मै १, ४, ६ ।
१३१. न पुरा सूर्यस्योदेतोर्मन्थितवा असुर्यो वि३ देवा ( विदेवः ) आधीयन, उद्यत्सु रश्मिषु ( अग्निः ) मथ्यस्तत् सदेवः सेन्द्रः ( देवाः=रश्मयः, इन्द्रः=सूर्यः) । मै १, ६,१० ।
१३२. नमस्कारो देवानाम् । मै १, १०, १८; ३, ९, १; काठ ३६, १३ ।
१३३. नरो वै देवानां ग्रामः । तां ६, ९, २ ।
१३४. न वै देवा अहुतस्यादन्ति (°स्याश्नन्ति [तै.]) । जै ३,२००; तै १, ६, ६, ४ ।
१३५. न वै देवाः स्वपन्ति । माश ३, २, २, २२ ।
१३६. न ह वा अनार्षेयस्य (अव्रतस्य [ऐ., कौ ३. १]) देवा हविरश्नन्ति । ऐ ७,११; कौ ३,१;२ ।
१३७. न ह वै देवानां देवक्षेत्रमभ्यारुह्य बिभेति, नाशनायति, न पिपासति, नार्तिमार्च्छति । सुज्ञानं ह वाव देवानां देवक्षेत्रम् । जै २, ३८४ ।
१३८. नहि देवा अश्रु कुर्वन्ति । मै २, १, १० ।
१३९. नहि नमस्कारमति देवाः । शांआ १, ५ ।
१४०. नियुतो देवानां विशः । काठ १२, १३ ।
१४१. पञ्चधा वै देवा व्युत्क्रामन् अग्निर्वसुभिः, सोमो रुद्रैः, इन्द्रो मरुद्भिः, वरुण आदित्यैः, बृहस्पतिर्विश्वैर्देवैः । गो २, २, २ ।
१४२. परं वा एतद्देवानामन्नं यत्सोमः । काठ १४, ६ ।
१४३. परोक्षं वै देवाः । माश ३, १, ३, २५ ।
१४४. परोऽक्षकामा हि देवाः । माश ६, १,१, २; ७, ४, १, १० ।
१४५. परोक्षप्रिया इव हि देवा भवन्ति प्रत्यक्षद्विषः । गो १, २, २१ ।
१४६. पशवो वाव तेषां ( देवानाम् ) वामं वस्वासीत् । जै १, १३८ ।
१४७. पशुना वै देवाः सुवर्गं लोकमायन् । तैसं ६, ३, १०, २ ।
१४८. पिता देवानाम् ( आदित्यः ) असुरो विपश्चित् । मै ४, १४, १४ ।
१४९. पृथिवी वै सर्वेषां देवानामायतनम् । माश १४, ३, २, ४ ।

१५०. पौर्णमासीस्तोमा ह खलु वै देवाः । जै २, ३९३ ।

१५१. प्रजापतिर्वै पिता देवानां स जनिता स विभूवसुः । जै ३, १३५ ।

१५२. प्रजापतिश्रेष्ठा वै देवाः । जै २, ३७१ ।

१५३. प्रजापते रेतो देवाः, देवानां रेतो वर्षम् । ऐआ २, १, ३ ।

१५४. प्राचीनप्रजनना वै देवाः प्रतीचीनप्रजनना मनुष्याः । माश ७, ४, २, ४० ।

१५५. प्राची हि देवानां दिक् । माश १, २, ५, १७ ।

१५६. प्राच्या दिशा देवा ऋत्विजो मार्जयन्ताम् । मै १, ४, २; काठ ५, ५ ।

१५७. प्राजापत्या देवाः । मै ४, ८, ९ ।

१५८. प्राणा वै देवा अपाव्याः (द्रविणोदाः [मै., माश.]) मै ३, २, १; तै ३, ८, १७,५; माश ६, ७, २, ३ (तु. माश ६, ३, १, १५) ।

१५९. प्राणा वै देवा धिष्ण्यास्ते हि सर्वा धिय इष्णन्ति । माश ७, १, १, २४ ।

१६०. प्राणा वै देवा मनुजाताः (मनोजाता मनोयुजः [तैसं.]) । तैसं ६, १, ४, ५; काठ २३, ५ ।

१६१. प्राणा वै देवा मरीचिपाः । तानेव प्रीणाति । काठ २७, १; क ४२, १० ।

१६२. प्राणा वै देवा वयोनाधाः प्राणैर्हीद ९ सर्वं वयुनं नद्धमथो छन्दा ९ सि वै देवा वयोनाधाश्छन्दोभिर्हीदं ९ सर्वं वयुनं नद्धम् । माश ८, २, २, ८ ।

१६३. प्राणेन वै देवा अन्नमदन्ति । अग्निरु देवानां प्राणः । माश १०, १, ४, १२ ।

१६४. प्राणैर्वै देवा स्वर्गं लोकमायन् । जै २, ३०१; ३४७ ।

१६५. प्रियो वै देवानां दीक्षितः । मै ३, ६, ९ ।

१६६. बहिष्पवमानमेव देवानामुद्धारः । जै १, २७८ ।

१६७. बिभ्यति वै देवेभ्यः पशवः । काठ ७, ७ ।

१६८. बृहद्धि देवानां नमः पितॄणाम् । काठ २८, ७ ।

१६९. बृहस्पतिर्देवानां पुरोहित आसीच्छण्डामर्कौ (°सीदुशना काव्योऽ [जै.]) असुराणाम् । काठ २७,८; जै १, १२५ ।

१७०. बृहस्पतिर्वा आङ्गिरसो देवानां ब्रह्मा । गो २, १,१ ।

१७१. बृहस्पतिर्वै देवानामुद्गाता । तां ६, ५, ५ ।

१७२. बृहस्पतिर्वै देवानां पुरोहितः (+ एष वा ऽएतस्य पुरोहितो भवति तस्माद् बार्हस्पत्यो (चरुः) भवति [माश.]) । काठ १४, ५; ऐ ८, २६; जै २, १२८; माश ५, ३, १,२ ।

१७३. बृहस्पतिर्वै (बृहस्पतिर्ह वै [कौ.]) देवानां ब्रह्मा । कौ ६,१३; माश १,७,४,२१;४,६,६,७ ।

१७४. ब्रह्मा (परमेश्वरः) देवानाम् । तै ३,४,११,१; काठ २३,१२; तैआ १०, १०,१ ।

१७५. ब्राह्मणो ह वाव देवानां पात्रम् ······ तद्यथा ह वै शुद्धेन शुचिना पात्रेण पिपासन्त्येवं ह वाव देवा ब्राह्मणेन शुद्धेन शुचिना पिपासन्ति । जै १,२८२ ।

१७६. मधु वै देवानां परममन्नाद्यम् । तैसं ७,५,१०,१ ।

१७७. मध्यन्दिने मध्यरात्रे देवानां (व्रतम्), ततस्ते ऽभवन्त्सुवर्गं लोकमायन् । तैसं ६,२,५,४ ।

१७८. मनुष्या भूता दीक्षन्ते देवा भूत्वोत्तिष्ठन्तीति । जै २, २३ ।

१७९. मनो देवः । गो १,२,१० ।

१८०. मनो (+ह वै [माश २,१,४,१; ४,१,११]) देवा मनुष्यस्याऽऽजानन्ति । माश ३,४,२,६ ।
१८१. मरुतो वै देवानां विशः (+ते वैश्यस्य प्रत्येनसः [काठ.]) । काठ ८,४; ऐ १, ९; तां ६, १०,१०; १८,१,१४ ।
१८२. मर्त्या ह वाऽ अग्रे देवा आसुः । स यदैव ते संवत्सरमापुरथामृता ( ब्रह्मणापुर° [माश ११, २,३,६]) आसुः । माश ११,१,२,१२; २,३,६ ।
१८३. मिता देवाः । अष्टौ वसव एकादश रुद्रा द्वादशादित्याः । जै १,२७९ ।
१८४. मुखं देवानामग्निः । क ३०,४ ।
१८५. य एवं विद्वानुदगयने प्रमीयते देवानामेव महिमानं गत्वाऽऽदित्यस्य सायुज्यं गच्छति । तैआ १०, ६४,१ ।
१८६. य एवापूर्य्यते तं (अर्धमासम्) देवा उपायन् । माश १,७,२,२२ ।
१८७. य एवापूर्यते ऽर्धमासः स देवाः । माश २,१,३,१ ।
१८८. यज्जुहोति तद्देवानाम् । काठ ६, ५ ।
१८९. यज्ञ उ (यज्ञो वै [माश ९,३,२,७]) देवानामन्नम् । माश ८,१,२,१०; ९,३,२,७ ।
१९०. यज्ञ उ देवानामात्मा । माश ८,६,१,१० ।
१९१. यज्ञमस्य (प्रजापतेः) देवा उपजीवन्ति । मै १,६,५ ।
१९२. यज्ञमु ह वाव देवानां श्रीः । जै २,१३९ ।
१९३. यज्ञेन वै तद्देवा यज्ञमयजन्त यदग्निना ऽग्निमयजन्त ते स्वर्गं लोकमायन् । ऐ १, १६ ।
१९४. यज्ञेन वै देवा दिवमुपोदक्रामन् । माश १,७,३,१ ।
१९५. यज्ञेन वै देवाः सुवर्गं लोकमायन् । तैसं ६,३,४,७ ।
१९६. यज्ञेनैवेड्यान् (देवान्) प्रीणात्यन्वाहार्येण सपर्येण्यान् (देवान् ब्राह्मणान्), तस्योभये (देवाः) प्रीता यज्ञे भवन्ति । काठ ८,१२ ।
१९७. यज्ञो देवान् गच्छतु । मै १,४,१; काठ ५,३ ।
१९८. यज्ञो भूत्वा (प्रजापतिः) देवान् बिभर्त्ति । जै १,३१४ ।
१९९. यज्ञो वै देवेष्वासीद् दक्षिणा पितृषु । काठ २३, ४ ।
२००. यत्प्राङ् पिन्वते । तद्देवानाम् । तैआ ५,८,४ ।
२०१. यत्प्राचीनं धिष्ण्येभ्यस्तद्देवानाꣳ, यत्प्रतीचीनं तन्मनुष्याणाम् । मै ३,८,१० ।
२०२. यत्र पशवस्तद्देवाः । मै ४,२,६ ।
२०३. यथा वै मनुष्या-एवं देवा अग्र आसन् ······स एतं चतुर्विꣳशतिरात्रमपश्यन्, तमाहरन्, तेनायजन्त ततो वै तेऽवर्तिं पाप्मानं मृत्युमपहत्य दैवीꣳ सꣳसदमगच्छन् । तैसं ७,४,२,१ ।
२०४. यदस्मिन्विश्वे देवा असीदंस्तस्मात्सदो नाम, त उ एवास्मिन्नेते ब्राह्मणा विश्वगोत्राः सीदन्ति । माश ३,५,३,८;६,१,१ ।
२०५. यदि प्रातस्सवने स्कन्देद्देवाञ्जनमगन्यज्ञस्तस्य···द्रविणेहागम्या इत्यनुमन्त्रयेत । काठ २५,७ ।
२०६. यदि हविर्भूतं बहिष्परिधि स्कन्देद् भूपतये स्वाहा, भुवनपतये स्वाहा, भूतानां पतये स्वाहेत्यनुमन्त्रयेतैते वै देवास्स्कन्नभागाः । काठ २५,७ ।
२०७. यदु ह किं च देवाः कुर्वते स्तोमेनैव तत्कुर्वते यज्ञो वै स्तोमः । माश ८,४,३,२ ।

२०८. यदेकामन्वाह तेन पितृणां, यत्त्रिस्तेन (यत्त्रिरन्वाह तेन [काठ.]) देवानाम् । मै १,१०,१८; काठ ३६, १२ ।

२०९. यद्देवानां कर्माऽऽसीदार्ध्यत तत् । तैसं ३,४,६,१ ।

२१०. यद्वदे त्वेति तेन देवेभ्यो यन्मनसे त्वेति तेन मनुष्येभ्यः । मै ४,५,३ ।

२११. यद्वै मनुष्याणां प्रत्यक्षन्तद् देवानां परोक्षमथ यन्मनुष्याणां परोक्षन्तद् देवानां प्रत्यक्षम् । तां २२,१०,३ ।

२१२. यमप्येतर्हि देवानां पश्यन्ति ज्योतिरिवाद्दश्मेत्येवाहुः । जै २,२९० ।

२१३. यशो देवाः । माश २,१,४,९ ।

२१४. यादृगह वै मनुष्यो देवेभ्यः करोति तादृगस्मै देवाः कुर्वन्ति । जै २,३८६;३९० ।

२१५. या (इडा) प्राणेन देवान् दाधार······ । तैसं १,७,२,१ ।

२१६. यावन्त एवाग्रे देवास्तावन्त इदानीम् । तां ६,९,१६ ।

२१७. युञ्जन्तु त्वा मरुतो विश्ववेदस इति युञ्जन्तु त्वा देवा इत्येवैतदाह । माश ५,१,४,९ ।

२१८. ये देवा दिव्येकादश स्थ पृथिव्यामध्येकादश स्थ । अप्सुक्षितो महिनैकादश स्थ ते देवासो यज्ञमिमं जुषध्वम् । मै १,३,१३ ।

२१९. ये देवा यज्ञहनः पृथिव्यामध्यासते अग्निर्नस्तेभ्यो रक्षतु गछेम सुकृतो वयम् । ये देवा यज्ञमुषः पृथिव्यामध्यासते, अग्निर्नस्तेभ्यो रक्षतु गछेम सुकृतो वयम् । मै १, ४, ३ (तु. तैसं ३, ५, ४, १; काठ ५, ६) ।

२२०. ये देवा यज्ञहनो यज्ञमुषो ऽन्तरिक्षेऽध्यासते । वायुर्मा तेभ्यो रक्षतु । तैसं ३, ५, ४, १; काठ ५, ६ ।

२२१. ये वै देवानां राजानस्ते राजन्यस्य प्रत्येनस इन्द्रो वरुणो धाता त्वष्टा । काठ ८,४ ।

२२२. ये (देवाः) स्थ त्रय एकादशास्त्रयश्च त्रि ९ शच्च त्रयश्च त्री च शतास्त्रयश्चत्री च सहस्रास्त इमं यज्ञमवन्तु ते मामवन्तु । क ४८, ७ ।

२२३. यो देवेष्वधि देव एक आसीत् कस्मै देवाय हविषा विधेम । तैसं ४, १, ८, ६ ।

२२४. यो वै देवानां पथैति स ऋतस्य पथैति । माश ४, ३, ४, १६ ।

२२५. यो वै देवानां मधु वेद मधव्यो भवति । वामदेव्यं (साम) वामदेवानां मधु । मधव्यो भवति य एवं वेद । जै १, १४४ ।

२२६. रश्मिरसि······ देवा वै क्षयः । तैसं ३, ५,२, २ ।

२२७. रुद्रो देवानामोजिष्ठः । काठ २४, ४; क ३७, ५ ।

२२८. रुद्रो वै ज्येष्ठश्च श्रेष्ठश्च देवानाम् । कौ २५, १३ ।

२२९. रुद्रो वै देवानां क्षेपिष्ठः । काठ २४, ३ ।

२३०. वत्सतर्यो देवानां पत्नीभ्यः । मै ३, १३, ६ ।

२३१. वरुणो वै देवानां राजा । मै १, ६, ११; २, २, १; माश १२, ८, ३, १० ।

२३२. वसन्तो ग्रीष्मो वर्षाः । ते देवा ऋतवः । माश २, १, ३, १ ।

२३३. वाक् च वै मनश्च देवानां मिथुनम् । ऐ ५, २३ ।

२३४. वागिति सर्वे देवाः । जैउ १, २, २,२ (तु. गो १, २,१०; माश १४, ४,३, १३) ।

२३५. वाग्द्वात्रिंशी स्वरस्त्रयस्त्रिंशस्त्रयस्त्रिंशद् देवाः । गो २,२,१३ ।
२३६. वाग्वै देवानां पुरान्नमास । तै १, ३, ५, १ ।
२३७. वायुर्वै देवः । जैउ ३, १, ४, ८ ।
२३८. विद्वा ऽसो हि देवाः । माश ३,७,३,१० ।
२३९. विप्रा विप्रस्येति प्रजापतिर्वै विप्रो देवा विप्राः । माश ६, ३,१,१६ ।
२४०. विश्वे वै देवा देवानां यशस्वितमाः । तै ३, ८, ७, २; माश १३, १, २, ८ ।
२४१. वैभ्राजा देवाः । मै ३,८, ५ ।
२४२. शतं वै तल्प्या राजपुत्रा देवा आशापालाः । तै ३, ८,९,३ ।
२४३. श्रुतं वै देवाना ऽ हविर्नाश्रृतम् । माश ३, २,२,१० ।
२४४. श्रुतकामा हि देवाः । मै ४,१, ३;९; काठ ३१,२; क ४७, २;७ ( तु. तै ३, २,८,१२) ।
२४५. शैशिरेणर्तुना देवाः । त्रयस्त्रि ऽ शेऽमृत ऽ स्तुतं सत्येन रेवतीः क्षत्रम् । हविरिन्द्रे वयो दधुः । तै २,६,१९,२ ।
२४६. श्रद्धया देवो देवत्वमश्नुते । तै ३,१२,३,१ ।
२४७. श्रीर्देवाः । माश २,१,४,९ ।
२४८ श्वैत्रेयोऽरुणस्तूपरो (ऋषभः) देवानामासीत् । काठ १३,४ ।
२४९. संवत्सरः खलु वै देवानामायतनम् ( देवानां पूः [तै.]) । तैसं २,२,६,१; तै १,७,७,५ ।
२५०. संवत्सरो वै देवानां गृहपतिः (जन्म [माग.]) । तां १०,३,६; माश ८,७,३,२१ ।
२५१. स (प्रजापतिः) इमं रसं पीळयित्वाऽपनिधायोर्ध्वोऽद्रवत् । तं द्रवन्तं चत्वारो देवानामन्वपश्यन्निन्द्रश्चन्द्रो रुद्रस्समुद्रस्तस्मादेते श्रेष्ठा देवानां ह्येनमन्वपश्यन् । जैउ १,२,१,६-७ ।
२५२. स (आदित्यः) एतं त्रयोदशरात्रमपश्यत् । तमुपैत् । ततो वै सर्वेषां देवानां श्रैष्ठ्यमगच्छत् । त्रयोदशो मासो भूत्वेदं सर्वमभ्यारोहत् । संवत्सरो वा इदं सर्वम् । जै २,३३४ ।
२५३. सकृद्धाव देवाः सर्वेण साक ऽ स्वर्गं लोक ऽ समारुरुक्षन् । मै १,६,१३ ।
२५४ स जुहोति स यजते तद् देवा उपजीवन्ति । जै २,४२६ ।
२५५. सत्यमया उ ( सत्यसंहिता वै [ऐ.] ) देवाः । ऐ १,६; कौ २,८ (तु. काश ४,९,३;१८) ।
२५६. सत्येन (प्रजापतिः) देवानसृजत । काठ ९, ११ ।
२५७. स ( प्रजापतिः ) देवानसृजत । तदस्य प्रियमासीत् । तत् सुवर्ण ऽ हिरण्यमभवत् । तै २,२,४,५ ।
२५८. स (यज्ञः) देवानामधिपतिर्बभूव । तैसं १.६,६,४; ३, २,७,२ ।
२५९. स (अयास्य आङ्गिरसः) प्राणेन देवान् देवलोकेऽदधात् । जैउ २, ३,२.३ ।
२६०. स (सूर्यः) यत्रोदङ्ङावर्त्तते । देवेषु तर्हि भवति देवांस्तर्ह्यभिगोपायत्यथ यत्र दक्षिणावर्त्तते पितृषु तर्हि भवति पितॄंस्तर्ह्यभिगोपायति । माश २,१,३,३ ।
२६१. स यदेव यजेत । तेन देवेभ्य ऋणं जायते तद्ध्येभ्य एतत्करोति यदेनान्यजते यदेभ्यो जुहोति । माश १,७,२,२ ।
२६२. सर्वे वै देवास्त्विषिमन्तो हरस्विनः । तै ३,८, ७,३ ।
२६३. सर्वेषां वाऽएष भूताना ऽ सर्वेषां देवानामात्मा यद्यज्ञः । माश १४,३,२,१ ।

२६४. सविता वै देवानामधिपतिः। काठ २६,२; क ४०,५।

२६५. स ह (असितो दैवलः) पूर्वाह्ण एव देवानां समित्यामास, मध्यन्दिने मनुष्याणां द्रुपदस्य वार्द्धविष्णस्य, अपराह्णे पितॄणाम्। जै ३,२७१।

२६६. स ह स न मनुष्यो य एवंविद्देवाना ९ हैव स एकः। माश १०, ३,५,१३।

२६७. साम देवानामन्नम्। जै १, ७१; तां ६, ४, १३।

२६८. साम वै देवाः प्रजाः शस्त्राणि। जै १,२७७; २७९।

२६९. सा या पूर्वाहुतिः। ते देवाः। माश २,३,२,१६।

२७०. सा हैषा चन्द्रमा एव यद् रेतस्या। स एष रेतसः प्रतिरूपो देवभक्षः सोमो राजा (चन्द्रमाः)। सर्वस्यास्य रसः समुदूढः। तं सर्वे देवा उपजीवन्ति। जै १,३१६।

२७१. सूर्यो वै सर्वेषां देवानामात्मा। माश १४,३, २,९।

२७२. सोमो वै देवानां राजा। काठ १३,३।

२७३. सोऽसुरान् (पूर्वम्) असृजत (प्रजापतिस्तदनु) स देवानसृजत। तै २, २, ४, ४-५।

२७४. स्तोमा देवाः। जै १,९०।

२७५. स्वरान्तेन वै त्रियहेण प्रजापतिर्देवानसृजत, निधनान्तेन पितॄन्, इळान्तेन मनुष्यान्। जै ३, ३११।

२७६. स्वरेण वै देवेभ्यो (+ऽन्ततो [जै १, १६६]) ऽन्नाद्यं प्रदीयते। जै १,१२७;१६६।

२७७. हयो (+भूत्वा [माश.]) देवानवहत्। तैसं ७, ५, २५, २; माश १०, ६,४, १।

२७८. हविर्वा ऽ एष देवानां यो दीक्षते तदेनमन्तर्जम्भ ऽ आदधाते तत्पशुनात्मानं निष्क्रीणीते। माश ३, ३, ४, २१।

२७९. हविर्वै देवानां ९ सोमः। माश ३, ५, ३, २।

२८०. हव्यवाहन्या (तन्वा) देवेभ्यो हव्यं वहति (अग्निः)। मै १, १०, १८; काठ ३६, १३।

२८१. हुतादो वा अन्ये देवा अहुतादो ऽन्ये (+तानग्निचिद्देवोभयान् प्रीणाति दध्ना मधुमिश्रेणैता आहुतीर्जुहोति भागधेयेनैवैनान् प्रीणाति [तैसं.])। तैसं ५,५, १०,५; काठ २१, ७। [°व– अग्नि– ७३,१०७;१८६;१८८;१९२;१९३;३०४;५४३;५४५;६२८; ६३८;७११;७६८; अग्निजिह्व–; अङ्गिरस्– ३३; अज– ४०; अदिति– ४५; अध्रिगु– २; अनिरुक्त– ९; अनृत– २६; ३३; अन्तरिक्ष– १५५; अन्न– ६२; १०४; अन्नाद्य– २८; अन्वाहार्य– २; अप्– ७६; ९९; अभिगु– ३; अमावास्या– २६;अमृत– १२;१३;१९;२५;२६;२९;३२; अयवन्–; अर्धमास– १३; अर्वाग्वसु– ३; अर्वावसु– १; अश्विन्– १४; अष्टरात्र– २; असुर– १;११-१३; १५;१८-२०; २२;२५;२८;३२;३६;३८;३९;४४;४६;४७; ५०;५४; ६२;६८; ६९;७०;७७; अहन्– १८; अहोरात्र– २९; आग्नेयी– ९; आज्य– ९; आज्यप–; आदित्य– १५; १२६;३०५; आयुष्कृत्–; आहवनीय– १४;२१; आहिताग्नि– २; इन्द्र– ९७;१३५;१८०; १८१; २९७;३३३; इन्द्राग्नि– १३;१९;२२; इन्द्रिय– २०; इष्टका– १; उपवीत–; उशनस्– १; ऊर्ज्– ४; ऊर्ध्व,र्ध्वा– २२; ऋतु– २५; काम– १३;काम्या–;गो– ५६; गौरिवीत– २; घृत– ८;१०;१४; चक्षुस्– १४;५९; ७५; चन्द्रमस्– ६५; छन्दस्– ७;१०;३२;३३;३५;३६;११४;११५; जनि– १; तपस्– १२; तमस्– ३; त्रिषत्य–; दक्षिण,णा– २९; दक्षिणा (दिश्)–; दधि–; दाक्षायणयज्ञ– १; दिव्– १४;१५;१०२;१३८;१५८ द्र.]।

देव-क्षेत्र-

१. देवक्षेत्रं वा एते ऽभ्यारोहन्ति ये स्वर्णिधनमुपयन्ति । तां ५, ७, ८ ।

२. देवक्षेत्रं वै षष्ठमहः । गो २, ६,१० (तु. ऐ ५ १) ।

३. देवक्षेत्रं वै स्तोमश्च यजुश्च । काठ २१, १ ।

४. पात्राणि वा व देवक्षेत्रम् । मै ४, ५, ६ ।

देव-गव->देवगवी- एता वै सप्त[1] देवगव्यः[1] । मै ४, २,६ ।

देव-गृह- देवगृहा वै नक्षत्राणि । तै १, ५, २,६ ।

देव-च्छन्दस्-

१. देवच्छन्दसं वा एका च तिस्रश्च । तैसं ५,४, ८, ५ ।

२. देवच्छन्दसं वै चतस्रश्चाष्टौ च । काठ २१, ११ ।

देव-ता-

१. अग्निं वा अन्वन्या देवता इन्द्रमन्याः । क ४८,१६ ।

२. अग्निं गृह्णाति, स एवायतने देवताः परिगृह्णाति, ताः श्वोभूते यजते । तैसं १,६,७,१-२ ।

३. अग्निं देवतानां प्रथमं यजेत् । क ४८, १६ ।

४. अग्नौ हि सर्वा देवता इज्यन्ते । काठ २५, ३ ।

५. अथो खल्वाहुर्यस्यै वाव कस्यै च देवतायै पशुरालभ्यते सैव मेधपतिरिति । ऐ २,६ ।

६. अष्टौ वसव एकादश रुद्रा द्वादशादित्या वाग्द्वात्रिꣳशी स्वरस्त्रयस्त्रिꣳशस्त्रयस्त्रिꣳशद्देवताः । काठ ३७,१७ ।

७. एकादश प्रयाजा एकादशानुयाजा एकादशोपयज एतावतीर्वै देवताः । काठ २६, ९; क ४१, ७० ।

८. एका ह वाव कृत्स्ना देवता ऽर्धदेवता एवान्याः[2] । अयमेव यो ऽयं (वायुः ⌊प्राणः⌋) पवते । एष एव सर्वेषां देवानां ग्रहाः । जैउ ३,१,१, १-२ ।

९. एता वै सर्वा देवता यद् वसतीवर्यः । जै १, ३४२ ।

१०. एता ह वै देवताः सवस्येशते । तस्माद्देवस्वो नाम तदेनमेता एव देवताः सुवते ताभिः सूतः श्वः सूयते । माश ५, ३, ३, १३ ।

११. कतमैका देवतेति, प्राण इति । जै २, ७७ ।

१२. तद्वै देवधुरश्च मनुष्यधुरश्च संधाय तं मृत्युं तरति यः स्वर्गलोके । न हैवंवित् पुनर्म्रियते । देवतास्वात्मानमुपसंदधाति । जै १, २७० ।

१३. तस्मै वा एतस्मै प्राणाय ब्रह्मण एता देवता ( मनश्चक्षुश्श्रोत्रवाचः ) अयाचमानाय बलिं हरन्ति । शांआ ४, १; कौउ २, १ ।

१४. ता एता देवताः प्राणापानयोरेव निविष्टाश्चक्षुः श्रोत्रं मनो वागिति, प्राणस्य ह्यन्वपायमेता अपियन्ति । ऐआ २, ३, ३ ।

---

१. =वसीयसी, श्रेयसी, भूयसी, चित्ता, दधृषी, इडा, सूनृता ।

२. अन्या देवताः – आदित्यः, चन्द्रमाः, नक्षत्राणि, अग्निः, अहः, रात्रिः, दिशः, पर्जन्यः, आपः, ओषधयः, वनस्पतयः, वाक्, मनः, चक्षुः, श्रोत्रम् ।

१५. तेऽङ्गिरस आदित्यानब्रुवन् कतिभ्यो हव्यं वक्ष्याम इति त्रयस्त्रि ९ शत इत्यब्रुवन्। दश वसव इन्द्र एकादशो दश रुद्रा इन्द्र एकादशो दशादित्या इन्द्र एकादशः। त्रि ९ शदेता देवतास्त्रि ९ शदक्षरा विराट्, तेनैता देवतास्तर्पयति यास्त्रि ९ शत्। द्व्यक्षरो वषट्कार एकाक्षरा वाक्। तेनैन्द्रम्। क ४४,३; (तु. काठ २८,३)।

१६. त्रयस्त्रि ९ शद्देवताः (+...... प्रजापतिश्चतुस्त्रि ९ शः [काठ ३७, ७]) । मै ३, ४, २; काठ ८, ६; २०, १३; ३३, ८; तां ४, ४, ११ (तु. तैसं २,४,२,२; ५, ४,१,२; जै २, २२;१२९;२१०;२७५;३०८;३०९;३४८;३५५; तां ६,२,५)।

१७. त्रयस्त्रिंशद्वै देवताः (+......अश्वश्चतुस्त्रिंशः, प्रजापतेर्वा एतद्रूपं यदश्वः [जै २, १२९]) तै १, २, २, ५; ८, ७, १; २, ७, १, ३-४ (तु. जै २, २२५; ३८२; ३, १३९)।

१८. त्रयस्त्रिंशद्वै देवतास्सोमपास्त्रयस्त्रि ९ शदसोमपाः अष्टौ वसव एकादश रुद्रा द्वादशादित्या वषट्कारश्च प्रजापतिश्च ते सोमपाः, प्रयाजा अनुयाजा उपयजस्ते ऽसोमपास्तस्मात्ते बहिर्यज्ञं क्रियन्ते, सोमेन वै तद्देवान् सोमपान् प्रीणाति, पशुनासोमपान्। काठ २६, ९।

१९. त्रयस्त्रिंशद्वै सोमपा देवता याः सोमाहुतीरन्वायत्ताः। अष्टौ वसव एकादश रुद्रा द्वादशादित्या इन्द्रो द्वात्रिंशः प्रजापतिस्त्रयस्त्रिंशस्त्रयस्त्रिंशत्पशुभाजनाः। कौ १२, ६।

२०. देवता एव पूर्वया (आहुत्या) ऽवरुन्ध इन्द्रियमुत्तरया, देवलोकमेव पूर्वयाऽभिजयति मनुष्यलोकमुत्तरया। तैसं २,५,५, ३-४।

२१. देवता एव पृष्ठैरवरुन्धते। तैसं ७,४,२,३।

२२. देवता (+ वै [काठ.]) यजत्राः। काठ २६,८; क ४१,६।

२३. देवता वै यज्ञस्य शर्म यज्ञो यजमानस्य। मै ३, ६,६।

२४. देवता वै विश्वा धामानि। काठ २४,७; क ३७, ८।

२५. देवतैव मेधपतिरिति। कौ १०,४।

२६. न प्रजापतेरन्या पूर्वा देवतास्ति। जै २,१७४।

२७. पञ्च देवता (पथ्याम्, स्वस्तिम्, अग्निम्, सोमम्, सवितारम्, अदितिम्) यजति। पञ्चदिशो दिशां प्रज्ञात्यै। तैसं ६,१,५,१ (तु. काठ २३, ८)।

२८. प्रजापतिः (+ वै [जै.]) सर्वा देवताः। तैसं २,१,४,३; ३,४, ३,४; ५, ९, ३; ७, ५,६, ३; जै १,३४२; तै ३,३,७,३।

२९. प्राणा वै देवताः। मै २,३,५; काठ ११, ८।

३०. बहूनां यजमानानां यो वै देवताः परिगृह्णाति स एनाः श्वो भूते यजते। तैसं १,६,६,१।

३१. बहूना ९ समानमहर्यजमानानां यो वै देवताः पूर्वेद्युर्गृह्णाति, तस्य श्वो भूते यज्ञमागच्छन्ति। काठ ३१, १५।

३२. ब्राह्मणो वै सर्वा देवताः। तै १, ४,४, २; ४।

३३. मध्यायतनो वै प्रजापतिर्देवतानाम्। जै २,३४९।

३४. मुखं वा अग्निर्देवतानाम्। जै ३,३००।

३५. यतो यज्ञस्ततो देवताः । मै ३, ६,६ ।

३६. यत्र दीप्यमानं (अग्निम्) परा पश्येत्, ततः (दक्षिणाग्निम्) आहरेत्, देवता वा एता आविर्भवन्ति, ता एवावरुन्द्धे। काठ ८ १२ ।

३७. यन्नवनीतेनाभ्यङ्क्ते सर्वा एव देवताः प्रीणाति। तैसं ६,१, १,५ ।

३८. यां वै देवतामृगभ्यनूक्ता यां यजुः सैव देवता सक्सौ देवता तद्यजुः । माश ६, ५,१, २; ७, ५,१,४ ।

३९. यावतीर्वै देवतास्ताः सर्वा वेदविदि ब्राह्मणे वसन्ति, तस्माद् ब्राह्मणेभ्यो वेदविद्भ्यो दिवे दिवे नमस्कुर्यान्नाश्लीलं कीर्त्तयेदेता एव देवताः प्रीणाति । तैआ २,१५,९ ।

४०. यो वै स्वां देवतामतियजते, प्र स्वायै देतायै च्यवते, न परां प्राप्नोति, पापीयान् भवति । तैसं २,५,४,४ ।

४१. वाक् च वै वायुश्चैतं देवतानामानशानौ । जै २, ३८९ ।

४२. वाचा देवताः (अन्वाभवत्) । काठ ३५, १५ ।

४३. विष्णुर्वै परमो देवतानाम् । जै २, १९२ ।

४४. स एष प्रजापतिरग्निष्टोमः परिमण्डलो भूत्वाऽनन्तो भूत्वा शये (<शेते) तदनुकृतिमप्यन्या देवताः परिमण्डलाः । परिमण्डल आदित्यः परिमण्डलश्चन्द्रमाः परिमण्डला द्यौः परिमण्डलमन्तरिक्षं परिमण्डलेयं पृथिवी । अपि यदिदं पुरुषे दिव्यं तत् परिमण्डलम् । जै १,२५६-२५७ ।

४५. सर्वा वा अन्या देवता यातयाम्नीः, प्रजापतिरेवायातयामा । मै ४,८,९ ।

४६. स ह पूर्वाह्ण एव देवतानां समित्यामास । जै ३,२७१ ।

४७. स्वेवैनं देवतेज्यमाना भूत्या इन्धे, वसीयान् भवति । तैसं २, ५,४,४-५ । [°ता- अग्नि- १२५;१२६; २४०;२६४;३०७;६२५; अनृत- २५; अन्न- १४२; अप्- ६९; ११८; आहवनीय- १९; इन्द्र- १९७; इन्द्राग्नि- ३१; छन्दस्- ४५; ७१;११६; ज्योतिस्- २२; दधिग्रह- ३; √दीक्ष् १५ द्र.] ।

देव-तीर्थ- एतद्वै प्रशातं देवतीर्थं यज्ज्योतिरतिरात्रः । जै २,२९५;३०५ ।

देव-त्रा-

१. असुर्यं पात्रमनाच्छृण्णम्, आच्छृणत्ति देवत्राऽकः । तैसं ५,१,७,४ ।

२. यस्योर्ध्वा वाक् स आर्त्विजीनो देवत्रेव हि सः । काठ १३,४ ।

३. स (दीक्षितः) दक्षिणानेवाग्रे (नखान्) निकृन्तेताथ सव्यान् ...... अथैवं देवत्रा ऽङ्गुष्ठयोरग्रे निकृन्तेताथ कनिष्ठिकयोः,...... अथैवं देवत्रा । काश ४,१,२,३ ॥ [°त्रा- असुर्य- २ द्र.]

देव-दूत- ऋत्विज्- ९ द्र. ।

देव-देवत्य- नो ह वा असावादित्योऽर्वाङ् न पराङ् तिर्यङ् उ ह वा एष । षड् वा एष मासो दक्षिणैति षड् उदङ् । यान् दक्षिणैति ते पितृदेवत्या यानुदङ् ते देवदेवत्याः । जै २,३७२ ।

देव-धुर्- मनो वै मनुष्यधुर आपो देवधुरः । जै १,२७० ॥ [°धुर्- देवता- १२ द्र. ] ।

देव-नक्षत्र- कृत्तिकाः प्रथमं विशाखे उत्तमम् । तानि देवनक्षत्राणि । तै १, ५,२,७ ।

देव-पात्र-

१. इयं (पृथिवी) वाव ( वै [मै.]) देवपात्रम् । मै ४,५,५; काठ २७,२; क ४२, २ ।

२. देवपात्रं वा एतद् (एष [माश.]) यद्वषट्कारः । ऐ ३,५; माश १,७,२,१३ (तु. गो २,३,१ ।

३. देवपात्रं वाऽ एष यदग्निः । माश १,४,२,१३ ।

४. देवपात्रं द्रोणकलशः । तां ६,५, ७ ॥ [°त्र- उत्तरवेदि- ९ द्र. ] ।

देव-पितृकार्य- देवपितृकार्याभ्यां न प्रमदितव्यम् । तैआ ७,११,२; तैउ १, ११,२ ।

देव-पुर,रा-

१. इमे खलु वै लोका देवपुराः । तैसं ५, ३,९,२ ।

२. देवपुरा वा एषा यद्धुविणहः । जै १,२२७ ।

देव-मनुष्य-

१. उभये देवमनुष्याः पशूनुपजीवन्ति । माश ६,४,४, २२ ।

२. ततो देवमनुष्याः पितरः । गन्धर्वाप्सरसश्चोदतिष्ठन् । सोर्ध्वा दिक् । तैआ १, २३,७ ।

देव-यजन-

१ ऋत्विजो हैव देवयजनं ये ब्राह्मणाः शुश्रुवा ऽ सोऽनूचाना विद्वा ऽ सो याजयन्ति सैवाह्व-लैतन्नेदिष्ठतमामिव मन्यामहऽइति । माश ३,१,१,५ ।

२. एष हि (वै [मै.]) पृथिव्या मूर्धा यद् देवयजनम् । मै ३,७,६; काठ २४,४; क ३७,५ ।

३. दक्षिणत उन्नता मेतव्या, देवयजनस्य रूपमथो वज्र ऽ वा एतद्यजमानो भ्रातृव्यायो-च्छ्रयति । मै ४,७,९ ।

४. दक्षिणतो वर्षीयसीं करोति, देवयजनस्यैव रूपमकः । तैसं २,६,४,३ ।

५. देवयजनं वै वरं पृथिव्यै । ऐ १, १३ ।

६. पृथिव्या ह्येष मूर्द्धा यद् देवयजनम् । तैसं ६, १,८,२ ।

७. ब्राह्मणा वाव देवयजनम् । काठ २५,३; क ३८,६ ।

८. भौमं देवयजनम् । गो १,२,१४ ।

९. यत्र क्वचिद् ब्राह्मणो विद्यावान्मन्त्रेण करोति तद्देवयजनम् । गो १, २,१४ ।

१०. यद्वै ( देवाः) तद्यज्ञमविन्द ऽस्तद् देवयजनस्य देवयजनत्वम् । मै ३,८, १ ।

११. वर्ष्म ह्येतत् पृथिव्या यद् देवयजनम् । तैसं ६,२,९,३ ।

१२. श्रद्धा देवयजनम् । गो १,२,१४ ॥ [°न- अग्नि- १६७; आत्मन्- १३; ऋत्विज्- ५ द्र.] ।

देवयजनी- इयं वै पृथिवी देवी देवयजनी । माश ३,२,२,२० ।

देव-यज्ञ- यदग्नौ जुहोत्यपि समिधं तद् देवयज्ञः सन्तिष्ठते । तैआ २,१०,२ ।

देव-यज्या-

१. प्रजा वा उत्तरा देवयज्या । तैसं २,६,७,६ ।

२. यस्य हि प्रजा भवत्यमुं लोकमात्मनैत्यथास्मिंल्लोके प्रजा यजते तस्मात्प्रजोत्तरा देवयज्या । माश १,८,१,३१ ।

**देव-यशस-** पवमाना वै देवयशसम् । ते ह ते प्राणा एव । जै १,२७९ ।

**देव-यान-**

१. एष वाव देवयानः पन्था यत् पृष्ठ्यः षडहः । जै २,४२३ ।
२. तस्य वा एतस्य संवत्सरस्याग्निष्टोमसामान्येव देवयानः पन्थाः । जै २, ६० ।
३. त्रयो वै देवयानाः पन्थानः । तैसं २, ५, ११, ६; गो २, १, १ ।
४. देवयाना वै ज्योतिष्मन्तः पन्थानः । ऐ ३, ३८ ।
५. बर्हिर्यजति, य एव देवयानाः पन्थानस्तेष्वेव प्रतितिष्ठति । तैसं २, ६, १, ३ ।
६. यमाहुरर्यम्णः पन्था इत्येष वाव देवयानः पन्थाः । तां २५, १२, ३ ।
७. ये चत्वारः पथयो देवयाना अन्तरा द्यावापृथिवी वियन्ति । तैसं ५,७,२,३; मै २,१,१० ।
८. यो देवयानः पन्थास्तेन यज्ञो देवा ऽ अप्येतु । तैसं १, ६, ३, २ ।
९. वागु देवयानः ( पन्थाः ) । जै २,२९८ ॥ [°न- अतिरात्र- १०; आदित्य- १८०; गोआयुस्- २; दर्शपूर्णमास- ८ द्र.] ।

**देव-योनि-** अग्नि- १८४ द्र. ।

**देव-रथ-**

१. मनकाममारो देवरथस्तस्य वागुद्धिः, श्रोत्रे पक्षसी, चक्षुषी युक्ते, मनः सङ्ग्रहीता, तदयं प्राणो ऽधितिष्ठति । ऐआ २, ३, ८ ।
२. इयं ( पृथिवी ) वै देवरथः । तां ७, ७, १४ ।
३. एष वै देवरथो यद् रथन्तरम् । जै १,१३० (तु. तां ७,७,१३) ।
४. देवरथो वा एष यद् यज्ञः । जै २७, १; क ४२, २ ऐ २,३७; कौ ७, ७ ( तु. काठ ८,८; जै १, १२९; ३४३) ।
५. स्वर्गाय वै लोकाय देवरथो युज्यते । मै ३,४,४ ॥ [°थ- अग्नि- ४३४;५४१;६७३; दर्शपूर्णमास- ९ द्र.]

**देव-रात-** नेति होवाच विश्वामित्रो देवा वा इमं मह्यमरासतेति स ह देवरातो वैश्वामित्र आस । ऐ ७, १७ ।

**देव-रेतस-** प्राग्वै देवरेतसं प्रजायते । ऐआ १, २, ४ ।

**देव-लोक-**

१. अन्तर्हितो हि देवलोको मनुष्यलोकात् । तैसं ६, १, १, १ ।
२. आदित्य एव देवलोकः । जैउ ३, ३,३,१२ ।
३. उत्तरो वै देवलोकः । माश १२,७,३,७ ।
४. उदङ्ङ प्राङ्ङ प्रश्रयत्येष वै देवलोकः । काठ २६, ३; क ४१, १ ।
५. एकविंऽशतिर्वै देवलोका द्वादश मासाः, पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंऽशः । तैसं ५, १, १०, ३-४; तै ३,८, १०, २;१७,२;२०,२ (तु. काठ १९,११; २०,५; क ३१,१;७) ।
६. एतावन्तो वै देवलोकाः[1] (+ तेष्वेव यथापूर्वं प्रतितिष्ठति [ तैसं २, ६, १, ३ ] ) ।

१. पृथिवी, अन्तरिक्षम्, द्यौः, दिशः, पशवः, देवयानः पन्थाः, स्वर्गो लोकः ।

तैसं २,६,१,३; ३, ३,५,५।

७. एते ह वाव द्वादश देवलोकाः। जै २, ६।

८. चतस्रो दिशस्त्रय इमे लोका एते वै सप्त देवलोकाः। माश १०, २, ४, ४।

९. त्रयस्त्रिंशद्देवलोकाः। जै २, २१०; २७५।

१०. देवलोकमेव सोमग्रहैरभिजयति। काठ १४,६।

११. देवलोके मे ऽप्यसद् (ऽपि स्याद् [काश.]) इति वै यजते यो यजते। काश ५, ४,१,१५; माश ४, ३, ४, २०।

१२. देवलोको वा आदित्यः। कौ ५, ७; गो २, १, २५।

१३. देवलोको वा एष यद्विपुवान्। तां ४, ६, २।

१४. नव (त्रयो वै [तैसं., गो.]) देवलोकाः। तैसं २, ५,११, ६; गो २, १, १; जै १,२४५।

१५. पञ्चभिस्तिष्ठन्तः स्तुवन्ति देवलोकमेवाभिजयन्ति। तैसं ७, ५, ८,४।

१६. यं कामयेत देवलोक ऋध्नुयादिति, तस्य चषालसंमितां (एकादशिनीम्) मिनुयात्। मै ४, ७,९।

१७. यत्प्राञ्चमाप्रीणन्ति, देवलोकं तेनाभिजयति। काठ २६, ७।

१८. यदन्तर्वेदि मिनुयाद्, देवलोकमभिजयेत्। तैसं ६, ६, ४, १।

१९. याम् (दक्षिणाम्) आर्षेयाय शुश्रुवुषे ददाति, देवलोके तया ऋध्नोति। मै ४, ८, ३।

२०. विद्यया देवलोकः (जय्यः)। माश १४, ४, ३, २४।

२१. वेदिर्वै देवलोकः। माश ८, ६, ३, ६।

२२. षट्त्रिंशद्देवलोकाः। अष्टौ वसव एकादश रुद्रा द्वादशादित्या वषट्कारश्च प्रजापतिश्च त्रय इमे लोकाः। काठ ३४, ७।

२३. सप्त (+वै [ऐ.]) देवलोकाः। ऐ २, १७; माश ९, ५, २, ८।

२४. स्वराड् वै देवलोकः। जै २,१९६॥ [°क- अग्नि-५४२; आहवनीय- ४;४१; इन्द्र- २९६ द्र.]।

**देव-वर्मन्-** देववर्म वा एतद्यत्प्रयाजाश्चानुयाजाश्च। ऐ १,२६।

**देव-वाहन-** मनो वै देववाहनं मनो हीदं मनस्विनं भूयिष्ठं वनीवाह्यते। माश १, ४,३, ६।

**देव-विश्-** मरुतो ह वै देवविशो ऽन्तरिक्षभाजना ईश्वराः। कौ ७,८।

**देव-विशा-** देवविशा वै मरुतः। मै २, १,९; ३,७,१॥ [°शा- आदित्य- २६५ द्र.]।

**देव-व्रत-** घृत- २३ द्र.।

**देव-सꣳस्फान-** आदित्य- १६१ द्र.।

**देव-सत्य-** चन्द्रमस्- १६ द्र.।

**देव-सत्र-** त्रयस्त्रिंशदह- द्र.।

**देव-सव-** यो वै सोमेन सूयते (यजते [काठ.]) स देवसवः। यः पशुना सूयते (यजते [काठ.]) स देवसवः। काठ ३७,४; तै २,७,५,१।

**देव-सुरभि-** अग्निर्वै देवानाꣳ होत्रमुपैष्यञ्छरीरमधूनुत तस्य यन्माꣳसमासीत्तद् गुग्गुल्वभवद्यत् स्नाव तत्सुगन्धितेजनं यदस्थि तत् पीतुदारु। एतानि वै देवसुरभीणि। तां २४,१३,५।

**देव-सोम-** चन्द्रमस्- १६ द्र.।

देव-स्थान-

१. तम् ( स्वर्गं देवाः ) एतेनैवादंहन् । तद् यदेतेनास्थापयन्, ...... तस्मिन् यत् स्वर्गे लोके समतिष्ठन्त तदेव देवस्थानस्य देवस्थानत्वम् । ...... तद् देवस्थानमसृजन्त साम, तेन देवासो अमृतत्वमायन् । जै ३,२५५ ।

२. देवस्थानं भवति प्रतिष्ठायै । तां १५,३,२८ ।

३. देवस्थानेन वै देवाः स्वर्गे लोके प्रत्यतिष्ठन् । तां १५,३,२९ ।

४. वरुणाय देवता राज्याय नातिष्ठन्त स एतद्देवस्थानमपश्यत्ततो वै तास्तस्मै राज्यायातिष्ठन्त । तिष्ठन्तेऽस्मै समानाः श्रैष्ठ्याय । क्षत्रस्येवास्य प्रकाशो भवति य एवं वेद । तां १५,३, ३०-३१ ।

देव-हूति- यो वै बृहद्रथन्तरयोर्देवहूती वेद यन्त्यस्य देवा हवम् । ऊर्ध्वा वै रथन्तरस्य देवहूतिरर्वाची बृहतः । जै १,२९६ ।

देवाऽतिथि- देवातिथिः सपुत्रो ऽशनाय९ श्चरन्नरण्य उर्वारूण्यविन्दत्तान्येतेन साम्नोपासीदत्ता अस्मै गावः पृश्नयो भूत्वोदतिष्ठन् यदेतत्साम भवति पशूनां पुष्ट्यै । तां ९,२,१९ ।

दैवातिथ- आ त्वेता निषीदतेति दैवातिथम् ( साम ) । तां ९,२,१८ ।

देवाऽऽयतन- देवायतनं वै षष्ठमहः । कौ २३,५ । [°न- अग्नि- ५४६ द्र.] ।

देवायु- देवायुवमित्याह, देवान् ह्येषा ऽवति । तैसं २,५,९,६ ।

देवाऽऽयुस्->°युष- द्राघीयो हि देवायुष९ ह्रसीयो मनुष्यायुषम् । माश ७,३,१,१० ।

देवाव्य- देवाव्यमिति यो देवानवदित्येतत् । माश ६,३,१,२० ।

देवाऽसुर-> दैवासुर-

१. तस्मादाहुर्नैतदस्ति यद्दैवासुरं यदिदमन्वाख्याने त्वदुद्यतऽइतिहासे त्वत्ततो ह्येव तान् (असुरान् प्रजापतिः) पाप्मनाऽविध्यत्से तत एव पराभवन्निति । तस्मादेतदृषिणाभ्यनूक्तम् । न त्वं युयुत्से कतमच्चनाहर्न तेऽमित्रो मघवन् कश्चनास्ति, मायेत्सा ते यानि युद्धान्याहुर्नाद्य शत्रुं ननु पुरा युयुत्सऽ इति । माश ११,१,६,९-१० ।

२. तस्मादाहुर्नैतदस्ति यद्दैवासुरमिति, जनयित्वा ह्येव तान् प्रजापतिः पिता पराभावयदिति । तस्मादेतदृषिणाभ्यनूक्तम् । यदचरस्तन्वा वावृधानो बलानीन्द्र प्रब्रुवाणो जनेषु । मायेत्सा ते यानि युद्धान्याहुर्नाद्य शत्रुं ननु पुरा विवित्से । काश ३,१,१२,९-१० ।

देविका- अथैष कः प्रजापतिस्तद्देव्यश्च कश्च तस्माद्देविकाः पञ्च भवन्ति पञ्च हि दिशः । माश ९,५,१,३९ ॥ [°का- छन्दस्- २५ द्र. ] ।

देवी-

१. ता वाऽएता देव्यः । दिशो ह्येता । माश ९,५,१,३९ ।

२. तिस्रो देवीरिडा मही (सरस्वती [मै. ४,]) भारती... । मै ३,११,११; मै ४, १३,९ ।

३. तिस्रो देवीर्बर्हिरेद९ सदन्त्विडा सरस्वती भारती मही गृणाना । तैसं ४,१,८,२-३ ।

४. तिस्रो देवीर्हविषा वर्धमाना इन्द्रं जुषाणा वृषणं न पत्नीः । अछिन्नं तन्तुं पयसा सरस्वतीडा देवी भारती विश्वतूर्तिः । मै ३, ११,१ ।

५. दिशो यस्य प्रदिशः पञ्च देवीः, कस्मै देवाय हविषा विधेम। मै २,१३,२३; काठ ४०,१।
६. प्राणो वा अपानो व्यानस्तिस्रो देव्यः। ऐ २,४।
७ या देव्यसीष्टक आयुर्दा उपशीवरी। सा मामुपशेष्व जायेव पतिमित् सदा। काठ ३९,९।
८. या देव्यसीष्टके कुमार्युपशीवरी सा मोपशेष्व जायेव सदमित्पति ९ या'''प्रफर्व्यु पशीवरी''', या''' युवत्युपशीवरी''' या''' आयुर्दाः प्राणदा अपानदा व्यानदाश्चक्षुर्दाः श्रोत्रदाः पृथिव्यामन्तरिक्षे दिवः पृष्ठ उपशीवरी'''या देवीः स्थेष्टकाः सुशेवा उपशीवरीस्ता मोपशेध्वं जाया इव सदमित्पतिम्। मै २,१३, १६।
९. वाग्वै तिस्रो देवीः। मै १,१०,९; काठ ३६,३ ॥ [ °वी- अदिति- ४४; अन्तरिक्ष- ३७; १५५; छन्दस्- २५; देवयजनी- द्र. ]।

दैव- बृहन्तः (पशवः) दैवाः। मै ३, १३,११। [ °व- छन्दस्- ३८ द्र.]।

दैवानीक- ततो वै ते (देवाः) ऽग्निनैवानीकेनासुरानजयन्। तदेव दैवानीकस्य दैवानीकत्वम्। जै ३, २७५।

दैवी-

१. तं वागेव भूत्वाऽग्निः प्राविशन्मनो भूत्वा चन्द्रमाश्चक्षुर्भूत्वाऽऽदित्यश्श्रोत्रम्भूत्वा दिशः प्राणो भूत्वा वायुः। एषा वै दैवी परिषद्दैवी सभा दैवी संसत्। जैउ २,४,२,१२-१३।
२. दैवीर्वा (दैव्यो वा [माश.] ) एता विशो यत् पशवः। काठ २६,७; माश ३,७,३, ९।
३. दैव्येषा नौर्यद् यज्ञः। जै १, १६६।
४. पञ्च दिशो दैवीर्यज्ञमवन्तु देवीः। तैसं ५,४,६,२; मै ३,३,८।
५. ब्राह्मण उभे वाचौ वदति दैवीं च मानुषीं च। काठसंक १३९:५।
६. श्रीर्हि मनुष्यस्य दैवी स ९ सत्। तैसं ७,४, २,१-२।

दैव्य-

१. दैव्या वाऽएते होतारो यत्परिधयोऽग्नयो हि। माश १,८,३,१०;२१।
२. प्राणापानौ वै दैव्या होतारा (= होतारौ)। ऐ २,४।
३. वत्सा वै दैव्या अध्वर्य्यवः। माश १,८, १,२७। ॥ [°व्य- असुर- ५१ द्र.]।

दैर्घश्रवस- दीर्घश्रवस्- द्र.।

दोह- इमे वै (त्रयः) लोका आजयो नाम। एतेषामेते (अग्निवाय्वादित्याः) दोहाः। जै २,२५५।

द्यावाक्षामा- इमे वै द्यावापृथिवी द्यावाक्षामा। माश ६, ७, २, ३।

द्यावापृथिवी-

१. आविते द्यावापृथिवी धृतव्रते। तैसं १, ८, १२, २।
२. इमे वै द्यावापृथिवी रोदसी (परीशासौ [माश १४, २, १, १६])। माश ६, ४, ४, २; ७, ३,२; ७,३,१,३०; १४,२,१,१६ (तु. तैसं ५,१,५,४; ऐ २,४१; जैउ १, १०,२,४)।
३. इमे (द्यावापृथिव्यौ) वै हरी विपक्षसा। तै ३, ९, ४, २।
४. इमे (द्यावापृथिव्यौ) ह वावोधनी। एते एवैतदभिवदत्येते एवास्मै सर्वान् कामान् दुहाते। जै ३, ६७।

५. इमे हि द्यावापृथिवी प्राणोदानौ। माश ४, ३, १, २२ (तु. माश १४,२,२,३६)।
६. इमौ वै लोकौ रेतःसिचाविमौ ह्येव लोकौ रेतः सिञ्चत इतो वाऽयम् (लोकः) ऊर्ध्वं ९ रेतः सिञ्चति धूम ९ सामुत्र वृष्टिर्भवति तामसावमुतो वृष्टिं तदिमा अन्तरेण प्रजायन्ते। माश ७, ४, २, २२।
७. इमौ वै लोकौ (द्यावापृथिव्यौ) रोहिणौ (पुरोडाशौ)। माश १४,२,१,४।
८. उपहूते द्यावापृथिवी पूर्वजेऽऋतावरी देवी देवपुत्रे ऽइति। तदिमे द्यावापृथिवीऽ उपह्वयते ययोरिद ९ सर्वमधि। माश १, ८, १, २९।
९. किक्किटा ते श्रोत्रं द्यावापृथिवीभ्या ९ स्वाहा। तैसं ३, ४, २, १; काठ १३, ११।
१०. तयोः (द्यावापृथिव्योः) एतौ वत्सावहोरात्रे। तैआ १, १०, ५।
११. द्यावापृथिवी आण्डौ (ऋतावृधौ [मै.])। तैसं ७, ५, २५, २; मै २,६,९।
१२. द्यावापृथिवी एतस्य सदोहविर्धाने। काठ ६, ६।
१३. द्यावापृथिवीभ्याम ९ होमुग्भ्यां पुरोडाशं द्विकपालम् (निर्वपति)। मै ३,१५,११। (तु. तैसं. ७,५, २२, १; काठ ४५,१९)।
१४. द्यावापृथिवी वरुणस्य धर्मणा विष्कभिते अजरे भूरिरेतसा। मै ४,११,१।
१५. द्यावापृथिवी वै देवानां हविर्धाने आस्ताम्। ऐ १, २९।
१६. द्यावापृथिवी वै प्रतिष्ठे। ऐ ४, १० (तु. कौ ३, ८;५,२; ८,१; १६,३; गो २,१,२०)।
१७. द्यावापृथिवी वै मित्रावरुणयोः प्रियं धाम। तां १४,२,४।
१८. द्यावापृथिवी वै मिथुन ९ समभवतां तयोस्तेजो यज्ञियमपाक्रामत् तत् कृष्णं (मृगम्) प्राविशत्। काठ २३, ३।
१९. द्यावापृथिवी वै सत्यसाधयित्र्यौ। कौ ४,१४।
२०. द्यावापृथिवी सर्वे इमे लोकाः। जै ३,२७१।
२१. द्यावापृथिवी हि प्रजापतिः। माश ५,१,५,२६।
२२. द्यावापृथिव्योरहं देवयज्यया प्रजनिषेयं प्रजया पशुभिः। काठ ५,१।
२३. द्यावापृथिव्योर्दक्षिणं पार्श्व ९ विश्वेषां देवानामुत्तरम्। मै ३.१५,५।
२४. द्यावापृथिव्योर्वा एष गर्भो यत्सोमो राजा। ऐ १, २६।
२५. द्विस्तनां करोति द्यावापृथिव्योर्दोहाय। तैसं ५,१,६,४।
२६. नववि ९ शत्यास्तुवत द्यावापृथिवी व्यैता ९ वसवो रुद्रा अनुव्याय ९ स्त उ एवाधिपतय आसन्। मै २,८,६।
२७. मेनका च सहजन्या चाप्सरसाविति दिक् चोपदिशा चेति ह स्माह माहित्थिरिमे तु ते द्यावापृथिवी। माश ८,६,१,१७।
२८. यद्रोदीत् (प्रजापतिः) तदनयोः (द्यावापृथिव्योः) रोदस्त्वम्। तै २,२, ९, ४।
२९. यदा वै द्यावापृथिवी सञ्जानाथेऽअथ वर्षति। माश १,८,३,१२।
३०. वायुर्वा अनयोः (द्यावापृथिव्योः) वत्सः। मै २,५, ४; काठ १३,५।

३१. शृण्वते नम उपशृण्वते नम इति द्यावापृथिवीभ्यामेव नमस्करोति । काठसंक १२२:४ ।

३२. सप्तवि ९ शत्याऽस्तुवत द्यावापृथिवी व्यैतां, वसवो रुद्रा (+आदित्या [तैसं.]) अनुव्याय-९स्त एवाधिपतय आसन् (अनुव्यायन्, तेषामाधिपत्यमासीत् [तैसं.])। तैसं ४, ३, १०, २-३; काठ १७, ५; ॥ [°वी- अग्नि- ५०४; अन्न- १४३; अन्नाद्य- १३; अश्विन्- १५; २१; २२; ३२; इन्द्राग्नि- ५; गो-आयुस्- ३३ द्र.]।

द्यावापृथिवीय,या-

१. चक्षुषी द्यावापृथिवीयम् (सूक्तम्)। कौ १६, ४।

२. द्यावापृथिवीयं द्विकपालम् (पुरोडाशं निर्वपेत्)। मै २,१, ३।

३. द्यावापृथिवीयं (पयः) प्रह्रियमाणम्। मै १,८, १०।

४. द्यावापृथिवीया एककपालः (सौम्यश्चरुः)। मै १,१०,१; २,६,२।

५. वशा द्यावापृथिवीयाः। मै ३,१३,१२ ॥ [°य- कूर्म- ५ द्र.]।

द्यावापृथिव्य,व्या-

१. एतं भागमकुर्वन्नेककपालं प्रतिष्ठित्यै द्यावापृथिव्यम्। काठ १२,७।

२. द्यावापृथिव्य एककपालः पुरोडाशो भवति। माश २, ५, १, १७ (तु. तैसं १, ८, २, १; २, ६,३,६; काठ ९, ४; ३७,२; क ८,७)।

३. द्यावापृथिव्य एककपालो वत्सः प्रथमजो दक्षिणा। काठ १५,१।

४. द्यावापृथिव्यां धेनुमालभेत ज्योगपरुद्धोऽनयोर्हि वा एषोऽप्रतिष्ठितोऽथैष ज्योगपरुद्धो द्यावापृथिवी एव स्वेन भागधेयेनोपधावति, ते एवैनं प्रतिष्ठां गमयतः, प्रत्येव तिष्ठति। तैसं २,१,४,७।

५. द्यावापृथिव्या मालङ्गास्तूपराः। काठ ४९,९।

द्युतान-

१. द्युतानो मारुतस्तेषां (देवानाम्) गृहपतिरासीत्। तां १७, १,७।

२. पशवो वै द्युतानो मारुतः। काठ ३५, १६; क ४८, १४।

३. यो वाऽअयं (वायुः) पवतऽएष द्युतानो मारुतः। माश ३,६,१,१६ ॥ [°न- उत्तरतम् ९ द्र.]।

द्युमत्तमा- द्युमत्तमेति वीर्यवत्तमेत्येतत्। माश ६, २, १, ३२।

द्युम्न-

१. तस्य (हिरण्मयस्याण्डस्य) हरितमधरं कपालमासीद् रजतमुत्तरम्। तच्छतं देवसंवत्सरान् छयित्वा निर्भिद्यमभवत् सहस्रं वा द्युम्नान्। द्युम्ना ह नाम तर्ह्यप्यासुः। यावानेष संवत्सर-स्तावन्तस्संवत्सरस्य प्रतिमाः। द्युम्नैर् ह स्म संवत्सरं विजानन्ति। जै ३,३६१।

२. द्युम्न ९ हि बृहस्पतिः। माश ३, १, ४, १९।

३. सोमस्य त्वा द्युम्नेन (+अभिषिञ्चामि [तैसं.])। तैसं १, ८, १४, १; मै २, ६, ११; ४, ४, ५।

द्युम्निनी- द्युम्निनीराप एता इति वीर्यवत्य इत्येवैतदाह। माश ५, ३, ५, १९।

द्यो- अन्तरिक्ष- १११; आदित्य- २६६; गो- ४ द्र. ।

द्रप्स-

१. यो वा अस्याः (पृथिव्याः) रसः स द्रप्सस्तमिमं प्रजा उपजीवन्ति । मै ४,१,१० ।

२. स्तोको वै द्रप्सः । गो २,२,१२ ॥ [°प्स- आदित्य- ६४ द्र. ] ।

द्रवदिड- इमं वाव देवा लोकं द्रवदिडेन (साम्ना) अभ्यजयन् । तां १०,१२,४ ।

द्रविणोदा-

१. द्रविणोदा इति द्रविण ँ ह्येभ्यो ददाति । माश ६, ३, ३, १३ ।

२. प्राणा वै देवा द्रविणोदाः । तैसं ५, १,१०, ४; मै ३, २, १; काठ १९, ११; क ३१, १ ।

द्रष्टृ- अग्नि- १९९ द्र. ।

द्रु- वनस्पतयो वै द्रु । तै १, ३, ९,१ ।

द्रुपद्- देव- २६५ द्र. ।

द्रोण- अन्न- १४४; १४५ द्र. ॥

द्रोण-कलश-

१. अतिरिक्तं वा एतत् पात्राणां यद् द्रोणकलशः । क ४४, ९ ।

२. इन्द्रो वृत्रमहन् तस्य शीर्षकपालमुदौब्जत् स द्रोणकलशोऽभवत् । तैसं ६, ५, ९, १ ।

३. इन्द्रो वै वृत्रमह ँ स्तस्य ( + यत् [मै.]) मूर्धानमुदरुजत् स द्रोणकलशोऽभवत् । मै ४, ७, ४; काठ २८, ९; क ४४, ९ ।

४. द्वयं वावेदं ब्रह्म चैव क्षत्रं च । तदुभयं द्रोणकलशे । जै १, ७८ ।

५. प्रजापतये त्वेति द्रोणकलशमभि मृशेत् । तैसं ३, २, १, ३ ।

६. प्रजापतिर्वै द्रोणकलशः । काठ २८, १०; क ४५, १; माश ४, ३, १, ६; ५, ५, ११ ।

७. प्रजापतेर् वा एतत् पात्रं यद् द्रोणकलशः । मै ४, ८, ८ ।

८. प्राजापत्यो (+ह्येष देवतया यद् [तां ६, ५, ६]) द्रोणकलशः । तां ६,५,६; १८ ।

९. प्राणा वै द्रोणकलशः । तां ६, ५, १५ ।

१०. मूर्धा द्रोणकलशः । मै ४, ५, ९; काठ २५, ९; क ४०, २ ।

११. मूर्धानं ते द्रोणकलशः पातु । मै ४, ८, ७ ।

१२. यज्ञो वै द्रोणकलशः । माश ४, ५, ८, ५ ।

१३ यस्य कामयेदसुर्यमस्य यज्ञं कुर्यां वाचं वृञ्जीयेति द्रोणकलशं प्रोहन्बाहुभ्यामक्षमुपस्पृशेत् । तां ६, ५, १५ ।

१४. राष्ट्रं द्रोणकलशः । तां ६,६,१ ।

१५. वृत्रो वै सोम आसीत्तं यत्र देवा अघ्नंस्तस्य मूर्धोद्ववर्त स द्रोणकलशोऽभवत् । माश ४,४, ३,४ । [°श- ग्रावन्- १०; देवपात्र- ४ द्र. ] ।

द्रोण-चित्- अन्नकाम- ३ द्र. ।

द्वन्द्व-

१. द्यौश्च त्वा पृथिवी च श्रीणीताम् । अहश्च त्वा रात्री च श्रीणीताम् । आपश्च त्वौषधयश्च श्रीणन्तु । वाक् च त्वा मनश्च श्रीणीताम् । चक्षुश्च त्वा श्रोत्रं च

श्रीणीताम् । ब्रह्म च त्वा क्षत्रं च श्रीणीताम् । दक्षश्च त्वा बलं च श्रीणीताम् । ओजश्च त्वा सहश्च श्रीणीताम् । ऋक् च त्वा साम च श्रीणीताम् । स्तोमश्च त्वा यजुश्च श्रीणीताम् । बृहच्च त्वा रथन्तरं च श्रीणीताम् । यज्ञश्च त्वा दक्षिणा च श्रीणीताम् । सूर्यश्च त्वा चन्द्रमाश्च श्रीणीताम् । दर्शश्च त्वा पौर्णमासश्च श्रीणीताम् । अर्कश्च त्वाऽश्वमेधश्च श्रीणीताम् । काठ ३५,११; क ४८,११ ।

२. द्वन्द्व वै मिथुनं (+ प्रजननम् [माश १,१,१,२२]) । ऐ ३,५०; माश ११,१,२,६ ।

३. द्वन्द्व वै वीर्यम् । काश ७,२,३,१३; कौ ८,७; माश १४,१,३,१ ।

४. द्वन्द्व प्रतिष्ठा । जै १, ३०९ ।

५. प्राणा द्वन्द्वम् । काठ २६,१०; क ४१, ८; ४२,५ ॥ [°द्व- अग्नि- ३८४ द्र.] ।

द्वात्रिंश- धृतिद्वात्रिंशः (स्तोमः) । मै २, ८,४ ।

द्वादशन्- संवत्सरस्य प्रतिमा वै द्वादश रात्रयः । तै १,१,६,७; ९,१० ।

द्वादश-रात्र (यज्ञ-)-

१. प्रजापतिर्वा एष द्वादशधा विहितो यद् द्वादशरात्रः (यत्प्रवर्ग्यः [तैआ.]) । तैसं ७,२,९,३; तैआ ५,११,६ ।

२. यः कामयेत प्र जायेयेति स द्वादशरात्रेण यजेत । तैसं ७,२,९,१ ।

३. यद् ध वै किं च यज्ञस्य दुष्टुतं दुश्शस्तं विधुरं तस्य ह वा एतदरिष्टयै । अरिष्टो ह वा एतेन यज्ञः । देवा वा एतं द्वादशरात्रमतन्वत । तेषां यद् यदरिष्यत् तदरिष्टेनारिष्टमकुर्वत । तदरिष्टस्यारिष्टत्वम् । जै ३,५५ ।

द्वादशाह (यज्ञ-)-

१. अधि तदृध्नोति ह वा ऋत्विक्षु, य एवं विद्वान् द्वादशाहेन यजते । तैसं ७, २,१०,१ ।

२. अनुष्टुभं वावैतामासते यद् द्वादशाहम् । जै ३, ५ ।

३. आदित्यो वै द्वादशाहः । जै ३,३७७ ।

४. एतावद् वाव संवत्सर इन्द्रियं वीर्यं यद् द्वादशाहः । जै ३,५ ।

५. एतावान् वै यज्ञो यावान् द्वादशाहः । काठ ९, १५ ।

६. एष वाव द्वादशाहो य एष (सूर्यः) तपत्येष इन्द्रः, एष प्रजापतिरेष एवेदं सर्वमित्युपासितव्यम् । एष एवेदं सर्वमित्युपासितव्यम् । जै ३, ३८६ ।

७. एष वै प्रजापतिर्द्वादशधा विनिहितो यद् द्वादशाहः । काठ ३४,८ ।

८. ओको वै देवानां द्वादशाहो यथा वै मनुष्या इमं लोकमाविष्टा एवं देवता द्वादशाहमाविष्टा देवता ह वा एतेन यजते य एवं विद्वान् द्वादशाहेन यजते । तां १०,५,१५ ।

९. क्षत्रं द्वादशाहः । काठ ३६,७ ।

१०. ज्येष्ठयज्ञो वा एष यद् द्वादशाहः । ऐ ४, २५ ।

११. तदाहुः किं वर्ष्म सत्राणामिति । द्वादशाह इति ब्रूयात् । जै २,३३८ ।

१२. तन्त्रं वा एतद्वितायते यदेष द्वादशाहस्तस्यैते मयूखा यद्रायन्यसंव्याथाय । तां १०, ५, ६ ।

१३. त्रिवृति स्तोमे, गायत्र्यां छन्दस्यग्नौ देवतायां द्वादशाहोऽन्ततः प्रतिष्ठितः । जै ३, ३७० ।

१४. द्वादशाहे वै सर्वे स्तोमा सर्वाणि पृष्ठानि सर्वाणि छन्दांसि सर्वाणि सवनानि सर्वे पशवस्

सर्वे देवास्सर्वे लोकाः सर्वे कामा द्वादशाहमन्वायत्ता द्वादशाहमन्वाभक्ता द्वादशाहमनुसंतृप्यन्ति, द्वादशाहे संपन्ना द्वादशाहे प्रतिष्ठिताः । जै ३,३८५ ।

१५. पुरुषो ह वा एतस्य (द्वादशाहस्य) सत्रस्य विषुवान् । ... अहमस्य सत्रस्य विषुवान् अस्मीत्येव मन्यमान एतेन द्वादशाहेन यजेत । जै ३, ३२० ।

१६. प्रजापतियज्ञो वा एष यद् द्वादशाहः । ऐ ४, २५ ।

१७. प्रजापतिर्जायमान एव सह पाप्मनाऽजायत । सोऽकामयताप पाप्मानं हनीयेति । स एतं व्यूढछन्दसं द्वादशाहं यज्ञमपश्यत् । तमाहरत् । तेनायजत । तेन विष्वञ्चं पाप्मानं व्यौहत । जै ३,७ ।

१८. प्रजापतिर्वा एत ९ (द्वादशाहम्) स्वर्गकाम आहरत् । काठ ३४, ७ ।

१९. प्रजापतिर्वै द्वादशाहः । जै ३, ३७२ ।

२०. बृहत्या वा एतदयनं यद् द्वादशाहः । ऐ ४,२४ ।

२१. य एवं विद्वान् द्वादशाहमुपैति दीक्षयैवात्मानं पुनीत उपसद्भिर्यज्ञ ९ सम्भरते हित्वा शरीर ९ सुत्यया स्वर्गं लोकमेति । काठ ३४,७ ।

२२. यथा रथनाभावरा धृता एवं गायत्र्यां द्वादशाहो धृतोऽसंप्लवाय । जै ३, ६ ।

२३. यावान् संवत्सरस्तावान् द्वादशाहः । काठ ३४,६ ।

२४. वाग् (+ वै [तैसं.]) द्वादशाहः । तैसं ७, ४, ५, ३; तां ११, १०, १९;१२, ५, १३ ।

२५. षट्त्रिंशदहो वा एष यद् द्वादशाहः । ऐ ४, २४ ।

२६. सर्वछन्दा यज्ञो यद् द्वादशाहः । जै ३,३६९ ॥ [°ह- गायत्री- १००; त्रयस्त्रिंशदह-; देव- ५४ द्र.] ।

द्वापर- संजिहानस्तु द्वापरः । ऐ ७, १५ ॥ [°र- अहभून (ऋषि-)- द्र.] ।

द्वावि ९ श (स्तोम-)-

१. वर्चो द्वाविंशः । तैसं ४, ३, ८, १; मै २, ८, ४ ।

२. वर्चो द्वाविंश इति पश्चात्, यद् द्वे द्विपाद्यजमानः प्रतिष्ठित्यै, यद् वि ९ शतिर्द्वे विराजा अन्नं विराट् । काठ २०, १३ ।

द्वि-ज- द्विर्ह वै यजमानो जायते मिथुनादन्यज्जायते यज्ञादन्यत् । तद् यन्मिथुनाज्जायते तदस्मै लोकाय जायते । अथ यद्यज्ञाज्जायते तदमुष्मै लोकाय जायते । गन्धर्वलोकाय जायते देवलोकाय जायते स्वर्गलोकाय जायते । जै १, २५९ ।

द्वितीय, या-

१. अन्तरिक्षमेव द्वितीया चितिः । माश ८,७,४,१३ ।

२. क्षत्रं द्वितीयम् (अहः) । तां ११, ११, ९ ।

३. यदूर्ध्वं प्रतिष्ठाया ऽ अर्वाचीनं मध्यात् । तद् द्वितीया चितिः । माश ८,७,४,२० ।

४. वर्ष्म द्वितीयमहः । तां ११, ९, ४ ।

५. वृषण्वद्वा एतदैन्द्रं त्रैष्टुभमहर्यद् द्वितीयम् । तां ११,६,३;८,५ ।

**द्वितीय-वत्–** द्वितीयवान् हि वीर्यवान् । काश ४, ७,३,५; माश ३, ७, ३, ८ ।

**द्वि-देवत्य–** प्राणा वै द्विदेवत्याः (ग्रहाः) । मै ४, ६, १; काठ २७, ५; ऐ २, २८ (तु. तैसं ६, ४, ९, ३; कौ १३, ५;६) ॥ [°त्य– आदित्य– २७० द्र.] ।

**द्वि-पदा (ऋच्- )–**

१. द्विपदासु च पुच्छम् । जै २; ४७ ।
२. पुरुषो द्विपदाः । तै ३, ९,१२,३ ।
३. प्रतिष्ठा (विंशत्यक्षरा [जै २,५९] ) द्विपदा । जै २, ५८;५९ ।

**द्वि-पाद्–**

१. चन्द्रमा द्विपात्तस्य पूर्वपक्षापरपक्षौ पादौ । गो १, २,८ ।
२. तस्माद् द्विपाच्चतुष्पादमत्ति । तै २,१,३,९ ।
३. द्विपाद् (+ वै [जै.]) यजमानः । तैसं ५, ३,८,३; मै १, ५,१०; ३.१,४; ४,८,२; क २९,७; जै १, १३१; १४७; १५७; २, १६३; २६०; ३, १६;२९५; कौ १६, ११; तां ४, ४,११; तै १,७,४,४ (तु. काठ ३३,४; जै २, १११;३८२;) ।
४. द्विपाद्वै पुरुषः । ऐ ४, ३; ५,१७; १९;२१; गो १,४,२४; २,६,१२; तै ३, ९,१२,३ (तु. जै २,४३१; माश २,३, ४, ३३) ।

**द्वि-प्रतिष्ठ–** द्विप्रतिष्ठः (+वै [ऐ.]) पुरुषः । ऐ २,१८;३,३१; गो १,४,२४; २,६,१२; (तु. तै ३, ९, १२,३) ।

**द्वि-यजुस् (इष्टका-)–**

१. यजमानो वै द्वियजुः । माश ७,४,२,१६;२४ ।
२. श्रोणी द्वियजुः । माश ७,५,१,३५ ।

**द्वि-रात्र (यज्ञ-)–**

१. अथैष द्विरात्रः । प्रजाकामो हैतेन यजेत । जै २,२०५ ।
२. व्युष्टिर्वा एष द्विरात्रः । तै १,८,१०,३ ।
३. स यः कामयेत यत्र मे पितरश्च पितामहाश्च सुकृतः स्वर्गं लोकमितास्तदनुगच्छेयमिति स एतेन (द्विरात्रेण) यजेत । जै २,२३५ ।

**द्वि-होतृ–** अग्नि– १३७ द्र. ।

**द्वीपिन्–** उदराद् द्वीपी (प्रजापतेरजायत) । जै २,२६७ ।

**द्वेषस्–**

१. द्वेषोभ्यो ऽन्यकृतेभ्य इत्याहान्यकृतानि हि रक्षा ᳚सि । तैसं ६, ३, २, २ ।
२. युयोध्यस्मद् द्वेषा ᳚सि यानि कानि चच्चकृम । मै २, ७, १० ।

**द्वैगत ( <द्विगत- [सामन्-])–**

१. तदेतत् स्वर्ग्यं साम…स यदयास्यो ऽमुष्माल्लोकादिमं लोकमागच्छदस्माल्लोकादमुं लोकमगच्छत्स इमौ लोकौ द्विरनुसमचरत् तद् द्वैगतस्य द्वैगतत्वम् । जै ३, २१६ ।

२. द्विगद्वा एतेन भार्गवो द्विः स्वर्गं लोकमगच्छदागत्य पुनरगच्छद् द्वयोः कामयोरवरुद्ध्यै द्वैगतं क्रियते । तां १४, ९,३२ ।

३. स ( अयास्यः ) इमौ लोकौ द्विरनुसमचरत् , तद् द्वैगतस्य द्वैगतत्वम् । जै ३,२१६ ।

द्व्युदास (द्वि-उ° ⌊सामन्-⌋)- द्व्युदासं भवति स्वर्गस्य वा एतौ लोकस्यावसानदेशौ पूर्वेणैव पूर्वमहः स ँ स्थापयन्त्युत्तरेणोत्तरमहरभ्यतिवदन्ति । तां ५, ७, ४ ।

## ध

धन-

१. इहैव रातयः सन्तु इतीहैव नो धनानि सन्त्वित्येवैतदाह । माश १४,२,२, २६ ।

२. तस्माद्धिरण्यं कनिष्ठं धनानाम् । तै ३,११,८,७ ।

३. धनं मे शु ँ स्य पाहि । काठ ७, ३ ।

४. राष्ट्राणि वै धनानि । ऐ ८, २६ ॥ [°न- अमेनि- द्र.] ।

धनुस्-

१. वज्रो वै धनुः (+वज्रो राजन्यः ⌊मै ४, ४, ३⌋) । मै ४,४,३;६, ८ ।

२. वार्त्रघ्नं वै धनुः । माश ५,३, ५,२७ ।

धरुण-

१. अथ यद् धरुण एकविंश इत्यसौ हि स आदित्यः । एतस्मिन् वा इदं सर्वं धृतम् । जै ३, ३०९ ।

२. असावेवादित्यो धरुण एकवि ँ शस्तद्यत्तमाह धरुण इति यदा ह्येवैषोऽस्तमेत्यथेद ँ सर्वं ध्रियते । माश ८, ४, १, १२ ।

३. धरुणमसि दिवं द ँ ह, चक्षुर्दृ ँ ह, श्रोत्रं द ँ ह । तैसं १,१,७,१-२ ।

४. धरुणो मातरं धयन्नित्यग्निमेवैतत्पृथिवीं धयन्तमाह । माश ४, ६, ९, ९ ।

५. प्रतिष्ठा वै धरुणम् । माश ७,४,२,५ ॥ [°ण- अन्तरिक्ष- ११३; अपान- ३५ द्र.] ।

धर्त्र-

१. धर्त्रमसि, दिवं द ँ ह (+ओजो देहि बलं देहि ⌊काठ., क.⌋) । मै १, १, ८; ४,१,८; काठ १, ७; ३१, ६; क १, ७; ४७, ६; माश १, २,१, ११ ।

२. धर्त्रमस्यन्तरिक्षं द ँ ह, प्राणं द ँ हापानं द ँ ह । तैसं १, १,७, १ ।

३. प्रतिष्ठा वै धर्त्रम् । माश ८, ४, १, २६ ।

४. वायुर्वाव धर्त्रं चतुष्टोमः । स आभिश्चतसृभिर्दिग्भिः स्तुते । माश ८, ४, १, २६ ।

धर्म-

१. एष धर्मो य एष ( सूर्यः ) तपत्येष हीद ँ सर्वं धारयत्येतेनेद ँ सर्वं धृतम् । माश १४, २, २, २९ ।

२. तदेतत्क्षत्रस्य क्षत्रं यद्धर्मः । तस्माद्धर्मात्परं नास्ति । माश १४, ४,२,२३ ।

३. धर्मं चर ···धर्मान्न प्रमदितव्यम् । तैआ ७,११,१; तैउ १,११,१ ।

४. धर्म्मं (साम) भवति । धर्म्मस्य धृत्यै । तां १४,११,३५ ।

५. धर्मेण सर्वमिदं परिगृहीतं धर्मान्नातिदुश्चरं तस्माद्धर्मे रमन्ते । तैआ १०, ६२,१ ।
६. धर्मो मनुष्याः (मनुष्यः [गो.]) । काठ ३७,१७; गो २,२,१३ (तु. तैसं ३,५,२,२) ।
७. धर्म्मो वा अधिपतिः । तै ३,९, १६, २ ।
८. धर्मो हैनं (ब्रह्मचारिणम्) गुप्तो गोपायति । गो १,२,४ ।
९. प्रेतिरसि धर्माय त्वा धर्मं जिन्व । तैसं ४,४,१,१ ।
१०. यो वै स धर्मः सत्यं वै तत्तस्मात्सत्यं वदन्तमाहुर्धर्मं वदतीति धर्मं वा वदन्त ५ सत्यं वदतीति । माश १४,४,२,२६ ।
११. वरुणाय धर्मस्य पतये···यवमयं चरुं निर्वपेत् । मै २,६,६ ।
१२. वरुणोऽस्य प्रजां धर्मेण दाधार । ऐआ २,१,७ ।
१३. श्रीर्वै धर्मः । राज्यं वै धर्मः । ···धर्मणो धारयति । जै ३,२३१ ।
१४. स कृष्णमृगोऽभवत्, स कृष्णमृगो भूत्वा पृथिवीमन्वचरत्, तमनु धर्मश्चचार । छु ११३ ॥ [°र्म- अप्- १८८ द्र.] ।

धर्म-धृत्- सोमा इन्द्रो वरुणो मित्रो अग्निस्ते देवा धर्मधृतो धर्मं धारयन्त्वित्येते वै देवा धर्मधृतो यदिमे प्राणाः । मै ४,४,२ ।

धर्म-पति- वरुणो (एवैनम्) धर्म्मपतीनाम् (सुवते) । तै १,७,४,२ ।

धर्मन्-

१. द्यावापृथिवी वरुणस्य धर्मणा विष्कभिते अजरे भूरिरेतसा । मै ४, ११,१ ।
२. धर्मासि दिशो दृ ५ ह योनिं दृ ५ ह प्रजां दृ ५ ह । तैसं १,१,७,२ ।
३. मित्रावरुणौ (+ त्वा परिधत्तां [क.]) ध्रुवेण धर्मणा । मै ४,९,१; क १,११ ।
४. वरुण धर्म्मणां पते । तै ३,११,४,१ ॥ [°र्मन्- दिश्- ४५; ५५ द्र.] ।

धवित्र- प्राणा वै धवित्राणि । माश १४,३,१,२१; तैआ ५,४,१३ ।

धा- धा वै नाम वेदिः । जै १, ८४ ।

धातृ-

१. अग्र ५ वै धाता । मै ४,३,५ ।
२. इयं (पृथिवी) वै धाता । तै ३,८,२३,३ ।
३. उलो (ऊलो [तैसं.]) हलिक्ष्णो वृषद ५ शस्ते धातुः (धात्रे [मै.]) । तैसं ५,५, १२,१; मै ३, १४, १२; काठ ४७,२ ।
४. धर्त्री च धरित्री च मित्रावरुणयोर्मित्रस्य धातुः । तैसं ४, ४, ११, २ ।
५. धाता प्रजाया उत राय ईशे, धातेदं विश्वं भुवनं जजान । धाता पुत्रं यजमानाय दाता, तस्मा उ हव्यं घृतवद् विधेम । तैसं ३, ३, ११, २-३ ।
६. धाता मे धाम्ना सुधां दधातु । काठ ५, ५ ।
७. धाता वषट्कारः । तैसं ३, ४, ९, ६; मै ४, ३, ५; काठ १२, ८ ।
८. धाता षडक्षरेण षड् ऋतूनुदजयत् । तैसं १, ७, ११,१ ।
. धाता षड्ढोता (षड्ढोत्रा [तै २, २, ८, ४]) । तै २,२,८,४;३,१,१ ।

१०. धाता षड्ढोतॄणा ९ होता । तै २, २,८,४; ३, ५, ६ ।
११. धातुः कक्कटः [ उन्नीतम् ( पयः [मै.] ) ] । मै १, ८, १०; काठ ४७, ५ ।
१२. धातुर्दशमी ( नवमी [काठ.] ) । तैसं ५, ७, २२, १; मै ३, १५, ५; काठ ५३, १२ ।
१३. धात्रे पुरोडाशं द्वादशकपालं निर्वपति । तैसं १,८, ८, १ (तु. मै २,६,४; काठ १५,३) ।
१४. धात्रे पृषोदरः । काठ ८, २ ।
१५. नृचक्षसां भागोऽसि, धातुराधिपत्यं, जनित्रं ९ स्पृत ९ सप्तदशः स्तोमः । तैसं ४, ३,९,१; मै २, ८, ५; काठ १७, ४; क २६, ३ ।
१६. प्रजापतिर्धाता । माश ९, ५, १, ३८ ।
१७. मृत्युस्तदभवद्धाता । तै ३, १२,९, ६ ।
१८. यत्सप्तमे ऽहन्प्रवृज्यते । धाता भूत्वा शक्करीमेति । तैआ ५, १२, २ ।
१९. यदिन्द्राय वैराजाय ( निर्वपति), यदेव धातुस्तेजस्तदेवावरुन्धे । तैसं २, ३,७, ३ ।
२०. यद् ( प्रजापतिर्दिक्षु प्रतिष्ठायेद ९ सर्वम् ) दधद्विदधदतिष्ठत्तस्माद्धाता । माश ९,५,१, ३५ ।
२१. यन्त्री च यमनी च मित्रावरुणयोर् मित्रस्य धातुः । काठ २२, ५ ।
२२. यः सूर्यः स धाता स उ एव वषट्कारः । ऐ ३, ४८ (तु. ऐ ३,४७) ।
२३. संवत्सरो वै धाता । तैसं १, ५,१, ३; मै ४, ३, ६; काठ १२, ८; तै १, ७,२, १ ।
२४. सप्तभिरस्तुवत, सप्तर्षयो ( सप्त ऋषयो [मै.] ) ऽसृज्यन्त, धाताऽधिपतिरासीत् । तैसं ४, ३,१०,१; मै २, ८, ६ ।
२५. स यः स धातासौ स आदित्यः । माश ९, ५, १, ३७ ।
२६. सरूपा धात्रे । मै ३, १३, ६ ॥ [°तृ- अग्नि- १९९; अन्न- ६८; आयुस्- २७; क्षत्र- ६१; चन्द्रमस्- ३१; ३७; दीक्षा- १० द्र.] ।

धातृ-मुख- अमितच्छन्दोऽभ्यक्रन्दत् । ततः पशूनसृजत धातृमुखान् । जै ३,२८१ ।

धात्र- धात्रः षट्कपालः (पुरोडाशः) । तां २१, १०,२३ ।

धाना-

१. एणीर्धाना हरिणीरर्जुनीः सन्तु धेनवः । तिलवत्सा ऊर्जमस्मै दुहाना विश्वाहा सन्त्वनपस्फुरन्तीः । तैआ ६, ७,१ ।
२. एतास्ते स्वधा अमृताः करोमि यास्ते धानाः परिकिराम्यत्र । तास्ते यमः पितृभिः संविदानोऽत्र धेनूः कामदुघाः करोतु । तैआ ६,९,१ ।
३. ताः (धानाः) न दद्भिः खादेयुः । पशवो वाऽएते नेत् पशून् प्रम्रदे करवामहाऽइति । माश ४,४,३,११ ।
४. नक्षत्राणां वा एतद्रूपं यद्धानाः । तै ३,८, १४,५ ।
५. पशवो वै धानाः । मै ४,७,४; कौ १८,६; गो २,४,६ ।
६. पितृभ्योऽग्निष्वात्तेभ्यो धानाः । काठ ९,६ ।
७. हर्योर्धानाः (+सह सोमाः [तैसं.]) । तैसं १,४,२८,१; माश ४,२,५,२२ ॥ [°ना- अश्विन्- १८; अहन्- २१; अहोरात्र- ६; इन्द्र- १३८;४१२ द्र.] ।

**धान्य-**

१. दश ग्राम्याणि धान्यानि भवन्ति । व्रीहियवास्तिलमाषा अणुप्रियंगवो गोधूमाश्च मसूराश्च खल्वाश्च खलकुलाश्च । माश १४,९,३,२२ ।
२. धान्यमसि धिनुहि देवान् (+ इति धान्य ९ हि देवान्धिनवदित्यु हि हविर्गृह्यते [माश.]) । तैसं १,१,६,१; मै १,१,७;४,१,७; काठ १,६; ३१,५; क १,६; ४७,५; माश १,२,१,१८ ।
३. विश्वेभ्यो देवेभ्यो धान्यम् । तैआ ३,१०,३ ।

**धामन्-** अङ्गानि वै धामानि । काश ४,३,४,११ ॥ [°मन्- धातृ- ६ द्र.] ।

**धाम-च्छद्-** वाग्धामच्छद् । माश १०, १,३,१० ।

**धाय्या-**

१. इयं (पृथिवी) वै धाय्येयं हि सर्वेषु भूतेषु हिता । शांआ २,४ ।
२. तद्धैके । पुरस्ताद् धाय्ये दधत्यन्नं धाय्ये, मुखत इदमन्नाद्यं दध्म इति वदन्तस्तदु तथा न कुर्य्यात् । माश १,४,१, ३७ ।
३. धाय्याभिर्वै प्रजापतिरिमाँल्लोकानधयद्यं यं काममकामयत । ऐ ३,१८ ।
४. पत्नी (+ वै [ऐ ३,२४]) धाय्या । ऐ ३,२३; २४; गो २, ३,२१;२२ ।
५. प्राणो (+ वै [कौ.]) धाय्या । कौ १५,४; जैउ ३,१,४,३ ।
६. महिषी (वायुर् [जैउ.]) धाय्या । कौ १५,४; जैउ ३,१,४,२ ।
७. यत्र यत्र वै देवा यज्ञस्य छिद्रं निरजानंस्तद्धाय्याभिरपिदधुस्तद्धाय्यानां धाय्यात्वम् । ऐ ३,१८ ।
८. वृषा वै सूददोहा योषा धाय्या । ऐआ १,४,२ ।
९. स्यूमहैतद्यज्ञस्य यद्धाय्याः । ऐ ३, १८ ।

**धारका-** धारका ह वै नामैषैतया ह वै प्रजापतिः प्रजा धारयाञ्चकार । माश ११,६,२,१० ।

**धारा-** तद्यदब्रवीत् (ब्रह्म) आभिर्वा अहमिदं सर्वं धारयिष्यामि यदिदं किंचेति तस्मात् धारा अभवंस्तद्धाराणां धारात्वं यच्चासु ध्रियते । गो १, १,२ ।

**धिया-वसु-** वाग्वै धियावसुः । ऐआ १, १,४ ।

**धिषणा-**

१. इमे वै देवी धिषणे, इदं ध्रुवं सदः, एभिरेवैनं तद् लोकैर्द् ९ हति । जै १,८० ।
२. धिषणाऽसि पार्वती (पर्वत्या [तैसं.])···धिषणाऽसि पार्वतेयी (पार्वती [मै.]) । तैसं. १, १,६,१; मै १,१,७; काठ १,६; क १, ६ ।
३. वाग्वै धिषणा देवी विश्वदेव्यवती । मै ३,१,८; ४, ५, २; माश ६, ५,४,५ ।
४. विद्या वै धिषणा । तैसं ५, १, ७, २; मै ४, २, १; काठ १९, ७; ३१, १; क ३०, ५; ४७, १; तै ३,२,२,२ ॥ [°णा- अन्त- ३ द्र.] ।

**धिष्णिय,°ष्ण्य-**

१. अग्नेरेतास्तन्वो यद् धिष्ण्याः । मै ४, ६, ९ ।
२. अग्नेर्वा एता वैश्वानरस्य प्रियास्तन्वो यद्धिष्ण्याः । काठ २६,१; क ४०,४ ।
३. अमुष्मिन्वै (द्यु-) लोके सोम आसीत् तं धिष्ण्या अगोपायन् । काठ २६,१; क ४०, ४ ।
४. एतानि (स्वानः, भ्राजः, अङ्घारिः, बम्भारिः, हस्तः, सुहस्तः, कृशानुः) वै धिष्ण्यानां

नामानि । माश ३, ३, ३, ११ ।

५. धिष्णिया वा असुर्ष्मिँल्लोके सोममरक्षन्, तेभ्योऽधि सोममाहरन् । तैसं ६, ३, १,२ ।

६. धिष्ण्यान्युप्यन्ते ऽनयोर्लोकयोर्विधृत्यै । क ४०, ४ ।

७. धिष्ण्याः शफाः ( सुपर्णस्य गरुत्मतः ) । मै २, ७, ८; काठ १६, ८ ।

८. प्राणा वा एते यद् धिष्णियाः । तैसं ६, ३, १, ५ (तु. काठ २६, १; क ४०, ४) ।

९. भ्रातृव्या धिष्ण्येषु । काठ ३४, १५ ।

१०. भ्रातृव्यायतनं धिष्ण्याः । मै ३,३, २ (तु. काठ २१, ४; क ३१,१८ ) ।

११. मित्रावरुणौ धिष्ण्येभिः [धिष्ण्यैः [मै.] ( सहागच्छताम् )] । मै १, ९, २; काठ ९, १० ।

१२. यदन्तरुदरे तद् धिष्ण्याः । मै ४, ५, ९ ।

१३. स्त्रीणां वै नेष्टा, पुमान् धिष्ण्यः । काठ २८,८; क ४४, ८ ॥ [°य, °ण्य- अग्निष्टोम- २४; *आहवनीय- २३; गन्धर्व- ८; त्रिवृत्- १४ द्र.*] ।

धी-

१. धीनामवित्री (सरस्वती) । तैसं १, ८, २२, १ ।

२. धीरसीति ध्यायते हि वाचेत्थं चेत्थं च । काठ २४,३; क ३७,४ ।

३. धीरसीत्याह, यद्धि मनसा ध्यायति, तद्वाचा वदति । तैसं ६, १, ७, ४-५ ।

४. प्राणा धियः । माश ६, ३, १, १३ ।

५. युञ्जते धियः, इति ( यदाह ) तद्वाचं युनक्ति । माश ३, ५, ३, ११ ।

६. वाग्वै धीः (+ घृताची [ऐआ.]) । काश ४, २, ४, १३; ५, ३, ८; ऐआ १, १, ४ । [धी- कर्मन्- ४ द्र.] ।

धी-त्व- यद्वाव ध्यायतीत्थमसा ३ दित्थमसा ३ दिति, तदस्या (वाचः) धीत्वम् । मै ३,७,५ ।

धीति- क्रतु- ३ द्र. ।

धुर्-

१. एताभिस्तद् देवा असुरानधूर्वन् । यदधूर्वंस्तस्माद् धुरोऽभवन् । जै १, ३१८ (तु. जै १,९९ )

२. तेन पुरुषेणासुरानधूर्वन्, यदधूर्व ९ स्तद्धुरां धूस्त्वम् । ष २, ३ ।

३. तेभ्यः (देवेभ्यः प्रजापतिः) एतान् धुरः प्राणान्प्रायच्छन्मनः प्रथममथ प्राणमथ चक्षुरथ श्रोत्रमथ वाचं ताभ्यः पञ्चभ्यो धूर्भ्यः पुरुषञ्च पशू ९श्च निरमिमीत । ष २,३ ।

४. द्वे एव धुरौ मनश्चैव वाक् च । जै १,३२० ।

५. धूरसि, धूर्व धूर्वन्तं, धूर्व तं योऽस्मान् धूर्वति, तं धूर्व यं वयं धूर्वामः । तैसं १,१,४,१ ।

६. धूरसि, ध्वर ध्वरन्तम् (+ इत्याह रक्षसां ध्वरायै रक्षसामन्तरित्यै [मै ३, ७, ८]) । मै १, १,४; ३, ७,८ ।

७. धूरसि श्रेष्ठो रश्मीनामपानपाः । तैसं ३, २,१०,२ ।

८. प्रजापतिर्यत् प्रजा असृजत ता धूर्भिरेवासृजत । जै १, ९९ ।

९. प्राणा वै (पशवो [जै.]) धुरः । जै ३,२१०; तां १४,९,१८ ॥ [धुर्- अग्नि- २५४; अन्त- ३; छन्दस्- ३९ द्र.] ।

धुर्य- अग्नि- १६३;४४२ द्र. ।

धूङ्क्षा- अग्नये धूङ्क्षा । काठ ४७,९ ।

धूम-

१. तस्य समासृप्तस्य भीतस्य (वृत्रस्य) यत्र व्याध्यंत ततो धूमोऽसृज्यत । मै ३,९,५ (तु. काठ २६,८) ।

२. दिव्यं सुपर्णं वयसा बृहन्तम्, इति दिव्यो वाऽएष (अग्निः) सुपर्णो वयसो बृहन्धूमेन (वयः = धूमः) । माश ९,४,४,३ ।

३. धूमो वाऽअस्य (अग्नेः) श्रवो वयः स ह्येनममुष्मिँल्लोके (श्रावयति) । माश ७,३,१,२९ ।

४. पृथुं तिरश्चा वयसा बृहन्तम्, इति पृथुर्वाऽएष ( अग्निः ) तिर्यङ् वयसो बृहन्धूमेन। माश ६, ३,३,१९ ।

५. स यत् (मूर्तं शरीरम् ) धुनोति तस्माद् धुनः । धुनो ह वै नामैषः । तं धूम इति परोक्षमाचक्षते परोक्षेणैव । परोक्षप्रिया इव हि देवाः । जै १, ४९ ।

धूम्र- यो धूम्रस्ताम्रधूम्रः (ऋषभः) स प्रजापतिः । मै ४, २, १४ ॥ [°म्र- आन्तरिक्ष-; आश्विन-५ द्र.] ।

धृतव्रत- एष (राजा) च श्रोत्रियश्चैतौ ह वै द्वौ मनुष्येषु धृतव्रतौ । माश ५,४,४,५ ।

धृति-

१. क्षेमो वै धृतिः । माश १३,१,४,३ ।

२. धृतिर्ध्रुवा (प्रायश्चित्तार्थं वेदभागमध्येतुः पुरुषस्य) । तैआ २, १७,२ ।

धृष्टि- स यदेनेन (उपवेषेण) अग्निं धृष्णिववोपचरति तेन धृष्टिः । माश १,२,१,३ ।

धेना-

१. अन्नं वै धेनाः । माश ७,५,२,११ ।

२. धेना बृहस्पतेः (+पत्नी [गो.]) । मै १,९,२; काठ ९,१०; गो २,२,९; तैआ ३,९,१ ।

धेनु-

१. आपो वाव धेनवस्ता हीदं सर्वं धिन्वन्ति । ऐआ १, ३, ५ (तु. कौ १२, १) ।

२. इयं (पृथिवी) वै धेनुः । माश १२, ९, २, ११ ।

३. उपहूता धेनुः सहर्षभा । तैसं २, ६, ७, २-३ ।

४. एतद्वै सर्वं वयो यद् धेनुश्चानड्वाँश्चैतौ वै यज्ञस्य माता च पिता च यद् धेनुश्चानड्वाँश्चाज्यं च पयश्च धेन्वाः, पुरोडाशश्च चरुश्चानडुहः । मै १,६,४ ।

५. दोग्ध्री धेनुः ( आजायताम् ) । तैसं ७, ५, १८, १ ।

६. द्यावापृथिव्या खलु वाव धेनुर्देवतया । काठ ३४, १ ।

७. धेनुः प्रतिहर्तुः, प्रतीव ३ ह्येषा हरति, प्रतीव प्रतिहर्ता । मै ४, ४, ८ ।

८. धेनुरिव पयो अस्मासु धुक्ष्व । तैसं १, १, १४, ३ ।

९. धेनुरिव वा इयं (पृथिवी) मनुष्येभ्यः सर्वान् कामान् दुग्धे ( दुहे [माश.]) । काश १, २,१,१२; माश २,२,१,२१ ।

१०. धेनुर्होत्रे देयाऽऽशिषामवरुद्ध्यै । काठ ८, ८ ।

११. धेनू भौमी । काठ ५०, १ ।
१२. पयस्या वै धेनुः । पयस्याभाजसौ मित्रावरुणौ । जै २,२०३ ।
१३. प्रथमा ह व्युवास, सा धेनुरभवद्यमे । मै २, १३, १० ।
१४. माता धेनुः । माश २, २, १, २१; ५, ३, १, ४ ।
१५. मातेव वा इयं (पृथिवी) मनुष्याणां च पशूनां च मातेव धेनुः । काश १, २,१, १२ ।
१६. वाग्वै धेनुः । मै ४, ४, ८; गो १,२,२१;तां १८, ९, २१ ।
१७. वाचं धेनुमुपासीत । माश १४, ८, ९, १ ।
१८. वाचमेव तद्देवा धेनुमकुर्वत । माश ९, १, २, १७ ।
१९. स धेन्वै चानडुहश्च नाश्नीयाद्धेन्वनडुहौ वा ऽ इद ँ सर्वं बिभृतः । माश ३,१,२,२१ ।
२०. सारस्वतश्चरुर्धेनुर्दक्षिणा । मै २, ६,१३ ॥ [°नु- अदिति- ५२;५७; अनडुह्- ४;१०; अनुमति- ५;१०; आदित्य- ९०;९४; आशिस्- २; इडा- २४; उक्थामद- २; छन्दस्- १८; जगती- ३२;३५; द्यावापृथिव्या- ४; धाना- १;२; द्र. ]।

धेनुष्टरी- धेनुर्वा एषा सती न दुहे तस्माद् धेनुष्टर्युच्यते । काठ १३, ६ ।

ध्रुव-

१. अहर्वै ध्रुवम् । जै ३,५८ ।
२. आयुर्धा असि ध्रुवा ऽऽयुर्मे धेहि । मै ४, ६, ६ ।
३. उपोप्ते ऽन्ये ग्रहाः साद्यन्ते ऽनुपोप्ते ध्रुवस्तस्मादश्वाऽन्ये पशवः प्रतितिष्ठन्ति, मा ँ सेन पुरुषः । मै ४, ६, ६ ।
४. एषां वै लोकानामयमेव ध्रुव इयं पृथिवी ममेवैतेन लोकमुज्जयति । माश ५, १,२,४ ।
५. तद्यदेतं (असुराः) न शेकुरुद्धन्तुं तस्माद् ध्रुवो नाम । माश ४, २, ४, १९ ।
६. तां (पृथिवीम्) देवा ध्रुवेणाद्द ँ हन्, तद् ध्रुवस्य ध्रुवत्वम् । तैसं ६, ५,२,२ ।
७. ध्रुवं वा अनु मनुष्याः प्रजायन्त इतरान् ग्रहानन्वन्याः प्रजाः । काठ २८,१ ।
८. ध्रुवमसि पृथिवीं द ँ हायुर्द ँ ह प्रजां द ँ ह । तैसं १,१,७,१ ।
९. ध्रुवस्तिष्ठाविचाचलिरित्याह प्रतिष्ठित्यै । तैसं ५,२,१, ४ ।
१०. पृथिवी देवता विराट् छन्दो ध्रुवस्य पात्रमसि । तैसं ३,१, ६,३ ।
११. यदाग्निमारुतं तेन ध्रुव उक्थवान् । क ४५,१ ।
१२. यद्वै स्थिरं यत्प्रतिष्ठितं तद् ध्रुवम् । माश ८,२,१,४ ॥ [°व- आयुस्- १०;२३; ३०;३१; ग्रह- १६; धिषणा- १ द्र.] ।

ध्रुव-क्षित्- अन्तरिक्ष- ११४; आत्मन्- १२; उपभृत्- १; दिव्- ११२ द्र. ।

ध्रुव-क्षिति- ध्रुवक्षितिरस्यन्तरिक्षं दृंह । मै १,२,८; ३,८,५ ।

ध्रुवा-

१. अथैनम् (इन्द्रम्) अस्यां ध्रुवायां मध्यमायां प्रतिष्ठायां दिशि साध्याश्चाऽऽप्त्याश्च देवाः··· अभ्यषिञ्चन्···राज्याय । ऐ ८,१४ ।

२. आत्मैव ध्रुवा (+ तद्यात्मन एवेमानि सर्वाण्यङ्गानि प्रभवन्ति तस्माद्ध्रुवाया एव सर्वो यज्ञः प्रभवति [माश १,३,२,२])। माश १,३,२,२;४,५,५।

३. इयं (ध्रुवा) दिगदितिर्देवता (पृथिवी)। काठ ७,२; तै ३, ११,५,३।

४. इयं [+ वै [तैसं.] (पृथिवी)] ध्रुवा। तैसं २,६,५,६; काठ ३१, ९ (तु. मै २,३,२;४,१,११; माश १,३,२,४; तै ३,३,१,२; ६,११)।

५. एवमिव हीयं (पृथिवी) ध्रुवेव प्रतिष्ठितेवाचराचरेव। काठ १२,२।

६. किंदेवतोऽस्यां ध्रुवायां दिश्यसीति। अग्निदेवत इति। माश १४, ६,९,२५।

७. तस्मादस्यां ध्रुवायां मध्यमायां प्रतिष्ठायां दिशि ये के च कुरुपञ्चालानां राजानः सवशोशीनराणां राज्यायैव तेऽभिषिच्यन्ते राजेत्येनानभिषिक्तानाचक्षते। ऐ ८, १४।

८. ध्रुव एहि घृताची पृथिवी जन्मना··· । काठ १, ११; क १, ११।

९. ध्रुवा च पृथिवी च सवितुर्मरुतां वरुणस्य। काठ २२,५।

१०. ध्रुवा दिशां विष्णुपत्न्यघोराऽस्येशाना सहसो या मनोता। बृहस्पतिर्मातरिश्वोत वायुः संधुवाना वाता अभि नो गृणन्तु। विष्टम्भो दिवो धरुणः पृथिव्या अस्येशाना जगतो विष्णुपत्नी। विश्वव्यचा इषयन्ती सुभूतिः शिवा नो अस्त्वदितिरुपस्थे। तैसं ४, ४,१२,५ (तु. मै ३,१६,४; काठ २२,१४)।

११. ध्रुवाऽसि धारया मयि प्रजा ९ रायस्पोषं गौपत्य ९ सुवीर्य ९ सजातान् यजमानाय। तैसं ४,१,५,४।

१२. ध्रुवा सीदेति स्थिरा सीदेत्येतत्। माश ६, १,२,२८।

१३. पशवो वै ध्रुवा। मै ४,१,१२।

१४. पृथिव्यसि जन्मना ध्रुवा नाम। मै १,१,१२।

१५. यजेति ध्रुवाम् [+ तेन [काठ.] (युनक्ति)]। मै ४,१,११; काठ ३१,१३।

१६. वशिनी नामासीयं (ध्रुवा) दिक्, तस्यास्ते यमोऽधिपतिः कल्माषग्रीवो रक्षिता। तैसं ५, ५,१०,२।

१७. वैकङ्कती (यजमानो वै [माश.]) ध्रुवा। तैसं ३,५,७,३; माश १,८,१,३९।

१८. शैशिरौ मासौ प्रयच्छेति। एतौ ते प्रयच्छानीत्यन्नमन्नमित्येव पतित्वास्यै (ध्रुवायै) दिशो रैवतं भा आदत्त। जै २,३६६ ॥ [°वा- अन्न- १०५; अनुष्टुभ्- ५५; धृति- २ द्र.]।

# न

न

१. अथैतत्पूर्णमभ्यात्मम्। यद्मेति··· तस्मात्काल एव दद्यात्काले न दद्यात् तत्सत्यानृते मिथुनीकरोति तयोर्मिथुनात् प्रजायते। ऐआ २, ३, ६।

२. ऊर्ध्व ऊ षु ण ऊतये तिष्ठा देवो न सवितेति यद्वै देवानां नेति तदेषामो ३ मिति तिष्ठ देव इव सवितेत्येव। ऐ २, २।

३. ओ ३ मिति सत्यं नेत्यनृतम्। ऐआ २, ३, ६।

४. यद्वै नेत्यृच्योमिति तत् । माश १, ४, १, ३० ।

५. वियत्सूर्यो न ( इव ) रोचते बृहद्भा इति वियत्सूर्य इव रोचते बृहद्भा इत्येतत् । माश ६, ८, १, १४ ।

नंशि– अशनद् वा इयमिति त एव नंशयः । जै ३, २३८ ।

नकुल– आरण्यो ऽजो नकुलः शका ते पौष्णाः । तैसं ५.५,१२,१ ॥ [ °क– दिश्– २७ द्र.] ।

नक्त– नक्त ऽ वै रक्षा ऽ सि प्रेरते । मै २,१,११ ॥ [ °क्त– अग्नि– ३०६ द्र.] ।

नक्तो(क्ता-उ)षास्– नक्तोषासेति कृष्णायै श्वेतवत्सायै पयसा जुहोति । तैसं ५, ४, ९, ३ ॥ [ °षास्– अहोरात्र– २१; ३८ द्र.] ।

नक्षत्र–

१. अथ यन्नक्षत्राणीत्याख्यायते तल्लोकम्पृणा ( इष्टका ) । माश १०, ५, ४, ५ ।

२. अमूनि नक्षत्राणि सर्वेषां भूतानां प्राणैरप प्रसर्पन्ति चोत्सर्पन्ति च । तैआ १,१४,२ ।

३. इन्द्रो वै वृत्रमह ऽ स्तस्येमे ( द्यावापृथिव्यौ ) रूपाण्युपैतां चित्राणीयं ( पृथिवी ), नक्षत्राण्यसौ ( द्यौः ) । मै ४, ४, ७ ।

४. एकं द्वे त्रीणि चत्वारीति वा ऽ अन्यानि नक्षत्राण्यथैता एव भूयिष्ठा यत्कृत्तिकाः । माश २, १, २, २ ।

५. क्षत्रं नक्षत्राणाम् ( आदित्य आदत्त ) । जै २.२६ ।

६. चित्राण्येव नक्षत्राणाम् ( रूपम् ) । जै २, ४२९ ।

७. ज्योतिर्वै नक्षत्राणि । कौ २७, ६ ।

८. तन्नक्षत्राणां नक्षत्रत्वं यन्न क्षियन्ति । गो २,१,८ ।

९. तस्मात्सोमो राजा सर्वाणि नक्षत्राण्युपैति । ष ३, १२ ।

१०. तानि ( पुण्डरीकाणि ) नक्षत्राणा ऽ रूपम् । माश ५, ४, ५, १४ ।

११. तानि वा ऽ एतानि सप्तवि ऽ शतिर्नक्षत्राणि सप्तवि ऽ शतिः सप्तवि ऽ शतिर्होपनक्षत्राण्येकैकं नक्षत्रमनूपतिष्ठन्ते । माश १०, ५, ४, ५ ।

१२. ते ह देवा ऊचुः । यानि वै तानि क्षत्राण्यभूवन्न वै तानि क्षत्राण्यभूवन्निति । तद्वै नक्षत्राणां नक्षत्रत्वम् । माश २,२,२,१९ (तु. तै २,७,१८,३) ।

१३. नक्षत्राणां वा ऽ एतद्रूपं यल्लाजाः । माश १३, २, १, ५ ।

१४. नक्षत्राणां वा एषा दिग्यदुदीची । प ३, १ ।

१५. नक्षत्राणां चतुर्थी (°णामतीरोकाः [काठ २३,१] । तैसं ५, ७, २२, १; काठ ५३, १२ ।

१६. नक्षत्राणि प्रतिरूपेण [ रूपैः [मै.] (सहागच्छन्तु)] । मै ३. १५, ८; काठ ५३, १० ।

१७. नक्षत्राणि ( पुरुषस्य [=आदित्यस्य]) रूपम् । तैसं ७, ५, २५, १; तैआ ३,१३, २ ।

१८. नक्षत्राणि वै जनयो ये हि जनाः पुण्यकृतः स्वर्गं लोकं यन्ति तेषामेतानि ज्योती ऽ षि । माश ६,५,४,८ ।

१९. नक्षत्राणि वै रोचना दिवि । तै ३,९,४, २ ।

२०. नक्षत्राणि स्थ चन्द्रमसि श्रितानि । संवत्सरस्य प्रतिष्ठा । तै ३,११,१, १३ ।
२१. नक्षत्राणि (सर्वोऽग्निः) स्वलोके । तैआ १,२०, २ ।
२२. प्रजापतिर्वै सोमाय राज्ञे दुहितॄरददान् नक्षत्राणि । मै २,२,८; काठ ११,३ ।
२३. ब्राह्मणो वा अष्टावि ँ शो नक्षत्राणाम् । तै १,५,३,४ ।
२४. भाकुरयो ह नामैते भा ँ हि नक्षत्राणि कुर्वन्ति । माश ९,४,१,९ ।
२५. यत् पुण्यं नक्षत्रं तद्वषट्कुर्वीतोपव्युषं यदा वै सूर्य उदेति । अथ नक्षत्रं नैति । यावति तत्र सूर्यो गच्छेत् । यत्र जघन्यं पश्येत् । तावति कुर्वीत । यत्कारी स्यात् । पुण्याह एव कुरुते । तै १,५,२,१ ।
२६. यथैवासौ सूर्य एवम् (नक्षत्रम्) । तेषाम् (नक्षत्राणाम्) एष (सूर्यः) उद्यन्नेव वीर्यं क्षत्रमादत्त । माश २, १,२, १८ ।
२७. यानि वा पृथिव्याश्चित्राणि तानि नक्षत्राणि । तै १,५,२,६ ।
२८. यावन्त्येतानि नक्षत्राणि तावन्तो लोमगर्ता यावन्तो लोमगर्तास्तावन्तः सहस्रसंवत्सरस्य मुहूर्ताः । माश १०, ४,४,२ ।
२९. यो वा इह यजते । अमु ँ स लोकं नक्षते । तन्नक्षत्राणां नक्षत्रत्वम् । तै १,५,२,५ ।
३०. यो वै बहु ददिवान् बह्वीजानोऽग्निमुत्सादयतेऽक्षित्तद् वै तस्य, तदीजाना वै सुकृतोऽमुं लोकं नक्षन्ति ते वा एते यन्नक्षत्राणि । मै १,८,६ ।
३१. संवत्सरस्य (नक्षत्राणि) प्रतिष्ठा । तै ३, ११,१, १३ ।
३२. संवत्सरोऽसि नक्षत्रेषु श्रितः । ऋतूनां प्रतिष्ठा । तै ३,११,१,१४ ।
३३. सप्तवि ँ शतिर्दिव्यानि नक्षत्राणि । जै ३, ८६ ( तु. तां २३, २३, ३; शांआ २,१६० ) ।
३४. सुकृतां वा एतानि ज्योती ँ षि यन्नक्षत्राणि । तैसं ५,४,१,३ । [ °त्र- अप्- १९०; अक्षीवि- २; आदित्य- २६३; चन्द्रमस्- २३;३८;३९;४१;६२;८४;९९; जनि- २; ज्योतिस्- १४; दिव्- २७;१०६;१०७;१४५; देवगृह-; धाना- ८ द्र.] ।

**नक्षत्र-विहिता-** दिव्- ११३ द्र. ।

**नचिकेतस्-** उशन् ह वै वाजश्रवसः सर्ववेदसन्ददौ । तस्य ह नचिकेता नाम पुत्र आस । तै ३,११,८,१ ।

**नड (=नल-)-** नडो दग्धः क्रूर इव वर्वरः । काठ २५,७ ॥ [°ड- अन्वाहार्यपचन- १ द्र.] ।

**नद-**

१. पुरुषो वै नदस्तस्मात् पुरुषो वदन्सर्वः संनदतीव । ऐआ १, ३, ५ ।
२. प्राणो वै नदस्तस्मात्प्राणो नदन्सर्वः संनदतीव । ऐआ १, ३, ८ ।

**नदी-**

१. तस्माद्य ऽएतासां नदीनां पिबन्ति रिप्रतरा शपनतरा आहनस्यवादितरा भवन्ति । माश ९, ३, १, २४ ।
२. यददः सम्प्रयतीरहा अनदता हते । तस्मादा नद्यो नामस्थ ता वो नामानि सिन्धवः । मै २, १३, १ ।

नदी-पति-

१. अपां वा ऽ एष पतिर्यन्नदीपतिः । माश ५, ३, ४, १० ।

२. प्लवो मद्गुर्मत्स्यस्ते नदीपतये । मै ३, १४, १५ ।

नपुंसक- यद्विद्युता तेन नपु ९ सकम् । ष १, २ ।

नभस्-

१. एताव् ( नभश्च नभस्यश्च ) एव वार्षिकौ ( मासौ )। अमुतो वै दिवो वर्षति तेनो हैतौ नभश्च नभस्यश्च । माश ४, ३, १, १६ ।

२. चत्वारि वै नभा ९ सि देवाः पितरो मनुष्या असुराः । मै ४, २, १ ।

३. तद् यद् वै तन्नभो नामाभीर्वै सा । न हि तत्प्राप्य कस्माच्चन बिभेति । तस्मात्तन्नभः । जै १, ३० ।

४. नभ उदर्येण ( आवाहयामि ) । तैसं ५, ७, १६, १; मै ३, १५, ७; काठ ५३, ६ ।

५. नभो दिव्यं गच्छ स्वाहेत्याह, प्रजाभ्य एव प्रजाताभ्यो वृष्टिं नियच्छति । तैसं ६,४,१,३-४ ।

६. नभो (अश्वस्य मेध्यस्य) मा ९ सानि । तैसं ७, ५, २५,१ ।

७. नभो लोकानां जयति प्रजापतिं देवं देवानाम् । जै १, २९ ।

८. नभो ऽसि प्रतक्वा । । मै १, २, १२; काठ २, १३; क २, ७ ।

९. विदेदग्निर्नभो नामाग्नेऽङ्गिर आयुना नाम्नेहीति । माश ३, ५, १, ३२ । [°भस्- अग्नि- ६४०; अन्तरिक्ष- २४ द्र.] ।

नभसस्पति- वायुर्वै नभसस्पतिः । तैसं ३,३,८,६; गो २,४,९ ॥ [°ति- अग्नि- २०० द्र. ] ।

नभस्य- नभस्- १ द्र. ।

नभस्वत्-

१. प्रतक्वाऽसि नभस्वान् । तैसं १, ३, ३, १ ।

२. समुद्रोऽसि नभस्वान् इत्याहैतद्वै वातस्य रूपम् । तैसं ५, ४, ९, ४ ।

नभोरूप- नभोरूपाः ( पशवः ) पार्जन्याः । मै ३, १३, ७ ।

नमस्-

१. तन्नम इत्युपासीत । नम्यन्ते ऽस्मै कामाः । तैआ ९, १०, ४; तैउ ३, १०, ४ ।

२. तस्मादु ह नायज्ञियं ब्रूयान्नमस्त ऽ इति यथा हैनं (अयज्ञियम्) ब्रूयाद्यज्ञस्त इति तादृक्तन् माश ७, ४, १, ३० ।

३. नमः पशुभ्यः पशुपतये करोमि । तैसं ३, १, ४, ४ ।

४. नमः श्वभ्यः श्वपतिभ्यश्च वो नमः । तैसं ४, ५, ४, २-३ ।

५. नमः सृकाविभ्यो जिघा ९ सद्भ्यो मुष्णतां पतये नमो नमोऽसिमद्भ्यो नक्तंचरद्भ्यः ···कुलुञ्चानां पतये नमः ··· विध्यद्भ्यश्च वो नमः···नमो अश्वेभ्यः । तैसं ४, ५,३,१-२ ।

६. नमो हि देवानाम् । काठ २६, २; क ४०, ५ ।

७. यज्ञो वै नमः । माश २, ४, २, २४; ६, १, ४२; ७, ४,१,३०; ९,१, १, १६ ।

८. स ( शर्यातो मानवः ) हैनं ( च्यवनम् ) आद्रुत्याब्रवीद्, ऋषे नमस्ते ऽस्तु । जै ३, १२२ ।

९. स्तेनानां पतये नमः··· तस्कराणां पतये नमः, नमो वञ्चते परिवञ्चते स्तायूनां पतये नमः। तैसं ४, ५,३, १ ॥ [मस्- अन्न- ७१; देव- १३२ द्र.]।

**नमस्-कार-** देव- १३२ द्र.।

**नमस्-कृत्य** नमस्कृत्य हि वसीयाᳪ समं (श्रेयाᳪ समं [काठ.]) उपचरन्ति। तैसं ५,४,४,५; काठ २१,७।

**नमस्य-**

१. नमस्यो ह्येषः (अग्निः)। माश १, ४, १, २९।

२. पितरो नमस्याः (देवाः)। तैसं २, ५, ९, ६; माश १, ५, २, ३।

**नमुचि-**

१. इन्द्रस्येन्द्रियमन्नस्य रसᳪ सोमस्य भक्षᳪ सुरया सुरो नमुचिरहरत्सो (इन्द्रः) ऽश्विनौ च सरस्वतीं चोपाधावच्छेपानो ऽस्मि नमुचये न त्वा दिवा न नक्तᳪ हनानि न दण्डेन धन्वना न पृथेन न मुष्टिना न शुष्केण नार्द्रेणाथ मऽ इदमहार्षीदिदं मऽ आजिहीर्षथेति। ते (अश्विनौ सरस्वती च) अब्रुवन्। अस्तु नो ऽत्राप्यथाहरामेति सह न एतदथाहरतेत्य-ब्रवीदिति। तावश्विनौ च सरस्वती च। अपां फेनं वज्रमसिञ्चन्न शुष्को नार्द्र इति तेनेन्द्रो नमुचेरासुरस्य व्युष्टायाᳪ रात्रावनुदित ऽआदित्ये न दिवा न नक्तमिति शिर उदवासयत्। तस्मादेतदृषिणाऽभ्यनूक्तम्। अपां फेनेन नमुचेः शिर इन्द्रोदवर्तयः, विश्वा यदजय स्पृधः, इति पाप्मा वै नमुचिः ······ तस्य (नमुचेः) शीर्षेश्छिन्ने लोहितमिश्रः सोमोऽतिष्ठत्। माश १२, ७, ३, १-४।

२. न मा शुष्केण नार्द्रेण हनः (नमुचिरुवाच)। न दिवा न नक्तमिति। स एतमपां फेनम-सिञ्चत्। न वा एष शुष्को नार्द्रो व्युष्टासीत्। अनुदितः सूर्य्यः। न वा एतद्दिवा न नक्तम्। तस्य (नमुचेः) एतस्मिँल्लोके। अपां फेनेन शिर उदवर्त्तयत्। तै १, ७, १, ६-७।

३. निरस्तं नमुचेः शिरः। तैसं १, ८, १४, १।

४. प्रत्यस्तं नमुचेः शिरा (शिरः) इति सीसं पण्डगाय प्रत्यस्यति, पाप्मा वै नमुचेः शिरः, पाप्मानᳪ वावास्मा (पण्डगाय) एतत् प्रत्यस्यति। मै ४, ४, ४।

५. यमश्विना नमुचेरासुरादधीत्यश्विनौ, क्षत्रं (सोमम्) नमुचेरध्याहरताᳪ सरस्वत्य-सुनोदिन्द्रियायेति··· । माश १२, ८, १, ३।

६. सविता वरुणो दधद्यजमानाय दाशुषे। आदत्त नमुचेर्वसु सुत्रामा बलमिन्द्रियम्। ३,११, ४; काठ ३८,९ ॥ [°चि- अश्विन्- ४०; इन्द्र- ६०;२७८; ३०५ द्र.]।

**नरक-**

१. दक्षिणपूर्वस्यां दिशि विसर्पी नरकः··· दक्षिणापरस्यां दिश्यविसर्पी नरकः ······ उत्तरपूर्वस्यां दिशि विषादी नरकः ··· उत्तरापरस्यां दिश्यविषादी नरकः। तैआ १, १९, १-४।

२. दश पुरुषे स्वर्गनरकाणि तान्येनं स्वर्गं गतानि स्वर्गं गमयन्ति नरकं गतानि नरकं गमयन्ति। जैउ ४, ११, ४, ६।

३. मनो नरको वाङ् नरकः प्राणो नरकश्चक्षुर्नरकश्श्रोत्रं नरकस्त्वङ् नरको हस्तौ नरको गुदं नरकश्शिश्नं नरकः पादौ नरकः। जैउ ४, ११, ५, १।

नारक- प्रस्तुत एव पुरादेस्स एवैको नारकः (साम्नः)। जै १,३२५।

नरंधिष- नरंधिषः प्रोह्यमाणः (सोमः)। तैसं ४, ४,९,१।

नराशंस-

१. अन्तरिक्षं वै नराश ँसः। माश १, ८, २, १२।

२. देवस्याहं नराशंसस्य देवयज्यया पशुमान् भूयासम्। काठ ५, ३।

३. देवो नराश ँसस्त्रिशीर्षा षडक्षः...... । मै ४, १३, ८।

४. नराश ँसस्याहं देवयज्यया पशुमान् भूयासम्। तैसं १, ६, ४, १।

५. नराश ँसेन वै प्रजापतिः पशूनसृजत। काठ ३२, ३।

६. प्रजा वै नरस्ता अन्तरिक्षमनु वावद्यमानाः प्रजाश्चरन्ति यद्धै वदति श ँसतीति वै तदाहुस्तस्मादन्तरिक्षं नराश ँसः। माश १, ८, २, १२।

७. मनुष्या वै (हि [काठ.]) नराश ँसः। काठ ३७, ४; तै २, ७, ५, २।

नराशंस-पङ्क्ति- द्विनाराशंसं प्रातःसवनं द्विनाराशंसं माध्यन्दिनं सवनं सकृन्नाराशंसं तृतीयसवनमेष वै यज्ञो नराशंसपङ्क्तिः। ऐ २, २४ (तु. मै ३,१०, ५)।

नाराशंस-

१. अथैतन्मृद्विव छन्दः शिथिरं यन्नाराशंसम्। ऐ ६,१६।

२ नाराश ँसो (यज्ञः) ऽप्रसृतः। काठ ३६,३।

३. पितॄणां नाराशंसः (भक्षितशेषः सोमः)। तैसं ४,४,९,१;२।

४. पितृभ्यो नाराशंसेभ्यः स्वाहा। माश १२,६,१,३३।

५. मनो न्वाहुवामहे नाराश ँसेन स्तोमेन पितृणां (पितॄणां [मै.]) च मन्मभिः। तैसं १,८,५, २; मै १,१०,३; काठ ९. ६।

६. यद्धविर्धानयोर् नाराश ँसाः सीदन्ति तत् पितृषु जुहोति। माश ३,६, २,२५।

७. विकृतिर्वै नाराशंसं किमिव च वै किमिव च रेतो विक्रियते तत्तदा विकृतं प्रजातं भवति। ऐ ६,१६।

नाराशंसपङ्क्ति- द्विनाराशंसा प्रातस्सवने, द्विनाराश ँसा माध्यन्दिन एकनाराश ँसा तृतीयसवने, तेन नाराशंसपङ्क्तिः। काठ २९,१, क ४५,२।

नाराशंसी- नाराशंसीर्भवन्ति शान्त्यै। मै २, १, ५॥ [°सी- अनृत- ९; गाथा-नाराशंसी- द्र.]।

नर्य-

१. गार्हपत्यो वै नर्यः। क ६, १।

२. नर्य प्रजां मे गोपाय (+अमृतत्वाय जीवसे। जातां जनिष्यमाणां च। अमृते सत्ये प्रतिष्ठिताम् [तै १, २, १,२५])। तै १, १,१०,४; २, १,२५ (तु. मै १, ५, १४; काठ ७,३)।

**नर्यापस्** (अग्नि-)- नर्यापस उपदिश्यस्य ( वायवीदिग्भवस्य ) स्थाने स्वतेजसा भाति । तैआ १, १८,१ ।

**नल**- नड- द्र. ।

**नवदश**- यन्नवदशः (स्तोमः) प्रजननं तेन ( अवरुन्धे )। तां १९, १८,३ ॥ [°श- तपस्- १८; १९ द्र. ] ।

**नवनीत**-

१. एतत् सर्वदेवत्यं यन्नवनीतम् । तैसं ६, १,१,५ ।

२. घृतं देवानामायुतं मनुष्याणां निष्पक्वं गन्धर्वाणा ँ स्वयं विलीनं पितृणा ँ सर्वदेवत्यं वा एतत् (नवनीतम् ) तस्मान्नवनीतेनाभ्यङ्क्ते । मै ३, ६,२ ।

३. नवनीतं गर्भाणाम् (सुरभि) । ऐ १, ३ ।

४. नैतद्देवत्रा न मनुष्यत्रा यन्नवनीतम् । काठ २३,१; क ३५,७ ।

५. यन्नवमित्यब्रुव ँ स्तन्नवनीतस्य नवनीतत्वम् । काठ २४, ७; क ३७,८ ।

६. यन्नवमैत्तन्नवनीतमभवत् । तैसं २,३,१०,१; मै २,३,४ (तु. काठ ११, ७) ।

**नवम**- परमं नवममहः । जै ३,२४० ।

**नवरात्र**-

१. अन्तो नवममहः, क्षेतीव ( निवसत्येव ) वा अन्तं गत्वा नवमेऽहनि"'जातवेदसे सुनवाम सोमम्, इति जातवेदस्या (ऋक्) ऽच्युता,"'बहु वा एतस्मिन्नवरात्रे किंच किंच वारणं क्रियते शान्त्या एव । ऐ ५,२१ ।

२. अन्नाद्यकामो हैतेन (नवरात्रेण) यजेत । जै २, ३१८ ।

३. आयुष्काम एवैनेन (नवरात्रेण) यजेत । जै २,३१६ ।

४. एतद् वाव मनुष्यस्यामृतत्वं यत्सर्वमायुरेति वसीयान् भवति । सर्वमायुरेति वसीयान् भवति । य एवं वेद । नवरात्रो वा एष, नव प्राणाः प्राणेष्वेव प्रतितिष्ठति । तां २२, १२,२-४ ।

५. तेभ्य ( देवेभ्यः) एतेन नवरात्रेणामृतत्वं(प्रजापतिः) प्रायच्छत् । तां २२,१२,१ ।

६. ब्रह्मवर्चसकाम एवैनेन (नवरात्रेण) यजेत । जै २,३१६ ।

७. यर्हि प्रजाः क्षुधं निगच्छेयुस्तर्हि नवरात्रेण यजेत । तैसं ७, २,४,१ ।

८. यो ज्योगामयावी स्यात् स नवरात्रेण यजेत, प्राणा हि वा एतस्या धृता । अथैतस्य ज्योगामयति, प्राणानेवास्मिन् दधारोत यदीतासुर्भवति जीवत्येव । तैसं ७,२,४,३ ॥ [°त्र- तेजस्- २४; दिश्- ५१ द्र.] ।

**नवहोतृ**- आदित्य- १५० द्र. ।

**नवाक्षर**- नवाक्षरमसुराणामवममासीत् पञ्चदशाक्षरं परमम् । जै १,१९३; १९७ ।

**नवाह्-** नवाहो वै संवत्सरस्य प्रतिमा नव प्राणाः प्राणानेवावरुन्धते । ष ३,१२ ।

**नस्-**

१. नसोः प्राणः ( मेऽस्तु ) । तैसं ५, ५, ९, ३ ।
२. नसोर्वायुश्च प्राणश्च (पुरुषस्य जातौ) । काठसंक १०१:८ ।

**नाक-**

१. तम् ( त्रयस्त्रिंशं स्तोमम् ) उ नाक इत्याहुर्न हि प्रजापतिः कस्मै चनाकम् । तां १०, १,१८ ।
२. नाक ९ रोहति स्वर्गमेव तल्लोक ९ रोहति । तां १८, ७, १० ।
३. नाकं साम्राज्यम् ( छन्दः ) । शांआ ११, ७ ।
४. नाकम्…… न वै तत्र किंचन जग्मुषे ऽकम् । मै ३, ३, १ (तु. तां २१, ८, ४) ।
५. नाकः षट्त्रिं ९शः ( स्तोमः ) । तैसं ४, ३, ८, १; मै २, ८, ४ ।
६. नाके बृहतस्स्तोत्रेण ( प्रतितिष्ठति ) । काठ १४,९ ।
७. येना ऋषयस्तपसा सत्रमासतेन्धाना अग्नि ९ स्वराभरन्तः । यमाहुर्मनवः स्तीर्णबर्हिषं तस्मिन्नहं निदधे नाके अग्निम् । मै २, १२, ४ ।
८. संवत्सरो वाव नाकः षट्त्रिं ९शस्तस्य चतुर्विं ९शतिरर्धमासा द्वादश मासास्तद्यत्तमाह नाक इति न हि तत्र गताय कस्मै चनाकं भवति । माश ८, ४, १,२४ ।
९. स नाको नाम दिवि रक्षोहाग्निः । मै ४,१,९; काठ ३१,७; क ४७,७ ।
१०. सुवर्गो वै लोको नाकः । तैसं ५, ३, ३, ५ ।
११. सूर्यस्त्वा पुरस्तात् पातु कस्याश्चिदभिशस्त्याः (+वर्षिष्ठे ऽधि नाके [काठ., क.] ) । तैसं १, १, ११, २; काठ १, ११; क १, ११ ।
१२. स्वर्गो वै लोको नाकः [+यस्यैता ( नाकसद इष्टकाः ) उपधीयन्ते, नास्मा अकं भवति [तैसं.] ] । तैसं ५, ३, ७,१; माश ६,३,३,१४;७,२,४ ॥ [°क- आदित्य- ४; उत्तरात् १२; दिश्- ४९ द्र.] ।

**नाक-सद्-**

१. आत्मा वै नाकसदः । माश ८, ६, १, १२; १३ ।
२. तद्यदेतस्मिन्नाके स्वर्गे लोके देवा असीदंस्तस्माद्देवा नाकसदः । माश ८, ६, १, १ ।
३. तद्या अमुष्मादादित्यादर्वाच्यः पञ्चदिशस्ता नाकसदः । माश ८, ६, १, १४ ।
४. न वा अमुं लोकं जग्मुषे किंचनाकं तन्नाकसदां नाकसत्त्वम् । काठ २१,२; क ३१,१७ ।
५. य ऽ इमे चत्वार ऋत्विजो गृहपतिपञ्चमास्त नाकसदः । माश ८, ६, १, ११ ।
६. यद् ( विश्वेदेवाः ) अब्रुवन् न सदाम वै स्वर्गे लोके नाक इति तन्नाकसदां नाकसत्त्वम् । जै २, २१० ।
७. यन्नाके स्वर्गे लोके ( देवाः) व्यत्रासंस्तन्नाकसदां नाकसत्त्वम् । जै २,२०७ ।

**नाक्र-** वरुणाय नाक्रान् ( आलभते ) । मै ३, १४, २ ।

**नाचिकेत-** (<नचिकेत-)

१. अनन्त ९ह वा अपारमक्षय्यं लोकं जयति । योऽग्निं नाचिकेतं चिनुते । तै ३,११,७,४ ।
२. अप पुनर्मृत्युं जयति । योऽग्निं नाचिकेतं चिनुते य उ चैनमेवं वेद । तै ३,११,८, ६ ।

३. अभि स्वर्गं लोकं जयति योऽग्निं नाचिकेतं चिनुते । तै ३, ११,९,७ ।
४. अयं वाव यः (वायुः) पवते । सोऽग्निर् नाचिकेतः । तै ३,११,७,१ ।
५. एतामृद्धिमृध्नोति । यामिदं वायुरिद्धः । योऽग्निं नाचिकेतं चिनुते । तै ३,११,९,३ ।
६. कमाग्निं चिनुते नाचिकेतमग्निं चिन्वानः । *प्राणान् प्रत्यक्षेण । तैआ* १, २२, १०-११;
७. ज्यैष्ठ्यं गच्छति योऽग्निं नाचिकेतं चिनुते । तै ३,११, ९,७ ।
८. नास्येष्टापूर्ते क्षीयेते । योऽग्निं नाचिकेतं चिनुते । तै ३, ११,८,५ ।
९. प्र सहस्रं पशूनाप्नोति । योऽग्निं नाचिकेतं चिनुते । ३, ११, ९,४ ।
१०. विन्दत एव प्रजाम् । अभि स्वर्गं लोकं जयति । योऽग्निं नाचिकेतं चिनुते । तै ३,११,९,२ ।
[ °त- अग्नि- ७१३;७६९; आदित्य- १ द्र.] ।

**नाडीतूणव-** नाडीतूणवा वदन्ति, या वनस्पतिषु वाक्ता तेनावरुन्धते । काठ ३४,५ ।

**नानद** (सामन्-)-
१. अभ्रातृव्यं वा एतद् भ्रातृव्यहा साम यन्नानदम् । ऐ ४, २ ।
२. इन्द्रः प्रजापतिमुपाधावद् वृत्रं हनानीति तस्मा एतामनुष्टुभमपहरसं प्रायच्छत्तया नास्तृणुत यदस्तृतो व्यनदत्तन्नानदस्य नानदत्वम् । तां १२, १३, ४ ।
३. नानदेन वा इन्द्रो वृत्रं नानद्यमानमहन् । यन् नानद्यमानमहंस्तन्नानदस्य नानदत्वम् । जै ३, ८० ।
४. स ( इन्द्रः ) यदस्तृत्वा व्यनदत् तन्नानदमभवत्तन्नानदस्य नानदत्वम् । जै १, २०३ ।
५. सो ऽभिहतो (वृत्र इन्द्रेण ) व्यनदद्यद् व्यनदत्तन्नानदं सामाऽभवत्तन्नानदस्य नानदत्वम् । ऐ ४, २ ।

**नाभानेदिष्ठ-, °ष्ठीय-**
१. यदि नाभानेदिष्ठं रेतोऽस्यान्तरियात् । ऐ ५,१५ ।
२. रेतो वै नाभानेदिष्ठः (हि नाभानेदिष्ठीयम् [तां.]) । ऐ ६,२७; गो २,६,८; तां २०,९,२ ।
३. स एष सहस्रसनिर्मन्त्रो यन्नाभानेदिष्ठम् (सूक्तम्) । ऐ ५,१४ ।

**नाभि-**
१. अथ त्रिष्टुप् । नाभिरेव सा··· । एतेनैकमेव प्राणेन करोति यदेव प्राणानुदनतोऽनूदनिति । जै १,२५४ (तु. जै १,१२७) ।
२. ऊर्ध्वं (+वै [क.]) नाभ्यास्सदेवम् । काठ १९,११; क ३१,१ ।
३. एतद्धै पशोर्मध्यतरं यदुपरिनाभि पुरीषसंहिततरं यदवाङ् नाभेः । माश ६, ७, १, १० ।
४. एव ह्येष गुदः प्राणः समन्तं नाभिं पर्यक्नः । माश ८, १,३,१० ।
५. तस्मान्नाभिरनवतृण्णा दशमी प्राणानाम् । तां ६, ८,३ ।
६. नाभिं वै पितरोऽभिसंजानते । क ४०,४ ।
७. नाभिर्वा एतास्तिस्रो विराजः (यद् दैवी यज्ञिया मानुषी चेति) । जै १, २४६ ।
८. नाभिर्वै प्राणान् दाधार ये चोर्ध्वा ये चावाञ्चः । काठ ३७,१६ ।
९. नाभिर्वै हिङ्कारः । जै १,३०६ ।
१० प्राणो वा अयं सन्नाभेरिति तस्मान्नाभिस्तन्नाभेर्नाभित्वम् । ऐ १, २० ।

११. मध्यं वै नाभिर्मध्यमभयम् । माश १,१,२,२३ ।

१२. यद्वै प्राणस्यामृतमूर्ध्वं तन्नाभेरूर्ध्वैः प्राणैरुच्चरत्यथ यन्मर्त्यं पराङ्नाभिमत्येति । माश ६,७,१,११ ।

१३. विधृतिं नाभ्या (प्रीणामि) । मै ३,१५,८ ॥ [ °भि- अन्तरिक्ष- ११६; अपान- ३७;४२; अमेध्य- ३; आश्विन- ९; गर्भ- १५ द्र.] ।

नाभि-दघ्ना- नाभिदघ्ना (आसन्दी) भवति । अत्र (नाभिप्रदेशे) वाऽअन्नं प्रतितिष्ठति··· अत्रोऽएव रेतस आशयः । माश ३,३,४,२८ ।

नामन्-

१. तस्मात्पुत्रस्य जातस्य नाम कुर्यात्पाप्मानमेवास्य तदपहन्त्यपि द्वितीयमपि तृतीयमभिपूर्वमेवास्य तत्पाप्मानमपहन्ति । माश ६, १,३,९ ।

२. नामानि (प्राणस्य) दामानि । ऐआ २,१,६ ।

३. यजूꣳषि नाम (सुपर्णस्य गरुत्मतः) । मै २,७,८; काठ १६,८ ।

४. राध्नोति हैव य एवं विद्वान्द्वितीयं नाम कुरुते । माश ३,६,२,२४ ।

नारक- नरक- द्र. ।

नारायण-

१. पुरुषं ह वै नारायणं प्रजापतिरुवाच । गो १,५,११; माश १२, ३,४,१ ।

२. पुरुषो ह नारायणोऽकामयत । अतितिष्ठेयꣳ सर्वाणि भूतान्यहमेवेदꣳसर्वꣳ स्यामिति स एतं पुरुषमेधं पञ्चरात्रं यज्ञक्रतुमपश्यत्तमाहरत्तेनायजत । तेनेष्ट्वात्यतिष्ठत्सर्वाणि भूतानीदꣳ सर्वमभवत् । अतितिष्ठति सर्वाणि भूतानीदꣳसर्वं भवति य एवं विद्वान् पुरुषमेधेन यजते यो वैतदेवं वेद । माश १३,६,१,१ ।

नाराशंस- नराशंस- द्र. ।

नारी-

१. इमा नारीरविधवाः सुपत्नीराञ्जनेन सर्पिषा संस्पृशन्ताम् । अनश्रवो अनमीवाः सुशेवा आरोहन्तु जनयो योनिमग्रे । तैआ ६,१०,२ ।

२. पुमांसो वै नरः । स्त्रियो नार्यः । ऐ ३,३४ ।

नार्मेध ([<नृ-मेध-] सामन्-)-

१. तदेतद् गातुविन्नाथवित् साम ।···यद्वु नृमेधोऽपश्यत् तस्मान्नार्मेधमित्याख्यायते । जै १, १७१ ।

२. पशवो वै नार्मेधम् । जै २, १९५ ।

नाष्ट्रा-

१. तथैनꣳ (यजमानम्) राष्ट्या न नाष्ट्रा विन्दति । काश १,४,१,१७ (तु. माश २,३,४,२३) ।

२. या एवैनꣳ स्वपन्तं नाष्ट्रा दिप्सन्ति स्वप्ने एनं ताभ्यः पाति । काठ ३७,१६ ।

नासिका-

१. नासिकेऽउ वै प्राणस्य पन्थाः । माश १२,९,१, १४ ।

२. प्रजापतेर्वै नासिकाऽशीर्यत, सोत्तरवेदिरभवत् । काठ २५, ६ ।

३. मध्यमेतत्प्राणानां यन्नासिके। माश १३,४, ४,६।

४. यथा वै नासिकैवं यूपः। माश ४, २, १, २५॥ [°का- अपान- ७; उत्तरवेदि- ४;११ उष्णिक्ककुभ्- ३ द्र.]।

**निकाय-** वायुर्वै निकायश्छन्दः। माश ८, ५, २, ५।

**निखात-** पितृदेवत्यं वै निखातम्। मै ३, ८, ९।

**निगद-** ऊर्ग्वै रसो निगदः। कौ १२, १।

**निग्राभ-** आदित्य- २२;४५;१८३; उद्ग्राभ- द्र.।

**निग्राभ्या-** तद्यदेना उरसि (इन्द्रः) न्यगृह्णीत तस्मान्निग्राभ्या नाम। माश ३, ९, ४,१५।

**नि√चाय्** अग्नेर्ज्योतिर्निचाय्येत्यग्नेर्ज्योतिर्दृष्ट्वेत्येतत्। माश ६, ३, १, १३; ४१।

**नितान-**

१. नितानस्त्वा मारुतो निहन्तु मित्रावरुणयोर्ध्रुवेण धर्मणा। काठ २, १२; क २, ६।

२. मनो वै नितानः (+ प्राणा मारुताः [मै.])। मै ३, ८, ९; काठ २५, १०; क ४०, ३।

**निदाघ-**

१. उभा उ ह वा एतौ वैश्वानरौ यन्निदाघश्च शिशिरश्च। जै १, ३१३।

२. निदाघे वा नि नोऽघं धीयाताऽइति। माश १३, ८, १, ४।

**निदान-** तद् गृहा वै निदानं प्रजा निदानं पशवो निदानं स्वर्गो लोको निदानम्। जै ३, ३३।

**निधन** (सामन्-)-

१. अथ यदस्यां दिशि (पृथिव्याम्) या देवता ये मनुष्या ये पशवो यदन्नाद्यं तत्सर्वं निधनेनाप्नोति। जैउ १, १०, १, ९।

२. अमावास्या निधनम्। ष ३, १।

३. अस्तमित (आदित्यः) एव निधनम्। जैउ १, ३, २, ४।

४. एषा ह वै साम्नः प्रतिष्ठा यन् निधनम्। जै २, ४२०।

५. चन्द्रमा नक्षत्राणि पितर एतन्निधनम्। जैउ १, ५, १,२।

६. छन्दो निधनम् (प्रजापतिरकरोत्)। जैउ १, ३, ३,३।

७. दिश एव (प्रजापतिरेव [जैउ १, १८, ३, ९]) निधनम्। जैउ १, १२, २, ९; १८ ३,९।

८. निधनं पितृभ्यः (प्रजापतिः प्रायच्छत्)। जैउ १, ३, २, २।

९. प्रजा (मज्जा [जैउ.]) निधनम्। जै १, ३००; २, १२७; जैउ १, १२, २, ६।

१०. प्रतिष्ठा (वज्रो [जै.] वै निधनम्। कौ २७, ६; २९, ३; जै १, ३०१;३०२।

११. यज्ञायज्ञीयं निधनम्। जै १,२९२;२,४३३।

१२. वज्रा वा एते यन् निधनानि। जै १, ३२३।

१३. वीर्यं वा एतत् साम्नो यन्निधनम्। जै १, २१९ (तु. जै १, ३०९; तां ७, ३,१३।

१४. वृष्टिं (श्रोत्रं [जैउ १, ३, ३, ५]; हेमन्तं [जैउ १,३,२,७]) निधनम् (प्रजापतिरकरोत्) जैउ १, ३,३,१;५;२,७।

१५. हेमन्तो निधनम्। ष ३,१। [°न- आत्मन्- २५; इन्द्र- १३९; दिव्- २३ द्र.]।

निधन-काम- अथैतन्निधनकाम९सर्वेषां कामानामवरुद्ध्यै । तां १२,९, १२ ।

निधन-वत्- इन्द्र- ६२ द्र. ।

निधनान्त- निधनान्तेन पितॄन् (प्रजापतिरसृजत) । जै ३,३११ ।

निधा- पाशा वै निधा । ऐ ३, १९ ।

निधि- पृथिवी ह्येष निधिः । माश ६, ५, २, ३ ।

निनर्द- बलं निनर्दः । गो २, ६, १२ ।

निमेष- निमेषो वषट्कारः । तै २,१,५,९ ॥ [°ष- अहोरात्र- १४ द्र.] ।

निम्रद्- निम्रदो ऽसि, न्यहं तं मृद्यासं यो ऽस्मान् द्वेष्टि । मै १, ५, ११ ।

निम्रुक्ति- निम्रुक्तिमरूपेण (आवाहयामि) । तैसं ५, ७, १९,१; काठ ५३, ९ ।

नियुत्-

१. पशवो वै नियुतः । तां ४, ६, ११; माश ४, ४, १, १७ ।

२. वायुर्देवानां विशो नेता, नियुतो देवानां विशः । काठ १२, १३ ॥ [°त्- अपान- १८; उदान- ७ द्र.] ।

नियुत्वत्- असौ वै स्पार्हो ऽन्नं नियुत्वत् । जै २, ३८९ ॥ [°त्वत्- तेजस्काम- २ द्र.] ।

नियुत्वती-

१. नियुत्वती याज्यानुवाक्ये भवतः, पशूनस्मिन् (यजमाने) दाधार । मै २, ५, १ ।

२. विशो नियुत्वतीः । जै २, १९७ ।

निरुक्त-

१. उच्चैर्निरुक्तमनुब्रूयादेतद्ध वा एकं वाचो ऽनन्ववसितं पाप्मना यन्निरुक्तं तस्मान्निरुक्तमनुब्रूयाद्यजमानस्यैव पाप्मनो ऽपहत्यै । कौ ११, १ ।

२. एतद्वै गायत्रस्य क्रूरं यन्निरुक्तम् (गानम्) । तां ७, १, ८ ।

३. निरुक्ता हि वाङ् निरुक्तो हि मन्त्रः । माश १, ४, ४, ६ ।

४. परिमितं वै निरुक्तम् । माश ५, ४, ४, १३ ।

निर्ऋति-

१. असुन्वन्तमयजमानमिच्छ स्तेनस्येत्यां तस्करस्यान्वेषि (स्तेनस्येत्यामन्विहि तस्करस्य [मै.]) अन्यमस्मदिच्छ सा त इत्या नमो देवि निर्ऋते तुभ्यमस्तु । तैसं ४, २,५,४; मै २,७,१२ ।

२. आरे बाधस्व निर्ऋतिं पराचैः कृतं चिदेनः प्रमुमुग्ध्यस्मत् (°स्मात् [काठ.]) मै १, ३, ३९; काठ ४,१३; क ३,११ ।

३. इयं (पृथिवी) वै निर्ऋतिरियं वै तं निरर्पयति यो निर्ऋच्छति । माश ७,२,१,११ (तु. तै १, ६,१,१; माश ५,२, ३,३) ।

४. कपोता उलूकः शशस्ते निर्ऋत्यै । मै ३,१४,१९ ।

५. कृष्णा भवन्त्येतद्धि निर्ऋत्या रूपम् । मै ३,२,४ (तु. माश ७,२,१, ७) ।

६. घोरा (तिग्मतेजा [माश ७,२,१,१०]) वै निर्ऋतिः । माश ७,२,१,१०;११ ।

७. निर्ऋतिं निरवदयते । तैसं ५,२,४,३ ।

८. निर्ऋतिं निर्जल्पेन शीर्ष्णा (प्रीणामि) । मै ३,१५, २ ।

९. निर्ऋतिं निर्जाल्माकशीर्ष्णा [निर्जाल्मकेन शीर्ष्णा [तैसं.] (प्रीणामि)]। तैसं ५, ७, १३, १; काठ ५३,३।
१०. निर्ऋतिमस्थभिः (प्रीणामि)। तैसं ५, ७, १८,१; काठ ५३,८।
११. निर्ऋतिर्वै कर्मण उपद्रष्ट्रिका। मै ३,२,४।
१२. निर्ऋतिर् वै (हि [मै.]) स्त्री। मै १,१०,१६; काठ ३६,१०।
१३. निर्ऋतेर्वा एतन्मुखं यद्वयांसि यच्छकुनयः। ऐ २, १५।
१४. निर्ऋत्याः पञ्चमी (छिद्रकर्ण्यः [मै ४, २,९])। मै ३,१५,५: ४,२,९।
१५. निर्ऋत्यै मूलबर्हणी (मूलनक्षत्रम्)। तै १,५,१,४ (तु. तै ३,१,२,३)।
१६. पाप्मा वै निर्ऋतिः। माश ७,२, १,१।
१७. व्लेष्कोऽसि निर्ऋत्याः पाशः। काठ ३७, १३।
१८. भूमिरिति त्वा जना विदुर्निर्ऋतिरिति त्वाऽहं परि वेद विश्वतः। तैसं ४,२,५,३-४।
१९. मा नो रुद्रो निर्ऋतिर्मा नो अस्ता। तैआ ४, २०,२।
२०. मूलं नक्षत्रं निर्ऋतिर्देवता। मै २, १३, २०।
२१. यं ते देवी निर्ऋतिराबबन्धेति जालमिदकास्वध्यस्यति, निर्ऋतिपाशमेवोन्मुञ्चते। मै ३,२,४।
२२. यां त्वा जनो भूमिरिति प्रमन्दते, निर्ऋतिरिति त्वाहं परिवेद विश्वतः। काठ १६,१२; क २५,३।
२३. वासः कृष्णं भिन्नान्तं दक्षिणेत्येतद्धि निर्ऋत्या रूपम्। मै ४, ३,१।
२४. विशीर्ष्णी गृध्रशीर्ष्णीञ्च। अपेतो निर्ऋति ९ हथः। परिबाध ९ श्वेतकुक्षं निजङ्घ ९ शबलोदरम्। तैआ १,२८,१।
२५. श्येनी वण्डापस्फुरा दक्षिणैतद्धि निर्ऋत्या रूपम्। मै ४, ३,८।
२६. स्वकृत इरिण उप दधाति प्रदरे वैतद्वै निर्ऋत्या आयतनम्। तैसं ५, २, ४, ३ ॥ [°ति- अनुमति- ३;१६; अश्वतरगर्दभ-; इरिण- ४; कृष्ण- १२; तुष- २ द्र.]।

निर्ऋति-गृहीत,ता-

१. अर्धं वै पुरुषस्य निर्ऋतिगृहीतमर्धमनिर्ऋतिगृहीतम्। मै ४, ३, १।
२. निर्ऋतिगृहीता वा एषा स्त्री या पु ९ रूपा, निर्ऋतिगृहीत एष पुमान्यः स्त्रीरूपः। मै २,५,५।
३. निर्ऋतिगृहीतो वा एष यो निरुद्धः। मै २, २, १।
४. या वाऽपुत्रा पत्नी सा निर्ऋतिगृहीता। माश ५, ३, १, १३।
५. स्वकृत इरिणे प्रदरे वा जुहुयादेतद्वा अस्या (पृथिव्याः) निर्ऋतिगृहीतं निर्ऋत्यैवैनं (भ्रातृव्यम्) ग्राहयति। काठ ९, १६ ॥ [°त,ता- इरिण- ३; दर्वि- २ द्र.]।

नैर्ऋत-

१. अपास्य नैर्ऋतान् पाशान् मृत्योरेकशतं च ये··· । काठ ३८, १३।
२. कपोत उलूकश्शशस्ते नैर्ऋताः। काठ ७, ८।
३. तद्वै नैर्ऋतमन्नस्य यत्तुषाः। मै ३, २, ४।
४. नैर्ऋत एककपालः (पुरोडाशः)। काठ १५,१ (तु. मै २,६,१)।
५. नैर्ऋतश्चरुर्नखावपूतानां परिवृक्तया गृहे। मै २, ६, ५; ४, ३, ८।
६. नैर्ऋता वै तुषाः। माश ७, २, १, ७।

७. नैर्ऋतेन पूर्वेण प्रचरति··· एककपालो भवति, एकधैव निर्ऋतिं निरवदयते। तै १,६,१,१।

८. नैर्ऋतो वै पाशः। तैसं ५, २, ४, ३; काठ २०, २; क ३१, ४; माश ७, २, १, १५।

९. यो विदग्धः (पुरोडाशः) स नैर्ऋतः। तैसं २,६,३,४॥ [°त- २अक्ष-; कृष्ण- १३;१४ द्र.]।

नैर्ऋती- अथैता नैर्ऋतीस्तिस्रः कृष्णास्तुषपक्काः। काठ २०,२; क ३१,४॥ [°ती- उखा- २ द्र.]।

निर्बाध-

१. तैरसुरानेभ्यो लोकेभ्यो निरबाधन्त, तन्निर्बाधानां निर्बाधत्वम्। मै ३, २,१।

२. निर्बाधैर्वै देवा असुरान् निर्बाधे ऽकुर्वत, तन्निर्बाधानां निर्बाधत्वम्। तैसं ५, १, १०, ४।

निर्भुज-

१. पृथिव्यायतनं निर्भुजम्, दिवायतनं (दिव्यायतनं [ऐआ.]) प्रतृण्णमन्तरिक्षायतनमुभयमन्तरेण। ऐआ ३, १, ३; शांआ ७, ११।

२. यद्धि सन्धिं विवर्त्तयति तन्निर्भुजस्य रूपम्। शांआ ७, ११॥ [°ज- अन्नाद्यकाम- १ द्र.]।

निर्यास- निर्यासस्य नाऽऽश्यं, ब्रह्महत्यायै ह्येष वर्णो ऽथो खलु य एष लोहितो यो वा ऽऽव्रश्चनान्निर्येषति, तस्य ना ऽऽश्यं, काममन्यस्य। तैसं २, ५, १, ४-५।

निवार- देवा ओषधीषु पक्कास्वाजिमयुस्ता बृहस्पतिरुदजयत्, स एतान् निवारान् न्यवृणीत, तन् निवाराणां निवारत्वम्। मै १, ११, ७ (तु. काठ १४,७)। =नीवार- द्र.।

निविद्-

१. अथ वै निविदसावेव यो ऽसौ (सूर्य्यः) तपत्येष हीदं सर्वं निवेदयन्नेति। कौ १४,१।

२. क्षत्रं निविद्। ऐ २, ३३; ३, १९।

३. गर्भा वा एत उक्थानां यन्निविदः। ऐ ३, १०।

४. तं (यज्ञम्) वित्त्वा निविद्भिर्न्यवेदयन्यद्वित्त्वा निविद्भिर्न्यवेदयंस्तन्निविदां निवित्त्वम्। ऐ ३,९ (तु. तै २, २, ८, ५; माश ३, ९,३,२८)।

५. पेशा वा एत उक्थानां यन्निविदः। ऐ ३, १०।

६. प्राणा वै निविदः। कौ १५, ३; ४।

७. यदन्तरात्मंस्तन्निवित्। कौ १५,३; गो २,३,२१-२२।

८. सौर्या वा एता देवता यन्निविदः। ऐ ३,११।

९. स्वर्गस्य हैष लोकस्य रोहो यन्निवित्। ऐ ३,१९॥ [°विद्- अन्न- २; आदित्य- १५१; चक्षुस्- १४ द्र.]।

नि-वीत- निवीतं मनुष्याणाम्। तैसं २,५,११,१॥ [°त- आसुर- १ द्र.]।

निवेष्ट- यद्वेनान् (अङ्गिरसः) सर्वाभ्यो दिग्भ्यः पशवो ऽभिन्यवेष्टन्त तन्निवेष्टस्य (साम्नः) निवेष्टत्वम्। जै ३, २५०।

निषाद्- एष ह वै न ग्रामे नारण्ये यन्निषादाः। जै २, १८३।

निषाद-स्थपति- तया (वास्तवमयरौद्रचरुनिर्वापिरूपयेष्टया) निषादस्थपतिं याजयेत्। मै २,२,४।

नैषाद- एतद्वा अवराध्यमन्नाद्यं यन्नैषादः। कौ २५, १५।

निषेध- निषेधेन (साम्ना वै देवाः पशून्) पर्य्यगृह्णन्। तां १५,९,११॥ [°ध- उत्सेध- १ द्र.]।

**निष्क-**

१. महं इन्द्रो य ओजसा, इत्यैन्द्रं भवति । निष्कस्य हैतन्मणे रूपम् । निष्कं मणिं पुरस्ताद् बिभ्रति । जै २, १२ ।

२. यथा निष्कं शमलगृहीतमग्नौ प्रास्य तस्यायोग्नेन सर्वं शमलं निर्हन्यात् । जै २, १३६ ।

**निष्कृत-** यद्वै निष्कृतं तत्संस्कृतम् । ऐआ १, १, ४ ।

**निष्कृति-** अप्- १०८;११४ द्र. ।

**निष्केवल्य** ( शस्त्र-)-

१. आत्मा यजमानस्य निष्केवल्यम् । ऐ ८, २ ।

२. निष्केवल्यं बह्वयो देवताः प्राच्यः शस्यन्ते बह्वय ऊर्ध्वाः, अथैतदिन्द्रस्यैव निष्केवल्यं तन्निष्केवल्यस्य निष्केवल्यत्वम् । कौ १५, ४ ।

३. यन्निष्केवल्यं तेन शुक्रमन्थिना ( शुक्राम° [क.]) उक्थवन्तौ । काठ २८, १०; क ४५, १ । [°ल्य- उदीची- ३५ द्र.] ।

**निष्ट्य,ष्ट्या-**

१. निष्टयं नक्षत्र ९ वायुर्देवता । मै २,१३,२० ।

२. निष्टया हृदयम् ( नक्षत्रियस्य प्रजापतेः ) । तै १, ५, २, २ ।

३. यां कामयेत दुहितरं प्रिया स्यादिति । तान्निष्ट्यायां दद्यात् । ( पत्युः ) प्रियैव भवति । नैव तु ( पितुर्गृहम् ) पुनरागच्छति । तै १, ५, २, ३ ।

४. वायुर्देवता, निष्टया नक्षत्रम् । काठ ३९, १३ (तु. तै १, ५, १, ३; ३, १, १, १०) ।

**निष्पक्व-** निष्पक्वं ( आज्यम् ) मनुष्याणाम् । काठ २३, १ ।

**निहव** ( सामविशेष-)-

१. ऋषयो वा इन्द्रं प्रत्यक्षन्नापश्यन् स वसिष्ठोऽकामयत कथमिन्द्रं प्रत्यक्षं पश्येयमिति स एतन्निहवमपश्यत्ततो वै स इन्द्रं प्रत्यक्षमपश्यत् । तां १५.५, २४ ।

२. निहवो भवत्यन्नाद्यस्यावरुद्ध्यै । तां १५, ५, २२ ।

३. वसिष्ठो वै जीतो हतपुत्रोऽकामयत प्रजां पशून् निह्वयेयेति । स एतत् सामापश्यत् । तेनास्तुत । तेनायिही आयिही इत्येव प्रजां पशून् न्यह्वयत । तद्वेव निहवस्य निहवत्वम् । जै ३, २६८ ।

**निह्नुवान-** एतद्वै निह्नुवानं छन्दो यन्न शंसिषमिति । तां ८, ६, १२ ।

**नीलङ्गु-** नीलङ्गवे कृमिः । मै ३, १४, ११ ॥ [°गु- क्रिमि- द्र.] ।

**नीवार-**

१. एते (+ वै [माश ५,३,३,५]) ब्रह्मणा पच्यन्ते यन्नीवाराः । माश ५,१,४,१४;३,३,५ ।

२. नीवाराः पीयूषः । मै ४,४,३ ।

३. श्यामाकाश्च मे नीवाराश्च मे (यज्ञेन कल्पन्ताम् ) । तैसं ४, ७,४,३ ।

४. स ( बृहस्पतिः) नीवारान्निरवृणीत् तन्नीवाराणां नीवारत्वम् । तै १, ३, ६, ७ ॥ [°र- देव- ४३; निवार- द्र.] ।

नैवार-

१. बृहस्पतये वाचस्पतये (वाचे [माश.]) नैवारं चरुम् ( +निर्वपति [माश.]) । तैसं १,८,१०,१; मै २,६,६; माश ५, ३,३,५ ।

२. स (बृहस्पतिः) एतं बृहस्पतये तिष्याय नैवारं चरुं पयसि निरवपत् ततो वै स ब्रह्मवर्चस्यभवत् । तै ३,१, ४, ६ ।

नीवि-

१. दक्षिणत इव हीयं नीविः । माश १, ३,३,६ ।

२. पितॄणां नीविः । काठ २३,१ ॥ [°वि- दक्षिणतस् ८ द्र.] ।

नीहार-

१. नीहारमूष्मणा (प्रीणामि) । मै ३, १५, ८ ।

२. वैद्युतस्य नीहारः (वत्सः) । तैआ १, १०,७ ।

नृ-

१. नरो ह वै देवविशः । जै १,८९ ।

२. प्रजा वै नरः । ऐ २,४; ६,२७; ३२; गो २,६,८; माश १,५,१,२०; ८,२,१२ ।

३. मनुष्या (+वै [माश ७, ५, २, ३९]) नरः । माश ६, ७, ३, ११ ॥ [नृ- देव- १३३; नारी- २ द्र.] ।

नृ-चक्षस्-

१. नृचक्षाः प्रतिख्यातः (सोमः) । तैसं ४, ४,९,२ ।

२. प्रजापतिर्वै नृचक्षाः । माश ६, ७, ४, ५ ।

३. ये वै विद्वा ९ सस्ते नृचक्षसः । काठ २१, १ ।

४. शुश्रुवा ९ सो वै नृचक्षसः । तैसं ५,३,४,१ ॥ [°क्षस्- देव- ११५; धातृ- १५ द्र.] ।

नृ-मणस्- प्रजापतिर्वै नृमणाः । माश ६,७,४,३;५ ।

नृ-मेधस्- नृमेधसमाङ्गिरस ९ सत्रमासीन ९ श्वभिरभ्याह्वयन् सोऽग्निमुपाधावत्पाहि नो अग्न एकयेति तं वैश्वानरः पर्य्युदतिष्ठत्ततो वै स प्रत्यतिष्ठत्ततो गातुमविन्दत । तां ८,८,२२ ।

नृ-वाहस्- अहोरात्र- २२ द्र. ।

नृ-शंस- परिमितजीवी हि नृशंसः । जै १, १८९ ।

नृ-षद्-

१. एष (सूर्यः) वै नृषत् । ऐ ४, २० ।

२. प्राणो वै नृषन्मनुष्या नरस्तद्योऽयं मनुष्येषु प्राणोऽग्निस्तमेतदाह । माश ६, ७,३,११ (तु. माश ९,२,१,८) ।

नृम्ण- अन्न- २५; अमेनि- द्र. ।

नेपातिथि-,> नैपातिथ (सामन्-)- स एतन् नेपातिथिः काण्वस् सामापश्यत् । तेनास्तुत । ततो वै ते (काण्वायनाः) पशूनवारुन्धत । तदेतत्पशव्यं साम । ...... यद्‌ नेपातिथिः काण्वो ऽपश्यत् तस्मान् नैपातिथमित्याख्यायते । जै ३, २२० ।

नेष्टृ (ऋत्विज्-)-

१. एते होत्रे व्यृद्धे व्यृद्धसोमपीथे, तस्मान्न नेष्ट्रा न पोत्रा भवितव्यम् । काठ २४,६; क ३७,७ ।

२. नेष्टैकविंशेन पुच्छेन भद्रेणोद्गायति। जै २,४०८।
३. पत्नीभाजनं वै नेष्टा। ऐ ६, ३; गो २, ४, ५ ॥ [°ष्टृ- अग्नीध्- १०; अनडुह्- ५; एकविंश- ३०; ककुभ्- ५; धिष्ण्य- १३ द्र.]।

नेष्टा-पोतृ-

१. एतौ (नेष्टापोतारौ) स ऽ सचन्ताविव यजतः। क ४०, ४।
२. मारुते वै वाससी। मारुतौ नेष्टापोतारौ तत् तत्सलक्ष्म क्रियते। जै २,२०३।
३. वाससी नेष्टापोतृभ्याम् (ददाति)। पवित्रे एवास्यैते (वाससी)। तै १,८,२,४।

नैमिश->नैमिशीय- एतेन (द्वादशसंवत्सराख्येन सत्रेण) वै नैमिशीयाः सर्व्वामृद्धिमार्ध्नुवन्। तां २५, ६, ४।

नौ- अदिति- ७१ द्र.।

नौधस (सामन्)-

१. अहरहरेवाञ्जसा स्वर्गं लोकमुपयन्ति, ये ह्यैतनौधसयोः प्रगाथावुपयन्ति। जै २, ३८३।
२. एता उ ह वै स्वर्गस्य लोकस्य मे पन्थावञ्जसायनौ यद् बृहद्रथन्तरे। तयोरेते ऽञ्जसायने यच्च ह्यैतनौधसे। जै २, ३८३।
३. तदेतत् (नौधसम्) प्रतिष्ठासाम···, ब्रह्मणो ह वा एष रसो यन् नौधसम्। जै १,१४७।
४. त्रयो ब्रह्मापश्यन्, नोधास्तृतीयं सुमित्रस्तृतीयं बृहदुक्थस्तृतीयम्। जै ३,१३३।
५. देवा वै ब्रह्म व्यभजन्त तान्नोधाः काक्षीवत आगच्छत्ते ऽब्रुवन्नृषिर्नं आग ऽ स्तस्मै ब्रह्म ददामेति तस्मा एतत्साम प्रायच्छन्यन्नोधसे प्रायच्छ ऽ स्तस्मान्नौधसम्। तां ७, १०,१०।
६. नौधसं बृहतः (रथन्तरस्य प्रिया तनूरास)। जै १,१४५।
७. बृहद्ध्येतत्परोक्षं यन्नौधसम्। तां ७, १०, ८।
८. ब्रह्मवर्चसकाम एतेन (नौधसेन) स्तुवीत। तां ७, १०, ११।
९. ब्रह्म वै नौधसम्। तां ७, १०, १०; ११, ४, ९।
१०. यद्दु नोधाः काक्षीवतो ऽपश्यत् तस्मान् नौधसमित्याख्यायते। जै १, १४७। [°स- दिव्- ५ द्र.]।

न्यग्रोध-

१. अधि देवा यज्ञेनेष्ट्वा स्वर्गं लोकमायंस्तत्रैतांश्चमसान्न्युब्जंस्ते न्यग्रोधा अभवन्। न्युब्जा इति हाप्येनानेतर्ह्याचक्षते कुरुक्षेत्रे ते ह प्रथमजा न्यग्रोधानां तेभ्यो हान्ये ऽधिजाताः। ऐ ७, ३०।
२. अस्थिभ्य एवास्य स्वधास्रवत्स न्यग्रोधो ऽभवन्। माश १२, ७, १, ९।
३. ते यन्न्यञ्चो ऽरोहंस्तस्मान्न्यङ् रोहति न्यग्रोहो न्यग्रोहो वै नाम तन्न्यग्रोहं सन्तं न्यग्रोध इत्याचक्षते। ऐ ७, ३०।
४. तेषां चमसानां रसो ऽवाङैत् (न्यग्रोधस्य) ऽवरोधा अभवन्नथ य ऊर्ध्वस्तानि फलानि। ऐ ७, ३१।

५. न्यग्रोधश्चमसैः (त्वावत्) । काठ ४४, १ ।
६. न्यग्रोधेन वनस्पतीन् (अन्वाभवत्) । काठ ४३, ४ ।
७. न्यञ्चो न्यग्रोधा रोहन्ति । माश १३, २, ७, ३ ।
८. परोक्षमिव ह वा एष सोमो राजा यन्न्यग्रोधः । ऐ ७, ३१ ॥ [°ध- क्षत्र- १८ द्र.] ।

न्यग्रोध-तति- यदि राजन्यं वैश्यं वा याजयेन्न्यग्रोधततीराहृत्य ताः सम्पिष्य दध्न्युत्सृज्य तदस्मै भक्षं प्रयच्छेन्न सोमम् । काठसंक १३९ : १०-११ ।

नैयग्रोध- नैयग्रोधेन जन्यः (अभिषिञ्चति) । मित्राण्येवास्मै कल्पयति । तै १,७,८,७ । [°ध- क्षत्र- ८७ द्र.] ।

न्यङ्कु- आदित्य- १४३ द्र. ।

न्यर्बुद- यो वै वाचो भूमा । तन्न्यर्बुदम् । तै ३,८,१६,३ ।

न्यूङ्ख- अन्नं न्यूङ्खः । कौ २२,६;८;२५,१३; ३०,५ ॥ [°ङ्ख- अन्न- २५ द्र.] ।

न्यून-
१. अतिरिक्तं वै पुंसो न्यूनं स्त्रियै । ऐआ १,४,२ ।
२. न्यूनाद्धि प्रजापतिः प्रजा असृजत । तैसं ५, १,९,२; ४,७,६ ।
३. न्यूने वै रेतः सिच्यते, न्यूने प्राणा न्यूनेऽन्नाद्यं प्रतिष्ठितम् । ऐआ १,१,२; ३,७ ।

# प

पक्ष-
१. बृहद्रथन्तरे छन्दो द्यावापृथिवी देवते पक्षौ । माश १०, ३,२,४ ।
२. बृहद्रथन्तरे (सुपर्णस्य गरुत्मतः महाव्रतस्य वा) पक्षौ । तैसं ४, १,१०,५; मै २,७,८; ३,३,५; काठ १६,५; जै १,२९२; २, ४३३; तां १६,११, ११ ।
३. ब्राह्मणाच्छंसी सप्तदशेन पक्षेण रथन्तरेण स्तोष्यन्न् उत्तरत उपविशति । जै २,४०६ ।
४ ब्राह्मणाच्छंसी सप्तदशेन पक्षेण रथन्तरेणोद्गायति । जै २, ४०७ ॥ [°क्ष- ककुभ्- ९; कर्मन्- ७; ग्रीष्म- १२; दक्षिणतस् २३ द्र.] ।

पक्षिन्- ये वै विद्वा ꣳ सस्ते पक्षिणो येऽविद्वा ꣳ सस्तेऽपक्षास्त्रिवृत्पञ्चदशावेव स्तोमौ पक्षौ कृत्वा स्वर्गं लोकं प्रयन्ति । तां १४, १,१३ ।

पङ्क्ति-
१. अथ यः पङ्क्तिः पञ्चपदां सप्तदशाक्षरां सर्वैर्यज्ञैर्यजमानं स्वर्गं लोकमभिवहन्तीं विद्यात् । गो १,३,८ ।
२. अन्नं वै पङ्क्तिः । ऐआ १,१,३; गो २,६,२ ।
३. इयमुपरि मतिस्तस्या वाङ् मात्या हेमन्तो वाच्यः पङ्क्तिर्हैमन्ती, पङ्क्त्या निधनवन्निधनवत आग्रायण आग्रायणात् त्रिणवत्रयस्त्रिंशौ, त्रिणवत्रयस्त्रि ꣳ शाभ्या ꣳ शाक्वररैवते, विश्वकर्मर्षिः । काठ १६,१९ (तु. मै २, ७, १९) ।
४. ऊर्ध्वा दिग्घेमन्तशिशिरा ऋतू, बृहस्पतिर्देवता, फलं द्रविणं, पङ्क्तिश् छन्दः, शाक्वररैवते सामनी त्रिणवः स्तोमः, स उ त्रयस्त्रि ꣳ शवर्तनिः, सुपर्ण ऋषिः पष्ठवाड् वय आस्कन्दोऽयानाम् । मै २,७,२० ।

५. एतद्वै प्रत्यक्षं पञ्चविंशस्य स्तोमस्य छन्दो यत्पङ्क्तिः । जै २,४८ ।
६. एषा खलु वै प्रत्यक्षं पङ्क्तिर्यत् पञ्चाक्षरा पञ्चपदा । जै १, १९८ ।
७. चत्वारिंशदक्षरा (+वै [जै.] ) पङ्क्तिः । कौ १७, ३; जै १, ३४ ।
८. त्रिणवेन स्तोमेन पङ्क्तिमभ्यक्रन्दत् । ततो मरुतो ऽसृजतेशानमुखान् । जै ३, ३८१ ।
९. पक्षौ पङ्क्तयः । माश ८, ६, २, ३; १२ ।
१०. पङ्क्तिं वै स छन्दसां जयति मरुतो देवान् देवानाम् । जै १, ३४ ।
११. पङ्क्तिः पचिनी पञ्चपदा । दे ३, १३ ।
१२. पङ्क्तिं मज्ज्ञा प्रविशामि । काठ ३८, १४ ।
१३. पङ्क्तिं मध्ये ( उपदधाति ) । तैसं ५, ७, ९, ४ ।
१४. पङ्क्तिरूर्ध्वा ( दिक् ) । माश ८, ३, १, १२ ।
१५. पङ्क्तिर्मज्ज्ञा । ऐआ २, १, ६ ।
१६. पङ्क्तिर्वा अन्नम् । ऐ ६, २०; ऐआ १,३,८ ।
१७. पङ्क्तिर्विष्णोः (+पत्नी [गो.] ) । मै १, ९, २; काठ ९, १०; गो २, २, ९ ।
१८. पङ्क्तिश्छन्दस्तत्पुरुषः (तदश्वः [काठ.]) परमेष्ठी देवता । मै २,१३,१४; काठ ३९,४ ।
१९. पङ्क्तिश्छन्दो मरुतो देवताष्ठीवन्तौ । माश १०, ३, २, १० ।
२०. पङ्क्त्या यज्ञकामस्य ···शृणोत्वग्निः समिधा हवं मे । तैसं ६, ४, ३, २ ।
२१. पञ्चपदा पङ्क्तिः । ऐ ५, १८; १९; २१; ६, २०; ऐआ १,३, ८; कौ १, ३; ४; ११, ३; १३, ?; गो १, ४,२४; २,४, ४ तां १२, १, ९; माश ९, २, ३, ४१ ( तु. जै ३,२०६) ।
२२. पञ्चाक्षरा (प्रजापतिः [मै.]) पङ्क्तिः । मै २, ३, ७; तै २, ७, १०, २ ।
२३. पूषा पञ्चाक्षरेण पङ्क्तिमुदजयत् । तैसं १, ७, ११, १ ।
२४. पृथुरिव वै पङ्क्तिः । गो १, ५, ४; माश १२, २, ४, ६ ।
२५. प्रतिष्ठा (पञ्चदशो [जै.]) वै पङ्क्तिः । कौ ११, ३; १७, ३; जै १, ३३९ ।
२६. मरुतः पङ्क्तिं समभरन् । तां ते प्राविशन् ( मृत्योरात्मनः गुप्त्यर्थम् ) । तान् साछादयत् । जै १, २८३ ।
२७. यजमानच्छन्दसं (पुरुषछन्दसं वै [जै.]) पङ्क्तिः । कौ १७, २; जै १, १९८ ।
२८. यजमानो (यज्ञो [जै.]) वै पङ्क्तिः । मै ३, ३, ९; जै १, २२९ ।
२९. यज्ञस्य पङ्क्तिः ( पत्नी ) । तैआ ३, ९, २ ।
३०. यस्य दश ताः पङ्क्तिम् (अभिसम्पद्यन्ते) । कौ ९, २ ।
३१. श्रोत्रं पङ्क्तिः । माश १०, ३, १, १ ।
३२. सविता पञ्चाक्षरयाक्षरपङ्क्तिमुदजयद् या ह्यक्षरपङ्क्तिः सा पङ्क्तिः, चतुर्धा ह्येतस्याः ( हि तस्याः [काठ.]) पञ्चपञ्चाक्षराणि । मै १,११,१०; काठ १४, ४ ॥ [ °ङ्क्ति- अग्निधु- २; अध्वर्यु- ३०; अनडुह्- ६;८; अन्नाद्य- १४; अश्विन्- १०; आत्मन्- १४; १६; ऊर्ध्वा- १२; १३; ऋतु- २५; तन्द्र- १; त्रिणव- १० देवता- २७ द्र. ] ।

पङ्क्ति-राधस् (अग्नि-)- पङ्क्तिराधस उदग्दिश्यस्य स्थाने स्वतेजसा भानि । तैआ १,१८,१ ।

पाङ्क्त-

१. अङ्गिरोभिर्देवेभिर्देवतया पाङ्क्तेन त्वा छन्दसा युनज्मि हेमन्तशिशिराभ्याम्। तैसं ७,१,१८,२।

२. अदितिस्ते बिलं गृह्णातु पाङ्क्तेन छन्दसा। तैसं ४, १, ५, ४।

३. ऊर्ध्वया त्वा दिशा सादयामि पाङ्क्तेन छन्दसा, बृहस्पतिना देवतयाऽग्नेः पृष्ठेन…। तैसं ५, ५, ८, ३।

४. पञ्च चितयो भवन्ति पाङ्क्तः पुरुषः। तैसं ५, ६, १०, ३।

५. पाङ्क्तं वा इद ँ सर्वम्। तैआ ७, ७, १; तैउ १, ७, १।

६. पाङ्क्तं हि पञ्चममहः। कौ २९, ५।

७. पाङ्क्त ँ ह्यन्नम् ( अश्यं खाद्यं चोष्यं लेह्यं पेयम् )। तां ५, २,७।

८. पाङ्क्त इतर आत्मा लोम त्वङ् मा ँ समस्थि मज्जा। तां ५, १, ४।

९. पाङ्क्तः पुरुषः (पशुः [माश.])। तैसं २,३,२, ९; मै २,३,५; ६; काठ ११, २;८; क ३५, ७; कौ १३, २; गो २, ४, ७; जै १,१९८; तां २, ४, २; माश १, ५, २, १६।

१०. पाङ्क्तः प्रजापतिः (संवत्सरः [काठ.])। काठ १२, ५; माश १०, ४, २, २३।

११. पाङ्क्तमन्नम् (°मन्नाद्यम् [जै.])। जै २, २१३; २९१; ३५६; तां १२, १, ९।

१२. पाङ्क्ताः पशवः। तैसं ३, १, ५, १; ५, २,३, ६; मै २, ३, ६; काठ १३, १२; २०, १; २३,८; ३०, ९; ऐ ३, २३; ४,३; ५,४; ६,१८; १९; कौ १३,२; गो २, ३, २०; ४, ७; जै १,८५; १३१;३३९; २,४३१; तां २, ४, २; तै १, ६, ३, २; (तु. जै ३, १०३)।

१३. पाङ्क्तो यज्ञः। तैसं ५, २, ३, ६; मै १, ४,९; ७, ४;१०,१८; २, ३,६; ३,५,२; ४,८,५; काठ ८,२;९,३; गो १,४, २४; २, २,३; ३, २०; ४, ४; ७; जै १, ८५; १३१; ३५५; २, २६१; ३७६; ४३१; माश १. ५, २,१६ (तु. काठ २०,१; ऐ १,५; ३,२३; ५,४; १८; १९; कौ १,३;४; २, १; १३, २;जै ३, १५१; तां ६,७, १२; तै १, ३,३, १ तैआ ५, २,७)।

१४. पाङ्क्तोऽयं पुरुषः पंचधा विहितो लोमानि त्वङ् मांसमस्थि मज्जा। ऐ २, १४; ६,२९।

१५. बृहस्पतये पाङ्क्ताय त्रिणवाय शाक्वराय हैमन्तिकाय चरुः ( चरुम् [मै.] )। तैसं ७, ५, १४, १; मै ३, १५, १०; काठ ४५, १०।

१६. बृहस्पतिस्त्वा विश्वैर्देवैरुपरिष्टाद्रोचयतु पाङ्क्तेन छन्दसा। तैआ ४,६,२।

१७. ब्रह्म पाङ्क्तम् (छन्दः)। शांआ ११,७॥ [°ङ्क्ति- अग्नि- ५६३; गर्भ- ९ द्र.]।

पञ्चचू,चोडा (इष्टका-)-

१. अप्सरसो वा एता ( पञ्चचूडा ) एतद्रूपं कृत्वा पत्न्यो भूत्वामुष्मिंल्लोके यजमानमुपशेरते। क ३१, १७।

२. पञ्चचोडा उपदधात्यप्सरस एवैनमेता भूता अमुष्मिँल्लोक उपशेरेऽथो तनूपानीरेवैता यजमानस्य। तैसं ५, ३, ७, २।

३. प्रजा (मिथुनं [माश ८,६,१,१२]) पञ्चचूडाः। माश ८, ६, १,१२;१३।

५. याः ( अमुष्मादादित्यात् ) पराच्यः ( पञ्च दिशः ) ताः पञ्चचूडाः । माश ८, ६, १, १४ ।

६. होत्राः पञ्चचूडाः । माश ८, ६, १, ११ ।

पञ्च-जन-

१. देवमनुष्याणां गन्धर्वाप्सरसां सर्पाणां च पितॄणां चैतेषां वा एतत्पञ्चजनानामुक्थम् (यद्वैश्वदेवम्) । ऐ ३, ३१ ।

२. पञ्चानां त्वा पञ्चजनानां (+यन्त्राय [तैसं.]) धर्त्राय गृह्णामि । तैसं १,६,१,२; काठ ३२,६ ।

३. विश्वे देवा अदितिः पञ्चजना इति । ये देवा असुरेभ्यः पूर्वे पञ्चजना आसन् य एवासावादित्ये पुरुषो यश्चन्द्रमसि यो विद्युति यो ऽप्सु यो ऽयमक्षन्नन्तरेष एव ते । तदेषां (अदितिः) एव । जैउ १,१३,२,७ ॥ [°न- छन्दस्- ४० द्र.] ।

पञ्च-दश-

१. अथ यत्पञ्चदशान्याज्यानि भवन्ति, पञ्चदशो माध्यंदिनः ( पवमानः ), बाहुभ्यामेव तेन पाप्मानमपघ्नते । जै २, १३५ ।

२. अथ यो बाहुभ्यां पापं कृत्वा मन्यते, पञ्चदशेनाग्निष्टुता यजेत । जै २,१३५ ।

३. अथाकामयत भरद्वाज ओजिष्ठा मे बलिष्ठा प्रजा स्यादिति । स एतं पञ्चदशं स्तोममपश्यत् । तमाहरत् । तेनायजत । ओजो वै बलं पचदशस्तोमानाम् । ततो वै तस्यौजिष्ठा बलिष्ठा प्रजाभवत् । जै २, २१७ ।

४. अर्द्धमास एव पञ्चदशस्यायतनम् । तां १०, १, ४ ।

५. अर्द्धमासः ( अर्द्धमासाः [तैसं.] ) पञ्चदशः । तैसं ७,१,१,६; तां ६, २, २ ।

६. आदित्याः पञ्चदशाक्षरेण पञ्चदश ँ स्तोममुदजयन् । तैसं १, ७, ११, २ (तु. तैसं १, ७, ११,१; मै १,११, १०; काठ १४, ४) ।

७. ओजो ( +वा इन्द्रियं [ऐ.] ) वीर्यं पञ्चदशः । ऐ ८,३;४; तां ११,६,११;११,१४;२०,१०,१ (तु. काठ ३७, ८; जै ३, १०) ।

८. क्षत्रं वा एतदहरभिनिर्वदति यत्पञ्चदशम् । तां ११, ११, ८ ।

९. तम् ( पञ्चदशं स्तोमम् ) चौजो बलमित्याहुः । तां १०,१, ६ ।

१०. तस्माद्राजन्यस्य पञ्चदश स्तोमः । तां ६, १, ८ ।

११. तान् ( पशून् ) इन्द्रः पञ्चदशेन स्तोमेन नाप्नोत् । तै २, ७, १४, २ ।

१२. त्रिष्टुभा पञ्चदशः (आयतनवान्) । क ४४, ३ ।

१३. दश हस्त्या अंगुलयश्चत्वार्युरोर्बाह्वाणि । यदूर्ध्वं नाभेस्तत्पञ्चदश । जै ३,३१९ ।

१४. पन्चदश एव महः । गो १,५,१५ ।

१५. पन्चदशं माध्यन्दिन ँ सवनम् । मै ४,४,१० ।

१६. पञ्चदशं मैत्रावरुणस्य··· । जै २.२२३ ।

१७. पञ्चदशश्चैकविंशश्च बार्हतौ तौ गौश्चाविश्चान्वसृज्येतां तस्मात्तौ बार्हतं प्राचीनं भास्कुरुतः । तां १०,२,६ ।

१८. पञ्चदशारत्निः कार्यः पञ्चदशेन वज्रेण संमितः । मै ३, ९,२ ।

१९. पञ्चदशेन वीर्यकामः (यजेत)। जै २,१३६।
२०. पञ्चदशो वै राजन्यः। तैसं २,५,१०,१।
२१. पञ्चदशो वै ( हि [माश ४,३,३, ४] ) वज्रः। कौ ७, २; १५, ४; जै १,१९५; तां २,४,२; तै २,२, ७,२; माश १,३,५,७; ३.६,४, २५; ४, ३,३,४; प ३, ४ (तु. मै ३, २,१०;४,७, ६; काठ २६,४; जै १,३३१; २,८७; ९०; १४०;४१६; तां १६, २,५)।
२२. पञ्चदशौ ते अग्ने वाहू। काठ ३९,२।
२३. प्राणो वै त्रिवृदात्मा पञ्चदशः। तां १९, ११, ३।
२४. बाहू वै पञ्चदश स्तोमानाम्। जै २,१२५।
२५. भ्रान्तः पञ्चदशः। तैसं ४,३,८,१; मै २, ८,४।
२६. यजमानो वै पञ्चदशः। मै ४, ७, ६।
२७. यज्ञः पञ्चदशो वज्रमेवोपरिष्टाद्दधाति, रक्षसामपहत्यै। काठ २०, १३ (तु. तैसं ७, ३,६,२)।
२८. यत्पञ्चदशो यदेवास्य (यजमानस्य) उरस्तो बाह्वोरपूतं तत्तेनापहन्ति। तां १७,५, ६।
२९. येन प्रतितिष्ठति स पञ्चदशः। जै १, २५३।
३०. वीर्यं वै बृहद् वीर्यं पञ्चदशः। जै २, ४०७ (तु. ऐ ८,४; जै २,३३२)।
३१. स (प्रजापतिः) बाहुभ्यामेवोरसः पञ्चदशं स्तोममसृजत। जै १, ६८॥ [°श- इन्द्र- २९६; एकविंश- २७; ओजस्- ६;२३; क्षत्र- ४३; ७६; ग्रीवा- १; ४; ग्रीष्म- ९; चन्द्रमस्- ५०; त्रिवृत्- २०; ३८; त्रैष्टुभ- ५; दक्षिणतस् २३; पङ्क्ति-]।

पञ्चदश-रात्र- वज्रो खलु वा एष यत् पञ्चदशरात्रः। जै २, ३३९।

पञ्चदश-स्तोम- क्षत्र- ३३ द्र.।

पञ्च-विल- तद्यत्पञ्च हवी ९ षि भवन्ति तेषां पञ्च बिलानि तस्माच्चरुः पञ्चविलो नाम। माश ५, ५, १, १।

पञ्चम (अहन्-)-

१. पशवः पञ्चममहः। कौ २३, ४।
२. विषुवान्वै पञ्चममहः। तां १३, ४, १६; ५, १० ॥ [°म- पाङ्क्त- ६ द्र.]।

पञ्चमी चिति-

१. ग्रीवा एव पञ्चमी चितिः। माश ८, ७, ४, २१।
२. यजमान एव पञ्चमी चितिः। माश ८, ७, ४, १६।

पञ्च-रात्र (यज्ञ-)-

१. पञ्चरात्रो भवति, पञ्च वा ऋतवः संवत्सर ऋतुष्वेव संवत्सरे प्रतितिष्ठत्यथो पञ्चाक्षरा पङ्क्तिः, पाङ्क्तो यज्ञो यज्ञमेवावरुन्धे। तैसं ७, १, १०, ३-४।
२. य एवं विद्वान् पञ्चरात्रेण यजते प्रवदितैव वाचो भवत्यथो एनं वाचस्पतिरित्याहुः। तैसं ७, १, १०, ३।
३. संवत्सरो वा इदमेक आसीत्, सोऽकामयतर्तून्त्सृजेयेति, स एतं पञ्चरात्रमपश्यत्तमाहरत् तेनायजत, ततो वै स ऋतूनसृजत। तैसं ७,१,१०,१।

४. स (स पुरुषो नारायणः) एतं पुरुषमेधं पञ्चरात्रं यज्ञक्रतुमपश्यत्तमाहरत्तेनायजत । माश १३, ६, १, १ (तु. तैसं ७,१,१०,१-४; तां २१,१३,६; माश १३,६,१,७)।

**पञ्च-विंश** ( स्तोम- )–

१. अथ याः पञ्चविंशतिः ( त्रिष्टुभः ), पुरुपस्सः, पञ्चेमाः पञ्चेमाः पञ्चेमाः पञ्चेमाश्चत्वारि प्राङ्गाणि । आत्मा पञ्चविंशः । जै २, ४७ ।

२. अन्नं वै पञ्चविंशम् । जै २, २९४; ३०७; ३१७ ।

३. उद्गाता पञ्चविंशेनात्मना राजनेन स्तोष्यन्नौदुम्बरीमधिरोहति । जै २, ४०६ ।

४. उद्गाता पञ्चविंशेनात्मना राजनेनोद्गायति । जै २, ४०८ ।

५. एतेन वै गौराङ्गिरसः सर्वं पाप्मानमतरत्सर्वं पाप्मानन्तरत्येतेन स्तोमेन तुष्टुवानः । तां १६, ७, ७ ।

६. चतुर्विंशतिर्वै संवत्सरस्यार्धमासाः, संवत्सरस्यैवाऽऽप्त्या । अथो प्रजापतिर्वै संवत्सरः पञ्चविंशः । शांआ १, १ ।

७. गर्भा स्पृताः, पञ्चविंशः स्तोमः । तैसं ४, ३, ९, २; मै २, ८, ५ ।

८. चतुर्विं ꣳ शो वै संवत्सरो ऽन्नं पञ्चवि ꣳ शम् । तां ४, १०, ५ ।

९. पञ्चविंश ꣳ स्तोममुपयन्ति पुरुषस्तोमम् । काठ ३३, ८ ।

१०. पञ्चविंशः (शो वै [जै.]) प्रजापतिः । जै २, १०; १४; ऐआ १, १, ४ ।

११. पञ्चविंशं महाव्रतम् । जै २,३०७ ।

१२. पञ्चविंशेन वै स्तोमेन मनुः प्रजा असृजत । मै ३, १०, ३ ।

१३. पञ्चविंशो ऽग्निष्टोमो भवति प्रजापतेराप्त्यै ; तैसं ७, १,१०, ४ (तु. तैसं ७,५, ८, ३-४)।

१४. पञ्चविंशो ऽयं पुरुषो दशहस्त्या अङ्गुलयो दश पाद्या द्वा ऊरू द्वौ बाहू आत्मैव पञ्चविंशः । ऐआ १, १, २ (तु. काठ ३३,८; जै २, ३५४) ।

१५. पुरुषो वै पञ्चविंशः । जै २, २०५ ॥ [°श– अन्न- ८६; आत्मन्– २६; ६३; गर्भ– ५; ६; पङ्क्ति– १५ द्र.] ।

**पञ्च-विंशति->°रात्र**– पुरुषसंमितं ह खलु वा एतत्सत्रं यदेष पञ्चविंशतिरात्रः । जै २, ३५४ ।

**पञ्च-व्याहृति**–

१. ओ श्रावयेति वै देवाः । पुरोवात ꣳ ससृजिरे ऽस्तु श्रौषडित्यभ्राणि समप्लावयन्यजेति विद्युतं ये यजामह इति स्तनयित्नुं वषट्कारेणैव प्रा वर्षयन् । माश १, ५, २, १८ ।

२. ओ श्रावयेति वै देवाः । विराजमभ्याजुहुवुरस्तु श्रौषडिति वत्समुपावासृजन् यजेत्युदजयन्ये यजामहऽ इत्युपासीदन्वषट्कारेणैव विराजमदुहतेयं (पृथिवी) वै विराडस्यै वाऽ एष दोहः । माश १, ५, २, २० ।

३. ता वा एताः पञ्चव्याहृतयो भवन्त्यो श्रावयास्तु श्रौषड्यज ये यजामहे वौषडिति । गो १, ५, २१; माश १, ५, २, १६ ।

**पञ्च-शरद्->पञ्चशारदीय** (यज्ञ-)- त (मरुतः) एतं (पञ्चशारदीयं) यज्ञमपश्यन् । तमाहरन् । तेनायजन्त । ततो वै त ओजिष्ठा बलिष्ठा भूयिष्ठा वीर्यवत्तमा देवानामासन्नजयन् स्वर्गं लोकम् । जै २,१७५ ।

पञ्च-होतृ-

१. अग्निः पञ्चहोत्रा ( सहाऽसत् ) । तै २, २, ८, ४ ।

२. तस्मै ( ब्रह्मणे ) पञ्चम ९ हूतः प्रत्यश्रृणोत् । स पञ्चहूतो ऽ भवत् । पञ्चहूतो ह वै नामैषः । तं वा एतं पञ्चहूत ९ सन्तं पञ्चहोतेत्याचक्षते परोक्षप्रिया इव हि देवाः । तै २,३,११,३-४ ।

३. ते पञ्चहोत्रा वरुणगृहपतयो न्यसीदन् स्वरयामेति, तेषामग्निर्होतासीदश्विनाध्वर्यू, यदश्विना तेन पञ्चहोत्रा, रुद्रो ऽग्निद् बृहस्पतिरुपवक्ता··· ते त्रिणवमेवायतनमचायँस्ते स्वराय ९ स्त ९ सेतुं कृत्वा, तत्पशवो ऽ सृज्यन्त । काठ ९,११ (तु. मै १, ९, ४) ।

४. पञ्चहोतारं व्याख्याय माध्यन्दिनेन पवमानेनोद्गायेत् ··· पञ्चहोतार ९ हविषामवदीयमाने व्याचक्षीत । पञ्चहोत्रा वै देवा असुरान् प्राणुदन्त, पञ्चहोत्रा पशूनसृजन्त । काठ ९,१४ ।

५. पञ्चहोत्रा ऽमावस्यायां हवींष्यासन्नान्यभिमृशेत् । काठ ९, १४ ।

६. पञ्चहोत्रा वै देवाः पशूनसृजन्त ··· (+ तस्यैताश्चतस्रो दक्षिणा अश्वो हिरण्यं गौर्वासः ⌊काठ.⌋) । मै १, ९,५; काठ ९,१४ ।

७ पशुकामं (स्वर्गकामं) पञ्चहोत्रा याजयेत् । मै १,९, ६² (तु. काठ ९,१४) ।

८. भ्रातृव्यवन्तं पञ्चहोत्रा याजयेत् । मै १, ९,६ ।

९. वायुः पञ्चहोता । स प्राणः । तैआ ३, ७, २ ।

१०. श्रोत्रं पञ्चहोता । मै १, ९, ५; काठ ९,१३ ।

११. संवत्सरो ( सुवर्गो ⌊तै २, २, ८, २⌋) वै पञ्चहोता । तै २, २, ३,६; ८, २ ।
[°तृ- अग्नि- ५६; अङ्गिरस्- २; चातुर्मास्य- २; ३ द्र.] ।

पञ्चाल-

१. क्रिवय इति ह वै पुरा पञ्चालानाचक्षते । माश १३, ५, ४, ७ ।

२. ततः पञ्चालास्त्रेधा ऽ भवन् । क ४६, ५ ॥ [°ल- ध्रुवा- ७ द्र.] ।

पाञ्चाल- दर्भ- ५ द्र. ।

पटरी- पटरीव ह्यसावादित्यः । जै २, २०३ ।

पणि-

१. अथ ह वै पणयो नामासुरा देवानां गोरक्षा आसुः । जै २, ४४० ।

२. यं परिधिं पर्यधत्था अग्ने देव पणिभिरिध्यमानः । क ४७, ११ ।

पण्डक- नोपस्थ आसीत, यदुपस्थ आसीत, पण्डकस्स्यात् । काठ २८,८ ।

पण्डग- प्रत्यस्तं नमुचेः शिरा इति सीसं पण्डगाय प्रत्यस्यति, पाप्मा वै नमुचेः शिरः, पाप्मान ९ वावास्मा (पण्डगाय) एतत् प्रत्यस्यति । मै ४,४,४ ।

पतङ्ग-

१. पतन्निव ह्येष्वङ्गेष्वति रयमुदीक्षते । पतङ्ग इत्याचक्षते । जैउ ३,६,७,२ ।

२. प्राणो वै पतङ्गः । कौ ८,४; जैउ ३,६,७,२;८,२ ।

पति- जाया- ४;९; १०; ११ द्र. ।

पत्नी-

१. अथो अर्द्धो वा एष आत्मनः यत्पत्नी। तै ३, ३,३,५ (तु. तैसं ६,१,८,५)।

२. अन्तभाजो वै पत्न्यः। कौ १६,७।

३. अर्धात्मा वा एष यजमानस्य यत् पत्नी। जै १, ८६।

४. आत्मानमेव सोमग्रहैस्स्पृणोति पत्नी ऽ सुराग्रहैः। काठ १४, ६।

५. गार्हपत्यभाजो वै पत्न्यः। कौ ३, ९।

६. गृहा वै पत्न्यै प्रतिष्ठा। माश ३, ३,१,१०।

७. चतस्रो जाया उपक्लृप्ता भवन्ति। महिषी वावाता परिवृक्ता पालागली। माश १३,४,१,८।

८. जघनार्धो वाऽएष यज्ञस्य यत्पत्नी। माश १,३,१,१२;२,५,२,२९;३,८,२,२।

९. तस्मादु पत्नीः प्रपन्नं न हन्यात्। जै २, १५५।

१०. तृप्ता पत्नी रेतो धत्ते। मै १,९,८; काठ ९, १५।

११. पत्नीं तु न संयाजयेदमेध्या वा एषापूता नेश्वरा स्वर्गं लोकं गन्तोः। काठ २३, ९; क ३६, ६।

१२. पत्नी स्थाली। तै २, १,३,१।

१३. पत्नी हि सर्वस्य मित्रम्। तैसं ६,२,९,२।

१४. पश्चात्प्राची पत्न्यन्वास्ते। तैसं ५,३,७,३।

१५. यद्वै पत्नी यज्ञे करोति तन्मिथुनम्। क ४७, ९ (तु. तैसं ६, २,१,१)।

१६. श्रद्धा पत्नी। तैआ १०,६४,१।

१७. श्रिया (श्रियै [माश.]) वा एतद्रूपं यत्पत्न्यः। तै ३, ९, ४, ७-८; माश १३, २,६, ७। [°त्नी- अग्नि[,ग्नी]ध्- ५; अग्निहोत्र-३०; अध्वर्यु- २५; एकविंश- ३०; त्वष्टृ- ६; दीक्षा- ६; दीक्षित- २२; धाय्या- ४ द्र.]।

पत्नी-भाजन- नेष्टृ- ३ द्र.

पत्नी-संयाज- चत्वारः पत्नीसंयाजाश्चतस्रो वै प्रतिष्ठा ऊरू द्वावष्ठीवन्तौ द्वौ। माश ११, २,६,९।

पथिकृत्- अग्नि- २०१; २०२ द्र.।

पथिपा- पूषा मा पथिपाः पातु। मै १, ५, ४; काठ ७, २ (तु. मै १,५,११)।

पथ्या-

१. पथ्या ऽ स्वस्तिमयजन् प्राचीमेव तया दिशं प्राजानन्। तैसं ६,१,५,२ (तु. काठ २३, ८)।

२. पथ्या पूष्णः (+पत्नी [गो.]) । मै १, ९, २; काठ ९, १०; गो २, २,९; तैआ ३, ९, १।

३. मयैव (पथ्यया हे देवा यूयं) प्राचीं दिशं प्रजानाथ। ऐ १,७।

४. यत्पथ्यां (अदितिम्) यजति तस्मादसौ (आदित्यः) पुर उदेति पश्चाऽस्तमेति पथ्यां ह्येषो ऽनुसंचरति। ऐ १,७।

५. वाग्वै पथ्या स्वस्तिः। कौ ७,६; माश ४, ५,१,४ (तु. मै ३, ७, १; काठ २३, ८; माश ३, २, ३, ८;१५)।

६. सा (पथ्या स्वस्तिः) उदीचीं दिशं प्राजानात्। कौ ७, ६॥ [°थ्या- उदीची- १० द्र.]।

पद्-

१. आत्मा वै पदम् । कौ २३, ६ ।

२. पशवः पदम् । मै ३,७,७; काठ २४, ४; ६; क ३७, ७ ।

३. स यदिमानि सर्वाणि भूतानि पादि तस्मात्पदम् । ऐआ २, २, २ ।

पद-निधन- इमं वाव देवा लोकं पदनिधनेन(साम्ना)अभ्यजयन् । तां १०, १२, ३ ।

पद-पङ्क्ति- अयं वै लोकः पदपङ्क्तिश्छन्दः । माश ८, ५, २, ४ ।

पदवी- कवि- ३ द्र. ।

पद-स्तोभ ( सामन्- )-

१. इन्द्रो वृत्राय वज्रमुदयछत्तं षोडशभिर्भोगैः पर्य्यभुजत्स एतं पदस्तोभमपश्यत्तेनापावेष्टयदपवेष्टयन्निव गायेन् पाप्मनो ऽपहत्यै । तां १३, ५,२२ ।

२. ते वा एते पशव एव यत् पदस्तोभाः । जै ३, १३० ।

३. पदोरुत्तममपश्यत्तत्पदस्तोभस्य पदस्तोभत्वम् । तां १३, ५, २४ ।

पद्या- पद्यया (विराजा) वै देवाः स्वर्गं लोकमायन् । तां ८,५,७ ।

पन्नेजनी- यज्ञस्य मिथुनं (सोमः) पन्नेजनीषु । काठ ३४,१५ ।

पयस्-

१. अन्तर्हितमिव वा एतद्यत्पयः । तां ९, ९,३ ।

२. अपामेष ओषधीनां ऽ रसो यत्पयः । माश १२, ८, २,१३; (तु. माश ४, ४, ४, ८; ७,३,१,४६) ।

३. आपो हि पयः । कौ ५,४; गो २,१,२२ ।

४. एतत् सोमस्य ( तेजः) यत् पयः । तैसं २,५,२,७ ।

५. ऐन्द्रं ( तेजः [तैसं.]) पयः । तैसं ६,२,५,३; गो २,१,२२ ।

६. चत्वारि वै पया ऽ सि । मै ४, ५,७ ।

७. जागतमयनं भवति पशुकामस्यैडानिधनं पयसामुष्मिँल्लोक उपतिष्ठते । तां १३,४,१० ।

८. तद्यदेवात्र पयस्तन्मित्रस्य, सोम एव वरुणस्य । माश ४,१,४,९ ।

९. तमु तं सोममेव प्रत्यक्षं भक्षयन्ति यत् पयः । जै १, ३५५ ।

१०. तस्मात्प्रथमदुग्धं (पयः) उष्णं भवत्यग्नेर्हि रेतः । माश २,२,४,१५ ।

११. तां (गामग्निः) सम्बभूव तस्या ऽ (गवि) रेतः प्रासिञ्चत्तत्पयोऽभवत् । माश २,२,४,१५ ।

१२. द्वादश वै पया ऽ सि । मै ४,४,८ ।

१३. पय एष इछति यो भूतिमिछति । मै २, ३,१ ।

१४. पयः पशवः (सान्नायम् [तैसं.]) । तैसं २,५,५,१; काठ १२, १ (तु. काठ ६,४; क ४,३) ।

१५. पयसा वै गर्भा वर्धन्ते । तैसं ६, २,५,३ ।

१६. पयो अघ्न्यासु (ततान) । काठ २, ६ ।

१७. पयो वै पुरुषः ( रेवतयः [जै.]; सोमः [तैसं.]) । तैसं २,५,५,१; मै २, ३, १; जै ३, १४५ ।

१८. पयो हि रेतः । माश ९,५, १,५६ (तु. गो २, २,६; जै १,५२; माश १२,४,१,७) ।

१९. पयो हि वा एतस्मादपक्रामत्यथैष पाप्मना गृहीतः। तैसं २,३,१३,२।
२०. परमं वा एतत्पयो यदजक्षीरम्। तैसं ५, १,७,४।
२१. पशूनां वा एतत् पयो यद् व्रीहियवौ। मै १,८,२,।
२२. प्राणः (पितृदेवत्यं [कौ.]) पयः। कौ १०,६; माश ६,५,४,१५; ९,२,३,३१।
२३. महीनां पयोऽस्यपामोषधीनां रसः। काठ २, १; क १,१३।
२४. यज्ञेन पयसा सह ··· तस्य दोहमशीमहि। तैआ ४, २१,१।
२५. याः पृथिवीं पयसोन्दन्ति शुक्रास्ता ना आपः शं स्योना भवन्तु। मैं २, १३,१।
२६. रसो वै पयः। माश ४,४,४,८; ७,३,१,४६।
२७. वायव्यं पयः (+ भवति [माश.]) । तैसं १,८,७,१; माश २,६,३,६।
२८. वायुर्वै पयसः प्रदाता। काठ ३५,१७; क ४८, १५।
२९. वायुसवितृभ्यां पयः। मै ३,१५,११।
३० वैश्वदेवं हि पयः। मै ४,३,२; काठ १२, ७; गो २,१,१७।
३१. सोमः पयः। तैसं ६,२,११,५; माश १२, ७,३,१३।
३२. सौर्यं पयः। तैसं ७, ५, २१, १; तै ३, ९, १७, ४॥ [°यस्- अग्निरेतस्-; अन्न- १२६; आम->√आमि १; ओषधि- १४; ६०; क्षत्र- २१; घृत- २४ द्र.]।

पयस्या-

१. एतद्धै मित्रावरुणयोः स्वं हविर्यत्पयस्या। कौ १८, १२ (तु. काठ २९, १; क ४५, २; माश ४,२,५, २२)।
२. पयो वै पयस्या। काठ १२,१।
३. मित्रावरुणयोः पयस्येति, प्राणापानौ वै मित्रावरुणौ। मै ३,१०,६; क ४५,२।
४. मैत्रावरुणमेककपालं निर्वपेत्पयस्यां वा। मै २,१,७।
५. मैत्रावरुणी पयस्या (+ भवति [माश ५,५,१,१]) । माश २,४,४,१४; ५,५,१,१।
६. यत् पयस्या तेन चातुर्मास्यानि। जै २, ३८।
७. यदस्मात् (प्रजापतेः) तद्रेतः परापतदेषा सा पयस्या मैत्रावरुणी। माश ९,५,१, ५६।
८. योषा पयस्या रेतो वाजिनम्। माश २,४,४,२१;५,१,१६।
९. संस्थितायां चोदवसानीयायां मैत्रावरुण्या पयस्यया यजेत तस्या उक्तं ब्राह्मणं नैतयानिष्ट्वाग्निचिन्मैथुनं चरेतेति। कौ १९, ७॥ [°स्या- धेनु- १२ द्र.]।

पयस्वत्- ऊर्जस्वत्- द्र.।

पयस्वितम- क्षत्र- ६६ द्र.।

पयोभाजन- स (वनस्पतिः) उ वै पयोभाजनः। कौ १०, ६।

पर-

१. अनुष्टुभो वै यदयातयामरूपं तानि पराणि। काठ ३३,६।
२. एष वाव स परो रजा इति होवाच। य एष (सूर्यः) तपति। तै ३, १०, ९, ४।
३. देवा वै यज्ञेन नावारुन्धत, तत्परैरवारुन्धत, तत्पराणां परत्वम्। तैसं ३,२,६,१।

४. परैवैं देवा आदित्यँ स्वर्गं लोकमपारयन्, यदपारय ९ स्तत् पराणां परत्वम् । काठ ३३, ६; तां ४, ५,३ ।

५. ब्रह्म हि परः, परो हि ब्रह्म । तैआ १०,६२,१ ।

६. श्रोत्रं वै पर ९ रजो दिशो वै श्रोत्रं, दिशः पर ९ रजः । माश ७, ५,२, २० ।

परम- अन्तो वै परमम् । ऐ ५, २१ ।

परम-पुरुष- यो विद्युति स परमपुरुषः । जैउ १,८,३,२ ।

परमेष्ठिन्-

१. अयं वा इदं परमोऽभूदिति । तत्परमेष्ठिनः परमेष्ठित्वम् । तै २,२, १०,५ ।

२. आपो वै प्रजापतिः परमेष्ठी ता हि परमे स्थाने तिष्ठन्ति । माश ८,२, ३,१३ ।

३. तत एतं परमेष्ठी प्राजापत्यो यज्ञमपश्यद्यद्दर्शपूर्णमासौ ताभ्यामयजत···स आपोऽभवत्··· परमाद्वाऽएतत्स्थानाद्वर्षति यद्दिवस्तस्मात्परमेष्ठी नाम । माश ११,१,६,१६ ।

४. तपसा परमेष्ठी । काठ ३५,१५।

५. तिस्रश्श्येनीः परमेष्ठिने । काठ ४९,३ ।

६. त्रयस्त्रि ९ शतास्तुवत, भूतान्यशाम्यन्, प्रजापतिः परमेष्ठ्यधिपतिरासीत् । तैसं ४, ३, १०,३; मै २, ८,६ ।

७. परमेष्ठिने द्वादशकपालं निर्वपेद्यः कामयेत परमेष्ठी स्यामिति । मै २,२,५ ।

८. परमेष्ठी त्वा सादयतु दिवः पृष्ठे व्यचस्वतीं प्रथस्वतीं भास्वती ९ रश्मिवतीमा या दिवं भास्या पृथिवीमोर्वन्तरिक्षं, दिव ९ यच्छ···सूर्यस्त्वाभिपातु । मै २, ८, १४ (तु. मै २, ७, १६; काठ १७,१०) ।

९. परमेष्ठी दिवं तृतीया ९ स्वयमातृण्णां चितिमपश्यत्··· । तमसावादित्योऽब्रवीत् । उपाहमायानीति, केनेति, लोकम्पृणयेति । माश ६, २, ३, ५-६ ।

१०. परमेष्ठी राजन्यो मनुष्याणाम् । मै २,२,५ ।

११. परमेष्ठी वा एषः । यदोदनः । तै १, ७, १०, ६ ।

१२. परमेष्ठी स्वाराज्यम् । परमेष्ठितां गच्छति य एवं वेद । तां १९, १३,३;४; २२,१८,४; ५ ।

१३. परमेष्ठ्यधिपतिर्मृत्युर्गन्धर्वस्तस्य विश्वमप्सरसो भुवः । तैसं ३, ४, ७, २ ।

१४. प्रजापतिं विस्रस्तं देवता आदाय व्युदक्रामंस्तस्य ( प्रजापतेः ) परमेष्ठी शिर आदायोत्क्रम्यातिष्ठत् । माश ८, ७, ३, १५ ।

१५. विश्वकर्मा वयः परमेष्ठी छन्दः । तैसं ४,३,५,२; मै २,८,२ ॥ [ °ष्ठिन्- आदित्य- २९७; ऋत- ११; दिव्- १२७ द्र. ] ।

परशु- वज्रो वै परशुः । माश ३, ६, ४, १० ।

परस्-सामन्-

१. पार्श्वे परस्सामानः । तैसं ७, ३,१०,३ ।

२. संवत्सरः परस्सामानः । तैसं ७, ३, १०,२ ।

**पराञ्च्-,>पराक** (त्रिरात्र-)-

१. पराकेण वै देवाः स्वर्गं लोकमायन्। स्वर्गकामो यजेत । पराङेवैतेन लोकमाक्रमते। तां २१, ८, २ ।

२. यद्वा एतस्याकन्तदस्य पराक् तत् पराकस्य पराकत्वम्। तां २१, ८, ३ ।

**पराग्वसु-** अर्वाग्वसु- ३ द्र.।

**पराभूति-** अभूति- २ द्र.।

**परावत्-** अन्तो वै परावतः। ऐ ५, २; कौ २२,५; २३, ७ ॥ [ °वत्- अनुष्टुभ् १७ द्र. ]।

**परावसु-** परावसुर्ह वै नामासुराणा ँ होता। माश १,५, १,२३ ।

**परा√हन्** वत्सं पराहन्ति (आलभते [मै.]) वत्सनिकान्ताः (+हि [मै.]) पशवः। मै १, ५, ९; काठ ७,७।

**परिक्षित्-**

१. अग्निर्हीमाः प्रजा परिक्षेत्यग्निं हीमाः प्रजाः परिक्षियन्ति। ऐ ६, ३२ ।

२. संवत्सरो वै परिक्षित् (+संवत्सरो हीदं सर्वं परिक्षियतीति [गो.])। ऐ ६, ३२; गो २, ६,१२ ॥ [°क्षित्- अग्नि- २०४ द्र.]।

**परिचरा-** यजमानः परिचरा। तां ३, १, ३; ३, २; ८, ३; १२, ३ ।

**परितस्थिवस्-** इमे वै लोकाः परितस्थुषः। तै ३, ९, ४, २ ।

**परिधानीया-**

१. प्रतिष्ठा (+वै [गो.]) परिधानीया। कौ १५,३;१६,४; गो २,३,२१;२२ ।

२. श्रोत्रं परिधानीया। जैउ ३,१,४,३ ॥ [°या- दिश्- २९ द्र.]।

**परिधि-**

१. आधानानि परिधयः। क ४४,९ ।

२. इमे वै लोकाः परिधयः। तै ३,८,१८,४ ।

३. गुप्त्यै वाऽअभितः परिधयो भवन्ति। माश १,३,४,८ ।

४. तस्येन्द्रः परिधीन् यज्ञियेभ्यो वृक्षेभ्य आजहार। काठसंक १३७:१३-१४ ।

५. परिधयो रश्मयः। मै ४,५,५ ।

६. परिधीन् परिदधाति (+रक्षसामपहत्यै [तैसं.])। तैसं २, ६, ६,२; माश १,३,३,१३ ।

७. यं परिधिं पर्यधत्था अग्ने देवपणिभिर्वीयमाणः (°मानः [मै.]; °भिरिध्यमानः [काठ.])। तैसं १,१,१३,२; मै ४,१,१४; काठ ४७,११ ।

८. रक्षसां वा एतेऽनवजयाय परिधीयन्ते यत् परिधयः। काठ २६,७; क ४१, ५ ।

९. सप्तास्य (यज्ञस्य) आसन् परिधयः। काठसंक १०१:११ ॥ [°धि- अक्ष-; दिश्- २९ द्र.]।

**परिपति-**

१. परिपतये त्वेति, सोमाय तेन रुद्रेभ्यः'''परिपतये त्वेति, प्रजां तेन (गृह्णाति)। मै ३,७,१०।

२. मनो वै परिपतिः। तैसं ६,२,२,३; गो २, २,३ ।

परिप्लव- देवचक्रं वा एतत्परिप्लवम् । कौ २०,१ ।

परिभू- संवत्सरेण परिभूः (इन्द्रः) । तैसं ४,४,८,१ ॥ [°भू- दिश्- ४४ द्र.] ।

परिमर-

१. तद् ब्रह्मणः परिमर इत्युपासीत । पर्येणं म्रियन्ते द्विषन्तः । परि येऽप्रिया भ्रातृव्याः । तैआ ९,१०,४; तैउ ३,१०,४ ।

२. यो ह वै ब्रह्मणः परिमरं वेद पर्येनं द्विषन्तो भ्रातृव्याः परि सपत्ना म्रियन्ते । ऐ ८, २८ ।

परिमाद्- त्वक् च वा एतल्लोम च महाव्रतस्य यत्परिमादः । तां ५,६,११ ॥ [°माद्- अप्-१०१ द्र.] ।

परिवत्सर-

१. आदित्यः परिवत्सरः । तै १, ४,१०, १ ।

२. परिवत्सरो बलिवर्दः । तै ३,८,२०,५ ।

३. प्रजां ददातु परिवत्सरो नो धाता दधातु सुमनस्यमानः । मै २,१३,२२ ।

४. यत् ते रुद्र दक्षिणा धनुस्तद्वातो अनुवातु ते, तस्मै ते रुद्र परिवत्सरेण नमस्करोमि । तैसं ५,५,७,३ ।

५. सूर्य्यः परिवत्सरः । तां १७,१३,१७ ।

परिवाप-

१. अन्नमेव परिवापः । ऐ २,२४ ।

२. भारत्यै परिवापः । तै १, ५,११,२ ।

३. यः परिवापं (अत्ति) केशान् सः (अत्ति) । काठ ३४,११ ।

४. सरस्वतीवान् भारतीवान् परिवापः । मै ३,१०,६; काठ २९,१; क ४५, २; ऐ २,२४ ।

परिवृक्ति,क्ती-

१. नैर्ऋतश्चरुर्नखावपूतानां परिवृक्तया गृहे । मै २,६,५; ४,३,८ ।

२. या वा अपुत्रा पत्नी सा परिवृत्ती (परिवृक्ती) । माश ५,३, १, १३ ।

३. सुवरिति परिवृक्ती । तै ३,९,४,५ ।

परिश्रित्-

१. अस्थीनि वै परिश्रितः । माश ७,१,१,१५ ।

२. अस्थीन्येव श्रीस्तद्धि परिश्रिताꣳ रूपम् । माश १०,२,६,१८ ।

३. आपः परिश्रितः । माश ७,१,१,१३; ९,२,१, २० (तु. माश ९,४, ३,९; १०,५,४,१) ।

४. परिश्रित एव श्रीस्तद्धि रात्रीणाꣳ रूपम् । माश १०, २, ६, १७ ।

५. परिश्रिद्भिरेवास्य रात्रीराप्नोति । माश १०, ४, ३, १२ ।

६. योनिर्वै (लोमानि वै [माश ९, १, १, १०]) परिश्रितः । माश ७, १,१,१२; ९,१,१,१० ।

परिषद्य- परिषद्यो ऽस्यास्तव्यः । मै १, २, १२ ।

परिष्कृत्- पशवः परिष्कृतः । जै १,९० ।

परिष्टुब्धेड- अन्तरिक्षं परिष्टुब्धेडेन (साम्ना देवा अभ्यजयन्) । तां १०, १२,४ ।

परिष्टोभन्ती- परिष्टोभन्ती त्रिष्टुप् । तां १२, १, २ ।

**परिसारक-** तस्माद्धाप्येतर्हि परिसारकमित्याचक्षते यदेनं सरस्वती समन्तं परिससार। ऐ २,१९।

**परिस्रुच्-** यच् ( इन्द्रस्य ) छिश्नात् ( सोमो राजा प्रेयाय ) सा परिस्रुक्। जै २, १५६।

**परिस्रुत्-**

१. नैष सोमो न सुरा यत् परिस्रुत्। माश ५, १, २, १४।

२. शिश्नादेवास्य रसो ऽस्रवत्सा परिस्रुदभवत्। माश १२, ७, १, ७ (तु. जै २, १५६)।

**परीणस-** अन्नं वै परीणसम्। जै ३, १७४।

**परीशास-** द्यावापृथिवी- २ द्र.।

**परुच्छेप-** असुरीन्द्रं प्रत्यक्रमत पर्वन्पर्वन्मुष्कान्कृत्वा तामिन्द्रः प्रतिजिगीषन्पर्वन्पर्वञ्छेपांस्यकुरुत। ··· इन्द्र उ वै परुच्छेपः। कौ २३,४।

**पर्जन्य-**

१. उत् पर्जन्यस्य वृष्ट्योदस्थामममृताँ अनु। काठ २, ६।

२. क्रन्दतीव हि पर्जन्यः। माश ६, ७, ३, २।

३. तान् ( देवान् ) आदित्यः पर्जन्यः पुरोबलाको भूत्वाऽभिप्रैत्तान् वृष्ट्या ऽशन्या विद्युता ऽहन्। ष १, २।

४. तौ ( अनड्वाहौ ) यदि कृष्णौ स्यातामन्यतरो वा कृष्णस्तत्र विद्याद्वर्षिष्यत्यैषमः पर्जन्यो वृष्टिमान् भविष्यतीति। माश ३, ३, ४, ११।

५. निकामे निकामे नः पर्जन्यो वर्षतु। तैसं ७, ५, १८, १; मै ३, १२, ६।

६. पर्जन्यः ( संवत्सरस्य ) वसोर्धारा। तै ३, ११,१०,३।

७. पर्जन्यस्य विद्युत् ( पत्नी )। तैआ ३, ९,२।

८. पर्जन्यः सदस्यः। गो १, १, १३।

९. पर्जन्याय प्रगायत। दिवस्पुत्राय मीढुषे। स नो यवसमिच्छतु। तैआ १,२९,१।

१०. पर्जन्याय मण्डूकान् ( आलभते )। मै ३, १४, २।

११. पर्जन्यो भूत्वा ( प्रजापतिः ) प्रजानां जनित्रमभवत्। जै १, ३१४।

१२. पर्जन्यो मे मूर्द्धि श्रितः। तै ३, १०, ८, ८।

१३. पर्जन्यो वा अग्निः। माश १४, ९, १, १३।

१४. पर्जन्यो वृष्टिमाँ इव। तैसं १, ४, २०, १; काठ ४, ८; क ३,६।

१५. पर्जन्यो वै भवः पर्जन्याद्धीद ँ सर्वं भवति। माश ६, १, ३, १५।

१६. प्र पर्जन्यमीरया वृष्टिमन्तम् ( अग्ने )। काठ ५, १५।

१७. प्र वाता वान्ति पतयन्ति विद्युता उदोषधीर्जिहते पिन्वते स्वः (सुवः [तैआ.])। इरा विश्वस्मै भुवनाय जायते, यत् पर्जन्यः पृथिवी ँ रेतसाऽवति। मै ४,१२,५; तैआ ६,६,३।

१८. यः पर्जन्यस्य घोषो यो दुन्दुभेस्तममुष्यै (दिवे) प्रायच्छत्। जै ३,१०५।

१९. वराहवः, स्वतपसः विद्युन्महसो धूपयः। श्वापयो गृहमेधाश्चेत्येते। ये चेमेऽशिमिविद्विषः। पर्जन्याः सप्त पृथिवीमभिवर्षन्ति। वृष्टिभिरिति। एतयैव विभक्तिविपरीताः। सप्तभिर्वातैरुदीरिताः। अमूँल्लोकानभिवर्षन्ति। तैआ १, ९,४-५।

२०. वृषा (वर्षा [तैसं ७, ५, २०, १]) पर्जन्यः। तैसं २, ४, ९, ४; मै २, ४, ८; काठ ११, १०।

२१. सुक्षितिः सुभूतिर्भद्रकृत् सुवर्वान् पर्जन्यो गन्धर्वस्तस्य विद्युतोऽप्सरसो रुचः। तैसं ३, ४,७,२।

पार्जन्य-

१. पार्जन्या नभोरूपाः। काठ ४९, ९ (तु. मै ३,१३,४;७)।

२. षड्भिः पार्जन्यैर्वा मारुतैर्वा (पशुभिः) वर्षासु (यजते)। माश १३,५,४, २८।

३. सुपर्णः पार्जन्यः। मै ३, १४, १५; काठ ४७, ११॥ [°न्य- अप्- १९३; अर्वावसु- १; उदान- ४; उद्गातृ- १५; कृषि- ४ द्र.]।

पर्ण (पलाश-)-

१. गायत्रो वै पर्णः। तै ३,२,१,१।

२. तृतीयस्यामितो (°स्यां वै [काठ. क.]) दिवि सोम आसीत्। तं गायत्र्याहरत्। तस्य पर्णमच्छिद्यत। तत् (स [काठ., क.]) पर्णोऽभवत्। तत्पर्णस्य पर्णत्वम्। तैसं ३,५,७, १; काठ ३०,१०; क ४६,८; तै १,१,३,१०; ३,२,१,१।

३. देवा वै ब्रह्मन्नवदन्त तत् पर्ण उपाश्रृणोत् सुश्रवा वै नाम (+ यस्य पर्णमयी जुहूर्भवति न पाप श्लोक श्रृणोति [तैसं.])। तैसं ३, ५, ७, २; तै १, १, ३, ११ (तु. तै १, २, १, ६)।

४. देवा वै ब्रह्मन् समवदन्त तत् पर्ण उपाशृणोत्, सुश्रवा वै नामैष न बधिरो भवति य एवं वेद। मै ४,१,१; काठ ३०, १०; क ४६, ८ (तु. मै ४,४,२)।

५. पर्णमभिपुणुयुः सोमं वै राजानं यत् सुपर्ण आजहार तस्य यत् पर्णमपतत् स एव पर्णोऽभवत्। स एवास्य संन्यङ्गः। जै १,३५५।

६. पर्णे वो (ओषधीनाम्) वसतिष्कृता। क २५, ४।

७. पर्णी ब्रह्मणा (त्वावतु)। तैसं ७,४,१२,१; काठ ४४,१।

८. ब्रह्म वै पर्णः। तैसं ३,५,७,२; मै ४,१,१; तै १,७, १,९; ३,२,१,१।

९. यत्र वै गायत्री सोममच्छापतत्तदस्या आहरन्त्या अपादस्ताभ्यायत्य पर्णं प्रचिच्छेद गायत्र्यै वा सोमस्य वा राज्ञस्तत्पतित्वा पर्णोऽभवत्तस्मात्पर्णो नाम। माश १, ७,१,१।

१०. राष्ट्रं वै पर्णः। तैसं ३, ५, ७,३।

११. सोमो वै पर्णः। माश ६,५,१,१॥ [°र्ण- खदिर २; गायत्री- ५६; ६९; ८१ द्र]।

पर्ण-मय- पर्णमयेनाध्वर्युरभिषिञ्चति। तै १,७,८,७।

पर्याय-

१. अह्नोऽसुरा नुत्ता रात्रिं प्राविशन्। ते देवा एतान् (असुरान्) अन्वभ्यवायन्। तान् पर्यायमघ्नन्। यत्पर्यायमघ्नंस्तत्पर्यायाणां पर्यायत्वम्। जै १, २०८।

२. तान् (असुरान् देवाः) समन्तं पर्य्यायं प्राणुदन्त यत्पर्य्यायं प्राणुदन्त तत्पर्य्यायाणां पर्य्यायत्वम् । तां ९, १, ३ ।

३. यत्पर्य्यायैः पर्य्यामनुदन्त (+ तस्मात्पर्य्यायाः [गो.]) तत्पर्य्यायाणां पर्य्यायत्वम् । ऐ ४,५; गो २,५,१ (तु. जै २,११०) ।

**पर्यास**– प्रतिष्ठा वै पर्य्यासाः । कौ २५,१५ ।

**पर्वत–**

१. प्रजापतेर्वा एतज्ज्येष्ठं तोकं यत्पर्वतास्ते पक्षिण आस ९ स्ते यत्र यत्राकामयन्त तत् परापातमासताथ वा इयं (पृथिवी) तर्हि शिथिलासीत्, तेषामिन्द्रः पक्षानच्छिनत् तैरिमामदृ ९ हत् । काठ ३६, ७ (तु. मै १,१०,१३) ।

२. विष्णुः पर्वतानाम् (अधिपतिः) । तैसं ३, ४, ५, १ ।

३. स (प्रजापतिः) एभिश्चैव पर्वतैर्नदीभिश्चेमाम् (पृथिवीम्) अदृ ९ हत् । माश ११,८,१,२ । [°त– गिरि– १ द्र.] ।

**पर्वन्**– अर्धमास– ६ द्र. ।

**पर्शु–**

१. तस्मादिमा उभयत्र पर्शवो बद्धाः कीकसासु च जत्रुषु च । माश ८, ६, २, १० ।

२. पर्शव उ ह वै वङ्क्रयः । कौ १०, ४ ।

३. पर्शवो बृहत्यः । माश ८, ६, २, १० ॥ [°र्शु– अवान्तरदिशा– १ द्र.] ।

**पलाश–**

१. तेजो वै ब्रह्मवर्चसं वनस्पतीनां पलाशः । ऐ २, १ ।

२. ब्रह्म वै पलाशः । माश १, ३, ३, १९; ५, २, ४, १८; ६, ६,३,७; १३,८,४,१ ।

३. ब्रह्म वै पलाशो ब्रह्मणैवैतन्नाष्ट्रा रक्षा ९ सि हन्ति । माश ५, २, ४, १८ (तु. माश २, ६, २, ८ ।

४. मा ९ सेभ्य एवास्य (प्रजापतेः) पलाशः समभवत् तस्मात्स बहुरसो लोहितरसः । माश १३,४, ४, १० ।

५. सर्वेषां वा एष वनस्पतीनां योनिर्यत्पलाशः । ऐ २, १ ।

६. सोमो वै पलाशः । कौ २, २; माश ६, ६, ३, ७ (तु. माश ६,५,१,१) ।

पालाश– पालाशं (शङ्कुम्) पुरस्तात् । माश १३, ८, ४, १ ।

**पवमान–**

१. अथ माध्यन्दिनः पवमानः । स ह स धनजिदेव स्तोमः । वायुरेव सः । स हीदं प्राणो भूत्वा सर्वं धनमजयत् । जै १, ३१३ ।

२. अथार्भवः पवमानः । स ह सोऽसित एव स्तोमः । दिश एव ताः । दिशो ह व्युत्क्रामन्ति पाप्मा न सिनाय । न हैनं पाप्मा सिनोति य एवं वेद । जै १, ३१३ ।

३. अयं वायुः पवमानः । माश २, ५, १, ५ ।

४. ताः (दिशः) अयं वायुः पवमान आविष्ट इति वाजसनेयः । जै २, २२९ ।

५. अयं वाव यः ( वायुः ) पवते स पवमानः । काठ २२, १०; क ३५, ४ ।
६. आत्मा वै यज्ञस्य पवमानः । तां ७, ३, ७ ।
७. जया ह वै नामैते स्तोमा यत् पवमानाः । पवमानैः वै देवा असुरान् पराञ्च एव जयन्त आयन् । जै १, २७६ ।
८. तस्मादुत्तरतः पश्चादयं ( वायुः ) भूयिष्ठं पवते सवितृप्रसूतो ह्येष एतत्पवते । ऐ १, ७ ।
९. तस्य ( अग्नेः ) यत् पवमान ५ रूपमासीत्तत् पृथिव्यां निदधे । काश १, २, १, ९ ।
१०. त्रयो ह वा एते समुद्रा यत् पवमानाः । अग्निर्वायुरसावादित्यः । जै १, २७४ ।
११. देवा वै पवमानाः (+प्रजाः पृष्ठोक्थानि [जै १, २७४]) । जै १, २७४;२७६ ।
१२. परिषद्यो ऽसि पवमानः । तैसं १, ३, ३,१ ।
१३. पवमानं पायुना (प्रीणामि) । तैसं ५, ७, १५, १; काठ ४३, ५ ।
१४. पवमाना वै देवयशसम् । ते ह ते प्राणा एव । जै १, २७९ ।
१५. पवमानेन ( अग्निना ) वै देवेभ्यो ऽन्नाद्यं प्रदीयते । जै ३, १०० ।
१६. पवमानोक्थं वा एतद्यद्वैश्वदेवम् ( शस्त्रम् ) । कौ १६, ३ ।
१७. पवमानो वत्सः ( इडायाः ) । मै ४, २, २ ।
१८. पवमानो वाव यज्ञः । जै १, ११९ ।
१९. पवमानो विश्वैर्देवैः ( संहितः ) । ऐआ ३, १, ६ ।
२०. पवमानो हरित आविवेश, इति वायुरेव पवमानः । ऐआ २,१,१ ।
२१. पशवो वै पवमानः । मै १, ६, ८ ।
२२. पुरुषसंमित एष यत् पवमानः । जै १, ३०६ ।
२३. प्रजा वै हरितः । ता अयं प्राणः पवमान आविष्टः । जै २, २२९ ।
२४. प्राणः पवमानेन ( संहितः ) । ऐआ ३, १, ६ ।
२५. प्राणो वै पवमानः । मै ३, ३, २; ५; काठ ८, ८; ९; माश २, २, १,६ (तु. जै १,२७५) ।
२६. माध्यन्दिनस्य पवमानः । ( स्वर्ग्यः ) । तां ७, ४, १ ।
२७. यज्ञमुखं वै पवमानः । मै ३, ८, १० ।
२८. यत्पश्चाद्वाति ( वायुः ) । पवमान एव भूत्वा पश्चाद्वाति । तै २, ३, ९, ६ ।
२९. यदग्नये पवमानाय निर्वपति, प्राणमेवास्मिन् ( यजमाने ) तेन दधाति । तैसं २, २,४,२ ।
३०. या ते अग्ने पवमाना तनूः पृथिवीमन्वाविवेश, याग्नौ या रथन्तरे या गायत्रे छन्दसि या त्रिवृति स्तोमे तां त एतदवरुन्धे । क ६, ३ ।
३१. या पवमाना ( अग्नेः ) तनूरासीत् पशू ५ स्तया प्राविशत् । काठ ८, ९ ।
३२. या वाजिन्नग्नेः पवमाना प्रिया तनूस्तामावह । मै १, ६, २ (तु. काठ ७, १३; क ६,३ ) ।
३३. यो वा अग्निः स पवमानस्तदप्येतदृषिणोक्तमग्निर्ऋषिः पवमान इति । ऐ २, ३७ ।
३४. सुपावः पवमानः ( अस्तु ) । तैसं ७, ५,२०, १ ।
३५. सोमो वै पवमानः । माश २, २, ३, २२ ॥ [°न- चन्द्रमस्- १८; देव- ३९ द्र.] ।

पवित्र-

१. अन्तरिक्षं वै पवित्रम् । काठ २६, १०; क ४१, ८ ।

२. अयं वै पवित्रं यो ऽयं (वायुः) पवते। माश १, १, ३,२; ७,१, १२।
३. एतद्वा अछिद्रं पवित्रं यत् सूर्यस्य रश्मयः। मै ३, ६, ३; ४, ४, २।
४. पवित्रं वै वायुः (हिरण्यम् [तैसं., तै १,७,२,६])। तैसं २, २, ५, १; तै १, ७,२, ६; ३, २, ५,११ (तु. काठ ८, ५)।
५. पवित्रं पोत्राभ्याम्। तैसं ५, ७, १५, १; काठ ५३, ५।
६. प्राणापानौ (प्राणोदानौ [माश.]) पवित्रे। तै ३, ३, ४, ४; ६, ७; माश १, ८,१,४४।
७. येन देवाः पवित्रेणात्मानं पुनते सदा तेन सहस्रधारेण पवमानः पुनातु मा। काठसंक ९६ : २।
८. वसूनां वा एतद् भागधेयं यत् पवित्रम्। क ४६,८ ॥ [°त्र- अग्नि- १६८; अन्तरिक्ष- ६०; अप्-१०२;१९४; दर्भ- १० द्र.]

पवित्र-पति- यज्ञो वै पवित्रपतिः। मै ३, ६, ३; काठ २३, १; क ३५, ७।

पशु-
१. अक्षणया पशवो ऽङ्गानि प्रहरन्ति। तैसं ५, ३, ५, ३।
२. अग्निं खलु वै पशवो ऽनूपतिष्ठन्ते। तैसं ५, ७, ९, २।
३. अग्निमुखान् वै प्रजापतिः पशूनसृजत। मै ३, ३, १०।
४. अत्रो (पुरोडाशे) सा सम्पद् यदाहुः पाङ्क्तः पशुरिति। यदा पिष्टान्यथ लोमानि भवन्ति। यदाप आनयत्यथ त्वग्भवति, यदा संयौत्यथ मा ऽ सं भवति,''' यदाश्रृतो ऽथास्थि भवति, यदुद्वासयिष्यन्नभिवारयति तं मज्जानं दधाति। माश १, २, ३, ७-८।
५. अथ यत्स्रुचि परिशिनष्टि ते पशवः। माश २, ३, २, १६।
६. अथाहवनीयमुपतिष्ठते। श ऽस्य पशून्मे पाहीति पशूना ऽ हैष ईष्टे। माश २, ४,१, ५।
७. अथेतरेषां पशूनामशनापिपासे एवाभिविज्ञानं, न विज्ञातं वदन्ति, न विज्ञातं पश्यन्ति, न विदुः श्वस्तनं न लोकालोकौ, त एतावन्तो भवन्ति यथाप्रज्ञं हि संभवाः। ऐआ २,३,२।
८. अथैतत्पशुं घ्नन्ति यत्संज्ञपयन्ति। माश ३, ८, २, ४।
९. अथैतदुक्थ्यपात्रं पुनः प्रयुज्यत आरण्यान् वा एतत् पशून् प्रति। मै ४, ८, ८।
१०. अथो पशवो वै त्वाष्ट्र्यः। तद्यदेतानि (त्वाष्ट्री-) सामानि भवन्ति पशूनामेवावरुद्ध्यै। जै ३, १९।
११. अघ्नयो वा एष ओषधिभ्य आलभ्यते यत् पशुः। क ४१, ६।
१२. अघ्नयो ह्येष ओषधीभ्यः सम्भवति यत् पशुः। तैसं ६, ३, ६, ४।
१३. अनाभो मृड, धूर्ते नमस्ते अस्तु, रुद्र मृड। इत्येता वै रुद्रस्य तन्वः क्रूरा एतानि नामान्येताभिर्वा एष (रुद्रः) पशूञ्शमायते। मै १, ८, ५।
१४. अन्तराग्नी (आहवनीयगार्हपत्ययोः) पशूनाम् (आयतनम्)। तैसं १, ६, ७, १।
१५. अन्तरिक्षदेवत्याः खलु वै पशवः। तै ३, २, १, ३।
१६. अन्नमु पशोर्मा ऽ सम्। माश ७, ५, २, ४२।
१७. अन्नमु वै पशवः। जै ३, १४१।

१८. अपशवो वा एते यदजावयश्चारण्याश्च। एते वै सर्व्वे पशवः यद्गव्या इति। तै ३, ९, ९, २;१,३।

१९. अबध्नन् पुरुषं पशुम् ( देवाः )। काठसंक १०१ : ११।

२०. अष्टाशफाः पशवः। काठ २०,४; जै २,३११;३,२४२;२४८; तां १५,१,८ (तु. जै १,२६)।

२१. असन्नाः पशवस्सदर्दि प्रजायन्ते··· , सद्यो जाताः पशवः प्रतितिष्ठन्ति। काठ २७, २।

२२. असै वै लोकाय ग्राम्याः पशव आलभ्यन्ते। अमुष्मा आरण्याः। तै ३, ९, ३, १।

२३. आग्नेयाः सर्वे पशव उच्यन्ते। काठ २६, ७; क ४१, ५।

२४. आरण्याः पशव एकरूपाः। जै १, ८९ (तु. तां ६, ८,८)।

२५. इन्द्रियं वै वीर्य ९ रसः पशवः। तां १३, ७, ४।

२६. इय ९ हि ( पृथिवी ) पशूना ९ योनिः। मै ३, ७, ७।

२७. ईजानस्यास्य पशवो भूया ९ सो भवन्ति। मै ४, २,७।

२८. ईश्वरा वै पयस्या ऋते पशोरशान्ता निर्मृजः, पशुरप्यालभ्यः शान्त्या अनिर्मार्गायैते वै पशवो यद् व्रीहयश्च यवाश्च। मै २, ३, १।

२९. ··· ईश्वरो यजमानस्य पशून् अभिमन्तोः। जै २, २५४।

३०. उभये ह्येते ( ऋतवः पशवश्च ) सहासृज्यन्त। मै १, ८, २।

३१. ऊर्ध्वज्ञवो हि पशवः। मै १,१०,९ (तु. काठ ३६, ४)।

३२. एकवि ९ शत्यास्तुवतैकशफमसृज्यत, वरुणो ऽधिपतिरासीत्। मै २, ८, ६ (तु. तैसं ४, ३, १०,२)।

३३. एतद्वै पशूनां रूपं यद् घृतम्। काठ २८,४।

३४. एतद्वै पशूनां प्रियं (भूयिष्ठ ९ [तां]) रूपं यद् रोहितम्। जै २, १८२; तां १६, ६, २।

३५ एतान्पञ्च पशूनपश्यत् ( अग्निः )। पुरुषमश्वं गामविमजं यदपश्यत्तस्मादेते पशवः। माश ६, २, १, २।

३६. एताभिः ( एकोनविंशतिभी रात्रिभिः ) वायुरारण्यानां पशूनामाधिपत्यमाश्नुत। तां २३, १३, २।

३७. एतावन्तो ( पुरुषः, अश्वः, गौः, अविः, अजः ) वै ग्राम्याः पशवः। तैसं २, १, १, ५; काठ १३, १ (तु० मै १,८,३)।

३८. एतावन्तो वै पशवो द्विपादश्च चतुष्पादश्च। तैसं ५, २, ५, ३;९, ४,५; काठ २०, ३;८।

३९. एता ( विश्वकर्मा, प्रजापतिः, रुद्रः, वरुणः, अग्निः ) वै देवता एतेषां ( पुरुषाश्वर्षभवृष्णि-बस्तानाम् ) पशूनामधिपतयः। तैसं ५, ५, ५, १।

४०. एता वै दैवीर्विशो यत् पशवः। मै ३,९,६।

४१. एते वै पशवो यद् व्रीहयश्च यवाश्च (+ यद् व्रीहिमयः पुरोडाशो भवति, तेनैव पशुरालभ्यते शान्त्या अनिर्मार्गाय [मै ४, ३, ६])। मै १, ६, ११; २, ३, १;४,३,६।

४२. एवमेव हि पशुर्लोम, चर्म, मा ९ समस्थि, मज्जा। काठ १३, १०।

४३. एवा हीन्द्रा इत्यश्व्याः पशवः। जै ३, १०९।

४४. एष वाव सुवीरो यस्य पशवः । तां १३, १, ४ ।

४५. एषा ह वा अग्रे पशूनां त्वगास या पुरुषस्य ( अस्ति ), या पशूनां ( अस्ति ) सा पुरुषस्य (आस)। जै २, १८२ ।

४६. ऐन्द्रा वै पशवा इन्द्रः पशूनां प्रजनयिता । मै २, ५, ३ ।

४७. ओषधयः पशवः । मै २, ५, १ ।

४८. ओषधीरनु पशवः । ( प्रतितिष्ठन्ति ), पशूननु मनुष्याः । मै ३, १, ५ ।

४९. कतमो यज्ञ इति पशवः इति । माश ११, ६, ३, ९ ।

५०. क्षत्रिय उ वै पशूनां प्रदाता । जै १, ३५० ।

५१. गृहा हि पशवः । माश १, ८, २, १४ ।

५२. ग्राम्याः पशव आविरिव, शान्ता इव, ··· आरण्याः पशवो गुहेव निलायमिव प्रलायमिव चरन्ति । काठ २९, ८ ।

५३. ग्राम्याः पशवस्सायमरण्याद् ग्राममायान्ति ( °यन्ति [क, काठ ३०,१०]) । काठ १९, ११; ३०,१०; क ३१,१; ४६,८ ।

५४. ग्राम्या वै पशव आरण्येभ्यः पशुभ्यः श्रेयांसः । जै २, ३२ ।

५५. चक्षुरेव ( सः ) पशूनामादत्त । तस्मादेते चाकश्यमाना इवैव न जानन्त्यथ यदैवोपजिघ्रन्त्यथ जानन्ति । माश ११, ८, ३, १० ।

५६. चतुष्पादः पशव ऋतूनुपजीवन्ति । तैसं ६, ५, ३, २ ।

५७. चतुष्पादा वै पशवो ये च ग्राम्या ये चारण्याः । जै १, २६ (तु. जै २, २००; ३६७; ३८२; ३,८६) ।

५८. चतुःस्तनां करोति पशूनां दोहाय । तैसं ५, १,६, ४ ।

५९. चित्ररूपा वै पशवः । जै ३, १०१ ।

६०. त ऽ एते सर्वे पशवो यदग्निः । माश ६, २, १, १२ ।

६१. तथा हैनममुष्मिंल्लोके पशवो नादन्ति, अदन्ति ह वा अमुष्मिंल्लोके पशवः पुरुषं तस्मादु ह गोरन्ते नग्नो न स्यादीश्वरो हास्मादपक्रमितोस्त्वचमस्य बिभर्मीति ये वा अस्मिंल्लोके-ऽग्निहोत्रमजुह्वतो नैवंविदः पशूनाक्रन्दयतः पचन्ते तान् वा अमुष्मिंल्लोके पशवः पुरुषरूपं कृत्वा प्रत्यदन्ति । ··· स य एवं विद्वानग्निहोत्रं जुहोति नैनममुष्मिंल्लोके वनस्पतयः पुरुषरूपं कृत्वा प्रत्यदन्ति, न पशवो न व्रीहियवाः ··· । जै १, ४३-४४ ।

६२. तदस्य ( यजमानस्य ) संवत्सरान्तर्हितो रुद्रः पशून् न हिनस्ति । मै १, ६, ११ ।

६३. तदुभयतः प्रजां पशून् परिगृह्णीते ऽपरावापाय । नास्य वित्तं परोप्यते य एवं वेद । जै २, २९६ ।

६४. तदेतत् पशूनामुत्सृष्टिः साम ( यन्मैधातिथम् ) । जै ३, २३६ ।

६५. तद्यथा ह वा अस्मिँल्लोके मनुष्याः पशूनश्नन्ति यथैभिर् भुञ्जत एवमेवामुष्मिँल्लोके पशवो मनुष्यानश्नन्ति, एवमेभिर्भुञ्जते । स एनानिह प्रातरनुवाकेनावरुन्धे, तमिहावरुद्धा ( पशवः ) अमुष्मिँल्लोके नाश्नन्ति नैनेन प्रतिभुञ्जते । यथैवैनानस्मिँल्लोकेऽदनाति

यथैभिर्भुङ्क्त एवमेवैनान् (पशून्) अमुष्मिँल्लोकेऽश्नाति, एवमेभिर्भुङ्क्ते। कौ ११,३।

६६. तद् यद् गायत्री च त्रिष्टुप् चाभितो भवतो मध्ये पशवो जगती, वीर्यवद्भ्यामेवैतच्छन्दोभ्यां यजमानायोभयतः पशून् परिगृह्णन्त्यपरावापाय। नास्य वित्तं परोप्यते य एवं वेद। जै २, २४८।

६७. तद् ये (+ह वा [जै २, २७५]) ऽयुज स्तोमास्तान् ग्राम्याः पशवोऽन्वथ ये युग्मन्तस्तानारण्याः। जै २,२७५; ३, १८१।

६८. तनुरिव ह वा एष योऽपशुः। पशुभिर्हि वै पुरुषस्तीव्रो बहुलः। जै २, १५१।

६९. तं (पशुम्) देवा अब्रुवन्नहि स्वर्गं वै त्वां लोकं गमयिष्यामः। ऐ २, ६।

७०. तयैव (पष्ठौह्या) सर्वान् पशूनवरुन्द्धे। काठ ११,२।

७१. तस्माज्जातं पुत्रं पशवोऽभिहिङ्कुर्वन्ति। तां १२,१०,१४।

७२. तस्मात् पशोर्जायमानादापः पुरस्ताद्यन्ति। तै २, २,९,३।

७३. तस्मादद्यमानाः पच्यमानाः पशवो न क्षीयन्ते। माश ७,५,२,२।

७४. तस्मादश्वः पशूनां यशस्वितमः। तै ३, ८,७,२; माश १३,१,२,८।

७५. तस्मादसंश्लिष्टाः पशवः। तां १३, ४,६।

७६. तस्मादाहुः प्राणाः पशवः। माश ७,५, २,६।

७७. तस्मादुपक्षुद्राः पशवः। तां १३, ४,५।

७८. तस्मादुभयतः प्राणाः पशवः। तां ७, ३,२८।

७९. तस्माद् द्व्योपशाः (द्विश्शृङ्गाः) पशवः। तां १३,४,३।

८०. तस्माद्यदा वर्षत्यथ पशवः प्रतितिष्ठन्ति। माश ८, २,३, ८।

८१. तस्माद्यस्य पशवो भवन्त्यपैव स पाप्मानꣳ हते। माश ८,२,३,१४।

८२. ते (देवाः) ऽकामयन्त पशवो नः स्युरिति, सिꣳहीरसि रायस्पोषवनिः स्वाहेति, तमेव तेन काममाश्नुवत। मै ३, ८,५।

८३. ते त्रिणवमेवायतनमभ्यायꣳस्ते स्वरायꣳस्तꣳसेतुं कृत्वा, तत्पशवोऽसृज्यन्त। काठ ९,११।

८४. ते (पशवः) ऽब्रुवन्वायुर्वा अस्माकमीशे। जैउ १,१६, ३,४।

८५. ते (पशवः) रेवतीमुपातिष्ठन्त, रेवत्यां प्राजायन्त, रेवत्यां भूमानमगच्छꣳस्तस्माद्यत्किंच पशूनां कुर्वीत तद्रेवत्यां कुर्वीत। मै ४, २,९।

८६. ते वायुश्च पशवश्चाब्रुवन्निरुक्तं साम्नो वृणीमहे पशव्यमिति। जैउ १, १६,३,४।

८७. तेषु (पशुषु) एतम् (अग्निं प्रजापतिः) अपश्यत्तस्माद्वेवैते पशवः। माश ६, २, १, ४।

८८. त्रयः पशुषु भोगाः प्रातर्मध्यन्दिने सायम्। जै १, ११६।

८९. त्रयः पशूनांꣳ हस्तादानाः पुरुषो हस्ती मर्कटः। तैसं ६,४,५,७-८।

९०. त्रयोविꣳशत्यास्तुवत, क्षुद्राः पशवोऽसृज्यन्त, पूषाऽधिपतिरासीत्। तैसं ४,३,१०,२; मै २,८,६।

९१. त्रयो ह त्वाव पशवोऽमेध्याः। दुर्वराह ऐडकः श्वा। माश १२,४,१,४; (तु. जै १,५१)।

९२. त्रिरह्नः पशवः प्रेरते प्रातः संगवे सायम् । तै १,४,९,२ ।
९३. त्रिवृद्धै पशुः पिता माता पुत्रो ऽथो गर्भं उल्बं जरायु । माश ८, ६, २, २ ।
९४. दधि मधु घृतमापो धाना भवन्त्येतद्वै पशूना ँ रूपम् । तैसं २, ३, २, ८ ।
९५. दश वै पशोर्देवता दशास्मिन् प्राणाः, प्राणाः खलु वै पशोर्देवताः । मै ३, ९, ८ ।
९६. देवस्याहं नराश ँ सस्य देवयज्यया पशुमान् भूयासम् । काठ ५, ३ (तु. तैसं १,६,४,१) ।
९७. दैवीर्वा (°व्यो वा [माश.]) एता विशो यत् पशवः । काठ २६,७; क ४१,५; माश ३,७,३,९ ।
९८. द्वया उ ह वै पशवो राथन्तरा अन्ये बार्हता अन्ये । ये ह वा अन्यतोदन्ताः पशवस्ते राथन्तरा य उभयतोदन्तास्ते बार्हताः । जै २, ८४;११४ ।
९९. द्विपादश्चतुष्पदः पशूनुपजीवन्ति । तैसं ६, ५, ३, ३ ।
१००. द्व्यक्षरं लोम, द्व्यक्षरं चर्म, द्व्यक्षरं मा ँ सं द्व्यक्षरमस्थि, द्व्यक्षरो मज्जा । तद्दश। दशाक्षरा ( दशाक्षरं [काठ.] ) विराट् । तस्माद् वैराजाः पशव उच्यन्ते । काठ २१,४; क ३१, १९ ।
१०१. न वा अनूषरिहः पशवो रेतो दधते । मै १, ६, ३ ।
१०२. न ह वा अनृषभाः पशवः प्रजायन्ते । तां १३, ५, १८; १०, ११; १५, ३, १७ ।
१०३. नानामनसः खलु वै पशवो नानाव्रतास्ते ऽप एवाभि समनसः । तैसं ५, ३, १, ३ ।
१०४. नानारूपाः ( °पा ग्राम्याः [तां] ) पशवः । काठ ३६, २; तां ६,८,१२ ।
१०५. पञ्चवि ँ शत्या ऽस्तुवता ऽऽरण्याः पशवो ऽसृज्यन्त वायुरधिपतिरासीत् । तैसं ४, ३, १०,२; मै २, ८, ६ ।
१०६. परमो वा अश्वः पशूनाम् । जै ३, २४० ।
१०७. पशव आदित्यः ( ओषधयः [काठ., क ४१,१]) । काठ ३२,६; क ४१, ११; ४४, ६ ।
१०८. पशव इडवद्वामदेव्यम् । जै ३, १५३ ।
१०९. पशवः खलु वै ब्राह्मणस्य सभा । तैसं १, ७, ६, ७-८ ।
११०. पशवः परिमादः (पुरीषम् [माश ८, ७, ४, १२]) । माश ८, ७,४,१२;१०,१,२,८ ।
१११. पशवः पूर्वार्धेन च जघनार्धेन च भूयिष्ठं भुञ्जन्ति वहन्ति । जै २, ११४ ।
११२. पशवः पूषा । मै १, ५, १४; १०,५; २,१,५; काठ ११, ५; २३, २; क ४८, १८; ऐ २, २४; तां २३, १६, ५ ।
११३. पशवः पृष्ठ्यानि ( पृष्ठानि [जै.] ) । कौ २१, ५; जै ३,३३७ ।
११४. पशवः प्रगाथः । ऐ ३, १९; २३; २४; ६, २४; गो २, ३, २१; २२; ४, २ ।
११५. पशवः प्रजननम् (शिपिः [तै.]) । जै २,१०८; तै १,३,८,५ ।
११६. पशवश्छन्दस्याः । काठ २०, ९ ।
११७. पशवः शक्वर्यः (री [ काठ., तां १९,७, ६] ) । काठ ११, २; जै १, २०४; ३, ८४; ९२; तां १३, १,३;१९,७,६ ।
११८. पशवः शैशिर ऋतौ ज्युरभ्यामृच्छन्ति । जै ३, ३६३ ।
११९. पशवस्तृतीयसवनम् । तैसं ३,२,९,४ ।
१२०. पशवः सदोविशीयम् (ब्रह्मसाम) । तां १८,४,९ ।

१२१. पशवः समन्तम् ( सहस्रम् [तां.] ) । जै ३, १८६; तां १६,१०,१२ ।
१२२. पशवः सोमो राजा । तै १, ४,७,६ ।
१२३. पशवः स्वरः (स्वरसामानः [जै.]) । जै २, ८; गो २, ३, २२; ४, २ ।
१२४. पशवः स्वर्गो लोकः । जै २, १०९ ।
१२५. पशवा इडा । मै ३, ४, ४ ।
१२६. पशवो ऽच्छावाकसाम । जै १, ३०९ ।
१२७. पशवो जगती यत्क्षुद्रं पशूनां तज्जागतम् । । जै २, २७३ ।
१२८. पशवो दशमासो गर्भान् बिभ्रति । त एकादशमनुप्रजायन्ते । न काचन द्वादशमतिहरति । जै १, ६७ ।
१२९. पशवो द्विहिंकारं वामदेव्यम् । जै ३, २; १३२ ।
१३०. पशवो द्वौ द्वौ जनयन्ति । जै १, ६७ ।
१३१. पशवो नानारूपान् जनयन्त्युत श्वेता कृष्णं जनयत्युत कृष्णा श्वेतम् , उत रोहिणी कल्माषमुत कल्माषी रोहितम् । जै ३, २०६ ।
१३२. पशवो ऽक्षाद्यं यज्ञायज्ञीयम् ( साम ) । तां १५, ९, १२ ।
१३३. पशवो बृहती (बर्हिः [माश.]) । जै १, २०४; कौ १७, २; २९, ३; माश १२, ९, १, ११; ष ३, १० ।
१३४. पशवो भूयो हविष्करणम् । तैसं २, ६, ७, ६ ।
१३५. पशवो मध्यमा चितिः । मै ३, २, ९ ।
१३६. पशवो मरुतः ( रेवतयः [जै.] ) । मै ३, ३, १०; काठ २१, १०; जै ३, १३१; २१३; २५० ।
१३७. पशवो ऽयं ( पृथिवी- ) लोकः । जै १, ३०७ ।
१३८. पशवो यज्ञः । जै २, २००; ४३१; माश ३, २, ३, ११ ।
१३९. पशवो यशः । गो २, ५, ६; माश ५, ४, ३, २; १२, ८, ३, १ ।
१४०. पशवो रैवतम् [रथन्तरम् [जै ३, २९५] ( साम )] । जै ३,१५३;२९५ ।
१४१. पशवो वज्रेण विधृताः । काठ २०, ४ ।
१४२. पशवो वरिवः (लोमशाः [तैसं ५, १, ८, ४]) । तैसं ५, ४, ५,३; मै ३,३, ६; काठ २१,७ ।
१४३. पशवो वसु । माश ३, ७, ३, ११; १३ ।
१४४. पशवो वा ऽअन्नम् । माश ४, ६, ९, १ ।
१४५. पशवो वा आजिदोहानि । जै २,२५५ ।
१४६. पशवो वा इळा तस्माद् य एव पशुमान् भवति तं मनुष्या उपसमायन्ति । जै ३,३११ ।
१४७. पशवो वा इळानां संक्षारः । जै २, ११२ ।
१४८. पशवो वा एता इष्टकाः । मै ३, २, १० ।
१४९. पशवो वा एते यद् आदित्यः ( ग्रहः ) । तैसं ३, ५, ५, २; ६,५, ६, ४ ।
१५०. पशवो वालखिल्याः । तां २०, ९, २ ।
१५१. पशवो विराट् । जै २, १११ ।

१५२. पशवो वै चतुरुत्तराणि छन्दा ऽ सि । तां ४,४,६ ।
१५३. पशवो वै छन्दस्याः ( इष्टकाः ) । तैसं ५, २, १०, २ ।
१५४. पशवो वै देवानां प्रियास्तन्वः । मै १, ७, २ ।
१५५. पशवो वै पयः, पशूनां ऽ हि पयः । काठ २७, ४ ।
१५६. पशवो वै पुरीषम् (ध्रुवा [मै ४,१,१२]) मै ३,२,२; ४,१,१२; काठ २१,४;२५,४; क ३१, १९; माश १, २, ५,१७; ६, ३,१,२८; ७,५,१,९ ।
१५७. पशवो वै पूषा । मै १, ८, ५; ३, ३, ८; ४, ३, ७; ४, ३; ७; काठ ६, ८; २९, १; ९; क ४५, २; तां १८, १,१६; तै ३,८,११,२; माश ३, १, ४, ९;९,१,१०; ५,३,५,८;३५; १३,१,८,६ ।
१५८. पशवो वै पृषदाज्यम् । तैसं ३, २,६,२; मै १, १०,७;४, ८,९; काठ ३६,२; तै १,६,३,२ ।
१५९. पशवो वै प्रगाथः (प्रतिहर्त्ता [तां.]) । कौ १५, ४; १८, २; तां ६, ७, १५ ।
१६०. पशवो वै प्रयाजाः (बर्हिः [ऐ.]) । ऐ २, ४; कौ ३, ४ ।
१६१. पशवो वै बस्ताजिनम् (बृहद्रथन्तरे [तां.]) । मै १,११,८;३,४,२; काठ १४,८; तां ७,७,१ ।
१६२. पशवो वै बृहती । मै २, ३, ७; ३, २, ९; ४, ६, ९; काठ २८, ६; तां १६, १२, ९ ।
१६३. पशवो वै मधु क्षीरं दधि सर्पिरेतत् क्षरन्ति । जै ३, ८४ ।
१६४. पशवो वै मरुतः । मै ४, ६, ८; काठ ३६,१; ऐ ३, १९ (तु. मै १,१०,१५; काठ ३६,९) ।
१६५. पशवो वै महस्तस्माद्यस्यैते बहवो भवन्ति भूयिष्ठमस्य कुले महीयन्ते । माश ११,८, १,३ ।
१६६. पशवो वै महानाम्नयः (यज्ञायज्ञीयम् [जै ३,२८९;२९१]) । जै ३, ११४; २८९; २९१ ।
१६७. पशवो वै यज्ञस्य समृद्धम् । मै ३, ८, ४ ।
१६८. पशवो वै यण्वम् ( साम ) । तां १३, ३, ६ ।
१६९. पशवो वै यूपमुच्छ्रयन्ति । माश ३, ७, २, ४ ।
१७०. पशवो वै रयिः (रयिष्ठम् [तां.]) । तैसं १, ५, ७, २; जै १,२२६; तां १४,११,३१; तै १, ४,४,९ ।
१७१. पशवो वै रायः । काठ २६, ६; माश ३, ३, १, ८; ४, १, २, १५ ।
१७२. पशवो वै रायस्पोषः । तैसं ५, ४, ६, २; काठ ३२, ५; माश ३, ४, १, १३ ।
१७३. पशवो वै रेवतीः ( रेवती [काठ ११,२; काठसंक.]) । तैसं १,५,८,२; मै ३,९,६; काठ ७,७; ११,२; काठसंक १४० : ७ ।
१७४. पशवो वै रैवत्यः (°त्यो मधुप्रियम् [ तां १३, ७,३] ) तां १३,७,३; ९,२५;१०,११ ।
१७५. पशवो वै रौरवम् [लोम [तां.] ( साम )] । तां ७, ५, ८; १३, ११, ११ ।
१७६. पशवो वै वयस्याः ( इष्टकाः ) । तैसं ५, ३, १, ३; काठ २०, १०; क ३१, १२ ।
१७७. पशवो वै वया ऽ सि । माश ९, ३, ३, ७ ।
१७८. पशवो वै वसु । जै १, १४८; २, ११२; ३, ८४; २६५; तां ७, १०, १७; १३, ११, २ ।
१७९. पशवो वै वसुस्पार्हम् । जै ३, १४१ ।
१८०. पशवो वै वामदेव्यम् ( वाजिनम् [तै.]) । तैसं २, ६,७, २; जै १, ३३३; २, १९४; ३,१५; २६; ४९; २६१; तां ४, ८, १५; ७, ९, ९; ११, ४,८; १४, ९,२४; तै १,६,३,१० ।

१८१. पशवो वै वारवन्तीयम् ( साम )। जै २,१९५; तां ५,३, १२ ।
१८२. पशवो वै विराट् (वैश्वदेवम् [कौ.]) । मै १, ६,६; कौ १६, ३ ।
१८३. पशवो वै विरूपाः । पशवो वै रूपम् । जै ३, २०९ (तु. तां १४,९,८) ।
१८४. पशवो वै शक्विर्यो वै पशूनां भूयिष्ठभाग्भवति, स तच्छक्नोति यच्चिकीर्षति ! मै ४,२,९ ।
१८५. पशवो वै शक्वर्यः (शक्वरीः [तै.]) । तां १३,४,१३;५,१८; तै १,७,५,४ ।
१८६. पशवो वै शिपिविष्टम् (°ष्टाः [जै.]) । मै १,६,८; जै २,१९२ ।
१८७. पशवो वै शुक्रियम् (श्यैतम् [तां.]) । मै ३,७,२; तां ७,१०,१३ ।
१८८. पशवो वै श्रुद्धयं (साम) पशूनामवरुद्ध्यै । तां १५,५,३४ ।
१८९. पशवो वै समीषन्ती (विष्टुतिः) । तां ३,११,४ ।
१९०. पशवो वै सलिलम् (सप्तदशः [तां.]) । मै १,४,९, काठ ३२,६; तां १९, १०,७ ।
१९१. पशवो वै सिमाः (सविता [माश.]) । जै ३,१२१;१५३; २५०; माश ३,२, ३,११ ।
१९२. पशवो वै सुरूपं (साम) पशूनामवरुद्ध्यै । तां १४,११,११ ।
१९३. पशवो वै सूक्तम् (स्वरः [ऐ.]) । ऐ ३, २४; जै ३.१७५;२४१ ।
१९४. पशवो वै हरिश्रियः (हविष्पङ्क्तिः [कौ.)] । कौ १३,२; तां १५,३,१० ।
१९५. पशवो ह खलु वै विदन्वन्तः । जै ३,१६० ।
१९६. पशवो ह खलु वै हविष्मन्तः, पशवो हविष्कृतः । जै ३, २८ (तु. माश १,४,१,९) ।
१९७. पशवो हि पूषा (तृतीयसवनम् [तैसं.]) । तैसं ६, १,९,२; माश ५,२,५,८ ।
१९८. पशवो हि यज्ञः (महानाम्नयः [जै.]) । जै ३,९१; माश ३,१, ४,९ ।
१९९. पशवो हि सोम इति । माश १२,७,२,२ ।
२००. पशवो ह्यन्नम् (°वोऽह्वयः [जै.]) । जै १, ९३; माश ३,२,१,१२ ।
२०१. पशुः पुरोडाशः । काठ १२,१ ।
२०२ पशुभिः पुच्छम् (अचिनुत) । तैसं ५, ६,१०,१; मै ३, ४, ८ ।
२०३. पशुभिरिति वैश्यस्य (ब्रूयात् ) । तैआ ५,३,८ ।
२०४. पशुर्वाऽअन्नम् । माश ५,१,३,७ ।
२०५. पशुर्वै पूरुषः ( मेधः [ऐ.], यज्ञः [काठ ३०,९]) ! काठ १२, १; ३०,९; ऐ २,६ ।
२०६. पशुर्वै प्रत्यक्ष ५ सोमः । माश ५,१,३,७ ।
२०७. पशुषु (वाचः) तुरीयम् । काठ १४,५ ।
२०८ पशू ५ स्ता ५ श्चक्रे वायव्यान् । आरण्यान् , ग्राम्याश्च ये । तैआ ३,१२,४ ।
२०९. पशूना ५ रोहित ५ रूपम् । मै ३,७,४ ।
२१०. पशूना ५ सप्तकपालो भवति । काठ ३६,१ ।
२११. पशूनां गुप्त्यै, पशूनामपरावापाय । नास्य वित्तं परोप्यते य एवं वेद । जै २,१११ ।
२१२. पशूनेव प्रथमस्य तृचस्य प्रथमया स्तोत्रियया जयति, भूमिं द्वितीयया, अग्निं तृतीयया । जै १, २४५ ।
२१३. पशूनेव सहान्तरिक्षेणोपह्वयते । तैसं २,६,७,२ ।
२१४. पशून् बृहता (प्राप) । मै ४, २,२ ।

२१५. पशून् मह्यमित्यब्रवीत् (इन्द्रम्) रायोवाजस्तस्मा एतेन रायोवाजीयेन (साम्ना) पशून् प्रायच्छत् पशुकाम एतेन स्तुवीत पशुमान् भवति। तां १३, ४, १७।
२१६. पशून् मे शंस्य पाहि। मै १,५,१४।
२१७. पशून् यज्ञः (अनु प्रतितिष्ठति)। तैसं ५,१,३,१।
२१८. पशोः पाशं प्रमुञ्चत। काठ ३०,८।
२१९. पशोः पाशान् पशुपतेरधि। मैसं १,२,१५।
२२०. पश्चाद् वर्षीयान् पुरस्तात् प्रवणः पशुः। तैसं २,३, १,५।
२२१. पुरस्तात् प्रत्यञ्चः पशवो मेधमुपतिष्ठन्ते। तैसं ५,२, ८,७।
२२२. पुरुष उपरिष्टात्पशूनधीव तिष्ठति। जै ३, १६६।
२२३. पुरुष उभयीं वाचं वदति या च राथन्तरी या च बार्हती। ते ये राथन्तराः पशवो राथन्तरीमस्य (पुरुषस्य) ते वाचं पश्यन्त उपतिष्ठन्ते, ये बार्हता बार्हतीं ते। जै १, २९५।
२२४. पुरुषः पशूनामधिपतिः। तैसं ५,३,१,६; काठ २०,१०; क ३१,१२ (तु. तां ६,२,७)।
२२५. पुरुषो वै पशुः। जै २, ४२।
२२६. पुष्टिः पशवः। माश ३, १, ४, ९।
२२७. पूषा पशुभिः (अवति)। तै १, ७, ६, ६; ३, १, ५, १२।
२२८. पूषा पशूनां प्रजनयिता। तैसं २, ४, ४, ३; मैं २, १, ४; २,४,५,१ (तु. मै ४,३,७)।
२२९. पूषा वै पशूनामीष्टे। माश १३, ३, ८, २।
२३०. पृतनाषाडसि पशुभ्यस्त्वा (+प्रजा एव पशूननु संतनोति [तैसं ३, ५, २, ४])। तैसं ३,५, २,४;४,४,१, २; काठ १७, ७; ३७, १७।
२३१. पृतनाषाडिति पशून् (असृजत)। तैसं ५, ३, ६, १।
२३२. पृष्ठानि वै पशवः। जै २, ८४।
२३३. पौष्णाः पशवः। तैसं १, ५, १, ३; २, १,४,३;२,१०,३; माश ५,२,५,६।
२३४. पौष्णा वै देवतया पशवः। तैआ ५, ७, २।
२३५. प्रजापतिः पशूनां योनिः (प्रदाता [काठ १०,११])। काठ १०,११;११, २।
२३६ प्रजापतिः पशून् सृष्ट्वा तेषां पूषणमधिपामकरोत्। काठ १०, ११।
२३७. प्रजा पशवः सूक्तम्। कौ १४, ४।
२३८. प्रजा वै पशवः पुरीषम् (स्वर्गो लोकः [जै.])। तैसं २,६,४,३; जै २, १०९ (तु. तै ३,२,८, ९; ९,१२)।
२३९. प्रतिहारमारण्येभ्यः पशुभ्यः (प्रजापतिः प्रायच्छत्)। जैउ १, ३, १, ९।
२४०. प्राङ् पशुः पश्यति (प्राणिति)। काठ २०, ९[२]।
२४१. प्राणाः पशवः। तैसं ५, २, ६, ३; तै ३, २, ८, ९।
२४२. प्राणो वै पशुः। काश ४, ८, ४, ३; माश ३,८,४,५।
२४३. प्रातः पशुमालभन्ते तस्य वपया प्रचरन्ति। तां ५, १०, ९ (तु. माश ३,७,२,४)।
२४४. बहुरूपा हि पशवः। तैसं २, ३, २,८।
२४५. बार्हताः पशवः। तैसं २, ५,१०,३;५,३,२,३; मैं ३, ५, १; काठ ३४,१२; क ३१, १२; ऐ ४,३;५,६; कौ २३,१;२९,३; तै १, ४,५,५; माश १३,४,३,१५।

२४६. बृहद्रथन्तरे वा असृज्येताम् । तदनु पशवो ऽसृज्यन्त । जै १, २९४ ।

२४७. ब्रह्मणैव तदुभयतः पशून् परिगृह्णीते ऽपरावापाय । नास्य वित्तं परोप्यते य एवं वेद । जै २,३२१ ।

२४८. भूतमसि भव्यं नाम (+ पितॄणामाधिपत्ये ऽपामोषधीनां गर्भं धाः [तैसं ३,३,५,१] ) इत्याह पशवो वा अपामोषधीनां गर्भः पशूनेवावरुन्धे । तैसं ३, ३, ५,१; ३;४ ।

२४९. भूमा वै पशवः । जै ३, २४१ ।

२५०. मनुष्यानतु पशवः । माश १, ५, २, ४ ।

२५१. मन्युः पशुः (संन्यासिनो यज्ञस्य) । तैआ १०, ६४,१ ।

२५२. महादेवः ··· पशून् शमयेत् । जै १,३०१ ।

२५३. मेदोरूपा हि पशवः, सर्वाणि वै पशोर्मेद्यतो ऽङ्गानि मेद्यन्ति । मै ३,१०,३ ( तु. तैसं ६, ३,११,१) ।

२५४. य आरण्याः पशवो विश्वरूपा विरूपाः सन्तो बहुधैकरूपाः । वायुस्ताँ अग्रे प्र मुमोक्तु देवः प्रजापतिः प्रजया संविदानः । तैसं ३, १, ४, २; तैआ ३, ११,१२ (तु. काठ ३०,८) ।

२५५. य एवं विद्वान्वारवन्तीयं गायते पशूनेव वारयते । मै १, ६, ७ ।

२५६. यजमानः पशुः । तैसं ६, ३, ५, १; तै २, १, ५, २;२, ८,२ ।

२५७. यजमानः पशुभिर्ध्रुवः । काठ ३५, ७; क ४८, ९ ।

२५८. यजमानो वा एष निदानेन यत् पशुः । ऐ २, ११ ।

२५९. यज्ञो वै पशूनामायतनम् । मै ४, २, ४ ।

२६०. यण्वसन्तनि पुरस्ताद् भवति, सन्तन्युपरिष्टात्, पशूनामेव परिगृहीत्यै । जै ३, ९२ ।

२६१. यत् क्षुद्रं पशूनां तज्जागतम् । जै २, १७३ ।

२६२. यत् क्षोदिष्ठं तच् शिपिविष्टं, तदाप्नोति, पशून् एव । मै २, २, १३ ।

२६३. यत्पशु ९ संज्ञपयन्ति विशासति तत्तं घ्नन्ति । माश २, २, २, १; ११, १,२, १ ।

२६४. यत्र पशवस्तद्देवाः । मै ४, २, ६ ।

२६५. यथा ह वा इम आरण्याः पशवो मृगा एवमेते ऽग्र एकशफाः पशव आसुः । तानेतैरेव रौहिणकस्य ( साम्नः ) किट्किटाकारैर्ग्राममुपानयत् ( प्रजापतिः ) । जै २, १४ ।

२६६ यद्वै यज्ञस्यातिरिच्यते, यः पशोर्भूमा, या पुष्टिस्तद् विष्णुः शिपिविष्टः । तैसं ३,४,१,४ ।

२६७. यन्मनोताया अन्वाह, पुनरेवैन ९ ( मृतं पशुम् ) सम्भावयति । मै ३, १०, २ ।

२६८. यश इति पशुषु । तैआ ९, १०, ३; तैउ ३, १०, ३ ।

२६९. या ९ ( रात्रिम् ) श्वःसुत्यया ( दीक्षितो वसति ), पशू ९ स्तया ( अवरुन्द्धे ) । मै ३,६,३ ।

२७०. यासामिन्द्र उदाजत वसु नाम रूपं पशूनामुषसं धाम पश्यमानः···, यासां बृहस्पतिरुदाजतेडा नाम रूपं पशूना ९ संगवं धाम पश्यमानः ···, यासां मरुत उदाजन्त ज्योतिर्नामरूपं पशूनां मध्यन्दिनं धाम पश्यमानाः ···, यासां प्रजापतिरुदाजतायुर्नाम रूपं पशूनामपराह्णं धाम पश्यमानः । तासामयं योनिरयं गोष्ठ इह रयिः पुष्टिः । मै ४, २, ११ ।

२७१. ये ग्राम्याः पशवो विश्वरूपाः ··· अग्निस्ता ९ अग्रे प्रमुमोक्तु देवः । तैआ ३, ११, ११ ।

२७२. ये ग्राम्याः पशवो विश्वरूपाः ··· तेषा ९ सप्तानामिह रन्तिरस्तु । तैआ ३, ११,१२ ।

२७३. यैवारण्ये (सूर्मी कर्णकवती) तां विध्नेति, पशवो वा एतस्याः कर्णः, ··· एता ९ ह स वै देवा असुरेभ्यो वज्र ९ शतघ्नीमियद्भ्यस्त्वेत्यभ्यवसृजन्ति। काठ २१, ९।

२७४. यो वै पशूनां भूमानं गच्छति स स्वाराज्यं गच्छति। तां २४, ६, ३।

२७५. रुद्र ९ हि नाति पशवः। माश ३, २, ४, २०।

२७६. रुद्रः (एवैनम् ) पशूनाम् (राजानं सुवते)। तै १, ७, ४, १।

२७७. रुद्रः पशूनाम् (अधिपतिः)। तैसं ३, ४, ५, १ (तु. तै ३, ११, ४, २)।

२७८. रुद्रस्तां समां पशून् घातुको भवति। तां ७, ९, १८।

२७९. रुद्रो ऽस्य (यजमानस्य) पशूनभिमानुकः स्यात्। मै १, ६, ११।

२८०. रूपं पशवः। मै ४, ८, २।

२८१. रेवदस्योषधीभ्यस्त्वा···, ओषधीष्वेव पशून् प्रतिष्ठापयति। तैसं ३, ५, २, ४; ४, ४, १,१; काठ १७, ७।

२८२. रेवन्तो हि पशवस्तस्मादाह रेवती रमध्वम् इति। माश २,३,४,२६; ३,७, ३, १३।

२८३. रोहितरूपाः (°रूपं [काठ., क.] ) पशवो भूयिष्ठाः। काठ २४, २; क ३७, ३; काटसंक १४१ : ८।

२८४. रौद्रा वै पशवः। तैसं ५, १, २, ३; मै ३, १, ३;१०,४;५; क २९, ८; माश ६, ३,२,७।

२८५. वज्रेण पशवः परिगृहीताः। तैसं ५, २, ६, २।

२८६. वज्रो वै पशवः। मै ४, ४, १]। मै ४, ४, १; माश ६, ४, ४, ६; ८, २, ३, १४।

२८७. वत्सनिकान्ताः (+ हि [मै.] ) पशवः। मै १, ५, ९ काठ ७,७।

२८८. वपुर्हि पशवः। ऐ ५, ६।

२८९. वरुणो वै स तद् रात्रिर्भूत्वा पशूनग्रसत। मै १, ५, १२।

२९०. वर्ष्य उदके यजेतैतद्धि पशूनां नेदिष्ठम्। मै ४, ३, ३।

२९१. वाग्देवत्यं साम वाचो मनो देवता, मनसः पशवः, पशूनामोषधय ओषधीनामापः। तदेतदद्भ्यो जातं सामाऽप्सु प्रतिष्ठितमिति। जैउ १, १८, ४, १४।

२९२. वाचा पशवो नाम जानते, वाचा सिद्धा निवर्तन्ते। काठ ३४, १२।

२९३. वाचा पशून्दाधार तस्माद्वाचा सिद्धा वाचाहूता आयन्ति तस्मादु नाम जानते। तां १०, ३, १३।

२९४. वाचि वा एते चत्वारः पशवो गौरश्वो ऽज।विऽस्तस्माद्वाचा हूताः पशव उदायन्ति, वाचा सिद्धा आवर्तन्ते। काठ ३४, ७।

२९५. वाजो वै पशवः। ऐ ५, ८।

२९६. वानस्पत्याः खलु वै देवतया पशवः। तैसं ६, ३,११, ३-४।

२९७. वामं हि पशवः। ऐ ५, ६।

२९८. वायव स्थेति। वायुर्वा अन्तरिक्षस्याध्यक्षः। अन्तरिक्षदेवत्याः पशवः। वायुरेवैनान (पशून्) अन्तरिक्षाय परिददाति। क ४६,८।

२९९. वायवस्थेत्युपायवस्थेत्याह। यजमानायैव पशूनुपह्वयते। तै ३, २,१,४।

३००. वायुप्रणेत्रा वै पशवः । माश ४, ४, १, १५ ।
३०१. वायुरेवास्मै पशून् निनयति । मै २, ५, १ ।
३०२. वायुर्वा अन्तरिक्षस्याध्यक्षो ऽन्तरिक्षदेवत्याः पशवः । मै ४, १, १; काठ ३०, १० ।
३०३. वायुर्वै पशूनां प्रियं धाम । तैसं ५, ५, १, ३; काठ १९, ८ ।
३०४. वारवन्तीयेन ( साम्ना विष्णुः पशून् ) अवारयत । तै २, ७, १४, २ ।
३०५. वास्तव्यं कुर्याद् रुद्रो ऽस्य पशून् अभिमानुकः स्यात्… न वास्तव्यं करोत्यघातुको ऽस्य पशुपतिः पशून् भवति । मै १, ६, ४ ।
३०६. विपश्यन्ति पशवो जायमाना नानारूपा मातुरस्या उपस्थे । तैसं ४, ३, ११, ३; मै २, १३, १० ।
३०७. विश्व ऽ हि पशुभिर्विन्दते । तां १३, १, ७ ।
३०८. विश्वरूपं वै पशूना ऽ रूपम् । तां ५, ४, ६ ।
३०९. विश्वरूपो वै त्वाष्ट्रः पशूनभ्यवमत्, तस्मात्पशवो विश्वरूपाः । मै ३, १०, ३ ।
३१०. विषेण वै ता ऽ समामोषधयो ऽक्ता भवन्ति या ऽ समां महादेवः पशून् हन्ति यच्छ ऽ राजन्नोषधीभ्य इत्याहौषधीरेवास्मै स्वदयत्युभय्यो ऽस्मै स्वदिताः पच्यन्ते ऽकृष्टपच्याश्च कृष्टपच्याश्च । तां ६, ९, ९ ।
३११. विष्णवे शिपिविष्टाय…, यज्ञो वै विष्णुः, पशवः शिपिर्यज्ञ एव पशुषु प्रतितिष्ठति । तैसं २, ५, ५, २ ।
३१२. वीरा वै तदजायन्त यदङ्गिरसः । एत उ पशवो ऽसृज्यन्त । जै ३, २६४ ।
३१३. वैराजाः पशवः । मै ३, ७, ४; ४, २, ४ ।
३१४. शंस्य पशून्मे गोपाय । तै १, १, १०, ४ ।
३१५. शक्मने शाक्करायेति, पशू ऽ स्तेन गृह्णाति । मै ३, ७, १० ।
३१६. शाक्कराः (शान्तिः [तां.]) पशवः । तैसं ३,२,९,४; मै १,५,६; ४, २,११;५,१;७; काठ ११, २; काठसंक १६ : २-३; जै १,१३१; २.१४५, तां ४, ५, १८; ६, ११; ५, ३, १२ ।
३१७. शूद्रो वै ग्राम्येभ्यः पशुभ्यः श्रेयान् । जै २, ३२ ।
३१८. श्रीर्वै ( श्रीर्हि [माश.] ) पशवः । तां १३, २, २; माश १, ८, १,३६ ।
३१९. षड्वि ऽ शतिरस्य ( पशोः ) वङ्क्रयः । तै ३, ६, ६, ३ ।
३२०. षोडशकला वै पशवो यांश्च विद्म यांश्च न । जै २, १७३ ( तु. जै १, ३३२; तां ३,१२,२; १९, ६,२; माश १२, ८,३,१३;१३,३,६,५) ।
३२१. संवत्सरं पशवो ऽनुप्रजायन्ते । काठ २८, २; तां १८, ४,११ ।
३२२. स ( प्रजापतिः ) एतत् पौष्कलं सामापश्यत् तेनैषां ( पशूनाम् ) रूपाणि व्यकरोत् । ते नानारूपा अभवन् श्वेतो रोहितः कृष्णः । एकरूपा ह वाव ते ततः पुरासू रोहिता एव । जै १, १६० ।
३२३. संज्ञान ऽ ह्येतत् पशूनां यदूषाः । तैसं ५, २,३, २; तै १, १, ३, २ ।
३२४. सद्यो जाताः पशवः प्रतितिष्ठन्ति, संवत्सरे पुरुषाः ( पुरुषः [काठ., क.]) । मै ४, ५, ७; काठ २७,२; क ४२, २ ।

३२५. सप्त ग्राम्याः पशवः सप्तारण्याः । तैसं २, ४, ६,२; ६, १, ८, १; ७, २, २, १; माश ३, ८, ४, १६; ९, ५, २, ८ (तु. मै ३, ७, ६; ४, ८,८; काठ ३३. ८; जै ३,८६; तां २,७,८; १४, २; ३, ३,२; माश ९,३, १, २०) ।

३२६. सप्तदशभिरस्तुवत्त, पशवोऽसृज्यन्त, बृहस्पतिरधिपतिरासीत् । तैसं ४,३,१०,२; मै २,८,६।

३२७. सप्तदशेन (स्तोमेन) प्रजया पशुभिः प्रजननेन नैकविंशाय···ज्योतिरदधुः । जै १,६६ ।

३२८. सप्तप्राणाः, प्राणेभ्योऽधि पशवः प्रजायन्ते । काठ २०,४ ।

३२९. सप्तभिः सप्तभिः पशुकामस्य सप्त वै प्राणाः । प्राणेभ्यः पशवः प्रजायन्ते । क ३१,६ ।

३३०. सप्त वै ग्राम्याः पशवः (अजा ऽश्वो गौर्महिषी वराहो हस्त्यश्वतरी च)। ऐ २, १७; जै २, २७४ ।

३३१. स (प्रजापतिः) प्राणेभ्य एवाधि पशून्निरमिमीत । माश ७,५,२,६ ।

३३२. समावत् पशूनां प्रजायमानानामारण्याः पशवः कनीयाꣳसः, शुचा ह्यृताः । तै ५,१,४,३।

३३३. समुद्रात्पशवः प्रजायन्ते । काठ २०,४; क ३१,६ ;

३३४. सर्वदेवत्यः पशुः । काठ २६,८; क ४१,६

३३५. सर्वं पशुभिर्विन्दते । ता १३,१,३ ।

३३६. सर्वा एव देवताः पशवः । क ४१,५ ।

३३७. सर्वाभ्यो वा एष दिग्भ्य ऋद्ध्या आलभ्यते यत्पशुः । काठ २६,७ ।

३३८. सर्वासाꣳ हि देवतानाꣳ हविः पशुः । माश ३,८,३,१४ ।

३३९. स (अग्निः) वाव पशूनामीशे । जै ३,२२५ ।

३४०. स (पृथुर्वैन्यः) सर्वेषां पशूनां राज्यायासूयत । जै ३,२५ ।

३४१. साहस्राः पशवः । कौ २१,५ ।

३४२. सूर्यो वै पशूनां प्राणः । काठ २०,३ ।

३४३. सोम एवैष प्रत्यक्षं यत्पशुः । कौ १२,६ ।

३४४. स्तोमो हि पशुः । तां ५,१०,८ ।

३४५. स्वरिति पशून् (प्रजापतिरजनयत)। माश २,१,४,१३ ।

३४६. स्वर्ग्यो वै सर्वः पशुः । मै ३,१०,४ ।

३४७. स्वादिष्ठा वै देवेषु पशव आसन् मदिष्ठा असुरेषु । तां ८, ४, ६ ।

३४८. हविर्वाऽ एष देवानां यो दीक्षते तदेनमन्तर्जम्भऽ आदधाते तत् (अग्नीषोमीयेण) पशुनात्मानं निष्क्रीणाति । माश ३,३,४,२१ ।

३४९. हविर्हि पशवः । ऐ ५,६. ।

३५०. हस्तादाना अन्ये पशवो, मुखादाना अन्य इति,······मर्कटः पुरुषो हस्ती, ते हस्तादानाः,··· इतरे पशवो मुखादानाः । मै ४,५,७ ।

३५१. हिनस्ति खलु वै तं पशुर्य एनं पुरस्तात् प्रत्यञ्चमुपचरति, तस्मात् पश्चात् प्राङुपचर्य आत्मनोऽहिꣳसायै । तै ५,७,६,१ ।

[°शु– अक्षरपंक्ति– २; अग्नि– ४७; ११८; २०५; २५१; २५६; ३९८; ५२३; ५४३; ५५८; ५५९; ५६०; ५६१; ५७८; ७४४; अजा– ३१; अध्वर्यु– २४; अनुष्टुप्-छन्दस्– १;

अनुष्टुभ्- ४७; अन्तरिक्ष- ३०; ११७; अन्न- ८७; अन्नाद- ३; अन्नाद्य- ११; अप्- ६५; ९५; १५६; १७९; अर्यमन्- ११; अश्व- ६३; अहोरात्र- ४०; आग्नेय- १६; २२; २आज्य- १०; आत्मन्- १८; २६; ७१; आदित्य- १२०; १२९; २७५; आधीत- २; आशिर्-; आहवनीय- ८; ३७; इड्- ३; इडा- २; १७; इला- ३; इलान्द- ३; इन्द्र- ४८; इन्द्रिय- ४; इष्टका- ६; ईशान- ६; उक्थ- १३; १४; उत्तरवेदि- १३; उत्तरात् ६; उत्तरादायतन-; उपांश्वन्तर्याम- ३; ४; उष्णिह्- १३; ऊर्ज्- ३; ऊष- ७;८; ऋच्- ३६; ऋजीष- २; ऋषि- ५; ऐन्द्र- २७; ५०; ओषधि- १९; ३६; ६०; ६१; करम्भ- २, कल्याणी-; काम- १३; कामदुघ,घा- ७; ८; कालेय- ६; किङ्किटाकार- १; २; ३;४; कुलाय- २; गर्दभ- १६; गवाशिर्- २; गायत्र- १९; गायत्री- ८६; गार्हपत्य- ९; १६; गृह- ७; गोनामन्-; ग्रावन्- १२; घर्म- ७; घृत- ५; २५; घृतश्च्युत्-; चक्षुस्- ५; चतुरवत्त- २; चतुष्पद्-; चतुष्पद-; चतुष्पाद्- १; चतुष्पाद- २; छन्दस्- २२; ३६;५२;८२; छन्दोम- १८; जगती- १४; ३६; जागत- १०; जातवेदस्- ६; तार्ष्य- २; तृतीय- ३२; तृतीयसवन- ३३; तेजस्- २६; त्रयस्त्रिंश- १०; त्रिणव- ५; त्रिवृत्- १४; त्रैष्टुभ- १०; त्वष्टृ- ३;४;१३;१४;२१; त्वाष्ट्र- ९; दधि- १३; दिव्- ९२; √दीक्ष् १०; दूर्वेष्टका- १; देव- १४६;१६७; देवमनुष्य- १; द्यावापृथिवी- २२; द्युतान- २; धातृमुख-; धाना- ५; धुर्- ९; नमस् ३; नार्मेध- २; नियुत्- १; नियुत्वती- १; पञ्चहोतृ- ३;४;६; पद्- २; पदस्तोभ- २; पयस्- १४; ३१; परिष्कृत्-; पवमान- २१; पांक्त- ९; १२ द्र. ]।

**पशव्य,व्या-**

१. एषा वा अग्नेः पशव्या तनूर्या दधिक्रावती। काठ ७,४।

२. पशव्यो हि पाकयज्ञः। माश २,३,१,२१।

**पशु-काम-**

१. त्वाष्ट्रं वडबमालभेत पशुकामः। तै २,१,८,३।

२. दधिग्रहं गृह्णीयात् पशुकामस्य। तै ३,५,९,३।

३. पशुकामः खलु वै वैश्यो यजते, जगत्यैवास्मै पशून् गृह्णाति। तै २,५,१०,२।

४. प्रजाकामो वा पशुकामो वा सोमस्य लोके कुर्यात्। मै १,७,४।

५. रोहिण्यां पशुकामस्य (अग्निम्) आदध्यात्। मै १,६,९।

६. वैश्वदेवेन यजते पशुकामः। मै १,१०,८।

७. श्यैतं (साम) पशुकामः कुर्वीत। जै १,१४८।

८. साकम्प्रस्थायीयेन यजेत पशुकामः। तै २,५,४,३।

९. हुम्बो इति पशुकामस्य। बो इति ह पशवो वाश्यन्ते। जैउ ३, ३, ३, २॥ [°म- उन्नत-, गार्मुत- १;३; पञ्चहोतृ- ७ द्र. ]।

**पशु-पति-**

१. अघातुक एनं (यजमानम्) पशुपतिर्भवत्यघातुकोऽस्य पशुपतिः पशून्। मै १, ८, ५ (तु. मै १, ४,७)।

२. इमं पशुं पशुपते ते अद्य बध्नाम्यग्ने। तै ३,१,४,१।

३. ते वा अस्यैते नामनी शिवे शान्ते (यत्पशुपतिरिति, रुद्र इति च)। मै ४,२,१२।

४. देवं वा एतं ( पशुपतिम् ) मृगयुरिति वदन्ति । तां १४,९,१२ ।

५. न वास्तव्यं करोत्यघातुकोऽस्य पशुपतिः पशून् भवति । मै १,६,४ ।

६. पशुपति ९ स्थूलहृदयेन (प्रीणामि) । तैसं १,४,३६,१; तैआ ३, २१,१ ।

७. ...पशोः पाशान् पशुपतेरधि (प्रमुमोक्तु) । मै १,२,१५ ।

८. यत्पशुपतिर्वायुस्तेन । कौ ६,४ ।

९. रुद्राय पशुपतये गावीधुकं चरुम् (निर्वपेत्) । मै २, ६, ६ ।

१०. सप्तदशेन पशुकामः प्रजननकामः (यजेत) । जै २,१३६ ॥ [°ति- अग्नि- २३८; अग्निरूप-, ओषधि- ३३ द्र.] ।

पशु-पा- पूषा मा पशुपाः पातु । मै १,५,४; काठ ७,२ ॥ [°पा- अन्तरिक्ष- ४५ द्र.] ।

पशु-बन्ध-

१. उभय ९ सौत्रामणीष्टिश्च पशुबन्धश्च । माश १२,७,२,२१ ।

२. पशुबन्धः षड्ढोतुः ( निदानम् ) । तै २,२,११,६ ।

३. यत् पशुमालभन्ते, तेन पशुबन्धः । जै २,३८ ।

४. स यत्पशुबन्धेन यजते । आत्मानमेवैतन्निष्क्रीणीते । माश ११,७,१,३ ॥ [ °न्ध- अग्निष्टोम- १३; दर्शपूर्णमास- १ द्र. ] ।

पशुबन्ध-याजिन्- षट्सु षट्सु (मासेषु) पशुबन्धयाजी (अश्नाति) । माश १०,१,५,४ ।

पशु-मत्-

१. पशुमानुत्तमां वाचं वदति । तैसं ५,३,५,३; काठ २१,२ ।

२. पूष्णोऽहं देवयज्यया पुष्टिमान् पशुमान् भूयासम् । काठ ५,१ ।

३. य एवं विद्वानग्निमुपतिष्ठते पशुमान् भवति । तैसं १,५,९,३ ।

४. यद्वै पशुमान् कर्म चिकीर्षति, शक्नोति वै तत्कर्त्तुम् । माश ५,२,५,८ ।

५. वर्षाणामहं देवयज्यया पुष्टिमान् पशुमान् भूयासम् । काठ ४,१४ ।

६. स (रुद्रः) एतमेव वरमवृणीत पशूनामाधिपत्यं तदस्यैतत्पशुमन्नाम । ऐ ३, ३३ ॥ [°मत्- इन्द्र- ८८; दीक्षा- ११; १५ द्र.] ।

पशु-यज्ञ- पशुयज्ञष् षड्ढोता । काठ ९,१३ ।

पशु-श्रपण- एष वै रुद्रः पशुश्रपण एव । काठ २२,११ ।

पशु-ष्ठा-

१. एषा वै प्रजापतेः पशुष्ठास्तनूर्यैच्छिपिविष्टः (°नूर्य्यैञ्शिपिविष्टम् [मै.]; °नूर्या शिपिविष्टवती [काठ.]) । मै १, ११,९; काठ १४,१०; तां १८,६,२६ ।

२. पशुष्ठा न्युप्तः ( सोमः ) । काठ ३४, १४ ।

पश्वालम्भन- यत्पशुमालभत आत्मानमेव तेन निष्क्रीणाति । क ३७, ८ ।

पश्यत- असौ वा आदित्यः पश्यतः । एष एव तदजायत । एतेन हि पश्यति । जैउ १,१८,१,६ ।

पष्ठौही-

१. धात्रे द्वादशकपालः, पष्ठौह्यप्रवीता दक्षिणा । काठ १५, ३ ।

२. पष्ठौहीमन्तर्वर्तीं दद्यात्, सा हि सर्वाणि वया ऽंसि, यद्वत्सं बिभर्ति तेन वत्सा, यद्वत्सतरी तेन वयो यत्परं वय आप्ता तेन स्थविरा, तयैव सर्वान् पशूनवरुन्द्धे । काठ ११, २ ।

३. प्रजननं वै पष्ठौहीः । प्रजननं ब्रह्म । जै २, २०३ ॥ [ °ही- इन्द्र- २८१ द्र. ]

पस-

१. भगस्सौभाग्यं पसः । काठ ३८, ४ ।

२. राष्ट्रं पसः । तै ३, ९, ७, ४; माश १३, २, ९, ६ ।

पस्त्या- विशो वै पस्त्याः । माश ५, ३, ५, १९; ४,४, ५ ।

पांसु- अथ यदेतद्रसमोद्धृत्य परावपन्त्येष एवास्न्या ऽसवः । माश २,३,२,२ ।

पाक-यज्ञ-

१. इडा खलु वै पाकयज्ञः । तैसं १, ७, १, १ ।

२. सायंप्रातर्होमौ स्थालीपाको नवश्च यः । बलिश्च पितृयज्ञश्चाष्टका सप्तमः पशुरित्येते पाकयज्ञाः । गो १, ५, २३ ॥ [ °ज्ञ- गृहमेध- १ द्र. ] ।

पाङ्क्त्र- अन्तरिक्ष- ७५ द्र. ।

पाञ्चजन्य ( [<पञ्च-जन-] अग्नि-)-

१. एष वा अग्निः पाञ्चजन्यो यः पञ्चचितीकः । तैसं ५, ३, ११, ३ ।

२. ये ऽग्नयः पाञ्चजन्याः···तेषामसि त्वमुत्तमः । माश ९,५,१,५३ ।

पाञ्चवाज ( [<पञ्च-वाजस्-] सामन्- )- अथ पाञ्चवाजम् । एतेन वै पञ्चवाजाः कौत्स उभे अन्धसी व्यपिपीत यच्च दैव्यं यच्च मानुषम् । ते एवैतेन विपिपीते···तदेतदन्नाद्यस्यावरुद्धिः साम··· यदु पञ्चवाजाः कौत्सोऽपश्यत्तस्मात्पाञ्चवाजमित्याख्यायते । जै ३, २२९ ।

पाणि- त्रीणि वा अस्य पाणेः पर्वाणि भवन्ति । शांआ २, ५ ॥ [°णि- अग्नि- ४२२; अग्निधान-; गभस्ति- १ द्र. ] ।

पात्नीवत ( ग्रह- )-

१. प्रजननं वै पात्नीवतः । काठ २८, ८; क ४४, ८; ४६, ४ ।

२. रेतो वै पात्नीवतः । ऐ ६,३; गो २,४,५; ॥ [°त- अग्नि- २५२ द्र. ] ।

पात्नीवत-ग्रह- रेतः सिक्तिर्वै पात्नीवतग्रहः । कौ १६,६ ।

पात्र-

१. कति पात्राणि यज्ञं वहन्तीति त्रयोदशेति ब्रूयात्···, ( प्रजापतिः ) प्राणापानाभ्यामेवोपा ऽंश्वन्तर्यामौ निरमिमीत । व्यानादुपा ऽंशुसवनं वाच ऐन्द्रवायवं दक्षक्रतुभ्यां मैत्रावरुणं श्रोत्रादाश्विनं चक्षुषः शुक्रामन्थिनौ । आत्मन आग्रयणम् । अङ्गेभ्य उक्थ्यम् । आयुषो ध्रुवं प्रतिष्ठाया ऋतुपात्रे । तै १, ५, ४,१;२ ।

२. द्वन्द्वं पात्राण्युदाहरति शूर्पं चाग्निहोत्रहवणीं च स्फ्यं च कपालानि च शम्यां च कृष्णाजिनं चोलूखलमुसले दृषदुपले तद्दश । माश १, १, १, २२ ।

३. यानि ( पात्राणि ) पुनः प्रयुज्यन्ते, तान्यस्मै लोकाय, यानि न पुनः प्रयुज्यन्ते तान्यमुष्मै क्षयाय। मै ४,८,८।

४. वायुः पात्रैः ( सहास्मिन् कर्मण्यागच्छतु )। तैआ ३, ८, २।

५. स्रवता ( पात्रेण ) न हस्ता अवनेनिजीत, न पिबेत्। मै ४, २,१॥ [ °त्र- अन्न- १५५; छन्दस्- १११ द्र.]।

पाथ्य- मनो वै पाथ्यो वृषा। माश ६, ४, २, ४।

पाद्-

१. का ऊरू पादा उच्येते (पुरुषस्य) ?······पद्भ्यां शूद्रो अजायत। काठसंक १०१:३।

२. केनेत्या इति, पादाभ्यामिति। शांआ ३, ७; कौउ १, ७।

३. त्रयो अस्य पादा इति, त्रीणि सवनानि। काठसंक २५ : १-२।

४. दिशः पादाः। तैसं ७, ५, २५, १।

५. पद्भ्यां ( पुरुषस्य ) भूमिः ( समवर्तत )। काठसं १०१ : ९; तैआ ३, १२,६।

६. पादावेवास्य समिष्टयजुः। माश ११, २, ६, ९।

७. प्रतिष्ठा वा एकविंश स्तोमानां, पद्भ्यामेव तेन पाप्मानमपघ्नते। जै २,१३५।

८. प्रतिष्ठा वै पादः। माश १३, ८, ३, ८॥ [°द- एकविंश- ३७; गति- द्र.]।

पान्त-

१. पान्तो वै पुरुषः। जै ३, ९५।

२. रात्रिः पान्तम्। जै १, २१४॥ [ °न्त- अहन्- १० द्र. ]।

पाप-

१. एष ह वै मुखेन पापं करोति यो ऽवाद्यं वदति। एष ह वै बाहुभ्यां पापं करोति, योऽनिघात्यस्य निहन्ति। एष ह वा उदरेण पापं करोति योऽनाश्यान्नस्यान्नमत्ति। एष ह वै पद्भ्यां पापं करोति यो जनमेति। जै २,१३५।

२, तद्यथा श्वः प्रैष्यन् पापात्कर्मणो जुगुप्सेतैवमेवाहरहः पापात्कर्मणो जुगुप्सेताकालात्। जैउ ४,११,४,४।

३. ते देवा ( आत्मीयं पापम् ) आप्त्येषु ( आप्त्येषु) अमृजत। आप्त्या अमृजत सूर्याभ्युदिते। सूर्याभ्युदितः सूर्याभिनिम्रुक्ते। सूर्याभिनिम्रुक्तः कुनखिनि। कुनखी श्यावदति। श्यावदन्नग्रदिधिषौ। अग्रदिधिषुः परिवित्ते परिवित्तो वीरहणि वीरहा ब्रह्महणि। तद् ब्रह्महणि नात्यच्यवत। तै ३,२,८,११-१२।

पाप-वात- हलिक्ष्णान् पापवातेन (प्रीणामि)। काठ ५३,१३।

पापीयस्-

१. यदा वै श्रियोऽन्तं गच्छत्यथ पापीयान् भवति। मै २,२,९।

२. श्रेया ऽसं पापीयान् पश्चादन्वेति। तै ५,१,२,३।

पाप्मन्-

१. अग्ने त्वं तरा मृधः इत्यग्ने त्वं तर सर्वान्पाप्मन इत्येतत् । माश ६,६,३,४ ।

२. अङ्गे अङ्गे वै पुरुषस्य पाप्मोपश्लिष्टः । तै ३,८,१७,४ ।

३. तथैवैतद्यजमानः पौर्णमासेनैव वृत्रं पाप्मान ँ हत्वापहतपाप्मैतत्कर्मारभते । माश ६,२, २,१९ ।

४. तद्यथाहिर्जीर्णायास्त्वचो निर्मुच्येत इषीका वा मुञ्जात् । एवं हैवैते सर्वस्मात्पाप्मनः सम्प्रमुच्यन्ते ये शाकलं जुह्वति । गो २,४,६ ।

५. तं देवा यथेषीकां मुञ्जाद्विवृहेदेव ँ सर्वस्मात्पाप्मनो व्यवृहन् । माश ४, ३, ३, १६ ।

६. तस्माज्ज्याया ँ श्च कनीया ँ श्च, स्नुषा च श्वशुरश्च सुरां पीत्वा विलालपत आसते, माल्व्य ँ हि तत्, पाप्मा वै माल्व्यम् । मै २,४,२ (तु. काठ १२,१२) ।

७. तेन पाप्मानमपहत्य ब्रह्मणा स्वर्गं लोकमप्येति विद्वान् । ऐआ २,३,८ ।

८. द्वादशाहेन न याज्यं पाप्मनो व्यावृत्यै । तैसं ७,२,१०,४-५ ।

९. पाप्मा वै मृधः मशा ६, ३,३,८ ।

१०. पाप्मा वै वृत्रः (सपत्नः [माश ८,५,१,६ ]) । माश ११,१,५,७; १३,४,१,१३ ।

११. पाप्मा सुरा । काठ १४,६ (तु. मै १,११,६; काठ १२,११) ।

१२. भ्रातृव्यो वै पाप्मा । जै १,२६१ ।

१३. मृत्युर्वै वरुणो मृत्युनैवैनं ग्राहयत्येतद् वै पाप्मनो रूपम् । काठ १३,२ ।

१४. मृध एवैतेन पाप्मानमपघ्नते । जै ३,२२२ ।

१५. यः पाप्मना गृहीतः स्यात् स आग्नेयं कृष्णग्रीवमालभेतैन्द्रमृषभमग्निरेवास्य स्वेन भागधेयेनोपसृतः पाप्मानमपि दहत्यैन्द्रेणेन्द्रियमात्मन्धत्ते, मुच्यते पाप्मनो भवत्येव । तैसं २,१,४,५-६ ।

१६. वरुणो वाऽएतं गृह्णाति यः पाप्मना गृहीतो भवति । माशं १२,७,२,१७ ।

१७. वृत्रहणं पुरंदरमिति पाप्मा वै वृत्रः पाप्महनं पुरंदरमिति । माश ६,४,२,३ ।

१८. व्यतिषक्तो वै पुरुषः पाप्मभिः । जै २,२८७ ।

१९. श्रमो वै पाप्मा । माश ६,३,३,७ ।

२०. श्रियै पाप्मा ( निवर्तते ) । माश १०,२,६,१९ ।

२१. षड्वै पुरुषे पाप्मानष्षड् विपुवन्त स्वप्नश्च तन्द्री च मन्युश्चाशनया चाक्षकाम्या च स्त्रीकाम्या च । जै २,३६३ ।

२२. सद्यो जज्ञानो निरिणाति शत्रूनिति सद्यो ह्येष पाप्मानमपाहत । ऐआ १,३,४ ।

२३. स यथाहिस्त्वचो निर्मुच्येतैव ँ सर्वस्मात्पाप्मनो निर्मुच्यते । माश ४, ४, ५, २३ । [°प्मन्- अंहस्- ४; अभिमाति- १; २; अशस्ति-; आमयाविन्- १३; इन्द्र- १६४; कृष्ण, °ष्णा- ३; १५; तमस्- ४; देव- ९; १०; पण्डग-; पयस्- १९ द्र. ] ।

पायु-

१. अथ माध्यन्दिनस्य पवमानस्य गायत्री । योऽयमवाङ् प्राणः ( पायुः ) एष एव सः । ......एतेन ह्ययं प्राणेन करोति भस्म ( विष्ठाम् ) च करोति वातं च । जै १,२५४ ।

२. अय ९ वाव वैश्वानरो योऽयमवाङ् प्राणः ( पायुः ) ······ एषोऽर्धभाक्प्राणानामर्धभाजा इतरे। मै ४,६,६ ।

३. अवाञ्चं प्राणम् ( पायुम् ) अचीक्लृपं यज्ञमारो वीवातस् ( मलावरोधः ) त्वा हनिष्यतीत्येवं ब्रूयात्। अथो ह ब्रूयादवस्रावस ( अतिसारः ) त्वा हनिष्यतीति। जै १,२५४।

४. प्रदरान् पायुना (प्रीणामि)। मै ३,१५,९।

५. विमुक्तिरिति पायौ। तैआ ९, १०, २; तैउ ३, १०, २ ॥ [ °युु- अन्तरिक्ष- ६२; पवमान- १२ द्र. ]।

**पारमेष्ठ्य-**

१. साध्याश्चाप्त्याश्च पारमेष्ठ्याय ( आदित्यमभ्यषिञ्चन्त )। जै २,२५।

२. साध्याश्चाप्त्याश्च पारमेष्ठ्याय ( वरुणमभ्यषिञ्चन्त )। जै ३,१५२ ॥ [°ष्ठ्य- इन्द्र- २ द्र. ]।

**पारावत-** अहन्- १९ द्र.।

**पारिप्लव(<परिप्लव-)-** तद्यत्पुनः पुनः (संवत्सरम्) परिप्लवते तस्मात्पारिप्लवम्। माश १३,४,३,१५।

**पारुच्छेप( <परुच्छेप-)-**

१. एतेन ( पारुच्छेपेन ) ह वा इन्द्रः सप्त स्वर्गाँल्लोकानारोहत्। गो २,६,१०।

२. रोहितं वै नामैतच्छन्दो यत्पारुच्छेपम्। गो २,६,१०।

**पार्थ( <पृथु-)-**

१. एतेन वै पृथुर्वैन्य उभयेषां पशूनामाधिपत्यमाश्नुतोभयेषां पशूनामाधिपत्यमश्नुते पार्थेन (साम्ना) तुष्टुवानः। तां १३,५,२० ॥ [ °र्थ- क्षत्र- ४२ द्र. ]।

२. संवत्सरो वै पार्थानि ( हवींषि )। मै ४,४,५; माश ९,३,४,१८।

**पार्थुरश्म (⌊<पृथुरश्मि-⌋ सामन्- )-**

१. क्षत्रम्मह्यमित्यब्रवीत् ( इन्द्रम् ) पृथुरश्मिस्तस्मा एतेन पार्थुरश्मेन क्षत्रं प्रायच्छत्, क्षत्रकाम एतेन स्तुवीत क्षत्रस्येवास्य प्रकाशो भवति। तां १३, ४,१७।

२. पार्थुरश्म ९ राजन्याय ब्रह्मसाम कुर्य्यात्। तां १३,४,१८।

३. रश्मिना वा अश्वो यत ईश्वरो वा अश्वोऽयतोऽप्रतिष्ठितः परां परावतं गन्तोर्यत् पार्थुरश्मं ब्रह्मसामं भवत्यश्वस्य यत्यै धृत्यै। तैसं ५,४,१२,३ ।

**पालागल-** प्रहेयो वै पालागलो ऽध्वानं वै प्रहित एति। माश ५,३,१,११।

**पालाश-**

१. पालाशं ( यूपम्) पुष्टिकामस्य ( करोति )। ष ४,४।

२. पालाशं ( यूपं कुर्वीत ) ब्रह्मवर्चसकामः। कौ १०,१।

**पावक,का-**

१. यत् ( अग्नेः ) पावकं ( रूपम् ) तदन्तरिक्षे ( न्यधत्त )। माश २,२,१,१४।

२. यदग्नये पावकाय प्रजामेवास्मै तेन प्रजनयति। काठ ८,८।

३. यदग्नये पावकाय ( निर्वपति ), वाचमेवास्मिन् ( यजमाने) तेन दधाति। तैसं २,२,४,२-३।

४. यद्वै शिव ९ शान्तं तत्पावकम्। माश ९,१,२,३०।

५. या ते अग्ने पावका तनूरन्तरिक्षमन्वाविवेश, या वाते या वामदेव्ये या त्रैष्टुभे छन्दसि या

पञ्चदशे स्तोमे··· तां त एतदवरुन्धे क ६, ३ ।

६. वायुर्वै पावकः । जै २,१३७ ॥ [°क, का– अग्नि– ६३२; ६५६; अन्न २७; अप्– १०२; २२३; ओषधि– २० द्र. ]।

**पावमान–** पावमानेन त्वा स्तोमेनेत्याह प्राणमेवास्मिन्नेतेन दधाति । तै २,३.११,३-४ ।

**पावमानी** ( ऋच् -)–

१. पवित्रं वै पावमान्यः । कौ ८,५; ३०,८; गौ २,६,१६ ।

२. प्राणा उ पावमान्यः । जै १,२७५ ।

३. यत्पावमानी (°नं [काठ.]) तेन सौमी । मै १, ७, ४; काठ ९, २ ।

४. स यदिदं सर्वमभ्यपवयद् यदिदं किञ्च तस्मात्पावमान्यस्तस्मात्पावमान्य इत्याचक्षत एतमेव ( प्राणम् ) सन्तम् । ऐआ २, २,२ ।

**पावीरवी–** वाग्वै सरस्वती पावीरवी । ऐ ३, ३७ ।

**पाश–**

१. उदुत्तम ९ वरुण पाशमस्मद्वाधम ९ वि मध्यम ९ श्रथाय । मै १, २, १८ ।

२. द्वौ वै पाशौ, घोरो ऽन्यः, शिवो ऽन्यः, यो यज्ञियः स घोरो, यो ऽयज्ञियः स शिवः । मै ३, ९, ६ ।

३. प्रमुक्तो वरुणस्य पाशः । काठ २, ७; क २, १ ।

४. वरुण्यः पाशः । काठ २४, ५; क ३७, ४ ।

५. वारुणो वै पाशः । तै ३, ३, १०, १; माश ६, ७, ३, ८ ।

६. विचृत्तो वरुणस्य पाशः, प्रत्यस्तो वरुणस्य पाशो नमो वरुणस्य पाशाय । मै १, ३, ३९ । [ °श– अग्नि– ६११; अदिति– ६; निर्ऋति– २१; नैर्ऋत– ८; पशु– २१९ द्र. ] ।

**पाष्ठौह**–( [< पष्ठवाह्-] )– पष्ठवाड् वा एतेनाङ्गिरसश्चतुर्थस्याह्नो वाचं वदन्तीमुपाश्रृणोत्स होवागिति निधनमुपैत्तदस्य(पाष्ठौहस्य साम्नः) अभ्युदितं तदहरवसत् । तां १२, ५, ११ ।

**पिक–** काम– ८ द्र. ।

**पितामह–** अन्तरिक्षाधिपति– द्र. ।

**पितु–**

१. अन्नं वै पितुः । माश १, ९, २, २०; ७, २, १, १५ ।

२. अविषं नः पितुं कृधि ( कृणु [तैसं.] ) । तैसं १, १, १३, ३; काठ १, १२; क १, १२ । [ °तु– अथर्वन्– ४ द्र. ]

**पितु-षणि–** पितुषणिरित्यन्नं वै पितु दक्षिणा वै पितु तामेनेन (सोमेन) सनोत्यन्नसनिमेवैनं ( सोमम् ) तत्करोति । ऐ १, १३ ।

**पितृ–**

१. अथ पितरो ( गाम् ) ऽदुह्र रजतेन पात्रेण स्वधाम् । मै ४, २, १ ।

२. अथ पितृभ्यो ऽग्निष्वात्तेभ्यः । निवान्यायै दुग्धे सकृदुपमथित एकशलाकया मन्थो भवति । माश २, ६, १, ६ ।

३. अथ यदध्वर्युः पितृभ्यो निपृणाति, जीवानेव तत् पितॄननु मनुष्याः पितरो ऽनुप्रवहन्ति। गो २, १, २५।

४. अथ यदेव प्रजामिच्छेत्। तेन पितृभ्य ऽ ऋणं जायते तद्धयेभ्य ऽ एतत्करोति यदेषा ९सन्तताव्यवच्छिन्ना प्रजा भवति। माश १, ७, २, ४।

५. अथ या रोहिणी श्येताक्षी (गौः) सा पितृदेवत्या यामिदं पितृभ्यो घ्नन्ति। माश ३,३, १, १४।

६. अथ ये दत्तेन पक्केन लोकं जयन्ति ते पितरो बर्हिषदः। माश २, ६, १, ७।

७. अथैनं (प्रजापतिम्) पितरः प्राचीनावीतिनः सव्यं जान्वाच्योपासीदंस्तान् (प्रजापतिः) अब्रवीन्मासि वो ऽशन ९ स्वधा वो मनोजवो वश्चन्द्रमा वो ज्योतिरिति। माश २, ४,२,२।

८ अथो यथा पिता मातैवं बृहद्रथन्तरे यथा पुत्रा एवं पृष्ठानि। जै २,१८८।

९. अनपहृतपाप्मानः पितरः। माश २, १, ३, ४।

१०. अन्तभाजो वै पितरः। कौ १६, ८ (तु. मै १, १०,१८; काठ ३६,१२)।

११. अन्तर्हिता वा (हि [काठ.]) असुष्मादादित्यात् पितरोऽथो अन्तर्हिता हि देवेभ्यश्च मनुष्येभ्यश्च पितरः। मै १, १०, १७; काठ ३६, १२; काठसंक ५८:६; ५९:१।

१२. अपक्षयभाजो वै पितरः। कौ ५, ६।

१३. अपराह्णः पितरः। माश २, १, ३, १।

१४. अपराह्णभाजो वै पितरस्तस्मादपराह्णे पितृयज्ञेन चरन्ति। गो २, १, २४।

१५. अभिवान्यवत्साया दुग्धे भवति, सा हि पितॄणां नेदिष्ठम्। काठ ३६, ११।

१६. अर्धमासा वै पितरोऽग्निष्वात्ताः। तै १,६,८,३।

१७. अर्वाञ्चो मनुष्यान् पितरोऽनु प्रपिपते। तैसं २,५,८,७।

१८. अवान्तरदिशो वै पितरः। माश १, ८,१,४०; २,६,१,१०; ११।

१९. असौ (द्यौः) पिता। तै ३,८,९,१; माश १३, १, ६,१।

२०. आखुः कशो मान्थालवस्ते पितॄणाम्। मै ३,१४,१९।

२१. आ मा गन्त पितरो विश्वरूपाः। मै १,११,३।

२२. इन्दव इति पितॄन् (प्रजापतिरसृजत)। जै १,९४; तां ६,९,१५; १२,१,४।

२३. इन्दव इव हि पितरः। सन इव। तां ६, ९,१९;२०।

२४. इलान्दे, इति पितरः (गामाह्वयन्), तेभ्योऽतिष्ठत। मै ४,२,१।

२५. उक्थभागा वै पितरोऽस्तोमभाजः। काठ २८,७; क ४४,७।

२६. उपहूताः पितरः सोम्यासो बर्हिष्येषु निधिषु प्रियेषु। मै ४,१०,६।

२७. उशन्तो हि पितरः। मै १,१०,१८; काठ ३६,१२।

२८. उशन्नुशत आवह पितॄन् हविषे अत्तवे। तैसं २,६,१२,१।

२९. ऊष्मभागा हि पितरः। तै १,३,१०,६।

३०. ऋतव एतं दक्षिणा पर्यहरन्, पितर ऋतवः। काठ २१,१२

३१. ऋतवः खलु वै देवाः पितरः । ऋतूनेव देवान् पितॄन् प्रीणाति । तान् प्रीतान् मनुष्याः पितरोऽनु प्रपिपते । तै १,३,१०,५ ( तु. तैसं ५,४,११,४; काठसंक ६९:१) ।

३२. एकयोपमन्थति, एकलोका हि पितरः । काठ ३६,११ (तु. मै १,१०,१८) ।

३३. एकयोपमन्थति, एका हि पितृणाम्, इक्षुशलाकयोपमन्थति, सा हि पितृणाम् । मै १.१०,१७ ।

३४. एतद्ध वै पितरो मनुष्यलोकाऽआभक्ता भवन्ति यदेषां प्रजा भवति । माश १३,८,१,६ ।

३५. एष वै पिता य एष (सूर्यः) तपति । माश १४,१,४,१५ ।

३६. ओज इति पितॄन् (असृजत) । तैसं ५,३,६,१ ।

३७. ओजोऽसि पितृभ्यस्त्वा पितॄन्जिन्व । तैसं ४,४,१,२ । काठ १७,७ ।

३८. कव्यवाहन्या (तन्वा) पितृभ्यः (अग्निः कव्यं वहति) । मै १,१०,१८; काठ ३६,१३ ।

३९. क्षत्रं वै यमो विशः पितरः । माश ७,१,१,४ ।

४०. चतस्रः पित्र्यास्तासां तिसृभिः प्रचरन्ति, न्येकां दधति । काठ ११,१० ।

४१. तद्ये सोमेनेजानाः, ते पितरः सोमवन्तः । माश २,६,१,७ ।

४२. तद्वसन्तो ग्रीष्मो वर्षाः । एते ते ये व्यजयन्त, शरद्धेमन्तः शिशिरस्तऽउ ते यान् ( संग्रामे हतान् पितृसंज्ञान् ) पुनः समैरयन्त । माश २,६,१,१ ।

४३. तस्मात् पुत्रेण पितरमाचक्षते, पित्रा पुत्रान् । जै ३,३ ।

४४. तिर इव वै पितरः । माश २, ४,२,२१; २,६,१,१९; १३,८,३,२ ।

४५. तृतीये हि लोके पितरः । मै १,१०,१८; २, ३,९; काठ १२, ११; ३६, १२; तां ९, ८, ५; (तु. तै १,३,१०,५;६,८,७ ) ।

४६. ते ये शतं देवगन्धर्वाणामानन्दाः । स एकः पितृणां चिरलोकलोकानामानन्दः । तैआ ८, ८, २; तैउ २,८,२ ।

४७. त्रया वै पितरः ( सोमवन्तः, बर्हिषदः, अग्निष्वात्ताः ) । माश ५, ५, ४,२८; १४, १, ३,२४ ।

४८. त्रिर्निदधाति, त्रीन् हीदं पुरुषान् अभिसस्त्रीन् परानन्वाचष्टे, त्रयो वै पिता पुत्रः पौत्रः । काठ ३६,१३ ।

४९. त्वꣳ सोम पितृभिः संविदानोऽनु द्यावापृथिवी आततन्थ । तैसं २,६,१२,२; मै ४,१०,६ ।

५०. त्वया हि नः पितरः सोम पूर्वे कर्माणि चक्रुः पवमान धीराः । तैसं २, ६, १२, १; मै ४,१०,६ ।

५१. दक्षिणावृद्धि पितृणाम् । तै १,६,८,५ ।

५२. दर्भाणाꣳ स्तम्बमाहर पितृणामोषधीं प्रियाम् । अन्वस्यै मूलं जीवादनु काण्डमथो फलम् । तैआ ६,९ १ ।

५३. देवान् वै पितॄन् मनुष्याः पितरोऽनुप्रपिबन्ते देवानेवैतत् पितॄनयाड्यत् स्रक्तिषु निदधाति तेन मनुष्यान् पितॄन् यजति । काठ ३६,१३ ।

५४. देवा वा एते पितरः । कौ ५,६; गो २,१,२४ ।

५५. नमो वः पितरो रसाय ( वसन्ताय ), नमो वः पितरः शोषाय (ग्रीष्माय ), नमो वः पितरो जीवाय (वर्षाभ्यः), नमो वः पितरः स्वधायै ( शरदे ), नमो वः पितरो घोराय ( हेमन्ताय ),

नमो वः पितरो मन्यवे (शिशिराय)। षट्कृत्वो नमस्करोति, षड् वा ऋतवः। ऋतवः पितरः। माश २,४,२,२४ (तु. तैसं ३,२,५,५-६)।

५६. नवभिरस्तुवत, पितरोऽसृज्यन्तादितिरधिपत्न्यासीत् (॰धिपतिरासीत् [मै.])। तैसं ४, ३, १०,१; मै २,८,६; काठ १७,५।

५७. निधनं पितृभ्यः (प्रजापतिः प्रायच्छत्) तस्मादु ते निधनसंस्थाः। जैउ १,३,२,२।

५८. परं वा एतदन्नं यत् पितरः। काठ २९,२; क ४५,३।

५९. पराञ्च उ वै पितरः। कौ ५,६।

६०. परे वै (हि [मै.]) देवेभ्यः पितरः। मै १,१०,१८; काठ ३६,१३।

६१. पाङ्क्तः कशो मन्थीलवस्ते पितॄणाम्। काठ ४७,८ (तु. तैसं ५,५,१८,१; मै ३,१४,१९)।

६२. पितर आयुष्मन्तस्ते स्वधयायुष्मन्तः। तैसं २,३,१०,४।

६३. पितर ऋतवः (प्रजापतिः [गो.])। काठ ३६,११; गो २,६,१५; (तु. मै १, १०,१७; ३,४, ४; माश २,६,१,३२;९,४,३,८)।

६४. पितरो नाराशंसः। काठ ३४,१६।

६५. पिता नातिचरितवै। मै १,१०,१०; काठ ३६,५।

६६. पिता पुत्रस्येशे। काठ ११,४।

६७. पिता पुरूरवाः। काठ २६,७; क ४१,५।

६८. पिता वै प्रयाजाः। तैसं २,६,१,६।

६९. पिता हि पुत्राच्छ्रेयान्। जै २,३८७।

७०. पिता हि पुत्राय कन्तमः, पुत्रो हि पित्रे कन्तमः। जै २,३८६।

७१. पितृभ्यः पूर्वेद्युः क्रियते। तैसं २,५,३,६।

७२. पितृभ्यस्तृतीयसवनं क्रियते। काठ २३,४; क ३६,१।

७३. पितृभ्योऽग्निष्वात्तेभ्यो धानाः। काठ ९,६; क ८,९।

७४. पितृभ्यो बर्हिषद्भ्यष्षट्कपालः पुरोडाशः। काठ ९,६; क ८,९।

७५. पितृभ्यो बर्हिषद्भ्योऽन्वाहार्यपचने धानाः कुर्वन्ति। ततोऽर्धाः पिंषन्त्यर्धा इत्येव धाना अपिष्टा भवन्ति ता धानाः पितृभ्यो बर्हिषद्भ्यः। माश २,६,१,५।

७६. पितॄणामनुस्तरणी (यत्सौम्यः) तस्मात् पितृमत्या यजति। मै ४,७,२।

७७. पितॄणां मघाः (नक्षत्रम्)। तै १,५,१,२; ३,१,१,६।

७८. प्रभूः पित्रा (असि)। मै ३,१२,४।

७९. प्राचीनावीतं पितॄणाम्। तैसं २,५,११,१।

८०. प्राणो वै पिता। ऐ २,३८।

८१. बभ्रेनाऽऽजद्विषेण (उद्गात्रा दीक्षामहा इति) पितरो दक्षिणतः (आगच्छन्)। जैउ २,३,१,२।

८२. मघा नक्षत्रं, पितरो देवता। तैसं ४,४,१०,१; मै २,१३,२०।

८३. मनः पितरः। माश १४,४,३,१३।

८४. मनसे त्वेत्याह, पितृभ्य एवैतेन करोति। तैसं ६,४,३,१।

८५. मनुष्या वै जागरितं पितरः सुप्तम्। माश १२,९,२,२।

८६. मर्त्याः पितरः। माश २,१,३,४।

८७. मासा वै पितरो बर्हिषदः। तै १,६,८,३; ३,३,६,४।

८८. मासि पितरः (क्षुधमघ्नन्)……। तैसं २,५,६,६।

८९. मासि पितृभ्यः क्रियते। तै २,५,६,६; तै १.४,९,१।

९०. मूलमिव पितॄणाम्। काश १,६,१,११।

९१. य उ पिता स पुत्रः। जै १,५६।

९२. यत्पीतत्वं तत्पितॄणाम्। ष ४,१।

९३. यदृतवः पितरः प्रजापतिं पितरं पितृयज्ञेनायजन्त तत्पितृयज्ञस्य पितृयज्ञत्वम्। तै १,४,१०,८।

९४. यन्निखातं (यन्निमार्ष्टि [काठ.]) तत्पितॄणाम्। मै ३,९,४; काठ ६,५।

९५. यमेन पितॄन् (अन्वाभवत्)। काठ ४३,४।

९६. यमो वैवस्वतो राजेत्याह तस्य पितरो विशस्तऽ इमऽ आसतऽ इति स्थविरा उपसमेता भवन्ति तानुपदिशति यजूंषि वेदः सोऽयमिति। माश १३,४,३,६।

९७. यानग्निरेव दहन्त्स्वदयति ते पितरोऽग्निष्वात्ताः। माश २,६,१,७।

९८. यानेवैषां तस्मिन्त्संग्रामे ऽघ्नंस्तान्पितृयज्ञेन समैरयन्त पितरो वै तऽ आसंस्तस्मात्पितृयज्ञो नाम। माश २,६,१,१।

९९. ये वा अयज्वानो गृहमेधिनः। ते पितरोऽग्निष्वात्ताः। तै १,६,९,६।

१००. ये वै यज्वानः, ते पितरो घर्मपाः (बर्हिषदः [तै.])। तै १,६,९,६; तैआ ५,८,८।

१०१. यो (अर्धमासः) ऽपक्षीयते, स पितरः। माश २,१,३,१।

१०२. राजतेन (पात्रेण) पितरोऽदुह्रः स्वधाम्। काठसंक १४० : ९।

१०३. रात्रिः (वसवः [काठसंक.]) पितरः। काठसंक ५४ : ४; १४० : १२; माश २,१,३,१।

१०४ वर्म्म हि पिता। जै २, ३८७।

१०५. वाक् च वै मनश्च पितरा युवाना। माश ८, ६,३,२२।

१०६. विचृतौ नक्षत्रं पितरो देवता। तैसं ४,४,१०,२।

१०७. विष्टारपंक्तिमभ्यक्रन्दत्। ततः पितॄनसृजत यमप्रमुखान्। जै ३,३८१।

१०८. व्यानेन पितॄन् पितृलोके (अयास्य आङ्गिरसोऽदधात्)। जैउ २,३,२,३;९।

१०९. शरद्धेमन्तः शिशिरस्ते (ऋतवः) पितरः। माश २,१,३,१।

११०. श्रद्धधानं वै पितरोऽन्वायन्ति। काठसंक ५७ : ८।

१११. संवत्सरो वै पिता वैश्वानरः प्रजापतिः। माश १,५,१,१६।

११२. सकृदवत्तं ९ हि पितॄणाम्। काठ २९,१; क ४५,३।

११३. सकृदिव वै पितरः। कौ ५,६;१०,४।

११४. सकृदु ह्येव पराञ्चः पितरः। माश २,४,२,९; ४,४,२,३।

११५. सद्मं पितॄणाम् (आदित्यः आदत्त)। जै २, २६।

११६. स पितृभ्यः सोमवद्भ्यः षट्कपालं पुरोडाशं निर्वपति। माश २,६,१,४ (तु. मै १,१०,१७)।
११७. सर्वतः पितरः। माश २, ६,१,११।
११८. सर्वासु हि दिक्षु पितरः। मै १,१०,१८; काठ ३६,१२।
११९. साधु प्रजायास्तन्तुं तन्वानः पितॄणामनृणो भवति। तैआ १०,६३,१।
१२०. सा ( कुहूः ) नो ददातु श्रवणं पितॄणाम्। तैसं ३,३,११,५-६।
१२१. सा ( सुकन्या ) होवाच यस्मै मां पितादान्नैवाहं तं ( पतिम् ) जीवन्त ९ हास्यामीति माश ४, १,५,९।
१२२. सोमप्रतीकाः पितरस्तृप्णुत। तैसं १,८,२१,२।
१२३. सोमप्रयाजा हि पितरः। तै १,६,९,५।
१२४. सोमो वै पितॄणां देवता, पितृदेवत्यः सोमः, यत् सोमं पितृमन्तं यजति, सोमपांस्तत् पितॄन् यजति। मै १,१०,१८।
१२५. सोऽसुरान् ( प्रजापतिः ) सृष्ट्वा पितेवामन्यत। तदनु ( तेन [मै.] ) पितॄनसृजत। तत्पितॄणां पितृत्वम्। मै ४, २,१; तै २,३,८,२।
१२६. स्वधाकारं पितरः ( उपजीवन्ति )। माश १४,८,९,१।
१२७. स्वधाकारो हि पितॄणाम्। तै १, ६, ९,५; ३, ३, ६, ४ (तु. मै १, १०,१८; ३,९,१)।
१२८. स्वधो वै पितॄणामन्नम्। माश १३,८,१,४ (तु. काठ ३६,१३)।
१२९. स्विष्टकृतो वै पितरः। गो २,१,२५।
१३०. ह्लीका ( ह्रणभागा [तै १, ३, १०, ७]) हि पितरः। तै १, ३, १०, ६; ६, ९, ७।
[ °तृ- अङ्गिरस्- १७; अन्तरिक्ष- ४३; अन्वाहार्यपचन- ५; अपराह्ण- २; अपान- ८; अप्नुमती-; अभिवान्या-; अशन- १; इन्द्र- २०९; ऊम- १; ऋतु- १५; ओजस्- ८; १७; ओषधि- ५६; ओषधिलोक-; कव्यवाहन-; गृह- ३; घर्मप-; चक्षुस्- ५५; तत-२; तन्तु- १; तृतीयसवन- ३९; दक्षिण,णा- १०;२३;२४; ३०; ३८;४६;४७;५३; दक्षिणतस् १२;१९;२०; २१; २दक्षिणा- २४; दक्षिणाग्नि- १; दक्षिणायन-; दक्षिणासंस्थ-; दिव्- ६८; देव- २९; १६८;२६०;२६५;२७५;३२८; नमस्य- २; नाभि- ६; नाराशंस- ३;४;५;६; नीवि- २ द्र.]।

पितृ-देव- पितृदेवो भव। तैआ ७,११,२; तैउ १,११,२।

पितृदेवत्य,त्या-

१. न मृत्पात्रेणापिदध्यात्। यन्मृत्पात्रेणापिदध्यात् पितृदेवत्य ९ हविः स्यात्। काठ ३१, ३; क ४७,२।
२. नैकमेकं ( यज्ञायुधं प्रहृत्यम् ) पितृदेवत्यं तत्। मै १,४,१०।
३. पितृदेवत्यातिखाता। तैसं २,६,४,२।
४. पितृदेवत्या वै नीविः। माश २,४,२,२४; ६,१,४२।
५. पितृदेवत्यो वै कूपः खातः। माश ३,६,१,१३; ७,१,६।
६. पितृदेवत्यो वै सोमः। माश २,४,२,१२;४,४,२,२ (तु. काठ २४,१५; माश ३,२,३,१७)।
७. यदि नाश्नाति पितृदेवत्यो भवति। माश ११,१,७,२।
८. श्येतश्श्येताक्षश्श्येतग्रीवस्ते पितृदेवत्याः। काठ ९,१॥ [ °त्य- कृष्णाक्षी-; दक्षिण,णा- ४५; निखात-; देवदेवत्य- द्र. ]।

पितृ-मत्-
१. संवत्सरो वै सोमः पितृमान् । तै १,६,८,२; ९,५ ।
२. सोमाय वा पितृमते (षट्कपालं पुरोडाशं निर्वपति)। माश २,६,१,४ ।
३. स्वाहा सोमाय पितृमते । मं २,३,१ ॥ [°मत्- अङ्गिरस्वत्- २; ३ द्र. ]।

पैतृमत्य-
१. यो वै ज्ञातो ज्ञातकुलीनः स पितृमान् पैतृमत्यः । माश ४,३,४,१९ ।
२. यो वै श्रोत्रिय आर्षेयस्स पितृमान् पैतृमत्यः । काठ २८,४ ।

पितृ-यज्ञ-
१. अमुं वा एते लोकं निगच्छन्ति ये पितृयज्ञेन चरन्ति । मै १,१०,१९ ।
२. तृतीयसवने पितृयज्ञमवाकल्पयन् । काठ २३,७; क ३६,४ ।
३. न वै धानाभिर्न पुरोडाशेन पितृयज्ञो, यदेव मन्थस्तेन पितृयज्ञः । मै १,१०,१७; काठ ३६,११ ।
४. यत् पितृभ्यः स्वधाकरोत्यपस्तत् पितृयज्ञः संतिष्ठते । तैआ २,१०,३ ।
५. यदुपासनान्युपास्यन्ति, तेन पितृयज्ञः । जै २,३८ ।
६. साकमेधान् पितृयज्ञम् (देवा अकुर्वत)। तैसं ३,२,२,३; मै ३,६,१० ।

पितृ-लोक-
१. अग्निमुखा एव तत्पितृलोकाज्जीवलोकमभ्यायन्ति (पितरः)। माश १३,८,४,६ ।
२. अध इव हि पितृलोकः । माश १४,६,१,१० ।
३. अन्तर्हितो हि पितृलोको मनुष्यलोकात् । तै १,६,८,६ ।
४. उभे दिशावन्तरेण विदधाति प्राचीं च दक्षिणां चैतस्याᳫं ह दिशि पितृलोकस्य द्वारम् । माश १३,८,१,५ ।
५. कर्मणा पितृलोकः (जय्यः)। माश १४,४,३,२४ ।
६. तत्तमसः पितृलोकादादित्यं ज्योतिरभ्यायन्ति । माश १३,८,४,७ ।
७. तृतीयो वा इतः पितृलोकः । जै १,३४५ ।
८. पितृलोकᳫं सोमेन (यजमानोऽनुपश्यति)। तैसं २,६,२,१ ।
९. पितृलोकः पितरः (सोमः [कौ १६,५])। कौ ५,७; १६,५; गो २,१,२५ ।
१०. पितृलोको यमः । कौ १६,८ ।
११. यं कामयेत पितृलोक ऋध्नुयादिति, तस्योपरसंमितां मिनुयात् । मै ४,७,९ ।
१२. यद् दक्षिणत उपसाद्यते पितृलोकं तेन (अभिजयति)। मै ३,९,५ ।
१३. श्मशानचितं चिन्वीत यः कामयेत पितृलोक ऋध्नुयामिति । तैसं ५, ४, ११, ३; काठ २१,४ (तु. मै ३,४,७)।
पितृलोक-काम- उपरसंमितां मिनुयात् पितृलोककामस्य । तैसं ६, ६,४,१ ।

पित्त- चाष- द्र. ।

पिन्वन्त्यपीया (ऋच्-)-
१. तद्यदेव वृत्रं हतमापो व्यायन् यत्प्रापिन्वंस्तस्मात् पिन्वन्त्यपीया । कौ १५,३ ।

२. पिन्वन्त्यपो मरुतः सुदानव इति पिन्वन्त्यपीयापो वै पिन्वन्त्यपीया। कौ १५,३।

**पिपासा-**

अहर्हं पिपासा रात्रिरशनाया। जै ३,३४४।

**पिपीलिका-**

१. पिपीलिकाः प्रशादेन (प्रीणामि)। काठ ५३,१३।

२. पिपीलिका पेलतेर्गतिकर्मणः। दै ३,९।

**पिपीलिकामध्या** (अनुष्टुभ्-)-

१. इन्द्रो वृत्रं हत्वा नास्तृषीति मन्यमानां परां परावतमगच्छत् स एताम् अनुष्टुभं व्यौहत्तास्मध्ये व्यवासर्पदिन्द्रगृहे वा एषोऽभये यजतेऽभय उत्तिष्ठति य एवं विद्वानेतासु स्तुवते। तां १५,११,९।

२. पिपीलिकामध्येत्यौपमिकम्। दै ३,१०।

**पिलिप्पिला-** श्रीर्वै पिलिप्पिला। तै ३,९,५,३; माश १३,२,६,१६।

**पिशङ्ग-**

१. पिशङ्गाः (पशवः) शिशिराय। मै ३,१३,१९।

२. पिशङ्गो वैश्वदेवः (पशुः)। मै ४,७,८।

३. वैश्वदेवश्चरुः, पिशङ्गो दक्षिणा। मै २,६,१३।

**पिशङ्गी-** वैश्वदेवं चरुं (निर्वपति) पिशङ्गी पष्ठौही दक्षिणा तैसं १,८,१९,१।

**पिशङ्गिला-**

१. अहोरात्रे वै पिशङ्गिले। माश १३,२,६,१७।

२. रात्रिर्वै पिशङ्गिला। तै ३,९,५,३।

**पीतु-दारु-**

१. अथ यदापोमयं (प्रजापतेः) तेज आसीत्। यो गन्धः स सार्धं समवद्रुत्य चक्षुष्ट उदभिनत्स एष वनस्पतिरभवत्पीतुदारुस्तस्मात्स सुरभिर्गन्धाद्धि समभवत्तस्माद् ज्वलनस्तेजसो हि समभवत्। माश १३,४,४,७।

२. शरीरं हैवास्य (अग्नेः) पीतुदारु। माश ३,५,२,१५।

**पुंस्-**

१. ऊर्ध्वं एव हि पुमान्। काठ २५,५।

२. ऊर्ध्वमुद्यौत्यूर्ध्वमिव हि पुंसः, पुमानेवास्य जायते। तैसं २,६,५,५।

३. तम् इति वै पुंसो रूपम्, अग्रुवः इति स्त्रियै। जै २,९।

४. निरिन्द्रिया स्त्री, पुमानिन्द्रियवांस्तस्मात् पुमांसः सभां यन्ति, न स्त्रियः। मै ४,७,४।

५. पवस्व इति वै पुंसो रूपं, वाचः इति स्त्रियै। जै २,९।

६. पुंसो वा एतद्रूपं यदहः, स्त्रियै रात्रिः। जै २,४३४।

७. पुंसो वा एतद्रूपं यद् बृहत्, स्त्रियै रथन्तरम्। जै २,४०७।

८. पुमान् वा असौ (द्यौः)। जै १,३३०।

९. पुमान् स्त्रिया हूतो धावति । काठ २३,४ ।
१०. वीर्यं ( वै [जै.]) पुमान् । जै २,११७; माश २,५,२,३६ ।
११. स्त्री निवीर्याऽनिवीर्यः पुमान् । काठ २७,९; क ४४,८ ।
१२. स्त्री (+ वै [क.] ) वेदिः, पुमान् वेदः । मै ४,१,१३; क ४७,११ ।

पुच्छ-

१. नमस्ते भद्राय (साम्ने) यत्ते पुच्छं या ते प्रतिष्ठा । ऐआ ५,१,२ ।
२. प्रतीच्या त्वा दिशा सादयामि जागतेन च्छन्दसा सवित्रा देवतयाऽग्नेः पुच्छेनाग्नेः पुच्छमुपदधामि । तैस ५,५,८,२-३ ।
३. यज्ञायज्ञीयं (ज्ञियं [तैसं., मै.] ) पुच्छम् (सुपर्णस्य गरुत्मतः) । तैसं ४,१,१०,५; मै २,७,८; काठ १६, ८; जै १,२९२; २,४३३; तां १६, ११,११ ।
४. यज्ञायज्ञीयं ( °ज्ञियं [क.] ) पुच्छे गायति । काठ २१,५; क ३१, २० ।
५. शरत्पुच्छम् । मै ४,९,१८, तै ३,११,१०,३ ।
६. शरदा पुच्छम् (अचिनुत) । मै ३,४,८ ॥ [ °च्छ- एकविंश- ३०; द्विपदा- १; नेष्टृ- २; पशु- २०२ द्र. ] ।

पुञ्जिकस्थला- अग्नि- ५६५ द्र. ।

पुण्डरीक- अङ्गिरसः सुवर्गं लोकं यन्तः । अप्सु दीक्षातपसी प्रावेशयन् । तत्पुण्डरीकमभवत् । तै १, ८, २, १ ॥ [°क- दिव्- १५६ द्र.] ।

पुण्य

१. एकं पुण्यं यन्तं ( श्रेयांसं पुरुषम् ) बहवोऽनुयन्ति । काठ २७,१० ।
२. पुण्यं पूर्वं यन्तं पापीयान् पश्चादन्वेति । क २९,८ ।
३. पुण्यं कर्म सुकृतस्य लोकः । तै ३,३,१०,२ ।

पुण्य-कृत्- ये हि जनाः पुण्यकृतः स्वर्गं लोकं यन्ति तेषामेतानि ज्योतीꣳषि (=नक्षत्राणि) । माश ६, ५, ४, ८ ।

पुण्याऽह-

१. पूर्णमासे वाऽमावस्यायां वा ऽऽदधीत ( अग्निम् ), एतद्वै पुण्याहम् । क ६,६ ।
२. पूर्वाह्ण आधेयः (अग्निः) । एतद्वै पुण्याहम् । काठ ८,२; क ६,८ ।

पुत्र-

१. अनुरूप एनं पुत्रो जायते य एवं वेद । तां ११,६,५ ।
२. आत्मासि पुत्र मा मृथाः स जीव शरदः शतम् । मं १,५,१८ ।
३. ऋतुस्नाता भार्या यं पूर्वं पश्येत् तादृशं पुत्रं जनयति, तस्मात् सन्निधौ भर्तैव प्रथममात्मानं दर्शयेत् । लु १७ : २७ ।
४. तस्मादाहुः कर्तुरेव पुत्र इति । काठ १३,३ ।
५. तस्मादुत्तरवयसे पुत्रान्पितोपजीवत्युप ह वाऽएनं पूर्ववयसे पुत्रा जीवन्ति । माश १२,२,३,४ । (तु. गो १,४,१७) ।
६. पुत्रो वै वीरः । माश ३,३,१,१२ ।

७. पुत्रो हि हृदयम् । तै २,२,७,४ ।
८. पुन्नाम नरकमनेकशततारं तस्मात् त्रातीति पुत्रस्तत्पुत्रस्य पुत्रत्वम् । गो १,१,२ ।
९. प्रतिरूपो हैवास्य (यजमानस्य) प्रजायामाजायते नाऽप्रतिरूपस्तस्मात् प्रतिरूपमनुरूपं कुर्वन्ति। गो २,३,२२ ।
१०. मध्ये वै जायापत्योः पुत्रः शेते । जै २, १६६;४३९ ।
११. यस्त्वाव पुत्राणां कृपणतमो भवति, स पितुर्हृदयमाप्येति । जै २,१८३ ।
१२. वरो हि पुत्रः । काठ ९,१४ ॥ [°त्र- इन्द्रिय- ९; जाया- ४; तत- २; पितृ- ९;४३;६६ द्र.]।

पुत्रक-
कुमारान् ह स्म वै मातरः पाययमाना आहुः--शक्करीणां पुत्रका व्रतं पारयिष्णवो भवतेति छ ११३ : ९ ।

पुत्र-काम- चतुर्होतृ- ६ द्र. ।

पुनःपद्- प्राणाः पुनःपदम् । कौ २३, ६ ।

पुनराधेय-
१. अग्नेर्वै भागः पुनराधेयम् । मै १, ७, २ ।
२. एतद्वै पुनराधेयस्य नक्षत्रं यत्पुनर्वसू । तैसं १, ५, १, ४ ।
३. यो वा अग्न्याधेयेन नर्ध्नोति, पुनराधेय ९ स आधत्ते । काठ २२,२ । [°य- आदित्य- १२९ द्र.]

पुनर्जन्मन्-
१. ते यऽएवमेतद्विदुः ये वैतत्कर्म कुर्वते मृत्वा पुनः सम्भवन्ति ते सम्भवन्त एवामृतत्वमभिसम्भवन्त्यथ यऽएवं न विदुर्ये वैतत्कर्म न कुर्वते मृत्वा पुनः सम्भवन्ति त एतस्य (मृत्योः) एवान्नं पुनःपुनर्भवन्ति । माश १०,४,३,१० ।
२. स इह ( पृथिव्यां ) कीटो वा पतङ्गो वा मत्स्यो वा शकुनिर्वा सिंहो वा वराहो वा परश्वा वा शार्दूलो वा पुरुषो वाऽन्यो वा तेषु तेषु स्थानेषु प्रत्याजायते यथाकर्म यथाविद्यम्। शांआ ३,२; कौउ १,२ ।

पुनर्मृत्यु- (यजमानः) एतौ पुनर्मृत्यू अतिमुच्यते यदहोरात्रे (=पुनर्मृत्यू) । जै १,६;११ ।

पुनर्वसु- (नक्षत्र-)-
१. पुनर्वसा (पुनराधेयः) आधेयः । मै १, ७, २; काठ ८, १५; क ५, ३ ।
२. पुनर्वसू नक्षत्रमदितिर्देवता । तैसं ४,४,१०,१ (तु. काठ ३९,१३)।
३. यो वै तम् ( पुनराधेयम् ) अग्ना आधत्त स तेन वसुना समभवत्, तत्पुनर्वसोः पुनर्वसुत्वं, तस्मात् पुनर्वसा (पुनराधेयः) आधेयः । मै १, ७,२ ।
४. यो वै तमाधत्त स तेन वसुना समभवत् तस्मात्पुनर्वसुः । काठ ८, १५; क ८,३ ॥ [°सु- अदिति- २७; ४९; ५९ द्र. ]।

पुनश्चिति-
१. यद्यग्निना चित्येन नर्धुयात्, पुनश्चितिं चिन्वीत । काठ २२,२ ।
२. तद्यचित ९ सन्तं पुनश्चिनोति तस्मात्पुनश्चितिः । माश ८,६,३,१३ ।
३. योऽग्निं चित्वा नर्ध्नोति, स पुनश्चितिं चिनुते । तैसं ५, ४,१०,५ ।

पुनस्तोम- (क्रतु-)

१. अथैष पुनस्तोमः । जै २,८३ ।

२. तम् (ऋषिम्) एतेनैव पुनर् अयाजयत्, तेनैवं पुनः समश्रीणात्, सास्य पुनःस्तोमता । जै २, ८३ ।

३. यो गरगीर्मन्येताप्रतिगृह्यस्य प्रतिगृह्यानाश्यान्नस्यान्नमशित्वा स एतेन यजेत । जै २,८३ ।

४. यो बहु प्रतिगृह्य गरगीरिव मन्यते स एतेन ( पुनःस्तोमेन ) यजेत । तां १९,४,२ ।

५. स (ऋषिः) हेन्द्रम् उवाच—न वै शक्नोम्युत्थातुम् इति । स (इन्द्रः) एतं यज्ञम् अपश्यत् । तम् आहरत् । तेनैनम् (ऋषिं) अयाजयत् । जै २, ८३ ।

पुर्-

१. अष्टाचक्रा नवद्वारा देवानां पूर् अयोध्या ··· विभ्राजमाना ऽ हरिणीं । यशसा संपरीवृतां पुर ऽ हिरण्मयीं ब्रह्मा विवेशापराजिता । तैआ १,२७,२-४ ।

२. आत्मा वै पूः (=शरीरं) । माश ७,५,१,२१ ।

३. एकवि ऽ शत्याः पुरामश्ममयीनां पारे यत्किंचासुराणां वामं वसु··· । क ३८,५ ।

४. ते देवाः प्रतिबुध्याग्निमयीः पुरस्त्रिपुरं पर्यास्यन्त । ऐ २,११ ।

५. देवाश्चासुराश्च संयत्ता आसन्, तेषामसुराणामिमाः पुर आसन्नयस्मयीयं (पृथिवी), रजतान्तरिक्षं, हरिणी (=सुवर्णमयी) द्यौः । क ३८,३ ।

६. मन एव पुरः । मनो हि प्रथमं प्राणानाम् । माश १०,३,५,७ ।

७. लेखा हि पुरः । माश ६,३,३,२५ ।

पुरन्धि- पुरन्धिर्योषेति । योषित्येव रूपं दधाति तस्माद्रूपिणी युवतिः प्रिया भावुका । माश १३, १,९, ६ ।

पुरश्चरण-

१. अथैतं विष्णुं यज्ञम् । एतैर्यजुर्भिः पुर इवैव बिभ्रति तस्मात्पुरश्चरणं नाम । माश ४,६,७,४ ।

२. तद्वाऽएतदेव पुरश्चरणम् । य एष ( सूर्यः ) तपति । माश ४, ६, ७, २१ ।

पुरस् अग्नि- १०८; २०७ द्र. ।

पुरःसद्- अग्निनेत्र- द्र. ।

पुराण- तार्क्ष्यो वैपश्यतो राजेत्याह । तस्य वया ऽ सि विशः ··· पुराणं वेदः······किञ्चित् पुराणमाचक्षीत । माश १३, ४, ३, १३ । [°ण- अनुष्टुभ्- २९ द्र. ] ।

पुराणिन्- न्यग्रुचदिति ह स्म वा एतं (अस्तं यन्तमादित्यम्) पूर्वे पुराणिन आचक्षते । अथैतर्हि न्यग्रुचदिति । जै १, ७ ।

पुरितत्- अन्तरिक्ष- ६२ द्र. ।

पुरीतत्- पुरीतत् पुरीषम् । माश ८, ५,४, ६ ।

पुरीष-

१. अथ यत्पुरीष ऽ स इन्द्रः । माश १०, ४, १, ७ ।

२. अन्नं ( + वै [माश ८,५,४,४; ६,१,११; १४,२,१,२३]) पुरीषम् । माश ८,१,४,५;७,३,२।

३. ऐन्द्र ऽ हि पुरीषम् । माश ८, ७, ३, ७ ।

४. गोष्ठः (दक्षिणाः [माश.]) पुरीषम् । तां १३, ४, १२; माश ८,७,४,१५ ।

५. देवाः (नक्षत्राणि [माश ८, ७,४, १४]) पुरीषम् । माश ८, ७, ४,१७ ।

६. पुरीषं वा ऽ इयम् ( पृथिवी ) । माश १२, ५, २, ५ ।

७. पुरीषं वै मध्यमात्मनः । तैसं ५, ३, ५, २ ।

८. मांसं ( + वै [माश ८, ६, २, १४; ७, ३,१]) पुरीषम् । काठ २०, १; क ३१ ३; माश ८, ७,४,१९ ।

९. वया ऽ सि पुरीषम् । माश ८, ७, ४, १३ ।

१०. स एष प्राण एव यत्पुरीषम् । ८, ७, ३, ६ । [°ष- आखुकिरि-, आत्मन्- १७; गोष्ठ- १; पशु- ११०; १५६;२३८; पुरीतत्- द्र.] ।

पुरीष्य- ओदनपचनो वै पुरीष्यः । क ६, १ । [°ष्य- अन्न- ९५; ९६; करीष- द्र.] ।

पुरु-दस्म- बहुदान इति हैतद्यदाह पुरुदस्म इति । माश ४, ५, २,१२ ।

पुरुष-

१. अग्निं वै पुरुषस्य प्रमीतस्य मा ऽ सानि गच्छन्ति, सोमं रसः, पृथिवी ऽ शरीरमियम् ( पृथिवी ) अदितिरस्यां हि शय एता वै देवता पुरुषस्येशते । काठ ११, ८ ।

२. अजातो वै तावत् पुरुषो यावदग्निं नाधत्ते, स वै तर्ह्येव जायते यर्ह्यग्निमाधत्ते । मै १,६,४ ।

३. अथ खलु क्रतुमयो ऽयं पुरुषः स यावत्क्रतुरयम् अस्माल्लोकात् प्रैत्येवंक्रतुर्हामुं लोकं प्रेत्याभिसम्भवति । माश १०, ६, ३,१ ।

४. अथ यः पुरुषस्स प्राणस्तत् साम तद्ब्रह्म तदमृतम् । जैउ १, ८,१,१० ।

५. अथ याः पञ्चविंशतिः ( त्रिष्टुभः ), पुरुषस्सः, पञ्चेमाः पञ्चेमाः पञ्चेमाः पञ्चेमाश्चत्वारि प्राङ्गाणि । आत्मा पञ्चविंशः । जै २, ४७ ।

६. अथैतच् छुक्रपात्रं पुनः प्रयुज्यते, पुरुष ऽ वा एतत् प्रति । मै ४, ८, ८ ।

७. अथैष एव पुरुषो यो ऽयं चक्षुषि । जैउ १, ८, ३, २ ।

८. अथैष पुरुषो हिरण्मयो यजमानलोकमेवैष दाधार । मै ३, २, ६ ।

९. अन्नात्पुरुषः । स वा एष पुरुषो ऽन्नरसमयः । तैआ ८, १,१; तैउ २, १,१ ।

१०. अपां गर्भः पुरुषः स यज्ञः । गो १, १,३९ ।

११. अपि हि भूया ऽ सि शताद्वर्षेभ्यः पुरुषो जीवति । माश १, ९, ३, १९ ।

१२. अयज्ञियो वै पुरुषो ऽमेध्य आहनस्याज्जायते । मै १, ६, ४ ।

१३. अर्धं वै पुरुषस्य निर्ऋतिगृहीतमर्धमनिर्ऋतिगृहीतम् । मै ४, ३, १ ।

१४. अर्धं वै पुरुषस्याग्नेयमर्धं वारुणम्- अस्थान्याग्नेयानि मा ऽ सानि वारुणानि । काठ १३,२ ।

१५. अर्धं वै पुरुषस्यात्मनो ऽङ्गान्यर्धमायुः । क ४४, १ ।

१६. अवछितो ह वै पुरुषः । तस्मादस्य यत्रैव क च कुशो वा यद्वा विकृन्तति तत एव लोहितमुत्पतति तस्मिन्नेतां त्वचमदधुर्वास एव तस्मान्नान्यः पुरुषाद्वासो बिभर्त्येता ॅ ह्यस्मिंस्त्वचमदधुस्तस्मादु सुवासा एव बुभूषेत् स्वया त्वचा समृध्या ऽ इति तस्मादप्यश्लील ॅ सुवाससं दिदृक्षन्ते स्वया हि त्वचा समृद्धो भवति। माश ३, १, २, १६ ।

१७. अष्टौ वै पुरुषस्य शफाः । काठ १२, १ ।

१८. असङ्गो ह्ययं पुरुषः । माश १४, ७, १, १७ ।

१९. अस्मिन् वा अयं (पुरुषः) लोके पुण्यं जीवित्वेष्टापूर्तेन तपसा सुकृतेनास्मान् (देवान्) अन्वागमिष्यतीति (देवा अब्रुवन्) । जै १, ९७ ।

२०. इमे वै लोका पूरयमेव पुरुषो यो ऽयं (वायुः) पवते सो ऽस्यां पुरि शेते तस्मात्पुरुषः । माश १३, ६, २, १ ।

२१. उपोप्ते ऽन्ये ग्रहाः साद्यन्ते, ऽनुपोप्ते ध्रुवस्तस्मादस्था ऽन्ये पशवः प्रतितिष्ठन्ति, मा ॅसेन पुरुषः । मै ४, ६, ६ ।

२२. एकादशो वा अयं पुरुषो दश प्राणा आत्मैकादशः । काश ३, २, ४, १ ।

२३. एतावन्तः (७२०) एव पुरुषस्यास्थीनि च मज्जानश्च⋯ ⋯, एतावन्तः (१४४०) एव पुरुषस्य स्थुरामांसानि⋯⋯, एतावन्तः (२८८०) एव स्नावा बन्ध्याः⋯⋯, एतावन्तः (१०८००) एव पुरुषस्य पेशशमराः । गो १,५,५ ।

२४. एतावद् (प्राणापानौ, चक्षुः, श्रोत्रम्, आयुः, रूपं, वर्णः, प्रजा, ऋतम्, सत्यम्, क्षत्रम्, भूतम्, भव्यम्, पशवः) वै पुरुषं परितः तदेवावरुन्धे । तैसं ३,३,५,४ ।

२५. एतावद् (व्याममात्रं) वै पुरुषे वीर्यम् (+यावदस्य प्राणाः [काठ.]) । तैसं ५, २, ५, १; काठ २५,७ ।

२६. एतावान् पुरुषो यदात्मा प्रजा जाया । तां ३,४,३;१३,३ ।

२७. एतावान् वै पुरुषो यावदस्य प्राणा अभि, यावानेवास्यात्मा । काठ ११,५ ।

२८. काममय एवायं पुरुष इति स यथाकामो भवति तथाक्रतुर्भवति यथाक्रतुर्भवति तत्कर्म कुरुते यत्कर्म कुरुते तदभिसम्पद्यते । माश १४,७,२,७ ।

२९. चतुर्विं ॅशो वै पुरुषो दश हस्त्या अङ्गुलयो दश पाद्याश्चत्वार्यङ्गानि । माश ६,२,१,२३ ।

३०. चत्वारो वै पुरुषा ब्राह्मणो राजन्यो वैश्यः शूद्रः । मै ४,४,६ ।

३१. तदेवाग्निस्तद् वायुस्तत्सूर्यस्तदु चन्द्रमाः । तदेव शुक्रं तद् ब्रह्म तदापस्तत् प्रजापतिः । काठसंक १०४ : १-२ ।

३२. तमेव विदित्वाति मृत्युमेति, नान्यः पन्था विद्यतेऽयनाय । काठसंक १०३ : ४ ।

३३. तस्मात्पुरुष उपरिष्टात् पशूनधीव तिष्ठति । जै २, ३७६ ।

३४. तस्मै एतं पाप्मानमन्ववादधुः (देवाः)—स्वप्नं तन्द्रीं मन्युमशनयामक्षकाम्यां स्त्रीकाम्यामिति । एते ह वै पाप्मानः पुरुषमस्मिन् लोके सचन्ते । जै १,९७-९८ ।

३५. ते देवा अब्रुवन् या एवेमा देवताश्छन्दांसि पुरुषे प्रविष्टा एताभिरेवासुरान् धूर्वामैवेति । जै १,९८ ।

३६. त्रीणि पुरुष इन्द्रियाण्यात्मा प्रजाः पशवः । जै १,१८६;३,२७७ ।

३७. त्रेधाविहितो वै पुरुषः । तैसं ५,२,४,३; काठ २०,२; क ३१,४ ।

३८. त्वङ् मा ९ स ९ स्नाय्वस्थि मज्जा। एतमेव तत्पञ्चधा विहितमात्मानं वरुणपाशान्मुञ्चति। तै १,५,९,७।

३९. दश वै पुरुषस्य हस्त्या अंगुलयो, दश पद्याश्चत्वारि प्राङ्गाण्यात्मा पञ्चविंशष्षडिमानि पर्वाणि षडिमानि षडिमानि षडिमान्यात्मा पञ्चविंशो, द्वादशेमाः परिशवो द्वादशेमा, आत्मैव पञ्चविंशः | जै २, ३५४; ४१४।

४०. दश वै पुरुषे प्राणा (+आत्मैकादशः [काठ.]) काठ २९,९; गो २,६,२।

४१. दश वै पुरुषे प्राणास्स्तनौ द्वादशौ। काठ ३३,३।

४२. दशाक्षरो वै पुरुषः। तैसं ५,६,१०,३।

४३. द्वादशो वै पुरुषो द्वे सक्थ्यौ, द्वौ बाहू आत्मा च शिरश्च चत्वार्यङ्गानि, स्तनौ द्वादशौ। तैसं ७,४,११,३।

४४. नवाहानि | नव वै पुरुषे प्राणाः। ···अथैतद् वैराजपृष्ठं दशममहर्भवति। नाभिर्ह सा। जै २,३६३।

४५. न वै पुरुषं कपालैराप्तुमर्हत्येकधैवैनमाप्नोति। काठ १२,१।

४६. न ह वै गौर्नाश्वो नाश्वतरो विराजमधितिष्ठति। पुरुषो ह वाव विराजमधितिष्ठति। तस्मात् पुरुषः पशूनामत्ता। जै २, ३२३।

४७. पञ्चविंशो ह खलु वै पुरुषः। जै २,४१४।

४८. पञ्च वै पुरुषे वीर्याणि। काठ ८,२।

४९. पशवः पुरुषः। तै ३,३,८,२।

५०. पाङ्क्तो ह्ययं पुरुषः पञ्चधा विहितो लोमानि त्वगस्थि मज्जा मस्तिष्कम्। गो २,६,८।

५१. पुरुषं वावैतदासते यत्संवत्सरम्। पुरुषो वै प्रजापतिः, प्रजापतिस्संवत्सरः। जै २,४२७।

५२. पुरुष उभयतश्छिद्रः। क ४०,३।

५३. पुरुष एव षष्ठमहः। कौ २३,४।

५४. पुरुष एव सविता | जैउ ४,१२,१,१७।

५५. पुरुषः (+वै [जै.] प्रजापतिः। जै २,५६; माश ६,२,१,२३; ७,१,१,३७।

५६. पुरुषमुपदधाति। स प्रजापतिः सोऽग्निः स यजमानः, स हिरण्मयो भवति, ज्योतिर्वै हिरण्यम्। माश ७,४,१,१५।

५७. पुरुषं प्रथममालभते। पुरुषो हि प्रथमः पशूनाम्। माश ६,२,१,१८।

५८. पुरुषः सर्वा वाचो वदति। जै १,१९८; ३,३४९।

५९. पुरुषः सुपर्णः। माश ७,४,२,५।

६०. पुरुषस्तेन यज्ञो यदेनं पुरुषस्तनुत एष वै तायमानो यावानेव पुरुषस्तावान् विधीयते तस्मात् पुरुषो यज्ञः। माश १, ३,२, १।

६१. पुरुषस्त्वै यज्ञेन सम्मितः। मै ४,५,७ (तु. तैसं ५,२,५,१; माश १०,२,१,२)।

६२. पुरुषेण वै (एव [काठ २७,१]) यज्ञस्संमितः। काठ १९,१।

६३. पुरुषे त्वेवाविस्तरामात्मा स हि प्रज्ञानेन सम्पन्नतमो विज्ञातं वदति, विज्ञातं पश्यति, वेद श्वस्तनं, वेद लोकालोकौ, मर्त्येनामृतमीप्सत्येवं सम्पन्नः। ऐआ २,३,२।

६४. पुरुषो जातः संवत्सरे प्रतितिष्ठति। मै ४,५,७।
६५. पुरुषो ऽन्तरतो विष्यूतः। क ४०,३।
६६. पुरुषो यज्ञः ( वाक् [काठ.] )। काठ २४,१; माश ३,१,४,२३।
६७. पुरुषो वय इति मध्ये, तस्मात् पुरुषः पशूनामधिपतिः। काठ २०,१०।
६८. पुरुषो वाव ( वै [माश.] ) संवत्सरः। गो १,५,३; ५; माश १२,२,४,१।
६९. पुरुषो वाव सुकृतम् (होता [गो.] )। ऐआ २,४,२; गो २,६,६। ऐउ १,२,३।
७०. पुरुषो वै प्रजापतेर्नेदिष्ठम्। माश ४,३,४,३।
७१. पुरुषो वै यज्ञः। कौ १७,७; २५,१२; २८,९; गो १,४,२४; २,६,१२; जैउ ४,२, १; तै ३, ८, २३,१; माश १, ३,२,१;३,५,३,१।
७२. पुरुषो वै यज्ञः। तस्य यानि चतुर्विंशतिर्वर्षाणि तत्प्रातःसवनम्। ···अथ यानि चतुश्चत्वारिंशतं वर्षाणि तन्माध्यन्दिनं सवनम्···अथ यान्यष्टाचत्वारिंशतं वर्षाणि तत्तृतीयसवनम् अथ स (महिदास ऐतरेयः) षोडशशतं (२४+४४+४८=११६) वर्षाणि जिजीव। जैउ ४,२,१-११।
७३. पुरुषो वैश्वदेवः। मै ४,६,८।
७४. पुरुषो वै संवत्सरः माश १२,२,४,१।
७५. पुरुषो वै समुद्रः। जै ३,६,७,५।
७६. पुरुषो वै सहस्रस्य प्रतिमा। माश ७,५,२,१७।
७७. पुरुषो वै सुभूतम्। जै २,२७।
७८. पुरुषो हि प्रजापतिः। माश ७,४,१,१५।
७९. पूर्णः पुरुषः कामैरूनस्समृद्धिभिः। काठ ८,११; क ७,८।
८०. प्रजापतये पुरुषम्। काठ ९,९; तैआ ३,१०,२।
८१. प्रजापतये पुरुषान् हस्तिना आलभते। मै ३,१४,८।
८२. प्रजापतिः पुरुषः। जै २,४७।
८३. प्राजापत्यः ( प्राजापत्यो वै [तैसं., तै.] ) पुरुषः। तैसं २,१,६,५; मै ४,६,६; तै २,२,५,३।
८४. प्राण एष स पुरि शेते सं पुरि शेत इति पुरिशयं सन्तं प्राणं पुरुष इत्याचक्षते। गो १,१,३९।
८५. बार्हतः पुरुषः। मै ३,५,१।
८६ मनसः पुरुषम् ( निरमिमीत प्रजापतिः )। माश ७,५,२,६।
८७. यस्मात्परं नाऽपरमस्ति किञ्चिद् यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्। वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्। तैआ १०,१०,१।
८८. यावान् पुरुष ऊर्ध्वबाहुस्तावान् भवत्येतावद् वै पुरुषे वीर्यम्। तैसं ५, २,५,१। (तु. मै ३, २,४)।
८९. विंशो वै पुरुषो दश (+हि [तां.]) हस्त्या अङ्गुल्यो (ङ्गुलयो [तैसं.]) दश पाद्याः (पद्याः [तैसं.])। तैसं ७,३,९,२; तां २३, १४,५।
९०. विदलसंहित इव वै पुरुषस्तद्यापि स्यूमेव मध्ये शीर्ष्णो विज्ञायते। ऐ ४,२२।
९१. वैराजः ( वैराजो वै [तां., तै.] ) पुरुषः। काठ ३३, ३; तां २, ७, ८; १९, ४, ५; तै ३, ९,८,२।

९२. वैराजो वै पुरुषो दश हस्त्या अङ्गुलयो दश पाद्याः दश प्राणाः । मै १,१०,१३ ।

९३. वैश्वकर्मणं पुरुषं ( आलिप्सत प्रजापतिः ) । माश ६,२,१,५ ।

९४. वैष्णवाः पुरुषाः । माश ५, २,५,२ ।

९५. व्यतिपक्तो वै पुरुषः पाप्मभिः । जै २,२८७ ।

९६. व्याममात्री (अग्निः ) कार्यैतावद्वै ( भवत्येता° [तैसं.] ) पुरुषे वीर्यं वीर्यसंमिता (+ क्रियते एतावान् वै पुरुषे महिमा [मै.] ) । तैसं ५,१,१,५; मै ३,१,२ ।

९७. व्याममात्रीं कुर्यात् । एतावद्वै पुरुषे वीर्यम् । काठ १९,१; क २९,८ ।

९८. व्याममात्रो वै पुरुषः । माश ७,१,१,३७ ।

९९. शतायुः पुरुषः शतेन्द्रियः । तैसं २, ३, ११,५; तै १, ३,७,७; ७, ६, २; ८, २; १०;१। ( तु. मै ४,५,३; कौ ११,७ ) ।

१००. शतायुर्वाऽअयं पुरुषः शततेजाः शतवीर्य्यः । माश ५,४,१,१३ (तु. माश ४,३,४,३) ।

१०१. शतायुर्वै पुरुषः शतपर्वा शतवीर्य्यः शतेन्द्रिय उप य एकशततमः स आत्मा ( एकशततमी [ ऋक् ] स यजमानलोकः [कौ २५,७] ) कौ १८, १० ।

१०२. शतायुर्वै पुरुषः शतवीर्यः ( आत्मैकशतः [तै १,७,६,४] ) । मै १,६,४;११;७,५;२,१,७;३, ९;४,४,३;४; काठ ९,२; ११,४; तै ३,८,१५, ३; १६,२; तां ५,६,१३ ।

१०३. शतायुर्वै पुरुषः शतवीर्य्यः शतेन्द्रियः । ऐ २, १७; ४, १९; ६,२ (तु. जै २, ३८;३९; ४१८) ।

१०४. शरीरपुरुष इति यमवोचाम य एवायं दैहिक आत्मा तस्यैतस्य योऽयमशरीरः प्रज्ञात्मा स रसः । शांआ ८,३ ।

१०५. षड्विधो वै पुरुषः षडङ्गः । ऐ २,३९ ।

१०६. षोडशकलः पुरुषो—लोमेति द्वे अक्षरे त्वगिति द्वे असृगिति द्वे मांसमिति द्वे स्नावेति द्वे अस्थीति द्वे मेद इति द्वे मज्जेति द्वे ताः षोडश सम्पद्यन्ते । काठसं २२ : ३-५ ।

१०७. षोडशकलो वै पुरुषः । जै १, १३२;३३१; जैउ ३,७,२,१ तै १, ७, ५, ५; माश ११,१, ६, ३६ (तु. काठ २१, ८) ।

१०८. षोढाविहितो वै पुरुष आत्मा च शिरश्च चत्वार्यङ्गानि । तैसं ५,६,९,१-२ ।

१०९. संवत्सरे पुरुषः ( प्रतितिष्ठति ) । क ४२,२ ।

११०. स एष पुरुषः पञ्चविधस्तस्य यदुष्णं तज्ज्योतिर्यानि खानि स आकाशोऽथ यल्लोहितं श्लेष्मा रेतस्ता आपो यच्छरीरं सा पृथिवी यः प्राणः स वायुः । ऐआ २,३,३ ।

१११. स एष पुरुषः समुद्रः । ऐआ २,३,३ ।

११२. सप्तदशः पुरुषः ( पुरुषो वै [काठ.] ) प्राजापत्यश्चत्वार्यङ्गानि शिरोग्रीवमात्मा, वाक् सप्तमी, दश प्राणाः…… । मै १,११,६; काठ १४,६ ।

११३. सप्तदशो वै पुरुषो दश प्राणाश्चत्वार्यङ्गान्यात्मा पञ्चदशो ग्रीवाः षोडश्यः शिरः सप्तदशम् । माश ६,२,२,९ ।

११४. स यत् पूर्वो ऽस्मात् सर्वस्मात्सर्वान्पाप्मन औषत्तस्मात्पुरुषः । माश १४,४,२,२ ।

११५. सर्वो वै पुरुषो ऽग्निमान् । क २९,८ ।
११६. सर्वो हि पुरुष आर्तस्सर्वो बुभूषति । मै २,४,१; काठ १२,१० ।
११७. स वाऽ अयं पुरुषः सर्वासु पूर्षु पुरिशयः । माश १४,५,५,१८ ।
११८. सौम्यो वै देवतया पुरुषः । तैसं २,१,४,३; २,१०,३; तै १,७,८,३ ।
११९. हिरण्मयं पुरुषमुपदधाति यजमानलोकस्य विधृत्यै । तैसं ५,२,७,२ ।
१२०. हिरण्यगर्भस्समवर्तताग्र इति पुरुष ५ हिरण्ययमुपदधाति, यजमानलोकमेवैतेन दधार (दाधार [क.]) । काठ २०,५ क ३१,७ (तु. तैसं ५,२,७,२; मै ३,२,६) ॥ [°ष- अक्षिति- ३; अग्नि- ५६९;५७०; अग्निचयन- १३; अमृत- १८; अमेध्य- ३; आकाश- १२; आत्मन्- ८८; आदित्य- ३४१;३६७; आनुष्टुभ-२; उद्गीथ-५; एकविंश-१४;१९; ऐन्द्र-५०; औष्णिह-१; ककुभ्- ६; ७; गायत्र- २५; तन्द्र- २; त्रिरात्र- ९; त्रिवृत्- १४; त्रैष्टुभ- १७; द्विपाद्- ४; द्विप्रतिष्ठ-; नद- १; नारायण- १; पंक्ति- १८; पञ्चविंश- १४; १५; पञ्चविंशतिरात्र-; पयस्- १७; पशु- १९;४५;२०५;२२२-२२३;२२४;२२५;३२६; पांक्त- ९;१४; पान्त- २; पाप्मन्-२१ द्र. ] ।

पुरुष-कपाल- द्वे वै पुरुषकपाले । कौ ३०,४ ।

पुरुष-मेध-

१. अश्वमेधात्पुरुषमेधः । गो १,५,७ ।
२. इमे वै लोकाः पुरुषमेधः । माश १३,६,१,९ ।
३. तस्य (पुरुषस्य वायोः) यदेषु लोकेष्वन्नं तदस्यान्नं मेधस्तद्यदस्यैतदन्नं मेधस्तस्मात्पुरुषमेधो ऽथो यदस्मिन्मेध्यान्पुरुषानालभते तस्माद्वेव पुरुषमेधः । माश १३,६,२, १ ।
४. पुरुषं वै देवाः पशुमालभन्त तस्मादालब्धान्मेध उदक्रामत्सोऽश्वं प्राविशत् । ऐ २,८ ।
५. सः (प्रजापतिः) पुरुषमेधेनेष्ट्वा विराडिति नामाधत्त । गो १, ५,८ ।
६. सर्वं पुरुषमेधः । माश १३, ६, १, ६ ॥ [°ध- अग्निहोत्र- २९; नारायण- २ द्र. ] ।

पुरुष-राज- पुरुषराजाय मर्कटः । तैसं ५, ५, ११, १; काठ ४७, १ ।
पुरुष-वत्- यद्वै पुरुषवान्कर्म चिकीर्षति शक्नोति वै तत्कर्तुम् । माश ५, २,५,४ ।
पुरुष-सम्पद्- पुरुषसम्पद्ध ह खलु वा एषा दशाक्षरा विराट् । दश पुरुषे प्राणाः । जै १,२३५ ।
पुरुष-संमित- पुरुषसम्मितो यज्ञः । माश ३, १, ४,२३ ॥ [ °त- पवमान- २२ द्र. ] ।
पुरुषाऽऽयुस्- शतं वर्षाणि पुरुषायुषो भवन्ति । ऐआ २, २, १ ।
पुरूरवस्- आयु- १; २; उत्तरारणि- २; उर्वशी-; पितृ- ६८ द्र.] ।

पुरोडाश-

१. अन्नं वै पुरोडाशः । तैसं ७, १, ९, १ ।
२. अर्धो वा एष यज्ञस्य यत्पुरोडाशः । माश २, २, १, ४ ।
३. आत्मा वै यजमानस्य पुरोडाशः । कौ १३, ५; ६ ।
४. त (देवाः) एतान् पुरोडाशाँ अपश्य ५ स्तानतुसवनं निरवप ५ स्तैः पुरो ऽद ५ हन्,

सवनानि वाव ते पुरोऽकुर्वत, यत् पुरोऽह९ह९स्तत् पुरोडाशानां पुरोडाशत्वम्। काठ २९, १; क ४५,२।

५. ततिर्वै यज्ञस्य पुरोडाशः। कौ १०, ५।

६. तस्य (यज्ञस्य) एतच्छिरः यत्पुरोडाशः। तै ३, २, ८, ३।

७. पशवो वै पुरोडाशाः (पुरोडाशः [तैसं.]) । तैसं ७,१,९,१; तां २१,१०,१०; तै १,८,६,३।

८. पशुर्ह वाऽएष आलभ्यते यत्पुरोडाशः। माश १, २, ३, ५।

९. पशोर्वै प्रतिमा पुरोडाशः। तै ३, २, ८, ८।

१०. पुरोडाशेन वै देवा अमुष्मिँल्लोक आर्ध्नुवन्। तैसं ५, ५, १, ५।

११. पुरोडाशैस्सवनानि (आप्नोति भ्रातृव्यस्य)। काठ १०,१।

१२. पुरोडाशो भवत्यस्थन्वन्तमेवैनं (यजमानं) कृत्वा प्रतिष्ठापयति। काठ १२, १।

१३. पुरो वा एतान्देवा अक्रत यत्पुरोडाशस्तत्पुरोडाशानां पुरोडाशत्वम्। ऐ २, २३।

१४. ब्रह्मवर्चसं पुरोडाशः। काठ २२, १३।

१५. मस्तिष्को वै पुरोडाशः। तै ३, २, ८, ७।

१६. मेधो वा एष पशूनां यत्पुरोडाशः। कौ १०, ५।

१७. यजमानो वै पुरोडाशः। तैसं १, ५, २, ३; जै ३, ११५; तै ३, २, ८, ९; ३, ८, ७।

१८. यत् पुरोडाशस्तेन पौर्णमासम्। जै २,३८।

१९. यत् पुरोडाशैर्माध्यन्दिने सवने (चरन्ति) तेन माध्यंदिनं सवनम्। मै ३, ९, ५।

२०. यथा मस्तिष्क एवं पुरोडाशः। मै ४,१,९।

२१. यद् व्रीहिमयः पुरोडाशो भवति, तेनैव पशुरालभ्यते शान्त्या अनिर्मार्गाय। मै ४, ३,६।

२२. यद् व्रीहिमयः पुरोडाशो भवत्यपिहित्या असुषिरत्वाय। मै ३, १०, २।

२३. यः पुरोडाशं मस्तिष्क९सः। काठ ३४, ११।

२४. योनिर्वै पुरोडाशो रेत आज्यम्। जै २, २८७।

२५. यो मस्तिष्कस्स पुरोडाशः। काठ ३१, ७।

२६. विड्डुत्तरः पुरोडाशः। माश ११, २,७, १६।

२७. शिरो वा एतद्यज्ञस्य यत् पुरोडाशः। मै १,४,८; ४,१,९; काठ २२,१३; ३२,६; माश १, २, १, २।

२८. स (कूर्मरूपेणाच्छन्नः पुरोडाशः) वा एभ्यः (मनुष्येभ्यः) तत्पुरोऽदशयत्। य एभ्यो यज्ञं प्रारोचयत्तस्मात्पुरोदाशः पुरोदाशो ह वै नामैतद्यत्पुरोडाश इति। माश १,६,२,५।

२९. स वा एष पशुरेवालभ्यते यत्पुरोडाशस्तस्य यानि किंशारूणि तानि रोमाणि, ये तुषाः सा त्वग्, ये फलीकरणास्तदसृग्, यत्पिष्टं किक्कसास्तन्मांसं, यत्किंचित्कं सारं तदस्थि, सर्वेषां वा एष पशूनां मेधेन यजते यः पुरोडाशेन यजते। ऐ २, ९।

३०. सो (पुरोडाशः) ऽग्नये ऽभ्रियत यदाग्नेयो ऽष्टाकपालो ऽमावास्यायां च पौर्णमास्यां चाच्युतो भवति, सुवर्गस्य लोकस्याभिजित्यै। तैसं २, ६, ३, ३॥ [°श- आग्नेय- ६; इन्द्र- ६६; कूर्म- १; ४; चरु- १; पशु- ४; २०१; पितृयज्ञ- ३ द.]

पुरोडाश-पङ्क्ति- पञ्च प्रातःसवने पुरोडाशाः— पुरोडाशः, परिवापो, धानाः, करम्भः, पयस्या…सा पुरोडाशपङ्क्तिः । मै ३,१०,५ ।

पुरो-धा- अनूवन्ध्या- १ द्र. ।

पुरोधा-काम- पुरोधाकाम एवैनेन यजेत यदभिभूरिति । जै २,१०५ ।

पुरो-धातृ-

१. द्यौः पुरोधाता । ऐ ८,२७ ।

२. पृथिवी पुरोधाता । ऐ ८,२७ ॥ [ °तृ- अन्तरिक्ष- ६४ द्र. ] ।

पुरोऽनुवाक्या( ऋच्-)-

१. पृथिवीलोकमेव पुरोऽनुवाक्यया ( जयति ) । माश १४,६,१,९ ।

२. प्राण एव पुरोऽनुवाक्या । माश १४,६,१,१२ ।

३. भ्रातृव्यदेवत्या वै पुरोनुवाक्या । तैसं १,६,१०,४ ।

पुरो-रुच्-

१. अथ वै पुरोरुक् प्राण एव । कौ १४,४ ।

२. अथ वै पुरोरुगसावेव यो ऽसौ ( सूर्यः ) तपत्येष हि पुरस्ताद्रोचते । कौ १४,४ ।

३. अथ वै पुरोरुगात्मैव । कौ १४,४ ।

४. तं (यज्ञं) पुरोरुग्भिः (देवाः) प्रारोचयन् ( +यत्पुरोरुग्भिः प्रारोचयंस्तत्पुरोरुचां पुरोरुक्त्वम् [ऐ.] ) । ऐ ३,९; माश ३,९,३,२८ ।

५. पुरोरुग्वै वाक् । कौ १४,५ ।

६. वीर्य्यं वै पुरोरुक् । माश ४,४,२,११ ।

पुरो-वसु- पुरोवसुर्वाक्पाः । तैसं ३,२,१०,२ ।

पुरो-वात-

१. 'ओ श्रावये' ति वै देवाः पुरोवात९ ससृजिरे, 'ऽस्तु श्रौषडि' त्यभ्राणि समप्लावयन्, 'यजे'-ति विद्युतं, 'ये यजामहे' इति स्तनयित्नुं, वषट्कारेणैव प्रावर्षन् । माश १,५,२,१८ (तु. तैसं १,६,११,३-४,५,३,१०,१; मै २,८,१३; जैउ १,३,२,९;३,१;१२,२,१; छांउ २,३,१) ।

२. तस्मात् पुरोवाते वाति वृष्ट्यामाशासन्ते । जै ३,११४ ।

३. स (प्रजापतिः) पुरोवातमेव हिङ्कारमकरोत् । जैउ १,३,२,९ ॥ [°त- अग्नि- ५८५ द्र.] ।

पुरो-हित-

१. अग्निर्वा एष वैश्वानरः पञ्चमेनिर्यत्पुरोहितस्तस्य वाच्येवैका मेनिर्भवति पादयोरेका त्वच्येका हृदय एकोपस्थ एका ताभिर्ज्वलन्तीभिर्दीप्यमानाभिरुपोदेति राजानम् । ऐ ८,२४ ।

२. अथ यदस्य (राज्ञः) अनिरुद्धो वेश्मसु (पुरोहितः) वसति तेनास्य तां शमयति या ऽस्योपस्थे मेनिर्भवति । ऐ ८,२४ ।

३. अर्धात्मो ह वा एष क्षत्रियस्य यत्पुरोहितः । ऐ ७,२६ ।

४. एष उ ह वै द्वितीयो राजा यत् पुरोहितः । जै २,१७१ ।

५. प्रथमः पुरोहितमिति पुर एव वा एनमेतद् दधते । यदग्निमादधते । जै ३,६३ ।

६. ब्राह्मणः क्षत्रियस्य पुरोहितः। जै २,३४०।

७. वय ९ राष्ट्रे जाग्रियाम पुरोहिताः। तैसं १,७,१०,१।

८. वायुर्वाव पुरोहितः। ऐ ८, २७॥ [ °त- अग्नि- १६८; आदित्य- १५९; क्षत्र- ५८; देव- १७२ द्र. ]।

पुलि,लीतत्- अन्तरिक्ष- ६३ द्र.।

पुष्कर-

१. सत्यस्यैव तत् सत्यं यत्पुष्कराणि। जै २,२००।

२. इन्द्रो वृत्र ९ हत्वा नास्तृषीति मन्यमानोऽपः प्राविशत्ता अब्रवीद्बिभेमि वै पुरं मे कुरुतेति स यो ऽपा ९ रस आसीत्तमूर्ध्वं ९ समुदौहंस्तामस्मै पुरमकुर्वंस्तद्यदस्मै पुरमकुर्वंस्तस्मात्पुष्करं पुष्कर ९ ह वै तत्पुष्करमित्याचक्षते परोऽक्षम्। माश ७,४,१,१३।

३. इन्द्रो वृत्रमहंस्तस्येयं ( पृथिवी ) चित्राण्युपैद्रूपाण्यसौ ( द्यौः ) नक्षत्राणामवकाशेन पुण्डरीकञ्जायते यत् पुष्करस्रजं प्रतिमुञ्चते वृत्रस्यैव तद्रूपं क्षत्रम् प्रतिमुञ्चते। तां १८,९,६।

४. ब्रह्म ह वै ब्रह्माणं पुष्करे ससृजे। गो १,१,१६॥ [°र- अप्- १०३ द्र.]।

पुष्कर-पर्ण-

१. अपा ९ ह्येतत् पृष्ठं, योनिरग्नेः। क ३१,७।

२. इयं (+वै [माश.]) पुष्करपर्णम् (पृथिवी)। काठ १९,४; क ३०,२; माश ७,४,१,१२।

३. द्यौः पुष्करपर्णम्। माश ६,४,१,९।

४. न पुष्करपर्णानि हिरण्यं वाधितिष्ठेत् ( आरुणकेतुकचित् )। एतस्याग्नेरनभ्यारोहाय। तैआ १,२६,७।

५. प्रतिष्ठा वै पुष्करपर्णम्। माश ७,४,१,१२।

६. योनिर्वै पुष्करपर्णम्। माश ६,४,१,७; ३,६; ८,६,३,७।

७. वाक् पुष्करपर्णम्। माश ६, ४, १, ७॥ [°र्ण- अग्नि- ६६७; अप्- २५; ६६; ९३; १०३; गन्ध- २; तपस्- २२; दिव्- २८ द्र.]।

पुष्कर-साद- कलविङ्क- २ द्र.।

पुष्कल-,> पौष्कल ( सामन् )-

१. अथैतत्पौष्कलमेतेन वै प्रजापतिः पुष्कलान्पशूनसृजत तेषु रूपमदधाद्यदेतत्साम भवति पशुष्वेव रूपं दधाति। तां ८, ५, ६।

२. तदेतत्पशव्यं साम··· यद्ध पुष्कल आङ्गिरसो ऽपश्यत् तस्मात् पौष्कलम् इत्याख्यायते। जै १, १६०।

३. तान् ( पशून् ) एकरूपान् ( प्रजापतिः ) न व्यजानात् स एतत् पौष्कलं सामापश्यत् तेनैषां रूपाणि व्यकरोत्। ते नानारूपा अभवन्···। एकरूपा ह वाव ते ततः परामु रोहिता एव। जै १, १६०।

पुष्टि-

१. अष्ट्रां वैश्याय ( ददाति ), पुष्टिं तेन परिक्रीणाति। काठ ३७, १।

२. जमदग्निर्वै पुष्टिमपश्यत्, तामात्मन्नधत्त, यत्कर्करिणीः कुरुते, पशुष्वेव पुष्टिं धत्ते। मै ४, २, ९।
३. पुष्टिः खलु वै वाक्। तैसं २, ४, ६, २।
४. पुष्टिः पौष्णः (पशुः)। मै ४, ७, ८।
५. पुष्टिर्वै पूषा (विशः [ऐआ.])। मै ४, २,१०;३,८; काठ ३१,१; ३७,३; क ४७,१; ऐआ १, १, १; तै २,७, २,१; माश ३,१,४, ९।
६. पुष्ट्यै गोपालम्। मा ३०,११।
७. मासि मासि वा एषो (उदुम्बरः) ऽवान्तरमन्येभ्यो वनस्पतिभ्यः पच्यत एतद्धै पुष्ट्या रूपम्। मै २, ५, १।
८. लोमशो भवत्येतद्धै पुष्ट्या रूपम्। मै २, ५, १।
९. वैश्यस्येव रयिः पुष्टिः। जै १, २४३।
१०. स ऽ वत्सर ऋतुभिः संविदानो मयि पुष्टिं पुष्टिपतिर्दधातु। मै २, १३, २३।
११. सरस्वती पुष्टिः पुष्टिपत्नी। तै २, ५, ७, ४।
१२. सरस्वती पुष्टिं पुष्टिपतिः। माश ११, ४, ३, १६।

पुष्टि-काम-

मनुः पुष्टिकामा (पुनराधेयम्) आधत्त, स इमान् पोषानपुष्यत्। मै १,७,२। [°ष्टि- ऊष- ९; पशुमत्- ३; ७ द्र.]।

पुष्टि-वर्धन-

गयस्फानो अमीवहा वसुवित् पुष्टिवर्धनः। सुमित्रः सोम नो भव। तैसं ४, ३, १३, ५।

पूत-भृत्-

१. विश्वेभ्यस्त्वा देवेभ्य इति पूतभृतम् (अभिमृशेत्)। तैसं ३, २, १, ३।
२. वैश्वदेवो वै पूतभृत्। माश ४, ४, १, १२।
३. सुपूतपूः पूतभृति (सोमः)। काठ ३४, १६।

पूतीक-

१. इन्द्रो वृत्राय वज्रमुदयच्छत्। स यत्र यत्र पराक्रमत तन्नाध्रियत। सो ऽब्रवीत्। ऊतिर्वै मे धा इति। तदूतीकानामूतीकत्वम्। यदूतीका भवन्ति। यज्ञायैवोतिं दधति। तैआ ५, २, ९-१०।
२. गायत्री सोममाहरत्तस्या अनुविसृज्य सोमरक्षिः पर्णमच्छिनत्तस्य यो ऽ शुः परापतत्स पूतीको ऽभवत्तस्मिन् देवा ऊतिमविन्दन्नूतीको वा एष यत्पूतीकानभिषुण्वन्त्यूतिमेवास्मै विन्दन्ति। तां ९, ५, ४।
३. तस्य (सोमस्य) ये ह्रियमाणस्या ऽ शवः परापत ऽ स्ते पूतीका अभवन्। तां ८, ४,१।
४. तस्य (सोमाहरणागतस्य गायत्रीरूपस्य श्येनस्य) सोमरक्षिरनुविसृज्य नखमच्छिनत्, ततो यो ऽ ऽ शुरमुच्यत, स पूतीको ऽभवदूतिका वै नामैते, यदूतीकानभिषुण्वन्त्यूतिमेव यज्ञाय कुर्वन्ति। काठ ३४, ३॥ [°क- अर्जुन- २ द्र.]।

## पूतु-द्रु-

१. अग्नेर्वा एतच्छरीरं यत् पूतुद्रु । जै २, २७४ ।
२. स (अग्निः) यां (रात्रिं) वनस्पतिष्ववसत्तां पूतुद्रौ । तैसं ६,२,८,४ ।
३. स (अग्निः) यान्यस्थान्यशातयत तत् पूतुद्र्वभवत् । तैस ६,२,८,५-६ ।

### पौतुद्रव-

अथो खल्वाहुरेते वावैनं (अग्निं) ते ( मृता अग्नेर् ) भ्रातरः परिशेरे यत् पौतुद्रवाः परिधय इति । तैसं ६, २, ८, ६ ।

## पूर्ण-

१. ऊर्जो वा एतद्रूप५ यत्पूर्णम् । मै ३,६,५ ।
२. पूर्ण एष यत् संवत्सरः । जै २, ३९३ ।
३. पूर्णः (पूर्ण इव हि [तैसं., तै.] पूर्णो हि [मै.]) प्रजापतिः । तैसं ५,१,९,१; ४,७,५; मै ३,६, ५; काठ ८,३; १८, १९;२३, २; ३७, ११; क ३५,८; तै २,२,१,२ ।
४. पूर्णमप्रवर्त्ति ब्रह्मेति वा अहमेतम् (आकाशस्थं पुरुषं) उपासे । शांआ ६,८; कौउ ४,८ ।
५. सर्वं वै पूर्णम् । माश ४,२,२,२; ५,२,३,१ ।
६. सर्वमेतद्यत् ( वै तद्यत् [माश ४, २, ३, २] ) पूर्णम् । माश ९, २, ३, ४३ ॥ [°र्ण- आकाश- २ द्र.] ।

## पूर्ण-मास-

१. घ्नन्ति वा एनं (वृत्रं) पूर्णमासे । तै २, ५,२,४-५ ।
२. पूर्णमासे संनयेत् । तै २,५,५,४ ।
३. वर्हिषा ( + वै [काठ.] ) पूर्णमासे व्रतमुपैति (व्रतमुपयन्ति [काठ.] ) । तैसं १, ६, ७, २; मै १,४, ५; काठ ३१, १५ ।
४. यदग्नीषोमीयं पूर्णमासे हविरासीत् तमग्नीषोमीयं पूर्वेद्युः पशुमालभन्त । मै ३,६,१० ।
५. वार्त्रघ्नी ( ऋचौ ) पूर्णमासेऽनूच्येते । तैसं २ ५,२,५ ।
६. वैमृधः पूर्णमासेऽनुनिर्वाप्यो भवति, तेन पूर्णमासः सेन्द्रः । तैसं २,५,४,१ ।
७. सोमः पूर्णमासः । तैसं २,२,१०,२ ॥ [°स- अमावास्या- २; चक्षुस्- ३६; तेजस्- ९ द्र.] ।

### पौर्णमास-

१. अग्नीषोमयोर्वा एतद् भागधेयं यत् पौर्णमासम् ( हविः ) । काठ ७,५ ।
२. अथैष कुसः प्रतिष्ठितो यज्ञो यत्पौर्णमासम् । माश २,५,२,४८; ६,२,२,१९ ।
३. किं देवत्यं पौर्णमासमिति ? प्राजापत्यमिति ब्रूयात् । तैसं २,५,२,७ ।
४. तेषां यत् पौर्णमासमासीत् तमग्नीषोमीयं पशुमकुर्वत । यः पूर्वेद्युरालभ्यते । क ३६,४ ।
५. पौर्णमासेनैव वज्रं भ्रातृव्याय प्रहृत्य···देवताश्च यज्ञं च भ्रातृव्यस्य वृङ्क्ते । तैसं २,५,४,२ ।
६. प्रतिष्ठा वै पौर्णमासम् । कौ ५,८; १८,१४; गो २,१,२६ ।
७. यत् पुरोडाशस्तेन पौर्णमासम् । जै २,३८ ।
८. वार्त्रघ्नं वै पौर्णमासं ( हविः ) । इन्द्रो ह्येतेन वृत्रमहन् । माश १,६,४,१२ ।

९. समृतयज्ञो वा एष यद्दर्शपूर्णमासौ । गो २,२,२४ । [°स- अग्नीषोमीय- २;१०; अमावास्या- २; आमावास्य- ३; पाप्मन्-७ द्र.] ।

पौर्णमासी-

१. कामो वै पौर्णमासी । तै ३,१,४,१५ ।
२. तं ( चन्द्रमसं ? ) देवा यागत आप्यायिताः पुनरप्याप्याययन्त स पूर्णः पौर्णमासीमुपावसत्तत्पौर्णमास्याः पौर्णमासीत्वम् । काठसं २३ : १० ।
३. तस्य ( संवत्सरस्य ) एते प्राणा यत् पौर्णमास्यः । जै २,३९३ ।
४. पौर्णमासीमेव यजेत भ्रातृव्यवानामावास्याया ँ हत्वा भ्रातृव्यं नाऽऽप्यायगति । तैसं २, ५,४,३ ।
५. पौर्णमास्यनुमतिः । तैसं ३,४,९,६ ।
६. प्रजापतिरेष यत् संवत्सरः । तस्यैते प्राणापाना यत् पौर्णमास्यश्चामावास्याश्च । जै २,३९४ (तु. जै २,३९३) ।
७. प्राणभाजना वै पौर्णमासी । जै २,३९४ ।
८. पौर्णमास्यः प्रतिहारः । ष ३,१ ॥ [°सी- अग्नि- २४; अपान-भाजना-; अमावास्या- १५; १७-२०; २६; २९; चन्द्र- १; दीक्षा- १९ द्र.] ।

पूर्णाऽऽहुति-

१. इयं ( पृथिवी ) वै पूर्णाहुतिः । माश १३,१,८,८; तै ३,८,१०,५ ।
२. सर्व्वं वै पूर्णाहुतिः । तै ३,८,१०,५ ॥

पूर्व ( अहन्-)- ब्रह्म वै पूर्व्वमहः । तां ११,११,९ ।

पूर्व-चित्ति- दिव्- १०१ द्र. ।

पूर्व-तिथि- >पौर्वतिथ (सामन्)- तदेतत् पशव्यं साम । ······यद्‌ पूर्वतिथिरार्चेनानसोऽपश्यत् तस्मात् पौर्वतिथमित्याख्यायते । जै १,२२७ ।

पूर्व-पक्ष (शुक्लपक्ष-)-

१. अग्नीषोमीयया पूर्वपक्ष उपतिष्ठेत । काठ ७,५ ।
२. अहर्वै पूर्वपक्षो रात्रिरपरपक्षः । जै २, ९८ ।
३. पूर्वपक्षो राका । तैसं ३,४,९,६ ।
४. सञ्ज्ञानं विज्ञानं दर्शादृष्टेति । एतावनुवाकौ पूर्वपक्षस्याहोरात्राणां नामधेयानि । तै ३,१०, १०,२ । [ °क्ष- ऊर्ध्व,र्ध्वा- २२ द्र. ] ।

पूर्व-वाह्-

न्याहवनीयो गार्हपत्यमकामयत । नि गार्हपत्य आहवनीयम् । तौ विभाजं नाशक्नोत् । सोऽश्वः पूर्व्ववाड् भूत्वा प्राञ्चं पूर्व्वमुदवहत् । तत्पूर्व्ववाहः पूर्व्ववाट्त्वम् । तै १, १,५,६ । [ °वाह्- अग्नि- २१० द्र. ] ।

पूर्वाऽऽहुति- अग्नि- २७१; अग्निहोत्र- २० द्र. ।

पूर्वाऽह्ण-

स ह पूर्वाह्ण एव देवानां समित्यामास । जै ३, २७१ । [ °ह्ण- अहन्- ११; पुण्याह- २ द्र. ] ।

पूषन्-

१. अयं वै पूषा योऽयं ( वातः ) पवते । एष हीद ँ सर्वं पुष्यति । माश १४, २, १,९; २,३२ ।

२. अश्विभ्यां पूष्णे पुरोडाशं द्वादशकपालं निर्वपति । तैसं १,८,१९,१ ।

३. असौ वै पूषा यो ऽसौ ( सूर्यः ) तपति । कौ ५,२; गो २,१,२० ।

४. आविन्नः पूषा विश्ववेदाः । तैसं १,८,१२,२ ।

५. इयं पृथिवी वै पूषा [(+प्रपथे ⌊पातु⌋ काठ ७,९)] । मै २, ५, ५; ३, ७,६; काठ ७, ९; क ३७,४; तै १, ७,२,५; माश ६, ३,२,८; १३, २,२, ६;४, १,१४ (तु. काठ ७, ११; क ६,१; माश २,५,४,७; ३, २, ४,१९) ।

६. एवा हि पूषन्नित्यजाविकमेवैतत् । जैमि ३,१०९ ।

७. ततो वै पूषोदतिष्ठत् सेयं दिक् तैआ १,२३,६ ।

८. तस्मादाहुरदन्तकः पूषा पिष्टभाजन इति ( °कः पूषेति ⌊माश.⌋) । गो २, १, २; माश १,७,४,७ ।

९. तस्माद्यं पूष्णे चरुं कुर्वन्ति प्रपिष्टानामेव कुर्वन्ति यथादन्तकायैवम् । माश १, ७,४,७ ।

१०. तस्य ( पूष्णः ) दन्तान्परोवाप तस्मादाहुरदन्तकः पूषा करम्भभाग इति । कौ ६,१३ ।

११. त्वं पूषा विधतः ( अग्ने ) पासि नु त्मना । तैसं १, ३,१४, १; तै ३,११,२,१ ।

१२. पूषण ँ वनिष्ठुना ( प्रीणामि ) । मै ३,१५,९ ।

१३. पूषणं दोर्भ्याम् ( प्रीणामि ) । मै ३, १५,३ ( तु. मा २५,३ ) ।

१४. पूषणं प्रतिष्ठामभ्यसृजन्त । काठ ३५,२० ।

१५. पूषा गा अन्वेतु नः पूषा रक्षत्वर्वतः । पूषा वाज ँ सनोतु नः । काठ ४,१५ ।

१६. पूषा ऽपोषयत् । तै १,६,२,२ ।

१७. पूषा प्रजनयिता ( प्रतिग्रहीता ⌊मै.⌋ ) । मै ३,६,९ काठ १०,११; १२,१३ ।

१८. पूषा प्रपिष्टभागोऽदन्तको हि । तैसं २,६,८,५ ।

१९. पूषा (श्रियः) भगम् ( आदत्त ) । माश ११,४,३,३ ।

२०. पूषा भगं भगपतिः । माश ११,४,३,१५ ।

२१. पूषा (+ वै देवानाम् ⌊माश ५,३,१,९⌋ ) भागदुघः । माश ३,९,४,३ ।

२२. पूषा भागदुघोऽशनं पाणिभ्यामुपनिधाता । माश १,१,२,१७ ।

२३. पूषा मा प्रपथे पातु, पूषा मा पशुपाः पातु, पूषा माऽधिपतिः पातु । काठ ७,२ ।

२४. पूषा रेवत्यन्वेति पन्थाम् । तै ३,१,२,९ ।

२५. पूषा (+वा इन्द्रियस्य ⌊तैसं.⌋) वीर्यस्यानुप्रदाता । तैसं २,२,१,४; मै २,१,१; काठ ९,१७ ।

२६. पूषा विशां विट्पतिः । तै २,५,७,४ ।
२७. पूषा विश्ववेदाः । मै २,६,९ ।
२८. पूषा वै पथीनामधिपतिः । माश १३,४,१,१४ ।
२९. पूषा वै श्रोण्यस्य भिषक् । तै ३,९,१७,२ ।
३०. पूषा सोमक्रयण्याम् । तैसं ४,४,९,१; काठ ३४,१४ ।
३१. पूषा स्वगाकारैः (स्वगाकारेण [तैआ.]); (स्वाहाकारैः [मै.]) (सहागच्छतु) । मै १, ९,२; काठ ९,१०; क ४८,३; तैआ ३, ८,२ ।
३२. पूषा हि सनीनामीशे । काठ २३,६ ।
३३. पूष्ण एकादशकपालः । मै २,६,१३ ।
३४. पूष्णः करम्भः । तै १,५,११,३; माश ४,२,५,२२ ।
३५. पूष्णः पोषेण मह्यं दीर्घायुत्वाय शतशारदाय शत ँ शरद्भ्य आयुषे वर्चसे । तै १,२,१,१९ ।
३६. पूष्णे प्रपथ्याय स्वाहा, पूष्णे नरन्धिषाय स्वाहा । काठ ४३, ५ ।
३७. पूष्णेऽविम् । तैआ ३,१०,३ ।
३८. पूष्णे शरसि (°शरसे [तैआ]) स्वाहा । मै ४,९,९; तैआ ४,१०,३; १६,१; ५,८,७ ।
३९. पूष्णो नवमी । मै ३,१५,४ ।
४०. पूष्णो रेवती (नक्षत्रम्) । गावः परस्ताद्वत्सा अवस्तात् । तै १,५,१,५ ।
४१. पूष्णो वनिष्ठुः । काठ ५३,७ ।
४२. पूष्णो हस्ताभ्याम् (त्वाऽऽददे) । काठ १,९; तै २,६,५,२ ।
४३. प्रजनन ँ वै पूषा । मै ४,७,८; माश ५,२,५,८ ।
४४. प्रजापतिः पशून् सृष्ट्वा तेषां पूषणमधिपामकरोत् । काठ १०,११ ।
४५. प्रतिष्ठा पूषा । तैसं ५,३,४,४; काठ २१,१ ।
४६. यास्ते पूषन्नावो अन्तः समुद्रे हिरण्ययीरन्तरिक्षे चरन्ति । ताभिर्यासि दूत्य ँ सूर्यस्य कामेन कृतः श्रव इच्छमानः । मै ४,१४,१६ ।
४७. योषा वै सरस्वती वृषा पूषा । माश २,५,१,११ ।
४८. रेवती नक्षत्रं, पूषा देवता । तैसं ४,४,१०,३; मै २,१३,२० ।
४९. सरस्वत्यै पूष्णे अग्नये स्वाहा । तैसं १,२,२,१; मै १,२,२; काठ २,२ ।
५०. स शौद्रं वर्णमसृजत पूषणमियं (पृथिवी) वै पूषेय ँ हीद ँ सर्वं पुष्यति यदिदं किं च । माश १४,४,२,२५ ।
५१. स्वस्ति नः पूषा विश्ववेदाः । तैआ १, १,१ ॥ [°षन्- अदिति- ३१; अध्वन्- १; २; अन्तरिक्ष- ४५; अश्व- २९; अश्विन्- ३१; उष्णिह्- २; ऋतु- ७२; गायत्री- ८९; ग्रन्थि- १; दिव्- ८७; पंक्ति- २३; पथिपा-; पथ्या- २; पशु- ९०; ११२; १५७; २२७; २२८;२२९; २३६; पशुमत्- २; पुष्टि- ७ द्र. ]।

पूषण्वत्- करम्भ- २; ३ द्र. ।

पौष्ण-

१. पौष्णः (प्रवर्ग्यः) उदन्तः । तैआ ५,११,४ ।

२. आरण्योऽजो नकुलश्शका ते पौष्णाः । तैसं ५,५,१२,१; मै ३,१४,१३; काठ ७,२ ।
३. पौष्णं चरु॰ श्यामो दक्षिणा । तैसं १,८,८,१ (तु. माश ५,२,१,९) ।
४. पौष्णं चरुं भागदुघस्य गृहे, श्यामो दक्षिणा । तैसं १,८,९,२ (तु. मै २,६,५; ४,३,८)।
५. पौष्णं ( पयः ) उदन्तम् । मै १,८,१० ।
६. पौष्णश्चरुः । तैसं ७,५,२१,१; मै १,१०,१ ।
७. पौष्णश्चरुश्श्यामो दक्षिणा । मै २,६,४; काठ १५,९ ।
८. पौष्णाश्श्येतललामास्तूपराः । काठ ४९,४ ।
९. पौष्णौ रजतनाभी । काठ ४८,३ ।
१०. श्यामः ( पशुः ) पौष्णः ( पौष्णो नाभ्याम् [मै ३,१३,२] ) । मै ३, १३, ८; ४,७,८ (तु. काठ ४८, १ ।
११. स हि पौष्णो यच्छ्यामः (गौः) । माश ५, २, ५,८ ॥ [°ष्ण- अन्नकाम- ४; पशु- २३३; २३४ द्र. ] ।

**पृतना-** युधो वै पृतनाः । माश ५, २, ४, १६ ।

**पृतना-जित्-** यत्पृतनामजयंस्तत्पृतनाजितः पृतनाजित्त्वम् । जयति पृतनां द्विषन्तं भ्रातृव्यं य एवं वेद । जै २, ९१ ।

**पृतना-षाह्-** पशु- २३०; २३१ द्र. ।

**पृतन्यु-** अधस्पदं कृणुतां ये पृतन्यव इत्यधस्पदं कुरुता॰सर्वान्पाप्मन इत्येतत् । माश ८, ६, ३, २० ।

**पृथिवी** (°लोक-,भू-लोक-)-

१. अग्निगर्भा पृथिवी । माश १४, ९,४,२१ ।
२. अग्निना पृथिव्यौषधिभिस्तेनायं लोकस्त्रिवृत् । तां १०,१, १ ।
३. अग्निरिमं लोकम् ( व्युपैत् ) । क ४५, ८ ।
४. अग्निष्टोम इवायम् । जै २, ३१७ ।
५. अथ यत्कपालमासीत्सा पृथिव्यभवत् । माश ६, १, १, ११ ।
६. अद्भिः पृथिवीम् ( अन्वाभवत् ) । काठ ४३, ४ ।
७. अप्रथत पृथिवी । तैसं २, १, २, ३ ।
८. अयं एवर्त्तनिधनम् । तां २१, २, ७ ।
९. अयं लोक ऋग्वेदः । ष १, ५ ।
१०. अयं (+वै माश १, ८, २, ११; ९, २, २९) लोको बर्हिः । माश १, ४, १,२४ ।
११. अयं वै प्रजापतेर्विभान्नाम लोकः । तैसं १, ७, ५, २ ।
१२. अयं वै लोक आयुः (एवश्छन्दः [माश.]) । जै २, १६६ माश ८,५,२, ३ ।
१३. अयं वै लोकः पुरुषस्यौकः । जै २, ३८५ ।
१४. अयं वै लोकः प्रातःसवनम् । माश १२, ८, २, ८; गो २, ३,१६ ।
१५. अयं वै लोकः सुक्षितिः अस्मिन्हि लोके सर्वाणि भूतानि क्षियन्ति । माश १४, १, २, २४ ।

१६. अयं वै लोको दक्षिणं हविर्धानम् । कौ ९, ४ ।
१७. अयं वै लोको भद्रः (भर्गः [माश.]) । ऐ १, १३; माश १२, ३,४, ७ ।
१८. अयं वै लोको भूतम् ( भूपतिः [जै २, ४१] ) । तै ३, ८, १८, ५ ।
१९. अयं वै लोको रथन्तरम् (+ छन्दः [माश.]) । ऐ ८, २; माश ८, ५,२, ५ ।
२०. अयं वै लोको विराट् । माश ७, ४, २, २३ ।
२१. अयं वै लोको विशालं छन्दः । माश ८, ५, २, ६ ।
२२. अय ँ हि लोको लोकानां प्रतिष्ठा । काठ ३३, ७ ।
२३. अयमेव लोकः प्रथमा चितिः । माश ८, ७, ४, १२ ।
२४. अयमेव लोकः प्रायणीयः । जै ३, ३७२ ।
२५. अयमेव लोको रथन्तरम् । जै १, २२९ (तु. माश १, ७,२,१७) ।
२६. अयस्मयी पृथिवी । गो २, २, ७ ।
२७. अश्वा ह वाऽइयं भूत्वा मनुमुवाह सोऽस्याः पतिः प्रजापतिः । माश १४, १,३, २५ ।
२८. अस्मिन्नेव लोके प्रायणीयेनातिरात्रेण प्रतिष्ठाय प्रयन्ति । जै २,४४ ।
२९. अस्या ँ हीद ँ सर्व ँ हितम् । माश ७,४,२,७ ।
३०. आग्नेयी पृथिवी । जै ३,१८६ तां १५,४.८ (तु. जैउ १,१२,३,२ ) ।
३१. आपो वा इदमासन् सलिलमेव, स प्रजापतिर्वराहो भूत्वोपन्यमज्जत्, तस्य यावन्मुखमासीत् तावतीं मृदमुदहरत् सेयं (पृथिवी) अभवत् । काठ ८,२ ।
३२. इदं प्रातस्सवनम् । जै ३,५७ ।
३३. इयं यमी । माश ७,२,१,१०; गो २,४,८ ।
३४. इयं (+ हि [माश १,४,२,१९] ) याज्या माश १,७,२,११ ।
३५. इयं (+ वै पृथिवी [ऐ ८,१] ) रथन्तरम् । जै १,८८ ।
३६. इयं वा अग्निहोत्रस्य वेदिः । मै १,८,७ ।
३७. इयं वा (प्रजापतेः) अन्नादी ( तनूः ) । कौ २७,५ ।
३८. इयं वाऽअविरिय ँ हीमाः सर्वाः प्रजा अवति । माश ६,१, २, ३३ ।
३९. इयं वाऽअस्य सर्वस्य प्रतिष्ठा । माश ४,५, २,१५ ।
४०. इयं वामभृत् । माश ७,४,२,३५ ।
४१. इयं वाव ( वै [मै.] ) प्रजापतिस्तस्या एष कर्णो यद् वल्मीकः । मै ३, १,३; काठ १९, २ ।
४२. इयं वाव रथन्तरम् । तैसं ३,१,७,२ ।
४३. इयं ( + वै [तैसं.] ) विश्वकर्मा । तैसं ५,६,९,३; मै ४,१,३ ।
४४. इयं विश्वधायाः । काठ ३१,२; क ४७, २ ।
४५. इयं वै चित्रा, यद्वा अस्यां चित्रं भूतमधि प्रजायते तेनेयं चित्रा । तैसं २,४,६, १ ।
४६. इयं वै पृथिवी प्रतिष्ठा । माश १, ९,१,२९;३,११ (तु. मै १, १०,२०; २, ५,२; ऐ ८,१; जै ३,१५५) ।
४७. इयं वै पृथिवी भूतस्य प्रथमजा । माश १४,१,२,१० ।
४८. इयं वै पृश्निः ( +वाग्वा [मै.] ) । मै २, १,८;२,४; तै १,४,१,५ ।

४९. इयं वै प्रजापतिः (+तस्या एतच्छोत्रं यद्‌ वल्मीकः [तैसं.]) । तैसं ५,१,२,५ । क २९,८ ।
५०. इयं वै प्रतिष्ठा जनूरासां प्रजानाम् । माश ३,९,३,२ ।
५१. इयं वै भूमिरस्यां वै स भवति यो भवति । माश ७,२,१,११ ।
५२. इयं वै माता (मा [मै ३,२,९]) । तै ३,८,९,१; माश १३,१,६,१ ।
५३. इयं वै माहिनम् । ऐ ३,३८ ।
५४. इयं वै यज्ञायज्ञीयम् । जै १,१७३ ।
५५. इयं वै रथन्तरम् [+ तस्या असौ वत्सो योऽसौ (आदित्यः) तपति [जै १,३२८]] । मै १, ११,९;३,३,५; क २९,७; कौ ३.५; जै १, २३०;२९२; २, ८५; तां ६, ८,१५; १५, १०, १५; तै १,४,६,२; माश ५,५,३,५; ९,१,२,३६ ष २.२२ ।
५६. इयं वै वरिष्ठा संवत् । माश ६,३,२,२ ।
५७. इयं वै वल्मीकवपा । माश ६,३,३,५ ।
५८. इयं वै वशा पृश्निः । माश १,८,३,१५ ।
५९. इयं वै वशा पृश्निर्यदिदमस्यां मूलि चामूलं चान्नाद्यं प्रतिष्ठितं तेनेयं वशा पृश्निः । माश ५,१,३,३ ।
६०. इयं वै वाग् (+ अदो [अन्तरिक्षम्] मनः [ऐ ५,३३]; माश ४,६,९,१६ ।
६१. इयं वै वारवन्तीयम् । जै ३,१५५ ।
६२. इयं (+उ [जै.]) वै विराट् । तैसं ५ ५,४,१; काठ २५,९; माश १२, ६,१,४०; गो २,६,२; जै २,८५ (तु. माश २,२,१,२०) ।
६३. इयं वै विश्वायुः । तै ३,२,३,७ ।
६४. इयं वै वेदिः (वैश्वानरः [माश १३,३,८,३]) । माश ७,३,१,१५;५,२,३१ ।
६५. इयं वै शक्तिर्यो वा अस्या भूयिष्ठभाग्भवति, स तच्छक्नोति यच्छिक्षति । मै ४,२,९ ।
६६. इयं वै सत्या चर्षणीधृदनर्वा । ऐ ३,३८ ।
६७. इयं वै सरघा । तै ३,१०,१०,१ ।
६८. इयं वै (+पृथिवी [माश.]) सर्पराज्ञी (सार्पराज्ञी [कौ. तां.], +इयं हि सर्पतो राज्ञी [ऐ., कौ. तै.])। मै १, ९, ७; काठ ८, ६; ९, १५; ऐ ५, २३; कौ २७, ४; तां ४,९,६; तै १,४,६,६; माश २,१,४,३०; ४,६,९,१७ ।
६९. इयं वै सविता । तै ३,९,१३,२; माश १३,१,४,२ ।
७०. इय ९ वै सोमस्य योनिरस्याः सोमोऽधि जायते । मै ४,५,५ ।
७१. इयं वै स्वयमातृण्णा (इष्टका) । तैसं ५,२,८,१; काठ २०,६; माश ७,४,२,१ ।
७२. इयं वै स्वर्गस्य लोकस्य प्रतिष्ठा । गो २,६,२ ।
७३. इयं वै होता । तैसं ३,२,९,६ ।
७४. इय ९ हि वनस्पतीना ९ योनिः । मै ३,९,२; ४,५,५ ।
७५. इयती ह वाऽ इयमग्रे पृथिव्यास प्रादेशमात्री तामेमूष इति वराह उज्जघान सो ऽस्याः पतिः प्रजापतिः । माश १४,१,२,११ ।

७६. इयं तर्हि शिथिरा (शिथिला [काठ.]) आसीत्'''(इन्द्रः) तैः (पर्वतैः) इमामदृंहत्। मै १,१०,१३; काठ ३६,७।

७७. इयम् उ वाऽ एषां लोकानां प्रथमासृज्यत। माश ६,५,३,१।

७८. इयम् उ वै यज्ञो ऽस्यां हि यज्ञस्तायते। माश ६,४,१,९।

७९. इयम् एव मही (स्तोत्रियः [जैउ ३,१,४,२]) । जैउ ३,१,४,७।

८०. इयम् एव सत्यमियं ह्येवैषां लोकानामद्धातमाम्। माश ७,४,१,८।

८१. इयं पृथिवी महती। शांआ १,५।

८२. उपहूतं रथन्तरं सह पृथिव्या। माश १,८,१, १९; तै ३,५,८,१।

८३. उपहूता पृथिवी माता। माश १,८,१,४१।

८४. ऊर्वा एषोऽस्या उदैषद् यद् वल्मीकः। मै १,६,३।

८५. एका वा इयम्। मै ४,८,५।

८६. एतद्वा अस्या अनभिमृतं यद्वल्मीकः। मै १,६,३।

८७. एतावती (+ वा इयं [मै.]; वै [तै.]) पृथिवी यावती वेदिः। मै ४, ७,९; काठ २५,४; ३७, १६; तै ३, २, ९,१२ (तु. माश १,२,५,७)।

८८. एतावती वा इयं पृथिव्यासीद्यावत्युत्तरवेदिः। काठ २५,६।

८९. एतावद्वा अस्या अनभिमृतं यावद्वेदिः परिगृहीता। मै १,६,३।

९०. एष वै प्रतिष्ठा वैश्वानरः (यत् पृथिवी)। माश १०.६,१,४।

९१. एषा वराहाय विम्रदते। मै १, ६, ३।

९२. घर्म या ते पृथिव्यां शुग्या पृथिव्यां यान्नौ या रथन्तरे या गायत्रे छन्दसीयं ते तामवयजे। मै ४,९,९।

९३. चरुणा ऽस्मिन् ( पृथिवीलोक आर्ध्नुवन् देवाः )। तै ५,५,१,५।

९४. चित्राविहितेयम्। तै २,५,२,५।

९५. जानुदघ्नं खेयमेतावती (? तावद्) वा अस्याः पृथिव्या जीवं यज्ञियम्। मै ३,८,५।

९६. तद् यद् वै भूः इति तदयं लोकः। जै १,३६४।

९७. तस्माद्योऽस्यै भूयिष्ठं लभते स एव श्रेष्ठो भवति। माश १२, ६,१,४०।

९८. तस्य ते (प्रजापतेः पृथिवी) महिमौषधयो वनस्पतयो रूपमग्निस्ते तेजः। तै ७, ५, १७, १; काठ ४५,१३।

९९. तस्य प्रथमयाऽऽवृतेममेव लोकं जयति यदु चास्मिँल्लोके। तदेतेन चैनं प्राणेन समर्धयति यमभिसम्भवत्येतां चाऽस्मा आशां प्रयच्छति यामभिजायते। जैउ ३,३,१,५।

१००. तस्य (आण्डस्य) यदधरं कपालमासीत्तदेयं पृथिव्यभवत्। जै ३.३६१।

१०१. तस्या अस्यै (पृथिव्यै) समुद्रोऽन्तः। जै १,२९३।

१०२. तस्या एतत्परिमितं रूपं यदन्तर्वेदि, अथैष भूमाऽपरिमितो यो बहिर्वेदि। ऐ ८,५।

१०३. तस्या एष एव नाभिः यत्प्रवर्ग्यः। तैआ ५,९,७।

१०४. तामप्रथयत् सा पृथिव्यभवत्। माश ६,१,१,१५; ३,७।

१०५. तिरश्चीनव ॅश ॅसदस्तिरश्ची हीयम् । मै ३,८,९ ।

१०६. तिष्ठन्नन्वाह, सुवर्गस्य लोकस्याभिजित्या आसीनो यजत्यस्मिन्नेव लोके प्रतितिष्ठति । तै २,५, ११,१ ।

१०७. तिस्रो वाऽइमाः पृथिव्य इयमहैका द्वे अस्याः परे । माश ५,१,५,२१ ।

१०८. ते देवा अदितिम् ( पृथिवीम् ) अब्रुव ॅस्त्वया मुखेनेमा दिशः प्रजानामेति । मै ३,७,१।

१०९. ते देवाः सलावृकीम् अब्रुवन् ;ः यावदियं ( सलावृकी ) त्रिः समन्तं पर्यैति तदस्माकमिति । सा वा इमां ( पृथिवीं ) त्रिः समन्तं पर्यैत्, तद्वै देवा इमाम् अविन्दन्त। मै ३, ८,१ ।

११०. ते यां प्रायणीयमतिरात्रमुपेत्य वसन्त्यस्मिन्नेव तां लोके ( पृथिव्यां ) वसन्ति । जै २,४३०।

१११. ते ( असुराः ) वा अयस्मयीमेवेमां अकुर्वत । ऐ १, २३ (तु. कौ ८,८)।

११२ त्रिवृद्धीयम् । माश ६, ५, ३, २ ।

११३. दाधार (विष्णुः) पृथिवीमभितो मयूखैः । तैसं १, २, १३,२ ।

११४. द ॅह्स्व पृथिव्याम् । काठ २, १२; क २, ६ ।

११५. ध्रुवो ऽसि पृथिवीं द ॅहेति मध्यमम् ( परिधिं परिदधाति ) । माश ३, ५, २, १४।

११६. नमो मात्रे पृथिव्यै, माहं मातरं पृथिवी ॅहि ॅसिषं, मा मां माता पृथिवी हि ॅसीत्। तैसं १, ८, १५, १-२ ।

११७. नमो मात्रे पृथिव्यै, रथन्तर मा मा हिंसीः । जै १,१२९ ।

११८. नाम मे शरीरं मे प्रतिष्ठा मे । तन्मे त्वयि ( पृथिव्याम् ) । जैउ ३, ५,१, ८ ।

११९. परिमण्डल उ वा ऽ अयं लोकः । माश ७,१,१,३७ (तु. जै १, २५७)।

१२०. पादौ त्वा ऽ एतौ वैश्वानरस्य ( यत् पृथिवी ) । माश १०, ६, १, ४ ।

१२१. पुनः पुनरिव ह्ययं लोकः । तसं ६, ५, ११, १ ।

१२२. पुरा संवत्सरात् पृथिव्यै खातमपि रोहति । तैसं २, ५, १, ३ ।

१२३. पृथिवि मातर् मा मा हि ॅसीः । तैसं ३,३,२,२ ।

१२४. पृथिवी ॅशरीरम् ( अन्ववसृजतात् ) । मै ४, १३, ४; काठ १६, ८; १६, २१ ।

१२५. पृथिवी ॅ शरीरैः ( प्राप्नुहि ) । तैआ ३, ४,१ ।

१२६. पृथिवीं चर्मणा ( प्रीणामि) । काठ ५३, १० ( तु. मै ३,१५, ८) ।

१२७. पृथिवी त्रिहोता स प्रतिष्ठा । तैआ ३, ७, १ ।

१२८. पृथिवीं द ॅह । तैसं १, ३, १, २ ।

१२९. पृथिवी मरः । ऐआ २, ४, १; ऐउ १, १, २ ।

१३०. पृथिवी (+मे [काठ.] ) माता । मै ४, २, १०; काठ ३७, १५ ।

१३१. पृथिवी मे शरीरे श्रिता । तै ३, १०, ८, ७ ।

१३२. पृथिवीं भस्म स्वाहेति ; सदसस्तेन । मै ३, ९, ४ ।

१३३. पृथिवीं मातरं महीम् अन्तरिक्षमुपब्रुवे । तै २, ४, ६, ८ ।

१३४. पृथिवी वशामावस्या गर्भो, वनस्पतयो जरायवग्निर्वत्सो ऽग्निहोत्रं पीयूषः । काठ ३९, ८।

१३५. पृथिवीव सुपदा भूयासम् । ऐआ ५,१, १ ।

१३६. पृथिवी वा अन्नानां शमयित्री । कौ ६,१४ ।
१३७. पृथिवी वेदिः (सावित्री [जैउ. गो.])। तैसं २,६,५,२; मै ४,१, १३; काठ ३१, १०; क ४७, १०; ऐ ५,२८; जैउ ४, १२, १,१; गो १, १,३३; तै ३, ३, ६, २८ ।
१३८. पृथिवी होता (+चतुर्होतॄणाम् [तै.])। मै १, ९, १; काठ ९, ८; तै ३, १२, ५, १; तैआ ३,२,१ ।
१३९. पृथिव्यसि जन्मना वशा, सा ऽग्निं गर्भमधत्थाः । मै २, १३, १५ ।
१४०. पृथिव्यामिमे लोकाः ( प्रतिष्ठिताः ) । जैउ १, २, ३, २ ।
१४१. पृथिव्यायतनं निर्भुजम् । ऐआ ३, १, ३ ।
१४२. पृथिव्या रूपं स्पर्शाः । ऐआ ३, २, ५; शांआ ८, ८ ।
१४३. पृथिव्या ऽसनोत् ( इन्द्रः ) । तैसं ४, ४, ८, १ ।
१४४. पृथिव्येव भर्गः । गो १, ५, १५ ।
१४५. पृथिव्यै नमो ऽग्नये नमो भूताय नमश्चक्षुषे नमः । काठ ११, ६ ।
१४६. पृश्न्या वै मरुतो जाता वाचो वा ऽस्या वा पृथिव्याः । काठ १०, ११ ।
१४७. पृष्ठं वा अयम् अग्निरस्य लोकस्य । जैमि ३,२५२ ।
१४८. प्रजातिर्वा अयं लोकः । कौ १४,३ ।
१४९. प्रजापतिर्यदग्रे व्याहरत् स भूरित्येव व्याहरत् । स इमाम् असृजत । जै १,१०१ ।
१५०. प्रजापतिष्ट्वा सादयतु पृथिव्याः पृष्ठे, भूरसि भूमिरसि प्रथोऽसि पृथिव्यस्यदितिरसि विश्वधाया विश्वस्य भुवनस्य धर्त्री, पृथिवी यच्छ……अग्निष्ट्वाभिपातु । मै २,८,१४ ।
१५१. प्रजापतिस्त्वा (बृहस्पतिष्ट्वा [मै.]) सादयतु पृथिव्याः पृष्ठे……अग्निष्टेऽधिपतिः । मै २,७,१६; काठ १७,१० ।
१५२. प्रतिधिरसि, पृथिव्यै त्वा……पृथिवीं जिन्व । तैसं ४,४,१,१; काठ १७,७ ।
१५३. प्रतिधिरिति पृथिवीम् ( असृजत ) । तैसं ५,३,६,१ ।
१५४. प्रतिष्ठा वा अयं लोकः । कौ ९,४; १४,३ ।
१५५. प्राजापत्यो वा अयं लोकः । तै १,३,७,५ ।
१५६ भिद् इयम् । जै १,३३० ।
१५७. भूमिः, भूः हीयम् । माश ७,४,२,७ ।
१५८. भूरिति वा अयं लोकः । काठसं ४७ : ४; माश ८,७,४,५; तैआ ७,५,१; तैउ १,५,१ ।
१५९. भूरितीमाम् असृजताग्निं रथन्तरं त्रिवृतं गायत्रीम् । काठ ६,७ ।
१६०. भूस्त्वमसीतीमां अब्रवीत् ( प्रजापतिः ) । जै ३,१०६ ।
१६१. मण्डलो ह्ययं लोकः । काठसं १५:११ ।
१६२. महिषी हीयम् । माश ६,५,३,१ ।
१६३. मातेव वा इयं मनुष्यान् बिभर्ति । माश ५,३,१,४ ।
१६४. मृत्युसंयुत इव ह्ययं लोकः । तैसं १,५,९,४ ।
१६५. यच्छरीरं ( पुरुषस्य ) सा पृथिवी । ऐआ २,३,३ ।
१६६. यथेयं पृथिव्युर्वी एवमुरुर्भूयासम् । माश २,१,४,२८ ।

१६७. यदप्रथत तत्पृथिवी। काठ ८,२ ( तु. जैमि ३,३१८ )।
१६८. यदासीनः श ९ सति, तस्मादितःप्रदानं देवा उपजीवन्ति। तैसं ३,२,९,७।
१६९. यदासीनः श ९ सत्यस्या एव तद्धोता नैत्यास्त इव हीयम्। तैसं ३,२,९,६।
१७०. यद्यस्मिन् लोके रथन्तरेणानुविन्दाम······तस्य सोमचमसो दक्षिणा भवति। जै २,१५१।
१७१. यन्मृदियं ( पृथिवी ) तत्। माश १४,१,२,९।
१७२. यमः पृथिव्याः ( अधिपतिः )। तैसं ३,४,५,१ ( तु. मै ३,२,३ )।
१७३. यमो ह वाऽ अस्याः अवसानस्येष्टे। माश ७,१,१,३।
१७४. यानि कृष्णानि, शुक्लानि ( लोमानि ) तान्यस्यै ( पृथिव्यै रूपम् )। माश ३,२,१,३।
१७५. यानि ( पात्राणि ) पुनः प्रयुज्यन्ते, तान्यस्मै लोकाय, यानि न पुनः प्रयुज्यन्ते, तान्यमुष्मै क्षयाय। मै ४,८,८।
१७६. यानि बिसानि तान्यस्यै पृथिव्यै रूपम्। माश ५,४,५,१४।
१७७. या पृथिवी सा कुहूः सो एवानुष्टुप्। ऐ ३,४८।
१७८. यावती वै पृथिवी तस्यै यम आधिपत्यं परीयाय। तैसं ५,२,३,१।
१७९. यावती वै वेदिस्तावती ( °तीयम् [जैउ.]) पृथिवी। माश ३,७,२,१; जैउ १,१,५,५।
१८०. यावद्ध वराहस्य चषालं तावतीयं अग्र आसीत्। मै १,६,३।
१८१. ये ( अग्नयः ) न्यञ्चस् ( चीयन्ते ) तेऽस्मै ( पृथिवीलोकाय )। काठ २१,४।
१८२. ये देवा यज्ञहनो यज्ञमुषः पृथिव्यामध्यासते। अग्निर्मा तेभ्यो रक्षतु। काठ ५,६।
१८३. योनिर् (+वा [माश.]) इयम् (पृथिवी)। जै १,५१३; माश १२,४,१,७।
१८४. रजतैव हीयं पृथिवी। माश १४,१,३,१४।
१८५. रसो वा एषोऽस्या उद्दैषद् यद् वल्मीकः। मै १,६,३।
१८६. राथन्तरो वा अयं ( ह्ययं [तैसं.]) लोकः। तैसं २,५,७,२; तै १,१,८,१।
१८७. वराहो वा अस्यां ( पृथिव्याम् ) अन्नं पश्यति, तस्मा इयं विजिहीते, यद् वराहविहतं भवति, तदेवान्नमवरुन्द्धे। काठ ८,२।
१८८. वसव इमं लोकमजयन्। काठसं ५३:२।
१८९. वसुभ्य एवेमं लोकं प्रायच्छत् (प्रजापतिः)। जै २,१४१।
१९०. वागिति पृथिवी। जैउ ४,११,१,११ ( तु. तैसं ५,६,८,५; माश १४,४,३,११)।
१९१. विश्वायुरसि, पृथिवीं दृ ९ ह (स्कभान [क.])। तैसं १,२,१२,३; मै १,२,८;३,५,८; क २,३
१९२. विष्णोः क्रमोऽसि सपत्नहा, गायत्रं छन्द आरोह पृथिवीमनुविक्रमस्व। काठ १६,८।
१९३. विष्णोर्वै स्तुपोऽछिद्यत, स पृथिवीं प्राविशत्। मै ४,१,२।
१९४. वेदिर्वै परो ऽन्तः पृथिव्याः। तै ३,९,५,५।
१९५. व्यष्कभ्ना रोदसी विष्ण एते दाधर्थ पृथिवीमभितो मयूखैः। मै १,२,९।
१९६. शरीरे ( प्रजापतिः )पृथिवीम् ( आविशयत् )। शांआ ११,१।
१९७. शिथिरा वा इयं अग्र आसीत्, तां प्रजापतिः शर्कराभिरदृ ९ हत्। मै १,६,३।
१९८. श्रीर्वाऽ इयं तस्माद्यो ऽस्यै भूयिष्ठं विन्दते स एव श्रेष्ठो भवति। माश ११,१,६,२३ (तु. ऐ ८,५)।

१९९. श्रोत्र ह्येतत्पृथिव्या यद्वल्मीकः । तै १,१,३,४; तैआ ५,२,९ ।
२००. संवत्सरो वाव गृहपतिरियम् एव गृहपत्नी । जै ३,४ ।
२०१. स (प्रजापतिः) एभिश्चैव पर्वतैर्नदीभिश्चेमाम् अदृहत् माश ११,८,१,२ ।
२०२. सत्यं बृहदृतमुग्रं दीक्षा तपो ब्रह्म यज्ञः पृथिवीं धारयन्ति । सा नो भूतस्य भुवनस्य पत्नी, उरुं लोकं पृथिवी नः कृणोतु । मै ४,१४,११ ।
२०३. सदः पृथिव्याः ( पृथिव्याम् [मै.]) । मै ३,८,१; काठ २४,१० ।
२०४. सदो हीयम् । तैआ ५, ९, ७ ।
२०५. स (प्रजापतिः) भूरित्येवर्ग्वेदस्य रसमादत्त । सेयं पृथिव्यभवत् । तस्य यो रसः प्राणेदत् सोऽग्निरभवद्रसस्य रसः । जैउ १,१,१,३ ।
२०६. समिधो यजत्यस्मिन्नेव लोके प्रतितिष्ठति । तैसं २,६,१,२ ।
२०७. समुद्रो हीमां अभितः पिन्वते । माश ७,४,१,९ ।
२०८. सर्वं वा इयम् । माश ४,२,२,१ ।
२०९. सर्वा वा इयं पृथिवी वेदिः । मै ३,८,३ ।
२१०. स (प्रजापतिः) वराहो रूपं कृत्वोपन्यमज्जत् । स पृथिवीमध आर्च्छत् तस्या उपहत्योदमज्जत् तत्पुष्करपर्णेऽप्रथयत् यदप्रथयत् तत्पृथिव्यै पृथिवित्वम् । तै १,१,३,६-७ ।
२११. सहस्रसम्मितो ह्ययं (वा अयं [तैसं.]) लोकः । तैसं ५,६,८,२; काठ २२,७ ।
२१२. साऽकामयत (पृथिवी) पृश्निं वर्णं पुष्येयमिति । सैतम् मन्त्रमपश्यद् 'आयं गौः पृश्निरक्रमीद्' इति । ततो वा इयं पृथिवी पृश्निं वर्णमपुष्यत् । जै ३,३०४ ।
२१३. सा (अदितिः = पृथिवी) अग्निं गर्भं बिभर्तु । माश ६,५,१,११ ।
२१४. सा पप्रथे पृथिवी पार्थिवाय । गर्भं बिभर्त्ति भुवनेष्वन्तः । ततो यज्ञस्तायते विश्वदानीम् । काठ ३१,१४ ।
२१५. सा ऽप्रथत, सा पृथिव्यभवत्, तत्पृथिव्यै पृथिवित्वम् । तैसं ७,१,५,१ ।
२१६. सा (वाक्) प्रथममहः प्राप्य रथन्तरं भवति । इयमेव पृथिवी । जै २,१ ।
२१७. सुषदां पृथिवीम् (कृधि) काठ १,१२; क १,१२ ।
२१८. सेयं देवानां पत्नी । माश १,३,१,१५;१७ ।
२१९. सेयं प्रतिष्ठा । माश २,२,१,१९ ।
२२०. स्तोमेन वै देवा अस्मिँल्लोक आर्ध्नुवन् । तैसं ५,२,१,६ ।
२२१. स्त्रीयम् । जै १,३३० ।
२२२. स्वधिचरणेयम् (अस्तु) । तैसं ७,५,२०,१ ।
२२३. हविर्यज्ञैर्वै देवा इमं लोकमभ्यजयन् । तां १७, १३ १८ ।
२२४. हृदयं पृथिव्यै (आदित्य आदत्त)। जै २, २६ ॥ [ °वी- अग्नि- ५७; ५८; ७१; ८२; १०३;१०५; १२३;१६९; ३४३; ३६०;३६३; ४०१;४०३;४०४;४०७; ४०८;४१३; ५०१; ५०९; ५६२; ५६६;५७१-५७४; ५७८; ५९४;६०५; ६५३; अग्निष्टोम- ११; ३९; अग्निहोत्र-स्थाली-; अग्निहोत्री- १; अदिति- ४०-४८; ६०; ६१; ६४; अनुमति- ७; अनुष्टुभ्- २३;

२८; अन्तरिक्ष- ६५; ९५; १२०; अन्न- ११०; १४८; १५६; १५७; अप्- १९६; अभिजित् (यज्ञ-)-६; अयस्मयी- १-३; अरति-; अर्क-५; अर्काश्वमेध- १; अवस्यु-२; अश्व- ३३; अषाढा-२; असुर-४;५; अहन्- १०; आकाश-१०; आग्नेय-२७; आयुस्-३०; इला-१; उत्तान- १; उप १; २; उपयाम- १, २; उपांशु- ५; उपोति-; उपोदक-; ऊष-; ऋच्- १३; ३९; ऋजु- २; ऋत- २;३; एकर्च-; ओदन-पचन- १; ओषधि- ७;९; ६२; ककुभ्- १; कद्रू-; काष्मर्यमयी-१; कृषि-१; कृष्णाजिन-२; क्षत्रिय १०, क्षेत्र- २-४; क्षेम-१; गायत्र- २२;३४; गायत्र-छन्दस्- ५; गायत्री- ५;११;१३;३४; गार्हपत्य- ३;५;१२;१५; गृहपति-३; गो- ४; जगत्- १; जगती- २३; जन- ३; जागत- ६; ज्योतिस्- ३; ८; तेजस्- ३१; त्रिष्टुभ्- २४; दधि- १०; दिव्- १८; १९; २२; ४२; ४६; ४७; ५०-५५; ५९; ६५; ६८; ११५; १५१; १६०; दर्वा-; देव- १५;२३; १२२; १४९; देवपात्र- १; देवयजन- २; देवयजनी-; देवरथ- २; धातृ-२; धाय्या- १; धेनु- २; ९; ध्रुव- ४;६;१०; ध्रुवा- ३;४; ५;८;९; १४; नक्षत्र- ३; निधि-; निर्ऋति- ३; पथिपा-, पवमान- ९; पशु- २६; १३७; पुष्करपर्ण- २; पूर्णाहुति- १; पूषन्- ६ द्र. ]।

१पृथु (विप.)-

१. अदो ( द्युलोकः ) वै पृथु यस्मिन् देवाः। माश १,४,१,२७।

२. श्रोत्रं वै पृथु श्रवाय्यम्। श्रोत्रेण हीदमुरु पृथु शृणोति। माश १, ४, ३, ४।

२पृथु- (व्यप.)-

१. अथाब्रवीत् पृथुरश्मिः क्षेत्रकामो ऽहमस्मीति। तस्मै क्षेत्रं प्रायच्छत् (इन्द्रः)। स एव पृथुर्वैन्यः। जै १, १८६।

२. तद्ध पृथुर्वैन्यो दिव्यान् व्रात्यान् पप्रच्छ। जैउ १, २, ३, ९; ११,२,६; १४, ४१।

३. पृथुर्ह वै वैन्यो मनुष्याणां प्रथमो ऽभिषिषिचे। माश ५, ३, ५, ४॥ [°थु- पशु- ३४०; पार्थ- १ (यत्र 'पृथी' इति BI पाभे.) द्र.]।

**पृथुक-** रुद्राणां वा एतद्रूपम् यत्पृथुकाः। तै ३, ८, १४, ३।

**पृदाकु-** इन्द्र- २३९ द्र.।

**पृश्नि-**

१. अन्नं वै देवा पृश्नीति वदन्ति। तां १२, १०, २४।

२. चत्वारो वै पृश्नेः स्तना आसँस्तांस्त्रिभिर्देवेभ्योऽदुहत्, कुशीभिरेको ऽनुनद्ध आसीत्, तं श्वा इन्द्र एवापश्यत्, तेनेन्द्रायैवादुहत्, तद्वा अस्य (इन्द्रस्य) कौशिकत्वम्। मै ४,५,७।

३. त्रयः पृश्नयः सर्वदेवत्याः। काठ ४९, १०।

४. पृश्नयो मारुताः। मै ३, १३, १२।

५. पृश्नियै पयसो मरुतो जाताः। तैसं २, २, ११, ४।

६. पृश्नियै प्रियङ्गवः। तैसं २, २, ११, ४।

७. मारुती पृश्निः पष्ठौही गर्भिणी। मै २, ६, १३; ४, ४, ९।

८. मारुतीं पृश्निं पष्ठौहीम् ( आलभते )। तैसं १, ८, १९, १।

९. यत् पृश्निस्तेन मारुतः। तैसं २, १, ३, ३।

१०. वाग्वै पृश्निः । काठ ३४, १ ।

११. वाग्वै पृश्नि । ··· तदेतत् प्रजननं साम । ··· तद्वन्नाद्यस्यावरुद्धिस्साम । ··· यद्ध भरद्वाजो ऽपश्यत् तस्माद् भरद्वाजस्य पृश्नीत्याख्यायते । जै ३, ७५ ।

१२. व्याघ्ररूपं वै पृश्निः ( ऋषभः ), बिभ्यत्यस्मात् पशवः, कनीया ५ सो ऽस्य पशवो भवन्ति यस्य तादृङ्ङृषभो भवति । मै ४, २, १४ ॥ [°श्नि- अन्न- ३०; ८८; १५८; अमु- ३०; ग्रामणी- ६; जमदग्नि- ७; दिव्- १३६; पृथिवी- ५१; १४६ द्र.] ।

पृश्नि-मातृ-

१. पृश्निमातरो हि मरुतः । मै २, ५, ७ ।

२. मरुतः पृश्निमातर इति वा आहुः । जै २, १७६ ।

पृषत्- पृषन्तः ( पशवः ) हेमन्ताय । मै ३, १३, १९ ।

पृषदाज्य-

१. अथ पृषदाज्यं गृह्णाति, द्वयं वाऽइद ५ सर्पिश्चैव दधि च, द्वंद्वं वै मिथुनं प्रजननं, मिथुनमेवैतत् प्रजननं क्रियते । माश ३,८,४,७; काश ४,८,४,४ ।

२. अन्न ५ हि पृषदाज्यम् । माश ३,८,४,८ ।

३. ऐन्द्राग्नं पृषदाज्यं देवतया । काठ ३६,२ ।

४. पयः पृषदाज्यम् । माश ३,८,४,८ ।

५. प्राणः पृषदाज्यम् । माश ३,८,३,८ ।

६. प्राणापानौ वा एतौ पशूनां यत् पृषदाज्यम् । तैसं ६,३,९,६ ।

७. प्राणापानौ वै पृषदाज्यम् । मै ३,१०,२;४ ।

८. प्राणा वै (°णो हि [माश.]) पृषदाज्यम् । तैसं ३,२,६,२ माश ३, ८,४,८ ॥ [°ज्य- पशु- १५८ द्र.] ।

पृषती (गो-)-

१. पृषती गौर्धेनुर्दक्षिणा, सा हि वैश्वदेवी । मै २,३,२ ।

२. वैश्वदेवी हि पृषती । काठ १२,२ ।

पृषत-

१. पृषतो वैश्वदेवः । काठ ४७,७ ।

२. विश्वेभ्यो देवेभ्यः पृषतान ( आलभते ) । मै ३,१४,९ ।

पृष्टि-

१. उरो वै प्रति पृष्टयः । माश ८,६,२,७ ।

२. पृष्ट्यो वै रेतःसिचौ । माश ७,५,१,१३; ८,६,२,७ ।

पृष्ठ-

१. अन्नं पशवः पृष्ठानि । तां १६,१५,८ ।

२. आत्मा वै पृष्ठानि । कौ २५,१२; तां २२,९,४ ।

३. एतानि खलु वै सामानि यत्पृष्ठानि । तै १,८,८,३ ।

४. एषा ह वा उत्तरावती श्रीर्यत्पृष्ठानि । जै २,४२५ ।

५. ऐन्द्राणि पृष्ठानि । काठ ३४,१६ ।
६. ओज एव ( ओजो वै [तैसं ७,३,७,३] ) वीर्यं पृष्ठानि । तैसं ७,३,५,३; जै २,२९७;३२९ ।
७. चक्रियौ (+वा एते यज्ञस्य यत् [मै.] ) पृष्ठानि । मै ४,७,३; क ४५,८ ।
८. तदाहुर्ज्ञानालोकानि पृष्ठानि । तां १६,१५,९ ।
९. तेजो ब्रह्मवर्च्चसं पृष्ठानि । तां १६,१५,७ ।
१०. ते देवा एतं संवत्सरश्रममपश्यंस्तेनैनदभ्याश्राम्यंस्तदूर्ध्वमुपश्रयत, तद् दिविस्पृष्टमतिष्ठत्, यद्दिविस्पृष्टमतिष्ठत् तत्स्पृष्टानां स्पृष्टत्वं, स्पृष्टानि ह वै नामैतानि, तानि पृष्ठानीति परोक्षमाख्यायन्ते । जै ३, ११७ ।
११. देवता एव पृष्ठैरवरुन्धते । तैसं ७,३,६,१ ।
१२. पञ्चानां त्वा पृष्ठानां धर्त्राय गृह्णामि । काठ ३२,६ ।
१३. पिता वै वामदेव्यं पुत्राः पृष्ठानि । तां ७,९,१ ।
१४. पृष्ठानि वा असृज्यन्त तैर्देवाः स्वर्गं लोकमायन् । तां ७,७,१७ ।
१५. पृष्ठानि वै यज्ञस्य दोहः । काठ ३३,८ ।
१६. पृष्ठैरेवामुष्मिँल्लोक ऋध्नुवन्ति । तैसं ७,३,५,२ ।
१७. पृष्ठैर्वै देवाः स्वर्गं लोकमस्पृक्षन् । कौ २४,८ ।
१८. य उ ह वा एषां लोकानां श्रेष्ठास्ते पृष्ठानि । जै १,२१९ ।
१९. यज्ञो वै पृष्ठानि । काठ ३२,६ ।
२०. रथन्तरं वै पृष्ठानामग्रं ज्यैष्ठ्यम् । जै २,२२७ ।
२१. वर्ष्म (+वीर्यं [तां.] ) वै पृष्ठानि । जै २,३२७ तां ४,८,७;१८,८,८ ।
२२. वीर्यं पृष्ठम् । जै १,३०९ ।
२३. श्रीः पृष्ठानि । ऐ ६,५; गो २,५,११; जै २,३३०; २,८७ ।
२४. श्रीर्वै (+वर्ष्म [जै २,२९७;३०३; ३०४;३१४] ) पृष्ठानि । ऐ ६, ५; गो २, ५,११; जै २,३३७ ।
२५. श्रीर्हि पृष्ठम् । जै १,३१३ ।
२६. षट् (षड् वै [मै १,५,६]; सप्त [माश.] ) पृष्ठानि । तैसं ७,२,१,१, माश ९,५,२,८ ।
२७. सर्वाणि हि पृष्ठानीन्द्रस्य निष्केवल्यानि । तां ७,८,५ ।
२८. स्वराणि पृष्ठानि भवन्ति । कौ २४,८ ।
२९. स्वर्गो ( + वै [काठ ३३, ८; जै २, २९७] ) लोकः पृष्ठानि । तां १६, १५, ६ ॥ [°ष्ठ- अङ्गिरस्- १४; अन्न- ८८; आग्नीध्र- १२; इन्द्रिय- ५; ऊर्ध्व, र्ध्वा- ६; ऋतु- २६; तेजस्- १३; दिश्- ४५; ६१; पशु- ११३; २३२; पितृ- ८ द्र. ] ।

**पृष्ठोक्थ**- देव- ११६ द्र. ।

**पृष्ठ्य** ( षडह्- )—

१. अग्निर्वा एष वैश्वानरो यत्पृष्ठ्यः षडहः । जैमि ३, १५४ ।
२. अयमेव स्पृष्ट्यो योऽयं ( वायुः ) पवते । एतेन हीदं सर्वं स्पृष्टम् । स्पृष्ट्यो ह वै नामैषः । तं पृष्ठ्य इति परोक्षमाचक्षते । सर्वान् कामान् स्पृशति य एवं वेद । जै २, ३१ ।

३. आत्मा वै पृष्ठ्यः षडहः, प्रजा स्वरसामानः। जैमि २,३८८।
४. पिता वा अभिप्लवः पुत्रः पृष्ठ्यः। गो १,४,१७।
५. संवत्सरो वै पृष्ठ्यः षडहः। जै २,३०५।
६. सर्वैः पृष्ठ्यैः (आङ्गिरसाः) स्वर्गं लोकमभ्यस्पृशन्त यदभ्यस्पृशन्त तस्मात्स्पृश्यस्तं वा एतं स्पृश्यं सन्तं पृष्ठ्य इत्याचक्षते परोक्षेण। गो १,४,२३।
७. श्रीः पृष्ठ्यानि। कौ २१,१।
८. स्वर्गो वै लोकः पृष्ठ्यव् षडहः। जै २, ३१३॥ [°ष्ठ्य- अभिप्लव- ८; ऋतु- २७; क्षत्र- ४३; देवयान- १; पशु- ११३ द्र.]।

√पॄ पिपृतां नो भरीमभिरिति बिभृतां नो भरीमभिरित्येतत्। माश ७,५,१,१०।
पेत्व-(अग्निः) यां (रात्रिं) पशुषु (अवसत्), तां पेत्वस्यान्तरा शृङ्गे। तैसं ६,२,८,४।
पैङ्गराज- बृहस्पतये वाचस्पतये पैङ्गराजः। मै ३,१४,१६।
पोतृ (ऋत्विज्)- वासः पोतुः पवित्रत्वाय। मै ४,४,८॥ [°तृ-नेष्टृ- १; उष्णिह्- १४ द्र.।
पोष- दिश्- ५४ द्र.।
पौरुम,द्ग- (सामन्-)-
१. अहर्वा एतदल्लीयमानं तद्रक्षां स्यसचन्त तस्माद्देवाः पौरुमद्गेन रक्षां स्यपाघ्नन्नप पाप्मानं हते पौरुमद्गेन तुष्टुवानः। तां १२,३,१३।
२. तद् यत् (देवा असुरान्) पूर्वेऽमज्जयंस्तद्देव पौरुमुद्गस्य पौरुमुद्गत्वम्। जै ३, ४३।
३. देवाश्च वासुराश्चास्पर्द्धन्त ते देवा असुराणां पौरुमद्गेन पुरो ऽमज्जयन्यत् पुरो ऽमज्जयं स्तस्मात्पौरुमद्गम्। तां १२,३,१४।
पौरुहन्मन ( [<पुरुहन्मन्-] सामन्-)-
१. ते देवा अकामयन्त पूर्वम् एवासुरान् हन्यामेति। त एतत् सामापश्यन्। तेनास्तुवत। तेनासुरान् पूर्वेऽघ्नन्। तद् यत् पूर्वेऽघ्नन् तद्देव पौरुहन्मनस्य पौरुहन्मनत्वम्। जै ३, २१५।
२. पुरुहन्मा वा एतेन वैखानसो ऽञ्जसा स्वर्गं लोकमपश्यत् स्वर्गस्य लोकस्यानुख्यात्यै स्वर्गाल्लोकान्न च्यवते तुष्टुवानः। तां १४, ९,२९।
३. यद् उ पुरुहन्मा वैखानसोऽपश्यत् तस्मात् पौरुहन्मनमित्याख्यायते। जै ३, २१५।
पौर्णमास- पूर्णमास- द्र.। पौर्वतिथ- पूर्वतिथि- द्र.। पौष्कल- पुष्कल- द्र.।
पौष्ण- पूषन्- द्र.

प्र
१. अन्तरिक्षं वै प्र, अन्तरिक्षं हीमानि सर्वाणि भूतान्यनुप्रयन्ति। ऐ २,४१।
२. तद्यत्प्रेति तत्प्राणस्तदयं (भू-) लोकः। जैउ २,३,३,४।
३. प्राणो वै प्र, प्राणं हीमानि सर्वाणि भूतान्यनुप्रयन्ति। ऐ २,४०।
४. प्रे(प्र-इ)ति च वा इदं सर्वम्, ए(आ-इ)ति च। जै १,१८०।
५. प्रे(प्र-इ)ति पशवो वितिष्ठन्तऽ ए(आ-इ)ति समावर्तन्ते। माश १,४,१,६।
६. प्रे (प्र-इ)ति वै प्राण ए(आ-इ)ति उदानः। माश १,४,१,५।
७. प्रे(प्र-इ)ति वै रेतः सिच्यतऽ ए(आ-इ)ति प्रजायते। माश १,४,१,६।

**प्रउग** ( उक्थ-)-

१. आतिच्छन्दसः प्रउगः । कौ २३,६ ।
२. ग्रहोक्थं वा एतद्यत्प्रउगम् । ऐ ३,१ ।
३. तदेतत्पवमानोक्थमेव यत्प्रउगम् । कौ १४,४ ।
४. तस्माद् बह्व्यो देवताः प्रउगे शस्यन्ते । कौ १४,५; २८,९ ।
५. ता अमुतो ऽर्वाच्यो देवतास्तृतीयसवनात्प्रातःसवनमभिप्रायुञ्जत तद्यदभिप्रायुञ्जत तत्प्रउगस्य प्रउगत्वम् । कौ १४,५ ।
६. प्राणाः प्रउगम् । कौ १४,४; २८,९ ।
७. प्राणानां वा एतदुक्थं यत्प्रउगम् । ऐ ३,३ ॥ [°ग- इन्द्र- ३६५ द्र.] ।

**प्रउग-चित्-**

१. प्रउगचितं चिन्वीत भ्रातृव्यवान् । तैसं ५,४,११,१ ।
२. प्रउगचितं चिन्वीत यदि मन्येत पूर्वो मातिक्रान्तो भ्रातृव्य इति । ······उभयतः प्रउगं चिन्वीत यदि मन्येत पश्चान्मे भ्रातृव्य इति । क ३१,१९ । [°चित्- असुर- ५३ द्र.] ।

**प्रकाम-** प्रकामाय रजयित्रीम् ( नियुनक्ति ) । मा ३०,१२ ।

**प्रकाश-** अनुकाश-; अन्तरिक्ष- १६७ द्र ।-

**प्रकेत-**

१. प्रकेत इति रुद्रान् ( असृजत ) । तैसं ५,३,६,१ ।
२. प्रकेतेनादित्येभ्य आदित्याञ्जिन्व । मा १५,६ ।

**प्रक्ष-**( प्रास्रवण-)- एष उ ह वै वाचोऽन्तो यत् प्रक्षः प्रास्रवणः, यत्रो ह वै वाचो ऽन्तस्तत् स्वर्गो लोकः । जै २,२९८ ।

**प्रग-** ये दश प्रगा इम एव ते दश प्राणाः । जैउ १,६,२,३ ।

**प्रगाथ-**

१. तद्यद् (देवाः) गाथायै रसं प्रावृहन्त, तत् प्रगाथस्य प्रगाथत्वम् । स हैष रस एव प्रवृढः । जै ३,४१ ।
२. प्राणापानौ वै बार्हतः प्रगाथः । कौ १५,४; १८,२ ।
३. मनः प्रगाथः । जैउ ३,१,४,३ ।
४. स यदिदं सर्वमभिप्रागाद् यदिदं किञ्च तस्मात्प्रगाथास्तस्मात्प्रगाथा इत्याचक्षत एतमेव (प्राणं) सन्तम् । ऐआ २,२,२ ।
५. सैतमृग् गाथायै रसं प्रावृहत । स एष प्रगाथोऽभवत् । जै ३, ४१ ॥ [°थ- अन्तरिक्ष- ४८; पशु- ११४; १५९ द्र.] ।

**प्र च च** एतद्वै सर्वं स्वस्त्ययनं यत्प्र च च । ऐ ३,२६ ।

**प्रचेतस्-**

१. प्रचेता वो रुद्रैः पश्चादुपदधताम् । तैआ १,२०,१ ।
२. प्रचेतास्त्वा रुद्रैः पश्चात् ( पश्चाद्रुद्रैः [क.]) पातु । तैसं १,२,१२,२; काठ २,९; क २,३; माश ३,५,२,५ (तु. तै. ६, २,७,५) ।

३. इवान्नोऽसि प्रचेताः। तैसं १, ३, ३,१; मै १, २, १२; काठ २,१३; क २,७। [°तस्- अग्नि- ७०९ द्र.]।

**प्रच्छच्छन्दस्-** अन्न- ८९ द्र.।

**प्रजन-** प्रजन इति भूया ँ॑ सस्तस्माद् भूयिष्ठाः प्रजायन्ते। तैआ १०,६२,१।

**प्रजनन-**

१. अतिरिक्त एव वा तन्न्यूनं दधति न्यूने वाऽतिरिक्तं मिथुनत्वाय प्रजननाय। जै १, ३५६।
२. आनुष्टुभो वै प्रजापतिः, प्रजापतिः प्रजननम्। जै २,९५।
३. एतद् वै दैव्यं मिथुनं प्रजननं (+यत् सरस्वांश्च सरस्वती च [जै २, १८५]; +यत्त्रिवृच्च स्तोमो गायत्री च छन्दः [जै २,१४७]; +यद् उभे बृहद्रथन्तरे [जै २,१६२])।
४. त्रीण्यन्यस्यातिरिच्यन्ते, द्वाभ्यामन्य ऊनस्त्रीण्येतानि पुंसोऽतिरिक्तानि यैः स प्रजनयति, द्वे ते स्त्रिया ऊने यतः सा प्रजायते। जै २,२३८।
५. न्यूनं (न्यूनात् [जै २,९३]) प्रजननम्। जै २,८१;१४६।
६. प्रजननं वै रथन्तरम् (वामदेव्यम् [साम] माश.)। जै २, ९३; १४६;१७४;२३९; माश ५,१, ३,१२।
७. प्रजननं वै सोमः। जै ३,१९१।
८. प्रजननं ँ॑ सप्तदशः। काठ २१, १।
९. प्रजननेनैवेमाः प्रजाः (प्रजापतिः) ससृजे······तस्माद्धिमाः प्रजाः प्रजननेनैव प्रजायन्ते। काश ३,१,१२,१०।
१०. प्रजापतिः प्रजा असृजत, तास्स्तोमभागैरेवासृजत, यदेत उपधीयन्ते प्रजननाय। काठ २१,२।
११. प्रजा वै पशवः प्रजननम्। जै २,१०८;१४६।
१२. मध्यत उ वा आत्मनः प्रजननम्। जै २,२९६।
१३. यानि द्वादश (अक्षराणि) प्रजननं तत् जै १,२०४।
१४. संवत्सरो वै प्रजननम्, (+अग्निः प्रजनयिता [काठ., क.])। काठ ७,१५; क ६,५; गो १,२,१५ (तु. तैआ २,१९,२; जै २,९३;१०८ ३,९;४९)॥ [°न- अग्नि- ५९; ५७५;५७६; ऊप- ९; ऋक्सम- १; ४; जगती- ३८; द्वन्द्व- २; पशु- ११५; ३२७; पष्ठौही- ३; पूषन्- ४३ द्र.]।

**प्रजनन-काम-** अथैष वैश्वदेवः। प्रजननकामो हैतेन यजेत। जै २,१४६। [°म- चतूरात्र-४ द्र.]

**प्रजनयितृ-** अग्नि- ५७६ द्र.।

**प्रजा-**

१. अग्नये पुत्रवते पुरोडाशमष्टाकपालं निर्वपेदिन्द्राय पुत्रिणे पुरोडाशमेकादशकपालं प्रजाकामो, ऽग्निरेवास्मै प्रजां प्रजनयति, वृद्धामिन्द्रः प्रयच्छति। तैसं २,२,४,४।
२. अनुतुशाद्धि प्रजाः पशवः प्रजायन्ते। जै ३,६६।
३. अपां यो मध्ये रसस्तेनाहमिमम्···प्रजायै पुष्ट्याभिषिञ्चामि। काठ ३६,१५।
४. अमृडयो दूरेहेतिर्मृत्युर्गन्धर्वस्तस्य प्रजा अप्सरसो भीरवो नाम। मै २, १२,२ (तु. तैसं ३, ४,७,३)।

५. अर्द्धमासशो हि प्रजाः पशव ओजो बलं पुष्यन्ति । तां १०,१,६ ।
६. असन्नाद्धि प्रजाः प्रजायन्ते । तैसं ६,५,६,६ ।
७. आत्मा वै पूर्वमहः, प्रजोत्तरम् । जैमि २,२३५ ।
८. आद्या हीमाः प्रजा विशः । माश ४,२,१,१७ ।
९. आयत्यो (आयास्यो [तै ३,९,११,४]) वै प्रजाः । माश १३,३,४,५ ।
१०. आयुः प्रजानाम् (पञ्चहोता प्रयच्छति) । तैआ ३,११,३ ।
११. आसीनाः प्रजाः प्रजायन्ते । तैसं ५,१,१०,५ ।
१२. इमाः प्रजा अजनयन् मनूनाम् । काठ २१,१४ ।
१३. इमा वैश्वदेवीः प्रजाः । मै १,१०,६ ।
१४. इमा ह वै प्रजा भारतीः । जै ३,६२ ।
१५. ऊनं वै प्रजा उपप्रजायन्ते । काठ ८,८ ।
१६. ऊनमन्यस्यातिरिक्तमन्यस्य, ऊनातिरिक्ताद्धि मिथुनात् प्रजाः पशवः प्रजायन्ते । जै २,८९; ९५; २८८; ३२५ ।
१७. ऊनाद्धि रेतः सिच्यत ऊनात् प्रजाः प्रजायन्ते । जै २,३९३ ।
१८. ऊनातिरिक्तौ मिथुनौ प्रजननी । जै २,८९ ।
१९. एता वै सुवीराः ( प्रजाः ) या अश्रीरेताः सुप्रजा या आद्याः ( प्रजाः ) । तैसं ६,४,१०,५ ।
२०. चातुर्मास्यैः ( प्रजापतिः ) प्रजा असृजत । मै १,१०,५ ।
२१. जघनार्धाद्धि प्रजाः प्रजायन्ते । तैसं ६,४,१,१ ।
२२. जनिता ( प्रजापते ! त्वं ) प्रजानाम् । मै ४,१४,१ ।
२३. तन्तुना प्रजाभ्यः प्रजा जिन्व । मै २,८,८ ।
२४. तस्मात्पश्चाद्वरीयसः प्रजननादिमाः प्रजाः प्रजायन्ते । माश ३,५,१,११ ।
२५. तस्मात्प्रजा दशमासो गर्भं भृत्वैकादशमनु प्रजायन्ते तस्माद् द्वादशमाभ्यतिहरन्ति, द्वादशेन हि परिगृहीताः । तां ६,१,३ ।
२६. तस्मादिमाः प्रजाः पुनरभ्यावर्त्तं ( तस्माद्धिमाः प्रजाः पुनरभ्याकारं [काश.] ) प्रजायन्ते । माश ४, २, ५,८; ३,१,२६; काश ५,३,१,६; २,२२ ।
२७. ता इमा मानवीः प्रजाः । जै ३,९८ ।
२८. ताः प्रजाः प्रजाता न प्रत्यतिष्ठन्, ता वसुकोऽसि वेषश्रिरसि वस्यष्टिरसीत्येवैषु लोकेषु प्रत्यस्थापयत् । तैसं ५,३,६,३ ।
२९. ताः प्रजा मिथुनीभवन्तीर्न प्राजायन्त, ताः स९रोहोऽसि नीरोहोऽसीत्येव प्राजनयत् । तैसं ५,३,६,२-३ ।
३०. दशधा प्रजया हविष्क्रियते । माश १,८,१,३४ ।
३१. देवास्त्वा मन्थिपाः, शुक्रपाः प्रणयन्त्विति या आद्याः, अत्रीः प्रजास्तासामेष योनिस्ता एतमनुप्रजायन्ते । मै ४,६,३ ।
३२. द्वय्यो ह वाऽ इदमग्रे प्रजा आसुः । आदित्याश्चैवाङ्गिरसश्च । माश ३,५,१,१३ ।
३३. न ह्यसुष्काः प्रजाः प्रजायन्ते । काठ २६,७; क ४१,५ ।
३४. न्यूनाद्वाऽ इमाः प्रजाः प्रजायन्ते । माश ११,१,२,४ ।

३५. प्रजा ९ रेतसा ( प्रीणामि ) । मे ३,१५,९ ।
३६. प्रजा अन्तरिक्षम् । काठ २०,११ ।
३७. प्रजा नानारूपाऽश्वेतो रोहितः कृष्णः । जै १,२७८ ।
३८. प्रजानुरूपः । ऐ ३,२३; कौ १५,४; २२,८ ।
३९. प्रजापतिः प्रजा असृजत । ता आश्वेनैवाश्वो भूत्वासृजत । जै ३,१४ ।
४०. प्रजापतिः प्रजा असृजत ता एनमत्यचर ९स्ता अतिचरन्तीर्वरुणेनाग्राहयत् । काठ १३,२ ।
४१. प्रजापतिः प्रजानां प्रजनयिता । जै २,३८८ ।
४२. प्रजापतिर्यत् प्रजा असृजत ता धूर्भिरेवासृजत जै १,९९ ।
४३. प्रजापतिर्ह वा एतत् प्रातःसवने प्रजाः प्रजनयंस्तिष्ठति यदेतद् बहिष्पवमानम् जै १,३१२ ।
४४. प्रजापतेः प्रजया प्रजावान् भूयासम् । काठ ५,५ ।
४५. प्रजाः पशव उक्थ्यानि । जै २,२८८ ।
४६. प्रजा बर्हिः । तैसं २, ६,१,२; मै ३, ८,६ ।
४७. प्रजाभिरग्ने अमृतत्वमश्याम् । तैसं १, ४,४६,१ ।
४८. प्रजा ( +वै [जै २,१४४ ]) मधु । जै १, ८८; ऐआ १,३,४ ।
४९. प्रजां बृहतस्स्तोत्रेण (स्पृणोति) । काठ १४,९ ।
५०. प्रजा वा अप्तुरित्याहुः । गो २,५,९ ।
५१. प्रजा वै पशवः सुम्नम् (स्वर्गो लोकः [जै २,१०३;१०९]) तैसं ५,४,६,६ ।
५२. प्रजा वै पशवोऽ९शवः (सोमांशवः) । मै ३, ९,१ ।
५३. प्रजा वै बर्हिः (भद्रम् [जै.]) तैसं २,६, ५,२; ६,२,४,६; मै १, १०,१८; ४, १,२;१३;८,५; काठ २५,५;२९,९;३१, १; ३६,४; क ३९, २; ४७, १; कौ ५,७;१८,१०; तै १,६,३,१०; माश १,५,३, १६; २,६,१,२३;४४; ४,४,५,१४; गो २, १,२४; जै १, १७२; २, ४१७ ।
५४. प्रजा वै भूतानि ( भूतम् [काश.] ) । काश ४, ५, २,७; माश २, ४,२,१; ३, ५, २, १३; ४,५,३,१ ।
५५. प्रजा वै मतयः । तैआ ५,६, ८ ।
५६. प्रजा वै वर्चः (वाजः[ऐआ.]; वामम् [जै.]) । तैसं ५, ४, ५, ३; मै ३, ३,६; काठ २१,७; ऐआ २,२,२; जै १, १७४ ।
५७. प्रजा वै विश्वज्योतिः । माश ६,५,३,५;७,४,२,२६; ८,३,२,२ ।
५८. प्रजा वै हरितः । ता अयं प्राणः पवमान आविष्टः । जै २,२२९ ।
५९. प्रजा शस्त्रम् । माश ५, २,२,२० ।
६०. प्रजा वै सूनुः । माश ७,१, १,२७ ।
६१. प्रजाः सतोबृहती । गो २,६,८ ।
६२. प्रजा ( वीरः [जै १,९४]; वै स्वादुः [जै २,१४४] ) स्वादु । ऐआ १, ३,४ ।
६३. प्रतिरूपो हैवास्य प्रजायामाजायते नाप्रतिरूपः । शांआ ६, ११; कौउ ४,११ ।
६४. प्राचीन ९ रेतो धीयते प्रतीचीः प्रजा जायन्ते । तैसं ३,२,९,७; ५,२,१०,२ ।
६५. प्राजापत्याः (°त्या वा इमाः [मै.]) प्रजाः । मै १,५,११; तैआ १,२६,४ ।

६६. प्राणं (प्राणापानौ वै [क.]) प्रजा अनु प्रजायन्ते । तैसं ६,५, ८,१; क ४२,२ ।
६७. प्राणात् (+अधि [मै.]) प्रजाः प्रजायन्ते । मै ४,७,४; क ४४,८ ।
६८. बर्हिर्यजति, प्रजामेवावरुन्धे । तैसं २, ६,१,२ ।
६९. ब्रह्मणो वै योनेः प्रजापतिः प्रजा असृजत । मै ४, ७,४ ।
७०. ब्रह्ममुखा वै प्रजापतिः प्रजा असृजत । तैसं ५, २,७,१ ।
७१. महानाम्नीर्वा अनु प्रजाः प्रजायन्ते । जै ३,१०३ ।
७२. माता पूर्वरूपम् । पितोत्तररूपम् । प्रजा ( संहितेति भार्गवः [शांआ ७, १६] ) सन्धिः । प्रजनन १ सन्धानम् । तैआ ७, ३, ३; तैउ १,३,३ ।
७३. मानव्यः प्रजा उच्यन्ते । तैसं १,५,१,३ ।
७४. मानव्यो वै (हि [तैसं ५,१,५,६] प्रजाः । तैसं ३, ४,३,७ ।
७५. मित्रेण च वा इमाः प्रजा गुप्ताः क्रूरेण च, मित्रं मित्रः, क्रूरं वरुणः । काठ ७, ११ ।
७६. मृत्युना प्रजाः (अन्वाभवत् ) । काठ ३५, १५ ।
७७. य एवं वेदाऽस्यस्य प्रजा जायते नाऽऽद्या । तैसं ६,४,१०,५ ।
७८. यजमानं प्रजाः (अनु प्रतितिष्ठन्ति) । तैसं ५,१,३,१ ।
७९. यजमानो वाव पञ्चमी चितिः, प्रजा पुरीषम् । मै ३, ३, ३ ।
८०. यज्ञं वाऽअनु प्रजाः । माश १, ८,३,२७ ।
८१. यज्ञाद्धि प्रजाः प्रजायन्ते । माश ४,४,२,९ ।
८२. यज्ञेन वै प्रजापतिः प्रजा असृजत, ताः स्तोमभागैरेवासृजत । तैसं ५,३,५, ४ ।
८३. यदा हि नग्न ऊरुर्भवत्यथ मिथुनीभवतोऽथ रेतः सिच्यतेऽथ प्रजाः प्रजायन्ते । तैसं ६, ५,८,६-७ ।
८४. यः प्रजया पशुभिर्न न प्रजायेत स द्वादशाहानि बरासीं परिधाय तसं पिबन्नधः शयीत··· ···अविहितो हि वा एषोऽमिथुनो, ऽथैष न प्रजायते, तत्तप एव तप्त्वा विधायात्मानं मिथुनं कृत्वा प्रजया च पशुभिश्च प्रजायते । मै १,९,६ ।
८५. यस्य हि प्रजा भवत्येक आत्मना भवत्यथोत दशधा प्रजया हविष्क्रियते । माश १,८,१,३४ ।
८६. या १ (रात्रीं) सोमे क्रीते (दीक्षितो वसति), प्रजां तया (अवरुन्द्धे) । मै ३,६,३ ।
८७. या (अपः) दिवा, नक्तं गृह्णाति या अत्रीः, आद्याः प्रजास्तासामेता योनिः मै ४,५,१ ।
८८. योनेर्वै प्रजाः पशवः प्रजायन्ते । जै ३.६९ ।
८९. रस इव खलु वै प्रजा । तैसं २,१,७,४ ।
९०. रूपमसि वर्णो नाम बृहस्पतेराधिपत्ये प्रजां मे दाः । तैसं ३,३,५,१ ।
९१. रेतसः प्रजाः प्रजायन्ते । काठसं १५ : १० जै २, ८२; ९५ ।
९२. रेतसो रेतः प्रजाः, प्रजानां रेतो हृदयम् । ऐआ २,१,३ ।
९३. वातः प्राणस्तदयमात्मा·····यच्छा तोकाय तनयाय शं योः प्रजां मे यच्छ । काठ ७,१४ ।
९४. वैश्वदेवीर् (+वा [मै २, २, ५; ३, २] ) इमाः प्रजा । मै ३, १०, ४; ४, ६, ६; ७, १; ८; काठ ७,९; ११,१; ४४,१ ।
९५. वैश्वदेवेन वै प्रजापतिः प्रजा असृजत । मै १,१०,१० ।
९६. वैश्वदेव्यो वै प्रजाः । तैसं ६,५,४,१; तै १,६,२, ५; ७,१०,२ ।

९७. व्यतिषिक्ताद् वै मिथुनात् प्रजाः पशवः प्रजायन्ते । जै २,१०८;१३३;२८७ ।

९८. संवत्सरं हि प्रजाः पशवो ऽनु प्रजायन्ते । तां १०,१,९ ।

९९. संसक्ताद्वै मिथुनात्प्रजाः पशवः प्रजायन्ते । जै २,२८९; ३१० ।

१००. स (मनुः) एतं यज्ञम् ( मनुस्तोमम् ) अपश्यत् । तमाहरत् । तेनायजत । ततो वै स (मनुः) बहुः प्रजया पशुभिः प्रजायत । ता इमा मानवीः प्रजा असृजत । जै २,१०८ ।

१०१. स (प्रजापतिः) ताः (प्रजाः)······असृजत दशमेन च मासा संवत्सरस्य । जै १,६७ ।

१०२. स (अग्निः) पूर्वया निविदा कव्यतायोरिमाः प्रजा अजनयन्मनूनाम् । मै ४,१०,६ ।

१०३. सवितृप्रसूताः (+ खलु वै [मै.]) प्रजाः प्रजायन्ते । मै ४,७,१; काठ २८,७ ।

१०४. सोमो वा आसां प्रजानामधिपतिः । काठ ११,५ ।

१०५. सौमीर् (+वा [मै २,१,६] ) इमाः प्रजाः । मै १, १०,९; ३,१०,४; काठ २६,२; ३६, ३; क ४०, ५ ।

१०६. सौम्या हि देवतया प्रजाः । तैसं ६,४,१,३ ।

१०७. स्थविमतो हि प्रजाः प्रजायन्ते । तैसं ६,४,१,१ ।

१०८. हिंकरोति, प्रजा एव तद् यजमानः सृजते । तैसं २, ५, ७, १ ॥ [ °जा- अंशु- ३; अग्नि- ११४; अनुयाज- ९; अनुरूप- ३; अन्तरिक्ष- ५३; अप्- १६; अयव- २; अयाव- २; अरी-; अवान्तरदीक्षा-; आत्मन्- १७; १९; ३०; आदित्य- १०१; १६८; २७७; आधीत- २; आशिर्-; इन्दु- १; इन्द्र- ३०९; इन्द्राग्नि- १२; इन्द्रिय- १०; इषु- २; उक्थ- १४; उत्तर,रा- ९; उत्तरवेदि- १५; उप ४; उपभृत्- ७; उपांशुपात्र- ३; उपांश्वन्तर्याम- ४; ऊरु- ५; ऐडी-; कुलाय- २; गार्हपत्य- ११; ३१; गौरिवीत- ७; छन्दस्- ५३; ११५; जमदग्नि- १; तन्तु- १-३; तोक-; त्रिवृत्- १८; ४६; दक्षिणतस् १४; दशहोतृ- ९; दशाह- १; देव- २६८; देवयज्या- १; २; द्यावापृथिवी- २२; द्विरात्र- १; नर्य- २; निधन- ९; न्यून- २; पञ्चविंश- १२; परिपति- १; परिवत्सर- ३; पर्जन्य- ११; पवमान- ११; पशु- २३७;२३८; ३२७; पावक- २; प्रजनन- ११ द्र.] ।

प्रजा-काम-

१. चरुर्घृते स्यात् प्रजाकामस्य वा पशुकामस्य वा, मिथुनं वा एतद्यद् घृतं च तण्डुलाश्च, धेन्वा घृतं पयो ऽनडुहस्तण्डुलाः । काठ २२,१३ ।

२. मैत्रावरुणीं द्विरूपामालभेत प्रजाकामः (वृष्टिकामः [तैसं २,१,७,३] ) । तैसं २,१,७,३;४ ।

३. सोमारौद्रं चरुं निर्वपेत् प्रजाकामः । तैसं २,२,१०,३ ॥ [°म-ऐन्द्राग्न- ५; ओषधि- ३८; गार्मुत- २;३; चतुर्होतृ- २०; पशुकाम- ४ द्र.] ।

प्रजा-तन्तु- प्रजातन्तुं मा व्यवच्छेत्सीः । तैआ ७,११,१; तैउ १,११,१ ।

प्रजा-पति-

१. अतिच्छन्दा वै प्रजापतिः । कौ २३,४;८ ।

२. अतिरिक्तो वै प्रजापतिः । जै २,१९२ ।

३. अथ य एतदन्तरेण प्राणः संचरति स एव सप्तदशः प्रजापतिः । माश १०, ४,१,१७ ।

४. अथ यत्परं भाः (सूर्यस्य) प्रजापतिर्वा सः । माश १, ९,३,१० ।

५. अथ यस्स प्राण आसीत्स प्रजापतिरभवत् । जैउ २,१, २,६ ।
६. अथो एष वै प्रजापतिर्योऽसौ (आदित्यः) तपति स एषोऽपहतपाप्मा तपति तस्य छाया नास्ति । जै २, ३७० ।
७. अनिरुक्त उ वै प्रजापतिः । कौ २३,२;६;२९,७; तां ७,८,३; शांश्रा २,१ ।
८. अन्तो वै प्रजापतिः । माश ५, १,३,१३ ।
९. अपरिमितः (°त उ वै [कौ.]; °तो हि [गो.]); (°तो वै [ऐ., गो]) प्रजापतिः । तैसं १,७, ३,२;५,१,८,४; काठ ८,१३;३४,९; क ८,१; ऐ २,१७;६,२; कौ ११,७; गो २,१,७ ।
१०. अपूर्वा (प्रजापतेस्तनूः) तन्मनः । ऐ ५.२५; कौ २७,५ ।
११. अयातयामा (°यामो [काठ ३०,१; क ४६,४]; +हि [तैसं.]) देवानां प्रजापतिः । तैसं २,६,३,२; मै ४,१,१२; काठ ३१,९; क ४७,९ ।
१२. अर्धं ह वै प्रजापतेरात्मनो धैर्यमासीदर्धं साल्व्यम् । मै २,४,२ ।
१३. अर्धं ह प्रजापतेर्वायुरर्धं प्रजापतिः । माश ६,२, २,११ ।
१४. आत्मा वै (ह्ययं [माश ४,६,१,१;११,...]) प्रजापतिः । माश ४,५,९,२;६,१,१;११,५,९,१ ।
१५. आनुष्टुभः (°भो वै [तां.]) प्रजापतिः । तां ४,५,७; तै ३,३,२,१ ।
१६. आपो वा इदमग्रे सलिलमासीत्, तस्मिन् प्रजापतिर्वायुर्भूत्वाऽचरत् । तैसं ७, १,५,१ ।
१७. आपो वा इदमासन् सलिलमेव, स प्रजापतिः पुष्करपर्णे वातो भूतोऽलेलीयत । काठ २२,९
१८. इमे (+वै [जै.]) लोकाः प्रजापतिः । जै ३,१३६; माश ७,५,१,२७ ।
१९. उभयं वैतत्प्रजापतिर्निरुक्तश्चानिरुक्तश्च परिमितश्चापरिमितश्च तद्या यजुष्कृतायै करो॰ यदेवास्य निरुक्तं परिमित ँ रूपं तदस्य तेन संस्करोत्यथ या अयजुष्कृतायै ... निरुक्तमपरिमित ँ रूपं तदस्य तेन संस्करोति । माश ६, ५,३,७ ।
२०. उभयम् (पुमांश्च स्त्री चेति) उ ह वा एतद् भूत्वा प्रजापतिः प्रजज्ञे । जै २,९ ।
२१. ऊनाच्च खलु वा अतिरिक्ताच्च प्रजापतिः प्राजायत । तैसं ७,४,७,३ ।
२२. ऊरू (प्रजापतेर्नक्षत्रियस्य) विशाखे । तै १,५,२,२ ।
२३. एकयास्तुवत प्रजा अधीयन्त, प्रजापतिर् (प्रजानां पतिर् [मै.]) अधिपतिरासीत् । तैसं ३,१०,१; मै २,८,६; क २६,४ ।
२४. एकस्सन् (प्रजापतिः) भूयिष्ठभाग् व्याहृतीनामुतैकस्सन् बहुर्भवति य एवं वेद । काठ ९,१३
२५. एको हि (°क उ वै [कौ २९, ७]; °को वै [मै १, ६,१२; ४, ७,७; तां.]) प्रजापतिः तैसं ७,२,१०,३; मै १,८,४; ३,६,५; काठ ३३, ८; तां १६, १६,४ ।
२६. एतद्वै प्रजापतेः प्रत्यक्षं रूपं यद्वायुः । कौ १९, २ ।
२७. एतद्वै प्रजापतेः शिरो यन्मृगशीर्षम् । माश २, १, २,८ ।
२८. एतां वाव प्रजापतिः प्रथमां वाचं व्याहरदेकाक्षरद्व्यक्षरां ततेति तातेति । तथैवैतत् कु॰ । प्रथमवादी वाचं व्याहरत्येकाक्षरद्व्यक्षरां ततेति तातेति । ऐआ १, ३,३ ।
२९. एष उ एव प्रजापतिर्यो यजते । ऐ २,१८ ।
३०. एष (योऽयं चक्षुषि पुरुषः) प्रजापतिः । जैउ १,१४,२,१०; ४,११,३,१३ ।
३१. एष (चन्द्रमाः) प्रजापतिः । जै २,३ ।
३२. एष प्रजापतिर्यद्धृदयम् । माश १४,८, ४,१ ।

३३. एष वाव द्वादशाहो य एष (सूर्यः) तपत्येष इन्द्र, एष प्रजापतिरेष एवेदं सर्वम्। जै ३,३७२।
३४. एष वै प्रजापतिर्यदग्निः। तै १,१,५,५।
३५. एष वै प्रजापतिर्योऽसौ (आदित्यः) तपति। जै २,३७०।
३६. एष वै प्रजापती रूपेण यत्पूर्णा स्रुक्। मै १,६,७।
३७. एष वै प्रजापतेः प्रत्यक्षतमां यद्राजन्यः। तस्मादेकः सन् बहूनामीष्टे यद्वेव चतुरक्षरः प्रजापति-श्चतुरक्षरो राजन्यः। माश ५,१,५,१४।
३८. एष वै प्रत्यक्षं यज्ञो यत्प्रजापतिः। माश ४, ३,४,३।
३९. एष वै मृत्युर्यत् प्रजापतिः प्रभूमानेव नाम। जै १,२९।
४०. एष (प्रजापतिः) वै वसिष्ठः। माश २,४,४,२।
४१. एष ह प्रजानां प्रजापतिर्यद्विश्वजित्। गो १,५,१०।
४२. एष ह वाव संवत्सरः प्रजापतिरास। जै ३,३७५।
४३. एषा (सुरा) वै प्रजापतेर्वीर्यवती तनूर्वीर्यं प्रजापतिः। मै २,४,२।
४४. ओ श्रावय इति चतुरक्षरम्। अस्तु श्रौषट् इति चतुरक्षरम्। यज इति द्व्यक्षरम्। ये यजामहे इति पञ्चाक्षरं द्व्यक्षरो वषट्कार एष वै प्रजापतिः सप्तदशो यज्ञेऽन्वायत्तः। मै १,४,११।
४५. कः प्रजापतिरिति संवत्सर इति। जै २,४२४।
४६. किक्किटा ते मनः प्रजापतये स्वाहा। तैसं ३,४,२,१।
४७. किं छन्दः। का देवता यस्मादिदं प्राणाद् (शिश्नात्) रेतः सिच्यतऽइत्यतिच्छन्दाश्छन्दः प्रजापतिर्देवता। माश १०,३,२,७।
४८. को वृक इति प्रजापतिरिति, संवत्सर इति, तस्य किं सर्पणमिति, अहोरात्रे इति। जै २,४२४।
४९. चतुर्विंशत्यर्धमासस्संवत्सरः। प्रजापतिः पञ्चविंशः। (देवाः) संवत्सरादेवैनांस् (असुरान्) तत् प्रजापतेरजयन्। जै २,९२।
५०. त ९ (प्रजापतिम्) रुद्रोऽभ्यायत्य विव्याध। माश १,७,४,३।
५१. तदभ्यमृशदस्त्वित्यस्तु भूयोऽस्त्वित्येव तदब्रवीत् (प्रजापतिः) ततो ब्रह्मैव प्रथममसृज्यत त्रय्येव विद्या। माश ६,१,१,१०।
५२. तदेता वाऽअस्य (प्रजापतेः) ताः पञ्च मर्त्यास्तन्व आसन्। लोम त्वङ् मांसमस्थि मज्जा। अथैता अमृता मनो वाक् प्राणश्चक्षुः श्रोत्रम्। माश १०,१,३,४।
५३. तद्यदब्रवीत् (ब्रह्मा) प्रजापतेः प्रजाः सृष्ट्वा पालयस्वेति तस्मात्प्रजापतिरभवत् तत्प्रजापतेः प्रजापतित्वम्। गो १,१,४।
५४. तद्यद् यज्ञे स्तूयते यच्छस्यते यत्प्रचर्यते सा प्रजापतेः सेनास। जै २, ६९।
५५. तद्वै लोमेति द्वेऽअक्षरे। त्वगिति द्वेऽसृगिति द्वे मेद इति द्वे मा ९ समिति द्वे स्नावेति द्वेऽअस्थीति द्वे मज्जेति द्वे ताः षोडश कला अथ य एतदन्तरे प्राणः सञ्चरति स एव सप्तदशः प्रजापतिः। माश १०,४,१,१७।
५६. तपसा वै प्रजापतिः प्रजा असृजत। काठ ६,७।
५७. तपो वै तप्त्वा प्रजापतिर्विधायात्मानं मिथुनं कृत्वा प्रजया च पशुभिश्च प्राजायत। मै १,९,६।

५८. तम् (प्रजापतिम्) अभ्यायत्याविध्यत् (रुद्रः)। ऐ ३, ३३।
५९. तव सम्पदेति प्रजापतिम् (अब्रुवन् देवाः)। जै १,२११।
६०. तवेमे लोकाः प्रदिशो दिशश्च परावतो निवत उद्वतश्च प्रजापते विश्वसृग् जीवधन्य इदं नो देव प्रतिहर्य हव्यम्। मै ४,१४,१।
६१. तस्माऽएतस्मै सप्तदशाय प्रजापतये। एतत्सप्तदशमन्न ऽ समस्कुर्वन्य एष सौम्योऽध्वरोऽथ या अस्य ताः षोडश कला एते ते षोडशर्त्विजः। माश १०,४, १,१९।
६२. तस्मादु प्रजापतिः प्राणः। माश ७,५,१, २१।
६३. तस्माद् यत्किंच प्राजापत्यं यज्ञे क्रियत उपा ऽ श्वेव तत्क्रियतऽहव्यवाड्ढि वाक् प्रजापतय आसीत्। माश १,४,५,१२।
६४. तस्य (प्रजापतेः) यः श्लेष्मासीत्स सार्ध ऽ समवद्रुत्य मध्यतो नस्त उदभिनत्स एष वनस्पतिरभवद्रज्जुदालस्तस्मात्स श्लेष्मणः श्लेष्मणो हि समभवत्। माश १३, ४,४,६।
६५. तस्य (प्रजापतेः) विश्वे देवाः पुत्राः। माश ६,३,१,१७।
६६. तस्य वै प्रजापतेः सव्यं चक्षुरश्वयत्, ततो ये स्तोका अवापद्यन्त, तैरिद ऽ वर्षति। मै ४,६,३।
६७. तस्योखा चोलूखलं च स्तनौ (अग्न्याख्यस्य प्रजापतेः)। तैसं ५,६,९,२।
६८. तां (उखाम्) विश्वैर्देवैर्ऋतुभिः संविदानः प्रजापतिर्विश्वकर्मा विमुञ्चतु। तै ४,२,५,२।
६९. ता (प्रजाः) अस्मात् (प्रजापतेः) सृष्टा अपाक्राम ऽ स्तासान्द्विबिसद् भूम्यादद इति प्राणानादत्त ता एनं प्राणेष्वासेपु पुनरुपावर्त्तन्त। तां ७,५,२।
७०. तानिमांस्त्रीन् लोकान् जनयित्वाभ्यश्राम्यत् (प्रजापतिः)। जै १,३५७।
७१. तान् (अग्निवाय्वादित्यचन्द्रमसः) दीक्षितांस्तेपानानुषाः प्राजापत्याऽप्सरोरूपं कृत्वा पुरस्तात्प्रत्युदैत्तस्यामेषां मनः समपतत्ते रेतोऽसिञ्चन्त ते प्रजापतिं पितरमेत्याब्रुवन् रेतो वा असिचामहा इदं नो मामुया भूदिति। कौ ६,१।
७२. ताम् (प्रादेशमात्रीं पृथिवीम्) एमूष इति वराह उज्जघान सोऽस्याः (पृथिव्याः) पतिः प्रजापतिः। माश १४,१,२,११।
७३. ते ये शतं बृहस्पतेरानन्दाः। स एकः प्रजापतेरानन्दः। तैआ ८,८,४; तैउ २,८,४।
७४. तौ (वाक् च मनश्च) प्रजापतिं प्रश्नमैताम्…स (प्रजापतिः) मनसेऽन्वब्रवीत्, सा वागब्रवीद्-हव्यवाडेवाहं तुभ्यम् (प्रजापतये) असानीति,…तस्माद्यत्किंचोपा ऽ शु क्रियते…प्रजापतये हि क्रियते। मै ४,६,४।
७५. तौ हैतौ प्रजापतेरेव स्तनौ यद् व्रीहिश्च यवश्च। ताभ्यामिमाः प्रजा बिभर्ति। जै ३,३४६।
७६. त्रयस्त्रि ऽ शद् (+वै [तै.]) देवताः प्रजापतिश्चतुस्त्रि ऽ शः। तां १०,१, १६; १२,१३, २४; तै १,८,७,१; २,७,१,३-४।
७७. त्रिर्वा इदं प्रजापतिः सत्यं व्याहरत्। भूर्भुवः स्वरिति। मै १,६,५।
७८. त्वं यज्ञस्त्वं विष्णुस्त्वं वषट्कारस्त्वं रुद्रस्त्वं ब्रह्मा त्वं प्रजापतिः। तैआ १०, ३१,१।
७९. देवासुरा वै संवत्सरे प्रजापतावस्पर्धन्तैपु च लोकेपु। जै २,९१।
८०. द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकवि ऽ श एष प्रजापतिः। तैसं ५, ४,१२,२।

८१. द्वादश वै मासाः संवत्सरस्य पञ्चर्तव एष एव प्रजापतिः सप्तदशः । माश १,३,५,१० ।
८२. न वै प्रजापतिं सर्वैराप्तुमर्हत्येकधैवैनमाप्नोति, नर्चमन्वाह न यजुर्वदति, न वै प्रजापतिं वाचाप्तुमर्हति मनसैवैनमाप्नोति । काठ २९,६; क ४५,७ ।
८३. निष्ठ्या (नक्षत्रम्) हृदयम् (नक्षत्रियस्य प्रजापतेः) । तै १,५,२,२ ।
८४. पञ्चमुखोऽसि प्रजापतिः । शांआ ४,९; कौउ २, ९ । [ब्राह्मणः, राजा, श्येनः, अग्निः, सर्वाणि भूतानि—पञ्च मुखानि] ।
८५. पूर्णया स्रुचा मनसा प्रजापतये जुहोति । काठ ८,३ ।
८६. पूर्णो वै प्रजापतिः समृद्धिभिरूनो व्यृद्धिभिः । काठ ८,११; क ७,८ ।
८७. प्रजननं प्रजापतिः । माश ५,१,३,१० (तु. जै २,१४७) ।
८८. प्रजापतये मनवे स्वाहा । तैसं ४,१,९,१; मै २,७,७ ।
८९. प्रजापतिः खलु वै तस्य वेद यस्यानाज्ञातमिव ज्योगामयति । तैसं २, १, ६,५ ।
९०. प्रजापतिः पशूनसृजत ते ऽस्मात्सृष्टा अपाक्राम ९ स्तानेतेन ( श्यैतेन ) साम्नाभिव्याहरत्ते ऽस्मा अतिष्ठन्त । तां ७, १०, १३ ।
९१. प्रजापतिः प्रजा असृजत ता अस्मै श्रैष्ठ्याय नातिष्ठन्त स आसां दिशां प्रजानाञ्च रसं प्रवृह्य स्रजं कृत्वा प्रत्यमुञ्चत ततो ऽस्मै प्रजाः श्रैष्ठ्यायातिष्ठन्त । तां १६,४,१ ।
९२. प्रजापतिः प्रजाः ससृजानः स व्यस्रंसत, तस्माद् देवता व्युदक्रामंस्तमिन्द्र एव देवतानां नाजहात् स इन्द्रमब्रवीत्, कथं न्वहमितः पुनरन्वाभवेयम्, इति । जै २,४०९ ।
९३. प्रजापतिः प्रजाः सृष्ट्वा रिरिचानो ऽमन्यत, स एता आप्रीरपश्यत्, ताभिरात्मानमाप्रीणीत, यज्ञो वै प्रजापतिर्यद्देता आप्रियो भवन्ति, यज्ञमेवैताभिर्यजमाना आप्रीणीते । मै ३, ९, ६ ।
९४. प्रजापतिः प्रजाः सृष्ट्वा विश्वकर्मा ऽभवत् । ऐ ४, २२ ।
९५. प्रजापतिः प्रजाः सृष्ट्वा व्यस्रंसत संवत्सरः, स छन्दोभिरात्मानं समदधात् । ऐआ ३, २,६ ।
९६. प्रजापतिः प्रणीयमानः (सोमः) । काठ ३४, १५ ।
९७. प्रजापतिः प्रणेता (प्रदाता [काठ.]) । काठ १३,१; तै २,५,७,३ ।
९८. प्रजापतिमु वा ऽअनु सर्वे देवाः । माश १३, ५, ३, ३ ।
९९. प्रजापतिरकामयत प्रजायेयेति, स द्वादशाहेनायजत, तेन प्राजायत । काठ ३४, ८ ।
१००. प्रजापतिरकामयत प्रजाःसृजेयेति, संवत्सरो वै यज्ञो यज्ञः प्रजापतिः । काठ ३५, २० ।
१०१. प्रजापतिरकामयत बहु स्याम प्रजायेयेति । तां ६, १,१; ५,१; ७, ५, १;६,१; १०,३,१ ।
१०२. प्रजापतिरातिच्छन्दसम् (छन्दः) । शांआ ११, ७ ।
१०३. प्रजापतिरानुष्टुभः । जै १, १९७ ।
१०४. प्रजापतिरालब्धो ऽश्वो ऽभवत् । तै ३, ९, २१, १; २२, १; २ ।
१०५. प्रजापतिरिति वा अहमेतं ( शरीरस्थं पुरुषम् ) उपासे । शांआ ६, १६; कौउ ४, १६ ।
१०६. प्रजापतिरुषसं स्वां दुहितरं बृहस्पतये प्रायच्छत् । जै १, २१३ ।

१०७. प्रजापतिरुषसमध्यैत् स्वां दुहितरं तस्य रेतः परापतत्तदस्यां न्यषिच्यत तदश्रीणादिदं मे माऽदुषदिति तत्सदकरोत्पशूनेव । तां ८, २,१० ।

१०८. प्रजापतिरूनातिरिक्तयोः प्रतिष्ठा । ऐ ५, २४ ।

१०९. प्रजापतिरेव चन्द्रमाश्चतुर्थो ब्रह्मा दक्षिणत आस्ते । जै २, २६२ ।

११०. प्रजापतिरेव दशममहः । जै ३, ३०८ ।

१११. प्रजापतिरेव महाव्रतीयमहः । जै २, ४२९ ।

११२. प्रजापतिरेव संवत्सरः । तस्यैते प्राणा यत्पौर्णमास्यः । जै २,३९३ (तु. जै २,३९४) ।

११३. प्रजापतिरेव सप्तदशः (सर्वम् [कौ.]) । कौ ६,१५;२५,१२; जै १,१९५ ।

११४. प्रजापतिरेष यत् प्रातरनुवाकः । जै २, ३७ (तु. कौ ११,७;२५,१०) ।

११५. प्रजापतिर्दीक्षितो मनो दीक्षा । जै २, ५३; ६५ ।

११६. प्रजापतिर्नष्टस्यानुवेत्ता । जै २, १५९; २०२ ।

११७. प्रजापतिर्बन्धुः । तै ३, ७, ५, ५ ।

११८. प्रजापतिर्बृहत् प्रजापतितामेवाश्नुते य एवं वेद । जै ३,२० ।

११९. प्रजापतिर्भूतैः समनमत् । तैसं ७, ५, २३, २ ।

१२०. प्रजापतिर्मनसा ( मनसि [काठ] ) अन्धोऽच्छेतः । तैसं ४, ४, ९,१; काठ ३४,१४ ।

१२१. प्रजापतिर्यज्ञः (योनिः [काठ.]) । काठ ११, ४; १३,१; ऐ २, १७; ४, २६; गो २, ३,८; ४,१२;६,१; जै २,७०; तै ३, २,३,१; माश १,१,१,१३;५,२,१७; ३,२,२,४ ।

१२२. प्रजापतिर्लोकानामभिनेता । जै १, १३९ ।

१२३. प्रजापतिर्वराहो भूत्वा ( अप्सु ) उपन्यमज्जत्, तस्य यावन्मुखमासीत्, तावतीं मृदमुदहरत्, सेयम् ( पृथिवी ) अभवत् । काठ ८,२ ।

१२४. प्रजापतिर्वाऽअग्निः (अनुष्टुप् [जै.]) । जै १,२९०; माश २,३,३,१८ ।

१२५. प्रजापतिर्वा अग्रं ज्यैष्ठ्यम् । जै २,९७ ।

१२६. प्रजापतिर्वाऽअतीमान् ( त्रीन् ) लोकांश्चतुर्थः । माश ४, ६, १, ४ ।

१२७. प्रजापतिर्वा इदमग्र आसीदेक एव । माश ७,५,२,६ (तु. तां १६,१,१) ।

१२८. प्रजापतिर्वा इदमग्र आसीन् नान्यं द्वितीयं पश्यमानस्तस्य वागेव स्वमासीद् वाग् द्वितीया स ऐक्षत हन्तेमां वाचं विसृजे । इयं वावेदं विसृष्टा सर्वं विभवन्त्य एष्यतीति । जै २, २४४ (तु. तां २०,१४,२) ।

१२९. प्रजापतिर्वा इदमासीत्तस्य वाग् द्वितीयासीत्, तां मिथुनं समभवत् सा गर्भमधत्त, सास्माद् ( प्रजापतेः ) अपाक्रामत्, सेमाः प्रजा असृजत, सा प्रजापतिमेव पुनः प्राविशत् । काठ १२,५; २७, १; क ४२, १ ।

१३०. प्रजापतिर्वा इदमेक आसीत्, सोऽकामयत प्रजाः पशून्त्सृजेयेति, स आत्मनो वपामुदखिदत् तामग्नौ प्रागृह्णात्, ततोऽजस्तूपरः समभवत् । तैसं २, १, १, ४ ।

१३१. प्रजापतिर्वा इदमेक एवाग्र आस । सोऽकामयत प्रजायेय भूयान्त्स्यामिति । ऐ २, ३३ (तु. जैउ १,१५,१,१) ।

१३२. प्रजापतिर्वा एक आसीत् सो ऽ कामयत बहुः स्यां प्रजायेयेति, स मनसात्मानमध्यायत्, सो ऽ न्तर्वाणभवत् स विजायमानो गर्भेण्णातास्यत्, स तान्तः कृष्णः श्यावो ऽ भवत्… तस्य वा असुरेवाजीवत्, तेनासुरानसृजत। मै ४, २, १ (तु. तां ४,१,४)।

१३३. प्रजापतिर्वा एक आसीत् सो ऽ कामयत यज्ञो भूत्वा प्रजाः सृजेयेति, स दशहोतार ं यज्ञमात्मानं व्यधत्त, स चित्ति ं स्रुचमकुरुत, चित्तमाज्यं…स दशधात्मानं विधाय मिथुनं कृत्वायतनमैछत् स… तैः (त्रिवृद्भिः प्राणैः) प्रजा असृजत। मै १, ९, ३।

१३४. प्रजापतिर्वा एष वृक्षाणां यद् राज्जुदालः। जै २,२७४।

१३५. प्रजापतिर्वामदेव्यम् (साम)। जै १, १३९; २, १५।

१३६. प्रजापतिर्वाव तत्। आत्मनात्मानं विधाय तदेवानुप्राविशत्। तैआ १, २३, ८।

१३७. प्रजापतिर्वाव महान्। तां ४, १०, २।

१३८. प्रजापतिर्विश्वकर्मा मनो गन्धर्वस्तस्यर्क्सामान्यप्सरस एष्टयः (वह्नयः [तैसं.])। तैसं ३,४,७, १-२; काठ १८,१४ (तु. काठ २०,१; शांआ २, १७)।

१३९. प्रजापतिर्विश्वजित् (°र्विश्वे देवाः [जै.])। कौ २५, ११;१२; १५; जै १, ६।

१४०. प्रजापतिर्वै देवानां वीर्यवत्तमः। माश १३, १,२, ५।

१४१. प्रजापतिर्वै पिता देवानां स जनिता स विभूवसुः। जै ३, १३५।

१४२. प्रजापतिर्वै पृथिव्यै जनिता। माश ७, ३, १, २०।

१४३. प्रजापतिर्वै प्रजाः ससृजानो रिरिचान इवामन्यत। तस्मात्प्राच्यः प्रजा आसुर्नास्य प्रजाः श्रिये ऽ न्नाद्याय तस्थिरे। स ऐक्षतारिक्ष्यहम्। अस्मा ऽ उ कामायासृक्षि न मे स कामः समार्धि। माश ३, ९, १, १-२।

१४४. प्रजापतिर्वै प्रजास्सिसृक्षमाणस्स द्वितीयं मिथुनं ना ऽ विन्दत, स एतद्रूपं कृत्वाङ्गुष्ठेनात्मान ं समभवत्, ततः प्रजा असृजत। काठ १३, ७।

१४५. प्रजापतिर्वै प्रत्नः (बृहदुक्षः [माश.])। जै ३,२८६; माश ४,४,१,१४।

१४६. प्रजापतिर्वै बृहन्विपश्चित्। माश ६, ३, १, १६।

१४७. प्रजापतिर्वै ब्रह्मा (+यज्ञस्य [मै.])। मै १, ११, ७; ४,४, ५; काठ १४, ७; गो २,५,८।

१४८. प्रजापतिर्वै भरतः स हीद ं सर्वं बिभर्ति। माश ५, ८, १,१४।

१४९. प्रजापतिर्वै भुवनस्य पतिः। तैसं ३, ४, ८, ६।

१५०. प्रजापतिर्वै भूतः। तै २, १, ९, ३ (तु. क ४८,१५; तै ३. ७,१,३;२,१)।

१५१. प्रजापतिर्वै मनः। कौ १०, १; २६, ३; तै ३, ७,१,२; माश ४, १,१,२२ सा १,१,१ (तु. माश ८, ५, २, २)।

१५२. प्रजापतिर्वै मनुः स हीद ं सर्वममनुत। माश ६, ६, १, १९।

१५३. प्रजापतिर्वै मूर्धा (यज्ञः [गो., तै])। गो २, २, १८; तै १, ३,१०, १०; माश ८,२, ३,१०।

१५४. प्रजापतिर्वै यदग्रे व्याहरत् स सत्यमेव व्याहरद् एतद्वाव स त्रिर्व्याहरद् भूर्भुवस्व-

रित्येतद्ध वाचस्सत्यम् । काठ ८. ४ ।
१५५. प्रजापतिर्वै युञ्जानः स मन एतस्मै कर्मणेऽयुङ्क्त । माश ६, ३, १, १२ ।
१५६. प्रजापतिर्वै रथन्तरम् (वसिष्ठः [कौ.]) । कौ २५,२; २६, १५; जै १, ३३१ ।
१५७. प्रजापतिर्वैराजम् । तां १६, ५, १७ ।
१५८. प्रजापतिर्वै वाचस्पतिः (वाक्पतिः [माश ३, १, ३, २२]) । माश ५, १,१, १६ ।
१५९. प्रजापतिर्वै वामदेव्यम् ( वामदेवः [शांआ.] ) । जै १, २२९; माश १३, ३, ३, ४; शांआ १, २ ।
१६०. प्रजापतिर्वै विश्वकर्मा । जै २,२३३; माश ७,४, २,५; ८,२,१, १०; ३,१३ ।
१६१. प्रजापतिर्वै विष्टम्भः माश ८, २, ३, १२ ।
१६२. प्रजापतिर्वै वृष्ट्या ईशे । तैसं २, १, ८, ५ ।
१६३. प्रजापतिर्वै व्योमा (व्योम [जै ३, ३०९]) । जै २,८८; माश ८, ४, १, ११ ।
१६४. प्रजापतिर्वै संवत्सरः पंचविंशः । शांआ १, १ (तु॰ जै १, १६७ ) ।
१६५. प्रजापतिर्वै सविता (सुपर्णो गरुत्मान् [माश.]) । तां १६, ५, १७; माश १०, २, २, ४ ।
१६६. प्रजापतिर्वै सोमाय राज्ञे दुहितरं प्रायच्छत्सूर्यां सावित्रीम् । ऐ ४, ७ ।
१६७. प्रजापतिर्वै स्वां दुहितरमध्यैदुषसं तस्य रेतः पराऽपतत् । ते देवा अभिसमगच्छन्त । मै ३, ६, ५ ।
१६८. प्रजातिर्वै ( °र्हि [तां.] ) स्वाराज्यम् । जै २. ८६; तां १९. १३,३;२२,१८,४ ।
१६९. प्रजापतिर्वै हिरण्यगर्भः (हिङ्कारः [तां.]) । तैसं ५, ५,१, २; तां ६, ८,५; माश ६, २,२,५ ।
१७०. प्रजापतिर्हि खलु वा एतत् स्तोत्राणां यद् वामदेव्यम् । यथा ह वा इदं प्रजापतौ सर्वा जातविद्याः प्रतितिष्ठन्त्येवं ह वै वामदेव्ये सर्वाणि स्तोत्राणि प्रतितिष्ठन्ति । जै ३, ३०१ ।
१७१. प्रजापतिर्हि वा इदमग्र एक एवास । माश २, २, ४, १ ।
१७२. प्रजापतिर्हि वा ऽ एष यदꣳशुः ( ग्रहः ) । माश ११, ५, ९, १ ।
१७३. प्रजापतिर्हि वाक् । तै १, ३, ४, ५ ।
१७४. प्रजापतिर्ह्यात्मा । माश ६,२,२,१२ ।
१७५. प्रजापतिर्ह्येष भुवनेषु ज्येष्ठः । जै २,१४४ ।
१७६. प्रजापतिश्चतुस्त्रिꣳशो देवतानाम् । तां १७,११,३;२२,७,५ ।
१७७. प्रजापतिः संवत्सरः ( सदस्यः [गो.]) । ऐ ४,२५; गो २, ५,४; जै २,५६ (तु. काठ १२,५) ।
१७८. प्रजापतिः (+वै [ मै ४, ४,७; १०; ७;६; गो २, २,१३; ५, ८; जै १, १३२ ३४६; २, ६; ८८; ९७; ९९; १४७; १७५; ३१०; ३८६; ३. ३६; तां २, १०, ५; १७,९,४; तै १, ५, १०, ६]) सप्तदशः । तैसं ७,१,१,६; मै १, ११, १०; ४,४, १; काठ १४, ४; २६, ४; ३३, ८; ३४, ९ ।
१७९. प्रजापतिः सप्तदशाक्षरेण सप्तदशꣳ स्तोममुदजयत् । तैसं १,७,११,२ ।
१८०. प्रजापतिः सम्भ्रियमाणः (प्रवर्ग्यः) । तैआ ५, ११, १ ।
१८१. प्रजापतिः सविता भूत्वा प्रजा असृजत । तै १,६,४,१ ।
१८२. प्रजापतिः साम (+स्वरः [प.] ) । तैसं ३, ३,२,१; ष ३, ७ ।

१८३. प्रजापतिः स्वरसामानः । कौ २४,४;५;९ ।
१८४. प्रजापतिः स्वर्गस्य लोकस्याभिनेता (°भिनयिता [जै २,९९]) । जै १,३४६ ।
१८५. प्रजापतिः स्वर्गो लोकः । श्रीस्तत् । जै २,१९५ ।
१८६. प्रजापतेः पुरुषं प्रतिजगृहुषस्सप्तममिन्द्रियस्यापाक्रामत् । काठ ९, १२ ।
१८७. प्रजापते त्वं निधिपाः पुराणो देवानां पिता जनिता प्रजानाम् । पतिर्विश्वस्य जगतः परस्पा हविर्नो देव विहवे जुषस्व । मै ४,१४,१; तै २,८,१,३ ।
१८८. प्रजापतेरक्ष्यश्वयत् । तत् परापतत् । तदपः प्राविशत् । ततोऽश्वस्समभवत् । यदश्वयत् तस्मादश्वः । जै २,२६८ (तु. तैसं. ५,३,१२,१; मै १, ६,४) ।
१८९ प्रजापतेरक्ष्यश्वयत् । तत् परापतत् । सोऽकामयत पुनर्मा चक्षुराविशेदिति । स एतत् (शंशवम्) सामापश्यत् । तेनास्तुत । ततो वै तं चक्षुः पुनराविशत् । अश्व एव शुचिर्भूत्वैनं पुनराविशत् । तज्ज्योतिर्वै चक्षुः । जै ३,१०२ ।
१९०. प्रजापतेरुत्तरा (आहुतिः) । तै २,१,७,१ ।
१९१. प्रजापते रेतः (असि) । मै ४,९,१ ।
१९२. प्रजापते रोहिणी (नक्षत्रम्) । तै १,५,१,१ ।
१९३. प्रजापतेर्वा आमहीयवम् (इदं सर्वम् [जै २,१९३]) । जै २,१९४ ।
१९४. प्रजापतेर्वा एतदुक्थं यत्प्रातरनुवाकः । मै ४, ५,३; ऐ २,१७ ।
१९५. प्रजापतेर्वा एतदुदरं यत्सदः । मै ३,८,९; जै १,७१; तां ६,४,११ ।
१९६. प्रजापतेर्वा एतद्रूपं यत्सक्तवः । तै ३,८,१४,५ ।
१९७. प्रजापतेर्वा एतानि पक्ष्माणि यदश्ववालाः । तैसं ६,२,१,५ ।
१९८. प्रजापतेर्वा एतानि श्मश्रूणि यद्वेदः । तै ३,३,९,११ ।
१९९. प्रजापतेर्वाऽ एतेऽ अन्धसी यत्सोमश्च सुरा च । माश ५,१,२,१० ।
२००. प्रजापतेर्वा एतौ प्राणापानौ यदुत्सेधनिषेधौ । जै ३,२८९ ।
२०१. प्रजापतेर्वा एतौ स्तनौ, यन्नमस्य (प्रजापतेः) देवा उपजीवन्ति वर्षं मनुष्याः । मै १,६,५ ।
२०२. प्रजापतेर्वा एष स्तनो यद् वल्मीकः । मै १,६,३ ।
२०३. प्रजापतेर्विभान्नाम लोकः । तैसं १,६,५,१ ।
२०४. प्रजापतेर्ह वै प्रजाः ससृजानस्य पर्वाणि विसस्रꣳसुः । स वै संवत्सर एव प्रजापतिस्तस्यैतानि पर्वाण्यहोरात्रयोः सन्धी पौर्णमासी चामावास्या चर्तुमुखानि । माश १,६,३, ३५-३६ ।
२०५. प्रजापतेस्त्रयस्त्रिꣳशद् दुहितर आसन्, ताः सोमाय राज्ञेऽददात्, तासाꣳ रोहिणीमुपैत्, ता ईर्ष्यन्तीः पुनरगच्छन् । तैसं २,३,५,१ ।
२०६. प्रजापतौ त्वा मनसि जुहोमि । तैसं ३,१,२,२ ।
२०७. प्रजाः सृष्ट्वा (प्रजापतिः) सर्वमाजिमित्वा व्यस्रंसत । माश ६,१,२,१२ ।
२०८. प्राणः (+प्राणा उ वै [माश ८,४,१,४]) प्रजापतिः । माश ६,३,१,९ ।
२०९. प्राणो हि प्रजापतिः । प्रजापतिꣳ ह्येवेदꣳ सर्वमनु (प्रजायते) । माश ४,५,५,१३ ।
२१०. प्रादेशमात्रीः समिधो भवन्ति । एतावान् ह्यात्मा प्रजापतिना संमितः । क ६,५ ।

२११. बृहस्पतिस्त्वा प्रजापतये ज्योतिष्मतीं जुहोतु । तैसं ३ ३,१०,१ ।
२१२. ब्रह्ममयो हिरण्मयोऽमृतः प्रजापतिस्समभवत् । एषैव विद्युत् । स एष एव त्रयो वेदः। योर्ध्वा विद्युत् तानि सामानि, या तिरश्ची ता ऋचो यदभीक्ष्णं मन्मलायति तद् यजुः। जै ३, ३४० ।
२१३. ब्रह्म वै प्रजापतिर्ब्राह्मो हि प्रजापतिः । माश १३,६,२,८ ।
२१४. मन इव वै (हि [तैसं., तै.]) प्रजापतिः । तैसं २, ५,११,५; काठ ३१,१५; ३५, १७; क ४८, १५; जै २,७७; १९५; तै २, २,१,२ (तु. जै २, ९; ४५; ४७; १७४; तै ३, ७, १,२) ।
२१५. मनसा प्रजापतये जुह्वति । तैसं २,५,११,५।
२१६. मनसा वा इमां (पृथिवीम्) प्रजापतिः पर्यगृह्णात् । मै १,८,७ ।
२१७. मनसा वै प्रजापतिर्यज्ञमतनुत । मै १,४,१०; काठ ३२,७ ।
२१८. महद्रूपो वै प्रजापतिः । जै २,१२ ।
२१९. मातेव च पितेव च प्रजापतिः । माश ५,१,५,२६ ।
२२०. मूर्धा वयः, प्रजापतिश्छन्दः । तैसं ४,३,५,२; मै २,८,२ ।
२२१. य एवं विद्वान् सुरां पिबति, प्रजापतेर्वा एषा तनूर्वीर्यं प्रजापतिर् वीर्यमेवास्मिन् दधाति । काठ १२,१२ ।
२२२. यः प्रजापतिस्तन्मनः । जैउ १,११,१,२ ।
२२३. यच्छ्यैतेन (साम्ना) हिङ्करोति प्रजापतिरेव भूत्वा प्रजा अभिजिघ्रति । तां ७,१०,१६ ।
२२४. यजमानो वै (+ह्येव स्वे यज्ञे [माश.]) प्रजापतिः । मै ३,७,४ माश १,६,१,२० ।
२२५. यज्ञः (°ज्ञ उ वै [कौ., तै.]) प्रजापतिः । तैसं ३,२,२,३; मै १,१०,५;३,७,९;४,४,१०;६,६; काठ २२, १; २३, २; क ३५,८; कौ १०, १; १३, १; २५,११; २६, ३; तै ३,३,७,३; माश ११,६,३,९ ।
२२६. यज्ञो वै प्रजापतिः (+ यदेता आप्रियो भवन्ति यज्ञमेवैताभिर्यजमाना आप्रीणीते [मै ३, ९, ६]) । तैसं २,५,७,३; ५,१,८,३; ७,५,७,४; मै ३,६,५; ४,७,८; काठसंक १४१ : ६ ।
२२७. यदुद्यति सूर्ये क्रियत एतद्वै प्रजापते रूपं यर्ह्येष उदेति सर्वा वा एतं प्रजाः प्रतिनन्दन्ति । काठ ३७,१ ।
२२८. यान्वै तान्त्सप्त पुरुषान् । एकं पुरुषमकुर्वन्त्स प्रजापतिरभवत् । माश १०,२,२,१ ।
२२९. या (प्रजापतेर्दुहिता) रोहित् (रक्तवर्णा मृगी) सा रोहिणी (अभूत्) । ऐ ३,३३ ।
२३०. यावान्वाऽएकः प्रव्याधस्तावांस्तिर्यङ् प्रजापतिरथ यावत्सप्तदश प्रव्याधास्तावानन्वङ् प्रजापतिः । माश ५.१,५,१३ ।
२३१. यावान्वै प्रजापतिरूर्ध्वस्तावाꣳस्तिर्यङ् । तां १८,६,२ ।
२३२. यासां प्रजापतिरुदाजतायुर्नाम रूपं पशूनामपराह्ण धाम पश्यमानः । मै ४, २,११ ।
२३३. योनिर्वै प्रजापतिः । मै २,५,१ ।
२३४. यो ह्येव सविता स प्रजापतिः । गो १, ५, २२; माश १२, ३,५, १ ।
२३५. रथोऽश्वैः प्रजापतये समनमद् भूतेभ्यः समनमत् । तैसं ७,५,२३,२ ।
२३६. रूपं वै प्रजापतिः'''नाम वै प्रजापतिः । तै २,२,७,१ ।

२३७. रूपमेव तत्प्रजापतिर्हिरण्यमन्तत आत्मनो ऽकुरुत'''तस्मादाहुर्हिरण्मयः प्रजापतिरिति । माश १०,१,४,९ ।
२३८. रोहिणी देव्युदगात् पुरस्तात्'''प्रजापति ँ हविषा वर्द्धयन्ती । तै ३,१,१,२ ।
२३९. रोहिणी नक्षत्रं, प्रजापतिर्देवता । मै २,१३,२० ।
२४०. लोमशं वै नामैतत् प्रजापतेश्छन्दो लोमशाः पशवः प्रजायन्ते । काठ २२, १ ( तु. तैसं ५,१,८,४ ) ।
२४१. वयुनाविदित्येष ( प्रजापतिः ) हीदं वयुनमविन्दत् । माश ६,३,१,१६ ।
२४२. वाग्वा अनुष्टुप्, प्रजापतिः पङ्क्तिर्वाचि वा एतत् प्रजापतिमप्यस्राट् प्रजननाय, तन्मिथुनम् । मै २,३,७ ।
२४३. वाग्वाऽ अस्य (प्रजापतेः) स्वो महिमा । माश २,२,४,४ (तु. माश १,४,२,१७ ) ।
२४४. वाग्वै ( वाग्घि [माश १,६,३,२७] ) प्रजापतिः । माश ५,१,५,६; १३,४,१,१५ ।
२४५. वाजपेययाजी वाव प्रजापतिमाप्नोति । तां १८,६,४ ।
२४६. वायुर्ह्येव प्रजापतिस्तदुक्तमृषिणा पवमानः प्रजापतिरिति । ऐ ४,२६ ।
२४७. व्युष्टायां पुरा सूर्यस्योदेतोरनुब्रूयादेव हि प्रजापतेर्लोकः । मै ४,५,३ ।
२४८ शरीरे प्रजापतिः । शांआ ६,२; कौउ ४,२ ।
२४९. षष्ठायतनो वै प्रजापतिर्देवतानाम् । जै २,३४८; ३,१३६ ।
२५०. स ( प्रजापतिः ) आत्मन्नाज्यमधत्त । तैसं २,६,३,१ ।
२५१. स ( प्रजापतिः ) उदरादेव मध्यात् सप्तदशं स्तोममसृजत जगतीं छन्दो वामदेव्यं साम विश्वान् देवान् देवतां वैश्यं मनुष्यं गां पशुम् । जै १,६९ ।
२५२. स ( प्रजापतिः ) उ वाव भुवनस्य गोपाः । जैउ ३,१,२,११ ।
२५३. स ( प्रजापतिः ) एतां ब्राह्मणस्पत्यां प्रतिपदमपश्यत् । तया ब्रह्मण्वतीः प्रजा असृजत । ता अस्य सृष्टा न पराभवन् । जै २,१८५ ।
२५४. स एव पुरुषः प्रजापतिरभवत् । माश ६,१,१,५ ।
२५५. स ( संवत्सरः ) एव प्रजापतिस्तस्य मासा एव सहदीक्षिणः । तां १०,३,६ ।
२५६ स (प्रजापतिः ) एवास्मिन् ( यजमाने ) आयुर्दधाति । तैसं २,३,२,१ ।
२५७. स एवैष प्रजापतिस्सप्तदशोऽन्नादस्तोमोऽभवत् । जै ३,३२४ ।
२५८. स एष ( प्रजापतिः ) पिता पुत्रः । यदेषो ( प्रजापतिः ) ऽग्निमसृजत तेनैषो ऽग्नेः पिता यदेतमग्निः समदधात्तेनैतस्याग्निः पिता, यदेष देवानसृजत तेनैष देवानां पिता यदेतं देवाः समदधुस्तेनैतस्य देवाः पितरः । माश ६,१,२,२६ ।
२५९. स एष प्रजापतिरेव संवत्सरः । कौ ६,१५ ।
२६०. स एष वायुः प्रजापतिरस्मिंस्त्रैष्टुभे ऽन्तरिक्षे समन्तं पर्यक्तः । माश ८,३,४,१५ ।
२६१. स एष संवत्सरः प्रजापतिः षोडशकलः । माश १४,४,३,२२ (तु. माश ७,२,२,१७) ।
२६२. स ( प्रजापतिः ) ऐक्षत किं नु तद्रूपं कुर्वीय यन् मेऽन्यो नाभ्यारोहेदिति । सोऽजः पृश्निरभवत् । तस्मादजं पृश्निं नाधिगच्छाम । जै ३, ३४९ ।
२६३. स ( प्रजापतिः ) ऐक्षत यन्निरुक्तमाहरिष्याम्यसुरा मे यज्ञ ँ हनिष्यन्तीति सोऽनिरुक्तम् ( परोक्षम् ) आहरत् । तां १८,१,३ ।

२६४. संवत्सरः प्रजापतिः (+यज्ञः [जै.])। मै १,१०,८; काठ १२.५; ऐ १, १;१३; २८; २,१७; गो २, ३,८; ६,१; जै १,१३५;२,१११; ३०४; तां १६,४,१२; तै १,४,१०,१०।
२६५. संवत्सरं पितरं प्रजापतिं प्रीणयन्ति ( यजमानाः ), स एनान् प्रीतः प्रीणाति। जै २,३७१।
२६६. संवत्सरो यज्ञः (+प्रजापतिः [माश.])। मै ४,६,६; माश २,२,२,४।
२६७. संवत्सरो वै प्रजापतिः। माश २,३,३,१८; ३,२,२,४; ५,१,२,९।
२६८. संवत्सरो वै प्रजापतिरेकशतविधः। तस्याहोरात्राण्यर्धमासा मासा ऋतवः षष्टिर्मासस्याहोरात्राणि मासि वै संवत्सरस्याहोरात्राण्याप्यन्ते। चतुर्वि ँ शतिरर्धमासास्त्रयोदश मासास्त्रय ऋतवस्ताः शतविधाः संवत्सर एवैकशततमी विधा। माश १०,२,६,१।
२६९. स ( प्रजापतिः ) तूष्णीं मनसाध्यायत्तस्य यन्मनस्यासीत्तद् बृहत्समभवत्। स आदधीत गर्भो वै मे ऽयमन्तर्हितस्तं वाचा प्रजनया इति। स वाचं व्यसृजत। तां ७,६,१-३।
२७०. सत्य ँ हि प्रजापतिः। माश ४,२,१,२६।
२७१. स (प्रजापतिः) दशधात्मानं विधाय मिथुनं कृत्वा स आयतनमैच्छत्। स त्रिवृतमेवायतनमचायत् प्राणान्। काठ ९,११।
२७२. स (प्रजापतिः) दशधात्मानं व्यधत्त, तस्य चित्तिस्स्रुगासीच्चित्तमाज्यं वाग्वेदिराधीतं बर्हिः, केतो अग्निर्विज्ञातमग्निद् ( °ग्नीद् [मै १, ९,१]) वाचस्पतिर्होता मन उपवक्ता प्राणो हविः, सामाध्वर्युः। काठ ९,११।
२७३. सप्तदशः प्रजापतिः। तैसं ६,२,१०,६; ७,३,८,२; काठ १४, ७; जै १, १९३; २, ९०; तै १,३,३,२ (तु. मै १, ११, ६)।
२७४. सप्तदशारत्निः कार्यस्त्रयोदशेन प्रजापतिना संमितः। मै ३,९,२।
२७५. सप्तदशो वै प्रजापतिः (+द्वादश मासाः पंचर्तवो हेमन्तशिशिरयोः समासेन तावान्संवत्सरः [ऐ १,१]) । मै ३,८,९; ऐ १,१६; ४,२६; कौ ८,२; १०, ६; १६,४; गो २,१,१९; जै २, ३४९; माश १, ५,२,१७; ५, १,२,११।
२७६. सप्तविधो वाऽ अग्रे प्रजापतिरसृज्यत। माश १०,२,३,१८।
२७७. स प्रजापतिः पुष्करपर्णे वातो भूतो ऽलेलीयत। क ३५,३।
२७८. स ( यजमानः )······प्रजापतिरेव भूत्वा प्रजायते। तै २,२,१,२।
२७९. स ( प्रजापतिः ) बाहुभ्यामेवोरस्तः पञ्चदशं स्तोममसृजत त्रिष्टुभं छन्दो बृहत् सामेन्द्रं देवतां राजन्यं मनुष्यमश्वं पशुम्। जै १,६८।
२८०. समुद्रं वै नामैतत् प्रजापतेश्छन्दः। क ३१, ६।
२८१. स यः स प्रजापतिर्व्यस्र ँ सत। अयमेव स यो ऽयमग्निश्चीयते ऽथ या अस्मात्ताः प्रजा मध्यत उदक्रामन्नेतास्ता वैश्वदेव्य इष्टकाः। माश ८, २, २,६।
२८२. स योऽयं ( वायुः ) पवते स एष एव प्रजापतिः। जैउ १, ११, २, ३।
२८३. सर्वं वै ( हि [माश १३,६, १, ६]) प्रजापतिः। माश १, ३, ५,१०; ४,५,७,२; १३, ६,१, ६; कौ ६,१५; २५,१२; गो २,१,२६ (तु. काठ ३३, ८; माश ५,१,१,४; १०, २,३,१८)।
२८४. सर्वाणि छन्दा ँ सि प्रजापतिः। माश ६, २,१, ३०।
२८५. सर्वा वा अन्या देवता यातयाम्नीः, प्रजापतिरेवायातयामा। मै ४,८,९।

२८६. सर्वेषामेवैतत्पशूनां मेधेन संवत्सरं पितरं प्रजापतिं प्रीणयन्ति । स एनान् प्रीतः प्रीणाति । जै २, ३७१ ।

२८७. स ( प्रजापतिः ) वाचमयच्छत्स संवत्सरस्य परस्ताद्व्याहरद् द्वादशकृत्वः । ऐ २,३३ ।

२८८. सविंशो (सविता [जै १,६]) वै प्रजापतिः । जै १,६; २९ ।

२८९. स ( प्रजापती रुद्रेण ) विद्ध ऊर्ध्व उदप्रपतत्तमेतं मृग (मृगशीर्षनक्षत्रम्) इत्याचक्षते । ऐ ३,३३ ।

२९०. स वै यज्ञ एव प्रजापतिः । माश १, ७, ४, ४ ।

२९१. स ( प्रजापतिः ) संवत्सरं व्याजिहीर्षत् । माश ११, १, ६,३ ।

२९२. स ( प्रजापतिः ) सर्वाणि भूतानि सृष्ट्वा रिरिचान इव मेने स मृत्योर्बिभयांचकार । माश १०, ४, २, २ ।

२९३. स ( प्रजापतिः ) हैवं षोडशधाऽऽत्मानं विकृत्य सार्धं समैत् । तद्यत् सार्धं समैत् तत्सा-म्नस्सामत्वम् । जैउ १, १५, ३,७ ।

२९४. स हैष भूरेव नाम यज्ञक्रतुः एतेन ह वै यज्ञेनेष्ट्वा प्रजापतिरभवत् । यदभवत् तस्माद् भूः । जै २, १४७ ।

२९५. सा या सहस्रतम्यास विद्युद्धैव सा भूत्वा प्रजापतिं विवेश । जै २, २६५ ।

२९६. सा ( सीता सावित्री ) ह पितरं प्रजापतिमुपससार । त ९ होवाच । नमस्ते अस्तु भगवः । तै २, ३, १०, १ ।

२९७. साहस्रः ( °स्रो वै [मै.]) प्रजापतिः । तैसं ५, २,८,३; ४,२,४; मै ३,३,४ ।

२९८. साहस्रवता प्रोक्षति······प्रजापतेराप्त्यै । तैसं ५,४,२,४ ।

२९९. सोऽब्रवीद् (प्रजापतिः) अनिरुक्तं साम्नो वृणे स्वर्ग्यमिति । जैउ १, १६,२, ६ ।

३००. सोमो वै ( हि [माश ५, १, ५, २६] ) प्रजापतिः । माश ५, १, ३, ७; ५,२६ ।

३०१. स्वरान्तेन वै त्र्यहेण प्रजापतिर्मृत्योरात्मानमत्रायत, निधनान्तेन प्रजाम्, इलान्तेन पशून् । एतावद् वावास्ति यदात्मा प्रजा पशवः । जै ३,३११ ।

३०२. हस्त ( नक्षत्रम् ) एवास्य ( नक्षत्रियस्य प्रजापतेः ) हस्तः । तै १, ५, २, २ ।

३०३. हिंकारवद्भिर्वै प्रजापतिः प्रजाभ्यो ऽन्नाद्यं प्रायच्छत् । जै ३, २१४ ॥ [°ति- अंशु- १;४; अग्नि- ६१; १८३; २०८;५७७;५७८;५७९;५८१; ६९४; ७४८;७५८; ७५९; अग्निचयन- ३; अग्निष्टोम- ३६; अथर्वन्- ९;१३: अनिरुक्त- ५; अनुमति- १२; अनुष्टुभ्- १८;३८;४९; अन्न- ३०;८९; अन्नाद- ४; अप् ९३;१५२;१९७; अभीवर्त्त- ४; अमावास्या- १९; अमृत- ३६; अर्धमास- १३; अवि- १४; अश्व- ७;८;६४;६५;६६; अश्वमेध- १९; असुर- ७०;७७; अहोरात्र- २०; आग्रयण- ११; आचार्य- १; १आज्य- १४; आत्मन्- २;१५; आदित्य- ४४; १८२;२७८;२७९;३१८;३४८; आयुस्- ४५; आहवनीय- २४; इन्द्र- ३९,८५;२२७,२३१; ३५७; इन्द्र-प्रजापति-; उदुम्बर- १; उद्गातृ- १०; १६; उद्गीथ- ६; उपस्- ७-१०; ऊर्ध्व-सद्मन्-; ऋक्साम- ७;८; ऋषभ- १०; एक-; एकविंश- २०;३७; ओदन- ४; ओषधि- ६४; क- २-५; ८; कनीनिका-; कृत्तिका- ८; क्रतु- ४; क्षत्र- २२; ६३: गायत्री- २; गार्हपत्य- १६; गृहपति- ६; गो- ३०; गोमृग- ३; घृत- १२; घृतश्च्युन्निधन- २; चक्षुस्-

५३; चतुर्होतृ- २१; चतुस्त्रिंश- ३; चन्द्र- २; चन्द्रमस्- ४;७७; चित्पति- १; छन्दस्- ८४; ८५;जमदग्नि- ८; जय- ३; ज्योतिष्मत्- २; तत- १; त्रयस्त्रिंश- २०; त्रयोदश- २; त्रिवृत्- ४९; त्वष्टृ- १५; दक्ष- ७; दशहोतृ- ६;७; दशाह- १; दिव्- १२६;१२७; दिश्- ३५;४५; देव- ३०;११७;१५२;१५३;२३९; देवता- १६;२६;२८;३३; द्यावापृथिवी- २१; द्रोणकलश- ५-७; द्वादशरात्र- १; द्वादशाह- ६; १७; १९; धातृ- १६; धूम्र- ; नक्षत्र- २२; निधन- ७; नृ-चक्षस्- २; नृ-मणस्-; न्यून- २; पञ्चविंश- १०;१३; पयस्या- ७; परमेष्ठिन्- ६;१४; पर्वत- १; पशु- २३५; पशुष्टा- १; पितृ- ६३; १११; पुरुष- ५१; ५५; ७०; ७८; ८०-८२; पुरुषमेध- ५; पूर्ण- ३; पृथिवी- ११; ४९; ९८; १४९; २०१; २१०; पौर्णमासी- ६; प्रजनन- २; प्रजा- ३९-४४;६९; ९५ द्र.]।

**प्रजापति-यज्ञ-** अग्निष्टोम- २१; द्वादशाह- १६ द्र.।

**प्रजापति-श्रेष्ठ-** देव- १५२ द्र.।

**प्राजापत्य,त्या-**

१. अश्वस्तूपरो गोमृगस्ते प्राजापत्याः। काठ ४८,२।
२. उभयमेतत् प्राजापत्यं यत् सोमश्चापश्च। काठ २९,५; क ४५,६।
३. तत एतं परमेष्ठी प्राजापत्यो यज्ञमपश्यद्यद्दर्शपूर्णमासौ। माश ११,१,६,१६।
४. त्रयो वै प्राजापत्या ऋत्विजः। उद्गाता, प्रस्तोता, प्रतिहर्ता। मै ४,६,४।
५. देवाश्च वाऽअसुराश्च। उभये प्राजापत्या पस्पृधिरे। माश १,५,४,६।
६. प्राजापत्यं वै वामदेव्यम् (षष्ठमहः [कौ.])। कौ २३,८;२५,११;१५; तां ४,८,१५;११,४,८।
७. प्राजापत्यं (पयः) समिध्वि। मै १,८,१०।
८. प्राजापत्यः प्राणः (प्रस्तोता [मै.])। तैसं ३,२,६,३; मै ४,४,८; तै ३,३,७,२।
९. प्राजापत्यं बहुरूपमालभेत पशुकामः। मै २,५,११।
१०. प्राजापत्यं महाव्रतम्। जै २,१०।
११. प्राजापत्यः षोडशी (ग्रहः)। मै ४,७,६।
१२. प्राजापत्या रात्रिरानुष्टुभी। मै ३, ८, ९।
१३. प्राजापत्या वै पशवः (+ तेषा॰ रुद्रोऽधिपतिः [तैसं ३,१,५,१])। तैसं २,३,२,९; ३,१,५,१; मै २,२,४; ५,१ (तु. मै २,३,६;५,११)।
१४. प्राजापत्या समित्। मै १,८,४।
१५. प्राजापत्येनैव यज्ञेन(अश्वमेधेन) यजते कामप्रेण। अपुनर्मारं एव गच्छति। तै ३,९,२२,४।
१६. प्राजापत्यो (+ वै [मै., गो.]) ब्रह्मा। मै ४,८,३; गो २,३,१८; तै ३,३,८,९।
१७. प्राजापत्यो यज्ञः। काठ ३१, १५; जै २,२६१; तै ३,७,१,२।
१८. प्राजापत्यो (+ वै [तै ३,३,७,२;८,९]) वेदः (दर्भमुष्टिः)। तै ३,३,२,१; ७,२; ८,९।
१९. प्राजापत्यो वै वल्मीकः (वै सोमः [काठ ३५,१६; क ४८,१४])। काठ ३५,१६; १९; क ४८,१४;१७; तै ३,७,२,१।
२०. मनोऽसि प्राजापत्यम्। तैसं १, ६, २, २; काठ ४,१४।
२१. मयुः प्राजापत्यः। तैसं २, ४, ४, १; मै ३, १४, १२; काठ ४७, २।

२२. यदेष प्राजापत्यो द्वादशकपालः ( पुरोडाशः )। मै ३, १, १०।
२३. रोहितो धूम्रलोहितः कर्कन्धुरोहितस्ते प्राजापत्याः। काठ ४९, १।
२४. वियोनिर्वै वाजपेयः प्राजापत्यः। मै १, ११, ९।
२५. सर्वं हीदं प्राजापत्यम्। जै ३, ३२४॥ [°त्य- अग्नि- ५८९; अग्निहोत्र- २५; ४०; अज- ३३; अनिरुक्त- ३; अनुष्टुभ्- ५०; अन्वाहार्य- ४; अश्व- ६७; ६८; अहोरात्र- १२; १आज्य- २४;२८; आयुष्काम- २; उखा- ७; उदुम्बर- ४;१५; उद्गातृ- १७; उपांशु- १६; ऊष- १०; काव- १; कृष्ण- १६; गार्मुत- २; गोधूम- २; ग्रुमुष्टि-; तूपर- १; दिव्-१४३; देव- १२८; १५७; द्रोणकलश- ८; पुरुष- ८३; ११२; पृथिवी- १५५; पौर्णमास- ३; प्रजा- ६५ द्र.]।

**प्रजा-वत्-** बर्हिषो देवयज्यया प्रजावान् भूयासम्। तैसं १,६,४,१ (तु. काठ ५,३)।

**प्रजाति-**

१. ऊनातिरिक्ता मिथुनाः प्रजात्यै। तैसं ५, १, ८, ४; काठ २०, ४।
२. त्रिवृद्धि प्रजातिः पिता माता पुत्रो ऽथो गर्भ उल्बं जरायु। माश ६, ५, ३, ५।
३. रेतो वै प्रजातिः। माश १४,९,२,६॥ [ति°- अमृत- ३५; गर्भ- १३; जगती- ४३ द्र.]।

**प्रज्ञा-**

१. केन धियो विज्ञातव्यं कामानिति, प्रज्ञयैवेति ब्रूयात्। शांआ ३,.७; कौउ १, ७।
२. प्रज्ञा पूर्वरूपं श्रद्धोत्तररूपं कर्म संहिता सत्यं सन्धानम्। शांआ ७, १८।
३. यो वै प्राणः सा प्रज्ञा, या वा प्रज्ञा स प्राणः। शांआ ५, ३; कौउ ३, ३।
४. सा ( विचक्षणाऽऽसन्दी ) प्रज्ञा, प्रज्ञया हि विपश्यति। शांआ ३, ५; कौउ १, ५।

**प्रज्ञात्मन्-**

१. स य एवायं दैहिक आत्मा, तस्य (+एतस्य [शांआ.]) यो ऽयमशरीरः प्रज्ञात्मा स रसः। ऐआ ३, २, ३; शांआ ८, ३।
२. स यश्चायमशरीरः प्रज्ञात्मा यश्चासावादित्य एकमेतदिति विद्यात्। ऐआ ३, २, ३; शांआ ८, ३।

**प्रज्ञान-** प्रज्ञानं ब्रह्म। ऐआ २, ६; ऐउ ५, ३।

**प्रणव-**

१. प्रणवेनैव साम्नो रूपमुपगच्छत्यो ३ म्। ओ ३ मित्येतेनो हास्यैष सर्व एव सप्रामा यज्ञो भवति। माश १, ४,१, १।
२. ब्रह्म (+ह [गो.]) वै प्रणवः। कौ ११, ४; गो २, ३,११।
३. यच्छुद्धं प्रणवं कुर्वन्ति तदस्य ( भू- ) लोकस्य रूपं यन्मकारान्तं तदमुष्य ( द्युलोकस्य )। कौ १४, ३।
४. स प्रतिगरस्स उद्गीथस्तद् आश्रावणम्। तस्मादोमिति प्रणौत्योमिति प्रत्यागृणात्योमित्युद्गायत्योमित्याश्रावयति। जै ३, ३२२॥ [°व- अमृत- ६; उक्थ-शंसिन्- द्र.]।

**प्रणी-** वायुर्वै प्रणीर्यज्ञानां यदा हि प्राणित्यथ यज्ञोऽथाग्निहोत्रम्। ऐ २, ३४।

प्रणीता-

१. यदापः प्राणयंस्तस्मादापः प्रणीतास्तत्प्रणीतानां प्रणीतात्वम् । माश १२, ९, ३, ८ ।

२. शिरो वा एतद् यज्ञस्य यत्प्रणीताः (आपः) । माश ११, २, ६, १ ।

प्रतक्वन्- नभो ऽसि प्रतक्वा । मै १, २, १२ ।

प्रतरण- गयस्फान- द्र. ।

प्रतिगर-

१. गृणाति ह वाऽ एतद्धोता यच्छ ऽ सति। तस्मा एतद् गृणते प्रत्यवाध्वर्युरागृणाति तस्मात्प्रति-गरो नाम। माश ४,३,२,१ ।

२. मदो वै प्रतिगरः । माश ४,३,२,५ ।

प्रति √ग्रह् > °गृहीत-, °गृह्य, °गृह्य- ।

१. गौषूक्तिश्च वा आश्वसूक्तिश्चैषौ । तौ ह बहु प्रतिगृह्य गरगिराविव मेनाते। तावकामयेतामपेमं गरं गीर्ण हनीवहीति । तावेते सामनी अपश्यताम्। ताभ्यामस्तुवाताम्। जै ३,२५१ ।

२. तौ (तरन्तपुरुमीळ्हौ) एतच्चतुर्ऋचमपश्यतां तेन प्रत्यैतां ततो वै तयोरसातं सातमभव-दात्तमिवैव न प्रतिगृहीतम् । जै ३,१३९ ।

३. यो गाथानाराश ऽसीभ्या ऽ सनोति न तस्य प्रतिगृह्यमनृतेन हि स तत् सनोति, न मत्तस्य, यदा हि तस्य मदो व्येत्यथ तं तत् तपति । मै १,११,५ (तु. काठ १४,५) ॥ [°गृह्य पुनःस्तोम-४ द्र.] ।

प्रतिदुह्, °धुप्-

१. तस्य (इन्द्रस्य) प्रतिधुक् प्रातस्सवने ऽत्रानयत्, प्रतीव वा अनेनाऽधायीति तस्मात् प्रतिधुक् । जै २,१५७ ।

२. प्रतिधुक् प्रातःसवने ऽवनयेत् । जै १,३५५ ।

३. यत् (इन्द्रस्येन्द्रियं वीर्यं पशवः) प्रत्यदुहन्, तत् प्रतिधुषः प्रतिधुक्त्वम् । तैसं २,५,३,३ ।

४. वायव्यां यवागूं (वायव्याः °गूः [मै १,१०,१]) प्रतिधुग् वा । मै १,१०,१; २,२,७ ।

प्रतिधि- प्रतिधिरसि पृथिव्यै त्वा पृथिवीं जिन्व । तैसं ४,४,१,१; काठ १७,७ ।

प्रतिप्रस्थातृ-

१. कृतानुकर एव प्रतिप्रस्थाता । माश २,५,२,३४ ।

२. प्रतिप्रस्थातर्विहर । तैआ ४,४,१ ।

३. शार्दूलौ (व्याघ्रौ [मै.]) प्रतिप्रस्थाता (मनसा ध्यायेत्) । मै २, ३, ९; काठ १२, १० । [°तृ- अध्वर्यु- ५ द्र.] ।

प्रतिप्रस्थान- पापीयः प्रतिप्रस्थानम् । मै ४,६,२ ॥ [°न- अध्वर्युपात्र- द्र.] ।

प्रतिबोध- अग्निः प्रतिबोधः । काठ ३७,१० ।

प्रतिमा-

१. असौ वै लोकः प्रतिमैष ह्यन्तरिक्षलोके प्रतिमित इव । माश ८,३,३,५ ।

२. विष्णुस्त्र्यक्षरया प्रतिमा ऽ स्वर्गं लोकम् (उदजयत्) । मै १,११,१०; काठ १४,४ ॥ [°मा- दिव्- २९; १२८ द्र. ] ।

**प्रतिर-** प्राणा वै देवाः प्रतिराः । तैआ ५,८,८ ।

**प्रतिरव-** प्राणा वै प्रतिरवाः प्राणान् हीद ँ सर्वं प्रतिरतम् । माश १४,२,२,३४ ।

**प्रतिराध-**

१. ता वै प्रतिराधैः प्रत्यराध्नुवन् । तद्यत्प्रतिराधैः प्रत्यराध्नुवन्, तस्मात्प्रतिराधास्तत्प्रतिराधानां प्रतिराधत्वम् । गो २,६,१३ ।

२. प्रतिराधेन वै देवा असुरान्प्रतिराध्याथैनानत्यायन् । ऐ ६,३३ ।

**प्रतिरूप-** य आदित्ये (पुरुषः) स प्रतिरूपः । प्रत्यङ् ह्येष सर्वाणि रूपाणि । जैउ १,८,२,५ ।

**प्रतिश्रुति-** हूतिश्च ह खलु वा एते सामनी प्रतिश्रुतिश्च हे ये हो वा हा हो इत्येवानेनाङ्गिरसोऽह्वयन् । हा वा ओ वा इत्येतेन प्रत्यशृण्वन् । ते ह वा एते सामनी हूतिश्चैव प्रतिश्रुतिश्च स्वर्ग्ये स्वर्गस्य लोकस्य समष्ट्यै । जै ३,४७ (तु. जै ३,५१) ।

**प्रतिश्रुत्का-**

१. असुरिति वा अहमेतम् (प्रतिश्रुत्कास्थं पुरुषम्) उपासे । शांआ ६,१३; कौउ ४,१३ ।

२. प्रतिश्रुत्कायै वाहसः । काठ ४७,४ ॥ [ °त्का- असु- ५; चक्रवाक- २ द्र.] ।

**प्रतिष्ठा-**

१. इमऽउ लोकाः प्रतिष्ठा चरित्रम् । माश ८, ३, १, १०; ७,३, १९ ।

२. एषा वै कृत्स्ना प्रतिष्ठा यज्ज्योतिरतिरात्रः । जै २,३१३ ।

३. द्विपदा छन्दो विष्णुर्देवता प्रतिष्ठे (पादौ) । माश १०,३,२,११ ।

४. पस्त्यासु चक्रे वरुणः सधस्थम्, इति विशो वै पस्त्या विक्षु चक्रे वरुणः प्रतिष्ठामित्येवैतदाह । माश ५,३,५,१९ ।

५. प्रतिष्ठा पुच्छं वयसाम् । ऐआ १,४,२ ।

६. प्रतिष्ठा यज्ञायज्ञियम् [ वेदिः [मै ४,५,९] (साम)] । मै ३,३,५; ४, ५,९ ।

७. प्रतिष्ठा वै रथन्तरम् (स्वाहाकृतयः [ऐ.]) । ऐ २,४; जै १,२२९ ।

८. प्रतिष्ठा वै स्विष्टकृत् । ऐ २,१०; कौ ३,८ ।

९. प्रतिष्ठोदरमन्नाद्यानाम् । ऐआ १,५,१ ।

१०. बृहस्पतिर्वा एतां यज्ञस्य प्रतिष्ठामपश्यद्यत् स्तोमभागाः । तैसं ५,३,५,५ ।

११. यत् प्रतिष्ठा त्रयस्त्रिंश इत्यन्तो हि सः । जै ३,३०९ ।

१२. याश्चतस्रः प्रतिष्ठा इमा एव ताश्चतस्रो दिशः । जैउ १,६,१,२ ।

१३. यो ह वै प्रतिष्ठां वेद प्रति ह तिष्ठत्यस्मिंश्च लोकेऽमुष्मिंश्च, चक्षुर्ह प्रतिष्ठा । शांआ ९,२ ।

१४. संहितं द्व्यक्षरणिधनं प्रतिष्ठायै । जै १,१५७ ॥ [°ष्ठा- अग्नि- २८४, अदिति- ३०; ६२; अनुष्टुभ्- ५;३५; अवसान-; आयुस्- ४९; आवपन- २; इन्द्राग्नि- ४२; एकविंश- १०; २१; ३२; ३७; एकविंशति-; एकाह- २; ३; गार्हपत्य- १७; गृह- ५; चक्षुस्- २२; त्रयस्त्रिंश- २१;२४; त्रिणव- १७; त्रिहोतृ-; दिव्- २३; द्वन्द्व- ४; द्विपदा- ३; द्विप्रतिष्ठ-; पाद- ७; पूषन्- ४५; पृथिवी- ४६ द्र.] ।

**प्रतिष्ठा-काम-**

१. अलजचितं चिन्वीत चतुःसीतं प्रतिष्ठाकामः । तैसं ५,४,११,१

२. एकविंशेन प्रतिष्ठाकामः (यजेत)। जै २,१३६।

प्रतिष्ठा-वत्->°वती-

१. यस्य प्रतिष्ठावतीः पश्चात्, प्रत्येव तिष्ठति। तैसं ५,३,४,६।

२. याः प्रतिष्ठावतीस्ताः पश्चाद् ( उपदधाति ), गच्छति प्रतिष्ठां य एवं वेद। काठ २१, १।

प्रतिष्ठा-सामन्- तदेतत् (नौधसम्) प्रतिष्ठासाम। जै १,१४७।

प्रतिष्ठानीय- प्रतिष्ठानीयं वै छन्दो द्विपदाः (ऋचः)। शांआ २,१२।

प्रतिष्ठिता- प्रतिष्ठिता वै स्थावराः (आपः)। पश्चादेव प्रतितिष्ठति। तैआ १,२४,२।

प्रतिष्ठिति-

१. द्वाभ्यां खनति प्रतिष्ठित्यै। तैसं ५,१,४,१।

२. द्विपाद्वै यजमानः प्रतिष्ठित्यै। जै ३,२९५॥ [°ति- अन्नाद्य- १४; त्रयस्त्रिंश- १६ द्र.]।

प्रतिसर- राक्षोघ्ना वै प्रतिसराः। माश ७,४,१,३३।

प्रतिहर्तृ-

१. अथ प्रतिहर्ता (प्रतिपद्यते), भिषग्वा व्यानो वा। माश ४,२,५,३।

२. धेनुः प्रतिहर्तुः, प्रतीव ह्येषा (धेनुः) हरति, प्रतीव प्रतिहर्ता। मै ४,४,८।

३. भविष्यत्प्रति चाहरत् (प्रतिहर्ताऽऽसीत्)। तै ३,१२,९,३।

४. मरुतः प्रतिहर्तारः। तैसं ३,३,२,१।

५. रौद्रो वै प्रतिहर्ता (+यन्मध्यतः प्रतिहर्त्रे [दक्षिणाम्] दद्यान्मध्यतो रुद्रमन्ववनयेत्, तस्मादन्ततः प्रतिहर्त्रे देयम् [मै.])। मै ४,८,३; गो २,३,१९।

६. व्यानः प्रतिहर्त्ता। कौ १७, ७; गो २,५,४॥ [°र्तृ- पशु- १५९ द्र.]।

प्रतिहार-

१. अश्विनौ (बृहत् [जै.], शरत् [ष.]) प्रतिहारः। जै १,२९२;२,४३३; ष ३,१; जैउ १,८,२,९।

२. चक्षुः प्रतिहारम् (प्रजापतिरकरोत्)। जैउ १,३,३,५।

३. दिशोऽवान्तरदिश आकाश एष प्रतिहारः। जैउ १,५,१,२।

४. यदमुष्यां दिशि (दिवि) तत्सर्वम्प्रतिहारेणाप्नोति। जैउ १,१०,१,७।

५. विद्युतम्प्रतिहारम् (प्रजापतिरकरोत्)। जैउ १,३,३,१।

६. शरदम्प्रतिहारम् (प्रजापतिरकरोत्)। जैउ १,३,२,७।

७. स्तोमम्प्रतिहारम् (प्रजापतिरकरोत्)। जैउ १,३,३,३॥ [°र- अपराह्ण- १; अस्थि- १; चन्द्रमस्- ३४; दक्षिणासीन-; पशु- २३९; पौर्णमासी- ८ द्र.]।

प्रतीक- मुखं प्रतीकम्। माश १४,४,३,७।

प्रतूर्त- यद्वै क्षिप्रं तत्तूर्तमथ यत्क्षिप्रात्क्षेपीयस्तत्प्रतूर्तम्। माश ६,३,२,२।

प्रतूर्ति- संवत्सरो वाव प्रतूर्तिरष्टादशस्तस्य द्वादश मासाः पञ्चऽर्तवः संवत्सर एव प्रतूर्तिरष्टादशस्तद्यत्तमाह प्रतूर्तिरिति संवत्सरो हि सर्वाणि भूतानि प्रतिरति। माश ८,४,१,१३। [°र्ति- अष्टादशन्- द्र.]।

प्रतूर्वत्- प्रतूर्वन्नेह्यवक्रामन्नशस्तीरिति पाप्मा वाऽ अशस्तिस्त्वरमाण एह्यवक्रामन् पाप्मानमिति। माश ६,३,२,७।

प्रतृण्ण-

१. दिव्यायतनं प्रतृण्णम् । ऐआ ३,१,३ ।

२. पृथिव्यायतनं निर्भुजं दिवायतनं प्रतृण्णमन्तरिक्षायतनमुभयमन्तरेण । शांआ ७,११ ।

३. यच्छुद्धे अक्षरे अभिव्याहरति तत् प्रतृण्णस्य ( रूपम् ) । शांआ ७,११ ।

४. स्वर्गकामः प्रतृण्णम् ( ब्रूयात् ) । ऐआ ३,१,३; शांआ ७,११ ।

प्रत्न-

१. अयं वो गर्भ ऋत्वियः प्रत्न ऽ सधस्थमासददित्ययं वो गर्भ ऋतव्यः सनातन ऽ सधस्थमासददित्येतत् । माश ६,४,४,१७ ।

२. स्वर्गो ( +वै [तैसं., मै.] ) लोकः प्रत्नः (प्रत्नम् [मै.]) । तैसं १, ५, ७, १; मै १, ५,५; जै १, ३०३; ३,२८६ ॥ [°त्न- दिव्- ३५; देव- ११८; प्रजापति- १४५ द्र.] ।

प्रत्यक्ष-

१. प्रत्यक्षं वै तद्यत्पश्यति । माश ९,२,१,६ ।

२. स्मृतिः प्रत्यक्षमैतिह्यमनुमानचतुष्टयम् । तैआ १,२,१ ।

प्रत्यञ्च्-

१. तस्मादिदं प्रत्यञ्चि दीर्घारण्यानि भवन्ति । ऐ ३, ४४; गो २, ४, १० ।

२. प्रत्यङ्ङासीनः प्रस्तौति । जै १, ७२ ।

३. भूतानां पतये स्वाहेति प्रत्यक् । काठ २५,७ ।

४. यत् प्रतीचो ( पशूनुत्सृजेत् ) रक्षा ऽ सि हन्युः । तैसं ५,२,५,३; काठ २०,३ ।

५. यत्प्रत्यक् तन्मनुष्याणाम् । तैआ ५,८,५ ।

६. यत् प्रत्यङ् ( पर्यावर्तेत ) रक्षसा ऽ स्यात् । काठ २१,१० ।

७. यत्प्रत्यङ्, सौर्यः । मै ३,३,१० ।

८. यत् प्रत्यङ् होत्रे च पत्न्यै चाक ऽ स्यात् । क ४८,१६ ।

प्रतीची (, पश्चात् [दिश्- ])-

१. अयं पश्चाद् विश्वव्यचास्तस्य रथप्रोतश्चासमरथश्च सेनानीग्रामण्यौ प्रम्लोचन्ती चानुम्लोचन्ती चाप्सरसौ सर्पा हेतिर्व्याघ्राः प्रहेतिः । तैसं ४,४,३,१-२ ( तु. मै २,८,१०; काठ १७,९) ।

२. अदित्या भागो ऽसि पूष्ण आधिपत्यमिति पश्चात् । काठ २१, १ ।

३. ऋभूणां भागो ऽ सीति पश्चात् (+त्रयस्त्रि ऽ शद्देवताः । देवतास्वेव प्रतितिष्ठति [क.]) । तैसं ५, ३, ४, ५; क ३१, १६ ।

४. ओजस्त्रिणव इति पश्चादिमे वै ( त्रयः ) लोकास्त्रिणवः । काठ २०, १३ ।

५. गोपायमानश्च मा रक्षमाणश्च पश्चाद् गोपायताम् । काठ ३७, १० ।

६. ततो वायुरुदतिष्ठत्, सा प्रतीची दिक् । तैआ १, २३, ६ ।

७. तस्मादेतस्यां प्रतीच्यां दिशि ये के च नीच्यानां राजानो ये ऽपाच्यानां स्वाराज्यायैव ते ऽभिषिच्यन्ते स्वराडित्येनानभिषिक्तानाचक्षते । ऐ ८, १४ ।

८. प्रतीची दिक्सोमो देवता । काठ ७, २; तै ३, ११,५, २ ।

९. प्रतीची दिग् जगती छन्दो वैरूप ९ साम मरुतो देवता वर्षा ऋतुस्सप्तदशस्स्तोम एकविं ९ शवर्तनिस्त्रिवत्सो वयो द्वापरो ऽयानां पश्चाद्वातो वातस्सनातन ऋषिः। काठ ३९,७।
१०. प्रतीची दिङ् मरुतो देवता। मै १, ५, ४।
११. प्रतीचीमेव दिश ९ सवित्रा प्राजानन्। माश ३, २, ३, १८।
१२. प्रतीच्या त्वा दिशा (+सादयामि [मै.]) सवित्रा ( विश्वेभिर्देवेभिर् [मै.]) देवतया जागतेन च्छन्दसाग्नेः पुच्छमुपदधामि। मै २, ८, ११; काठ २२,५।
१३. प्रतीच्येव मह्ः। गो १,५,१५।
१४. प्रतीच्यो ऽप्यापो बह्व्यः स्यन्दन्ते, सौम्या ह्यापः। ऐ १, ७।
१५. प्राचीनामा ऽसि प्रतीची दिक्, तस्यास्ते सोमो ऽधिपतिः, स्वजः ( स्वजो रक्षिता [मै.])। तैसं ५, ५, १०, १-२; मै २, १३, २१।
१६. प्राणं पश्चात्। तैआ ५,४,७।
१७. मनुष्याणां वा एषा दिग् यत्प्रतीची। ष ३,१।
१८. यत्ते रुद्र पश्चाद् धनुस्तद्वातो अनुवातु ते, तस्मै ते रुद्रेदावत्सरेण नमस्करोमि। तैसं ५,५,७,३।
१९. यत्पश्चाद्वासि वरुणो राजा भूतो वासि। जैउ ३,५,२,२।
२०. यदग्नये प्रतीकवते ( देवा निरवपन् ), यान्येव पश्चाद्रक्षा ९ स्यासन् तानि तेनापानुदन्त। तैसं २,४,१,३।
२१. यन्त्री राडिति पश्चाद् ( उपदधाति ), येऽङ्गिरोधामानः प्राणास्ताँस्तद्दाधार। काठ २०,११।
२२. यस्य देवयजनस्याहवनीयादन्याः प्राचीरापो धावन्ति, गार्हपत्यादन्याः प्रतीचीस्तद्यजेत। मै ३,८,४।
२३. याः पश्चात्ताभिर्जेमदग्निः ( आर्ध्नोत् )। क ३१,११।
२४. या प्रतीची सा सर्पाणाम्। माश ३,१,१,७।
२५. रुद्राः प्रतीचीम् ( उदजयन् )। काठ ३१,८; क ४७,८।
२६. वर्चो द्वावि ९ श इति पश्चात्, यद् द्वे द्विपाद्यजमानः प्रतिष्ठित्यै, यद्वि ९ शतिर्द्वे विराजा अन्नं विराट्। काठ २०,१३।
२७. वारणं ( शङ्कुम् ) पश्चादर्व मे वारयाताऽइति। माश १३,८,४,१।
२८. वार्षिकौ मासौ प्रयच्छेति। एतौ ते प्रयच्छानीत्यन्नमन्नमित्येव पँतिरवास्यै प्रतीच्यै दिशो वैरूपं भा आदत्त। जै ३,३६६।
२९. सगरो वज्रिणो नाम स्थ, तेषां वः पश्चाद् गृहाः, स्वप्नो व इषवः। तैसं ५,५,१०,४।
३०. संज्ञानं वः पश्चाद् ( उपदधाति ) इति। तैआ १,२०,१।
३१. स ( सविता ) प्रतीचीं दिशं प्राजानात्। कौ ७,६।
३२. सम्राडसि प्रतीची दिक्। तैसं ४,३,६,२; मै २,८,३; काठ १७,३।
३३. सुषदा पश्चात्, (+देवस्य [तैआ.]) सवितुराधिपत्ये चक्षुर् ( प्राणं [तैआ.]) मे दाः। मै ४,९,३; तैआ ४,५,३।
३४. सोमं यजतेत्यब्रवीत् तेन प्रतीचीम् (दिशं प्रज्ञास्यथ)। काठ २३,८; क ३६,५ (तु. ऐ १,७)।

[°ची- अग्नि १९८; अङ्गिरोधामन्- १; अथर्वन्- २; अध्वर्यु- १;२८; अप्- ६७; अहभून-; आदित्य- ९; १०६; १०७;१३२; १३६;२८१;३२४; ३६२; ३७७; उशनस्- २; ऋत- २२; गार्हपत्य- १८; गृह- ७; चक्षुस्- ३; जगती- ५:१७;१८;३९; त्रयस्त्रिंश- २१; त्रैष्टुभ- २०; पवमान- ८;२८; पुच्छ- २; प्रचेतस्- १-३; प्रतिष्ठावती- १;२ द्र.]।

**प्रतीचीन-** प्राचीनमुदीचीनं मेध्यमुदक्रामद्, दक्षिणा प्रतीचीनममेध्यम्। मै ४,१,१०।

**प्रतीचीन-शिरस्-** तस्मादु ह न प्रतीचीनशिराः शयीत। नेद्देवानभिप्रसार्य शयाऽ इति। माश ३, १,१,७।

**प्रतीचीनेड** (सामन्-)- पराचीभिर्वा अन्याभिरिडाभी रेतो दधदेति, अथैतत्प्रतीचीनेडङ्काशीतं प्रजात्यै। तां १५,५,१६।

**प्रत्याश्रावण-** अथ यत्प्रत्याश्रावयति यज्ञऽ एवैतदुपावर्त्तते ऽस्तु तथेति। माश १,५,२,७।

**प्रत्याश्रावित-** अपान- ३ द्र.।

**प्रथम-चिति-** यैवेयं प्रतिष्ठा यश्चायमवाङ् प्राणस्तत्प्रथमा चितिः। माश ८, ७,४,१९।

[°ति- पृथिवी- २३ द्र.]।

**प्रदर-** प्रह्लादो वै कायाधवः। विरोचनं स्वं पुत्रमुदास्यत्। स प्रदरोऽभवत्। तस्मात्प्रदरादुदकं नाऽऽचामेत्। तै १,५,१०,७॥ [°र- इरिण- ४; निर्ऋति-गृहीत- ५; पायु- ४ द्र.]।

**प्रदातृ-** इन्द्र- १८२ द्र.।

**प्रदाव्य-** अग्नि- ४३८ द्र.।

**प्रदिश्-** मह्यं नमन्तां प्रदिशश्चतस्रः (अग्ने,। काठ ४,१४।

**प्रद्यु-**

१. प्रद्युर् नाम लोकोऽमृते विष्टो रुद्रा गोप्तारो मृत्युरधिपतिः, लोहितं रूपं यद् गौरवच्छदायै, यद् वा माहारोहणस्य वासस ऋते प्रतिष्ठितो, यन् नाच्छैति तस्मिन्। जै ३,३४८।

२. प्रद्युर् (नाम लोकः) यस्मिन् मृत्युः। जै १,३३४; ३,३४७।

**प्रपद-** यत्प्रपदाभ्यां प्रापद्यत ब्रह्मेमं पुरुषं तस्मात्प्रपदे, तस्मात् प्रपद इत्याचक्षते। ऐआ २,१,४।

**प्रपितामह-** आदित्य- १०८ द्र.।

**प्रप्रोथ-** (सोमस्य ह्रियमाणस्य) यत्प्राप्रोथत्ते प्रप्रोथाः। तां ८, ४, १।

**प्रफर्वी-** इडा- २२ द्र.।

**प्रबभ्र-** वज्रो वै प्रबभ्रः। काठ १०,९।

**प्रभु,भू-**

१. प्रभूरसि, प्राहं तमतिभूयासं योऽस्मान् द्वेष्टि। मै १, ५,११॥ [°भु- पितृ- ७८ द्र.]।

२. यज्ञ इव प्रभुर्भूयासम्। ऐआ ५,१,१।

**प्रभू-मत्-** प्रजापति- ३९ द्र.।

**प्रभूति-** प्राणं वा अनु प्रजाः पशवः प्रभवन्ति (संभवन्ति [जैउ २,२,२,५])। जैउ २,२,२,५;६।

**प्रमंहिष्ठीय** (सामन्-)-

१. ते (ऋषयः) ऽब्रुवन्। प्रमंहिष्ठो वै नोऽभूद् इति। तदेव प्रमंहिष्ठीयस्य प्रमंहिष्ठीयत्वम्। तदेतत् पशव्यं साम। जै ३,२२५।

२. प्रमंहिष्ठीयं भ्रातृव्यवान् कुर्वीत''''' हन्ति द्विषन्तं भ्रातृव्यं''''' । यदु 'प्र' इत्यपश्यत (इन्द्रः) तस्मात् प्रमंहिष्ठीयमित्याख्यायते । जै १,१८२ ।

३. प्रम ँ हिष्ठीयेन वा इन्द्रो वृत्राय वज्रं प्रावर्त्तयत्तमस्तृणुत । तां १२,६,६ ।

**प्रमा**- अन्तरिक्ष- ६६; ८६; १२१; अन्तरिक्षलोक- ५ द्र. ।

**प्रमायुक**- एष ह वै प्रमायुको योऽन्धो वा बधिरो वा । गो १, ४,२०; माश १२, २, ३, ४ ।

**प्रमीत**- यत्र वा अदोऽग्नौ पुरुषं प्रमीतमादधति'''''' । मै ४,८,६ ।

**प्रमृणा** (हिंसा)- यमो राजा प्रमृणाभिः पुनातु । काटसंक ९६ : ७ (तु. तै १,४,८,६) ।

**प्रम्लोचन्ती**- अनुम्लोचन्ती- द्र. ।

**प्रयाज**-

१. एकादश(नव [मै.]) प्रयाजाः । मै १, १०,८ काठ ३६,९; क ४१,७ ।

२. ततो देवा अर्चन्तः श्राम्यन्तश्चेरुस्तऽएतान् प्रयाजान् ददृशुस्तैरयजन्त तैर्ऋतून्त्संवत्सरं प्राजयन्नृतुभ्यः संवत्सरात्सपत्नानन्तरायँस्तस्मात्प्रजयाः, प्रजया ह वै नामैतद्यत्प्रयाजा इति माश १,५,३,३ ।

३. ते (प्रयाजाः) वाऽआज्यहविषो भवन्ति । माश १, ५, ३, ४ ।

४. पञ्च प्रयाजाः । इमऽएवास्य ते शीर्षण्याः पञ्च प्राणाः । मुखमेवास्य प्रथमः प्रयाजो दक्षिणा नासिका द्वितीयः सव्या नासिका तृतीयो दक्षिणः कर्णश्चतुर्थः सव्यः कर्णः पञ्चमः । माश ११, २, ६, ४ ।

५. प्रयाजाः प्राञ्चो हूयन्ते तद्धि प्राणरूपम् । माश ११, २,७,२७ ।

६. प्राणा वै प्रयाजाः । काठ १२,२; २६,९; ऐ १, ११; कौ ७, १; १०,३; माश ११,२,७,२७ ।

७. य इमे शीर्षन् प्राणास्ते प्रयाजाः । ऐ १, १७ ।

८. यज्ञमुखं वै प्रयाजाः'''वीर्यं वै प्रयाजाः । मै १,७,३. काठ ९,१ ।

९. यद्दश प्रयाजाः, प्राणानेवास्य प्रयजति । मै ३, ९, ८ ।

१०. रेतःसिच्यं वै प्रयाजाः । कौ १०,३ ।

११. वसवः प्रयाजेषु । काठ ३४,१६ ।

१२. संवत्सरं वा एते परीज्यन्ते यत् प्रयाजाः । क ८,४ ॥ [°ज- अन्न- ३१; असुर- ३१; आत्मन्- ३०; ऋतु- २८;३१; पशु- १६; पितृ- ६८ द्र. ] ।

**प्रयाजानुयाज**- प्राणा वै प्रयाजानुयाजाः । माश १४, २,२,५१ ॥ [°ज- आज्यप-; ऋतु- २८ द्र.] ।

**प्रयुज्**- अग्नि- २८४ द्र. ।

**प्रयुत्**- यद् (वसवः) इमान् लोकान् प्रायुवंस्तस्मादु हैते प्रयुतो नामापि स्तोमाः । जै २, २०८ ।

**प्रवत्**-

१. प्रवद्धै प्रथमस्याह्नो रूपम् । कौ २०,२ ।

२. प्राणो वै प्रवान् । माश १,४,३,३ ।

३. संवत्सरो वै प्रवतः शश्वतीरपः । तां ४, ७, ६ ।

**प्रवर**- होत्राः प्रवरे । काठ ३४, १६ ।

**प्रवर्ग्य**-

१. अग्निर्वायुरादित्यस्तदेते प्रवर्ग्याः । माश ९, २, १, २१ (तु. माश १४, ३, २, २४) ।

२. अग्निहोत्रं (संवत्सरो [माश १४, ३,२,२२] ) वै प्रवर्ग्यः । माश १४, ३, २, २२;२६ ।

३. अथ यत्प्रवर्ग्येण यजन्ते । आदित्यमेव देवतां यजन्ते । माश १२, १, ३, ५ ।

४. अथ यत् प्रावृज्यत तस्मात्प्रवर्ग्यः । माश १४, १, १, १० ।

५. असौ खलु वावैष आदित्यः । यत्प्रवर्ग्यः । तैआ ५, ११, १ (तु. माश १०,२, ५, ४; १४, १, १, २७) ।

६. इमे वै लोकाः प्रवर्ग्यः । माश १४, ३, २, २३ ।

७. ईश्वरो वा एषो ऽन्धो भवितोः । यः प्रवर्ग्यमन्वीक्षते । तैआ ५,३,७ ।

८. एष (वायुः) ड प्रवर्ग्यः । माश १४, २, १, ९ ।

९. तं न सर्वस्मा ऽइव प्रवृञ्ज्यात् । सर्वं वै प्रवर्ग्यः । माश १४, २, २, ४६ ।

१०. तस्य (अरुणकेतुकस्याग्नेः) इन्द्रो वम्रिरूपेण धनुर्ज्यामच्छिनत् स्वयं तदिन्द्रधनुरित्यज्यम् । अभ्रवर्णेषु चक्षते । एतदेव शंयोर्बार्हस्पत्यस्य । एतद् रुद्रस्य धनुः । रुद्रस्य त्वेव धनुरार्त्निः । शिर उत्पिपेष । स प्रवर्ग्यो ऽभवत् । तैआ १, ५, २ ।

११. तस्य (मखस्य [यज्ञस्य] ) एतच्छिरः यत्प्रवर्ग्यः । तैआ ५, ३, २ ।

१२. तस्य (मखस्य[विष्णोः]) धनुरार्त्निरूर्ध्वा पतित्वा शिरो ऽछिनत्स प्रवर्ग्यो ऽभवत् । तां ७, ५, ६ ।

१३. तस्य (यज्ञस्य) धनुर्विप्रमाण ७ शिर उदवर्तयन् । तद् द्यावापृथिवी अनु प्रावर्तत । यत्प्रावर्तत । तत्प्रवर्ग्यस्य प्रवर्ग्यत्वम् । तैआ ५, १, ५ ।

१४. तावेतद् यज्ञस्य शिरः प्रत्यधत्ताम् (अश्विनौ) । यत् प्रवर्ग्यः । तैआ ५, १, ७ ।

१५. ब्रह्मवर्चसं (यजमानो [माश.]) वै प्रवर्ग्यः । काठ ३७, ७; माश १४, ३,२, २५ ।

१६. शिरो (+ ह [गो] ) वा एतद्यज्ञस्य । यत् प्रवर्ग्यः । तैआ ५, ४, ३-४, ६,१; गो २, २,६ । (तु. माश ३, ४, ४, १; ९,२,१,२२; १४,२,१,५; ३,१,१६) ।

१७. सम्राट् प्रवर्ग्यः । माश १४, १, ३,१२ ॥ [ °र्ग्य- अग्नि- ४३८; आदित्य- ४०; २२७; गायत्री- २७; ज्योतिस्- १३; तेजस्- ७; द्वादशरात्र- १; पृथिवी- १०३ द्र.] ।

**प्रवह्लिका** ( ऋच्- )-

१. तद्यथाभिर्ह वै देवा असुराणां रसान् प्रववृहुस्तस्मात्प्रवह्लिकाः । तत्प्रवह्लिकानां प्रवह्लिकात्वम् । गो २, ६, १३ ।

२. प्रवह्लिकाभिर्वै देवा असुरान्प्रवह्ल्याथैनानत्यायन् । ऐ ६, ३३ ।

**प्रवाहण**- विभूरसि प्रवाहणः । मै १, २, १२ ।

**प्र वो वाज**- ऋतु- १४ द्र. ।

**प्रशिस्**- प्रशिषं प्रशासाभ्याम् (प्रीणामि) । तैसं ५, ७, १९, १; काठ ५३, ९ ।

**प्रष्टि-वाहिन्-** प्रष्टिवाही वै दैवरथः। तै १, ३, ६,४; ७, ९, १।

**प्रसव-**

१. प्रसवाय सावित्रः ( पशुः )। मै २, ४, २; ३, ७, ८।
२. सविता त्वा प्रसवाना ऽसुवताम्। तैस १, ८, १०, १।
३. सविता प्रसवानामीशे। कौ ५, २ (तु. तैसं ३, ४,५, १; ऐ १,३०; ७,१६)।

**प्रसुत-** दीक्षा- १९ द्र.।

**प्रसूति-** सवितुः प्रसूतिः ( पत्नी )। तैआ ३, ९, २।

**प्रस्तर-**

१. अयं वै स्तुपः प्रस्तरः। माश १, ३, ३,७;१२;४,१०।
२. यजमानो (यज्ञो [माश ३, ४, ३, १९]) वै प्रस्तरः। मै ३, ८,६; काठ २५,५; ३१, १०; ३२,३; क ४७,१०; ऐ २,३; जै १,८६; तां ६,७,१७; तै ३, ३,६,७;८;९,२,३; माश १,८, १,४४; ३, ११;१४;१६; (तु. तैसं १, ७, ४, ४; २, ६,५,३)।
३. यत्प्रस्तरमाहवनीये प्रहरति, यजमानमेव सुवर्गं लोकं गमयति। तैसं २, ६, ५, ५-६। [°र- क्षत्र- २३ द्र.]।

**प्रस्ताव-**

१. अग्निर्वायुरसावादित्य एष प्रस्तावः। जैउ १, ५, १, २।
२. अर्धोदितः ( आदित्यः ) प्रस्तावः। जैउ १, ३, २, ४।
३. अनिरुक्तो वै प्रस्तावः। जैउ १, १२, १, ३।
४. ऋचः (वाचं [जैउ १,३,३,५]) प्रस्तावम् ( प्रजापतिरकरोत् )। जैउ १, ३, ३,३।
५. कृष्णं ( चक्षुषः ) प्रस्तावः। जैउ १, ११, २, १।
६. द्वादशाक्षरः (मण्डलं [जैउ.] ) प्रस्तावः। जै १,१३७; जैउ १, ११, १, ९।
७. प्रस्तावम्मनुष्येभ्यः ( प्रजापतिः प्रायच्छत् )। जैउ १, ३,१,६।
८. मुख ऽहि साम्नः प्रस्तावः। तां १२, १०, ७।
९. यद् दक्षिणायां दिशि तत्सर्वं प्रस्तावेनाप्नोति। जैउ १, १०, १, ४।
१०. रथन्तरं (+एव [ जै १, २९२]) प्रस्तावः। जै १, २९२; २, ४३३॥ [°व- अर्धमास- ५; ग्रीष्म- ६; ७; जीमूत- १; त्वच्- १; प्रत्यञ्च्- २ द्र.]।

**प्रस्ताव-प्रतिहार-** प्रस्तावप्रतिहाराभ्यां वै यजमानो धृतः। जै १,३४५; ३,१९;१७२;२७८।

**प्रस्तोतृ-**

१. अथ प्रस्तोता (प्रतिपद्यते), वागेव यज्ञस्य। माश ४, २, ५, ३।
२. प्रस्तोतः सामानि गाय। तैआ ४,४,१।
३. प्रस्तोता द्वितीयस्सर्पति मुखं साम्नः॥ जै १,८५॥ [°तृ- अग्नि- ६५; अपान- ३; अश्व-१४; प्राजापत्य- ११ द्र.]।

**प्रस्तोतृ-प्रतिहर्तृ-** अश्व- १७ द्र.।

प्रह्लाद्- प्रह्लादो ह वै कायाधवो विरोचन ँ स्वं पुत्रमपन्यधत्त । नेदेनं देवा अहनन्निति । तै १, ५, ९, १ ॥ [°द- प्रदर- द्र.] ।

प्राञ्च्-

१. तान् (पशून्) यत् प्राच उत्सृजेद् रुद्रायापि दध्यात् । तैसं ५, २,५,३ ।

२. प्राङ् पशुः प्राणिति । ...प्राङ् पशुः पश्यति । काठ २०,९ ।

३. प्राञ्चमनयन् ( देवा आहवनीयम् ) । काठसंक १४ : ५ ।

४. प्राञ्चमुपदधाति सुवर्गस्य लोकस्य समष्ट्यै । तैसं ५, २, ८, ६ ।

५. प्राञ्चो ऽन्य ऋत्विज आर्त्विज्यं कुर्वन्ति तस्मादेषा दिशां वीर्य्यवत्तमा । एता ँ हि भूयिष्ठाः प्रीणन्ति । तां ६, ४, १४ ।

६. प्राञ्चौ बाहू नयत्याहवनीयं तेन परिगृह्णाति । मै ४,१,१० (तु. क ४७,८) ।

७. भूपतये स्वाहेति प्राक् । काठ २५,७ ।

८. यत्प्राङ् हूयते, देवलोकं तेन (अभिजयति) । मै ३.९,५ ॥ [प्राञ्च्- अध्वर्यु- ३५; देव-२००; देवरेतस्-; देवलोक- १७ द्र.] ।

प्राची ( ,पुरस्, पुरस्तात् [दिश्-] )-

१. अथैनं (इन्द्रम्) प्राच्यां दिशि वसवो देवाः...अभ्यषिञ्चन्...साम्राज्याय । ऐ ८,१४ ।

२. अयं पुरो भूः ( भुवः [तैसं.] ) तस्य प्राणो भौवायनः । वसन्तः प्राणायनः गायत्री वासन्ती । गायत्र्या ( °यत्रियै [तैसं.] ) गायत्रम् । गायत्रादुपा ँ शुः । उपा ँ शोस्त्रिवृत् । त्रिवृतो रथन्तरं ( +रथन्तराद् [तैसं.] ) वसिष्ठ ऋषिः । तैसं ४, ३, २, १; मै २, ७, १९; काठ १६,१९; क २५,९ ।

३. अयं पुरो हरिकेशः सूर्यरश्मिस्तस्य रथगृत्सश्च (°थकृत्स्नश्च [मै.]) रथौजाश्च सेनानि- ( °नी [तैसं.] ) ग्रामण्यौ, पुञ्जिकस्थला (°गस्थला [काठ.]) च कृतस्थला चाप्सरसौ यातु- धाना हेती रक्षा ँसि प्रहेतिः । तैसं ४, ४,३,१, मै २,८,१०; काठ १७,९; क २५, ८ ।

४. इयमेव प्राची दिग् रथन्तरम् (साम) । जै २, २१ ।

५. एषा ( प्राची दिक् ) दिशां वीर्यवत्तमोपजीवनीयतमा भूयिष्ठैः प्रीता । जै १,७२ ।

६. ततो वै वसवः प्राचीं दिशमुदजयन् । मै ४,१ १० ।

७. तस्मादिमाः प्रजाः प्राच्यः सर्पन्ति । माश ११,१,६,२१ ।

८. तस्मादेतस्यां प्राच्यां दिशि ये के च प्राच्यानां राजानः साम्राज्यायैव ते ऽभिषिच्यन्ते सम्रा- डित्येनानभिषिक्तानाचक्षते । ऐ ८,१४ ।

९. तस्माद्धेदं प्राच्यो ग्रामता बहुलाविष्टाः । ऐ ३,४४; गो २,४,१० ।

१०. तस्य साम्न इयमेव प्राची दिग्घिङ्कारः । जैउ १,१०,१,२ ।

११. ताः (आतपति वर्ष्या अपः) पुरस्तादुपदधाति । तैआ १,२४,१ ।

१२. तेजो वै ब्रह्मवर्चसं प्राची दिक् । ऐ १, ८ ।

१३. धर्त्रं चतुष्टोम इति पुरस्ताद्यज्ञमुखं वै चतुष्टोमो यज्ञमुखमेव पुरस्ताद्दधाति । काठ २१,१ ।

१४. पुरस्ताद्धि देवाः प्रत्यञ्चो मनुष्यानभ्युपावृत्तास्तस्मात्तेभ्यः प्राङ् तिष्ठञ्जुहोति । माश २, ६, १, ११ ।

१५. प्राची दिग्गायत्री छन्दो रथन्तर ँ सामाग्निर्देवता, वसन्त ऋतुस्त्रिवृत्स्तोमः पञ्चदशवर्तनि-स्त्रियविर्वयः कृतमयानां पुरोवातो वातस्सानग ऋषिः। काठ ३९,७ ( तु. तैसं ४,३,३,१ )।

१६. प्राची दिग्घोतुः। माश १३,५,४,२४।

१७. प्राची दिशा ँ सहयशा यशस्वती विश्वेदेवाः प्रावृषाऽह्ना ँ सुवर्वती। ··· वैरूपे सामन्निह तच्छकेम जगत्यैनं विक्ष्वावेशयामः। विश्वे देवाः सप्तदशेन वर्चं इद ँ क्षत्रं सलिलवातमुग्रम्। तैसं ४,४,१२,२;३ ( तु. मै ३,१६,४; काठ २२,१४ )।

१८. प्राचीमावर्त्तयति। देवलोकमेव तेन जयति। तै २,१,८,१; ३,२,१,३।

१९. प्राच्या त्वा दिशा······अग्नेः शिर उप दधामि। तैसं ५,५,८,२।

२०. प्राच्येव भर्गः। गो १,५,१५।

२१. बोधश्च मा प्रतिबोधश्च पुरस्ताद् गोपायताम्। काठ ३७,१०।

२२. ब्रह्मणैव पुरस्तादचिनुत। मै ३,४,८।

२३. मूर्धाऽसि राडिति पुरस्तादुपदधाति, य आदित्यधामानःप्राणास्ताँस्तद्दाधार। काठ २०,११।

२४. यज्ञमुखं वा अग्निर्यज्ञमुखं दीक्षा ( +यज्ञमुखं ब्रह्म [तैसं.] ) यज्ञमुखं त्रिवृद्, यज्ञमुखमेव पुरस्ताद् दधाति ( वियातयति [तैसं.] )। तैसं ५,३,४,१; काठ २१,१।

२५. यज्ञमुखं वै वसवो यज्ञमुखं रुद्रा यज्ञमुखं चतुर्वि ँ शो यज्ञमुखमेव पुरस्ताद्दधाति। काठ २१,१।

२६. यत्ते रुद्र पुरो धनुस्तद्वातो अनुवातु ते, तस्मै ते रुद्र संवत्सरेण नमस्करोमि। तैसं ५,५,७,२-३।

२७. यस्य मुख्यवतीः पुरस्तादुपधीयन्ते मुख्य एव भवत्या ऽस्य मुख्यो जायते। तैसं ५,३,४,६।

२८. याः पुरस्तात्ताभिर्वसिष्ठ आर्ध्नोत्। क ३१,११।

२९. या मुख्यास्ताः पुरस्तादुपदधात्याऽस्य मुख्यो जायते य एवं वेद। काठ २१,१।

३०. योनिश्चतुर्वि ँ श इति पुरस्ताद्यज्ञमुखं वै चतुर्विंशः। काठ २०,१३।

३१. राज्ञ्यसि प्राची दिक्। तैसं ४,३,६,२; मै २,८,३; काठ १७,३।

३२. वज्रेणैवैतत्पुरस्तान्नाष्ट्रा रक्षा ँ स्यपघ्नन्प्रभिन्दन्नेति। काश १,१,४,१८।

३३. वसन्तेन पुरस्तादचिनुत। मै ३,४,८।

३४. वसवः पुरस्तात् ( पर्यपश्यन् )। जै २,१४२।

३५. वासन्तिकौ मासौ प्रयच्छेति। एतौ ते प्रयच्छानीत्यन्नमन्नमिति पतित्वास्यै प्राच्यै दिशो रथन्तरं भा आदत्त। जै २,३६६।

३६. समिद् ( प्राची ) दिशामाशया नः सुवर्विन्मधोरतो माधवः पात्वस्मान्। अग्निर्देवो दुष्टरी-तुरदाभ्य इद ँ क्षत्र ँ रक्षतु पात्वस्मान्। तैसं ४,४,१२,१।

३७. स ( वायुः ) यत्पुरस्ताद्वाति। प्राण एव भूत्वा पुरस्ताद्वाति। तस्मात्पुरस्ताद्वान्तं सर्वाः प्रजाः प्रतिनन्दन्ति। तै २,३,९,४-५।

३८. सोऽग्निरेव प्राचीं दिशमुदजयत्। काठ ३१,८; क ४७,८॥ [ चो- अग्नि- ३४७; ४२८; ५८४-५८८; ६२३;७२७;७७१; अध्वर्यु- १; असित- ५; २आज्य- १३; आदित्य- १६७; २१९;२८१; आदित्यधामन्- २; आयुस्- ७; इन्द्र-३११;३२२; इन्द्रघोष- १;२; उद्गातृ-१;

ऋच्- १७; ऋत्विज्- १०; गायत्र- ४४; गायत्री- ३०; ३८; ९०; जगती- ४०; दिश्- ७३; देव- ७०;१०६;१५५; नाक- ११; पथ्या- १; ३; ४ द्र.] ।

**प्राचीनवंशा-** दीक्षित- १२ द्र. ।

**प्राचीनावीत-** पितृ- ७९ द्र. ।

**प्राण-**

१. अक्षीयं वा अमृतमेते प्राणाः । काश ३, १, ११,६ ।

२. अथ बृहती । योऽयं प्राङ् प्राणः । एष एव सः । ···एतेन ह्ययं प्राणेन करोति रेतश्च सिञ्चति मेहति च । जै १, २५४ ।

३. अथ यत्प्राणा अश्रयन्त तस्मादु प्राणाः श्रियः । माश ६, १, १, ४ ।

४. अथ वै हविष्पङ्क्तिः प्राण एव । कौ १३, २ ।

५. अथैषा मानुषी विराड् यदिमे पुरुषे प्राणाः । ···तस्या एतस्या अन्नमेवापिधानम् । जै १, २४६ ।

६. अधरः प्राण उत्तरेषां प्राणानामर्धभाक् । क ३१,१३ ।

७. अधिपतिना प्राणाय प्राणं जिन्व । मै २, ८, ८ ।

८. अध्रुवं वै तद्यत्प्राणः । माश १०, २, ६, १९ ।

९. अन्तरिक्षदेवत्यो हि प्राणः । तैसं ६,४,५,५ ।

१०. अन्नं वै प्राणानुपसृजति । काठसंक ७० : ५ ।

११. अन्वङ् वै पुरुषं प्राणो यदा वै प्राणस्तिर्यङ् भवत्यथ प्रमीयते । काठ २३,२ ।

१२. अय ९ वाव यः ( वायुः ) पवत एष प्राणः । मै २,३,५ (तु. काठ २६,१०; क ४१, ८ ) ।

१३. अयं वै प्राणो यो ऽयं ( वायुः ) पवते, सो ऽयम् ( वायुः ) एक इवैव पवते, सोऽयं पुरुषेऽन्तःप्रविष्टो दशधा विहितः ··· तदस्मिन् दश प्राणान् कृत्स्नमेवायुर् दधाति । माश ५, २, ४, १० ।

१४. अरिक्ता (आर्द्रा [तैसं ६, २, ११, २]) अन्तरतः प्राणाः । तैसं ६, २,११,२;४,९, ५ ।

१५. अर्द्धभाग्वै मनः प्राणानाम् । ष १, ५ ।

१६. अष्टौ(असम्भिन्नाः [तैसं.] ) प्राणाः । तैसं ६,२,११,२; माश ९, २,२, ६ ।

१७. आत्मा वै लोकम्पृणा ( इष्टका), प्राणो ऽनुष्टुप् । तैसं ५, ५, ६, २ ।

१८. आयत इव ह्ययमवाङ् प्राणः । ष २, २ ।

१९. इदं शरीरं परिगृह्योत्थापयति ( प्राणः ), तस्मादेतदेवोक्थमुपासीतेति । शांआ ५, ३, कौउ ३, ३ ।

२०. इम उदन्वन्तः प्राणाः ···इमे लोमशाः प्राणाः । मै ३, ८, ८ ।

२१. इमान्वै प्राणानग्निरन्वायत्तः । जै २,१३६ ।

२२. इमे वै प्राणा मनोजाता मनोयुजो दक्षक्रतवः । माश ३, २, २,१३ ।

२३. इमे ह सप्त मुख्याः प्राणा द्वाववाञ्चौ, नाभ्यां दशमः । जै २, ५८ ।

२४. उद्यत इव ह्ययं प्राणः । ष २, २ ।

२५ उपा ऽ इवायतनो वै प्राणः । माश १०, ३, ५, १५ ।

२६. उभयतः प्राणाः प्रजा ऊर्ध्वाश्चावाचीश्च । जै १, १२७; १६६ ।

२७. उभयतो वैश्वानरो ह्ययं प्राणो ऽय ऽ वाव वैश्वानरो यो ऽ यमवाङ् प्राणः । मै ४, ६, ६ ।

२८. ऊनाद्धै प्राणा ईरते । जै २,३९३ ।

२९. ऊर्ध्वः खलु वै नाभ्यै प्राणः । तैसं ६, ३, १, ५ ।

३०. ऋजुरिव हि प्राणः । तैसं २. ५, ११, ७ ।

३१. एकः प्राणः सर्वाण्यङ्गान्यवति । तैसं ७, ५, ८, ५ ।

३२. एकपुत्र इति चैकितानेयः । एको ह्येवैष पुत्रो यत्प्राणः । स उ एव द्विपुत्र इति द्वौ हि प्राणापानौ । स उ एव त्रिपुत्र इति । त्रयो हि प्राणो ऽपानो व्यानः । स उ एव चतुष्पुत्र इति चत्वारो हि प्राणो ऽपानो व्यानस्समानः । स उ एव पञ्चपुत्र इति पञ्च हि प्राणोऽपानो व्यानस्समानोऽवानः । स उ एव षट्पुत्र इति षड्ढि प्राणो ऽपानो व्यानस्समानोऽवान उदानः । स उ एव सप्तपुत्र इति सप्त हीमे शीर्षण्याः प्राणाः । स उ एव नवपुत्र इति सप्त हि शीर्षण्याः प्राणा द्वाववाञ्चौ । स उ एव दशपुत्र इति सप्त शीर्षण्याः प्राणा द्वाववाञ्चौ नाभ्यां दशमः । स उ एव बहुपुत्र इति । एतस्य हीयं सर्वा प्रजाः । जैउ २,२,३,२-११ ।

३३. एकोऽन्तरतः प्राणः । तैसं ६,४,९,३ ।

३४. एको ह्येवैष यत्प्राणो ऽपानो व्यान इति । जै २,२४७ ।

३५. एतद्धै वाचः सत्यं यत् प्राणः । जै २,४२५ ।

३६. एतावन्तः ( त्रीणि च शतानि षष्टिश्च ) एव पुरुषस्य प्राणाः । गो १,५,५ ।

३७. एतेन ह्ययं प्राणेन करोति भस्म च करोति वातं च । जै १,२५४ ।

३८. एते वा अपहतपाप्मानः प्राणा ये मुख्याः । जै २,३४७ ।

३९. एष ( योऽयं दक्षिणे ऽक्षन्पुरुषो मृत्युनामा सः ) उ एव प्राणः । एष हीमाः सर्वाः प्रजाः प्रणयति तस्यैते प्राणाः स्वाः स यदा स्वपित्यथैनमेते प्राणाः स्वा अपियन्ति तस्मात्स्वाप्ययः स्वाप्ययो ह वै तऽस्वप्न इत्याचक्षते परोऽक्षम् । माश १०,५,२,१४ ।

४०. एष ( प्राणः ) उ एव बृहस्पतिः । माश १४,४,१,२२ ।

४१. एष ( प्राणः ) उऽ एव ब्रह्मणस्पतिः । वाग्वै ब्रह्म तस्या एष पतिस्तस्मादु ह ब्रह्मणस्पतिः । माश १४,४,१,२३ ।

४२. एष ह वै संप्रति प्राणो यन्मज्जैतद्रेतो न ह वा ऋते प्राणाद्रेतः सिच्यते, यद्वा ऋते प्राणाद् रेतः सिच्यते, पूयेन्न संभवेत् । ऐआ ३,२,२ ।

४३. एषा हीदं देवता सर्वं प्राणयत । तद् यत् प्राणयत तस्मात्प्राणः । जै ३,३७७ ।

४४. ऐन्द्रः खलु वै देवतया प्राणः । तैसं ६,३,११,२ ।

४५. कतमा सा देवतेति । प्राण इति ब्रूयात् । प्राणो वा इदं सर्वमभवत् । जै ३,३७७ ।

४६. कतमे ते रुद्रा इति, दश पुरुषे प्राणा इति होवाच । आत्मैकादशस्ते यद्रोत्क्रामन्तो यन्ति, अथ रोदयन्ति, तस्माद् रुद्रा इति । जै २,७७ ( तु. माश ११,६,३,७ ) ।

४७. कतमैका देवतेति, प्राण इति । जै २,७७ ।

४८. किं छन्दः । का देवता योऽयमवाङ् प्राण इति । यज्ञायज्ञियं छन्दो वैश्वानरो देवता । माश १०,३,२,८ ।

४९. को हि तद्वेद यावन्त इमे ऽन्तरात्मन् प्राणाः । माश ७,२,२,२० ।

५०. चत्वारो वा इमे शीर्षन् प्राणाः । मै ३,८,८ (तु. काठ २५,९; क ४०,२) ।

५१. जीवत एवान्ये प्राणा ( चक्षुरादयः ) अपक्रामन्ति न प्राणः । जै १,२६९ ।

५२. तं ( प्राणम् ) यद् देवा अब्रुवन्नयं वै नः सर्वेषां वसिष्ठ इति तस्माद् वसिष्ठस्तस्माद् वसिष्ठ इत्याचक्षत एतमेव ( प्राणम् ) सन्तम् । ऐआ २,२,२ ।

५३. त इमे सप्तर्षयः प्रतिहिताः प्राणा एव । जै २,२७ ।

५४. तदायतनो वै प्राणो यच्छिरः (+तस्मात् त्रिवृतैव शीर्ष्णा प्रतिपद्यम् [जै २, १८]) । जै १, २६८;२,१८ ।

५५. तदाहुः को ऽस्वप्तुमर्हति यद्वाव प्राणो जागार तदेव जागरितमिति । तां १०, ४, ४ ।

५६. तद्यत्रैतदधीते वा भाषते वा, वाचि तदा प्राणो भवति, वाक् तदा प्राणं रेळ्हयथ यत्र तूर्ष्णीं वा भवति, स्वपिति वा, प्राणे तदा वाग्भवति, प्राणस्तदा वाचं रेळ्हि । ऐआ ३, १, ६ ।

५७. तद्वै दैव्यं मिथुनं यद् वाक् च प्राणश्च । जै १, ३०६ ।

५८. तं ( प्राणम् ) पाप्मा नाऽन्वसृज्यत । न ह्येतेन प्राणेन पापं वदति न पापं ध्यायति न पापं पश्यति न पापं शृणोति न पापं गन्धमपानिति । तेनाऽपहत्य मृत्युमपहत्य पाप्मानं ( देवाः ) स्वर्गं लोकमायन् । जैउ २, १,१, १९-२० ।

५९. तं ( पशुं संज्ञतम् ) प्राची दिक् । प्राणेत्यनुप्राणत्प्राणमेवास्मिँस्तददधात् । माश ११, ८,३,६ ।

६०. तयोः ( सदसतोः ) यत् सत् तत्साम तन्मनस्स प्राणः । जैउ १, १७, १, २ ।

६१. तस्मात्प्राण एव साम । जैउ ३, १, १, १८ ।

६२. तस्मात्सर्वे प्राणाः प्राणोदानयोरेव प्रतिष्ठिताः । माश १२, ९,१,१० ।

६३. तस्मात्सर्वे प्राणा वाचि प्रतिष्ठिताः । माश १२, ८,२,२५ ।

६४. तस्मादयमात्मन्प्राणो मध्यतः । माश ७, ३, १, २ ।

६५. तस्या ( वाचः ) उ प्राण एव रसः । जैउ १, १, १, ७ ।

६६. ता वा एताः सर्वा ऋचः सर्वे वेदा सर्वे घोषा एकैव व्याहृतिः प्राण एव, प्राण ऋच इत्येव विद्यात् । ऐआ २, २, २ ।

६७. ते पुनर्नव भवन्ति । प्राणा एव मनो दशमम् । जै १, १३७ ।

६८. त्रयः प्राणाः, प्राणो व्यानो ऽपानः ··· (+द्वौ हि प्राणश्चापानश्च ··· एको हि प्राणः [काठसंक.]) । काठ १९,११; काठसंक ५२ : ३-६ (तु. तैसं २,५,११,५; मै ३,६,३;४,५,४; काठ ३७,१; क ३१,१; ४७,६; माश १,३,५,१३;६,४,२,५;९,४,२,१०) ।

६९. त्रयोदशेमे पुरुषे प्राणाः (+नाभिस्त्रयोदशी [माश.]) । गो १,५,५; माश १२,३,२,२ ।

७०. त्रिवृद्वै (°वृद्धि [तैआ.]) प्राणः । तै ३, २, ३, ३; तैआ ५, ४, ११ ।

७१. दश वा ऽ इमे पुरुषे प्राणा आत्मैकादशो यस्मिन्नेते प्राणाः प्रतिष्ठिताः । माश ३ ८, १, ३ (तु. मै २,३,५; क ४२,५; कौ २९,८; जै १,१३२;२,२२२;२२३; माश ६,३,१,२१) ।

७२. दशास्मिन् ( पशौ ) प्राणाः, प्राणाः खलु वै पशोर्देवताः······आत्मा वै प्राणानामेकादशः। मै ३,९,८।

७३. द्वयं प्राणेन करोति प्राण्यापानिति। जै १,२५४।

७४. द्वादशविधा वा इमे प्राणाः सप्त शीर्षण्या द्वौ स्तन्यौ त्रयोऽवाञ्चः। ऐआ १,५,१ (तु. गो १, ५,५)।

७५. द्वाववाञ्चौ प्राणौ। क ४२,२ (तु. काठ ११,२)।

७६. द्वौ द्वौ हीमे (बहिष्ठात् [तैसं] ) प्राणाः। तैसं ६,४,९,३; मै ४,५,५ ( तु. तैसं ६,४,४,४)।

७७. नव पुरुषे प्राणाः (+नाभिर्दशमी [जै २,३१६])। जै ३,३१६;३१९ (तु. तैसं ५, ३,२,३; मै १,१०,८; ४,६,४; काठ ९,१६; २३,१; २४, ८; ३३,८; क ३५,७; ४५, ४; जै १,१२२; २,२४;४१५;४३१; ३,१७६;२०६; तां ७,७,६; तै १, ३,७,४; २,२,१,७; माश १, ५,२, ५; ६,३,१,२१;८,२,१०; तैआ ५,६,९-१०)।

७८. नव वै प्राणाः (+आयुर्दशमम् [मै ४,६,६]); मै २,५, १०; ३, ४, ४; ४, ६, ६; ऐ ४, १६; कौ ७,१०; गो १,४,६; तां ४,५,२१; १४,७,६; ष ३,१२; ऐआ १,३,८ (तु. काठ ३६, २)।

७९. नव वै प्राणाः सप्त शीर्षन्नवाञ्चौ द्वौ। माश ६,४,२,५; ८,४,३,७।

८०. नव वै शिरसि प्राणाः। शांआ २,२।

८१. न वाऽ अस्थिषु प्राणो ऽस्ति। माश ७,१,१,१५।

८२. न वै प्राणात् प्रेयः किंचनास्ति। जै १,२७२।

८३. न ह्येष ( प्राणः ) कदाचन संविशति। ऐआ २,१,६।

८४. पञ्चधाविहितो वाऽ अयं शीर्षन्प्राणो मनो वाक् प्राणश्चक्षुः श्रोत्रम्। माश ९, २,२,५।

८५. पराङ् (प्राङ् [क.]) प्राणः। मै ४,६,३; काठ २७,१; क ४२,१।

८६. पुरस्तात्प्रत्यङ् प्राणो धीयते। माश ७,५,१,७।

८७. पुरस्ताद्वै नाभ्यै प्राणः। तैसं ३,४,१,३-४।

८८. पूर्वार्धे वा इमे मुखस्य प्राणाः। मै ३,८,८; ४,६,६।

८९. प्राणं वा अनु प्रजाः पशवो भवन्ति जैउ २,२,२,७।

९०. प्राणं सामानि ( अनु दीक्षन्ताम् )। जै २,६५।

९१. प्राण उक्थमित्येव विद्यात्। ऐआ २,१,४।

९२. प्राण एव दर्शो ददृशऽइव ह्ययं प्राणः···प्राण एवान्नादः। प्राणेन हीदमन्नमद्यते··· माश ११,२,४,५-६।

९३. प्राण एव महान् (यजुः [माश १०,३,५,४])। माश १०,३,५,४;४,१,२३।

९४. प्राण एव रज्जुः। प्राणेन हि मनश्च वाक् चाभिहिते। काश ३, १, ४, २।

९५. प्राण एव सविता (रथन्तरम् [जै.])। गो १,१,३३; जै १,२२९; माश १२,९,१,१६।

९६. प्राण एव स्रुवः सोऽयं प्राणः सर्वाण्यङ्गान्यनुसञ्चरति। तस्मादु स्रुवः सर्वा अनु स्रुचः सञ्चरति। माश १, ३, २, ३।

९७. प्राणं देवा अनु प्राणन्ति। मनुष्याः पशवश्च ये। प्राणो हि भूतानामायुः। तस्मात्सर्वायुषमुच्यते। तैआ ८,३,१; तैउ २, ३, १।

९८. प्राणश्चायुश्च प्राणानामुत्तमौ । तैसं ५,३,७,३ ।
९९. प्राणस्य त्वा परस्पाय चक्षुषस्तन्वस्पाहि । श्रोत्रस्य त्वा धर्मणा...... । मै ४,९,१० ।
१००. प्राणः सर्वे ऋत्विजः । ऐ ६,१४ ।
१०१. प्राणः सर्वाण्यङ्गान्यनु चरति । तैसं ५, ५, ६, २; मै ३. २, ८ ।
१०२. प्राणः सूददोहाः (सामवेदः [माश १४,४,३,१२]) । माश ७,१,१,१५;३,१,४५;१४,४,३१२ ।
१०३. प्राणः (यज्ञस्य) सोमः । कौ ९, ६; माश ७, ३, १, २ ।
१०४. प्राणः (°णो वै [तै.]) स्रुवः । तै ३, ३, १, ५; माश ६, ३, १, ८ ।
१०५. प्राणः स्वरः । जै १,३०१;३०७; तां ७,१,१०; १७,१२,२ ।
१०६. प्राणा अन्तरतः ( अवकाशाः [माश.]) । क ४०,२; ४२,१; माश १४,२,२,५१ ।
१०७. प्राणा आर्द्रास्सन्तोऽस ऽ श्लिष्टाः । काठ २७, १; क ४२,१ ।
१०८. प्राणा उभयतो वैश्वानराः । काठ २८,१ ।
१०९. प्राणा उ वा वायुः ( वै ब्रह्म [माश ८, ४, १, ३] ) । माश ८,४,१,३;८ ।
११०. प्राणा उ ह वाव राजन् मनुष्यस्य सम्भूतिरेवेति । जैउ ४, ६, २, ४ ।
१११. प्राणा एव महः (साम [जै.]) । गो १,५,१५; जै २,२९ ।
११२. प्राणा एव सप्तमी चितिः । माश ८ ७, ४, २१ ।
११३. प्राणाः खलु वै पुरुषे वीर्यम् । मै २, ५, १० ।
११४. प्राणाः पर एकधा संतृण्णाः । काठ २५,९, क ४०,२ ।
११५. प्राणादेवेमं लोकं (पृथिवीं प्रजापतिः) प्राबृहत् । कौ ६, १० (तु. काठ १३,७) ।
११६. प्राणाद्वायुरजायत । तैआ ३, १२, ६ ।
११७. प्राणाद् व्यान ऽ सन्तनु । काठ ३९, ८ ।
११८. प्राणा नवममहः । तैसं ७, २, ८, ४ ।
११९. प्राणानां वाग् ( +ज्योतिर् [तैसं ५, ३, २, ३] ) उत्तमा । तैसं ५, १,९, १; ६,६,११,६ ।
१२०. प्राणान्त्संक्रोशैः ( प्रीणामि ) । मै ३, १५, २ ।
१२१. प्राणाय त्वा, ऽपानाय त्वा, व्यानाय त्वा (देवः सविता प्रतिगृह्णातु) । तैसं १, १, ६, १-२ ।
१२२. प्राणाय त्वेति प्राञ्चमेव । ऐआ ५, १, ४ ।
१२३. प्राणाय त्वेत्युपा ऽ शुपात्र ऽ सादयति । काठ २७, २ ।
१२४. प्राणा रश्मयः । तै ३, २, ५, २ ।
१२५. प्राणा वा अग्रे सप्त । जै ३,११० ।
१२६. प्राणा वा उपरवाः (आजिदोहानि [जै.]) । मै ३, ८, ८; ४,६,६; जै २,२५५ ।
१२७. प्राणा (+वै [ऐ ६,२८; गो.]) वालखिल्याः । ऐ ६, २६; २८; कौ ३०,८; गो २,६,८ ।
१२८. प्राणा वाव तेषां ( देवानाम् ) वामं वस्वासीत् । जै १,१४२ ।
१२९. प्राणा वै दश वीराः (वातहोमाः [माश ९,४.२,१०]) । माश ९,४,२,१०; १२,८,१,२२ ।
१३०. प्राणा वै द्विदेवत्या एकपात्रा गृह्यन्ते तस्मात्प्राणा एकनामानो (°नस्ते [काठ., क.]) द्विपात्रा हूयन्ते तस्मात्प्राणा द्वन्द्वम् । काठ २७,५; क ४२, ५; ऐ २,२७ ।
१३१. प्राणा वै बृहत्यः (ब्रह्म [तै.]) । ऐ ३,१४; तै ३,२,८,८ ।
१३२. प्राणा वै भुजः (मारुताः [माश ९,३,१,७]) । माश ७, ५,१,२१; ९,३,१,७ ।

१३३. प्राणा वै यशः ( यशो वीर्यम् [माश १०,६,५,६]) । माश १०,६,५,६;१४,५,२,५।
१३४. प्राणा वै रुद्राः । प्राणा हीदं सर्वं रोदयन्ति । जैउ ४, २, १, ६।
१३५. प्राणा वै वसवः (+प्राणा हीदं सर्वं वस्वाददते [जैउ.]) । तै ३,२,३,३;५,२; जैउ ४,२,१,३।
१३६. प्राणा वै वामदेव्यम् (वामम् [माश.]) । जै ३,३०१; माश ७,४,२,३५।
१३७. प्राणा वै विश्वे देवाः (सप्त ऋषयः [मै.]) । तैसं ५, २,२,१; ४,६, १; मै १,५,११; काठ १९,१२;२१,८; क ३१, २; माश १४,२,२,३७।
१३८. प्राणा वै शाकलाः ( सत्यम् [माश १४, ५, १, २३]) । माश १४, २,२,३१; ५,१,२३ (तु. माश १४,२,२,५१)।
१३९. प्राणा वै सजाताः (+प्राणैर्हि सह जायते [माश.]) । तैसं २,६,९,७; माश १,९,१, १५।
१४०. प्राणा वै समिधः (+प्राणा ह्येत समिन्धते [माश ९,२,३,४४]) । ऐ २, ४; माश १, ५, ४,१;९,२,३,४४।
१४१. प्राणा वै साध्या देवाः । तऽएतम् (प्रजापतिम् ) अग्रऽएवमसाधयन् । माश १०, २,२,३।
१४२. प्राणा वै सामानि (सीताः [माश ७,२,३,३]) । माश ७,२,३,३; ९,१,२,३२।
१४३. प्राणा वै स्तोमाः (सुरभयः [तै.]) । जै २,१३३; तै ३,९,७,५; माश ८,४,१,३।
१४४. प्राणा वै स्वभवसो देवाः । तैसं ६, ४, ५, ५।
१४५. प्राणा वै स्वाशिरः (स्वाहाकृतयः [कौ.]) । कौ १०,५; तां १४, ११,९।
१४६. प्राणाः शिक्यं प्राणैर्ह्ययमात्मा शक्नोति स्थातुं यच्छक्नोति तस्माच्छिक्यम् । माश ६,७,१,२०।
१४७. प्राणाः स्वरसामानः (शिल्पानि [कौ.]) । कौ २५,१२;१३; तां २४, १४, ४; २५, १, ८।
१४८. प्राणेन पर्वाणि संदधाति । ऐआ १, ४, १।
१४९. प्राणेन यज्ञः सन्ततः । मै ४,६,२।
१५०. प्राणेन सुरभि चासुरभि च विजानाति । जै १,२६९।
१५१. प्राणे वै शान्तिः । जै १,३२७।
१५२. प्राणे शरीरं प्रतिष्ठितम् । शरीरे प्राणः प्रतिष्ठितः । तैआ ९,७,१; तैउ ३,७,१।
१५३. प्राणैर्ह्ययं पुरुषः समिद्धः । माश १, ५, ४, १।
१५४. प्राणो ज्येष्ठश्च श्रेष्ठश्च । शांआ ९,२।
१५५. प्राणोऽन्त्यम् । जै १,३०९।
१५६. प्राणो बृहत् (बृहती [ऐआ.]) । तां ७,६,१४;१७; १८,६,२६; ऐआ २,१,६।
१५७. प्राणो बृहतः ( रूपम् ) । ऐआ ३,१,६।
१५८. प्राणो ब्रह्मेति व्यजानात् । तैआ ९,३,१; तैउ ३,३,१।
१५९. प्राणो मनुष्याः (भरतः [ऐ.]) । ऐ २,२४; माश १४,४,३,१३।
१६०. प्राणो महाव्रतम् (महः [माश १२,३,४,१०]) । माश १०,१,२,३; १२,३,४,१०।
१६१. प्राणो मातरिश्वा ( यजमानः [ष.]) । ऐ २,३८; ष २,५।
१६२. प्राणो ऽमृतं तद्ध्यग्ने रूपम् । माश १०,२,६,१८।
१६३. प्राणो मे होता । ष २,७।
१६४. प्राणो यज्ञेन कल्पतामपानो यज्ञेन कल्पतां व्यानो यज्ञेन कल्पताम् । तैसं १,७,९,१-२।

१६५. प्राणो वंशः (रेतः [ऐ.]) । ऐ २,३८ । ऐआ ३,१,४;२,१ ।
१६६. प्राणो ( +वै [ऐ.]) वनस्पतिः । ऐ २,४;१०; कौ १२,७ ।
१६७. प्राणो वाऽअङ्गिराः । माश ६,५,२,३;४ ।
१६८. प्राणो वा अपानो व्यानस्तिस्रो देव्यः । ऐ २,४ ।
१६९. प्राणो वाऽअस्य ( यजमानस्य ) सा रम्या तनूः । माश ७,४,१,१६ ।
१७०. प्राणो वा उपाꣳशुः । मै ४,५,५; ७,४ ।
१७१. प्राणो ( +वै [माश ४,१,१,९] ) वाचस्पतिः । माश ४,१,१,९;६,३,१,१९ ।
१७२. प्राणो वा भुवनेषु जागरः । जै १,२० ।
१७३ प्राणो वाव साम्नस्सुवर्णम् । जैउ १,१२,५,४ ।
१७४. प्राणो वै कूर्मः प्राणो हीमाः सर्वाः प्रजाः करोति । माश ७,५,१,७ ।
१७५. प्राणो वै गोपाः । स हीदं सर्वमनिपद्यमानो गोपायति । जैउ ३,६,९,२ ।
१७६. प्राणो वै गायत्रसाम । तैआ ५,६,४ ।
१७७. प्राणो वै ज्येष्ठश्च श्रेष्ठश्च । माश १४,९,२,१ ।
१७८. प्राणो वै दशहोता । मै १,९,५ ।
१७९. प्राणो वै प्रतिरवाः प्राणान्हीदꣳसर्वं प्रतिरतम् । माश १४,२,२,३४ ।
१८०. प्राणो वै प्रायणीयः (बृहत् [जै.]) । ऐ १,७; जै २,१८१ ।
१८१. प्राणो वै ब्रह्म (+पूर्व्यम् [माश ६,३,१,१७]) । माश १४,६,१०,२; जैउ ३,७,१,२ ।
१८२. प्राणो वै मधु (भक्षः [माश ४,२,१,२९]) । माश १४,१,३,३०; तैआ ५,४,११ ।
१८३. प्राणो वै मनुष्यधूर्वायुर्देवधूः । ...चक्षुर्वै मनुष्यधूरादित्यो देवधूः । ...श्रोत्रं वै मनुष्यधूर्दिशो देवधूः । ...वाग् वै मनुष्यधूः पृथिवी देवधूः । जै १,२७० ।
१८४. प्राणो वै माध्यन्दिनः पवमानः । माश १४,३,१,२९ ।
१८५. प्राणो वै मित्रः । तैसं ५, ३, ४, २; माश ६,५,१,५; ८,४,२,६; १२,९,२,१२ ।
१८६. प्राणो वै यजुः प्राणे हीमानि सर्वाणि भूतानि युज्यन्ते । माश १४,८,१४,२ ।
१८७. प्राणो वै यज्ञस्योद्गाता (युवा सुवासाः [ऐ.]) । ऐ २,२; माश १४,६,१,८ ।
१८८. प्राणो वै रं प्राणे हीमानि सर्वाणि भूतानि रतानि । माश १४,८,१३,३ ।
१८९. प्राणो वै रुक् प्राणेन हि रोचते । माश ७,५,२,१२ ।
१९०. प्राणो वै वयः (वषट्कारः [माश.]) । ऐ १,२८; माश ४,२,१,२९ ।
१९१. प्राणो वै वसिष्ठ ऋषिः । माश ८,१,१,६ ।
१९२. प्राणो वै वाक् (वातः [माश]) । मै ३,२,८; माश १,१,२,१४ ।
१९३. प्राणो वै ( हि [जै.] ) वामदेव्यम् । जै १,३२३; २,४२४; माश ९,१,२,३८ ।
१९४. प्राणो वै ( हि [तां.] ) वायुः । तैसं २,१,१,२; मै २,५,१; ३,४,३; ४,५,८;६,२; काठ २१, ३; कौ ५,८; १३,५; ३०,५; गो २,१,२६; जै २,१३७;१८४;१९७;३८९; ३, २२७; तां ४, ६,८; माश ४,१,१,१५; ६,२,२,६ ।
१९५. प्राणो वै विचक्षणस्तस्य वागेव मिथुनम् । जै २,६४ ।
१९६. प्राणो वै विश्वज्योतिः ( इष्टका ) । माश ७,४,२,२८; ८,३,२,४; ७,१,२२ ।

१९७. प्राणो वै विष्वङ् । सोऽयं विष्वङ्ङति । जै १,१६६ ।
१९८. प्राणो वै संवत्सरः (सन् [जै.]) । जै १,१०२; तां ५,१०,३ ।
१९९. प्राणो वै सखा भक्षः । माश १,८,१,२३ ।
२००. प्राणो वै समञ्चनप्रसारणं यस्मिन्वाऽ अङ्गे प्राणो भवति तत्सं चाञ्चति प्र च सारयति । माश ८,१,४,१० ।
२०१. प्राणो वै सम्राट् परमं ब्रह्म । माश १४,६,१०,३ ।
२०२. प्राणो वै ( ह वाऽ अस्य [माश] ) सविता । ऐ १,१९; माश ४,४,१,५ ।
२०३. प्राणो वै साम प्राणे हीमानि सर्वाणि भूतानि सम्यञ्चि । माश १४,८,१४,३ ।
२०४. प्राणो वै सावित्रग्रहः (सिन्धुश्छन्दः [माश.]) । कौ १६, २; माश ८,५,२,४ ।
२०५. प्राणो वै सुशर्मा सुप्रतिष्ठानः । माश ४, ४, १, १४ ।
२०६. प्राणो वै सुसन्दृक् ( सुपर्णः [शांआ.]) । तै १, ६, ९, ९; शांआ १,८ ।
२०७. प्राणो वै सूददोहाः । माश ७,१,१,२६; ऐआ १,४,१ ।
२०८. प्राणो वै सोमः (+राजा [जै.]) । जै १,३६१; माश ७,३,१,४५ ।
२०९. प्राणो वै स्तवः (स्वारम् [जै.]) । कौ ८,३; जै १,१६० ।
२१०. प्राणो वै स्तोत्रियोऽपानोऽनुरूपः । जै ३,२१;३५ ।
२११. प्राणो वै स्वयमातृण्णा (+प्राणो ह्येवैतत्स्वयमात्मन आतृन्ते [माश ७, ४,२, २]) । तैसं ५, ३, ७, ३; मै ३,३, १; ४,७; माश ७,४,२,२; ८, ७,२,११ ।
२१२. प्राणो वै स्वरः । जै १,१२३; १४०; १६४;२१५;२, १६८;३,१९४;२२९; तां २४,११, ९ ।
२१३. प्राणो वै हरिः स हि हरति । कौ १७, १ ।
२१४. प्राणो वै हिंकारः । मै ४, ६, ४; माश ४,२,२,११; शांआ २, १ ।
२१५. प्राणो वै हितं प्राणो हि सर्वेभ्यो भूतेभ्यो हितः । माश ६, १, २, १४ ।
२१६. प्राणो वै हृदयमतो ह्ययमूर्ध्वः प्राणः संचरति । माश ३, ८,३,१५ ।
२१७. प्राणो वै होता (हिरण्यम् [माश.]) । ऐ ६, ८; १४; गो २, ५, १४; माश ७,५,२,८ ।
२१८. प्राणोऽस्मि प्रज्ञात्मा, तं मामायुरमृतमित्युपास्स्व । शांआ ५, २; कौउ ३, २ ।
२१९. प्राणो ह वाऽस्य सविता । माश ४, ४, १, ५ ।
२२०. प्राणो हविः । मै १, ९, १; तैआ २, १७, २; ३, १, १ ।
२२१. प्राणो हि प्रियः प्रजानाम् । प्राण इव प्रियः प्रजानां भवति । य एवं वेद । तै २,३,९,५ ।
२२२. प्राणो हि रेतसां विकर्त्ता । माश १३, ३, ८, १ ।
२२३. प्राणो हि वामदेव्यम् (वायुः [तां.]) । जै १,३३३;२,४२४; तां ४ ६,८ ।
२२४. प्राणो हि वै क्षत्रं त्रायते हैनं प्राणः क्षणितोः । माश १४, ८, १४, ४ ।
२२५. प्राणो हि वै हिङ्कारस्तस्मादपिगृह्य नासिके न हिङ्कर्तुं शक्नोति । माश १, ४, १, ३ ।
२२६. प्राणो हि सोमः । काठ ३५, १६; क ४८, १४; तां ९, ९, १; ५ ।
२२७. प्राणो हीदं सर्वं प्राणेत । तद्यत् प्राणेत तस्मात् प्राणः । जै २, ५७ ।
२२८. प्राणो हृदये ( श्रितः ) । तै ३, १०, ८, ५; शांआ ११, ६ ।
२२९. प्राणो ह्युपांशुरिमां ( पृथिवीम् ) ह्येव प्राणन्नभिप्राणिति । माश ४, १, २, २७ ।

२३०. प्रादेशमात्रं हीम आत्मनो ऽभि प्राणाः । कौ २,२ ।
२३१. बहवो मुखे प्राणा एको ऽवाङ् । क ४२, ५ ।
२३२. बर्हिरेव स्तृणाति, तस्माल्लोमशा अन्तरतः प्राणाः । तैसं ६, २, ११, ३ ।
२३३. बर्हिर्हि प्राणः । तां ७, ६, १४ ।
२३४. बहुधा ह्येवैष निविष्टो यत्प्राणः । जैउ ३, १, २, १३ ।
२३५. भूरिति वै प्राणः । तैआ ७, ५, ३; तैउ १, ५, ३ ।
२३६. मध्यतो ह्ययं प्राणः प्रजाः पशून् भुवनानि विवस्ते । जै १,३०७ ।
२३७. मन इदं सर्वमेकं भूत्वा प्राणे प्रतिष्ठितम् । जै ३, ३७१ ।
२३८. मनसा हि प्राणो धृतः । काठ २७, १, क ४२, १ ।
२३९. मनसैव प्राणमाप्नोति । मै ४, ५, ५ ।
२४०. मनो वा अनु प्राणाः । जै १, १६ ।
२४१. मनो वै प्राणानामधिपतिर्मनसि हि सर्वे प्राणाः प्रतिष्ठिताः । माश १४, ३,२, ३ (तु. माश ७,५,२,६) ।
२४२. मरुतः प्राणेन (अवकीर्णः प्रविशति ) । जै १,३६२ ।
२४३. मरुतः प्राणैः ( सहास्मिन् कर्मण्यागच्छन्तु ) । तैआ २,१८, १ ।
२४४. मर्त्यानि हीमानि शरीराणी ९ अमृतैषा देवता ( प्राणः ) । ऐआ २, १, ८ ।
२४५. मित्रो नवाक्षरया नव प्राणानुदजयत् । मै १, ११, १०; काठ १४, ४ ।
२४६. मुखत एव प्राणं दधाति । काठ २१, ५ ।
२४७. यः प्राणः स वरुणः । गो २,४,११ ।
२४८. यत्तृतीये ऽहन्प्रवृज्यते । वायुर्भूत्वा प्राणानेति । तैआ ५, १२, १ ।
२४९. यत्रायं पुरुषो म्रियत ऽ उदस्मात्प्राणाः क्रामन्त्याहो नेति, नेति होवाच याज्ञवल्क्यो ऽत्रैव ( प्राणाः ) समवनीयन्ते । माश १४, ६, २, १२ ।
२५०. यत्रैतत्पुरुषः सुप्तः स्वप्नं न कञ्चन पश्यति, अथास्मिन् प्राण एवैकधा भवति । शांआ ५, ३; कौउ ३,३ ।
२५१. यत्सत्यमिति प्राणः सः । जै ३,३६० ।
२५२. यथा शालावंशे सर्वे ऽन्ये वंशाः समाहिताः स्युरेवमेवैतस्मिन् प्राणे सर्व आत्मा समाहितः । शांआ ८, १ ।
२५३. यदि वालखिल्याः ( ऋचः ) प्राणानस्यांतरियात् । ऐ ५, १५ ।
२५४. यदु वै प्राणो ऽङ्गं नाभिप्राप्नोति शुष्यति वावैतन्म्लायति वा । माश ८, ७, २,१४ ।
२५५. यदेकपात्रा ( द्विदेवत्याः ) गृह्यन्ते तस्मादेको ऽन्तरतः प्राणो द्विपात्रा हूयन्ते तस्माद् द्वौ द्वौ बहिष्टात् प्राणाः । तैसं ६, ४, ९,३ ।
२५६. यद्वै प्राणेनान्नमात्मन्प्रणयते तत्प्राणस्य प्राणत्वम् । माश १२, ९. १, १४ ।
२५७. यः स प्राणो ऽयमेव स वायुर्यो ऽयं पवते । माश १०, ३, ३, ७ (तु. जैउ १,९,२,१) ।
२५८. यावद्वै पुरुषः प्राणिति, न तावद् भाषितुं शक्नोति, वाचं तदा प्राणे जुहोति······यावद्वै पुरुषो भाषते न तावत् प्राणितुं शक्नोति, प्राणं तदा वाचि जुहोति । शांआ ४, ५; कौ २,५ ।

२५९. ये ऽवाञ्चः (प्राणाः पुरुषस्य) तत्तृतीयसवनम् । कौ २५, १२ ।
२६०. ये सप्त शीर्षण्याः प्राणा आसंस्ते सप्तर्षयो ऽभवन् । काठसंक ८६ : २ ।
२६१. यो ऽयमनिरुक्तः प्राणः स सुरूपकृत्नुः । कौ १६, ४ ।
२६२. यो वै प्राणः स वातः । माश ५, २, ४, ९ (तु. जै १,२४९) ।
२६३. लेखासु हीमे प्राणाः । माश ७, २, २, १८ ।
२६४. वाक् च वै प्राणश्च मिथुनम् । माश १, ४, १, २ ।
२६५. वाक्पूर्वरूपं मन उत्तररूपं प्राणः संहिता । ऐआ ३, १, १ ।
२६६. वाक् (वातं [तैआ.]) प्राणः । मै ४, ६,४; तैआ ३,४,१ ।
२६७. वाक् प्राणानामुत्तमा । काठ १९, १०; क ३०, ८ ।
२६८. वाक् प्राणेन संहिता । ऐआ ३,१,६ ।
२६९. वागसि जन्मना वशा, सा प्राणं गर्भमधत्थाः । मै २,१३,१५ ।
२७०. वाग्वा अक्षरम् । तस्यै प्राण एवांशुः । जै १,११५ ।
२७१. वाग्वा ऽइदं कर्म प्राणो वाचस्पतिः । माश ६, ३, १, १९ ।
२७२. वाग्वा एषा प्रतता यद् द्वादशाहः । तां सन्तनिनैव संतन्वन्ति । प्राणा ह खलु वै सन्तनयः । प्राणैर्वाक् सन्तता । तद् यत् सन्तनि भवति प्राणानां एव सन्तत्यै, वाचं प्राणैः सन्तनवामेति । जै ३,११९ ।
२७३. वाग्वै माता, प्राणः पुत्रः । ऐआ ३, १, ६ ।
२७४. वाग्वै रथन्तरस्य रूपं प्राणो बृहतः । शांआ ७, २० ।
२७५. वाचस्सत्यं यत् प्राणः । जै २,४२५ ।
२७६. वातं प्राणमन्ववसृजतात् । मै ४, १३, ४ ।
२७७. वातं प्राणेन (प्रीणासि) । मै ३, १५, २ ।
२७८. वायुदेवत्यो वै प्राणः । तैसं ६, ३, ७, ४ ।
२७९. वायुना प्राणाः । काठ ३५,१५; क ४८, १३ ।
२८०. वायुर्भूत्वा (प्रजापतिः) प्रजानां प्राणो ऽभवत् । जै १,३१४ ।
२८१. वायुर्मे प्राणे श्रितः । तै ३, १०, ८, ४ (तु. शांआ १०,१) ।
२८२. वायुर्वै (°र्हि [ऐ.]) प्राणः । ऐ २,२६;३,२; कौ ८, ४; जै २,५४; जैउ ४,११, १, ११ ।
२८३. वालमात्राद्ु हेमे प्राणा असम्भिन्नास्ते यद्वालमात्रादसम्भिन्नास्तस्माद्वालखिल्याः । माश ८,३,४,१ (तु. कौ ३०,८) ।
२८४. विच्छन्दाश्छन्दो वायुर्देवता प्राणाः । माश १०,३,२,१२ ।
२८५. विधृता हीम उपरिष्टात् प्राणाः । मै ३,८,८ ।
२८६. विश्वेषामहं देवानां देवयज्यया प्राणाना९ सायुज्यं गमेयम् । काठ ५,१ ।
२८७. वीर्यं (+वै [मै.]) प्राणः । मै १,९,३; काठ ९,११ ।
२८८. व्यतिषक्ता वा इमे प्राणा अनिर्मार्गाय । जै २,१३३ ।
२८९. शिरो वै प्राणानां योनिः । माश ७,५,१,२२ ।
२९०. शीर्षन् प्राणो हितः । जै २,४१५ ।
२९१. षट् प्राणाः । काठ २६,१०; क ४१,८; ४२,१; (तु. माश ६,७,१,२०) ।

२९२. षड्तुनेति यजन्ति प्राणमेव तद्यजमाने दधति। कौ १३,९।

२९३. षड् वाऽ इमे शीर्षन्प्राणाः। माश १२,९,१,९; १४,१,३,३२।

२९४. स (ब्रह्मविद्) आगच्छत्यमितौजसं (ब्रह्मलोकस्थं ब्रह्मणः) पर्यङ्कं स प्राणस्तस्य भूतञ्च भविष्यच्च पूर्वौ पादौ, श्रीश्चेरा चापरौ (पादौ)... तस्मिन् (पर्यङ्के) ब्रह्माऽऽस्ते। शांआ ३,५।

२९५ स एषो ऽश्मा ऽऽखणं यत्प्राणः। स यथा अश्मानमाखणमृत्वा लोष्टो विध्वंसत एवमेव स विध्वंसते य एवं विद्वाँसमुपवदति। जैउ १, १८,५,७-८।

२९६. स (प्रजापतिः) त्रिवृतमेवायतनमचायत् प्राणा ९ स्ततः प्रजा असृजत। काठ ९, ११।

२९७. संतृण्णा हि परः (अन्तरतः [तैसं.]) प्राणाः। तैसं ६,२,११,२; मै ३,८,८।

२९८. सप्त (+वै मुख्याः [जै २,३०१]) प्राणाः। काठ ३०,५;३७,१६ (तु. जै १,१३१;२,२२५; ३०१,३४७;३८५;३,६८;८६)।

२९९. सप्त वालखिल्याः पुरस्तादुपदधाति सप्त पश्चात्, सप्त वै शीर्षण्याः प्राणा द्वाववाञ्चौ। तैसं ५, ३, २, ५ (तु. तैसं ५, १,७, १; २, ६, ३; काठ ८, १; १९, ६; तैआ ५, ४,४)।

३००. सप्त वै शीर्षन् प्राणाः (+वागष्टमी... सा वाक् समानायतना प्राणैः सत्यननुषक्ता [ऐआ.])। मै ३, १, ७; ४, ८, १०; ऐ १, १७; तै १, २,३,३; ऐआ १,५,२ (तु. मै १,६, ९; तां २, १४,२; २२,४,३; माश ९, ५,२,८)।

३०१. सप्त हस्तास इति, ... येषु (सप्तसु लोकेषु) चरन्ति प्राणा गुहाशया निहिताः सप्त सप्त। काठसंक २५: २-३.

३०२. समाना हीमे प्राणाः। मै ४, ८, ४।

३०३. स यः प्राणस्तत्साम। जैउ १, ८, १, १०।

३०४. स (वायुः) यत्पुरस्ताद्वाति प्राण एव भूत्वा पुरस्ताद्वाति। तै २, ३, ९, ४-५।

३०५. सर्वे प्राणा मनो ऽभिसंपन्नाः। जै १, ३१६।

३०६. सर्वे ह वा ऽ एते स्वपतो ऽपक्रामन्ति प्राण एव न। माश ३, २, २, २३।

३०७. स वा अयं त्रेधा विहितः प्राणः, प्राणो ऽपानो व्यान इति। कौ १३, ९।

३०८. सा ह वागुवाच (हे प्राण) यद्वा ऽ अहं वसिष्ठास्मि त्वं तद्वसिष्ठो ऽसीति। माश १४, ९, २, १४।

३०९. सुषदा पश्चात्। देवस्य सवितुराधिपत्ये। प्राणं मे दाः। तैआ ४,५,३।

३१०. सोमा इन्द्रो वरुणो मित्रो अग्निस्ते देवा धर्मधृतो धर्मं धारयन्त्वित्येते वै देवा धर्मधृतो यदिमे प्राणाः। मै ४,४,२।

३११. सोऽयं (वायुः) पुरुषेऽन्तःप्रविष्टस्त्रेधाविहितः प्राण उदानो व्यान इति। माश ३, १,३,२०।

३१२. सोऽस्य (इन्द्रस्य सोमः) विष्वङ्ङेव प्राणेभ्यो दुद्राव मुखाद्धैवास्य न दुद्रावाथ सर्वेभ्यो-ऽन्येभ्यः प्राणेभ्यो ऽद्रवत्। माश ५,६,३,७।

३१३.. स्वपन्तं प्राणा न जहति। तैसं ६,१,९,७।

३१४. हृदयमेव मेथ्युपदोहनी प्राणो रज्जुः। प्राणेनैव वाक् च मनश्चाभिहिते। रज्ज्वा वै वत्सं च मातरं चाभिदधाति। जै १,१९ ॥ [°ण- अंशु- ६; अकूध्रीची-; अग्नि- ४३१; ४९४; ५२४;५९१;६८३; अग्निष्टोमस्तोम-; अङ्गिरस्वत्- २; अधिपति- २; अध्वर्यु- ३२; अनुष्टुभ्- ५१; अन्तरिक्ष- १२३; अन्न- ५७;६४; १२५;१५९; अप्- १०५;१९८;२२४; अपान- १०; १३;२६;२८;३८;३९; अमृत- ७;३७; अमृतत्व- ६; अयन- १; अर्क- ८; अर्णव-; अवकाश- १; अशन- ३; अश्वमेध- २०; असु- ४;७; आ ३; आकाश- १३; आघार- १; आत्मन्- ६५; आदित्य- ५२;१६२; १७३; २२४; २८४; आदित्यधामन्- १; आयुष्कृत्-; आयुस्- ८;३०;३४;४४; इध्म- ५; इन्द्र- २६६; इन्द्रिय- १७; उक्थ्य- १; उद्गातृ- १३;१८; उद्गीथ- ७;१३; उपरव- ३; उपांशु- २;११;१४; उर्वशी-; उष्णिक्-ककुभ्- ४; ऊष्मन्- ३; ऊष्म-रूप-; ऋच्- २३;३७; ऋतुयाज- २; ऋषि- १६; ऐन्द्र- १३; ऐन्द्र-वायव- ५; ओकस्- ३; क- ६; ककुभ्- ८; गय- १; गायत्र- २५;२६;३७; गायत्री- ७;५१;७४;९१; ९२;९३;९४; गार्हपत्य- २०; गुद-; गृह- १; ग्रह- १६;१७; ग्रावन्- ५; चन्द्रमस्- ५२; जातवेदस्- ५; ज्योतिस्- २५; तनूनपात्- ३; त्रिवृत्- ३५; दक्ष- ५; दशहोतृ- ८; दिव्- १३०;१३१; दिवाकीर्त्य- १;४; दिश्- ४५; दीक्षा- १४; देव- ४७; ७४;१५८;१५९;१६०; १६१;१६२;१६४;२१५; देवता- १४;२९; द्रविणोदा- २; द्वन्द्व- ५; द्विदेवत्य-; धवित्र-; धाय्या- ५; धी- ४; धुर्- ९; नस्- १;२; नाचिकेत- ६; नामन्- २; नासिका- १; नितान- २; नृषद्- २; पञ्चहोतृ- ९; पतङ्ग- २; पवमान- १; १४;२३;२४;२५;२९; पशु- २४१; २४२;३२८; पावमान-; पावमानी- २; पितृ- ८०; पुरुष- २५;४०;४४;८४; पृषदाज्य- ५; प्रजा- ६६;६७;९३; प्रजापति- ११२; प्रभूति- द्र.]।

**प्राण-पा-** भूरसि श्रेष्ठो रश्मीनां प्राणपाः। तैसं ३,२,१०,२।

**प्राण-भाजन-** पौर्णमासी- ७ द्र.।

**प्राण-भृत्** ( इष्टका-)-

१. अङ्गानि प्राणभृन्त्यङ्गानि हि प्राणान्बिभ्रति। माश ८,१,३,१।

२. अन्नं प्राणभृदन्न ९ हि प्राणान्बिभर्त्ति। माश ८,१,३,१।

**प्राणर्तु-** द्वया ह वै पूर्व ऋतव आसुः। प्राणर्तवो देवर्तवः। जै २,५१।

**प्राणाऽपान-**

१. अथ यः प्राणापानयोः सन्धिः स व्यानः। छांउ १,३,३।

२. किं खलु वै ते ऽस्तीति ( प्रजापतिरिन्द्रम् ) अब्रवीत्। स्तो न्वै म इमौ प्राणापानौ, इति ( इन्द्रः प्रत्युवाच )। जै २,४०९।

३. तावेवैतौ स्तोमावभवतां पराङ् च पूर्वाङ् च। तौ प्राणापानौ, ते ऽहोरात्रे, तौ पूर्वपक्षापरपक्षौ, ताविमौ लोकौ ( द्यावापृथिव्यौ ), ताविन्द्राग्नी, तौ मित्रावरुणौ, तावश्विनौ, तद् दैव्यं मिथुनं यदिदं किं च द्वन्द्वं तदभवताम्। जै ३,३३४।

४. तौ मित्रावरुणौ प्राणापानौ। जै १,१०९।

५. द्वे ह वाव देवते सत्त्रमासाते प्राणापानावेव। जै २, २७।

६. पुरस्ताद्दै नाभ्याः प्राणः, पश्चादपानः एतावान् वै पशुः। काठ १३, १०।

७. प्राणापाना (°नौ वा [मै., कौ.]) उपांश्वन्तर्यामौ (ग्रहौ)। मै ४,५,६;९; ऐ २,२१; कौ ११, ८; १२,४।

८. प्राणापानाभ्यां वाक् परिगृहीता। जै ३, २८९।

९. प्राणापानाभ्यां पुरुषस्सन्ततः। काठ २७, १; क ४२, १; २।

१०. प्राणापानावेव यत्प्रायणीयोदयनीये। कौ ७, ५।

११. प्राणापानौ देवः (ब्रह्म)। गो १,२,११[२]।

१२. प्राणापानौ मा मा हासिष्टम्। तैसं ३, १, ७, १।

१३. प्राणापानौ मित्रावरुणौ। तां ६, १०, ५; ९, ८, १६; तै ३,३,६,९ (तु. जै १,५,८)।

१४. प्राणापानौ मृत्योर्मा पातम्। तैसं ३, १, ७, १; तैआ ४, १, ६; ४२, २।

१५. प्राणापानौ मे पाहि, समानव्यानौ मे पाहि। तैसं १, ६,३,३;७,३,४; काठ ८,१३।

१६. प्राणापानौ मे श्रुतम्मे। तन्मे त्वयि (वायौ)। जैउ ३, ५, २, १०।

१७. प्राणापानौ वै मित्रावरुणौ (बृहद्रथन्तरे [तां])। काठ २९.१;३०,३; क ४५,२; जै १,३४७; ३,१४१; तां ७,६,१२ (तु. मै ३,१०,६;४,८,९)।

१८. प्राणापानौ व्यतिषक्तौ प्रजा अनु संचरत आ च परा चायातयामानौ। जै १, १०२।

१९. प्राणापानौ सं चरतः। तैसं ५, २, १०, ६।

२०. प्राणो वै पूर्वो वैश्वानरोऽपान उत्तरः। जै ३, ८।

२१. प्राणो वै मित्रोऽपानो वरुणः। काठ २१, १; काठसंक १३९ : २०।

२२. मित्रावरुणयोः प्राणोऽसीत्याह प्राणापानावेवास्मिन् (आमयाविनि) एतेन दधाति। तैसं २, ३, ११, ३।

२३. मित्रावरुणौ (एवैनम्) प्राणापानाभ्याम् (अवतः)। तै १,७,६,६।

२४. मुखतः (विष्वञ्चौ [तैसं.]) प्राणापानौ। तैसं ५,२,१०,६;६,३,९,६; क ४५, २; ४६,६।

२५. योगक्षेम इति प्राणापानयोः। तैआ ९, १०, २; तैउ ३, १०,२।

२६. वाक् च (+ह [गो.]) वै प्राणापानौ च वषट्कारः। ऐ ३, ८; गो २, ३, ६।

२७. वायुरसि प्राणो नाम सवितुराधिपत्येऽपानं मे दाः ··· वायुरसि प्राणो नामेत्याह, प्राणापानावेवावरुन्धे। तैसं ३, ३,५,१-३।

२८. व्यानेन वा इमौ प्राणापानौ विधृतौ, प्राङ् च प्रत्यङ् च न क्षीयेते, नायमूर्ध्वं उत्क्रामति, नेतरोऽवाङ् संक्रामति। काठ २७, २; क ४२, २।

२९. शत ९ शतानि पुरुषः समेनाष्टौ शता यन्मितं तद्वदन्ति। अहोरात्राभ्यां पुरुषः समेन तावत्कृत्वः प्राणिति चाप चानितीति। माश १२, ३, २, ८।

३०. सुप्तस्य सर्वाण्यन्यानि श्रोत्राण्युपक्रामन्ति, प्राणापानौ त्वेनं न जहीतः। मै ४, ५, ६।

[°न- अक्षरपङ्क्ति- २; अध्वर्यु- ३१; अर्काश्वमेध- ३; अश्विन्- ११; इन्द्र- ५८; ३१३; इन्द्राग्नि- ४३; उक्थ- १८; उपांश्वन्तर्याम- ६; ७; गो-आयुस्- ४; दैव्य- २; पयस्या- ३; पवित्र- ६; पौर्णमासी- ६; पृषदाज्य- ७; प्रगाथ- २; प्रजापति- २०० द्र.]।

**प्राणाऽपान-व्यान-** त्रयः प्राणापानव्यानाः। जै १,१५६; ३०० (तु. जै २,३६०;३,३०५)।

**प्राणोदान-**

१. ते ( पवित्रे ) वै द्वे भवतः। ...ताविमौ प्राणोदानौ। माश १,१,३,२।

२. प्राणोदानाऽ उ वै रेतः सिक्तं विकुरुतः। माश ९,५,१,५६।

३. प्राणोदानावेव यत्प्रायणीयोदयनीये। कौ ७५।

४. प्राणोदानावेवाहवनीयश्च गार्हपत्यश्च। माश २,२,२,१८।

५. प्राणोदानौ वै मित्रावरुणौ। माश १, ८, ३,१२; ३, ६,१,१६; ५, ३,५, ३४;९, ५,१,५६ (तु. माश ३,२,२,१३)।

६. सो ऽयं ( वायुः ) पुरुषे ऽन्तःप्रविष्टः प्राङ् च प्रत्यङ् च ताविमौ प्राणोदानौ। माश १,१,३,२; ८,३,१२॥ [ °न- अध्वर्यु- २१;३१; द्यावापृथिवी- ५; पवित्र- ६ द्र.]।

**प्रातर्**

१. तं देवाः प्राणयन्त स प्रणीतः प्रातायत प्रातायीतीं३ तत्प्रातरभवत्। ऐआ २,१,५।

२. देवस्य सवितुः प्रातःप्रसवः प्राणः। तै १,५,३,१।

३. द्विरह्नो मनुष्येभ्य उपह्रियते प्रातश्च सायञ्च। तै १,४,९,२॥ [ °तर् आग्नेयी- १२ द्र.]।

**प्रातर्-अनुवाक-**

१. पवित्रं९ (प्रजापतिर् [कौ.]) वै प्रातरनुवाकः। मै ४,५ ३; कौ ११,७;२५,१०।

२. प्रातर्वै स ( प्रजापतिः ) तं देवेभ्यो ऽन्वब्रवीद्यत्प्रातरन्वब्रवीत्तत्प्रातरनुवाकस्य प्रातरनुवाकत्वम्। ऐ २,१५।

३. यदेवैनं प्रातरन्वाह तत्प्रातरनुवाकस्य प्रातरनुवाकत्वम्। कौ ११,१।

४. वाक् ( सर्वं [कौ ११,७]) प्रातरनुवाकः। कौ ११,७;८।

५. शिरो वा एतद्यज्ञस्य यत्प्रातरनुवाकः। ऐ २,२१।

६. सर्वेषां वै देवानां प्रातरनुवाकः। मै ४,५,३।

७. सारस्वतः (सोमः) प्रातरनुवाके। काठ ३४,१५॥ [°क- प्रजापति- ११४;१९४ द्र.]।

**प्रातर्-यावन्-** एते वाव देवाः प्रातर्यावाणो यदग्निरुषा अश्विनौ। ऐ २, १५॥ [°वन्- छन्दस्- ३५ द्र.]।

**प्रातः-सवन-**

१. अथेमं विष्णुं यज्ञं त्रेधा व्यभजन्त। वसवः प्रातःसवनं९ रुद्रा माध्यन्दिनं९ सवनमादित्या स्तृतीयसवनम्। माश १४,१,१,१५।

२. अनिरुक्तं प्रातःसवनम्। तां १८,६,७।

३. अष्टाकपालान् ( पुरोडाशान् ) प्रातःसवने ( निर्वपन्ति )। तैसं ७,५,६,४।

४. उद्यन्तं ( सूर्यमीप्सन्ति ) प्रातःसवनेन। कौ १८, ९।

५. एकच्छन्दः प्रातःसवनम्। ष १, ३।

६. गायत्रीं प्रातस्सवनं संपद्यते। जै २, २०२।

७. तं ( आदित्यम् ) वसवो ऽष्टकपालेन ( पुरोडाशेन ) प्रातःसवने ऽभिषज्यन् । तै १, ५,११,३ ।
८. तस्य ( पुरुषस्य ) य ऊर्ध्वाः प्राणास्तत्प्रातःसवनम् । कौ २५,१२ ।
९. त्रिवृत्पञ्चदशौ ( स्तोमौ ) प्रातःसवनम् ( वहतः ) । तां १६,१०, ५ ।
१०. द्वौ स्तोमौ प्रातःसवनं वहतो यथा प्राणश्चापानश्च ( चक्षुश्च प्राणश्च तथा तत् [जै.] )। तैसं ७,१,१,१; जै १,६६ ।
११. पीतवद्वै प्रातःसवनम् । ऐ ४, ४ ।
१२. प्रजापतिर्हि वा एतत् प्रातःसवने प्रजाः प्रजनयंस्तिष्ठति यदेतद् बहिष्पवमानम् । जै १,३१२ ।
१३. ब्रह्म ( + वै [कौ.] ) प्रातःसवनम् । कौ १६, ४०; जै १,२६३ ।
१४ यत् पयस्यया प्रातःसवने चरन्ति तेन तत् पशुमद्वीर्यावत् । काठ २९, ५; क ४५,६ ।
१५. यदि प्रातःसवने स्कन्देद्देवाञ्जनमगन्यज्ञः ··· इत्यनुमन्त्रयेत । काठ २५, ७ ।
१६. यद्वपया प्रातःसवने चरन्ति तेन प्रातःसवनं पशुमत् । मै ३, ९, ५ ।
१७. वज्रः प्रातःसवनम् । तैसं ६, ६, ११, ३ ।
१८. वसूनां वै प्रातःसवनम् । कौ १६,१; ३०,१ (तु जै ३, ५७; माश ४,३,५,१) ।
१९. वैश्वदेवं प्रातःसवनमकुर्वत् ( देवाः ) । तैसं ३, २, २, ३; मै ३, ६, १० ।
२०. व्यृद्धं वा एतदपशव्यं यत्प्रातःसवनमनिडं ऽहि । तां ६, ९, २३ ।
२१. स ( इन्द्रः ) वसुभ्य एव प्रातःसवनं प्रायच्छत् । जै २, १३९ ॥ [°न- अग्नि- ६५;३०५; अध्वर्यु- २०; आग्नेय- १५; ऊम १; ऋतुग्रह- १; गायत्र- ११; गायत्र-छन्दस्- ४; गायत्री- ५९; चतुर्विंश- २; तेजस्- ८;१४; त्रिवृत्- १०;१९; पृथिवी- १४;३२ प्रतिदुह- १;२ द्र.] ।

प्रायण-

१. अग्निरेव प्रायणम् । जै ३,३०९ ।
२. मन एव प्रायणं, वाक् सम्बन्धनम् । जै २, ५० ।

प्रायणीय-

१. अहरेव प्रायणीयो रात्रिरुदयनीयः । जै ३,३७७ ।
२. गायत्रं प्रायणीयमहः । तैसं ७, २, ८, १ ।
३. ततिर्वै यज्ञस्य प्रायणीयम् । कौ ७, ९ ।
४. तद्यत् प्राणेत तस्मादप्येतत् प्रायणीयमहः । जै २, ५७ ।
५. ते यां प्रायणीयमतिरात्रमुपेत्य वसन्त्यस्मिन्नेव तां लोके ( पृथिव्याम् ) वसन्ति । जै २,४३० ।
६. प्राण एव प्रायणीयः । काठ ३४, ६ ।
७. प्रायणीयेन वा अह्ना देवाः स्वर्गं लोकं प्रायन्यत प्राय ऽस्तत् प्रायणीयस्य प्रायणीयत्वम् । तां ४, २, २ ।
८. ब्रह्म (त्रिवृत् [तां १०,५,४]) प्रायणीयमहः । तां १०,५,४; ११, ४, ६; ९ ।
९. यदमुत्र राजानं क्रेष्यन्नुपप्रैष्यन्यजते । तस्मात्प्रायणीयं नाम । माश ४, ५, १, २ ।
१०. यदवारे तीर्थं तत् प्रायणीयम् । काठ ३४, १६ ।

११. स्वर्गं वा एतेन लोकं प्रयन्ति(°कमुपप्रयन्ति [ऐ.]) यत् प्रायणीयं (°यस् [ऐ.]) तत्प्रायणीयस्य प्रायणीयत्वम् । काठ २३,७; क ३६,५; ऐ १,७ ॥ [°य- अदिति- १;६; आदित्य- ८५; ८८; ९२; पृथिवी- २४; २८; प्राण- १८० द्र. ]

प्रायणीयोदयनीय-

१. द्वे शीर्षे इति प्रायणीयोदयनीये । काठसंक २५ : २ ।

२. प्राण एव पूर्वोऽतिरात्र उदान उत्तरः । तौ प्रायणीयोदयनीयाविति परोक्षमाचक्षते । जै ३, ३१९ ।

३. प्राणोदानावेव यत्प्रायणीयोदयनीये । कौ ७, ५ ।

४. बाहू ( यज्ञस्य ) प्रायणीयोदयनीयौ । माश ३,२,३,२० ।

प्रायश्चित्ति- यज्ञो हि यज्ञस्य प्रायश्चित्तिः । मै १, ८, ३ ।

प्रावित्र- यज्ञो वै प्रावित्रम् । माश १, ५, २, १ ।

प्रावृष्-

१. तस्मात्प्रावृषि सर्वा वाचो वदन्ति । तै १, ८, ४, २ ।

२. प्रावृषि बार्हस्पत्याम् ( आलभेत ) । मै २, ५, २ ।

प्राशित्र- लोकः (विषं [माश ११, २, ६,६]) । प्राशित्रम् । माश ११, २, ६,६;७, १९ ।

प्रा(<प्र)सह्- इन्द्रो वै प्रासहस्पतिस्तुविष्मान् । ऐ ३, २२ ।

प्रा(<प्र,सह->°हा-

१. सेना वा इन्द्रस्य प्रिया जाया वावाता प्रासहा नाम । ऐ ३, २२ ।

२. सेना ह नाम पृथिवी धनञ्जया विश्वव्यचा अदितिः सूर्य्यत्वक् । इन्द्राणी देवी प्रासहा ददाना । तै २, ४, २, ७ ।

प्रास्रवण- प्रक्ष- द्र.

प्रिय- प्रजा वै प्रियाणि पशवः प्रियाणि । तां ८, ५, १५ ।

प्रियङ्गु-

१. एतन्मरुतां स्वं पयो यत् प्रियङ्गवः । काठ १०, ११ ।

२. पृश्निर्वै यद् (पयः) अदुहत् स प्रियङ्गुरभवत् । मै २, १, ८ ।

३. प्रियङ्गवश्च मेऽणवश्च मे ( यज्ञेन कल्पन्ताम् ) । तैसं ४, ७, ४, ३ ।

४. भौज्यं वा एतदोषधीनां यत्प्रियङ्गवः । ऐ ८, १६ ॥ [ °ङ्गु- पृश्नि- ६ द्र.] ।

प्रियङ्गु-तण्डुल- प्रियङ्गुतण्डुलैर्जुहोति । प्रियाङ्गा ह वै नामैते । एतैर्वै देवा अश्वस्याङ्गानि समदधुः । तै ३, ८, १४, ६ ।

प्रैयङ्गव- स ( रुद्रः ) एत रुद्राया ऽऽर्द्रायै प्रैयङ्गवं चरुं पयसि निरवपत् । ततो वै स पशुमानभवत् । तै ३, १, ४, ४ ।

प्रे[,प्ले]ङ्ख-

१. अन्नं वै प्रेङ्खः । ऐआ १, २, ४ ।

२. अयं वै प्रेङ्खो यो ऽयं ( वायुः ) पवते । एष ह्येषु लोकेषु प्रेङ्खत इति तत् प्रेङ्खस्य प्रेङ्खत्वम् । ऐआ १, २, ३ ।

३. औदुम्बराणि काष्ठानि प्रेङ्खस्य भवन्ति, पालाशानि मिश्राणि वा। त्रीणि फलकान्युभयतस्त-ष्टानि द्वे वा, सूच्यश्च तावत्यः। ऐआ ५, १, ३।

४. नौर्वैषा स्वर्गयाणी यत्प्रेङ्ख इति। ऐआ १, २, ४।

५. प्रेङ्खमारुह्य होता श ँसति महस एव तद्रूपं क्रियते। तां ५,५, ९।

६. महो वै प्रेङ्खः। तै १, २, ६, ६।

प्रेति-

१. प्रेतिरसि धर्माय त्वा··· धर्मं जिन्व। तैसं ४, ४, १, १।

२. हृदयं प्रेतिः। जै १, १४॥ [°ति- अन्न- ९० द्र.]।

प्रैष-

१. बार्हता वै प्रैषाः। माश १२, ८, २, १४।

२. यज्ञो वै देवेभ्य उदक्रामत्तं (देवाः) प्रैषैः प्रैषमैच्छन् तत्प्रैषाणां प्रैषत्वम्। ऐ ३, ९ (तु. तै २, २, ८,५; माश ३,९,३,२८)।

प्रोक्षणी- अप्- ६९; १८६ द्र.।

प्रोष्ठपद,दा (नक्षत्र-)-

१. अज एकपाद् देवता, प्रोष्ठपदा नक्षत्रम्। अहिर्बुध्न्यो देवतोत्तरे प्रोष्ठपदा नक्षत्रम्। काठ ३९, १३।

३. प्रोष्ठपदेपूदयच्छन्त (देवाः)। तै १,५,२,९॥ [°द- अज- ३;३४; अहि- ७;११ द्र.]।

प्रौढि- प्रौढिमनुप्रोहति। जै १, ७८।

प्ल|,प्र|क्ष-

१. तस्य मेधं प्लाक्षारयन् (देवाः) स प्लक्षोऽभवत्, तत्प्लक्षस्य प्लक्षत्वम्। मै ३, १०, २।

२. तस्य (पशोः) शिरश्छित्त्वा (देवाः) मेधं प्राक्षारयन्त्स प्रक्षोऽभवत् तत् प्रक्षस्य प्रक्षत्वम्। तैसं ६, ३, १०, २।

३. तस्यावाङ् मेधः पपात। स एष वनस्पतिरजायत तं देवाः प्रापश्यंस्तस्मात्प्रख्यः प्रख्यो ह वै नामैतद्यत्प्लक्षः। माश ३, ८, ३, १२।

४. प्लक्षस्य प्रास्रवणस्य प्रादेशमात्रादुदक् तत् पृथिव्यै मध्यम्। जैउ ४, ११, ५, १२।

५. प्लक्षो मेधेन (त्वावतु)। तैसं ७, ४, १२,१; काठ ४४,१।

६. यशसो वा एष वनस्पतिरजायत यत्प्लक्षः। ऐ ७, ३२।

७. स्वाराज्यं च ह वा एतद्वैराज्यं च वनस्पतीनाम् (यत्प्लक्षः)। ऐ ७, ३२; ८, १६।

प्लव (सामन्-)-

१. तद्धैवाचक्षते वसिष्ठस्य प्लवमिति··· वसिष्ठमृषयोऽमेधन् वैश्यो ऽस्य ब्राह्मण इति···स एतत्सामापश्यत्··· तेन···दुरितं पाप्मानमतरत्। जै ३, १९५।

२. प्लवं वाव नो भूत्वेदं साम स्वर्गं लोकमवाक्षीदिति। तदेव प्लवस्य प्लवत्वम्। जै ३, १९५।

३ यत् प्लवो भवति स्वर्गस्य लोकस्य समष्ट्यै । तां १४, ५, १७ ।

**प्लाशि-** गिरि- ३ द्र. ।

**प्लीहन्-** उपलान् प्लीह्ना ( प्रीणामि ) । मै ३, १५, ७ ॥ [°हन्- इन्द्राणी- ४ द्र.] ।

**प्लुषि-** बाधे प्लुषीन् ( आलभते ) । मै ३,१४,८ ।

**प्लेक्ष-** प्रेक्ष- द्र. ।

# फ

**फल-** फलेन नाथान् ( अन्वाभवत् ) । काठ ४३,४ ॥ [°ल- अश्र- १५ द्र.] ।

**फल्गुनी** ( नक्षत्र- )-

१. अर्जुन्यो वै नामैतास्ता एतत्परोऽक्षमाचक्षते फल्गुन्य इति । माश २, १, २, ११ ।
२. अर्यमा देवतोत्तराः फल्गुनीर्नक्षत्रम् । काठ ३९, १३ ।
३. उत्तरासु ( फल्गुनीष्वग्निम् ) आदधीत , यः कामयेत दानकामा मे प्रजास्स्युरित्यर्यम्णो वा एतन्नक्षत्रम् । काठ ८, १ ।
४. एषा वै जघन्या रात्रिः संवत्सरस्य यत्पूर्वे फल्गुनी । तै १, १, २, ९ ।
५. एषा वै प्रथमा रात्रिः संवत्सरस्य यदुत्तरे फल्गुनी । तै १, १, २, ९ ।
६. फल्गुनी नक्षत्रं भगो देवता । तैसं ४, ४, १०,२ (तु. मै २, १३, २०; काठ ३९, १३) ।
७. भगस्य वा एतन्नक्षत्रं यदुत्तरे फल्गुनी । तै १, १, २, ४; ५, १,२; ३, १,१,८ ।
८. मुखम् ( संवत्सरस्य ) उत्तरे फल्गुन्यौ ( फल्गू [कौ.]) पुच्छं पूर्वे । कौ ५, १; गो २,१,१९ ।
९. यः कामयेत भगी, भक्षादः स्यामिति स पूर्वासु फल्गुनीष्वग्निमादधीत, भगस्य वा एतदहर्यत् पूर्वाः फल्गुनीः । मै १, ६, ९ (तु. काठ ८,१) ।
१०. राजन्यस्य ( उत्तरासु फल्गुनीष्वग्निम् ) आदध्यात् स हि दानमुपजीवति । काठ ८, १ । [°नी- अर्यमन्- ४;५;१३; इन्द्र-नक्षत्र- द्र.] ।

**फल्गुनी-पूर्णमास-**

१. फल्गुनीपूर्णमास आधेयः ( अग्निः ), एतद्वा ऋतूनां मुखम् । काठ ८,१ ।
२. मुखं वा एतत्संवत्सरस्य यत् फल्गुनीपूर्णमासः । तैसं ७,४,८,२ ॥ [°स- ऋतु- ७४ द्र.] ।

**फल्गुनीपूर्णमास्य-** संवत्सरस्य वा एतदास्यं यत् फल्गुनीपूर्णमास्यमहः । मै १,६,९ ।

**फाल्गुन-**

१. इन्द्रो वृत्रमहन्, तस्य वल्कः पराऽपतत्तानि फाल्गुनान्यभवन् । तै १, ४, ७, ६ ।
२. तस्य (इन्द्रेण हतस्य वृत्रस्य)यो नस्तः सोमो निरद्रवत्तान्येव बभ्रुतूलानि फाल्गुनान्यभवन्, ...तस्माद् बभ्रुतूलान्येवाभिपुत्यानि मेध्यतराणि । जै १,३५४ ।
३. द्वयानि वै फाल्गुनानि । लोहितपुष्पाणि चारुणपुष्पाणि च स यान्यरुणपुष्पाणि फाल्गुनानि तान्यभिषुणुयादेष वै सोमस्य न्यङ्गो यदरुणपुष्पाणि । माश ४, ५, १०, २ ।
४. पशवो वै फाल्गुनानि । तै १, ४, ७, ६ ।
५. फाल्गुने दीक्षेरन् । तां ५, ९, ७ ।

फाल्गुनी-

१. एषा ह संवत्सरस्य प्रथमा रात्रिर्यत्फाल्गुनी पौर्णमासी योत्तरैषोत्तमा या पूर्वा मुखत एव तत्संवत्सरमारभते। माश ६, २, २, १८।

२. मुखं वा एतत् संवत्सरस्य यत् फाल्गुनीपौर्णमासी । कौ ४, ४; ५, १; गो २, १, १९; तां ५, ९, ८।

फाण्ट- फाण्टं मनुष्याणाम्। माश ३, १, ३, ८।

फेन- स (फेनः) यदोपहन्यते मृदेव भवति। माश ६, १, ३, ३।

## ब

ब[,व]डवा[,वा]- वडवा द्विरेताः। तैसं ७, १, १, २; जै १, ६७॥ [°वा- उत्तरवेदि- ८; गो ३४ द्र.]।

बदर-

१. यत्स्नीहा तद् बदरम् (अभवत्)। माश १२,७,१,३।

२. यद् द्वितीयं (इन्द्रः सोमं पीत्वा निरष्ठीवत्) तद् बदरम् (अभवत्)। मै २, ४, १; काठ १२, १०॥ [°र- कर्कन्धु- १ द्र.]।

बदर-सक्तु- ऐन्द्र- ५२ द्र.।

बभ्रु, भ्रू-

१. एतद्वै ब्रह्मणो रूपं यद् बभ्रूः (गौः)। काठ १३, ८।

२. बभ्रुः पिङ्गलो भवति सोमस्य रूप ऽसमृद्ध्यै। मै २, ५, १;५ (तु. तैसं २, १, ३, ४)।

३. बभ्रुररुणबभ्रुः शुकबभ्रुस्ते वारुणाः। मै ३, १३, ४।

४. बभ्रुर्भवति ब्रह्मणो रूप ऽसमृद्ध्यै। मै २, ५, ७।

५. बभ्रवो वो वृञ्जा (वृञ्जे) आनुष्टुभेन छन्दसा। मै ४, २, ११।

६. बभ्रुः (पशुः) सौम्यः। मै ४, ७, ८; काठ ८, १ (तु. मै ३, १३,१०)।

७. यदु बभ्रुः कुम्भ्योऽपश्यत् तस्माद् बाभ्रवमित्याख्यायते। जै ३, २५०।

८. ये (पशवः) ऽभितष्टादसृज्यन्त ते बभ्रवः। जै ३, २६३।

९. वारुणो यवमयो दशकपालो बभ्रुर्महानिरष्टो दक्षिणा। काठ १५, ९।

१०. सोमो वै बभ्रुः। माश ७, २, ४,२६।

११. सौम्यं चरुं (निर्वपति) बभ्रुर्दक्षिणा। तैसं १, ८,८, १; १७, १।

१२. सौम्यं बभ्रुम् (आलभेत)। तैसं २, १, २, ७॥ [°भ्रु- अन्न- १६० द्र.]।

बभ्रुक- अवान्तरदिशा- २ द्र.।

बम्ब- पितृ- ८१ द्र.।

बम्भारि- अङ्गारि- द्र.।

बर्हिस्-

१. क्षत्रं वै प्रस्तरो विश इतरं बर्हिः । माश १, ३,४,१० ।
२. देव बर्हिश्शतवल्शं विरोह सहस्रवल्शा वि वयं रुहेम । काठ १, २; क १, २ ।
३. पशवो बर्हिषि वेद्यां स्तीर्यमाणायाम् (अभिषुताः) । काठ ३४, १५ ।
४. पशवो वै बर्हिः । काठ २६, ७; क ४१, ५; ऐ २, ४ ।
५. बर्हिः प्रजाः । जै १,८६ ।
६. बर्हिर्यजति शरदमेव, शरदि हि बर्हिष्ठा ओषधयो भवन्ति । कौ ३, ४ ।
७. बर्हिर्यजति शरदमेवावरुन्धे । तैसं २, ६, १, १ ।
८. बर्हिषा वै प्रजापतिः प्रजा असृजत । काठ ३२, ३ ।
९. लोमानि(भूमा वै [माश.] बर्हिः । माश १, ५, ४, ४; तैआ १०, ६४,१ ।
१०. शरद्वै बर्हिरिति हि शरद् बर्हिर्या इमा ओषधयो ग्रीष्महेमन्ताभ्यां नित्यक्ता भवन्ति ता वर्षा वर्द्धन्ते ताः शरदि बर्हिषो रूपं प्रस्तीर्णाः शेरे तस्माच्छरद् बर्हिः । माश १,५, ३, १२ । [°र्हिस्- आधीत- १; ओषधि- १;२७;२८; दिव्- ९२; देव- २९; देवयान- ५; पशु- १३३; पृथिवी- १०; प्रजा- ४६;५३;६८; प्रजावत्- द्र.] ।

बर्हिषद्-

१. मासा वै पितरो बर्हिषदः । तै १, ६, ८, ३ ।
२. यद् बर्हिषदो ( यजति ) यज्वनस्तद् ( यजति ) । मै १, १०,१८; काठ ३६, १३ ।

बल-

१. आत्मा वै बलम् । काठसंक ७२:५ ।
२. बल९ विश्वे देवाः । मै ४, ७, ८ ।
३. बलं वै मरुतः (शवः [माश.]) । काठ २९, ९; क ४६, २; माश ७,३,१, २९;९,४, ४, ३ ।
४. बलं वै सहः । माश ६, ६, २,१४ ।
५. बलं हृदये ( श्रितम् ) । तै ३, १०, ८, ८ ।
६. बलं मज्जभिः (प्रीणामि ) । तैसं ५, ७, १२, १; काठ ५३,२ ।
७. बाह्वोर्बलम् (अस्तु) । तैसं ५, ५,९, २ ।
८. मरुतां बलाय स्वाहा । मै २, ६, १२ ।
९. यन्त्रमस्याशा इ९ह, रूपं देहि बलं देहि । काठ १, ७ ॥ [°ल- अजगर- ४; इन्द्र- ५७; ७०; ७२; ७८; १४३; ३१४; ओजस्- २२; ग्रीष्म- ९; त्रिष्टुभ्- ४३ द्र. ] ।

ब(व)ल-भिद्- यद् बलभिदा (क्रतुना यजते ) बलमेवास्मै भिनत्ति । तां १९, ७,३ ।

बलाका-

१. वायवे बलाकाः ( आलभते ) । मै ३, १४,३ ।
२. सौरी बलाका । मै ३, १४, १४; काठ ४७, ६ ।

बलिवर्द- परिवत्सरो बलिवर्दः । तै ३, ८, २०, ५ ।

**बल्वज**- गौर्यत्राधिष्कन्ना न्यमेहत् ततो बल्वजा उदतिष्ठन्। तैसं २, २, ८, २।

**बस्त**- बस्तो वयो युवलं (विवलं [तैसं.]) छन्दः। तैसं ४, ३, ५, १; मै २,८, २; काठ १७,२। [°स्त- दक्षिणतस् १६ द्र.]।

**बस्ताजिन**- पशु- १६१ द्र.।

**बहिर्णिधन**- अमुं (द्युलोकं देवाः) बहिर्णिधनेन (अभ्यजयन्)। तां १०, १२, ३।

**बहिष्पवमान** (स्तोत्र- )-

१. दशहोतारं व्याख्याय बहिष्पवमानेनोद्गायेत्। काठ ९, १४।
२. पवित्रं वै बहिष्पवमानः। तैसं ६, ४, ९, २।
३. प्रजापतिर्हि वा एतत् प्रातःसवने प्रजाः प्रजनयंस्तिष्ठति यदेतद् बहिष्पवमानम्। जै १,३१२।
४. बहिष्पवमानेन वै यज्ञः सृज्यते। तां ६, ९, २२।
५. ब्राह्मणेन बहिष्पवमानमभिसृप्यं पवित्र ५ हि तत्। मै ४, ६,२।
६. ब्राह्मणो बहिष्पवमानमासीत, पवित्रं ५ हि तत। काठ २७,४, क ४२, ४।
७. मुखं वा एतद्यज्ञस्य यद् बहिष्पवमानः। ऐ २, २२।
८. यज्ञमुखं बहिष्पवमानम्। मै १, ९, ५।
९. यद्येनं बहिष्पवमानेऽनुव्याहरेद् यज्ञस्य रेतः सिक्तमचीक्लृपम्। जै १, २५४।
१०. वायुर्बहिष्पवमाने। काठ ३४,१६।
११. शिरो वा एतद् यज्ञस्य यद् बहिष्पवमानम्। जै १,२६७॥ [°न- आरण्य- २; गायत्रछन्दस्- ४; त्रिवृत्- ११; देव- १६६ द्र.]।

**बहिष्पवमानी**-

१. अथैषा यज्ञिया विराड् यदेता बहिष्पवमान्यः ···तस्या एतस्यै हिंकार एवापिधानम्। जै १, २४६।
२. तासाम् (देवतानाम्) एतद् इन्द्रियं वीर्यं रसस्तेजस्सम्भृतं यदेता बहिष्पवमान्यः। जै १, २४९।
३. स्त्रियो बहिष्पवमान्यः। तां ६, ८, ५।

**बहु**-

१. अन्तो वै बहु। ऐ ५, २; १५।
२. बहु च मे भूयश्च मे (यज्ञेन कल्पताम्)। तैसं ४, ७, ४, २।

**बाकुर**- दृति- द्र.।

**बादरायण**- विष्वक्सेनो व्यासाय पाराशर्याय, व्यासः पाराशर्यो जैमिनये, जैमिनिः पौष्पिण्ड्याय, पौष्पिण्ड्यः पाराशर्यायणाय, पाराशर्यायणो बादरायणाय,बादरायणस्ताण्डिशाट्यायनिभ्याम्, ताण्डिशाट्यायनिनौ बहुभ्यः (प्राजापत्यं विधिं प्रोचुः)। सा ३,९,८।

वार्हत- बृहत्- द्र. ।

वार्हद्गिर (<बृहद्गिरि-)-

१. वार्हद्गिरं ब्राह्मणाय ( कुर्यात् )। तां १३, ४,१८ ।

२. ब्रह्मवर्चसम्मह्यमित्यब्रवीद् (इन्द्रम् ) बृहद्गिरिस्तस्मा एतेन बार्हद्गिरेण (साम्ना) ब्रह्मवर्चसं प्रायच्छत् । ब्रह्मवर्चसकाम एतेन स्तुवीत ब्रह्मवर्चसी भवति । तां १३, ४, १७ ।

वाल- मनो ह्येच्चकाम, यथा बाला अमनसः । शांआ ९, ६ ।

वाहु-

१. तस्मादयं बाहुर्मेद्यतो ऽनुमेद्यति, कृश्यतो ऽनुकृश्यति । जै २,४०७ ।

२. तस्मादु बाहुवीर्यो ( राजन्यः ) बाहुभ्यां ह्यि सृष्टः । तां ६, १, ८ ।

३. पञ्चदशौ हि बाहू । माश ८, ४, ४, ६ ।

४. बाहुर्नक्षत्रं रुद्रो देवता । मै २, १३, २० (तु. काठ ३९,१३) ।

५. बाहू एवास्य सूक्तवाकश्च शंयोर्वाकश्च । माश ११, २, ६, ९ ।

६. बाहू राजन्यः कृतः । काठसंक १०१ः४; तैआ ३, १२, ५ ।

७. बाहू वै मित्रावरुणौ । माश ५, ४, १, १५ ।

८. वीर्यं वा ऽ एतद्राजन्यस्य यद् बाहू । माश ५,४, १, १७ ।

९. शुचौ बाहू (कृत्वा देवाः सोममघ्नन् ) । मै ३,८, २ (तु. क ३१, ७; माश ७, ४, १, ३६)। [°हु- अरत्नि-; इन्द्र ६८; ७३; उरस्- ६; पञ्चदश- १;२४; बल- ७ द्र ] ।

वाहु-वलिन्- तस्माद्राजा बाहुबली भावुकः । माश १३, २, २, ५ ।

वाहु-वीर्य- वाहु- २ द्र. ।

विल्व-

१. अथ ( प्रजापतेः ) यत्कुन्तापमासीद् यो मज्जा स सार्धं समवद्रुत्य श्रोत्रत उदभिनत् । स एष वनस्पतिरभवद्बिल्वस्तस्मात्तस्यान्तरतः सर्वमेव फलमाद्यं भवति तस्मादु हारिद्र इव भाति । माश १३, ४, ४, ८ ।

२. इह वा असा आदित्य आसीत्तमितोऽध्यमुं लोकमहरं स्तद्यतो ऽध्यमुं लोकमहरं स्तस्माज्ज्योतिषो बिल्वो ऽजायत तस्माद्बैल्वो ( यूपः ) ब्रह्मवर्चसकामेन कार्यः । मै ३, ९, ३ ।

३. विल्वं ज्योतिरिति वा आचक्षते । ऐ २, १ ।

४. बैल्वो यूपो भवत्यसौ वा आदित्यो यतो ऽ जायत ततो बिल्व उदतिष्ठत्, सयोन्येव ब्रह्मवर्चसमवरुन्धे । तैसं २, १, ८, १-२ ।

वैल्व-

१. बैल्वम् ( यूपं कुर्वीत ) अन्नाद्यकामः । कौ १०,१ ।

२. बैल्वं ( यूपम् ) ब्रह्मवर्चसकामस्य ( करोति ) । प ४, ४ (तु. मै ३,९,३) ।

३. षड् बैल्वाः ( यूपाः) भवन्ति ब्रह्मवर्चसस्यावरुद्ध्यै । तै ३,८,२०,१ ॥ [°ल्व- विल्व- २;३ द्र.] ।

विस- पृथिवी- १७६ द्र. ।

बीज- जज्ञि ( जननस्वभावम् ) बीजम् ( अस्तु ) । तैसं ७, ५, २०,१ ।

बुद्धि- बृहस्पतिरिव बुद्ध्या भूयासम् । मं २,४,१४ ।

बुध-

१. दिव्या वै व्रात्या व्रात्यामधावयन् बुधेन स्थपतिना, त एते व्रात्या आर्छन्निमं वैव योऽयं (वायुः) पवत ईशानं वा देवम् । जै २,२२१ (तु. तां १७, १, १-३) ।

२. मही दीक्षा ऽसौमायनो ( सोमपुत्रः ) बुधो यदुदयच्छदनन्दत्सर्वमाप्नोन्मन्मा ऽसे मेदोधा इति । तां २४, १८, ६ ।

बुध्न्य- दिश्- ४१ द्र. ।

बुध्य- अङ्गं मे बुध्य पाहि । मै १, ५, १४ ।

बृहत्-

१. अथ यस्माद् बृहतः स्तोमेन परिष्टुभ्यौ हो इत्यर्वाङ् प्रस्तौति तस्मादसावर्वाङ् (द्यु-) लोकोऽर्वाङसावादित्यस्तपत्यर्वाङ् चन्द्रमा अर्वाञ्चि नक्षत्राण्यर्वाची वृष्टिरिति सर्वमेवार्वाङ् । जै १, २९६ ( तु. जै १,२९७) ।

२. अथ सौभरं बृहतस्तेजः । सतेजस्केन नो बृहता स्तुतमसदिति । जै २,१९५ ।

३. अथात उत्तरः पक्षः । सोऽसौ ( द्यु- ) लोकः सो ऽसावादित्यस्तम्मनस्तद् बृहत् स भरद्वाजः । ऐआ १, ४, २ ।

४. अन्तो बृहत्साम्नाम् । तां १९, १२, ८ ।

५. अपरिमितं बृहत् । तैसं ३, १, ७, ३ ।

६. असौ वै (द्यु-) लोको बृहच्छन्दः । माश ८,५,२,५ ।

७. इन्द्रेण देवेन पृतना जयामि त्रैष्टुभेन छन्दसा पञ्चदशेन स्तोमेन बृहता साम्ना । तैसं ३,५,३, १ ।

८. ऊर्ध्वमिव हि बृहत् । तां ८, ९, ११ ।

९. एतद्ध वै राज्यं यद्रथन्तरम् । अथैतत्स्वाराज्यं यद् बृहत् । रथन्तरेणैव कनीयान् (भ्राता) राज्यं गच्छति । बृहता ज्यायान् स्वाराज्यं लोकम् । जै २, ९४ ।

१०. एतद् वै प्रत्यक्षं बृहतो रूपं यन् महत् (यदूकारो यदीकारः [जै ३,८२]) । जै ३,२२; ८२ ।

११. एष वै शुक्रो य एष ( सूर्यः ) तपत्येष उ ऽएव बृहन् । माश ४, ५, ९, ६ ।

१२. ओजो वै वीर्यं बृहत् । काठ ३७, ८ ।

१३. ज्यैष्ठ्यं (भारद्वाजं [ऐ ८,३]) वै बृहत् । ऐ ८, २; ३ ।

१४. तद् बृहदसृजत । तत्पर्जन्यस्य घोषो ऽन्वसृज्यत । ...तस्माद् बृहतः स्तोत्रे दुन्दुभीनुद्वादयन्ति वर्षुकः पर्जन्यो भवति । जै १, १४३ (जै ३, ११८;३५६) ।

१५. तद्यत्र बृहद्रथन्तरे आजिमैतां तद् बृहदुदजयद् रथन्तरं हीयमानममन्यत । जै १,३२९ ।

१६. ते (देवाः) ऽब्रुवन् स्वर्गं लोकं गत्वा बृहद् वावेदमभूद् येन स्वर्गं लोकं व्यापामेति

तदेव बृहतो बृहत्त्वम् । जै १, १३६ ।

१७. द्व्यचरं बृहत् । तै २, १, ५ ७ ।

१८. नमस्ते बृहते यस्त उत्तरः पक्षः । ऐआ ५, १, २ ।

१९. नाके बृहतस्स्तोत्रेण ( प्रतितिष्ठति ) । काठ १४,९ ।

२०. पुंसो वा एतद् रूपं यद् बृहत्, स्त्रियै रथन्तरम् (स्त्रियै गायत्री [जै ३, १८९]) जै २, ४०७; ३, १८९ ।

२१. पुमान् दक्षिणतो योषामुपशेते । जै २,४०७ ।

२२. पूर्वाह्णो ह वै रथन्तरस्य योगोऽपराह्णो बृहतः, श्वस इति रथन्तरस्य हस इति बृहतः । जै २,२९८ ।

२३. प्रजां बृहतस्स्तोत्रेण ( स्पृणोति ) । काठ १४, ९ ।

२४. प्रत्नं वै बृहद् उप रथन्तरम् । जै ३,१२ ।

२५. प्र व इन्द्राय बृहत इति यद्वै बृहत्तन्महत् । ऐ १,२,१ ।

२६. बृहता वा इन्द्रो वृत्राय वज्रं प्राहरत्तस्य तेजः परापतत्तत्सौभरमभवत् । तां ८, ८, ९ ।

२७. बृहता वै देवा स्वर्गं लोकमायन् । तां १८, २,८ ।

२८. बृहतो ह्येतत्तेजो यत्सौभरम् । तां ८, ८, १० ।

२९. बृहत् साम ( प्रजापतिर्बाहुभ्यामेवोरसोऽसृजत ) । जै १, ६८ ।

३०. बृहदेतत्परोक्षं यद्वैरूपम् ( साम ) । तां १२, ८, ४ ।

३१. बृहद्धि पूर्वं ऽरथन्तरात् । तां ११, १, ४ ।

३२. बृहद्विराट् । तै १, ४, ४, ९ ।

३३. बृहद्वै सुवर्गो लोकः । तां ९, १, ३१; तै १, २, २, ४ ।

३४. बृहन्मर्य्या इद ऽस ज्योगन्तरभूदिति तद् बृहतो बृहत्त्वम् । तां ७, ६, ५ ।

३५. भरद्वाजस्य वा एतदार्षेयं यद् बृहत् ( साम ) । जै ३,२०;२२ ।

३६. भरद्वाजो बृहदाचक्रे अग्नेः । ऐआ ३, १, ६ ।

३७. भविष्यद् बृहत् । तैसं ३, १, ७, ३ ।

३८. मनो वै बृहद् वाक् रथन्तरम् । जै ३, १२ (तु. ऐ ४, २८; जै १, १२८; १३७; ३२९; २, १९५; २२९; ३, २०; २२; ३१६; तां ७,६,१७) ।

३९. यथा वै पुत्रो ज्येष्ठ एवं बृहत्प्रजापतेः । तां ७, ६, ६ ।

४०. यदूर्ध्वमिव गीयते तद् बृहतो रूपम् । जै ३, १८५ ।

४१. यद्ध्रस्वं तद्रथन्तरं यद्दीर्घं तद् बृहत् । कौ ३, ५ ।

४२. यद् बृहत्तद्वैवतम् । यद् बृहत्तद्वैराजम् ( साम) । ऐ ४, १२ ।

४३. रथन्तरेण वै देवा असुरान् संविध्य बृहता जालेनेवाभिन्यौब्जन् । जै १, १३५ ।

४४. रथन्तरेणैव ब्राह्मण श्रेष्ठतां गच्छति बृहता राजन्यः । जै २,१३२ ।

४५. रथन्तरेणैवाग्निः श्रेष्ठतामगच्छद् बृहतेन्द्रः । जै २, १३२ ।

४६. रेत एव बृहता सिञ्चति । जै २, २ ।

४७. वर्म वै बृहत् । जै ३,२६१; तां ११, ५, ४ ।

४८. वृषा वै बृहद् योषा रथन्तरम् । ऐआ १, ४, २ ।
४९. श्रीर्वै बृहज्ज्यैष्ठ्यम् । जै २, ९७ ।
५०. श्रैष्ठ्यं (साम[तां.]) वै बृहत् । ऐ ८, २; तां ७,६,१७ ।
५१. श्वो बृहत् । तैसं ३, १, ७, २ ।
५२. स ( प्रजापतिः ) बृहदसृजत तत्स्तनयित्नोर्घोषोऽन्वसृज्यत । तां ७, ८, १० ।
५३. सर्वायुर् बृहत् । जै १, २९२; २, ४३३ ।
५४. सौभरं भवति बृहतस्तेजः । तां १२, १२, ७ ।
५५. स्वर्गो ( + वै [काठ.] ) लोको बृहत् । काठ ३३, २; तां १६ ५, १५ ।
५६. हो वा हा वै बृहत् । जै १, १३३ ॥ [ °हत्- अश्व- २५; २८; अहन्- १०; आदित्य- ११; १४१; १५२; इन्द्र- ७४; १०१; इन्द्रिय- ५; उदान- ५; ऋच्- ७; ऐर-; क्षत्र- ४४; ७८; ग्रीष्म- ९; ग्रैष्म- १; जगती- ३७; त्रैष्टुभ- ४; दक्षिणतस् १७; २२; दिव्- ५; २९;३८; ५१;५७; ७८; ९२; १००; १३३; १५०; १५५; देव- १२७; १६८; नौधस- ६; पञ्चदश- ३०; पशु- २१४; प्रजापति- ११८; १४६; २६९; प्रतिहार- १; प्राण- १५६; १५७; २७४ द्र. ] ।

बृहच्छोचस्- उदानो वै बृहच्छोचाः । माश १, ४, ३, ३ ।

बृहज्ज्योतिस्- असौ वाऽआदित्यो बृहज्ज्योतिः । माश ६,३,१,१५ ।

बृहत्क- बृहद् वाव न इदं कमभूद् येन स्वर्गं लोकं व्यापामेति । तदेव बृहत्कस्य बृहत्कत्वम् । जै ३, ५८ ।

बृहत्सामन्- अष्टाचत्वारिंशो मरायो भवति बृहत्सामा । जै २,१६४ ।

बृहदुक्थ-

१. त्रयो ब्रह्माऽपश्यन् । नोधास्तृतीयं, सुमित्रस्तृतीयं, बृहदुक्थस्तृतीयम् । जै ३, १३३ ।
२. बृहदुक्थो वा एतेन वाम्नेयोऽन्नस्य पुरोधामगच्छदन्नं वै ब्रह्मणः पुरोधान्नाद्यस्यावरुद्ध्यै । तां १४, ९, ३८ ।

बार्हदुक्थ ( सामन्-)- यद् उ बृहदुक्थ आङ्गिरसो ऽपश्यत् तस्माद् बार्हदुक्थमित्याख्यायते । जै ३, २१९ ।

बृहदुक्ष- प्रजापति- १४५ द्र. ।

बृहद्भास्- सुवर्गो वै लोको बृहद्भाः । तै ३, ३, ७, ९ ।

बृहद्रथन्तर (सामन्- )-

१. अनड्वाहौ वा एतौ देवयानौ यजमानस्य यद् बृहद्रथन्तरे । तां १२, ४,१४ ।
२. आत्मा वै बृहद्रथन्तरे । जै ३, ३७ ।
३. उभे बृहद्रथन्तरे भवतस्तद्धि स्वाराज्यम् । तां १९, १३, ५ ।
४. एतद् वै दैव्यं मिथुनं प्रजननं यदुभे बृहद्रथन्तरे । जै २,८१ ।
५. एते वै यज्ञस्य नावौ संपारिण्यौ यद् बृहद्रथन्तरे ताभ्यामेव तत्संवत्सरं तरन्ति । ऐ४,१३ ।
६. एते ह वै तीव्रे बहुले यदुभे बृहद्रथन्तरे । जै २, १५१ ।

७. ज्योगामयाविने उभे (बृहद्रथन्तरे) कुर्य्यादपक्रान्तौ वा एतस्य प्राणापानौ यस्य ज्योगामयति प्राणापानावेवास्मिन्दधाति। तां ७, ६, १२।
८. तस्योभे बृहद्रथन्तरे सामनी भवत स्वर्ग्यै। जै २, १६२।
९. ते ह वा एते ग्रामेगेये एवाविनिभ्ने यद् बृहद्रथन्तरे। जै १,१३४।
१०. तौ प्राणापानौ (बृहद्रथन्तरे), ताविमौ लोकौ (द्यावापृथिवी), तद्दैव्यं मिथुनम्। जै २,४२४।
११. पक्षौ (पादौ) वै बृहद्रथन्तरे शिर एतद् (आरम्भणीयम्) अहः। ऐ ८, १३[२]।
१२. बृहद्रथन्तरयोस् त्वा स्तोमेनेत्याहौज एवास्मिन् एतेन दधाति। तैसं २, ३,११,४।
१३. बृहद्रथन्तरे वै देवानां प्लवः। काठ ३३,५।
१४. यद् बृहद्रथन्तरे अभितो गायते रक्षसामपहत्यै। मै ३,३,५॥ [°र– अग्नि–२११; अहोरात्र–३०; इन्द्र–८१; क्षत्र– ४;१९; नौधस– २; पक्ष– १;२; पशु– २९; १६१, २४६; पितृ– ८; प्रजनन– ३; प्राणापान– १७; बृहत्– १६ द्र.]।

– बृहद्वयस्– यत्तऽइन्द्र बृहद्वय इति यत्त इन्द्र वीर्यमित्येवैतदाह। माश ४, २,३,१०॥ [°यस्– अश्व– २८ द्र.]।

बृहती (छन्दस्-)–
१. अथ बृहती। योऽयं प्राङ् प्राण (उपस्थेन्द्रियम्) एष एव सः। ··· ···एतेन द्वयं प्राणेन करोति रेतश्च सिञ्चति मेहति च। जै १, २५४।
२. अथ ह वा एतानि मृत्योर्मुखानि (षड् ऋतून्) बृहत्येव प्रतिविभवितुमर्हति नान्यच्छन्दः। स बृहत्या एवर्तोर्मुखमपिदधाति। जै १,२४७।
३. अथैतस्य सर्वेषु छन्दस्सु सर्वेषु कामेषु स्तुतं भवति यो बृहतीषु स्तुते। बृहती ह्येवैतानि सर्वाणि छन्दांस्यभिसंपद्यन्ते। जै १, २२९।
४. अयं मध्यमो (लोकः [अन्तरिक्षम्]) बृहती। तां ७, ३, ९।
५. एतद्वै रथन्तरस्य स्वमायतनं यद् बृहती। तां ४, ४, १०।
६. एतया हि देवा इमाँल्लोकानाश्नुवत। ते वै दशभिरेवाक्षरैरिमं लोकमाश्नुवत दशभिरन्तरिक्षं दशभिर्दिवं चतुर्भिश्चतस्रो दिशो द्वाभ्यामेवास्मिँल्लोके प्रत्यतिष्ठंस्तस्मादेतां बृहतीत्याचक्षते। ऐ ४,२४।
७. एष वै कृत्स्न आत्मा यद् बृहती······यथायमात्मा सर्वतः शरीरैः (अङ्गैः) परिवृत एवमेव बृहती सर्वतश्छन्दोभिः परिवृता। मध्यं ह्येषामङ्गानामात्मा, मध्यं छन्दसां बृहती। ऐआ २, ३, ५।
८. एषा वै प्रतिष्ठिता बृहती या पुनःपदा। तां १७, १, १३।
९. गोऽश्वमेव हि बृहती। कौ ११, २।
१०. छन्दा२ंसि पशुष्वाजिमयुस्तान् बृहत्युदजयत्। तैसं ५, ३, २, ३।
११. ता वा एता बृहत्यो यत् षट्त्रि२ंशदक्षराः। तां १६, ११, १०।
१२. ते (देवाः) ऽब्रुवन् स्वर्गं लोकं गत्वा बृहती वा इयमभूद् ययेदं व्यापामेति। तदेव बृहत्यै बृहतीत्वम्। न ततः पुरा बृहती नाम छन्द आस। जै १, १२०।
१३. मवारसि बृहत्या संमितः। क ४१,२।

१४. पवमानस्य बृहती ( स्वर्ग्या ) । तां ७, ४, १ ।
१५. पष्ठवाड् वयो बृहती छन्दः । तैसं ४, ३, ५, १; मै २, ८, २; काठ १७, २ ।
१६. बृहतीं वै स ( यजमानः ) छन्दसां जयति साध्यान् देवान् देवानाम् । जै १, ३३ ।
१७. बृहती छन्दसा स्वाराज्यमानशे (°ज्यं परीयाय [तैसं.]) । तैसं ५, ३, २, ४; क ३१, १३ (तु. तैसं ७,४,६,३; मै ३,२,९) ।
१८. बृहती मर्त्यां ययेमान् लोकान् व्यापामेति तद् बृहत्या बृहत्त्वम् । तां ७, ४, ३ ।
१९. बृहती रेतस्या ( ऋक् ) । जै १, ३१६ ।
२०. बृहती बृ हतेर्वृद्धिकर्मणः । दै ३, ११ ।
२१. बृहती वै स्वर्गलोकमानशे । जै २, ८९; २८५ ।
२२. बृहती स्वर्गं लोकं प्रवेद । काठ ३४, ७ ।
२३. बृहती स्वर्गो लोकः । जै १, २९०, २, ७; ११३; ३७९; ३८२; ४३७; माश १०, ५, ४, ६ (तु. जै ३, २९०) ।
२४. बृहती हि संवत्सरः । माश ६, ४, २, १० ।
२५. बृहत्यां वा असावादित्यः श्रियां प्रतिष्ठायां प्रतिष्ठितस्तपति । गो २, ५, ७ ।
२६. बृहत्यामधि स्वर्गो लोकः प्रतिष्ठितः । माश १३, ५, ४, २८ ।
२७. बृहत्यां भूयिष्ठानि सामानि भवन्ति । तां ७, ३, १६ ।
२८. बृहत्या वै देवाः स्वर्गं लोकमायन् । तां १६, १२, ७ ।
२९. बृहत्यु ह वा इमान् सर्वान् लोकानक्षरैर्व्याप्नोति । दशभिरेवाक्षरैरिमं लोकं व्याप्नोति, दशभिरन्तरिक्षं दशभिरमुं चतुर्भिर्दिशो द्वाभ्यामहोरात्रे । जै २, ११३ ।
३०. मनो बृहती । जै २, ५८; माश १०, ३, १, १ ।
३१. मित्रो नवाक्षरया बृहतीमुदजयच्चतुर्धा ह्येतस्या ( हि तस्याः [काठ.] ) नवनवाक्षराणि । मै १, ११, १०; काठ १४, ४ ।
३२. यदस्यै वाचो बृहत्यै पतिस्तस्माद् बृहस्पतिः । जैउ २, १, २, ५ ।
३३. यद्येनं बृहत्यामनुव्याहरेद् यज्ञस्य शिश्नमचीक्लृपम् । जै १, २५४ ।
३४. यस्य नव ता बृहतीम् (अभिसंपद्यन्ते) । कौ ९, २ ।
३५. श्रीर्वै ( वाग्वै [माश.]; व्यानो [तां.]) बृहती । कौ २८, ७; २९, ५; तां ७,३,८; माश १४, ४, १, २२; ऐआ १, १, ३ ।
३६. षट्त्रिं शदक्षरा ( + वै [जै., ऐ., माश ३, ५,१,९] ) बृहती । तैसं २, ५,१०, ३; मै ३, २, ९; काठ ३४, ७; ऐ ४, २४; ७, १; गो १, ४,१२; जै १, ३३; २, ७;११३; २८५; ३७९; ३८२; तां १०, ३, ९; तै ३, ९,१२,१; माश ८, ३, ३,८ ।
३७. सा ( वाक् ) द्वितीयमहः प्राप्य बृहती भवति, यामिमां श्रेष्ठी वाचं वदतीत्यवोचदिति । सा हि दूराच्छ्रूयते । जै २, १ ।
३८. सा बृहत्यभवत्तयेमान् लोकान् ( देवाः ) व्याप्नुवन् । तां ७, ४, २ ।
३९. साम्राज्यं बृहत्यामेव । जै २, ११३ ।
४०. सा वा एषा पशव एव यद् बृहती । जै १, १२० ।

४१. सूर्यो देवता बृहती छन्दः शुक्रस्य पात्रमसि । तैसं ३, १, ६, २-३ ।

४२. स्वराज्यं छन्दसां बृहती । तां २४,६,३ ।

४३. स्वाराज्यमेव बृहत्यभ्यसृज्यत, तस्माद् बृहत्या न वषट्कुर्वन्ति, यद्वषट्कुर्युः पशूनग्नौ प्रदध्युः। काठ ३४,७ ॥ [°ती- अधिपत्नी- १;२; आत्मन्- ३१; इला- २; उक्षन्- २; ककुभ्- ६; कृषि- ४; क्षत्र- ४४; छन्दस्- २७; ८९; १०६; ११३; गन्धर्व- १३; द्वादशाह- २०; पशु- १३३; १६२; प्राण- १३१; १५६ द्र. ] ।

वार्हत-

१. ते ये राथन्तराः पशवस्त आद्या अथ ये बार्हतास्तेऽत्तारः । जै १, २९७ ।

२. बार्हतं वा अहः । काठ ६,८ (तु. ऐ ५, ३०) ।

३. बार्हत ँ षष्ठमहः । तैसं ७,२,८,३ ।

४. बार्हतं हि माध्यन्दिनं सवनम् । तां ९,७,७ ।

५. बार्हतस्सूर्यः । काठ ६, ८ ।

६. बार्हतो विषुवान् । जै २,३६ ।

७. बार्हतो वै शुक्रः (ग्रहः) । तैसं ७,२,८,३ ।

८. बार्हतो वै स्वर्गो लोकः । गो १, ४, १२ (तु. ऐ ७, १; तै १,१,८,२) ।

९. बृहस्पतिर्बार्हतम् ( छन्दः ) । शां ११, ७ ॥ [°त- आदित्य- २८५; २८६; इन्द्र- ३४१; उत्तरतस् ७; एकविंश- ३१; क्षत्र- ४; ३४; ग्रावन्- ६; दिव्- १३२; पशु- ९८; २४५; पुरुष- ८५; प्रैष- १ द्र.] ।

बार्हती- या वै तिरश्ची विद्युत् सा राथन्तरी, योर्ध्वा सा बार्हती । जै१,१२८ ॥ [°ती- अन्तरिक्षलोक- ६; गो- २४ द्र.] ।

बृहस्पति-

१. अथ यस्सोऽपान आसीत्स बृहस्पतिरभवत् । जैउ २, १, २, ५ ।

२. अयं वै बृहस्पतिर्योऽयं ( वायुः ) पवते । माश १४, २, २, १० ।

३. एष वा एतर्हि बृहस्पतिर्यद् ब्रह्मा । तैआ ५, ४, १ ।

४. ते ये शतमिन्द्रस्याऽऽनन्दाः । स एको बृहस्पतेरानन्दः । तैआ ८, ८, ४; तैउ २, ८, ४ ।

५. देवस्य सवितुर्भागो ऽसि, बृहस्पतेराधिपत्य ँ समीचीर्दिशः स्पृताश्चतुष्टोमः स्तोमः । तैसं ४, ३, ९, २ ।

६. बृहस्पतये त्वा विश्वदेव्यावते स्वाहा । तैआ ५, ७, ११ ।

७. बृहस्पतये वासः ( वासो ऽनयन् [मै.] ) । मै १, ९, ४; काठ ९, ९; क ८, १२ ।

८. बृहस्पतिः पुर एता । तै २, ५, ७, ३ ।

९. बृहस्पतिः पुरोधया ( सहागच्छतु ) । तैआ ३, ८, २ ।

१०. बृहस्पतिं ब्रह्मवर्चसेन ( अवकीर्णः प्रविशति ) । जै १, ३६२; तैआ २, १८, १ ।

११. बृहस्पतिराग्नीध्रात् प्रणीयमानः ( सोमः ) । तैसं ४, ४, ९, १ ।

१२. बृहस्पतिरुत्थितः सोमः । काठ ३४, १४ ।

१३. बृहस्पतिर्ब्रह्मणः ( अधिपतिः ) । तैसं ३,४,५,१ ।
१४. बृहस्पतिर्ब्रह्म ब्रह्मपतिः । तै २,५,७,४ (तु. तै ३,११,४,२) ।
१५. बृहस्पतिर् ( श्रियः ) ब्रह्मवर्चसम् ( आदत्त ) । माश ११,४,३,३ ।
१६. बृहस्पतिर्वाचाम् ( सुवते ) । तैसं १,८,१०,२; तै १,७,४,१ ।
१७. बृहस्पतिर्विश्वैर्देवैः ( उदक्रामत् ) । तैसं ६,२,२,१; ऐ १,२४ ।
१८. बृहस्पतिर्वै देवानामानुजावरः,······बृहस्पतिरेतस्य देवता य आनुजावरः । काठ ११,४ ।
१९. बृहस्पतिर्वै वाच ईष्टे । काश ७,२,३,५ ।
२०. बृहस्पतिर्वै सर्वं ब्रह्म । गो २,१,३;४ ।
२१. बृहस्पतिश्च सविता विश्वरूपैरिहागतां रथेनोदकवर्त्मना । अप्सुषा इति तद् द्वयोः । तैआ १,१२,५ ।
२२. बृहस्पतिष्ट्वा विश्वैर्देवैरुपरिष्टाद्रोचयतु । मै ४,९,५ ।
२३. बृहस्पतिः स्तोत्रम् । मै ४,१३,८ ।
२४. बृहस्पते परिदीय रथेन रक्षोहाऽमित्राँ अपबाधमानः । प्रभञ्जन्त्सेनाः प्रमृणो युधा जयन्न-स्माकमेध्यविता रथानाम् । तैसं ४,६,४,१-२ ।
२५. बृहस्पतेरष्टमी (°तेश्चतुर्थी [मै ३,१५,५]) । तैसं ५,७,२१,१; मै ३,१५,४;५; काठ ५३,११ ।
२६. बृहस्पतेर्ब्रह्मणेति स हि ब्रह्मिष्ठः । तैसं २,६,८,७ ।
२७. बृहस्पतेर्माध्यन्दिनः । तै १,५,३,२ ।
२८. बृहस्पतेर् (°तेस्त्वा [काठ., क.] ) मूर्ध्ना हरामि । तैसं १,१,२, २; मै १,१,२; ४,१,२; काठ १,२; ३१,१; क १,२ ।
२९. बृहस्पतेर्वासः प्रतिजगृहुषः पञ्चममिन्द्रियस्यापाक्रामत् । काठ ९,१२ ।
३०. बृहस्पतेस् त्वा साम्राज्येन ब्रह्मणाभिषिञ्चामि । जै २,१३० ।
३१. ब्रह्म बृहस्पतिः । मै २,३,५; ४,३,९; ७,८; काठ ११,८; जै २,१३१; गो २,६,७ ।
३२. ब्रह्म वै ( +देवानाम् [तैसं., तै., तैआ.] ) बृहस्पतिः । तैसं २,२,९, १; मै २,२,३;५,७; ४, १,२; २,१०; काठसंक ४९:३; तै १,३,८,४; ८,६,४; ऐ १,१३; १९; २,३८; ४,११; कौ ७,१०; १२,८; १८,२; माश ३,१,४,१५;९,१,११, तआ ५,७,४; ११; जैउ १,१२,३,६ ।
३३. यजमानदेवत्यो वै बृहस्पतिः । तै १,८,३,१ ।
३४. यत् ( वषट्कारकृते गायत्र्याश्शिरश्छेदे ) प्रथममस्रवल्लोहितं वाव तदस्रवत्, तद् बृहस्पतिरु-पागृह्णात्, सा या रोहिणी साभवत्, तस्मात्सा बार्हस्पत्या । काठ १३,८ ।
३५. यदिन्द्राय रैवताय ( निर्वपति), यदेव बृहस्पतेस्तेजस्तदेवावरुन्धे । तैसं २, ३, ७, ३ ।
३६. यासां बृहस्पतिरुदाजतेडा नाम रूपं पशूना ९ संगवं धाम पश्यमानः । मै ४,२, ११ ।
३७. वहेन बृहस्पतिम् ( प्रीणामि ) । म ३, १५, ३ ।
३८. वाग्वै बृहती तस्या एष पतिस्तस्मादु बृहस्पतिः । माश १४, ४, १, २२ ।
३९. विधृतिरुपरिष्टात् । बृहस्पतेराधिपत्ये ब्रह्म मे दाः क्षत्रं मे दाः तेजो मे धाः वर्चो मे धाः (°पत्ये वाचं मे दाः ब्रह्म मे दाः । क्षत्रं मे दाः । पयो मे दाः [मै.]) । मै ४,९,३; तैआ ४,५,४ ।

४०. वीर्यं वै बृहस्पतिः । मै ४, ४, ५ ।
४१. स ( बृहस्पतिः ) तमाजिमुदजयत् । जै २, १२८ ।
४२. सवितुर्भागो ऽसि, बृहस्पतेराधिपत्य ँ समीचीर्दिशः स्पृताश्चतुष्टोमः स्तोमः । मै २,८,५।
४३. सरस्वत्यै त्वा वाचो यन्तुर्यन्त्रेण बृहस्पतेस्त्वा साम्राज्येन ब्रह्मणाभिषिञ्चामीति । जै २,१३०।
[°ति- अग्नि- ३९७;५१९;५९४; अङ्गिरस्- ३१; अजा- २१; अधिपत्नी- १; अनुष्टुभ्- ५३; ५४; अन्त- ५; अर्यमन्- १०; अष्टरात्र- ३; आस्कन्द-; इडा- २३; इन्द्राग्नि- १३; उक्थामद- ३; उद्गातृ- ११; १८; उपवक्तृ- १; उषस्- ५; ऊर्ध्वा- ६; ९; १२; ऋक्ष-; क्रौञ्च- ५; गवय-; गायत्र- २६; गायत्री- ९६; १०३; चक्षुस्- ५४; छन्दस्- ५९; ६०; ९१; छाग-१; २; तिष्य- १;३; दिश्- ६२; देव- ७०; १७१; १७२; द्युम्न- २; धेना-३; निवार-; नैवार- १; २; पशु- ३२६; पाङ्क्त- १५; १६; पृथिवी- १५१; पैङ्गराज-; प्राण- ४; बार्हत- ९; बुद्धि-; प्रजा ९०; प्रजापति- २११; बृहती- ३२ द्र. ] ।

बृहस्पति-नेत्र- उपरिषदो ( देवाः ) बृहस्पतिनेत्रा रक्षोहणः । तैसं १, ८, ७, १ ।

बृहस्पति-सव-
१. स एष बृहस्पतिसवो बृहस्पतिरकामयत देवानां पुरोधां (पौरोहित्यम्) गच्छेयमिति स एतेनायजत स देवानां पुरोधामगच्छत् । तां १७, ११, ४ ।
२. स वा एष द्वयोरेव यज्ञो ब्राह्मणस्य चैव राजन्यस्य च । जै २,१२८ ॥ [°व- क्षत्र- ५८ द्र.]।

बार्हस्पत्य, त्या-
१. बार्हस्पत्यं चरुं निर्वपति ब्रह्मणो गृहे शितिपृष्ठो दक्षिणा । तैसं १, ८, ९,१ ।
२. बार्हस्पत्यमष्टाकपालम् ( पुरोडाशं निर्वपेत् ) । काठ ११, १ ।
३. बार्हस्पत्यश्चरुर्ब्रह्मणो गृहे शितिपृष्ठः ( पशुः ) दक्षिणा । मै २, ६, ५ ।
४. बार्हस्पत्यां ( अजाम् ) शरदि ( आलभेत ) । काठ १३, १ ।
५. बार्हस्पत्यो ( + वै [काठ.] ) ब्राह्मणो देवतया । मै २, ५, ७; ३, ४, ३; काठ ११, ४ ।
६. बार्हस्पत्यो वा एष देवतया यो वाजपेयेन यजते । तै १, ३, ६, ८-९ ।
७. बार्हस्पत्यो वै ब्रह्मा । क ४४, ५ ।
८. बार्हस्पत्योऽष्टकपालः ( पुरोडाशः ) । तां २१,१०, २३ ।
९. यत्सुवर्णं ( + ज्योतिस् [काठ.] ) तद् बार्हस्पत्यम् । मै १, ८, ६; काठ ६, ७ ।
१०. यदि ब्राह्मणो यजेत, बार्हस्पत्यं मध्ये निधाय । मै ४,४, ९ ।
११. यद् बार्हस्पत्य ( अष्टाकपालः पुरोडाशः ) उपरिष्टादेवास्मिन् ( यजमाने ) तेन ब्रह्मवर्चसमधत्ताम् । काठ ११, १ ।
१२. यद् बार्हस्पत्या ब्रह्मवर्चसं तया ( अवरुन्द्धे ) । मै २, ५, २ ।
१३. यद् बार्हस्पत्या ( अजा ) उपरिष्टादेव तया ब्रह्मवर्चसं धत्ते । काठ १३, १ ।
१४. शंयुर्ह वै बार्हस्पत्यः सर्वान् यज्ञाञ्छमयांचकार । कौ ३, ८ ।
१५. शंयुर्ह वै बार्हस्पत्योऽञ्जसा यज्ञस्य संस्थां विदांचकार स देवलोकमपीयाय । तत्तदन्तर्हितमिव मनुष्येभ्य आस । माश १,९,१,२४ ।
१६. शरद्यपराह्णे श्वेतां बार्हस्पत्याम् ( मल्हामालभेत ) । तैसं २, १, २, ५ ।

१७. शितिपृष्ठो बार्हस्पत्यस्य । मै २,६, ६; माश ५,३,१,२ (तु. मै ४, ७,८; काठ ४८,१) ।
१८. शितिबाहुरन्यतःशितिबाहुः समन्तशितिबाहुस्ते बार्हस्पत्याः । मै ३, १३, ३ ।
१९. श्वेतां बार्हस्पत्याम् (आलभेत) । तैसं २, १, ४,२ ॥ [°त्य- अभि √चर् ६; ऊर्ध्व-स्तोभ-; ग्रामकाम- ३ द्र. ] ।

बेकुरा-

१. तद्यै ( वाचे ) जुहुयाद् बेकुरा नामासि । तां ६,७,६ ।
२. वाग्वै बेकुरा । जै १,८२ ।

बोध- असौ वा आदित्यो बोधः । काठ ३७,१० ।

ब्रध्न-

१. अदो वै ब्रध्नस्य विष्टपं यत्रासौ ( सूर्य्यः ) तपति । कौ १७,३ ।
२. असौ वा आदित्यो ब्रध्नः ( +स यदोदेत्यथ दिशः कल्पन्ते [काठ.] ) । काठ १२,२; तै ३,९,४,१ ।
३. तदेव ब्रध्नस्य विष्टपम् । तस्मिन्न् एतद् देवास् सर्वान् कामान् दुह्रे । जै ३,३२९ ।
४. संवत्सरो वाव ब्रध्नस्य विष्टपं चतुस्त्रिंशस्तस्य चतुर्विंशतिरर्धमासाः सप्तऽर्तवो द्वे अहोरात्रे संवत्सर एव ब्रध्नस्य विष्टपं चतुस्त्रिंशस्तद्यत्तमाह ब्रध्नस्य विष्टपमिति स्वाराज्यं वै ब्रध्नस्य विष्टपंस्वाराज्यं चतुस्त्रिंशः । माश ८,४,१,२३ ।
५. स्वर्गो वै लोको ब्रध्नस्य विष्टपम् । ऐ ४,४ ॥ [ °ध्न- आदित्य- ६५;२९७; दशम- ९ द्र. ] ।

ब्रह्मन्-

१. अथ यत्राङ्गारा मल्मलायन्तीव तद्ध ब्रह्म भवति । काश ३,१,१,१ ।
२. अथामूर्त्तं ( ब्रह्मणो रूपम् ) वायुश्चान्तरिक्षं च । माश १४,५,३,४ ।
३. अथामूर्तं ( ब्रह्मणो रूपम् ) प्राणश्च यश्चायमन्तराकाशः । माश १४,५,३,८ ।
४. अभयं वै ब्रह्माभयंहि वै ब्रह्म भवति य एवं वेद । माश १४,७,२,३१ ।
५. अयं वै ब्रह्म यो ऽयं (वायुः) पवते । ऐ ८,२८ ।
६. अयास्यो ब्रह्मा । जै ३,१८८ ।
७. आकाशशरीरं ब्रह्म । सत्यात्म प्राणारामं मन आनन्दम् । शान्तिसमृद्धममृतम् । तैआ ७,६,२; तैउ १,६,२ ।
८. इदमेव मूर्त्तं (ब्रह्मणो रूपम्) यदन्यत्प्राणाच्च यश्चायमन्तरात्मन्नाकाशः । माश १४,५,३,६ ।
९. इन्द्र एव ब्रह्माऽऽसीत् । जै ३,३७४ ।
१०. एतत्प्रत्यक्षं ब्रह्म यत्सुब्रह्मण्या । जै २,७८ ।
११. एतदेषां (वागिति नाम्नां) ब्रह्मैतद्धि सर्वाणि नामानि बिभर्ति । माश १४,४,४,१ ।
१२. एतद्वै देवानां ब्रह्मानिरुक्तं यच्चतुर्होतारः । काठ ९,१६ ।
१३. एतद्वै यजुः ( उर्वन्तरिक्षमन्वेमीति ) ब्रह्म रक्षोहा । माश ४,१,१,२० ।
१४. एतमेव ( आत्मानम् ) ब्रह्मेत्याचक्षते । ऐआ ३,२,३ ।
१५. एतमेव ( प्रज्ञात्मानम् ) ब्रह्मेत्युपासते । शांआ ८,४ ।
१६. एतस्यैवान्तो नास्ति यद् ब्रह्मेति । तैसं ७,३,१,४ ।

१७. एतानि वै ब्रह्मण आयुधानि यद्यज्ञायुधानि। ऐ ७,१९।
१८. एष ह वै विद्वान्त्सर्वविद् ब्रह्मा यद् भृग्वङ्गिरोविद् (अथर्ववेदविद्)। गो १, २,१८;५,११।
१९. एष हीदं सर्वं बिभर्ति। तस्मादेष एव ब्रह्म। भर्म ह वै नामैषः। तद् ब्रह्मेति परोक्षमाचक्षते। जै ३, ३७९।
२०. ऐन्द्रो वै ब्रह्मा। तैसं ७,१,५,७।
२१. कतम एको देव इति स ब्रह्म त्यदित्याचक्षते। माश १४,६,९,१०।
२२. जुष्टां ब्रह्मभ्य इति। जुष्टमद्य ब्राह्मणेभ्योऽनूच्यासमित्येवैतदाह। माश १,५,१,१९।
२३. त एतद् ऋग्रेतसं यजूरेतसं ब्रह्मणि योनौ रेतो दधतो यन्ति अग्नावेव तदाहुतीभिरभिजुह्वतो यन्ति। जै २,२३।
२४. ततो ब्रह्मा जनकः (वैदेहः) आस। माश ११,६,२,१०।
२५. ततो ब्रह्मैव प्रथममसृज्यत (प्रजापतिः) त्रय्येव विद्या तस्मादाहुर्ब्रह्मास्य सर्वस्य प्रथमजमिति। माश ६,१,१,१०।
२६. तदिति वा एतस्य महतो भूतस्य (परमात्मनः) नाम भवति योऽस्यैतदेवं नाम वेद ब्रह्म भवति। ऐआ ५,३,३।
२७. तदेतत् स्वयं प्रशस्तं यद् ब्रह्म। जै १,३३६।
२८. तदेतद् ब्रह्म यशश्श्रिया परिवृढम्। ब्रह्म ह तु सन् यशसा श्रिया परिवृढो भवति य एवं वेद। जैउ ४, ११,३,११।
२९. तदेतन्मूर्तं (ब्रह्मणो रूपम्) यदन्यद्वायोश्चान्तरिक्षाच्च। माश १४,५,३,२।
३०. तदेषाऽभ्युक्ता सत्यं ज्ञानमनन्तं ब्रह्म। यो वेद निहितं गुहायां परमे व्योमन् सोऽश्नुते सर्वान् कामान्त्सह ब्रह्मणा। तैआ ८, १, १; तैउ २, १, १।
३१. तद् ब्रह्मेत्युपासीत। ब्रह्मवान् भवति। तैआ ९, १०, ४; तैउ ३, १०, ४।
३२. तद्वै ब्रह्म स प्राणः। जैउ १, ११, १, २।
३३. तस्मात्स (ब्रह्मा) तूष्णीमास्ते। जैउ ३, ४, २, २।
३४. तस्मादाहुर्ब्रह्मणा द्यावापृथिवी विष्टब्धेऽइति। माश ८,४,१,३।
३५. तस्मादाहुर्ब्रह्मैव देवाना श्रेष्ठमिति। माश ८,४,१,३।
३६. तस्मादिद सर्वं ब्रह्म स्वयम्भ्विति। तैआ १,२३,८।
३७. तस्मै वा एतस्मै प्राणाय ब्रह्मण एता देवता (मनश्चक्षुश्श्रोत्रवाचः) अयाचमानाय बलिं हरन्ति। शांआ ४,१; कौउ २,१।
३८. तस्य (पुरुषस्य) मन एव ब्रह्मा। कौ १७, ७।
३९. तस्यै वाचः सत्यमेव ब्रह्म। माश २,१,४,१०।
४०. तानि (रक्षासि) ब्रह्मणापाघ्नत। काठ २२,११।
४१. तिसृभिरस्तुवत ब्रह्मासृज्यत, ब्रह्मणस्पतिरधिपतिरासीत्। तैसं ४, ३,१०,१; मै २,८,६।
४२. ते ये शतं प्रजापतेरानन्दाः। स एको ब्रह्मण आनन्दः। तैआ ८,८,४; तैउ २,८,४।
४३. ते (रूपञ्चैव नाम च) हैते ब्रह्मणो महती यक्षे। माश ११, २, ३, ५।
४४. त्वं ब्रह्मासीतीतरः (ऋत्विक्) प्रत्याह वरुणोऽसि सत्यौजा इति। माश ५, ४, ४,१०।

४५. दक्षिणत आयतनो वै ब्रह्मा । तै ३,९,५,१ ।
४६. द्वादश पष्ठौहीर्ब्रह्मणे (ददाति), आयुरेवावरुन्धे । तै १,८,२,४ (तु.मै ४,४,८) ।
४७. द्वे वै ब्रह्मणो रूपे मूर्त्तं चैवामूर्त्तञ्च । माश १४,५,३,१ ।
४८. नमस्ते वायो त्वमेव प्रत्यक्षं ब्रह्मासि । तैआ ७,१,१; तैउ १,१,१ ।
४९. न वै तत्र प्रमीयते गौरश्वः पुरुषः पशुः । यत्रेदं ब्रह्म क्रियते परिधिर्जीवनाय कम्··· । तैआ ६, ११, २ ।
५०. नैवैषा (सुब्रह्मण्या) ऋङ् न यजुर् न साम । सर्वमिवैव सर्वमिव ह्येव ब्रह्म । जै २, ८० ।
५१. प्राणदेवत्यो वै ब्रह्मा । प २,९ ।
५२. बभ्रुकर्णी भवत्येतद्वै ब्रह्मणो रूपम् । तैसं २, ८, १, २ ।
५३. बलं वै ब्रह्मा । तै ३, ८, ५, २ ।
५४. बार्हस्पत्यो ( +वै [काठ., क., तै.] ) ब्रह्मा । काठ २८, ५; क ४४,५; तै ३, ९, ५,१; माश १३,२,६,९ ।
५५. ब्रह्म चैव क्षत्रं च सयुजौ करोति । काठ ३७,११ ।
५६. ब्रह्मणः प्रजाः प्रजायन्ते । क ४१,५ ।
५७. ब्रह्मणस्त्वा तेजसे यन्त्राय धर्त्राय गृह्णामि । तैसं १,६,१,२ ।
५८. ब्रह्मणस्त्वा परस्पाय क्षत्रस्य तन्वस्पाहि । मै ४,९,१० ।
५९. ब्रह्मणाऽपः प्रोक्षति । तैसं २,६,५,१ ।
६०. ब्रह्मणा वा अस्य तत् पूर्वार्धमचिनुत । तैसं ५,६,१०,१ ।
६१. ब्रह्मणा वा एषा यजुषा सम्भृता यदुखा । तैसं ५,१,९,२ ।
६२. ब्रह्मणा वा ब्रह्मवर्चसमृध्नवामेति । जै २,१३१ ।
६३. ब्रह्मणा वै देवाः सुवर्गं लोकमायन् । तैसं ५,७,८,३ ।
६४. ब्रह्मणा सोमपाः । तैसं ४,४,८,१ ।
६५. ब्रह्मणा स्वर्गं लोकं गच्छामेति । जै २,११९ ।
६६. ब्रह्मणेऽश्वं ददाति । जै २,१३० ।
६७. ब्रह्मणैव तद् रक्षः पाप्मानमपहत्य स्वर्गं लोकं सर्पन्ति । जै १,८६, माश ४,१,१,२० ।
६८. ब्रह्मणैव द्विषन्तं भ्रातृव्यं विनुदते य एवं वेद । जै २,१०४ ।
६९. ब्रह्मणैव यज्ञाद्रक्षांस्यपाहन्ति । काठसंक ५ : २ ।
७०. ब्रह्मणो वा एतत्तेजो यत्सोमः । काठ १४,६ ।
७१. ब्रह्मणो वाऽ एतद्रूपं यदहः (यद्ब्राह्मणः [माश १३,१,५,२ ]) । माश १३,१,५,२;४ ।
७२. ब्रह्मणो वा एते व्यृद्ध्यन्ते ये मात्यां धावयन्ति । राजपुत्रा इति ह्येनानाचक्षते । जै २,२२३ ।
७३. ब्रह्मणो वा एष रसो यद् यज्ञायज्ञीयम् । मै १,६,७ ।
७४. ब्रह्मणो ह वा एष रसो यन्नौधसम् ( साम ) । जै १,१४७ ।
७५. ब्रह्मणो ह्येवैकदक्षिणा । जै २,१६० ।
७६. ब्रह्म देवानजनयत् । तै २,८,८,९ ।
७७. ब्रह्म ( आनन्दमयस्यात्मनः ) पुच्छं प्रतिष्ठा । तैआ ८,५,१; तैउ २,५,१ ।

७८. ब्रह्म ब्रह्माऽभवत्स्वयम् । तै ३,१२,९,३ ।

७९. ब्रह्म ब्राह्मणस्य पिता । काठ ११,४ ।

८०. ब्रह्म यजुः । (यज्ञः [माश.] ) । मै ३,२,३; काठ २०, १; माश ३,१,४,१५ (तु. ऐ. ७,२२)।

८१. ब्रह्म ( +वै [ऐ., तां.] ) रथन्तरम् । ऐ ८, १;२; जै २,१२९;१३३;३,३१६; तां ११, ४,६।

८२. ब्रह्म वा अग्निष्टोमः । जै २,१९२।

८३. ब्रह्म वाक् (वज्रः [जै १,२०२ ]) । जै १,८२; २०२;२,७८;३,३०७ ।

८४. ब्रह्म वै देवः सविता । तैसं ५, ३, ४, ४ ।

८५. ब्रह्म वै ब्रह्मणस्पतिः । मै २,२,३;५,७; काठ ११,४; १३, ८; कौ ८,५; ९,५; तां १६,५,८।

८६ ब्रह्म वै ब्रह्मा । मै २,३,५;४,४, २; काठ ११,४; ८; काठसंक ४७ : १; जै १,२०२;३,३०३;

८७. ब्रह्म वै (हि [माश ५, १, ५, २] ) ब्राह्मणः । तै ३, ९,१४,२; माश १३, १, ५, ३ ।

८८. ब्रह्म वै ब्राह्मणस्य स्वम् । जै १,२०७ ।

८९. ब्रह्म वै भूतानां ज्येष्ठं तेन कोऽर्हति स्पर्द्धितुम् । तै २,८,८,१० ।

९०. ब्रह्म वै मन्त्रः (यजुः [मै.]) । मै ३,१,१; जै १,८८; माश ७,१,१,५ ।

९१. ब्रह्म वै यदग्रे व्यभवदृक्साम यजुस्तस्य वा एष रसो यद्यज्ञायज्ञियम् । मै ४,४,९ ।

९२ ब्रह्म वै वसीयः (वसुकः [ऐआ.]) । मै ४,२,६; ऐआ १,२,२ ।

९३. ब्रह्म वै वाचः परमं व्योम । तै ३, ९, ५, ५ ।

९४. ब्रह्म वै वाचस्पतिः (वाजपेयः [तै.]) । काठ २७, १; क ४२, १; तै १ ३,२,४ ।

९५ ब्रह्म वै शर्म वरूथम् । काठ १९,५ ।

९६. ब्रह्म वै स्वर्गस्य लोकस्येशे । जै २,११९ ।

९७. ब्रह्म वै हिङ्कारः (ब्रह्मसाम [जै.]) । जै २, १०८; ऐआ १, ३, १ ।

९८. ब्रह्म व्रते (स्थितम् ) । काठ ३४, १४ ।

९९. ब्रह्म स्वयम्भु । तैआ ३,६,२ ।

१००. ब्रह्म हि देवान् प्रच्यावयति । माश ३, ३, ४, १७ ।

१०१. ब्रह्म हि मित्रः (यज्ञः [माश ५,३,२,४]) । माश ४,१,४,१०;५,३,२,४[२] ।

१०२. ब्रह्म हि वसन्तः (ऋतुः) । माश २,१,३,५ ।

१०३. ब्रह्माणं ब्रह्मिष्ठं कुर्वीत, यो यज्ञस्योल्बणं पश्येत् । ऐआ ३, २, ३ (तु. शांआ ८,३) ।

१०४. ब्रह्मायुष्मत्तद् ब्राह्मणैरायुष्मत् । तैसं २, ३, १०, ४; काठ ११,७ ।

१०५. ब्रह्मायुस्तस्य ब्राह्मणा आयुष्कृतः । मै २,३,४ ।

१०६. ब्रह्मा वा ऋत्विजामनिरुक्तः । तां १८,१,२३ ।

१०७. ब्रह्मा वाऽ ऋत्विजां भिषक्तमः । माश १,७,४,१९; १४,२,२,१९ ।

१०८. ब्रह्मा विश्वः कतमः स्वयम्भूः प्रजापतिः संवत्सर इति । तैआ १०,६३,१ ।

१०९. ब्रह्मा वै यज्ञस्य दक्षिणत आस्ते ऽभिगोप्ता । माश १,७,४,१८ (तु. माश १२,६,१,३८) ।

११०. ब्रह्मा समिध्याम् । काठ ३४,१६ ।

१११. ब्रह्मा हि यज्ञं दक्षिणतो ऽभिगोपायति । माश ५,४,३,२६ (तु. माश १२,६,१,३८) ।

११२. ब्रह्मेव लोके क्षत्रमिव श्रियां भूयासम् । ऐआ ५,१,१ ।

११३. ब्रह्मैता व्याहृतयः। तैसं १, ६,१०,२।
११४. ब्रह्मैव मित्रः (सर्वम् [गो.]) । गो १,५,१५; माश ४,१,४,१।
११५. ब्रह्मैव वाचः परमं व्योम। तैसं ७,४,१८,२; काठ ४४,७; तै ३,९,५,५।
११६. ब्रह्मैव सुब्रह्मण्यामाह्वयत्। जै ३,३७४।
११७ भीषाऽस्माद् (ब्रह्मणः) वातः पवते। भीषोदेति सूर्यः। भीषाऽस्मादग्निश्चेन्द्रश्च। मृत्युर्धावति पञ्चमः। तैआ ८,८,१; तैउ २,८,१।
११८. भूरिति वै प्रजापतिः ब्रह्माजनयत। माश २,१,४,१२।
११९. मनो ब्रह्म। गो १,२, ११; तैआ १०,६४,१ (तु. गो १,२,१०; २,५,४)।
१२०. मनो ब्रह्मेति व्यजानात्। तैआ ९,४,१; तैउ ३,४,१ (तु. गो १,२,११; ष १,५)।
१२१. मनो वै यज्ञस्य ब्रह्मा। माश १४,६,१,७।
१२२. मनो (श्रोत्रं [माश १४, ६, १०, १२]) वै सम्राट् परमं ब्रह्म। माश १४,६,१०,१२;१५।
१२३. मह इति ब्रह्म। ब्रह्मणा वाव सर्वे वेदा महीयन्ते। तैआ ७,५,३; तैउ १,५,३।
१२४. मूलं वै ब्रह्मणो वेदः। काठसंक ४ : ५।
१२५. यज्ञस्य हैष भिषग्यद् ब्रह्मा यज्ञायैव तद्भेषजं कृत्वा हरति। ऐ ५,३४।
१२६. यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत् प्रयन्त्यभिसंविशन्ति। तद् विजिज्ञासस्व। तद् ब्रह्म। तैआ ९,१,१; तैउ ३,१,१।
१२७. यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह। आनन्दं ब्रह्मणो विद्वान्। न बिभेति कदाचन। तैआ ८,४,१; तैउ २,४,१।
१२८. यथा चैतद् ब्रह्म, कामरूपि कामचारि भवति···। शांआ ७,२३।
१२९. यथा ब्रह्म क्षत्रेण समनमत्···। काठ ४५, २०।
१३०. यदस्तोभवत् ( साम ) तद् ब्रह्म। जै १, १२४।
१३१. यद्वैवैषाग्रे किं च देवता जायमानोवाद तदु ह ब्रह्मैव बभूव। जै ३,३६१; ३८०।
१३२. यद्वै तत्सुकृतम् ( ब्रह्म )। रसो वै सः। रस ९ ह्येवायं लब्ध्वाऽऽनन्दी भवति। तैआ ८,७,१; तैउ २, ७,१।
१३३. यम उ वै ब्रह्मा। काश ५, ४, १, २३।
१३४. यमेवामुं त्रय्यै विद्यायै तेजो रसं प्रावृहत्तेन ब्रह्मा ब्रह्मा भवति। कौ ६, ११।
१३५. यावद् ब्रह्म विष्टितं तावती वाग्। यत्र ह क्व च ब्रह्म तद्वाग्यत्र वा वाक् तद्वा ब्रह्मेत्येतत्तदुक्तं भवति। ऐआ १, ३, ८।
१३६. योगक्षेमो ब्रह्माणम् ( अनु )। ष २, ८।
१३७. रोहिणी भवति ब्रह्मणो रूप ९ समृद्ध्यै। मै २, ५, ७।
१३८. वाग्वै ब्रह्म। ऐ ६, ३; जै १, १०२; ११५; १४०; १७८; माश २, १, ४, १०; १४,४, १, २३; ६, १०, ५ (तु. ऐ २, १५; ४, २१; गो १,२,११; जै २, ४२२; जैउ २,३,३, ६)।
१३९. वाचा ब्रह्म ( अन्वाभवत् )। काठ ४३, ४।
१४०. वासिष्ठो ब्रह्मा कार्यः। तैसं ३, ५, २, १।
१४१. विज्ञानं ब्रह्मेति व्यजानात्। तैआ ९, ५,१; तैउ ३, ५,१।

१४२. विद्युद्ब्रह्मेत्याहुः। विदानाद् विद्युद् विद्यत्येन ᳪ सर्वस्मात्पाप्मनो य एवं वेद विद्युद् ब्रह्मेति विद्युद्ध्येव ब्रह्म। माश १४, ८, ७, १।

१४३. विष्टप एव सप्तमो ब्रह्मलोको यस्मिन्नेतद् ब्रह्म। जै १, ३३४।

१४४. वेदपुरुष इति यमवोचाम, येन वेदान्वेद ऋग्वेदं यजुर्वेदं सामवेदमिति, तस्यैतस्य ब्रह्म रसः। शांआ ८, ३।

१४५. वेदो ब्रह्म। जैउ ४, ११, ४, ३।

१४६. व्यानो मे ब्रह्मा। ष २, ७।

१४७. शरद्ब्रह्मा तस्माद्यदा सस्यं पच्यते ब्रह्मण्वत्यः प्रजा इत्याहुः। माश ११, २, ७,३२।

१४८. श्रोत्रं वै ब्रह्म श्रोत्रेण हि ब्रह्म शृणोति श्रोत्रे ब्रह्म प्रतिष्ठितम्। ऐ २, ४०।

१४९. श्वेतो भवति ब्रह्मणो रूप ᳪ समृद्ध्यै। मै २, ५, १।

१५०. षोडशकलं वै ब्रह्म। जैउ ३, ७, १, ८।

१५१. सच्चाऽसच्चाऽसच्च सच्च वाक् च मनश्च (मनश्च) वाक् च चक्षुश्च श्रोत्रं च श्रोत्रं च चक्षुश्च श्रद्धा च तपश्च तपश्च श्रद्धा च तानि षोडशकलं ब्रह्म। स य एवमेतत्षोडशकलं ब्रह्म वेद तमेवैतत्षोडशकलं ब्रह्माप्येति। जैउ ४, ११,४, १-२।

१५२. सत्यं त्वा ब्रह्मणा, ब्रह्म त्वा यजुर्भिः, यजू ᳪ षि त्वा सामभिः, सामानि त्वा ऋग्भिर्ऋचस्त्वा पुरोनुवाक्याभिः (अभिषिञ्चन्तु)। मै ३, ११, ८।

१५३. सत्यं ब्रह्म। माश १४, ८, ५, १।

१५४. सप्तम उ लोके ब्रह्म। जै १, ३३३।

१५५. सप्ताक्षरं वै ब्रह्मऽर्गित्येकाक्षरं यजुरिति द्वे सामेति द्वेऽअथ यदतोऽन्यद् ब्रह्मैव तद्, द्व्यक्षरं वै ब्रह्म तदेतत्सर्वं सप्ताक्षरं ब्रह्म। माश १०, २, ४, ६।

१५६. स (ब्रह्मा) यदत ऊर्ध्वमस ᳪ स्थितं यज्ञस्य तदभिगोपायति। माश १, ७, ४, १८।

१५७. सर्वा वा एषा वाग्ब्रह्म यदाश्विनम्। जै ३, ११।

१५८. सर्वा वाग्ब्रह्मेति ह स्माह लौहिक्यः। शांआ ७, २३।

१५९. स (प्रजापतिः) श्रान्तस्तेपानो ब्रह्मैव प्रथममसृजत त्रयीमेव विद्याम्। माश ६, १, १,८।

१६०. स होवाच गार्ग्यः। यश्चायमात्मनि (शरीरे) पुरुषः एतमेवाहं ब्रह्मोपासऽइति स होवाचाजातशत्रुर्मा मैतस्मिन्त्संवदिष्ठा आत्मन्वीति वाऽअहमेतमुपासऽइति। माश १४, ५, १, १३।

१६१. सा या सा वाग्ब्रह्मैव तत्। जैउ २, ५,१, २।

१६२. स्वर्गो लोको ब्रह्मणा (संहितः)। ऐआ ३, १, ६।

१६३. हृदयं वै सम्राट् परमं ब्रह्म। माश १४, ६, १०, १८।

१६४. हृदयं (वै यज्ञस्य) ब्रह्मा। माश १२, ८, २, २३।

१६५. हृदयं ब्रह्मेत्यारुणयः (उपासते)। ऐआ २,१, ४॥ [°ह्मन्- अ-; अग्नि- ९९; ११०;१२९; २१२; २५०; २७८; २९३; ३३७; ३६०; ३६५; ५८५; ५९५; ५९६; ५९७; ६०७; ६१९; अग्निष्टोम- ३०; अग्निहोत्र- ४१; ४२; अग्न्याधेय- २; अन्तरिक्ष- ६; १०६; अन्न- ९२; अन्नाद्य- १२; अपराजिता- १; अभिजित्- १; अभिप्लव- ८; अमावास्या- २०; अमृत- ३;४३;

अर्वाग्वसु- ३; अर्वावसु- १; अश्व- ४५; असुर- ७९; अहन्- ३४; आत्मन्- ५; ६९; आदित्य- ३५; ६६; १६२; २८८; ३१८; आनन्द- २; इन्द्र- ३८८; इन्द्राग्नि- ४५; उदर- १०; उदूग्राभ-; ऋच्- ३६; ऋत- २०; ऋषि १७; एकविंश- ३३; एकाह- १; ओदन- ५; ओम् ८; कृष्णाजिन- ३; १२; १३; क्षत्र- ५; ८; ११; ५५; ५६; ५७; ६०; ६५; ६६; ६७; ६८; ६९; ७०; ७२; ७३; ७४; ७५;७६;७७;७८;७९;८९; क्षत्रिय- ४;८८; गायत्- १; गायत्रच्छन्दस्- ५; गायत्री- ९९; चक्षुस्-१५;२४; चतुर्विंश- ६; चतुर्होतृ- २२; चतुष्टोम- ५; चन्द्रमस्- ४२; ५३; ५४; ५५; ७७; चातुर्होत्रिय-; छन्दस्- ९२; तपस्- १३; १४; ३०; तेजस्- २;२८;२९; त्रिवृत्- ७; ३८; दीक्षित- ९; देव- १७३;१७४; पर- ५; पर्ण- ४;८; पलाश- २; ३; पष्ठौही- ३; पाङ्क्त- १७; पाप्मन्- ७; पुष्कर- ४; पूर्ण- ४; प्रजा- ६९; प्रजापति- ७८;१४७;२९३; प्रज्ञान-; प्रणव- २; प्राची- २२; प्राजापत्य-१६; प्राण- १३१; १५८; १८१; २०१; २९४; प्राणापान- ११; प्रातःसवन- १३; बभ्रु- ४; बृहस्पति- ३; १३; १४; २०; २६; ३०; ३१; ३२; ३९ द्र.]।

**ब्रह्म-गिरि-** स एव गिरिश्चक्षुः श्रोत्रं मनो वाक् प्राणस्तं ब्रह्मगिरिरित्याचक्षते, गिरति ह वै द्विषन्तं पाप्मानं भ्रातृव्यं''' य एवं वेद। ऐआ २,१,८।

**ब्रह्म-चर्य-**

१. तमेतं (आत्मानम्) वेदानुवचनेन विविदिषन्ति ब्रह्मचर्येण तपसा श्रद्धया यज्ञेनानाशकेन चेति माण्डूकेयः। शांआ १३, १।

२. तस्मा एतत्प्रोवाचाष्टाचत्वारिंशद्वर्षं सर्ववेदब्रह्मचर्यं तच्चतुर्धा वेदेषु व्यूह्य द्वादशवर्षं ब्रह्मचर्यं द्वादश वर्षाण्यवरार्द्धमपि स्नायंश्चरेद्यथाशक्त्यपरम्। गो १, २, ५।

३. ब्रह्मैका (कामदुघा) तां ब्रह्मचर्येण (अन्विच्छन्ति)। जै २,८४।

४. श्वेतकेतुं हारुणेयं ब्रह्मचर्यं चरन्तं किलासो जग्राह। तमश्विनावूचतुः। मधुमांसौ किल ते भैषज्यमिति। स होवाच ब्रह्मचर्यमानी कथं मध्वश्नीयामिति। तौ होचतुः। यदा चात्मना पुरुषो जीवति, अथान्यत् सुकृतं करोमीत्यात्मानं ह्येव सर्वतो गोपायेत्। जु १०५ (तु. माश ११,५,४,१८)।

**ब्रह्म-चारिन्-**

१. अथ हैतद्देवानां परिपूतं यद्ब्रह्मचारी। गो १,२,७।

२. अथास्मै (ब्रह्मचारिण आचार्यः) सावित्रीमन्वाह। माश ११, ५, ४, ६।

३. अध एवासीत, अधः (ब्रह्मचारी) शयीत, अधस्तिष्ठेदधोव्रजेदेवं ह स्म वै तत्पूर्वे ब्राह्मणा ब्रह्मचर्यं चरन्ति। गो १, २, ४।

४. अह्रीर्भूत्वा (ब्रह्मचारी) भिक्षते य एवास्य मृत्यौ पादस्तमेव तेन परिक्रीणाति त' संस्कृत्यात्मन्धत्ते। माश ११, ३, ३, ५।

५. एतेषां वेदानाम् (ब्रह्मचारी) एकं द्वौ त्रीन्त्सर्वान्वा (अधीते)। काठसंक ४७ : ६।

६. तदाहुः। न ब्रह्मचारी सन्मध्वश्नीयादोषधीनां वा ऽएष परमो रसो यन्मधु नेदन्नाद्यस्यान्तं गच्छानीत्यथ ह स्माह श्वेतकेतुरारुणेयो ब्रह्मचारी सन्मध्वश्नंस्त्रय्यै वा ऽएतद्विद्यायै शिष्टं

यन्मधु··· यथा ह वाऽ ऋचं वा यजुर्वा साम वाभिव्याहरेत्तादृक्तद्य एवं विद्वान्ब्रह्मचारी सन्मध्वश्नाति तस्मादु काममेवाश्नीयात् । माश ११, ५, ४, १८ ।

७. तस्मादुत ब्रह्मचारी मधु नाऽश्नीयाद्वेदस्य पलाव इति । कामं ह त्वाचार्यदत्तमश्नीयात् । जैउ १,१७,२,१ ।

८. तस्माद् ब्रह्मचारिण आचार्यं गोपायन्ति । गृहान्पशून्नेन्नोऽपहरानिति । माश ३, ६, २, १५ ।

९. न श्मशानमातिष्ठेत् (ब्रह्मचारी) स चेदभितिष्ठेदुदकं हस्ते कृत्वा । गो १,२,७ ।

१०. नोपरिशायी (ब्रह्मचारी) स्यान्न गायनो न नर्त्तनो न सरणो न निष्ठीवेत् । गो १,२,७ ।

११. पञ्च ह वा एते ब्रह्मचारिण्यग्नयो धीयन्ते द्वौ पृथग्घस्तयोर्मुखे हृदय उपस्थ एव पञ्चमः । गो १, २, ४ ।

१२. ब्रह्मचारी (योऽग्निमाधत्ते सः) भवत्यात्मनो गोपीथाय । काठसंक १३:४-५ ।

१३. ब्रह्मचारी भैक्षं चरति । सं ५ ।

१४. ब्रह्म वै मृत्यवे प्रजाः प्रायच्छत् । तस्मै ब्रह्मचारिणमेव न प्रायच्छत्सो (मृत्युः) ऽब्रवीदस्तु मह्यमप्येतस्मिन्भाग इति यामेव रात्रिं समिधं नाहराताऽ इति तस्माद्यां रात्रिं ब्रह्मचारी समिधं नाहरत्यायुष एव तामवदाय वसति तस्माद् ब्रह्मचारी समिधमाहरेन्नेदायुषोऽवदाय वसानीति । माश ११,३,३,१ ।

१५ ब्रह्म ह वै प्रजा मृत्यवे सम्प्रायच्छत् ब्रह्मचारिणमेव न सम्प्रददौ, स होवाचाश्यामस्मिन्निति किमिति यां रात्रीं समिधमनाहृत्य वसेत्तामायुषो ऽवरुन्धीयेति, तस्माद् ब्रह्मचार्यहरहः समिध आहृत्य सायंप्रातरग्निं परिचरेत् । गो १,२,६ ।

१६. स (ब्रह्मचारी) एव विद्वान्यस्या एव भूयिष्ठं श्लाघेत तां भिक्षेतेत्याहुस्तल्लोक्यमिति स (ब्रह्मचारी) यद्यन्यां भिक्षितव्यां न विन्देदपि स्वामेवाचार्यजायां भिक्षेताथो स्वां मातरं नैनं (ब्रह्मचारिणम्) सप्तमी (रात्रिः) अभिक्षितातीयात्तमेवं विद्वांसमेवं चरन्तं सर्वे वेदा आविशन्ति यथा ह वाऽअग्निः समिद्धो रोचतऽ एवं ह वै स स्नात्वा रोचते य एवं विद्वान् ब्रह्मचर्यं चरति । माश ११, ३, ३, ७ ।

१७. सप्तमीं नातिनयेत्, सप्तमीमतिनयन्न ब्रह्मचारी भवति, समिद्भैक्षे सप्तरात्रमचरितवान् ब्रह्मचारी पुनरुपनेयो भवति । गो १,२,६ ।

१८. स (ब्रह्मचारी) यन्मृगाजिनानि वस्ते······स यदहरहराचार्याय कर्म करोति···स यत् सुषुप्सुर्निद्रां निनयति······स यत् क्रुद्धो वाचा न कंचन हिनस्ति पुरुषात्पुरुषात्पापीयानिव मन्यमानः······अथाद्भिः श्लाघमानो न स्नायात्······तां (कुमारीम्) नग्नां नोदीक्षेतेति वेति वा मुखं विपरिधापयेत्······तासां (ओषधीनाम्) पुण्यं गन्धं प्रच्छिद्य नोपजिघ्रेत् । गो १, २, २ ॥ [°रिन्– दम– १ द्र] ।

ब्रह्म-ज्योतिस्– ब्रह्मज्योतिरसि सुवर्धामा । तैसं १,३,३,१ ।

ब्रह्मणस्पति-

१. अरुणस्तूपरो भवत्येवमिव हि तस्य (ब्रह्मणस्पतेः) रूपमासीत् । मै २,५,९ ।

२. एष वै ब्रह्मणस्पतिर्य एष ( सूर्यः ) तपति । माश १४,१,२,१५ ।
३. तिसृभिरस्तुवत, ब्रह्मासृज्यत, ब्रह्मणस्पतिरधिपतिरासीत् । मै २,८,६ ।
४. प्र नूनं ब्रह्मणस्पतिर्मन्त्रं वदत्युक्थ्यम् । यस्मिन्निन्द्रो वरुणो मित्रो अर्यमा देवा ओकांसि चक्रिरे । काठ ७,१४ ॥ [°ति- प्राण- ४१; ब्रह्मन्- ४१;८५ द्र.] ।

ब्राह्मणस्पत्य,त्या-

१. ब्राह्मणस्पत्यमेकादशकपालं निर्वपेद् ग्रामकामः । तै २,३,३,४ ।
२. ब्राह्मणस्पत्यो ब्राह्मणो देवतया । मै २,५,७ ।
३. श्रोत्रं ब्राह्मणस्पत्यः ( प्रगाथः ) । कौ १५,३ ।
४. स ( प्रजापतिः ) एतां ब्राह्मणस्पत्यां प्रतिपदमपश्यत् । तया ब्रह्मण्वतीः प्रजा असृजत । ता अस्य सृष्टा न पराभवन् । जै २,१८५ ॥ [°त्य,त्या- अभि√चर् ७;८ द्र.] ।

ब्रह्म-त्व- अथ केन ब्रह्मत्वम् (क्रियते) इत्यनया (ऋग्यजुःसामाख्यया) त्रय्या विद्ययेति ह ब्रूयात् । जै १,३५८; माश ११,५,८,७ ( तु. ऐ ५,३३) ।

ब्रह्मदेवत्या- या सा प्रथमा (ओङ्कारस्य) मात्रा ब्रह्मदेवत्या रक्ता वर्णेन यस्तां ध्यायते नित्यं स गच्छेद् ब्राह्मं पदम् । गो १,१,२५ ।

ब्रह्म-निष्ठ- तस्माद्यो ब्रह्मनिष्ठः स्यात्तं ब्रह्माणं कुर्वीत । गो २,१,३ ।

ब्रह्म-यज्ञ-

१. तस्य वाऽ एतस्य ब्रह्मयज्ञस्य चत्वारो वषट्कारा यद्वातो वाति यद्विद्योतते यत्स्तनयति यदवस्फूर्जति तस्मादेवंविद्वाते वाति विद्योतमाने स्तनयत्यवस्फूर्जत्यधीयीतैव वषट्काराणामच्छम्बट्काराय । माश ११,५,६,९ ।
२. तस्य वाऽ एतस्य ब्रह्मयज्ञस्य वागेव जुहूर्मन उपभृच्चक्षुर्ध्रुवा मेधा स्रुवः सत्यमवभृथः स्वर्गो लोक उदयनम् । माश ११,५,६,३ ।
३. तस्य वा एतस्य ( ब्रह्म- ) यज्ञस्य द्वावनध्यायौ यदात्माऽशुचिर्यद्देशः । तैआ २, १५,१ ।
४. यत् स्वाध्यायमधीयीतैकामप्यृचं यजुः साम वा तद् ब्रह्मयज्ञः सन्तिष्ठते । तैआ २,१०,६ ।
५. स्वाध्यायो वै ब्रह्मयज्ञः । माश ११,५,६,२ ।

ब्रह्म-लोक-

१. तदिदं कर्म कृतमयं पुरुषो ब्रह्मणो लोकः । ऐआ २,१,३ ।
२. वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः । ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे । तैआ १०, १०, ३ ॥ [°क- इन्द्रप्रजापति- द्र.] ।

ब्रह्मवर्चस-

१. अति ब्रह्मवर्चसं क्रियत इत्याहुरीश्वरो दुश्चर्मा भवितोरिति । तैसं २, २, १०, २ ।
२. एवमिव वै ब्रह्मवर्चसं बभ्रिव क्षुद्रमिव हरितमिव । काठ १०, २ ।
३. गायत्री ब्रह्मवर्चसम् । जै १,९३ ।
४. तेजो (+ वै [जै १,२३२; ऐआ.]) ब्रह्मवर्चसं गायत्री । जै १,१३१; २३२; ऐआ १, १, ३ ।

५. देवानां ब्रह्मवादं वदतां यद् उपाश्रृणोः सुश्रवा वै श्रुतोऽसि । ततो मामाविशतु ब्रह्मवर्चसम् । तै १,२,१,६ ।
६. ब्रह्मवर्चसं वै रथन्तरम् (सोमः ⌊तैसं.⌋) । तैसं ३,५,९,३; तै २,७,१,१ ।
७. ब्रह्मवर्चसं हि स्वरमुपैमि । जै १, ३२३ ।
८. यत् सौम्यः (चरुर्भवति), ब्रह्मवर्चसं तेन (यजमाने दधाति) । तैसं २,१,२, ८; ३, ३, ३ ।
९. रस (वशं ⌊तैसं २,१,७,७⌋) इव खलु वै ब्रह्मवर्चसम् । तैसं २,१,७,२-३; ७ ।
१०. शुक्ला व्रीहय एवमिव वै ब्रह्मवर्चसम् । काठ ११,५ ।
११. संवत्सरो वै ब्रह्मवर्चसस्य प्रदाता । तैसं २, १,२, ६;४,२ ।
१२. सोमो वै शुक्रो ब्रह्मवर्चसम् । मै १,६,८ ॥ [°र्चस- अग्नि- ५९७; अग्नीषोम- १९; आदित्य- ६०; ६५; २३४; २८९; ३४०; ३५०; उत्तरतस् १०; उत्तरात् १३; गायत्री- ९८; घर्म- १२; चतुश्चत्वारिंश- ५; तेजस्- ३;४;१५;१९; २६; त्रिवृत्- १७; दक्षिणतस् १८; दीप्ति-; पुरोडाश- १४; बार्हस्पत्य- ११-१३; बृहस्पति- १०; १५; बैल्व- ३; ब्रह्मन्- ६२ द्र.] ।

ब्रह्मवर्चस-काम-

१. यो ब्रह्मवर्चसकामः स्यात्तस्मा एत ँ सोमारौद्र ँ ( सौर्यं ⌊तैसं २,३,२,३⌋) चरुं निर्वपेत् । तैसं २, ३, १०, १; ३, २, ३ ।
२. यो ब्रह्मवर्चसकामः स्यात् तस्मा एता मल्हा आलभेताऽऽग्नेयीं कृष्णग्रीवी ँ स ँ हितामैन्द्री ँ श्वेतां बार्हस्पत्याम् । तैसं २.१,२,४-५ (तु. मै २,५,७) ।
३. सौरीं श्वेतामालभेत ब्रह्मवर्चसकामः । मै २,५,२ ।
४. सौर्यं घृते चरुं निर्वपेच्छुक्लाना ँ व्रीहीणां ब्रह्मवर्चसकामः । मै २,२,२ ।
५. हुम्भा इति ब्रह्मवर्चसकामस्य । भातीव हि ब्रह्मवर्चसम् । जैउ ३,३,३,१ ।
[°म- अग्नीषोमीय- ४; नवरात्र- ६ द्र.] ।

ब्रह्मवर्चसिन्- तासु माधुच्छन्दसम् ( साम ) । मधुच्छन्दा वै वैश्वामित्रोऽकामयताग्र्यो मुख्यो ब्रह्मवर्चसी स्यामिति । स एतत् सामापश्यत् । जै ३, २७ ।

ब्रह्मवर्चसितर- मुखतो ब्रह्मवर्चसितरः । तैआ १,२४,१ ॥ [°र- दक्षिण,णा-३५ द्र] ।

ब्रह्मवर्चसिनी- नास्योन्मदिष्णुः प्रजाऽभविष्यद् ब्रह्मवर्चसिनीत्वेवाभविष्यत् । जै १, ३४९ ॥ [°सिनी- गौतम- १ द्र.] ।

ब्रह्मवर्चस्या-

१. ताः (आतपति वर्ष्या आपः) पुरस्तादुपदधाति । एता वै ब्रह्मवर्चस्या आपः । तैआ १,२४,१ ।
२. या ( आपः ) आतपति वर्षति, याश्च परिदद्दशे, ता आपो ब्रह्मवर्चस्याः । मै ४,४,१ ।

ब्रह्म-वाद्- ब्रह्मवर्चस- ५ द्र, ।

ब्रह्म-विद्- एत ँ ह वाव ( ब्रह्मविदम् ) न तपति । किमह ँ साधु नाकरवम् । किमहं पापमकरवमिति । तैआ ८,९,१; तैउ २,९,१ ।

ब्रह्म-वेद- ब्रह्मवेद एव सर्वम् । गो १,५ १५ ।

ब्रह्म-सामन्- यजमानकामो एष यद् ब्रह्मसाम । जै २,१०८ ॥ [°मन्- ब्रह्मन्- ९७ द्र.] ।

ब्रह्म-हत्या-

१. आवश्चनाद् वृक्षाणां भूया ९स उत्तिष्ठन्ति वारेवृत्त ९ ह्येषां ( वृक्षाः ) तृतीयं ब्रह्महत्यायै प्रत्यगृह्णन्त्स निर्यासोऽभवत्, तस्मान्निर्यासस्य नाऽऽश्यं ब्रह्महत्यायै ह्येष वर्णोऽथो खलु य एष लोहितो यो वाऽऽव्रश्चनान्निर्येयति तस्य नाऽऽश्यं, काममन्यस्य । तैसं २,५,१,४-५ ।

२. एष ह वै साक्षान्मृत्युर्यद्ब्रह्महत्या । माश १३,३,५,३ ॥ [°त्या- इरिण- १ द्र.] ।

ब्रह्म-हन्- तत् ( पापम् ) ब्रह्महणं नात्यच्यवत् ( नात्यक्रमत ) । तै ३,२,८,११-१२ ।

ब्रह्मिष्ठ- तस्मादु यमेव ब्रह्मिष्ठं मन्येत तं ब्रह्माणं कुर्वीत । जै १,३५८ ।

ब्रह्मौदन-

१. मूलं वै ब्रह्मणो वेदो वेदानामेवैतन्मूलं यदृत्विजः प्राश्नन्ति तद् ब्रह्मौदनस्य ब्रह्मौदनत्वम् । काठसंक ४ः ५-६ ।

२. यत्सौम्यमाहरति, तेन ब्रह्मौदनम् । जै २,३८ ।

ब्राह्म- ब्रह्मदेवत्या- द्र. ।

ब्राह्मि- नमो रुचाय ब्राह्मये । काठसंक १०३ : ६; तैआ ३,११,२ ।

ब्राह्मण-

१. अथ हैते मनुष्यदेवा ये ब्राह्मणाः । ष १,१ ।

२. अब्रह्मज्य एव राजन्यो ब्राह्मणाञ् जिनीयाद् अभ्रूणहत्यै मारयात् । जै २,१९६ ।

३. अशिव इव वाऽ एष भक्षो यत्सुरा ब्राह्मणस्य । माश १२,८,१,५ ।

४. असौ खलु वावैष आदित्यो यद् ब्राह्मणः । तैआ २,१३,१ ।

५. अस्य सर्वस्य ब्राह्मणो मुखम् । माश ३,९,१,१४ ।

६. आग्नेयो हि ब्राह्मणः । काठ २९, १०; ३७, २ ।

७. आ ब्रह्मन् ब्राह्मणो ( ब्राह्मणस्तेजस्वी [मै.] ) ब्रह्मवर्चसी जायताम् । तैसं ७, ५, १८, १; मै ३, १२, ६ ।

८. इदं वै यस्मिन्वसति ब्राह्मणो वा राजा वा श्रेयान्मनुष्यो न्वेष तमेव नार्हति वक्तुमिदं मे त्वं गोपाय प्राहं वत्स्यामीति । माश २, ४, १, १० ।

९. इष्टापूर्तं वै ब्राह्मणस्य । तै ३, ९, १४, ३; माश १३, १, ५, ६ ।

१०. ऋषिर्ह स्म मन्त्रकृद् ब्राह्मण आजायते । जै २, २६६ ।

११. एता वै प्रजा हुतादो यद् ब्राह्मणः । ऐ ७, १९ ।

१२. एते वै यज्ञमवन्ति ये ब्राह्मणाः शुश्रुवा ९सो ऽनूचाना एते ह्येनं तन्वत ऽएत ऽ एनं जनयन्ति । माश १, ८, १, २८ ।

१३. एष वै ब्राह्मणः पितृमान् पैतृमत्यो य आर्षेयः शुश्रुवान् । मै ४, ८, २ ।

१४. एष वो ऽमी राजा सोमो ऽस्माकं ब्राह्मणाना ९ राजा इति ··· तस्माद् ब्राह्मणोऽनाद्यः सोमराजा हि भवति । माश ५, ४, २, ३ ।

१५. एष ह वै सान्तपनोऽग्निर्यद् ब्राह्मणो यस्य गर्भाधानपुंसवनसीमन्तोन्नयनजातकर्मनामकरणनिष्क्रमणान्नप्राशनगोदानचूडाकरणोपनयनाप्लवनाग्निहोत्रव्रतचर्यादीनि कृतानि भवन्ति

स सान्तपनः। गो १, २, २३।

१६. किं ब्राह्मणस्य पितरं किमु पृच्छसि मातरम्। श्रुतं चेदस्मिन् वेद्यं स पिता स पितामहः। मै ४, ८, १; काठ ३०, १; क ४६, ४।

१७. जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते। ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारिवासी। तैसं ६, ३, १०, ५।

१८. तत्तदवक्लृप्तमेव। यद् ब्राह्मणो ऽ राजन्यः स्याद्यद्यु राजानं लभेत समृद्धं तत्। माश ४, १, ४, ६।

१९. तद्वयेव ब्राह्मणेनैष्टव्यं यद्ब्रह्मवर्चसी स्यादिति। माश १, ९, ३, १६।

२०. तम् (रहस्युमिन्द्रः) उवाच वरं वृणीष्व यः प्रत्यज्ञास्था इति। स (रहस्युः) होवाच ब्राह्मण एव मे प्रजायामाजायतामिति। ते हैते तक्षवो राहस्यवाः। जै ३, १९०।

२१. तस्माद् ब्राह्मणं प्रथमं यन्तमितरे त्रयो वर्णाः पश्चादनुयन्ति। माश ६,४,४,१३।

२२. तस्माद् ब्राह्मणो नैव गायेन्न नृत्येन्माग्लागृधः स्यात्। गो १, २, २१।

२३. तस्माद् ब्राह्मणो मुखेन वीर्यं करोति मुखतो हि सृष्टः। तां ६, १, ६।

२४. तस्माद् ब्राह्मणो राजन्यस्याज्येयो ऽ मार्यो ऽ दण्डयो ऽ घात्यः। जै २, १९६।

२५. तस्माद् ब्राह्मणो वसन्त ऽ आदधीत ब्रह्म हि वसन्तः (ऋतुः)। माश २, १, ३, ५।

२६. तस्य ब्राह्मणस्यानग्निकस्य नैव दैवं दद्यान्न पित्र्यं न चास्य स्वाध्यायाशिषो न यज्ञ आशिषः स्वर्गङ्गमा भवन्ति। गो १, २, २३।

२७. दैव्यो वै वर्णो ब्राह्मणः। तै १, २, ६, ७।

२८. द्विनामा ब्राह्मणोऽर्धुकः। तैसं ६, ३, १, ३ (तु. काठ २६, १; ४०, ४; काठसंक १३९ : ६; १४२ : ५)।

२९. न त्वेवान्यत्कुशलाद् ब्राह्मणं ब्रूयात्। ऐआ ३, १, ३; शांआ ७, ९।

३०. न ह वा अपुरोहितस्य राज्ञो देवा अन्नमदन्ति तस्माद्राजा यक्ष्यमाणो ब्राह्मणं पुरो दधीत। ऐ ८,२४।

३१. पञ्च वै ब्राह्मणस्य देवता अग्निः सोमः सविता बृहस्पतिः सरस्वती, तस्माद् ब्राह्मणमन्ये मनुष्या उपधावन्त्येतस्य हि भूयिष्ठा देवताः। मै ४,५,८।

३२. पयो ब्राह्मणस्य तेजो वै ब्राह्मणस्तेजः पयः। तैसं ६,२,५,३।

३३. पयो ब्राह्मणस्य व्रतम्। तैआ २,८,१,८।

३४. प्रतिलोमं वै तद्यद् ब्राह्मणः क्षत्रियमुपेयात्। माश १४,५,१,१५।

३५. ब्रह्मणैव क्षत्रमन्वारम्भयति, तस्माद् ब्राह्मणो मुख्यः। तैसं २, ६, २, ५।

३६ ब्रह्ममुखा वै प्रजापतिः प्रजा असृजत······तस्माद् ब्राह्मणो मुख्यः। तैसं ५, २, ७, १।

३७. ब्राह्मण एकहोता स यज्ञः। तैआ ३,७,१।

३८. ब्राह्मणं पात्रेण मीमांसेत तद् व्रतम्। काठ २७,२।

३९. ब्राह्मणं मनुष्यम् (प्रजापतिः शीर्षत एव मुखतोऽसृजत)। जै १,६८।

४०. ब्राह्मणश्च राजन्यश्च प्रजानां भूयिष्ठभाजौ। काठ २९,१०; क ४६,३।

४१. ब्राह्मणस्याग्निष्टुत्। जै २,१४।

४२. ब्राह्मणः सर्वेणात्मना क्षत्रियमभ्येति । जै १,२८६ ।
४३. ब्राह्मणः सुरां न पिबति पाप्मना नेत्संसृज्या इति । काठ १२,१२ ।
४४. ब्राह्मणाः सपर्येण्याः (सारघाः [जै.]) । काठ ८,१३; जै २,३९६ ।
४५. ब्राह्मणा ह वै विप्राः । जै ३,८४ ।
४६. ब्राह्मणा ह वै हंसाः सत्तृपलाः । जै ३,१७४ ।
४७. ब्राह्मणेन भेषजं न कार्यम् । तैसं ६,४,९,२ ।
४८. ब्राह्मणेन वाचम् [वाचः [काठ ३५, १५] (अन्वाभवत्)] । काठ ३५,१५; ४३,४ ।
४९. ब्राह्मणेषु ह पशवो ऽभविष्यन् । माश ४,४,१,१८ ।
५०. ब्राह्मणो जायमान एव लोकी जायते । जै १,२४४ ।
५१. ब्राह्मणो नक्षत्र ऽसोमो देवता । मै २,१३,२० ।
५२. ब्राह्मणो मनुष्याणाम् (मुखम्) । मै १,६,९; तां ६,१,६ ।
५३. ब्राह्मणो राजन्यवानत्यन्यं ब्राह्मणं'''राजन्यो ब्राह्मणवानत्यन्य ऽ राजन्यम् । तैसं ५,१,१०,३ ।
५४. ब्राह्मणो वै प्रजानामुपद्रष्टा । काठ ९, १६; तै २, ३,१,३; ५ ।
५५. ब्राह्मणो व्रतभृत् । तैसं १, ६, ७, २; मै १, ४, ५; काठ ३१, १५ ।
५६. ब्राह्मणो ऽस्य ( पुरुषस्य ) मुखमासीत् । काठसंक १०१ : ४; तैआ ३, १२, ५ ।
५७. ब्राह्मणो हि रक्षसामपहन्ता । माश १, १, ४, ६; २, १; ८; ३, ४; १३ ।
५८. मैत्रावरुणो हि ब्राह्मणो देवतया । मै २, ३, १ ।
५९. यज्ञ उवाच ब्राह्मणस्यैव तृप्तिमनु तृप्येयमिति । माश १, ७,३, २८ ।
६०. यदा वै शूद्रं श्रद्धा विन्दति ब्राह्मणं वाव स तर्हीच्छति । सो ऽस्मै ( ब्राह्मणाय ) ददाति । जै १, २६६ ।
६१. यद्वैर्य ऽसोमो वै सः, ततो ब्राह्मणमसृजत, तस्माद् ब्राह्मणः सर्व एव ब्रह्माभि धीरः । मै २, ४, २ ।
६२. यद्ब्राह्मण ( ब्राह्मणनक्षत्रम् ) एव रोहिणी तस्मादेव । तै २, ७, ९, ४ ।
६३. यद् ब्राह्मणश्चाब्राह्मणश्च प्रश्नमेयातां ब्राह्मणायाधि ब्रूयात्''' तस्माद् ब्राह्मणो न परोच्यः । तैसं २, ५, ११, ९ ।
६४. या (वाक्) पशुषु तस्या यदत्यरिच्यत तां ब्राह्मणे न्यदधुस्तस्माद् ब्राह्मण उभे वाचौ वदति दैवीं च मानुषीं च । काठ १४, ५ ।
६५. यो ऽपगुरातै शतेन यातयाद् यो निहनत् सहस्रेण यातयाद्यो लोहितं करवद् यावतः प्रस्कद्य पा ऽसून्संगृह्णात्, तावतः संवत्सरान् पितृलोकं न प्रजानादिति तस्माद् ब्राह्मणाय नापगुरेत् न निहन्याच्च लोहितं कुर्यादेतावता हैनसा भवति । तैसं २, ६, १०, २ ।
६६. यो वै ब्राह्मणानामनूचानतमः स एषां वीर्यवत्तमः । माश ४, ६, ६, ५ ।
६७. यो वै राजा ब्राह्मणादबलीयानमित्रेभ्यो वै स बलीयान् भवति । माश ५, ४,४, १५ ।
६८. वसन्तो वै ब्राह्मणस्यर्तुः । मै २,१,४; काठ ८,१; १०, २; तै १, १,२,६; माश १३,४,१,३ ।
६९. विच्छिन्नो वा एतस्य सोमपीथो यो ब्राह्मणः सन्त्रा तृतीयात्पुरुषात् सोमं न पिबतीन्द्राग्नी-एव स्वेन भागधेयेनोपधावति । तैसं २, १,५, ५-६ ।
७०. विश्वे ह्येतद्देवा जोषयन्ते यद् ब्राह्मणाः । तैसं ३, १, १, ४ ।

७१. स ( प्रजापतिः ) मुखतस्त्रिवृतं निरमिमीत, तमग्निर्देवता ऽन्वसृज्यत गायत्री छन्दो रथन्तरं साम ब्राह्मणो मनुष्याणामजः पशूनां तस्मात् ते मुख्या मुखतो ह्यसृज्यन्त। तैसं ७, १, १, ४।

७२. स यदि सोमं ब्राह्मणानां स भक्षो ब्राह्मणांस्तेन भक्षेण जिन्विष्यसि ब्राह्मणकल्पस्ते प्रजायामाजनिष्यत आदाय्यापाय्यावसायी यथाकामप्रयाप्यो यदा वै क्षत्रियाय पापं भवति ब्राह्मणकल्पोऽस्य प्रजायामाजायत ईश्वरो हाऽस्माद् द्वितीयो वा तृतीयो वा ब्राह्मणतामभ्युपैतोः स ब्रह्मबन्धवे न जिज्यूषितः। ऐ ७, २९।

७३. सर्वस्यैष न वेद यो ब्राह्मणः सन्नश्वमेधस्य न वेद सो ऽब्राह्मणः। माश १३, ४, २, १७।

७४. स ( ब्राह्मणः ) सोमं पिबति। तैसं २, ३, ३, ३।

७५ सामवेदो ब्राह्मणानां प्रसूतिः। तै ३, १२, ९, २।

७६. सा वै वाक् सृष्टा चतुर्धा व्यभवत्, ... ततो या वागत्यरिच्यत तां ब्राह्मणे न्यदधुस्तस्माद् ब्राह्मण उभयीं वाचं वदति यश्च वेद यश्च न। मै १, ११, ५।

७७. सूर्यो वै सायं ब्राह्मणं प्रविशति। काठसंक ११ : ५ (तु. जै १,७)।

७८. सोमराजानो ब्राह्मणाः। तै १,७,४,२; ६,७।

७९. सोमो वै ब्राह्मणः ( + ब्राह्मणस्य स्वा देवता [काठ.] )। काठ ११, ५; तां २३, १६, ५।

८०. सोमोऽस्माकं ब्राह्मणानां राजा। मै ४, ४, ३; काठ १५, ७।

८१. सौम्यो वै ब्राह्मणो देवतया ( + गायत्रछन्दाः [मै १, ९, ५] )। मै १, ९, ५; २,१, ४; ३, ९, १; (तु. काठ ३७, २; तै २, ७, ३, १)॥ [°ण- अग्नि- २१२; २८०; ४३९; अग्नीषोम- २०; अग्नीषोमीय- ८; अङ्गिरस्- ३३; अतिथि- ५; अन्वाहार्य- २; असुर- ६५; आग्नेय- १८; १९; २१; आग्नेयी- ६; आहुति- ४; उपद्रष्टृ- २; ऋत- २१; कवि- ४; क्षत्रिय- ७; १६; १७; १९; २०; २३; गायत्र- २७;२९; गायत्रच्छन्दस्- ३; गायत्रीछन्दस्- ९२; चतुर्होतृ- ४; त्रिवृत्- २०; दीक्षित- ९; दुर्वर्ण-१; देव-४६;१७५;२०४; देवता- ३२; ३९; देवयजन- ७; दैवी- ५; नक्षत्र- २३; पशु- १०९; बार्हद्गिर- १; बार्हस्पत्य- ५; १०; बृहत्- ४४; ब्रह्मन्- २२; ७१; ७९; ८७; ८८; १०४; १०५; ब्राह्मणस्पत्य- २ द्र.]।

**ब्राह्मण-ता-** क्षत्रिय- २६; ब्राह्मण- ७२ द्र.।

**ब्राह्मण-यज्ञ-** तस्मादेष ब्राह्मणयज्ञ एव यत्सौत्रामणी। माश १२,९,१,१।

**ब्राह्मणाच्छंसिन्-**

१. ऐन्द्राबार्हस्पत्यं ब्राह्मणाच्छंसिनः ( स्तोत्रम् )। काठ ३४,१६।

२. ऐन्द्रो वै ब्राह्मणाच्छंसी, ऐन्द्र ऋषभः। जै २,२०३।

३. वसिष्ठाद्ब्राह्मणाच्छंसी ( न प्रच्यवते )। गो २,३,२३।

४. वैरूपं ब्राह्मणाच्छंसिनः। कौ २५,११।

५. सप्तदशं ब्राह्मणाच्छंसिनः। जै २,२२३॥ [°सिन्- आत्मन्- ३१; ऋषभ- २;८; ऐन्द्र- ३३; ऐन्द्राबार्हस्पत्य- ३; त्रिणव- ७; त्रिष्टुभ्- ४५; त्रैष्टुभ- १४; पक्ष- ३; ४ द्र.]।

ब्राह्मणी- आदित्य- ३५; दिव्- ९३ द्र. ।

ब्राह्मणीभूय- य उ वै कश्च यजते ब्राह्मणीभूयेवैव यजते । माश १३,४,१,३ ।

ब्राह्मणस्पत्य, त्या- ब्रह्मणस्पति- द्र. ।

# भ

भक्ष-

१. भक्ष आगतः ( सोमः ) । तैसं ४,४,९,२ ।

२. भक्षो भक्ष्यमाणः । काठ ३४,१६ ॥ [°क्ष- प्राण- १८२ द्र ] ।

भग-

१. तस्य (भगस्य) चक्षुः परापतत्तस्मादाहुरन्धो वै भग इति । गो २,१,२ (तु. माश १,७,४,६) ।

२. तस्याक्षिणी (भगस्य ) निर्जघान तस्मादाहुरन्धो भग इति । कौ ६,१३ ।

३. भगः पण्यमानः ( सोमः ) । काठ ३४,१४ ।

४. भगश्च मे द्रविणं च मे (यज्ञेन कल्पेताम् ) । तैसं ४,७,३,१ ।

५. भगस्येव भुजि ऽ हुवे । काठ ४०,१४ ।

६. भगाय कुषीतकः । काठ ४७,३ ।

७. यज्ञो भगः । माश ६,३,१,१९ ।

८. ये ह वै रा रुद्रस्य स्वसाऽम्बिका ( शरदृतुः ) नाम, सा ह वै भगस्य ईष्टे, तस्माद् हापि कुमार्यः परीयुर्भगस्य भजामहाऽइति । माश २,६, २, १३ ॥ [ग- अंश-; क्रतु- ४; दिव्- १३४; फल्गुनी- ६; ७; ९ द्र.] ।

भगिन्- फल्गुनी- ९ द्र. ।

भङ्ग- यज्ञो वै गोभिर्भङ्गः । जै १,९० ।

भद्र-

१. अन्नं वै भद्रम् । तै १,३,३,६ ।

२. आशिषमेवास्मा (यजमानाय) एतेन (भद्रेण साम्ना) आशास्ते । तां १३, १२, ७ ।

३. एको बहूनां भद्रो भवति । तैसं ६, ५, १, ४ ।

४. एतेन वै (भद्रेण साम्ना) गोतमो जेमानं महिमानमगच्छत् । तस्माद्ये च पराञ्चो गोतमाद्ये चार्वाञ्चस्त उभये गोतम ऋषयो ब्रुवते । तां १३,१२,८ ।

५. गोतमस्य भद्रं ( साम ) भवति । तां १३,१२,६ ।

६. नमस्ते भद्राय यत्ते पुच्छं या ते प्रतिष्ठा । ऐआ ५,१,२ ।

७. भद्रं च मे श्रेयश्च मे (यज्ञेन कल्पेताम्) । तैसं ४,७,३,१ ।

८. भद्रमेभ्यो ऽभूदिति कल्याणमेवैतन्मानुष्यै वाचो वदति । माश ४,६,९,१९ ।

९. भद्रै पुरुषस्य वित्तं तत् भद्रं गृहा भद्रं प्रजा भद्रं पशवो भद्रम् । जै १,८८ ।

१०. श्रीर्वै भद्रम् । जै ३,१७२ ॥ [°द्र- एकविंश- ३०; पृथिवी- १३; प्रजा- ५३ द्र.] ।

**भद्रा-** भद्रा (प्रजापतेस्तनूविशेषः) तत्सोमः । ऐ ५,२५; कौ २७,५ ।

**भय-**

१. प्रत्यासाभ्यां भयम् । काठ ५३,९ ।

२. भय ऽ शितीमक्षयाम् ( शितीमभ्याम् [तैसं.]) । तैसं ५,७,१९,१; काठ ५३,९ ।

३. भयं प्रचलाभ्याम् । काठ ५३, ३ ।

**भरणी-** भरणीर्नक्षत्र ऽ यमो देवता । मै २,१३,२० ।

**भरत-**

१. अष्टासप्ततिं भरतो दौष्यन्तिर्यमुनामनु । गङ्गायां वृत्रघ्ने ऽबध्नात्पञ्चपञ्चाशतं हयान् । ऐ ८,२३; माश १३,५,४,११ ।

२. एष वो भरता राजा । तैसं १,८,१०,२ ।

३. ततो वै वसिष्ठपुरोहिता भरताः प्राजायन्त । तां १५,५,२४ ।

४. तस्मादु भरतो दौष्यन्तिः समन्तं सर्वतः पृथिवीं जयन्परीयायाश्वैरु च मेध्यैरीजे । ऐ ८,२३ ।

५. तस्माद्धाप्येतर्हि भरताः सत्वनां वित्तिं प्रयन्ति तुरीये हैव संग्रहीतारो वदन्ते । ऐ २,२५ ।

६. तस्माद्धेदं भरतानां पशवः सायंगोष्ठाः सन्तो मध्यन्दिने संगविनीमायंति । ऐ ३,१८ ।

७. शकुन्तला नाडपित्यप्सरा भरतं दधे परःसहस्रानिन्द्रायाश्वान्मेध्यान्य आहरद्विजित्य पृथिवी ऽ सर्वामिति । माश १३,५,४,१३ ।

८. शतानीकः समन्तासु मेध्य ऽ सात्राजितो हयम् । आदत्त यज्ञं काशीनां भरतः सत्वतामिव । माश १३, ५, ४, २१ ॥ [°त- अग्नि- २१३; ४४४; कृतवेश-; प्रजापति- १४८; प्राण- १५९ द्र.] ।

**भरत-वत्-** अग्नि- ४३१ द्र. ।

**भारत,ती-** इमा ह वै प्रजा भारतीः । अथो यदेवैनेन (अग्निना) अग्र ईजिरे । अथो यदैवेष देवेभ्यो हव्यं वहति तस्माद् भारतः । जै ३, ६२ ॥ [°त- अग्नि- २८०; ४३१; °ती- आदित्य- १४६;२६६; परिवाप- २ द्र.] ।

**भारती-वत्-** परिवाप- ४ द्र. ।

**भरद्वाज-**

१. एष उ एव बिभ्रद्वाजः प्रजा वै वाजस्ता एष विभर्ति, यद् बिभर्ति तस्माद् भरद्वाजस्तस्माद् भरद्वाज इत्याचक्षत एतम् ( प्राणम् ) एव सन्तम् । ऐआ २,२,२ ।

२. भरद्वाजस्य वाजभृद्वाजकर्मीयं वा ( साम ) । आ १,१०८ ।

३. भरद्वाजो बृहदाचक्रे अग्नेः । ऐआ ३,१,२ ।

४. भरद्वाजो वै त्रिभिरायुर्भिर्ब्रह्मचर्यमुवास । त ऽह जीर्ण ऽ स्थविर ऽ शयानमिन्द्र उपव्रज्योवाच । ···अनन्ता वै वेदाः । तै ३,१०,११,३ ।

५. भरद्वाजो ह वा ऋषीणामनूचानतमो दीर्घजीवितमस्तपस्वितम आस । ऐआ १,२,२ ।

६. मनो वै भरद्वाज ऋषिरन्नं वाजो यो वै मनो बिभर्ति सो ऽन्नं वाजं भरति तस्मान्मनो भरद्वाज ऋषिः । माश ८, १, १, ९ ॥ [°ज- आदित्य- ७; दक्षिणतस् ५; पञ्चदश- ३; बृहत्- ३५ द्र.] ।

भारद्वाज- ततो वै तस्यौजिष्ठा बलिष्ठा प्रजाऽभवदपि ह स तेन पथा पुरा कुरवो न यान्ति, येन भारद्वाजा ययुः······तस्माद् भारद्वाज एवानुज्ञातः सभायां दण्ड्यं प्रहरेत् । जै २,२१७ ।

भर्गस्-

१. इन्द्रियं वै वीर्यं भर्गः । काश ७,३,३,१ ।
२. तच्छ्रीर्वै भर्गः । जै ३,२५८ ।
३. भर्गो देवस्य कवयो ऽन्नमाहुः । गो १,१,३२ ।
४. वसन्त (वसव) एव भर्गः । गो १,५,१५[२] ।
५. वागेव ( वाग्वै [माश.]) भर्गः । गो १,५,१५; माश १२,३,४,१० ।
६. वीर्यं वै भर्ग एष विष्णुर्यज्ञः । माश ५,४,५,१ ।
७. होतैव भर्गः । गो १,५,१५ ॥ [°र्गस्- अग्नि- ११०; २१४; आदित्य- १६३; ऋग्वेद- ३; गायत्री- ५८; चन्द्रमस्- ५६; त्रिवृत्- २४; पृथिवी- १७; १४४; प्राची- २० द्र.] ।

भर्तृ- स हैष ( सूर्यः ) भर्ता । माश ४,६,७,२१ ।

भव-

१. पर्जन्यो वै भवः पर्जन्याद्धीद ्ँ सर्वं भवति । माश ६,१,३,१५ ।
२. भवं यक्ना (प्रीणामि) । तैसं १,४,३६,१; तैआ ३,२१,१ ।
३. यद्भव आपस्तेन । कौ ६,२ ॥ [°व- अग्नि- २३८; अग्निरूप- द्र.] ।

भवत्- भूतं पूर्वरूपं भविष्यदुत्तररूपं भवत् संहितेति कालसन्धिः । शांआ ७,२१ ।

भविष्यत्-

१. भविष्यत्प्रति चाहरत् । ( प्रतिहर्ताऽऽसीत् ) । तै ३,१२,९,३ ।
२. भविष्यद्धि भूयो भूतात् । काठ १९,१०; क ३०, ८; तै ५,१,९,२ ।
३. भूताय नमो भविष्यते नम इत्यृक्सामभ्यामेव नमस्करोति । काठसंक १२२ : ६-७ ।
४. यदङ्गारेषु (प्रवृणक्ति) भविष्यत्तेन (अवरुन्द्धे) । कं ३०,८ ॥ [°ष्यत्- दिव्- ३०; बृहत्- ३७; भवत्- द्र. ] ।

भव्य- परिमितं वै भूतमपरिमितं भव्यम् । ऐ ४,६ ।

भसद्- अदित्या भसत् । मै ३,१५,७ ।

भस्मन्-

१. भस्मनाऽभिवासयति तस्मान्मा ्ँ सेनास्थि छन्नम् । तैसं २,६,३,४ ।
२. वैश्वानरं भस्मना ( अवरुन्धे ) । तैसं ५,७,१६,१, मै ३,१५,७; काठ ५३,६ । [°स्मन्- गर्दभ- १३ द्र. ] ।

भागदुघ-

१. पौष्णश्चरुर्भागदुघस्य गृहे (+श्यामो दक्षिणा [मै २ ६,५]) । मै २,६,५; ४,३,८ ।
२. भागदुघस्य गृहान्परेत्य पौष्णं चरुं निर्वपति । माश ५,३,१,९ ।

भानु- भानुना भात्यन्तः । तैसं ४,२,१,२ ॥ [°नु- अर्चिस्- १ द्र. ] ।

भृगु-

१. तस्य ( प्रजापतेः ) यद् रेतसः प्रथममुददीप्यत तदसावादित्यो ऽभवद्यद् द्वितीयमासीत्तद्-भृगुरभवत्तं वरुणो न्यगृह्णीत तस्मात्स भृगुर्वारुणिः । ऐ ३,३४ ।

२. ताभ्यः श्रान्ताभ्यस्तप्ताभ्यः संतप्ताभ्यो ( अद्भ्यः ) यद्रेत आसीत्तदभृज्यत यदभृज्यत तस्माद् भृगुः समभवत् तद् भृगोर्भृगुत्वम् । गो १,१,३ ।

३. वरुणस्य वा अभिषिच्यमानस्येन्द्रियꣳ वीर्यमपाक्रामत्, तत् त्रेधाभवद्, भृगुस्तृतीयमभवत्, श्रायन्तीयं तृतीयꣳसरस्वतीं तृतीयं प्राविशत् । मै ४,३,९ ।

४. स एतत् ( आशु ) भृगुस्सामापश्यत् । जै ३, २११ ॥ [°गु- अङ्गिरस्- १८; २९; ३०; अप्- २३४; चन्द्रमस्- ९१; दशपेय- २ द्र. ] ।

भार्गव- भार्गवो ( दशपेये ) होता भवति । तैसं १,८,१८,१ ।

भृग्वङ्गिरस्-

१. अथाङ्गारैरभ्यूहति । भृगूणामङ्गिरसां तपसा तप्यध्वमित्येतद्वै तेजिष्ठं तेजो यद्भृग्वङ्गिरसाम् । माश १,२,१,१३ ।

२. अष्टाविंशतिर्भृग्वङ्गिरसो देवाः । जै १,३१ ।

३. उष्णिगहं स ( यजमानः ) छन्दसां जयति भृग्वङ्गिरसो देवान् देवानाम् । जै १,३१ ।

४. एतद्वै भूयिष्ठं ब्रह्म यद् भृग्वंगिरसः । गो १,३,४ ।

भृङ्ग- श्रोत्राय भृङ्गाः । मै ३,१४,८ ।

भृज्जन-

१. भृज्जनाद् ( भ्राष्ट्राद् दक्षिणाग्निम् ) आहरेदन्नकामस्यैषा वा अस्य ( अग्नेः ) अन्नादी तनूः । काठ ८,१२ ।

२. भृज्जने वा अन्नं क्रियते । क ३०,८ ।

भेकुरि- भेकुरयो नामेति भाकुरयो ह नामैते भाꣳहि नक्षत्राणि कुर्वन्ति । माश ९,४,१,९ ।

भेषज-

१. तद्वै भेषजं त्रेधा विन्यदधुरग्नौ तृतीयं ब्राह्मणे तृतीयमप्सु तृतीयं तद्य एवꣳ विद्वानग्नेरन्ते ब्राह्मणाय प्रोच्याप्सु भेषजं करोति समर्धुकꣳ ह भवति । मै ४,६,२ ।

२. मानवी ऋचौ धाय्ये कुर्याद्यद्वै किं च मनुरवदत्तद् भेषजं भेषजमेवास्मै ( दुश्चर्मणे ) करोति । तैसं २,२,१०,२-३ ।

३. सोमारुद्रा युवमेतान्यस्मे विश्वा तनूषु भेषजानि धत्तमवस्यतं मुञ्चतं यन्नो अस्ति तनूषु बद्धं कृतमेनो अस्मत् । तैसं १,८,२२,५; मै ४,११,२; काठ ११,१२ ॥ [°ज- अग्नि- ४५५; अप्- ४४; ४९; १०५; ११४; अमृत- ४३ द्र. ] ।

भेषज्या- अग्नि- ४५८ द्र. ।

भौज्य- ऊर्जो वा एषोऽन्नाद्याद्वनस्पतिरजायत यदुदुम्बरो भौज्यं वा एतद्वनस्पतीनाम् । ऐ ७,३२ । [°ज्य- दक्षिण [दिश्-]- ५; १६ द्र. ] ।

भ्रज- अग्निर्वै भ्रजश्छन्दः। माश ८,५,२,५।

भ्रष्टृ- भ्रष्ट्राद्दक्षिणाग्निमाहरेयुरेष वा भ्रष्ट्रीनामन्नादः। मै १,६,११।

भ्राज्- भ्राजं गच्छेति सोमो वै भ्राट्। माश ३,२,४,९।

भ्राज-> भ्राजाभ्राज- चक्षुस्- ३२ द्र.।

भ्राजस्-

१. अग्नेर्भ्राजसा ( त्वाभिषिञ्चामि )। माश ५,४,२,२।

२. ततो ऽस्मिन् ( सूर्ये ) एतद् भ्राज आस। माश ४,५,४,५।

३. मयि सूर्यो भ्राजो दधातु। तैआ ४,४२,२॥ [°जस्- अप्- २४२ द्र.]।

भ्राजस्वत्-

१. सूर्य भ्राजस्कार भ्राजस्वा९ स्त्व९ वर्चस्वान्देवेष्वेधि भ्राजस्वन्तं मा९ वर्चस्वन्तं मनुष्येषु कुरु। मै ४,७,३।

२. सूर्याय त्वा भ्राजस्वते एष ते योनिः। तैसं १,४,३१,१; मै १,३,३३; काठ ४,११; क ३,९।

भ्रातृव्य-

१. त्वयायं वृत्रं वधेदिति त्वयायं द्विषन्तं भ्रातृव्यं वधेदित्येवैतदाह। माश ५,३,५,२८।

२. द्वितीये हि लोके भ्रातृव्यः। काठ १४,९; २०,६।

३. द्वौ (+वाव [मै.]; वै [क.]) पुरुषस्य भ्रातृव्यौ यं (+च [काठ., क.]) द्वेष्टि यश्चैनं द्वेष्टि। मै ४,१, ४; १०; काठ ३१, ३; क ४७,३।

४. पश्चेव हि भ्रातृव्यः। क ३९,५।

५. पाप्मा शस्तिर्भ्रातृव्यः। काठ १९,२।

६. पौर्णमासीमेव यजेत भ्रातृव्यवान्नामावास्याया९, हत्वा भ्रातृव्यं नाऽऽप्यायति। तैसं २, ५,४,२।

७. भ्रातृव्यो धिष्ण्यः। काठ २१,४।

८. भ्रातृव्यो वै रक्षः (वृत्रः [मै.])। मै २,२,११; काठ २४,४; २५,९; क ३७, ५; ४०, २।

९. यद् द्वे इव ब्रूयाद् भ्रातृव्यमस्मै (यजमानाय) जनयेत्। तैसं २, ५, ९, ६।

१०. यद्वै यज्ञस्यातिरिच्यते भ्रातृव्यं तेन वर्धयति। क ४७,१।

११. यां (दक्षिणाम्) याचमानाय ददाति, भ्रातृव्यं तया जिन्वति। मै ४,८,३।

१२. यो वा अभिचरति योऽभिदासति यः पापं कामयते स वै दुच्छुनः। 'आरे बाधस्व दुच्छुनाम्' (ऋ ९, ६६,१९) इत्यारादेवैतेन द्विषन्तं पाप्मानं भ्रातृव्यमवाञ्चमपबाधते। जै १, ९३॥ [°व्य- अघशंस- २; अध्वर्युपात्र-; अभिमाति- १; अरुः- ३; उपभृत्- ७; औदुम्बर- २; क्षत्र- ७०; क्षुध्- १; छन्दस्- ५७; जन- १; पाप्मन्-१२ द्र.]।

भ्रातृव्यदेवत्या- भ्रातृव्यदेवत्या वै पुरोऽनुवाक्या। तैसं १, ६, १०,४॥ [°त्या- उपभृत्- ८ द्र.]।

भ्रातृव्य-भाजिन्- भ्रातृव्यभाजिनमिव ह्येषा यद् रात्रिः। जै १,१९८; २२९।

**भ्रातृव्य-लोक-** क्षत्रं चो ह वै विशं चानु भ्रातृव्यलोकः । जायां चो ह वै प्रजां चानु भ्रातृव्य-लोकः । जै २,१२३ ।

**भ्रातृव्य-वत्-**

१. यो भ्रातृव्यवान्त्स्यात् स पौर्णमास ९ स ९ स्थाप्यैतामिष्टिमनु निर्वपेत्, पौर्णमासेनैव वज्रं भ्रातृव्याय प्रहृत्याऽऽग्नावैष्णवेन देवताश्च यज्ञं च भ्रातृव्यस्य वृङ्क्ते । तैसं २,५,४,२ ।

२. यो भ्रातृव्यवान् स्यात् स स्पर्धमानो वैष्णावरुणीं वशामालभेतैन्द्रमुक्षाणं वरुणेनैव भ्रातृव्यं ग्राहयित्वा विष्णुना यज्ञेन प्रणुदत ऐन्द्रेणैवास्येन्द्रियं वृङ्क्ते । तैसं २,४,१, ४-५ ।

३. स यो भ्रातृव्यवान्त्स्यात्स सौत्रामण्या यजेत । माश १२, ७, ३, ४ ॥ [°वत्- २चित्रा- ६; पञ्चहोतृ- ८; प्रउगचित्- १; भ्रातृव्य- ६ द्र. ]।

**भ्रातृव्य-हन्-** तद् (सुज्ञानम् ) उ भ्रातृव्यहा (साम) । जै ३,३१ ।

**भ्रातृव्याऽऽयतन-** भ्रातृव्यायतनं धिष्ण्याः । मै ३,३,२ ।

**भ्राष्ट्राग्नि-** असुर्य- ५ द्र. ।

**भ्रू-** पन्थां भ्रूभ्याम् । मै ३,१५,१ ।

**भ्रूण-हत्या-** अमृत्युर्वा अन्यो भ्रूणहत्याया इत्याहुः । भ्रूणहत्या वाव मृत्युरिति । तै ३,९, १५,२ ।

# म

**मख-**

१. एष वै मखो य एष ( सूर्यः ) तपति । माश १४,१,३,५ ।

२. तस्य ( मखस्य ) धन्वार्त्निरुदत्य शिरोऽछिनत्, स सम्राडभवत् । मै ४,५,९ ।

३. मख इत्येतद्यज्ञनामधेयं छिद्रप्रतिषेधसामर्थ्यात्, छिद्रं खमित्युक्तं तस्य मेति प्रतिषेधः । मा यज्ञं छिद्रं करिष्यतीति । गो २,२,५ ।

४. यज्ञो वै मखः ( +तस्यैतच्छिरो यदुखा [तैसं ५,१,६,३] ) । तैसं ३,२,४,१; मै ३,१,७; ४, १,९; काठ ३१,७; क ३०,४; तां ७,५,६; तै ३,२,८,३; माश ६,५,२,१; तैआ ५,२,७;३,२।

५. स उ एव मखः स विष्णुः । माश १४,१,१,१३ ।

**मघ->°वत्-** यज्ञेन मघवान् । तैसं ४,४,८,१ ॥ [°वत्- इन्द्र- १८४; ३७९ द्र.]।

**मघा-** पितरो देवता, मघा नक्षत्रम् । काठ ३९,१३ ॥ [°घा- पितृ- ७७; ८२ द्र. ]।

**मज्जन्-**

१. पृष्टीनां मज्जा नाद्यः । मै ३,१०,३ ।

२. मज्जानः स्वररूपम् । ऐआ ३,२,१; शांआ ८,१ ।

३. मज्जानो ज्योतिस्तद्धि यजुष्मतीनां ९ रूपम् । माश १०,२,६,१८ ।

४. मज्जा यजुः । माश ८,१,४,५ ।

५. यानूष्मणोऽधिदैवतमवोचाम मज्जानस्ते ऽध्यात्मम् । ऐआ ३,२,२ ।

६. षष्टिश्च ह वै त्रीणि च शतानि पुरुषस्य मज्जानः । माश १०,५,४,१२ ।

७. हारिद्र इव हि मज्जा । माश १३,४,४,८ ॥ [°ज्जन्- आज्य- ८; प्राण- ४२ द्र.] ।

मट्वी- यन्मट्वियमकरोत् तस्मान्मट्वीः। जै ३,१११।

मणि- यथा मणौ मणिसूत्रं परिदृश्येतैवम्। जै ३,७४।

मण्डलेष्टका- इमे वै लोका मण्डलेष्टकाः। तैसं ५,३,९,२।

मण्डूक-

१. एतद्वै यत्रैतं प्राणा ऋषयोऽग्रेऽग्निꣳ समस्कुर्वंस्तमद्भिरवोक्षंस्ता आपः समस्कन्दंस्ते मण्डूका अभवन्। माश ९,१,२,२१।

२. एष ( मण्डूकः ) वै पशूनामनुपजीवनीयो न वा एष ग्राम्येषु पशुषु हितो नाऽऽरण्येषु तमेव शुचाऽर्पयति। तैसं ५,४,४,३।

३. तस्मान्मण्डूकः पशूनामनुपजीवनीयतमो यातयामा हि सः। माश ९, १, २, २४। [°क- पर्जन्य- १० द्र.]।

मतस्न- मतस्नयोरवद्यति, रूपस्यैव तेनावद्यति। मै ३,१०,३॥ [°स्न- चक्रवाक- १ द्र.]।

मति-

१. उष्ट्रो घृणावान् वाध्रीनसस्ते मत्यै। मै ३,१४,२०।

२. प्रजा वै मतयः। तैआ ५,६,८।

३. वाग्वै मतिर्वाचा हीदꣳ सर्वं मनुते। माश ८,१,२,७।

मत्स्य-

१. मत्स्यं धियाधिया घ्नन्ति। तैसं २,६,६,१।

२. मत्स्यमभिगन्ता हन्ति शस्तो हि सः ( पङ्केन )। काठ २५,७।

३. मत्स्यः सांमदो राजेत्याह तस्योदकेचरा विशस्तऽइम आसतऽ इति मत्स्याश्च मत्स्यहनश्चोपसमेता भवन्ति तानुपदिशतीतिहासो वेदः सो ऽयमिति। माश १३, ४, ३, १२। [°त्स्य- अप्- १७ द्र.]।

मद्->मद्वती- तद् यदेता मद्वतीर्भवन्ति रसमेवास्मिन् एतद् दधाति। जै ३, २८।

मद्-

१. यो वाऽ ऋचि मदो यः सामन् रसो वै सः। माश ४,३,२,५।

२. रसो वै मदः। जै १,२१५; २१६; ३, २८;१५९; २१२; २९५।

मदन्ती-

१. तेजो वै मदन्तीः। मै ३,७,१०।

२. मदन्तीभिः प्रोक्षति। तेज एवास्मिन् दधाति। तैआ ५,४,१।

३. मदन्तीभिरुपसृजति। तेज एवास्मिन्दधाति। तैआ ५,२,११-१२।

मदिन्तम- मदिन्तम इति स्वादिष्ठ इत्येवैतदाह। माश ३,९,३,२५।

मद्गु- मित्राय मद्गून् (आलभते)। मै ३,१४,३।

मद्र- उदीची- द्र.।

मधु-

१. अथ यन्मधोरपां वा एष ओषधीनां रसः ( तन राष्ट्रे रसं दधाति )। मै ४,४,१।
२. अन्तो वै रसानां मधु। जै १,२२४; ३,१६४।
३. आत्मा वै पुरुषस्य मधु, यन्मध्वग्नौ जुहोत्यात्मानमेव तद्यजमानोऽग्नौ प्रदधाति। तैसं २, ३,२,९।
४. एतद्वै देवानां मधु यद् घृतम्। मै ३, ९, ३।
५. एतद्वै प्रत्यक्षात्सोमरूपं यन्मधु। माश १२,८,२,१५।
६. एतावेव ( मधुश्च माधवश्च ) वासन्तिकौ (मासौ) स यद्वसन्तऽओषधयो जायन्ते वनस्पतयः पच्यन्ते तेनो हैतौ मधुश्च माधवश्च। माश ४, ३, १, १४।
७. गायत्रमयनं भवति ब्रह्मवर्चसकामस्य स्वर्णिधनं मधुनाऽमुष्मिंल्लोक उपतिष्ठते। तां १३, ४,१०।
८. घृतं च वै मधु च प्रजापतिरासीत् मै ४, १, १२।
९. ज्योतिर्भा असि वनस्पतीनामोषधीनां रसः (मधु)। तैआ ४,१२,१।
१०. तस्मादुत स्त्रियो मधु नाऽश्नन्ति पुत्राणामिदं व्रतं चराम इति वदन्तीः। जैउ १, १७, ३,२।
११. परमं वा एतदन्नाद्यं यन्मधु। तां १३, ११, १७।
१२. परमो वै मधुनि रसः। जै २, ४०५।
१३. प्रजा वै मधु। जै १,८८; २,१४४।
१४. मधु मनिष्ये, मधु जनिष्ये, मधु वक्ष्यामि, मधु वदिष्यामि, मधुमतीं देवेभ्यो वाचमुद्यासं शुश्रूषेण्यां मनुष्येभ्यः। तैसं ३, ३, २, २।
१५. मधुपा संयौत्यपां वा एष ओषधीनां रसो यन्मधु। अद्भ्यः एवौषधीभ्यो वर्षत्यथो अद्भ्य एवौषधीभ्यो वृष्टिं निनयति। तैसं २, ४,९, ३।
१६. मध्वमुष्य (स्वर्गस्य लोकस्य रूपम्)। माश ७, ५, १, ३।
१७. महत्यै वा एतद्देवतायै रूपं। यन्मधु। तै ३, ८, १४, २।
१८. मिथुनं वै मधु प्रजा मधु। ऐआ १, ३,४।
१९. यज्ञो ह वै मधु सारघम्। माश ३,४,३,१४।
२०. यतो मध्वासीत् ततः (प्रजापतिः) प्रजा असृजत। तस्मान्मधोः प्रजननमिवास्ति। तस्मान्मधुना न प्रचरन्ति। यातयाम हि तत्। मै ४,१,१२; काठ ३१, ९; क ४७, ९।
२१. यन्मध्वारण्यं तेन (अन्नाद्यमवरुन्द्धे)। मै ३, २, ५।
२२. रसो वा एष ओषधिवनस्पतिषु यन्मधु। ऐ ८, २० (तु. माश ६,४,३,२; ७,५,१, ४)।
२३. सर्वं वाऽ इदं मधु यदिदं किं च। माश ३, ७, १, ११; १४, १, ३, १३।
२४. सर्वं वै मधु। सर्वे वै कामा मधु। ऐआ १, १, ३।
२५. सौम्यं वै मधु। काठ ११,२॥ [°धु- अन्न- ३३; आज्य- १५; आयुस्- ३२; ओषधि- २; २७; काम- २२; घृत- ९;११; देव- १७६; पशु- १७४; प्राण- १८२; ब्रह्मचारिन्- ६ द्र.]।

**मधु-कृत्-** या एताः पूर्वपक्षापरपक्षयो रात्रयः । ता मधुकृतः । तै ३, १०, १०, १ ।

**मधु-क्षीर-घृत-** वहन्त्यस्मै सर्वतो मधुक्षीरघृतं दधि । छु ९७ : १९ ।

**मधुच्छन्दस्** ( ऋषि- )- मधु ह स्म वा ऋषिभ्यो मधुच्छन्दाश्छन्दति तन्मधुच्छन्दसो मधुच्छन्दस्त्वम् । ऐआ १,१,३ ।

**मधु-पर्क-** यन्मधुपर्कं ददात्येष ह्यारण्यानां रसः । कौ ४,१२ ।

**मधु-मत्->मधुमती-** अपो देवा मधुमतीरगृभ्णन्नित्यपो देवा रसवतीरगृह्णन्नित्येवैतदाह । माश ५, ३, ४,३ ॥ [°ती- ओषधि- २९ द्र.] ।

**मधु-माधूची-; मधु-माध्वी-** अत्र प्रावीर्मधुमाध्वीभ्यां मधुमाधूचीभ्यामित्याह । वासन्तिकावेवास्मा ऋतू कल्पयति । तैआ ५,६,५ ।

**मधु-मिश्र-** दधि- १२ द्र. ।

**मधु-वृष-** यान्यहानि ( पूर्वपक्षापरपक्षयोः ) ते मधुवृषाः । तै ३, १०, १०, १ ।

**मधु-श्चुत्-** पशवो मधुश्चुतः । जै १,२२४ ।

**मधुश्चुन्निधन-** घृतश्चुन्निधन- १-४ द्र. ।

**मधु-श्च्युत्->मधुश्च्युन्निधन** (सामन्- )- मधुश्च्युन्निधनं भवति परमस्यान्नाद्यस्यावरुद्ध्यै, परमं वा एतदन्नाद्यं यन्मधु । तां १३, ११,१७-१८ ॥ [°न- घृतश्च्युन्निधन- २ द्र.] ।

**मध्य-**

१. त्रिष्टुप् छन्द इन्द्रो देवता मध्यम् । माश १०,३,२,५ ।

२. प्रजा वै पशवो मध्यम् । माश १,६,१,१७ ।

३. श्रीर्वै राष्ट्रस्य मध्यम् । तै ३,९,७,१; माश १३, २,९,४ ॥ [°ध्य- नाभि- ११ द्र.] ।

**मध्यन्दिन-**

१. आत्मा (+ यजमानस्य [ऐ.]) मध्यन्दिनः । ऐ ३, १८; कौ २५, १२; २८, ९; जै ३, ६९; १४४; २९०; २९१ ।

२. तर्हि ( मध्यन्दिने ) वा एषो ( आदित्यः ) ऽस्य लोकस्य नेदिष्ठो भवति । काश १, २, ३, ८ (तु. माश २,२,३, ९ ) ।

३. मध्यन्दिनाद् वै देवा यज्ञायज्ञीयेनोर्ध्वा स्वर्गं लोकमुदक्रामन् । जै ३, २९० ।

४. मध्यन्दिने मनुष्याः (वृत्रायाशनमभिहरन्ति) । माश १,६,३,१२ ।

५. मध्यन्दिनो (मध्यन्दिने [जै.]) मनुष्याणाम् । जै ३,२७१; माश २,४,२,८ ।

६. मरुत्वद् वै मध्यन्दिनस्य रूपम् । जै ३,१३; २३ ।

७. मरुद्भ्यः सान्तपनेभ्यो मध्यन्दिने चरुम् । मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायं चरुम् (निर्वपति) । तैसं १, ८, ४, १ ।

८. यद्दधिघर्मेण मध्यन्दिने (चरन्ति) तेन तत् पशुमद् वीर्यावत् । काठ २९, ५; क ४५, ६ । [°न- अप्- २१५; आदित्य- २३३; ऐन्द्री- ७ द्र.] ।

**मध्यमा** ( चिति- )- अन्तरिक्ष- २६; ५४; उदर- ११ द्र. ।

**मनस्-**

१. अथ यत्कृष्णं तदपां रूपमन्नस्य मनसो यजुषः । जैउ १, ८, १, ९ ।

२. अथ यन्मनो यजुष्टत् । जैउ १, ८, १, ९ ।

३. अथ हास्य ( माण्डूकेयस्य ) पुत्र आह ज्येष्ठो मनः पूर्वरूपं वागुत्तररूपं मनसा वा अग्रे संकल्पयत्यथ वाचा व्याहरति, ···प्राणस्त्वेव संहितेति । ऐआ ३, १,१ ।

४. अथो द्वे एव धुरौ मनश्चैव वाक् च । मनसो हि वाक् प्रजायते । सा मनोनेत्रा वाग्भवति । तन्मनो वाचमभिप्रवहति । वागु पुनर्मन एवाभिप्रवहति । स यो मनसश्च वाचश्च स्वरो जायते स इन्द्रः । जै १, ३२० ।

५. अनन्तं वै मनः । माश १४, ६, १, ११ ।

६. अन्यत्रमना अभूवं नादर्शमन्यत्रमना अभूवं नाश्रौषमिति मनसा ह्येव पश्यति मनसा शृणोति । माश १४, ४, ३, ८ ।

७. अपरिमिततरमिव हि मनः परिमिततरेव हि वाक् । माश १,४,४,७ ।

८. अपूर्वा ( प्रजापतेस्तनूविशेषः ) तन्मनः । ऐ ५, २५, कौ २७, ५ ।

९. अलग्ल ( म ) मिव ह वै वाग्वदेद्यन्मनो न स्यात्तस्मादाह धृता मनसेति । माश ३, २, ४, ११ ।

१०. असंप्रेषितं वा इदं मनः । ऐ ६, २ ।

११. इयं ( पृथिवी ) वै मनः । तैसं १, ६, ८, १ ।

१२. कस्मिन्नु मनः प्रतिष्ठितं भवतीति हृदय ऽइति । माश १४, ६, ९, २५ ।

१३. कामः संकल्पो विचिकित्सा श्रद्धा ऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव । माश १४, ४, ३, ९ ।

१४. गोतमस्य मनार्ये ( सामनी ) मनोऽपक्रान्तः कुर्वीत । जै १, १४९ ।

१५. तदिदं मनो वाचमस्कन्दत् । स हिरण्मयो गर्भो ऽधीयतामृतः । एष वै मृत्युर्यदग्निः ···सो ऽयं गर्भो ऽजायत । जै ३, ३३४ ।

१६. तन्मन इत्युपासीत मानवान् भवति । तैआ ९, १०, ३; तैउ ३, १०, ३ ।

१७. तस्य ( मनोमयस्यात्मनः ) यजुरेव शिरः । ऋग्दक्षिणः पक्षः । सामोत्तरः पक्षः । आदेश आत्मा । अथर्वाङ्गिरसः पुच्छं प्रतिष्ठा । तैआ ८, ३, १; तैउ २,३,१ ।

१८. तस्यै ( वाग्रूपाया गोः ) मन एव वत्सः । मनसा वै वाचं पृक्तां दुहे । वत्सेन वै मातरं पृक्तां दुहे । तद् वा इदं मनः पूर्वम् । यत् पश्चा वागन्वेति तस्मात् वत्सं पूर्वं यन्तं पश्चा मातान्वेति । जै १, १९ ।

१९. तस्यैषा ( मनसः ) कुल्या यद्वाक् । जैउ १, १८,३,३ ।

२०. न वै वातात् किञ्चनाशीयोऽस्ति न मनसः किञ्चनाशीयोऽस्ति तस्मादाह वातो वा मनो वेति । माश ५, १, ४, ८ ।

२१. न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम् । हृदा मनीषा मनसाभिक्लृप्तो य एतद्विदुरमृतास्ते भवन्ति । काठसंक १०४ : ९-१० ।

२२. न ह्ययुक्तेन मनसा किंचन सम्प्रति शक्नोति कर्तुम् । माश ६, ३, १, १४ ।

२३. नेव हि सन्मनो नेवासत् । माश १०, ५, ३, २ ।

२४. नो ( मनसः ) ऋार्द्दीयः किंचनास्ति। अथो सर्वे प्राणा मनोऽभिसंपन्नाः। जै १,३१६।
२५. पुनर्नः पितरो मनो ददातु दैव्यो जनः। तैसं १,८,५,२; मै १,१०,३; काठ ९,६।
२६. पूर्णया स्रुचा मनसा प्रजापतये जुहोति। काठ ८, ३।
२७. मन इवापूर्वं''भूयासम्। ऐआ ५,१,१।
२८. मन एव मद्रावतीयमहः। जै २,५८।
२९. मन एव यजुः ( यजूंषि [माश.] )। जै २,२९; माश ४,६,७,५ (तु. जै २,६५)।
३०. मन एव रेतस्यया समीरयति। जै १,२५३।
३१. मन एव वत्सः (सर्वम् [गो.])। गो १,५,१५; माश ११,३,१,१।
३२. मन एव सविता। गो १, १, ३३; जैउ ४, १२, १, १५ ( तु. मै ४, ७, १; माश ६, ३,१, १३;१५)।
३३. मनश्चन्द्रमाः। जैउ ३,१,२,६।
३४. मनसा वा अग्रे कीर्तयति, तद् वाचा वदति। शांआ ७,२।
३५. मनसा वाऽ इद ँ सर्वमाप्तम्। माश १,७,४,२२; ५,४,३,९।
३६. मनसा सुहार्दसं च दुर्हार्दसं च विजानाति। जै १,२६९।
३७. मनसा हि वाग्धृता (वाचं दाधार [मै.] )। तैसं ६,१,७,२; मै ३,७,५; काठ २४,३।
३८. मनसा ह्यनाप्तमाप्यते। तैसं २,५,११,४।
३९. मनसि ह्ययमात्मा प्रतिष्ठितः। माश ६,७,१,२१।
४०. मनसो वशे सर्वमिदं बभूव। तै ३,१२,३,३।
४१. मनः सङ्ग्रहीता (सन्ततिः [जै.]; सावित्रम् [कौ.])। कौ १६, ४; जै १,१४; ऐआ २,३,८।
४२. मनो ऽन्तरिक्षलोकः। माश १४,४,३,११।
४३. मनो भूत्वा ( प्रजापतिः ) सर्वममनुत। जै १,३१४।
४४. मनो मेधामग्निं प्रयुजं स्वाहा। तैसं ४, १,९,१; मै २, ७,७।
४५. मनो यजमानस्य ( रूपम् )। माश १२,८,२,४।
४६. मनो यजुर्वेदः (वायुः [काठ.] )। काठ १३,१; माश १४,४,३,१२।
४७. मनो वा एतद्यदपरिमितम्। कौ २६,३।
४८. मनो वाव भुवनेषु जविष्ठम्। जै १,२०।
४९. मनो वाव साम्नश्श्रीः। जैउ १,१२,५,२।
५०. मनो वै पूर्वमथ वाक्। जै १,१२८; ३२९;३,१२ (तु. जै २,९)।
५१. मनो वै मनोता (यजुः [माश.])। मै ३,१०,२; माश ७,३,१,४०।
५२. मनो वै यज्ञस्य मैत्रावरुणः। ऐ २,५;२६;२८।
५३. मनो वै ( हि [जै १,३१६] ) रेतस्यां। जै १,२६१; २६९; ३१६।
५४. मनो वै वाचः क्षेपीयः। काठ १९,३;१०; क ३०,१;८।
५५. मनो वै समुद्रः (+ छन्दः [माश ८,५,२,४])। माश ७,५,२,५२।
५६. मनो वै सरस्वान्। माश ७,५,१,३१; ११,२,४,९।

५७. मनो वै स्तोत्रियो वागनुरूपः । जै ३,२१ ।
५८. मनो ह वाऽ अस्य सविता । माश ४,४,१,७ ।
५९. मनो ह वायुर्भूत्वा दक्षिणतस्तस्थौ । माश ८,१,१,७ ।
६०. मनो हविः (होता [तै.]) । तै २,१,५,९; तैआ ३,६,१ ।
६१. मनो हार्दि ँ यच्छ । मै १,२,१८ ।
६२. मनो हि पूर्वं वाचो यद्धि मनसाभिगच्छति तद्वाचा वदति । तां ११,१,३ ।
६३. मनो हि प्रजापतिः । सा १,१,१ ।
६४. मनो हृदये ( प्रतिष्ठितम् ) । तै ३,१०,८,६; शांआ ११,६ ।
६५. मनो होच्चक्राम, यथा बाला अमनसः प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेणैवमिति । शांआ ९,६ ।
६६. यज्जाग्रतो दूरमुदेति दैवं तदु सुप्तस्य तथैवैति दूरंगमं ज्योतिषां ज्योतिरेकं तन्मे मनः शिवसंकल्पमस्तु । काठसंक १३४:७; ८ ।
६७. यत्तप इति मनस्तत् । जै ३,३६० ।
६८. यत्पुरुषो मनसा ऽभिगच्छति तद्वाचा वदति (+तत्कर्मणा करोति [तैआ.]) । तैसं ५,१,३,३; तैआ १,२३, १ (तु. तैसं ६, १, ७, ४; मै ३, ७, ५; जै २, २९२; ३,३०७) ।
६९. यत्प्रज्ञानमुत चेतो धृतिश्च यज्ज्योतिरन्तरमृतं प्रजासु । यस्मान्न ऋते किंचन कर्म क्रियते तन्मे मनः शिवसंकल्पमस्तु । काठसंक १३४ : ५;६ ।
७०. यदेतद्धृदयं मनश्चैतत्संज्ञानमाज्ञानं विज्ञानं प्रज्ञानं मेधा दृष्टिर्धृतिर्मतिर्मनीषा जूतिः स्मृतिः संकल्पः क्रतुरसुः कामो वश इति सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानि भवन्ति । ऐआ २, ६; ऐउ ५, २ ।
७१. यद्ध्येव मनसा कामयते तद् वाचा वदति । जै ३, ३४९ ।
७२. *यन्मनः स इन्द्रः । गो २,४,११ ।*
७३. यस्मिन्नृचः साम यजूँषि यस्मिन्प्रतिष्ठिता रथनाभाविवाराः । यस्मिँश्चित्तँ सर्वमोतं प्रजानां तन्मे मनः शिवसंकल्पमस्तु । काठसंक १३४ : ९; १० ।
७४. युक्तेन हि मनसा यज्ञस्तायते । मै ३, १, १ ।
७५. येन ( मनसा ) इदं भूतं भुवनं भविष्यत् परिगृहीतममृतेन सर्वम् । काठसंक १३४ : १ ।
७६. वाक् च वै मनश्च देवानां मिथुनम् । ऐ ५, २३ ।
७७. वाक् च वै मनश्च हविर्धाने । कौ ९, ३ ।
७८. वागिति मनः । जैउ ४, ११, १, ११ ।
७९. वाग्वै मनसो ह्रसीयसी । माश १, ४, ४, ७ ।
८०. वाग्वै समुद्रो मनः समुद्रस्य चक्षः ( चक्षुः [तां.]) । जै १, ७०; तां ६, ४, ७; तै २,१,२,६; २,९, १ ।
८१. वाचो मनो देवता मनसः पशवः । जैउ १, १८, ४, १४ ।
८२. वृषा हि मनः । माश १, ४, ४, ३ ।
८३. स एष ह्रदः कामानां पूर्णो यन्मनः । जैउ १, १८, ३, ३ ।

८४. स ( प्रजापतिः ) मन एव हिङ्कारमकरोत् । जैउ १, ३, ४, ५ ।

८५. सुषारथिरश्वानिव यन्मनुष्यान्नेनीयतेऽभीशुभिर्वाजिन इव । हृत्प्रतिष्ठं यदजरं यविष्ठं तन्मे मनः शिवसंकल्पमस्तु । काठसंक १३४ : ११ ।

८६. सो ऽब्रवीत् ( वाचम् ) प्रजापतिः । दूतीरेव त्वं मनसो ऽसि यद्धि मनसा ध्यायति तद्वाचा वदतीति । तैसं २, ५, ११, ४-५ ।

८७. स्तेनं मनो ऽनृतवादिनी वाक् । मै ४, ५, २ ।

८८. स्वाहा मनः प्रजापतये स्वाहा । काठ ४३, ५ ।

८९. हृदयस्य रेतो मनो मनसो रेतो वाक् । ऐआ २, १, ३ ।

९०. हृदयस्यावद्यति, मनस एव तेनावद्यति । मै ३, १०, ३ ।

९१. हृदयान्मनो मनसश्चन्द्रमाः । ऐआ २,४,१; ऐउ १,१,४ ॥ [°नस्- अंशु- ७; अग्नि-३८४; ५१९; अध्वर्यु- ३३; अनिरुक्त- १; अनुष्टुभ्- ३८; अप्- २००; २०२; अपान- ४१; अप्सरा-; आकूति-; आयतन- २; उपभृत्- ९; उपवक्तृ- २; ऋक्साम- ७; ८; ऋच्- ४८; ४९; ऋत- २०; काम- १५; गायत्र- ३८; ग्रावस्तोत्रीया-; चन्द्रमस्- ४४-४६; ८३; चित्त- ४; तपस्- ३१; त्विषि- २; दक्षिण,णा- ६; ३६; दर्शपूर्णमास- १५; देव- १७९; २१०; देववाहन-; नाराशंस- ५; नितान- २; परिपति- २; पाथ्य-; पितृ- ८३; पृथिवी- ६०; प्रगाथ- ३; प्रजापति- ४६; ५२; ११५; १२०; १५१; २०६; २१४; २१६;२१७; २२२; प्राजापत्य- २०; प्राण- १५; ६०; २३७-२४१; २६५; प्रायण- २; बृहत्- ३; ३८; बृहती- ३०; ब्रह्मन्- ३८; ११९-१२२; भरद्वाज- ६ द्र.] ।

**मनोजवस्**- दक्षिणतस् १९-२१ द्र. ।

**मनोजात**- प्राण- २२ द्र. ।

**मनोयुज्**- देव- ४७ द्र. ।

**मनार्य**- मनस्- १४ द्र. ।

**मनु-**

१. अथैतन्मनुर्वप्त्रे मिथुनमपश्यत् । स श्मश्रूण्यग्रेऽवपत । अथोपपक्षौ । अथ केशान् । ततो वै स प्राजायत । प्रजया पशुभिः । यस्यैवं वपन्ति । प्र प्रजया पशुभिर्मिथुनैर्जायते । तै १,५,६,३ ।

२. आपो वा इदं निरमृजन् स मनुरेवोदशिष्यत, स एतामिष्टिमपश्यत्, तामाहरत्, तयायजत तयाप्रथत तयेमं भूमानमगच्छत् । काठ ११,२ ।

३. आयुर्वै मनुः । कौ २६,१७ ।

४. इयं ( पृथिवी ) वै मनोरश्वा भूरिपुत्रा । तैआ ५,४,८ (तु. तैआ ४,५,४) ।

५. एतया ( सर्वपृष्ठेष्ट्या ) मनुं मनुष्याः ( अयाजयन् ) । तैसं ७,५,१५,३ ।

६. तत्पत्नी ( मनोः पत्नी ) यजुर्वदन्ती प्रत्यपद्यत, तस्या द्यां वागातिष्ठत्, तस्या वदन्त्या यावन्तोऽसुरा उपाशृण्व९स्ते पराभवन् । काठ ३०,१ (तु. मै ४,८,१) ।

७. तस्य ( मनोः ) अवनेनिजानस्य मत्स्यः पाणीऽआपेदे । स हास्मै वाचमुवाद । बिभृहि मा

पारयिष्यामि त्वेति कस्मान्मा पारयिष्यसीत्यौघ इमाः सर्वाः प्रजा निर्वोढा ततस्त्वा पारयितास्मीति । माश १,८,१,१–२ ।

८. प्रातर्मध्यन्दिने सायं तन्मनोर्व्रतमासीत्, पाकयज्ञस्य रूपं पुष्ट्यै । तैसं ६,२,५,४ ।

९, मनवे तल्पम् । तैआ ३,१०,३ ।

१०. मनु ९ श्रद्धादेवं त्रिष्टावरुत्री असुरब्रह्मौ जायया व्यर्धयत इति । काठ ३०,१ ।

११. मनुः पुष्टिकाम आधत्त, स इमान् पोषानपुष्यत् । मै १,७,२; काठ ८,१५; क ८, ३ ।

१२. मनुर्भव जनया दैव्यं जनम् । तैसं ३,४,२,२; काठ १३,१२ ।

१३. मनुर्यज्ञनीः । तैसं ३,३,२,१ ।

१४. मनुर्वै यत्किंचावदत्तद् भेषजमेवावदत् ( भेषजमासीत् [काठ.] ) । मै २,१,५; काठ ११,५ ।

१५. मनुर्वैवस्वतो राजेत्याह । तस्य मनुष्या विशस्त इम ऽआसतऽइत्यश्रोत्रिया गृहमेधिनऽउपसमेता भवन्ति तानुपदिशति । माश १३, ४,३,३ ।

१६. मनुर्ह वाऽ अग्रे यज्ञेनेजे तदनुकृत्येमाः प्रजा यजन्ते । माश १,५,१,७ ।

१७. मनुर्ह्येतमग्रऽ ऐन्द्ध तस्मादाह मन्विद्ध इति । माश १,४,१,५ ।

१८. मनुश्च वा इदं मनायी च मिथुनेन प्राजनयताम् । मै १,८,६ ।

१९. मनुश्च वै यमश्च वैवस्वतावास्ताम् । जै २,१६९ ।

२०. मनोर्ऋचो भवन्ति । मनुर्वै यत्किंचावदत्तद्भेषजत्वायैव । मै २,१,५ (तु. तां २३,१६,७) ।

२१, मनोर्यज्ञऽ इत्यु वाऽ आहुः । माश १,५,१,७ ।

२२. मनोर्वै कपालान्यासन् । तैर्यावतो यावतोऽसुरानभ्युपादधात्ते पराभवन् । क ४६,४ ।

२३. मनोर्वै दश जाया आसन् दशपुत्रा नवपुत्राऽष्टपुत्रा सप्तपुत्रा षट्पुत्रा पञ्चपुत्रा चतुष्पुत्रा त्रिपुत्रा द्विपुत्रैकपुत्रा । मै १,५,८ ।

२४. मनोष्ट्वा ग्रामण्यो व्रतेनादधे । मै १,६,१ ।

२५. मन्विद्ध इत्याह मनुर्ह्येतम् ( अग्निम् ) उत्तरो देवेभ्य ऐन्ध । तैसं २,५,९,१ ।

२६. य एवं मनुष्याणां मनुष्यत्वं वेद । मनस्व्येव भवति । नैनं मनुः जहाति । तै २,३,८,३ ।

२७. यथेन्द्रो देवानां यथा मनुर्मनुष्याणामेवं भवति य एवं विद्वानेतयेष्ट्या यजते । तैसं ७,५,१५,३ ।

२८. यस्य ( विवस्वत आदित्यस्य ) मनुश्च वैवस्वतो यमश्च मनुरेवास्मिंल्लोके यमोऽमुष्मिन् एते देवयानान् पथो गोपायन्ति । मै १, ६, १२ ।

२९. ये विद्वा ९ सस्ते मनवः । माश ८, ६, ३, १८ ।

३०. सो ऽ कामयत मनुरस्मै मां लोकाय राज्याय देवास्सुवीरन्मनुष्मै यमनिति । जै २, १६९ ।
[°नु– असुरघ्नी–; इडा– २८; गन्धर्व– १९; ग्रामणी– ५; पञ्चविंश– १२; पृथिवी– २७; प्रजा– १२; १०२; प्रजापति– ८८; १५२; भेषज– २ द्र.] ।

मनु-जात– ये देवा मनुजाताः··· ( ते नोऽवन्तु ) । मै १,२,३ ॥ [°त– देव– ४७; १६० द्र.] ।

मनु-राज– मनुराजाय मर्कटः । मै ३, १४,११ ।

मनु-वृत– अग्निर्होता मनुवृतो ऽयं ( अग्निः ) हि सर्वतो मनुष्यैर्वृतः । ऐ २, ३४ ।

**मनावी**- ता इमा मनाव्याः प्रजाः (मनुरसृजत्)। काठ ३०, १; क ४६, ४।

**मानव** (सामन्-)- एतेन वै मनुः प्रजातिं भूमानमगच्छत् प्रजायते बहुर्भवति मानवेन तुष्टवानः। तां १३,३,१५।

**मानवी**- स (मनुः) एतं यज्ञम् (मनुस्तोमम्) अपश्यत्। तमाहरत्। तेनायजत। ततो वै स बहुः प्रजया पशुभिः प्रजायत। ता इमा मानवीः प्रजा असृजत। जै २, १०८। [°वी- ऐडी-; प्रजा- २७;७३;७४ द्र.]।

**मनुष्य-**

१. अच्छन्ना इव हि प्रत्यक्षं निरुक्ता इव मनुष्याः। जै १, २७४।
२. अथ मनुष्या अदुह्र दारुपात्रेणान्नम्। मै ४, २, १।
३. अथ यदेव वासयेत। तेन मनुष्येभ्य ऋणं जायते तद्ध्येभ्य एतत्करोति यदेनान्वासयते यदेभ्यो ऽशनं ददाति। माश १, ७, २, ५।
४. अथ योत्तरा (आहुतिः) ते मनुष्याः। माश २, ३, २, १६।
५. अथैनं (प्रजापतिम्) मनुष्याः प्रावृता उपस्थं कृत्वोपासीदंस्तान् (प्रजापतिः) अब्रवीत् सायम्प्रातर्वो ऽशनं प्रजा वो मृत्युर्वो ऽग्निर्वो ज्योतिरिति। माश २, ४, २, ३।
६. अनृतसंहिता वै मनुष्या इति। ऐ १, ६।
७. अपरिमित ँ हि मनुष्या उपाञ्जन्ति। मै ३, ८, ७।
८. अमुतः प्रदानं (प्रदानात् [जै.]) मनुष्या उपजीवन्ति। तैसं ३, २, ९, ७; जै १, ११६।
९. असृग्रमिति मनुष्यान् (प्रजापतिरसृजत)। जै १,९४; तां ६,९,१५; १२,१,४।
१०. आज्ञां मनुष्याणाम् (आदित्य आदत्त)। जै २, २६ (तु. माश ११,८, ३,९)।
११. इमं (अग्निम्) हि मनुष्या इन्धते। ऐ २, ३४।
१२. एतावन्तो वै मनुष्या एतावन्ति मनुष्यजातानि[1]। जै २, १०२।
१३. एष वै मनुष्यस्य स्वर्गो लोको यदस्मिंल्लोके वसीयान् भवति। काठ ८, १।
१४. तस्य (विवस्वत आदित्यस्य) वा इयं प्रजा यन्मनुष्याः। तैसं ६, ५, ६, २।
१५. दत्तेति न आत्थेति (मनुष्याः प्रजापतिमब्रुवन्)। माश १४, ८, २, ३।
१६. द्विपदामभ्यक्रन्दत्। ततो मनुष्यानसृजत मृत्युमुखान्। जै ३, ३८१।
१७. नैव देवा (प्रजापतेराज्ञाम्) अतिक्रामन्ति। न पितरो न पशवो मनुष्या एवैकेऽतिक्रामन्ति। तस्माद्यो मनुष्याणां मेद्यत्यशुभे मेद्यति विहूर्च्छति हि न ह्ययनाय चन भवत्यनृत ँ हि कृत्वा मेद्यति तस्मादु सायम्प्रातराश्येव स्यात् स यो हैवं विद्वान् सायम्प्रातराशी भवति सर्व ँ हैवायुरेति। माश २,४,२,६।
१८. परममेतन्मनुष्याणामन्नाद्यं यत्सुरा। काठ १४,६।
१९. पुरोवात ँ वै वात ँ वर्षम् (वृष्टिः) अनु प्रतितिष्ठति, वर्षमन्वोषधय ओषधीरनु पशवः, पशूननु मनुष्याः। एता वै प्रतिष्ठास्ता यजमानोऽवरुन्द्धे। मै ३,१,५।

---

१. ब्राह्मणः, राजन्यः, वैश्यः, शूद्र इति।

२०. बहिःप्राणो वै मनुष्यः। तैसं ६,१,१,४।

२१. मध्यमिव मनुष्याणाम्। काश १,६,१,११।

२२. मनुष्या ( गाम् ) अदुह्र दारुपात्रेणान्नं च प्रजां च। मै ४,२,१३।

२३. मनुष्या ( अस्य भूलोकस्य ) यजुष्मत्यः ( इष्टकाः )। माश १०,५,४,१।

२४. मनुष्या वै विश्वे देवाः। काठ १९,१२; २१,७।

२५. मनुष्याः सर्वां वाचं वदन्ति। तैसं २,१,२,७।

२६. यत्प्राश्नाति तन्मनुष्याणाम्। काठ ६,५।

२७. यत् सदसि भक्षयन्ति तन् मनुष्येषु जुहोति। माश ३,६,२,२५।

२८. यत्सौम्या जुहोति, मनुष्येभ्यस्तेनाह्नियते। मै ३,९,१।

२९. रयिरिति मनुष्याः ( उपासते )। माश १०,५,२,२०।

३०. राज्ञा मनुष्या विधृताः। तैसं २,६,२,२।

३१. वर्षं मनुष्याः ( उपजीवन्ति )। मै १,६,५।

३२. विश्वे हीदं देवाः स्मो यन्मनुष्याः। मै ३,२,२; ३,८।

३३. व्यानेन मनुष्यान् (इडा दाधार )। तैसं १,७,२,१।

३४. श्रव्ये! इति मनुष्याः ( गामाह्वयन् ), सा वा एनानशुश्रूपत। मै ४,२,१।

३५. स (प्रजापतिः) देवान्त्सृष्ट्वामनस्यतेव, तेन मनुष्यानसृजत, तन्मनुष्याणां मनुष्यत्वम्। स यस्तन्मनुष्याणां मनुष्यत्वं वेद मनस्वान् ह भवति, नैनं मनो जहात्युत यद्तीव वदत्यति वा चरति, तिष्ठन्तेऽस्य मनुष्या मनुपे। मै ४,२,१।

३६. सद्यो मनुष्याः ( क्षुधमघ्नन् )…तस्मादहरहर्मनुष्या अशनमिच्छन्ते। तैसं २,५,६,६।

३७. स (प्रजापतिः) पितॄन्त्सृष्ट्वा मनस्यैत्। तदनु मनुष्यानसृजत। तन्मनुष्याणां मनुष्यत्वम्। य एवं मनुष्याणां मनुष्यत्वं वेद। मनस्व्येव भवति। नैनं मनुः जहाति। तै २,३,८,३।

३८. सरस्वती मनुष्येभ्यः (पातु)। तैसं ३,२,४,४।

३९. सरस्वत्या मनुष्याः ( अन्वाभूयन्त )। काठ ३५,१५।

४०. हन्तकारं मनुष्याः ( उपजीवन्ति )। माश १४,८,९,१।

४१. हृदे त्वेत्याह, मनुष्येभ्य एवैतेन करोति। तैसं ६,४,३,१॥ [°ष्य- अग्नि- ९५; २८५; ३०४; ३०७; ४१२; ६०१; अनृत- ३०; ३३; अन्न- १४१; १५७; अशन- ६; अश्व- २६; ईडेन्य- १; उदीची- ११; ओपधि- ३०; गार्हपत्य- २२; गो- १; चक्षुस्- ५७; जन्तु-; देव- २३; ३१; ४२; ७९; ८८; ९९; १०८; १५४; २०१; २१०; २११; २६५; २७५; धर्म- ६; निवीत-; निष्पक्व-; पशु- १४६; २५०; प्रतीची- १७; प्रत्यञ्च्- ५; प्रस्ताव- ७; प्रातर् ३; फाण्ट-; ब्राह्मण- ५२; मध्यन्दिन- ५; मनु- ५; १५; २६; २७ द्र.]

मनुष्यछन्दस-

१. मनुष्यच्छन्दसं वा एका च तिस्रश्च। काठ २१,११।

२. मनुष्यछन्दसं चतस्रश्चाष्टौ च। तैसं ५,४,८,६।

**मनुष्य-यज्ञ-** यद् ब्राह्मणेभ्योऽन्नं ददाति तन्मनुष्ययज्ञः सन्तिष्ठते। तैआ २,१०,१।

**मनुष्ययशस-** अपान- २४ द्र.।

**मनुष्य-रथ-** काम- ९ द्र. ।

**मनुष्य-लोक-**

१. एकविंशतिर्वै मनुष्यलोकाः । मै ४,२,१० ।
२. देवलोकमेव पूर्वया ( इष्ट्या ) ऽभिजयति मनुष्यलोकमुत्तरया । तैसं २,५,५,३-४ ।
३. मनुष्यलोकं सुराग्रहैः ( अभिजयति ) । काठ १४,६ ।
४. यं कामयेत मनुष्यलोक ऋध्नुयादिति, तस्य मध्यसंमितां मिनुयात् । मै ४,७,९ ।
५. यद् बहिर्वेदि ( मिनुयात् ) मनुष्यलोकम् ( अभिजयेत् ) । तैसं ६,६,४,१ ।
६. यामनार्षेयाय शुश्रूवुषे ( दक्षिणां ददाति ), मनुष्यलोके तया ( ऋध्नोति ) । मै ४,८,३ ।
७. सा या मनुष्ययोनिः, मनुष्यलोक एव सः । जै १,१७ ।
८. सोऽयं मनुष्यलोकः पुत्रेणैव जय्यो नान्येन कर्मणा । माश १४,४,३,२४ ॥ [ °क- उदञ्च्- ९; उदीची- ९; २८ द्र.] ।

**मनुष्य-सव-** य इष्टया सूयते ( यजते [काठ] ) स मनुष्यसवः । काठ ३७,४; तै २,७,५,१ ।

**मनुष्यायुष-** देवायुष- द्र. ।

**मनोता-**

१. तिस्रो वै देवानां मनोतास्तासु हि तेषां मनांस्योतानि वाग्वै देवानां मनोता तस्यां हि तेषां मनांस्योतानि, गौर्हि देवानां मनोता तस्यां हि तेषां मनांस्योतानि, अग्निर्वै देवानां मनोता तस्मिन्हि तेषां मनांस्योतान्यग्निः सर्वा मनोता अग्नौ मनोताः संगच्छन्ते । ऐ २, १० (तु. कौ १०,६) ।
२. यन्मनोताया अन्वाह पुनरेवैनं ( मृतं पशुम् ) सम्भावयति । मै ३,१०,२ ॥ [ °ता- गो २३; मनस्- द्र. ] ।

**मन्त्र-**

१. अहे बुध्निय ! मन्त्रं मे गोपाय । यमृषयस्त्रैविदा विदुः । ऋचः सामानि यजूंषि । सा हि श्रीरमृता सताम् । तै १, २, १, २६ ।
२. अहे बुध्निय ! मन्त्रं मे गोपायेत्याह । मन्त्रमेवैतेन श्रियं स्पृणोति । तै १, १,१०,३ ।
३. गर्भो मन्त्रः । मै ४, ४, ८ ।
४. यांश्च ग्रामे यांश्चारण्ये जपन्ति मन्त्रान् नानार्थान् बहुधा जनासः··· । गो १,५,२५ ।
५. वाग्घि ( °ग्वै [माश ६, ४, १,७] ) मन्त्रः । माश १,४,४,११ ॥ [°न्त्र- ब्रह्मन्- ९० द्र.] ।

**मन्त्र-कृत्-** एष वाव पिता यो मन्त्रकृत् । तां १३, ३,२४ ॥ [°कृत्- आत्रेयी- २; ब्राह्मण- १० द्र.] ।

**मन्थ-**

१. तदेतद् द्वयमेवान्नाद्यस्य रूपं यच्चैवाश्नाति यच्च पिबति । यदश्नात्योदनस्य तद् रूपं यत् पिबति मन्थस्य तत् । जै ३, ३४६ ।

२. द्वितीयं ज्यायोऽन्नाद्यमजायत । तदभिसंपद्य व्यमथ्नत । स मन्थोऽभवत् । तन् मन्थस्य मन्थत्वम् । जै ३,३४६ ॥ [°न्थ- अग्नि- ५; पितृयज्ञ- ३ द्र.] ।

मन्थावल (जीवविशेष-)- यानि पर्णानि ते मन्थावलाः (अभवन्) । ऐ ३, २६ ।

मन्थिन् (ग्रह-)-

१. असावेव शुक्र आद्यो मन्थी । माश ४, २, १, ३ ( तु. माश ५,४,४,२१ ) ।

२. भ्रातृव्यदेवत्यो मन्थी । काठ २७, ८ ।

३. मन्थी सक्तुश्रीः । तैसं ४, ४, ९, १ ।

४. वैकङ्कतं मन्थिनः पात्रं भवति । काठ २७, ८ ।

५. शुक्रं वा अन्वत्नीः प्रजाः प्रजायन्ते, मन्थिनमाद्याः । काठ २७, ८ ॥ [°न्थिन्- आदित्य- २६; चन्द्रमस्- ३२; ३५ द्र.] ।

मन्थि-पा- देवास्त्वा मन्थिपाः प्रणयन्त्विति या आद्याः प्रजास्तासामेव योनिरेता एतमनुप्रजायन्ते । मै ४,६,३ ।

मन्थि-पात्र-

१. मन्थिपात्रं प्रयुज्यत आद्या एव तत् प्रजा अनुप्रजायन्ते । काठ २८, १०; क ४५, १ ।

२. मन्थ्यग्रान् ( ग्रहान् ) गृह्णीताभिचरन्नार्तपात्रं वा एतद्यन्मन्थिपात्रं मृत्युनैवैनं ग्राहयति । काठ ३०,३ ॥ [°न्त्र- अभि√चर् ९ द्र.] ।

√मन्द्

१. मन्दस्व धीतिभिर्हित इति दीप्यस्व धीतिभिर्हित इत्येतत् । माश ७,३,१,३३ ।

२. 'वय ९ सुमन्दिषीमहि' इति'''वय ९ स्वप्स्याम इत्येवैतदाह । माश ३, २, २, २२ ।

मन्या- चित्त- ३ द्र. ।

मन्यु-

१. पशूनां वा एष मन्युर्यद्वराहः । तै १, ७, ९, ४ ।

२. मन्यवे स्वजः । काठ ४७, ४ ।

३. मन्यावीशानम् (प्रजापतिरावेशयत्) । शांआ ११, १ ।

४. मन्युना वृत्रहा''' । तैसं ४, ४, ८, १ ।

५. मन्युना वै वीर्यं क्रियते, इन्द्रियेण जयति । मै २, २, १२; ५, ८ ।

६. वराहं क्रोधः (मन्युर्गच्छति) । गो १, २,२ ।

७. शार्दूलो वृकः पृदाकुस्ते मन्यवे । मै ३, १४,१४ ॥ [°न्यु- इन्द्र- ११०;३१९; पशु- २५१; भाम- द्र.] ।

मयन्द- यद्वाऽअनिरुक्तं तन्मयन्दम् । माश ८,२,३,११ ॥ [°न्द- क्षत्र- १४ द्र.] ।

मयस्-

१. मयोऽसि (हेऽश्व ! त्वं) । तां १, ७, १ ।

२. यद्वै शिवं तन्मयः । तै २,२,५,५ ।

मयु- किम्पुरुष- २; प्राजापत्य- २१ द्र. ।

मयूर- अश्विन्- १९ द्र. ।

मर- पृथिवी- १२९ द्र. ।

मराय- बृहत्सामन्- द्र. ।

मरीचि-

१. एता वाऽआपः स्वराजो यन्मरीचयः । माश ५,३,४,२१ ।

२. मरीचीर्विप्रुषा (प्रीणामि) । मै ३, १५, ८ ।

३. यः कपाले रसो लिप्त आसीत्ता मरीचयोऽभवन् । माश ६,१,२,२ ।

४. स ँहितो विश्वसामा सूर्यो गन्धर्वस्तस्य मरीचयोऽप्सरस: आयुव: (आयुवो नाम [मै.]) । तैसं ३,४,७, १; मै २,१२,२ ।

५. सूर्यस्य मरीचिः (पत्नी) । तैआ ३,९,२ ॥ [°चि- अन्तरिक्ष- ६८ द्र.] ।

मरीचि-प-

१. प्राणा वै देवा मरीचिपाः । काठ २७,१; क ४२, १ ।

२. रश्मयो वै देवा मरीचिपाः । मै ४,५,५ ॥ [°प- देव- १९ द्र.] ।

मरुत्-

१. अथो भूमा वै मरुतो भूमा तन्तुभिर्वासः । जै २, २०३ ।

२. अथो हेन्द्रो वृत्रं हनिष्यन् मरुत उवाच । परशुवधहस्ता मामभितः परिक्रीडत स वीतभीर्वृत्रं पाप्मानं हनानीति । जै २, २३२ ।

३. अभिधून्वतामभिघ्नतां वातवतां मरुताम् । तैआ १, १५, १ ।

४. अहुतादो वै देवानां मरुतो विट् । माश ४, ५, २, १६ ।

५. उदीरयता मरुतः समुद्रतो दिवो वृष्टि ँ वर्षयता पुरीषिणः । मै २,४,७ (तु. काठ ११,९; क ४६,७) ।

६. ओजो वै वीर्यं मरुतः । ओजो वीर्यं त्रिणवः । जै ३, ३०९ ।

७. कीनाशाः ( कृषौ कर्मकराः ) आसन्मरुतः सुदानवः । तै २, ४, ८, ७ ।

८. गणशो हि मरुतः । तां १९, १४, २ ।

९. घोरा वै मरुतः स्वतवसः । कौ ५, २; गो २, १,२० ।

१०. चत्वारिंशन्मरुतो देवाः । जै १, ३४ ।

११. त (मरुतः) एतं षड्रात्रं यज्ञमपश्यन् । तमाहरन् । तेनायजन्त । ततो वै त ओजिष्ठा बलिष्ठा वीर्यवत्तमा देवानामासन्नजयन् स्वर्गं लोकम् । जै २, २९७ ।

१२. त ( मरुतः ) एनम् ( इन्द्रम् ) अभ्यक्रीडन् । तत्क्रीडिनां क्रीडित्वम् । तै १, ६, ७, ५ ।

१३. तं ( वृत्रं हतम् ) मरुतः क्रीडयो ऽभ्यक्रीड ँस्तस्मात् क्रीडयः । मै १, १०, १६ ।

१४. त्रिर्वै सप्तसप्त मरुतः । काठ ३७, ४ ।

१५. देवा वै वृत्र ँ हतं न व्यजान ँ स्तं मरुतोऽ ध्यक्रीड ँ स्तस्मात् क्रीडयः। काठ ३६,१०।

१६. देवा वै वृत्रस्य मर्म नाऽविन्द ँ स्तं मरुतः क्षुरपविना व्ययुः। मै १, १०, १४।

१७. देवसेनानामभिभञ्जतीनां जयन्तीनां मरुतो यन्त्वग्रे। तैसं ४, ६, ४, ३।

१८. पृश्न्या वै मरुतो जाता वाचो वाऽस्या वा पृथिव्याः। काठ १०, ११।

१९. प्राणो वै मरुतः स्वापयः। ऐ ३, १६।

२०. बहवो ह वै मरुतो यांश्च विद्म यांश्च न। ते नः सर्वे प्रीता आसन्न् इति। जै २, १७७।

२१. मरुतः सदोहविर्धानाभ्याम् [°र्धानैः [मै.] (प्रीणामि)]। मै १,९,२; तैआ ३, ८, १।

२२. मरुतः सप्ताक्षरयोष्णिहमुदजय ँ श्चतुर्धा ह्येतस्याः (हि तस्याः [काठ.]) सप्त सप्ताक्षराणि। मै १, ११, १०; काठ १४, ४।

२३. मरुतः सप्ताक्षरेण (°क्षरया [मै.]) सप्तपदा ँ शक्वरीमुदजयन्। तैसं १, ७, ११, १; मै १, ११, १० (तु. काठ १४, ४)।

२४. मरुतः सार्ववश्याय (आदित्यमभ्यषिञ्चन्त)। जै २, २५।

२५. मरुतः सार्ववश्याय (वरुणमभ्यषिञ्चन्त)। जै ३, १५२; ३६८।

२६. मरुतः सृष्टां (+ वृष्टिं [क.]) नयन्ति। तैसं २, ४, १०, २; क ४६, ७।

२७. मरुता ँ शक्वरी (सप्तमी [मै ३,१५,४; काठ ५३, ११]) । मै २, ३, ७; काठ १२, ५।

२८. मरुता उदीचीम् (दिशमुदजयन्)। मै ४, १,१०।

२९. मरुतामनीकम् (°मोजः [तैसं.])। तैसं २, ४, ७, १; काठ ४६, १।

३०. 'मरुतां पृषतीर्गच्छ', इति देवलोकं गच्छेत्येवैतदाह। माश १, ८, ३, १५।

३१. मरुतो गणानां पतयः। तै ३, ११, ४, २।

३२. मरुतो (वृष्टिम्) ऽमुतश्च्यावयन्ति। मै २, ४, ८।

३३. मरुतो यं श्रायन्तीयेनैनदश्रीणंस्तच्छ्रायन्तीयस्य श्रायन्तीयत्वम्। जै २, २०१।

३४. मरुतो रश्मयः (नेष्टापोतारौ [जै.])। जै ३, ३७४; तां १४,१२, ९ (तु. जै १,१२७)।

३५. मरुतो वर्षयन्तु। तैसं ३, ५,५, २।

३६. मरुतो वै देवानामपराजितमायतनम्। तै १, ४, ६, २।

३७. मरुतो वै (हि [तै.]) देवानां भूयिष्ठाः। तां १४, १२, ९; २१, १४, ३; तै २,७,१०,१।

३८. मरुतो वै वर्षस्येशते (वृष्ट्या ईशते [मै.])। मै ४,१,१४; काठ ११, १०; माश ९,१,२, ५।

३९. मरुतो ह वै सांतपना मध्यन्दिने वृत्र ँ सन्तेपुः स संतप्तो ऽनन्नेव प्राणन्परिदीर्णः शिश्ये। माश २, ५,३, ३।

४०. मरुद्भिर्विशा··· स वृत्रमभीत्य······श्रतिष्ठित्। काठ ३६,८।

४१. मरुद्भी रुद्राः समजानताभि। तैसं २, १, ११, २।

४२. मरुद्भ्य एनोमुग्भ्यः पुरोडाश ँ सप्तकपालं (निर्वपति)। मै ३,१५,११ (तु. काठ ४५,१९)।

४३. मरुद्भ्यः क्रीडिभ्यः पुरोडाश ँ सप्तकपालं निर्वपति साकं ँ सूर्येणोद्यता। तैसं १, ८,४,२।

४४. मरुद्भ्यो नमो जगत्यै नमस्सप्तदशाय नमो वैरूपाय नमो वर्षाभ्यो नमः प्रतीच्यै दिशे नमो

ऽपानाय नम आदित्येभ्यो नमः । काठ ५१, ३ ।

४५. माध्यन्दिनेन वै सवनेनेन्द्रो वृत्रमहन् मरुद्भिर्वीर्येण । काठ २८, ३; क ४४, ३ ।

४६. यदिन्द्राय शाक्वराय ( निर्वपति ), यदेव मरुतां तेजस्तदेवावरुन्धे । तैसं २, ३, ७, ३ ।

४७. या पृषती तां पिशङ्गी, ता ९ सारङ्गी, तां कल्माषी, तां पृश्निस्ता ९ श्वेता । तन्मरुता उदाजन्त ज्योतिर्नाम रूपं पशूनाम् । मै ४, २, ४ ।

४८. विण्मरुतः । तैसं ३, ५, ७, २; ५,४, ७, ७; मै १, १०,६; १३; ४, ३,९; काठ १०, ११; ११, ४; २९,१०; ३६,७ (तु. मै ४, ४, ९; काठ ३७, ३; तै १, ८, ३, ३; २, ७, २,२) ।

४९. विशो वै मरुतो देवविशः । माश २, ५, १, १२ ( तु. जै २, १७५; ३, २०५; माश २, ५, २,६;२७; ३, ९, १, १७;४, ३, ३, ६ ) ।

५०. वीर्यं ( + वै [काठ २८, ३; क ४४, ३] ) मरुतः । जै १, ३०३ ।

५१. सप्त गणा वै मरुतः । तैसं २, २, ५,७; ११, १; ३,१, ६; तै १,६, २, ३; २,७, २,२ ।

५२. सप्त हि मरुतः । मै १, १०, ६; काठ ३७, ३ ।

५३. हेमन्तेनर्तुना देवा मरुतस्त्रिणवे ( स्तोमे ) स्तुतं बलेन शक्वरीः सहः । हविरिन्द्रे वयो दधुः । तै २,६,१९,२ ॥ [°रुत्- अग्नि- १५९; अङ्गिरस्- १२; अन्तरिक्ष- ६; अन्न- ३४; अप्- ४६;१०६;२०३; अपराजिता- १; अश्वत्थ- १०; आदित्य- ४०;११६; इन्द्र- ५१;७२;८३; १४५;१४६;१८५; १८६;३१६;३२१; ३२३; ३८९; ३९०; इन्वगा- १; उत्तरतस् ११; १३; उदीची- ३५; ऋतु- २६; ओजस्- १;११;२१;२६; क्षत्र- २६; गण-; त्रिणव- १०; दिव्- १३६; देव- १८१; २१७; देवविश्-; देवविशा-; ध्रुवा- ९; पङ्क्ति- ८; १०; १९; २६; पञ्चशारदीय-; पशु- १३६; १६४; २७०; पृश्नि- ५; पृश्निमातृ- १; २; प्रतिहर्तृ- ४; प्रतीची- १०; प्राण- २४२;२४३; बल- ३; ८; मध्यन्दिन- ७ द्र.] ।

मरुत्वत्- इन्द्र- १०५; ३२२; मध्यन्दिन- ६ द्र. ।

मरुत्वतीय-

१. मरुत्वतीय ९ स्तोत्रं भवति, मरुत्वतीयमुक्थं मरुत्वतीया ग्रहाः । सर्वत एव यजमानं वीर्येण समर्धयति, सर्वतो वृत्र ९ हन्ति । क ४४,३ ।

२. तदेतत्पृतनाजिदेव सूक्तं यन्मरुत्वतीयमेतेन हेन्द्रः पृतना अजयत् । कौ १५,३ ।

३. तदेतद्वार्त्रघ्नमेवोक्थं यन्मरुत्वतीयमेतेन हेन्द्रो वृत्रमहन् । कौ १५,२ ।

४. पवमानोक्थं वा एतद्यन्मरुत्वतीयम् । ऐ ८,१; कौ १५,२ ।

५ मरुत्वतीयैर् ( ग्रहैः ) माध्यन्दिन ९ सवनम् ( ऋतुमत् ) । मै ४,६,८ ।

६. वज्रो वै मरुत्वतीयाः ( ग्रहाः ) । मै ४,६,८ ।

७. स ( इन्द्रः ) एतान् मरुत्वतीयान् आत्मस्परणानपश्यत्तानगृह्णीत प्राणमेव प्रथमेनास्पृणुतापानं द्वितीयेनाऽऽत्मानं तृतीयेन । तैसं ६,५,५,२-३ ॥ [°य- आदित्य- ३६२ द्र. ] ।

मरुत्वतीय-ग्रह- सवनततिर्वै मरुत्वतीयग्रहः । कौ १५,१ ।

मरुत्-स्तोम-

१. अथैष मरुत्स्तोम एतेन वै मरुतो ऽपरिमितां पुष्टिमपुष्यन्नपरिमितां पुष्टिं पुष्यति य एवं वेद । तां १९,१४,१ ।

२. मरुत्स्तोमो वा एषः ( षोडशः स्तोमः )। तां १७, १,३ ।

मरुन्-नेत्र- ये देवाः पश्चात्सदो मरुन्नेत्राः···ते नोऽवन्तु । मै २,६,३ ।

मारुत-

१. अथैष मारुत एकवि ᳪ शतिकपालस्त्रिवैं सप्तसप्त मरुतः । मै ४, ३,९ (तु. काठ ३७, ४)।
२. उच्चैर्वैश्वानरस्य यजत्युपा ᳪ शु मारुताञ्जुहोति । काठ २१, १० ।
३. एकवि ᳪ शतिर्वै मारुता गणाः । काठ ११, १ ।
४. तद्वेवाचक्षते मारुतमिति । मरुतो वा अकामयन्तौजिष्ठा बलिष्ठा वीर्यवत्तमा देवानां स्याम जयेम स्वर्गं लोकमिति त एतत्सामापश्यन्, तेनास्तुवत, ततो वै त ओजिष्ठा'······ आसन् । ······यदु मरुतोऽपश्यन् तस्मान् मारुतमित्याख्यायते । जै ३, २३७ ।
५. पृश्निस्तिरश्चीनपृश्निरूर्ध्वपृश्निस्ते मारुताः । मै ३, १३, ५; काठ ४९,२ ।
६. मारुत ᳪ सप्तकपालम् (+पुरोडाशं निर्वपति ⌊माश.⌋)। तैसं १, ८, २, १; मै २, ४, ८; माश ५,३,१,६ ।
७. मारुतः कल्माषः । काठ ४८, १ ।
८. मारुतः ( प्रवर्ग्यः ) क्वथन् । तैआ ५, ११, ४ ।
९. मारुतमेकवि ᳪ शतिकपालं निर्वपेदभिचरन् । मै २, १, ९ ।
१०. मारुतं पृश्निमालभेतान्नकामः । तैसं २, १, ६, २ ।
११. मारुतं ( पयः ) बिन्दुमत् । मै १, ८, १० ।
१२. मारुतस्सप्तकपालः (+भवति ⌊मै १, १०, ६⌋)। मै १, १०, १; ६; काठ ९, ४; ३७, ३; तां २१, १०, २३ (तु. माश २, ५, १, १२)।
१३. मारुताः (+खलु वै देवतया ⌊तैसं.⌋) सजाताः । तैसं २, ३, ११, ४; काठ १०, ११ ।
१४. मारुतो गणो ऽभ्यावृत्तः । काठ ३४, १६ ।
१५. मारुतो हि वैश्यः ( वायुः ⌊मै.⌋)। मै ३,४,३; काठ ३७, ३; तै २, ७, २,२ ।
१६. ये ते मारुताः ( पुरोडाशाः ) रश्मयस्ते । माश ९, ३, १, २५ ।
१७. विण्मारुताः । मै ३, ३, १० ।
१८. सप्तसप्त मारुताः गणाः । मै ३,३,१०; माश ९,३,१,२५ ।
१९. सप्त हि ( सप्तसप्त वै ⌊माश २,५,१,१३⌋) मारुतो गणः । माश ५, ४, ३, १७ ।
२०. सिंहो मारुतः । मै ३,१४,२१ ॥ [°त- अन्तरिक्षलोक- ७; अश्वत्थ- ११; उत्तरतस् ९; कल्माष- २; गार्हपत्य-१३; ग्रामणी- ४; ६; ७; नितान- १; ९; ग्रावन्- ५; नेष्टापोतृ- ९; पार्जन्य- २; पृश्नि- ४; ९ द्र.]।

मारुती-

१. मारुतीर्विशः । जै १, ९५ ।
२. मारुती (+वै ⌊तैसं.⌋; हि ⌊मै २, ५, ८⌋) विट् । तैसं २, ३,१,३; मै १, ६, ५ ।
३. मारुत्यो वत्सतर्य्यः । तां २१, १४, १२ ॥ [°ती- आमिक्षा- ३; पृश्नि- ७; ८ द्र.]।

**मर्क-** मर्काय त्वैव ते योनिः प्रजाः पाहि । तैसं १, ४, ९, १ ।

**मर्कट-** पुरुषराज-; मनुराज- द्र. ।

**मर्त्य-** अनात्मा हि मर्त्यः । माश २, २, २, ८ ।

**मल-वत्-> मलवद्वासस्-** मलवद्वाससा न संवदेत, न सहासीत, नास्या अन्नमद्यात्, ब्रह्महत्यायै ह्येषा वर्णं······यां मलवद्वाससं सम्भवन्ति यस्ततो जायते सोऽभिशस्तः ······ तिस्रो रात्रीर्व्रतं चरेदञ्जलिना वा पिबेदखर्वेण वा पात्रेण प्रजायै गोपीथाय । तैसं २,५, १, ५-८ ।

**मलिम्लुच-** मलिम्लुचो नामासि त्रयोदशो मास इन्द्रस्य शर्मासीन्द्रस्य वर्मासीन्द्रस्य वरूथमसि । काठ ३८, १४ ।

**मशक-** मशकान् केशैः ( प्रीणामि ) । मै ३, १५, ३ ॥ [°क- चक्षुस्- ३७ द्र.] ।

**मसूस्य** ( धान्यविशेष- )- सर्वासां वा एतद्देवताना ९ रूपं यन्मसूस्यानि । तै ३, ८, १४, ६ ।

**मस्तिष्क-**

१. गुहा मस्तिष्कः । क ४७, ७ ।

२. मस्तिष्क ऽ एव पिष्टानि ( पुरोडाशस्य ) । माश १, २, १, २ ॥ [°ष्क- अशनि- १; पुरोडाश- १५; २५ द्र.] ।

**महत्-** एष ह वै महान् देवो यद्यज्ञः । गो १,२,१६ ॥ [ °हत्- अग्नि- २१८; ४३३; अन्त- ५; अन्तरिक्ष- १२८; प्रजापति- १२७; प्राण- ९३; बृहत्- १० द्र. ] ।

**महती-** पृथिवी- ८१ द्र. ।

**महदुक्थ-**

१. अशीतिभिर्हि महदुक्थमाख्यायते । माश १०, १, २, ९ ।

२. एतमु हैव (आत्मानमादित्यम्) बह्वृचा महदुक्थं मीमांहन्ते । शांआ ८,४ (तु. ऐआ ३,२,३) ।

३. एष वै यज्ञे यज्ञो ऽहन्यहर्देवेषु देवो ऽध्यूळहो यदेतन्महदुक्थम् । तदेतत्पञ्चविधं त्रिवृत्पञ्चदशं सप्तदशमेकविंशं पञ्चविंशमिति स्तोमतो गायत्रं रथन्तरं बृहद्भद्रं राजनमिति सामतो गायत्र्युष्णिग्बृहतीत्रिष्टुब्द्विपदेति छन्दस्तः, शिरो दक्षिणः पक्ष उत्तरः पक्षः पुच्छमात्मेत्याख्यानम् । पञ्चकृत्वः प्रस्तौति, पञ्चकृत्व उद्गायति, पञ्चकृत्वः प्रतिहरति, पञ्चकृत्व उपद्रवति पञ्चकृत्वो निधनमुपयन्ति तत्स्तोमसहस्रं भवति । एवं ह्येता पञ्चविधा अनुशस्यन्ते, यत् प्राक् तृचाशीतिभ्यः सैका विधा, तिस्रस्तृचाशीतयो यदूर्ध्वं सा पञ्चमी । ऐआ २,३,४ ।

४. महदुक्थमृचाम् ( समुद्रः ) । माश ९, ५, २, १२ ।

५. यदेतन्मण्डलं ( सूर्यः ) तपति । तन्महदुक्थं ता ऋचः स ऋचां लोकः । माश १०,५,२,१ ।

६. वाङ् महदुक्थम् । माश १०, १, २, ३ ।

७. सर्वा हैता ऋचो यन्महदुक्थम् । माश १०, १, १, ५; ४, १, १३ ।

८. स वा एष वाचः परमो विकारो यदेतन्महदुक्थं तदेतत्पञ्चविधम् । मितममितं स्वरः सत्यानृते इति । ऋग्गाथा कुम्ब्या तन्मितं यजुर्निगदो वृथा वाक् तदमितं सामाथो यः कश्च गेष्णः स स्वरः, ओ३मिति सत्यं, नेत्यनृतम् । ऐआ २, ३, ६ ॥ [ °क्थ- आत्मन्- २० द्र.] ।

महर्त्विज्- अश्वस्य वा आलब्धस्य महिमोदक्रामत् । तन्महर्त्विजां महर्त्विक्त्वम् । तै ३,८,२,४।

महादिवाकीर्त्य- एतद्वै प्रत्यक्षं साम यन्महादिवाकीर्त्यम् । कौ २५,४ ।

महादेव-

१. देवाश्च महादेवाः । रश्मयश्च देवा गरगिरः । तैआ १,९,३ ।

२. महादेवमन्तःपार्श्वेन (प्रीणामि) । तैसं १,४,३६,१; तैआ ३,२१,१ ।

३. स एषोऽष्टनामाष्टधा विहितो महान्देवः । कौ ६, ९ ॥ [°व- अग्निरूप-; आदित्य- ३१४; ओषधि- ७९; चन्द्रमस्- ६७; पशु- २५२ द्र. ] ।

महानाम्नी ( ऋच्-)-

१. अथो इमे वै लोका महानाम्न्य इमे महान्तः । ऐ ५,७ ।

२. आपो वै महानाम्नयः ···इम उ लोका महानाम्नयः । जै ३, ११४ ।

३. इन्द्रो वा एताभिर्महानात्मानं निरमिमीत तस्मान्महानाम्न्यः । ऐ ५,७ ।

४. तानि सर्वाणि छन्दांसि संभृत्य तैरिन्द्रो वृत्रमहन् यन्महान्तमहंस्तस्मान्महानाम्नयः । जै ३,१११ ।

५. ताभ्य (महानाम्नीभ्यः) एतदेकं नाम प्रायच्छद् इन्द्रा इति । जै ३,१०८ ।

६. तास् (महानाम्न्यः) सप्तपदा भवन्ति । जै २,२७४ ।

७. महानाम्नीनां वा एतद् दुग्धं पयो यद्रेवतयः । जै ३, १३७ ।

८. महान् घोष आसीत् (वृत्रवधसमये) तन्महानाम्न्यः (शक्वर्यः) । तां १३,४,१ ।

९. यदब्रवीन् ( प्रजापतिः ) महद् बतासामिदं मानमभूदिति तन्महामानीनां महामानित्वं महामानयो ह वै नामैतास्ता महानाम्नय इति परोक्षमाख्यायन्ते । जै ३,१०४ ।

१०. यन् (इन्द्रः) महान्तम् ( वृत्रम् ) अहंस्तस्मान् महानाम्नयः । जै ३,१११ ।

११. वज्रो वै महानाम्न्यः । ष ३,११ ।

१२. सौर्या हि महानाम्नयः । जै ३,८५ ॥ [°म्नी- अप्- १७३; इन्द्र- २२०;२८०; ३२५; पशु- १६६; १९८; प्रजा- ७१ द्र. ] ।

महाभूत- पञ्चेमा भूतानि भवन्तीति ह स्माह वालिशिखायनिः पृथिवी वायुराकाशमापो ज्योतींषि । शां ७, २२ ।

महायज्ञ-

१. पञ्च वा इमे महायज्ञाः सतति प्रतायन्ते, सतति सन्तिष्ठन्ते । देवयज्ञः पितृयज्ञो भूतयज्ञो मनुष्ययज्ञो ब्रह्मयज्ञ इति । तैआ २,१०,१ ।

२. पञ्चैव महायज्ञाः । तान्येव महासत्राणि भूतयज्ञो मनुष्ययज्ञः पितृयज्ञो देवयज्ञो ब्रह्मयज्ञ इति । माश ११,५,६,१ ॥ [°ज्ञ- अर्काश्वमेध- २ द्र.] ।

महाराज- राजानं विजितिनमाचक्षते महाराज इति । जै २,२३४ ।

माहाराज्य- अथैनम् ( इन्द्रम् ) ऊर्ध्वायां दिशि मरुतश्चाङ्गिरसश्च देवाः···अभ्यषिञ्चन् ···पारमेष्ठ्याय माहाराज्यायाऽऽधिपत्यायाऽऽतिष्ठाय । ऐ ८,१४ ।

महावीर-

१. असौ वै महावीरो योऽसौ (सूर्यः) तपति। कौ ८, ३; ७।

२. ते देवा अब्रुवन्। महान्बत नो वीरोऽपादिति तस्मान्महावीरः। माश १४, १,१,११।

३. महतो वीर्यमपप्तदिति। तन्महावीरस्य महावीरत्वम्। तैआ ५,१,५।

४. महावीर उद्वासितः (प्रवर्ग्यः)। तैआ ५, ११,१।

५. शिरो वा एतद्यज्ञस्य यन्महावीरः। कौ ८, ३।

६. स एष महावीरो मध्यन्दिनोत्सर्गः। कौ ८,७।

महावैश्वामित्र (सामन्-)-

१. इन्द्रो वृत्रमहन्। सोऽब्रवीन्महद्वा इदं विश्वामित्रस्याभूदिति। तदेव महावैश्वामित्रस्य महावैश्वामित्रत्वम्। जै ३,१३४।

२. पाप्मान ँहत्वा यदमहीयन्त तत् महावैश्वामित्रस्य महावैश्वामित्रत्वम्। तां १३,६,१२।

महावैष्टम्भ (सामन्)- महावैष्टम्भं ब्रह्मसाम भवत्यन्नाद्यस्यावरुद्ध्यै। तां १२,४,१९।

महाव्याहृति-

१. कि ँ सर्वप्रायश्चित्तिमिति महाव्याहृतीरेव मघवन्निति। ष १, ६।

२. स तान् पञ्च वेदान् (सर्पवेदं पिशाचवेदमसुरवेदमितिहासवेदं पुराणवेदमिति) अभ्यश्राम्यदभ्यतपत्समतपत्तेभ्यः श्रान्तेभ्यस्तप्तेभ्यः पञ्च महाव्याहृतीर्निरमिमीत वृधत् करद् गुहन् महत् तदिति। गो १, १, १०।

महाव्रत-

१. अत्येतदन्यान्यहान्यहर्यन्महाव्रतम्। तां ५,२,११।

२. अथ यदेतदर्चिर्दीप्यते तन्महाव्रतं तानि सामानि स साम्नां लोकः। माश १०,५,२,१।

३. अथ यन्महाव्रतमुपयन्ति। प्रजापतिमेव देवतां यजन्ते। माश १२,१,३,२१।

४. अथ ह स्म वा एतत् पुरा त्रिर्महाव्रतमुपयन्त्यारम्भणीये ऽहन् वैषुवते महाव्रतीये। जै २,८।

५. अन्तो महाव्रतम्। तां ५,६, १२।

६. अन्नं (+वै [जै.]) महाव्रतम्। तैसं ७, ३, ३, २; जै २, ३०३; ३०७; ३१९; ३५४।

७. इन्द्रो वै वृत्रं हत्वा महानभवद्यन्महानभवत्तन्महाव्रतमभवत्तन्महाव्रतस्य महाव्रतत्वम्। ऐआ १, १, १।

८. एतं (आत्मानमादित्यम्) महाव्रते छन्दोगाः (मीमांसन्ते)। शांआ ८, ४; ऐआ ३, २,३।

९. एष (अग्निः) एव महांस्तस्यैतदन्नं व्रतं तन्महाव्रत ँसामतः। माश १०, ४,१, ४।

१०. तं देवा भूताना ँरसं तेजः सम्भृत्य तेनैनं (प्रजापतिम्) अभिषज्यन् महानववर्त्तीति। तन्महाव्रतस्य महाव्रतत्वम्। तै १, २, ६, १।

११. तस्य (संवत्सरस्य) एष आत्मा यन्महाव्रतम्। शांआ १, १।

१२. ता (दास्यः) यदब्रुवन्महते व्रतं हराम इति तन् महाव्रतस्य महाव्रतत्वम् ...... देवता ह्यस्मिन् (अहनि) प्रमोदन्त। जै २, ४०९।

१३. प्रजापतिर्वाव महा ९ स्तस्यैतद् व्रतमन्नमेव। तां ४, १०, २।

१४. प्राण एव महांस्तस्यान्नमेव व्रतं तन्महाव्रत ९ सामतः। माश १०, ४, १, २३।

१५. बृहद्रथन्तरे (महाव्रतस्य) पक्षौ। तां १६,११,११।

१६. महद् व्रतमिति (महतो व्रतमिति) तन्महाव्रतस्य महाव्रतत्वम्। तै १, २, ६, १२।

१७. महन्मर्य्या व्रतं यदिममधिन्वीदिति तन्महाव्रतस्य महाव्रतत्वम्। तां ४, १०, १।

१८. महाव्रत ९ साम्नाम् ( समुद्रः )। माश ९, ५, २, १२।

१९. महाव्रतवानन्नाद्यस्यावरुद्धयै। तैसं ७, १, १०, ४।

२०. यज्ञायज्ञीय ९ ( साम ) ह्येव महाव्रतस्य पुच्छम्। तां ५, १, १८ (तु. तां १६, ११,११)।

२१. वामदेव्यमात्मा ( महाव्रतस्य )। तां १६, ११, ११।

२२. शिरो वा एतद्यज्ञस्य यन्महाव्रतम्। जै २, ३०४।

२३. सर्वाणि हैतानि सामानि यन्महाव्रतम्। माश १०,१,१,५॥ [°त– अन्तरिक्ष–६८; इन्द्र– १५; ऐन्द्र– २४; प्राजापत्य– १०; प्राण– १६० द्र.]।

महाव्रतीय–

१. एष वाव स्वर्गलोको यन्महाव्रतीयमहः। जै २, ४४।

२. महद्वा ऽ इदं व्रतमभूद्येनाय ९ समहास्तेति तस्मान्महाव्रतीयो (ग्रहः) नाम। माश ४,६,४,२।

३. विषुवान् वा एतदहर्यन्महाव्रतीयम्। काठ ३३,८॥ [°य– प्रजापति–१११; मनस्–५५ द्र.]।

महाव्रीहि– ओषधि– १११ द्र.।

महाहविस्–

१. महाहविर्होता (+सप्तहोतॄणाम् [तै.])। मै १, ९, १; काठ ९, ९; क ८, १२; तै ३, १२, ५, २; तैआ ३, ५, १।

२. महाहविषा ह वै देवा वृत्रं जघ्नुः। माश २, ५, ४, १।

महेन्द्र–

१. नागतश्रीर्महेन्द्रं यजेत, त्रयो वै गतश्रियः शुश्रुवान् ग्रामणी राजन्यस्तेषां महेन्द्रो देवता। तैसं २,५,४,४।

२. महेन्द्रस्याहं देवयज्यया जेमानं महिमानं गमेयम्। तैसं १,६,२,४।

३. महेन्द्रस्याहं देवयज्यया जेहमानं भूमानं गमेयम्। काठ ५,१।

४. यन्महानिन्द्रोऽभवत्तन्महेद्रस्य महेन्द्रत्वम्। ऐ ३,२१।

५ सि ९ हो नकुलो व्याघ्रस्ते महेन्द्राय। काठ ४७,११॥ [°न्द्र– इन्द्र– १६६; १९४ द्र.]।

महेन्द्रीय– महेन्द्रीयं दधि वासः क्षौमं दक्षिणा। काठ १५,१।

माहेन्द्र–

१. माहेन्द्रं दधि वासः क्षौमं दक्षिणा। मै २, ६, १।

२. माहेन्द्रे सर्वे कामाः। मै ४,६,८।

महस्–

१. असौ वै ( स्वर्गः ) लोको महा ९ सि। तस्मादित्या अधिपतयः। तै ३, ८, १८, २।

२. तन्मह इत्युपासीत। महान् भवति। तैआ ९, १०, ३; तैउ ३, १०, ३।

३. भूर्भुवः सुवरिति वा एतास्तिस्रो व्याहृतयः। तासामु ह स्मैतां चतुर्थीं माहाचमस्यः प्रवेदयते। मह इति। तद् ब्रह्म। स आत्मा। अङ्गान्यन्या देवताः। तैआ ७, ५, १; तैउ १,५,१।
४. यजुर्वेदो ( °द एव [गो.] ) महः। गो १,५,१५; माश १२,३,४,९।
५. यज्ञो वै देवानां महः। माश १,९,१,११।
६. वायुरेव महः···रुद्रा एव महः। गो १,५,१५ (तु. माश १२,३,४,८)।
७. सुवर्गो वै लोको महः। तै ३,८,१८,५॥ [°हस्- अध्वर्यु-४; अन्तरिक्ष-४०; अन्तरिक्षलोक-३; अन्न- १६४; आजि-; आदित्य- २९२; ग्रीष्म- ५; चन्द्रमस्- ८०; त्रिष्टुभ्- २१; पंचदश- १४; पशु- १६५; प्रतीची- १३; प्राण- १११; १६०; ब्रह्मन्- १२३ द्र. ]।

महिमन्-

१. प्रजापतिर्वै त्रीन् महिम्नोऽसृजताग्नि ँ वायु ँ सूर्यम्। मै ४,२,१२।
२. प्राणा हि महिमानः। काठ ३७,१६।
३. यज्ञो वै महिमा। माश ६,३,१,१८।
४. यस्ते अग्नौ महिमा यस्ते अप्सु रथे यस्ते महिमा स्तनयित्नौ य उ ते वाते यस्ते महिमा तेन संभव रथन्तरं द्रविणस्वन् न एधि। जै १, १२८ ( तु. काठ ७, १३; तां ७.७, १९ )।
५. राजा महिमा। तै ३,९,१०,१; माश १३,२,११,२॥ [°मन्- देव- ११२ द्र.]।

महिष-

१. अग्निर्वै महिषः स हीदं जातो महान्त्सर्वमैक्षणात्। माश ७,३,१,२३।
२. प्राणा वै महिषाः। माश ६,७,४,५।
३. महिषो मृगाणाम्। तैसं ३,४,११,१; काठ २३,१२; तैआ १०,१०,१।
४. वरुणाय महिषान् ( आलभते )। मै ३,१४,१० ॥ [°ष- अग्नि- २१८; ऋत्विज्- ४ द्र. ]।

महिषी-

१. भूरिति महिषी। तै ३,९,४,५।
२. महिषी हि वाक्। माश ६,५,३,४।
३. यैव प्रथमा वित्ता ( भार्य्या ) सा महिषी। माश ६,५,३,१॥ [°षी- आदित्य- ९४; २९३; धाय्या- ६; पृथिवी- १६२ द्र.]।

मही- अदिति- ४३; गो-४४; पृथिवी- ७९;१३३ द्र.।

मह्वया- मह्वयामकरोत्तन्मह्वयाः ( शकर्य्यः )। तां १३,४,१।

मा-

१. अयं वै (पृथिवी-) लोको मा। अयं हि लोको मित इव। माश ८,३,३,५।
२. मा छन्दस्तत्पृथिव्यग्निर्देवता। मै २,१३,१४; काठ ३९,४॥ [°मा- अग्नि- १०३; १०५; पृथिवी- ५२ द्र.]।

मांस-,>√मांसीय

१. अन्नमु पशोर्मा ँ सम्। माश ७,५,२,४२।

२. अहतं वसानोऽवभृथादुदैति ( यजमानः ) चतुरो मासो न मा ऽसमश्नाति न स्त्रियमुपैति। तां १७,१३,६;११;१४।

३. ऋचं साम्नाऽभिलिप्तां गायति। तस्माल्लोम्ना त्वचा मांसेन पुरुषोऽभिलिप्तो जायते। जै १,२५९।

४. एतद्ु ह वै परममन्नाद्यं यन्मा ऽसम्। माश ११,७,१,३।

५. एतेषां पशूनां ( किम्पुरुषगौरगवयोष्ट्रशरभाणाम् ) नाशितव्यम् ( मांसम् )। अपक्रान्तमेधा हैते पशवः। माश १, २,३,९।

६. नभो मा ऽसानि। तैसं ७,५,२५,१।

७. न मा ऽसमश्नीयात् ( ब्राह्मौदनिकस्य रक्षणकर्त्ता )। न स्त्रियमुपेयात्। यन्मा ऽसमश्नीयात्। यत्स्त्रियमुपेयात्। निर्वीर्य्यः स्यात्। नैनमग्निरुपनमेत्। तै १,१,९,७-८।

८. मा ऽस ऽसादनम्। माश ८,१,४,५।

९. मांसानि विराट् ( छन्दः )। जै २,५८।

१०. मा ऽसीयन्ति वा आहिताग्नेरग्नयः। गो २,२,१।

११. मा ऽसीयन्ति ह वै जुह्वतो यजमानस्याग्नयः। माश ११,७,१,२।

१२. यत् सामानृचं गायेन्मांसमेव जायेत नास्थि। जै १,२५९।

१३. वारुणं मांसमाग्नेयेनैवास्याग्नेयं निष्क्रीणाति। मै २,५,२।

१४. स होवाचाश्नीथ मांसा३ मित्यश्नीमो हीति, कस्मै कामायेति, चक्षुषश्च प्राणानाञ्चेति। जै ३,२७०॥ [°स- गुग्गुलु- १;२; पुरीष- ८ द्र.]।

माघ—माघे वा मा नोऽघं भूदिति। माश १३,८,१,४।

मातरिश्वन्—

१. अथ यद्दक्षिणतो वाति। मातरिश्वैव भूत्वा दक्षिणतो वाति। तै २, ३,९,५।

२. अयं वै वायुर्मातरिश्वा योऽयं पवते। माश ६,४,३,४।

३. सर्व्वा दिशोऽनुविवाति। सर्व्वा दिशोऽनुसंवातीति। स वा एष मातरिश्वैव। तै २,३,९,६। [°श्वन्— अन्तरिक्ष- २७; प्राण- १६१ द्र.]।

मातली— मातली कव्यैः ( वावृधानः )। मै ४,१४,१६।

मातृ—

१. न हि माता पुत्र ऽहिनस्ति न पुत्रो मातरम्। माश ५,२,१,१८।

२. शिशुं माता रेढि, वत्सं वा गौः। मै १,६,५॥ [°तृ- अहन्- १३; आयु- ३; पितृ- ८; पृथिवी- ५२; ११७ द्र.]।

मातृ-देव- मातृदेवो भव। तैआ ७,११,२; तैउ १,११,२।

मात्रा—

१. यद्वेव मिमीते तस्मान् मात्रा। माश ३,९,४,८।

२. विभूर्मात्रा। मै ३,१२,४।

**मादिल** (सामन्- )- त (देवाः) एतत् सामापश्यन् । तेनास्तुवत । ततो वै तेषां मद्वान् सोमोऽभवत् सोममदस्यामाद्यन् । तदेव मादिलस्य मादिलत्वम् । जै ३, २२२ ।

**माधव** (मास- )- मधु- ६ द्र. ।

**माधुच्छन्दस** (सामन्- )-

१. इद ९ ह्यन्वोजसेति माधुच्छन्दसं प्रजापतेर्वा एषा तनूरयातयाम्नी प्रयुज्यते । तां ९, २,१७ ।

२. माधुच्छन्दसं भवति सामार्षेयवत् स्वर्गाय युज्यते स्वर्गाल्लोकान्न च्यवते तुष्टुवानः । तां ११,९,६ ॥ [ °स- ब्रह्मवर्चसिन्- द्र. ] ।

**माध्यन्दिन** ( पवमान [स्तोत्र-]; सवन- )-

१. अथ माध्यन्दिने पवमाने…… सुपर्णोऽसि त्रिष्टुप्छन्दाः… । माश १२, ३,४,४ ।

२. अथ यत्पञ्चदशान्याज्यानि भवन्ति पञ्चदशो माध्यंदिनः ( पवमानः ), बाहुभ्यामेव तेन पाप्मानमपघ्नते । जै २, १३५ ।

३. इदं ( अन्तरिक्षम् ) माध्यंदिनं सवनम् । जै ३, ५७ ।

४. इन्द्रस्य वै मरुत्वतो माध्यन्दिन ९ सवनम् । तैसं ७, ५, ७, ३; काठ ३३, ७ ।

५. इन्द्रो मरुद्भिः सांविद्येन माध्यन्दिने सवने वृत्रमहन् । तैसं ६, ५, ५,१ ।

६. ऊर्वाः ( पितरः ) माध्यन्दिने ( सवने ) । ऐ ३४, ७ ।

७. एकादशकपालान् ( पुरोडाशान् ) माध्यन्दिने सवने ( निर्वपन्ति ) । तैसं ७, ५,६, ४ ।

८. एतद्वै यज्ञस्य स्वर्ग्यं यन्माध्यन्दिन ९ सवनम् । तां ७, ४, १ ।

९. तस्य ( होतुः ) माध्यन्दिनं सवनमायतनम् । जै १, ३४३ ।

१०. त्रिच्छन्दा माध्यन्दिनः पवमानः । ष १, ३ ।

११. त्रिष्टुभो लोके माध्यन्दिने सवने दक्षिणा नीयन्ते । तैसं ६, १, ६, ३ ।

१२. त्रैष्टुभबार्हतो वै माध्यन्दिनः । जै २, ३८३ ।

१३. द्वौ ( स्तोमौ ) माध्यन्दिन ९ सवनं ( वहतः ), यथा चक्षुश्च श्रोत्रं च । तैसं ७, १, १,१ ।

१४. द्वौ स्तोमौ माध्यन्दिनं सवनं वहतो यथा च श्रोत्रं च बाहू च तथा तत् । जै १, ६६ ।

१५. पञ्चहोतारं व्याख्याय माध्यन्दिनेन पवमानेनोद्गायेत् । काठ ९, १४ ।

१६. मध्ये सन्तं ( सूर्यमीप्सन्ति ) माध्यन्दिनेन सवनेन । कौ १८, ९ ।

१७. मरुत्वद्धि माध्यन्दिन ९ सवनम् । तां ९, ७, २; १३, ९, २ ।

१८. माध्यन्दिन ९ सवनानां तपस्वितमम् । काठ २३, १० ।

१९. रुद्रा एकादशकपालेन माध्यन्दिने सवने ( अभिषज्यन् ) । तै १, ५, ११, ३ ।

२०. रुद्राणां माध्यन्दिनं सवनम् । कौ १६, १; ३०, १; जै ३, ५७; माश ४, ३,५,१ ।

२१. रुद्रेभ्यो माध्यन्दिनं सवनम् ( इन्द्रः प्रायच्छत् ) । जै २, १३९ ।

२२. वरुणप्रघासान् माध्यन्दिन ९ सवनम् ( अकुर्वत ) । तैसं ३,२,२,३; मै ३, ६,१०, क ३६,४ ।

२३. वाजवन्माध्यन्दिनं सवनम् । तां १८, ६, ७ ।

२४. श्रतं माध्यंदिने सवने, श्रेष्ठेव वा अनेनेति तस्माच्छ्रितम् । जै २,१५७ ( तु. जै १,३५५ ) ।

२५. सप्तदशपञ्चवि ँ शौ (स्तोमौ) माध्यंदिन ँ सवनम् (वहतः)। तां १६, १०, ५।
२६. सप्तदशं माध्यदिनं सवनम्। जै २, १७१।
२७. साध्या वै नाम देवा आस ँ स्ते ऽवछिद्य तृतीयसवनम्माध्यन्दिनेन सवनेन सह स्वर्गं लोकमायन्। तां ८,३,५; ४, ९।
२८. स्वर्गो वै लोको माध्यन्दिनं सवनम्। मै ४, ८,२; गो २, ३,१७॥ [°न– अन्तरिक्ष– २८; अन्तरिक्षलोक– ४; आग्नावैष्णव– ९; इन्द्र– ७६;१४७;२२१; इन्द्रिय– ११;१२; ऐन्द्र– २५; ५५; ओजस् १५; काकुभ– १; क्षत्र– ४५; चतुश्चत्वारिंश– १, त्रिणिधन– १; त्रिष्टुभ्– ३३; त्रैष्टुभ– ८; दक्षिण,णा– ३; २दक्षिणा– २६; २७; पञ्चदश– १५; पुरोडाश– १९; प्राण– १८४; प्रातःसवन– १; वार्हत– ४; मरुत्– ४५; मरुत्वतीय– ५ द्र.]।

**माध्यम–** स (प्राणः) यदिदं सर्वं मध्यतो दधे यदिदं किं च, तस्मान्माध्यमास्तस्मान्माध्यमा इत्याचक्षत एतमेव (प्राणम्) सन्तम्। ऐआ २,२,१।

**मानव–** मनु– द्र.।

**मानुष–**

१. तद् देवाश्चर्षयश्चोपसमेत्याब्रुवन्। मेदं दुषदिति। यदब्रुवन् मेदं दुषदिति तन् मादुषस्य मादुषत्वम्। मादुषं ह वै नामैतत्। तन् मानुषमित्याख्यायते। जै ३, २६३।
२. तस्मान्मानुषऽउदीचीनव ँ शामेव शालां वा विमितं वा मिन्वन्ति। माश ३,१,१,७।
३. पशवो मानुषाः। क ४१,६।
४. यदब्रुवन्मेदं प्रजापते रेतो दुषदिति तन्मादुषमभवत्तन्मादुषस्य मादुषत्वं मादुषं ह वै नामैतद्यन्मानुषं तन्मादुषं सन्मानुषमित्याचक्षते। ऐ ३,३३।
५. यन्मन्द्रं मानुषं तत्। तैसं २,५,११,१ (तु. ऐ ३,४; ४, ९)।
६. सव्यान्वा (नखान्) अग्रे मानुषे निकृन्तते··· कनिष्ठिकयोर्वा (नखान्) अग्रे मानुषे निकृन्तते। काश ४,१,२,३॥ [°ष– उदञ्च्– १० द्र.]।

**मान्दा–** अप्– २०४ द्र.।

**मामहान–** यजमानो वै मामहानः। माश ९,२,३,९।

**माया–** असुर– २; आसुरी– द्र.।

**मायु–** क्रोष्टृ– द्र.।

**मारण–** त्रिरात्रोपोषितः कृष्णचतुर्दश्या ँ शवादङ्गारमाहृत्य चतुष्पथे बाधकमिध्ममुपसमाधाय त्रै भीतकेन स्रुवेण सर्षपतैलेनाहुतिसहस्रं जुहुयात्सम्मील्येन यत्र वृश्चशब्दः स्यात्तत्र पुरुषः शूलहस्त उत्तिष्ठति। तं ब्रूयादमुञ्जहीति हन्त्येनम्। सा ३, ६,१२।

**मारुत–** मरुत– द्र.।

**मार्गीयव** (<मृगयु-)–

१. देवं वा एतं (पशुपतिम्) मृगयुरिति वदन्त्येतेन (मार्गीयवेण साम्ना) वै स उभयेषां पशूनामाधिपत्यमाश्नुतोभयेषां पशूनामाधिपत्यमश्नुते मार्गीयवेण तुष्टुवानः। तां १४,१,१२।
२. यन्मृगयुर्देवोऽपश्यत्तस्मान्मार्गीयवमित्याख्यायते। जै ३, २१२॥ [°व– जराबोधीय– ५ द्र.]।

मार्जालीय-

१. यामेन मार्जालीयमुपतिष्ठन्ते पितृलोकमेव तज्जयन्ति। तां ५, ४, ११।

२. शुन्ध्युरसि मार्जालीयः। मै १, २, १२ ॥ [°य- आग्नीध्रीय- १; २ द्र.]।

मार्तण्ड, मार्ताण्ड-

१. अविकृत ँ ह्यष्टमं (पुत्रमदितिः) जनयाञ्चकार मार्तण्ड ँ संदेघो हैवास यावाने-वोर्ध्वस्तावांस्तिर्यङ् पुरुषसंमित इत्यु हैक ऽ आहुः। माश ३, १, ३, ३।

२. स वा इन्द्र ऊर्ध्वं एव प्राणमानुदश्रयत मृतमितरमाण्डमवापद्यत, स वाव मार्ताण्डो यस्येमे मनुष्याः प्रजा। मै १, ६, १२।

३. स (मार्ताण्डः) वाव विवस्वानादित्यः। मै १, ६, १२ ॥ [°ण्ड- अदिति- ५४; आदित्य- ३१५ द्र.]।

माल्व्य- यन्माल्व्य ँ सुरा वै सा। मै २, ४,२ ॥ [°ल्व्य- पाप्मन्- ६ द्र.]।

माष-

१. अमेध्या वै माषाः। तैसं ५,१,८,१; काठ ३२,७; क ३१, १०।

२. अयज्ञिया वै माषाः। मै १,४,१०।

३. तदु ह स्माहापि बर्कुर्वार्ष्णो माषान्मे पचत न वा एतेषा ँ हविर्गृह्णन्तीति। माश १,१,१,१०।

४. माषाश्च मे तिलाश्च मे (यज्ञेन कल्पन्ताम्)। तैसं ४,७,४,२।

माष-तिल- माषतिलौ हेमन्तशिशिराभ्याम् (प्रीणामि)। तैसं ७,२,१०,२।

मास्, स-

१. अन्नं (उदाना ⌊तां.⌋) मासाः। काठ २१, १; तां ५,१०, ३।

२. एष (चन्द्रमाः) मासः। जै २, ३।

३. किं नु तेऽस्मासु (मासेषु) इति। इमानि स्थूलानि पर्वाणि। जैउ ३, ५,४,८।

४. त्रयोदशभिरस्तुवत मासा असृज्यन्त, संवत्सरोऽधिपतिरासीत्। तैसं ४, ३, १०, १-२; मै २,८, ६।

५. त्रि ँ शद्वै रात्रयो मासः। मै १,१०,८; काठ ३६,२।

६. त्रिंशन्मासो रात्रयः। काठ ३४,९ (तु. जै २,१०९; ३७७)।

७. त्रि ँ शिनो मासाः। तैसं ७,५,२०,१।

८. दक्षिणावृतो मासाः। तैसं ५,३,२,४; क ३१,१३।

९. पवित्रं पवयिष्यन्त्सहस्वान्त्सहीयानरुणोऽरुणरजा इति। एतेऽनुवाका अर्द्धमासानाञ्च मासा-नाञ्च नामधेयानि। तै ३, १०, १०,३।

१०. मासाः (संवत्सरस्य) कर्म्मकाराः। तै ३,११,१०,३।

११. मासा (+वै ⌊तां.⌋) रश्मयः। जै १,१३७; तां १४,१२,९।

१२. मासा वै देवा अभिद्यवः। गो १, ५,२३।

१३. मासा वै य(या° ⌊तैसं.⌋) वाः। तैसं ५, ३, ४, ५; काठ १२, १।

१४. मासा वै वाजाः। तैसं २, ५,७,४।

१५. मासास्त्वा श्रपयन्तु। तैआ ४,२६,१।

१६. मासाः सन्धानानि । तैसं ७,५,२५, १ ।

१७. मासा हवीꣳषि । माश ११, २, ७, ३ ।

१८. यन्या मासाः । माश १, ७,२,२६ ॥ [मास्, स- अयाव- १; अर्धमास- ११; आदित्य- २००; दक्षिणा(दिश्-)- २३;३०; पितृ- ८७; दात्यौह- द्र.] ।

**माहाराज्य-** महाराज- द्र. । **माह्निन-** पृथिवी- ५३ द्र. ।

**माहेन-** जमदग्नि- ४ द्र. ।

**मित्र-**

१. अथ यत्र नितरामर्चयो भवन्ति तर्ह्य ( अग्निः ) मित्रो भवति । काश ३,१,१,१ ।

२. अयं वै वायुर्मित्रो यो ऽयं पवते । माश ६,५,४,१४ ।

३. एष वै मित्रस्य पन्था यद्यज्ञः । मै ४,८,२ ।

४. तद्यदेवात्र पयस्तन्मित्रस्य, सोम एव वरुणस्य । माश ४,१,४,९ ।

५. ता इमाः प्रजा मित्रेण शान्ता वरुणेन विधृताः । काठ २७,४; क ४२, ४ ।

६. प्राणो मित्रम् । जैउ ३,१,३,६ ।

७. मित्रः क्रीतः ( सोमः ) । तैसं ४.४,९,१ ।

८. मित्रः ( श्रियः ) क्षत्रम् ( आदत्त ) । माश ११,४,३,३ ।

९. मित्रः क्षीरश्रीः ( सोमः ) । तैसं ४,४,९,१ ।

१०. मित्रः प्रतिख्यातः । काठ ३४,१६ ।

११. मित्रमहः । मै १, ८,९ ।

१२. मित्रं मित्रः, क्रूरं वरुणः । काठ ७,११ ।

१३. मित्रस्त्वा पदि बध्नातु । काठ २, ५; क १,१७ ।

१४. मित्रस्य गर्भः (नवमी [तैसं., काठ ५३,११])। तैसं ५,७,२१,१; काठ ५३,११;५६,१ ।

१५. मित्रस्य भागोऽसि वरुणस्याऽऽधिपत्यं, दिवो वृष्टिर्वाताः स्पृता ( °र्वातः स्पृत [मै.]) एकविꣳशः स्तोमः । तैसं ४,३,९,१; मै २,८,५ ।

१६. मित्रस्य श्रद्धा (पत्नी) । तैआ ३,९,२ ।

१७. मित्रस्य सङ्गवः ( कालविशेषः ) । तै १,५,३,१ ।

१८. मित्रः सत्यानाम् ( अधिपतिः ) । तैसं १,८,१०,२; ३,४,५,१ (तु. तै ३,११,४,१) ।

१९. मित्रः ( एवैनम् ) सत्यानाम् ( सुवते ) । तै १,७,४,१ ।

२०. मित्राय पुलीकयान् ( आलभते ) । मै ३, १४, २ ।

२१. मित्राय सत्यस्य पतये (चरुं निर्वपेत् ) । मै २, ६,६ ।

२२. मित्राय सत्यायाऽऽस्वानां चरुम् ( निर्वपति ) । तैसं १, ८, १०, १ ।

२३. मित्रेण वा इमाः प्रजाश्शान्ता वरुणेन विधृताः । काठ २५,१०; क ४०,३ ।

२४. मित्रेणैव यज्ञस्य स्विष्टꣳ शमयति । तै १, २, ५, ३ ।

२५. मित्रो दाधार पृथिवीमुत द्याम् । काठ २३, १२; ३५, १९ ।

२६. मित्रो वै यज्ञस्य शान्तिः । काठ ३५, १९; क ४८, १७ ।

२७. मित्रो वै यज्ञस्य स्विष्टं गृह्णाति, वरुणो दुरिष्टम् । काठ २९,४; जै २,२३० ।

२८. मित्रो वै शिवो देवानाम् । तैसं ५, १, ६, १; ६, १,७,६ ।

२९. मित्रोऽसि सुशेवः । काठ १५, ८; तै १, ८, १६, २ ।

३०. य (अर्द्धमासः) आपूर्यते स मित्रः । तां २५, १०, १० ।

३१. यद्वा ऽईजानस्य स्विष्टं भवति मित्रो ऽस्य तद् गृह्णाति । माश ४, ५, १, ६ ।

३२. यद्वै यज्ञः सन्तिष्ठते, मित्रोऽस्य स्विष्टं युवते वरुणो दुरिष्टम् । मै ४, ८, ६ ।

३३. यन्नवमे ऽहन्प्रवृज्यते । मित्रो भूत्वा त्रिवृत इमाँल्लोकानेति । तैआ ५, १२, २ ।

३४. यो (अर्धमासः) ऽपक्षीयते स मित्रः । माश २, ४, ४, १८ ।

३५. सत्यं वै मित्रः । मै ४, ३, ९ ।

३६. स मित्रो ऽब्रवीन्मित्रो ऽहमस्मि, नाहꣳ (वृत्रम्) हनिष्यामीति । ...तस्मात् (मित्रात्) पशवो ऽपाक्रामन्मित्रः सन्नद्रुहा इति । मै ४, ५, ८ ।

३७. सर्वस्य ह्येव मित्रो मित्रम् । माश ५, ३, २, ७ ॥ [°त्र- अग्नि- ३३३; अनुष्टुभ्- ६; १६; अनूराधा- २; अहन्- ७; उपवक्तृ-२; क्षत्र- ८२; ८७; गौरे- २; त्रिवृत्- ४०; दिव्-१८; प्राण- १८५;२४५; बृहती- ३१; ब्रह्मन्- १०१; ११४; मद्गु- द्र.] ।

**मित्र-गुप्त-** ते हेमे लोका मित्रगुप्तास्तस्मादेषां लोकानां न किञ्चन मीयते । माश ६,५,४,१४ ।

**मित्र-मुख-** गन्धर्व- १३ द्र. ।

**मित्राबृहस्पति-** मित्राबृहस्पती वै यज्ञपथः । माश ५,३,२,४ ।

**मैत्राबार्हस्पत्य-** मैत्राबार्हस्पत्या धूम्रललामास्तूपराः । काठ ४९, १ ।

**मित्रावरुण-**

१. आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतम् । मध्वा रजाꣳसि सुक्रतू । तैसं १, ८, २२, ३; मै ४, ११, २; काठ ४,१६ ।

२. आविन्नौ मित्रावरुणावृतावृधौ । तैसं १, ८, १२, २ ।

३. उदीचीमातिष्ठानुष्टुप्त्वा छन्दसामवत्वेकविꣳशः स्तोमो वैराजꣳ साम, मित्रावरुणौ देवता, पुष्टं द्रविणम् । मै २, ६, १० ।

४. एतं (मित्रावरुणम्) ग्रहꣳ (देवाः) सहागृह्णꣳस्ते मित्रेणैव वरुणमशमयन् वरुणेन मित्रं ता इमाः प्रजा मित्रेण शान्ता वरुणेन विधृताः । काठ २७, ४ ।

५. एतद्वै मित्रावरुणयोः स्वं हविर्यत्पयस्या । कौ १८,१२ ।

६. एतौ (मित्रावरुणौ) वर्षस्येशाते । काठ ११,१० ।

७. गोसंस्तवौ वै मित्रावरुणौ । कौ १८, १३ ।

८. भद्रा नो मित्रावरुणा घृतव्रता । काठसंक ६१:११ ।

९. मित्रावरुणयोर्धेनुरुत्तरस्यामुत्तरवेद्याश्श्रोण्यामासन्ना । काठ ३४, १५ ।

१०. मित्रावरुणयोर्ध्रुवेण धर्मणा ब्रह्मवनिं त्वा... पर्यूहामि । तैसं १,३,१,२ ।

११. मित्रावरुणयोर्वीर्येण मरुतामोजसा...पाहि । तैसं १,८,१४,२ ।

१२. मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा युनज्मि । तैसं १,८,१५,१; काठ १५,८।
१३. मित्रावरुणा ऊरुभ्याम् (प्रीणामि) । मै ३,१५,६ ।
१४. मित्रावरुणाभ्यां त्वैष ते योनिर्ऋतायुभ्यां त्वा ( गृह्णाति ) । तैसं १,४,५,१ ।
१५. मित्रावरुणाभ्यां नमः पङ्क्त्यै नमस्त्रिणवत्रयस्त्रिंशाभ्यां नमश्शाक्वररैवताभ्यां नमो हेमन्तशिशिराभ्यां नम ऊर्ध्वायै दिशे नम उदानाय नमो विष्णवे नमः । काठ ५१,५।
१६. मित्रावरुणाभ्यामानुष्टुभाभ्यामेकविंशाभ्यां वैराजाभ्यां शारदाभ्यां पयस्या (°स्याम् [मै.]) । मै ३,१५,१०; काठ ४५,१० ।
१७ मित्रावरुणावेव मैत्रावरुणावास्ताम् । जै ३,३७४ ।
१८. मित्रावरुणौ गच्छ स्वाहेत्याह, प्रजास्वेव प्रजातासु प्राणापानौ दधाति । तैसं ६,४,१,२-३।
१९. मित्रावरुणौ त्वा वृष्ट्यावताम् । माश १,८,३,१२ ।
२०. मित्रावरुणौ धृतव्रतौ । मै २,६,९ ।
२१. मित्रावरुणौ ध्रुवेण धर्मणेति, मित्रमेवैनां दाधार, वरुणः कल्पयति । मै ३,८,९ ।
२२. मित्रावरुणौ श्रोणिभ्याम् [°णीभ्याम् [तैसं.] (प्रीणामि)] । तैसं । ५,७,१५,१; काठ ५३,५।
२३. यज्ञमुखं वै मित्रावरुणौ यज्ञमुखमापः । मै ४,५,२ ।
२४. यद् द्वितीयमस्रवत् ( वषट्कारकृते गायत्र्याश्शिरश्छेदे) तन्मित्रावरुणा उपागृह्णीतां सा या द्विरूपा (गौः) साऽभवत्तस्मात् सा मैत्रावरुणी । काठ १३,८ ।
२५. या वां मित्रावरुणा ओजस्या तनूः······या वां मित्रावरुणौ सहस्या तनूः······या वां मित्रावरुणौ यातव्या तनूः······या वां मित्रावरुणौ रक्षस्या तनूः······या वां मित्रावरुणा ओजस्या सहस्या यातव्या रक्षस्या तनूस्तया वामविधाम । तयेममसुममौक्तमंहसः । मै २,३,१ (तु. काठ ११,११) ॥ [°ण- अनुष्टुभ्- २९; ५४; अनूबन्ध्या- १; अप्- १७९; २०६; अपान- २०; अर्धमास- १; १०; अश्विन्- १२; अहन्- १२; अहोरात्र- २३;३६; आशिस्- ४; आश्रुति-; उत्तरतस् १२; १३; उदीची- ७; १२; १३; ऋतसदस्-; कपोत-; क्षत्र- ७७; गोआयुस्- १; द्यावापृथिवी- १७; धर्मन्- ३; धातृ- ४;२१; धिष्ण्य- ११; धेनु- १२; १७; नितान- १; पयस्या- ३; प्राण- १८५; प्राणापान- ४; १३; १७; २२; २३; प्राणोदान- ५; बाहु- ७ द्र.] ।

मित्रावरुण-नेत्र- उत्तरासद्-; उत्तरात्सद्- द्र. ।

मैत्रावरुण-

१. एकविंशं मैत्रावरुणस्य । जै २,२२४ ।
२. ऐन्द्रावारुणं मैत्रावरुणस्य स्तोत्रम् । काठ ३४,१६ ।
३. ऐन्द्रावारुणं मैत्रावरुणस्योक्थं भवति । गो २,४,१४ ।
४. चक्षुश्च मनश्च मैत्रावरुणः । काठ २७,५; क ४२,५; ऐ २,२६ ।
५. तस्मान्मैत्रावरुणो वामदेवान्न प्रच्यवते । गो २,३,२३ ।
६. पयस्यां मैत्रावरुणस्य (पात्रेऽवदधाति) । काठ २७,५ ।
७. प्रणेता वा एष होत्रकाणां यन्मैत्रावरुणः । ऐ ६,६; गो २,५,१२ ।
८. मनो मैत्रावरुणः । माश १२,८,२,२३ ।

९. मैत्रावरुणः पञ्चदशपक्षेण बृहतोद्गायति । इमं तद् बाहुं प्रतिदधाति । जै २,४०७ ।
१०. मैत्रावरुणमेककपालं निर्वपेद् वशायै काले । तैसं २,२,९,७ ।
११. मैत्रावरुणमेककपालमनुनिर्वपति । काठ १०,१ ।
१२. मैत्रावरुणो हि पुरस्ताद् ऋत्विग्भ्यो वाचं विभजति, तामृत्विजो यजमाने प्रतिष्ठापयन्ति । तैसं ६,१,४,२ ।
१३. यज्ञो वै मैत्रावरुणः । कौ १३, २ ।
१४. वशा मैत्रावरुणस्य वशं मा नयादिति । मै ४, ४, ८ ।
१५. वशां मैत्रावरुणाय (ददाति) । तैसं १,८,१८,१; तै १,८,२,४ ।
१६. शाक्वरं (पृष्ठम्) मैत्रावरुणस्य । कौ २५,११ ।
१७. शितिरन्ध्रोऽन्यतश्शितिरन्ध्रस्समन्तशितिरन्ध्रस्ते मैत्रावरुणाः । काठ ४९, ३ ।
१८. षड्भिर्मैत्रावरुणैः (पशुभिः) शरदि (यजते) । माश १३, ५, ४, २८ ॥ [°ण- अग्नि- ३३८; अध्वर्यु- १; अन्तरिक्ष- ६९; गायत्र- २६; गायत्री- १०२; चक्षुस्- १७; दक्षक्रतु-; दक्षिणतस् २३; पञ्चदश- १६; पयस्या- ४; ब्राह्मण- ५८; मनस्- ५२; मित्रावरुण- १७ द्र.] ।

मैत्रावरुण-सामन्- वामदेव्यं मैत्रावरुणसाम भवति । माश १३,३,३,४ ।

मैत्रावरुणाग्र- आमयाविन्- १६ द्र. ।

मैत्रावरुणी-

१. पृषती क्षुद्रपृषती स्थूलपृषती ता मैत्रावरुण्यः । मै ३,१३,३ ।
२. यदा न कश्चन रसः पर्यशिष्यत तत एषा मैत्रावरुणी वशा समभवत्तस्मादेषा न प्रजायते । माश ४, ५, १, ९ ।
३. वशा मैत्रावरुण्यः । मै ३, १३, ९ ।
४. सा हि मैत्रावरुणी यद्वशा । माश ५, ५, १, ११ ॥ [°णी- अनूबन्ध्या- ३; आमिक्षा- ४; ५; उदीची- २; पयस्या- ५; प्रजाकाम- २; मित्रावरुण- २४ द्र.] ।

मैत्र-

१. आखुस्सृजया शयाण्डकस्ते मैत्राः । काठ ४७, ४ ।
२. मैत्रं वा अहः । तै १, ७, १०, १ ।
३. मैत्रं वै शृतं (पयः), वारुणं प्रतिधुक् । काठ २७, ४; क ४२, ४ ।
४. मैत्रꣳ शरो गृहीतम् (पयः) । मै १, ८, १० ।
५. मैत्रꣳ श्वेतमालभेत वारुणं कृष्णमपां चौषधीनाꣳ सन्धावन्नकामः··· तावेव (मित्रावरुणौ), अस्मा (यजमानाय) अन्नं प्रयच्छतः । तैसं २, १, ९, २ ।
६. मैत्रꣳ श्वेतमालभेत संग्रामे संयत्ते समयकामः । तैसं २, १, ८, ४ ।
७. मैत्रः शरोगृहीतः (प्रवर्ग्यः) । तैआ ५,११, ४ ।
८. मैत्रो दीक्षितस्समृद्ध्यै । काठ २३, १ ।
९. मैत्रो नवकपालः (पुरोडाशः) । तां २१, १०, २३ ।
१०. मैत्रो ब्राह्मणो वारुणो राजन्यः । काठ २७, ४; क ४२, ४ ।
११. मैत्रो वै दक्षिणः वारुणः सव्यः । तै १, ७, १०,१ ।

१२. यच्च् शीतं तेन मैत्र ९, यत् तप्तं तेन वारुणम्। मै ४, ५, ८।
१३. यन्न लोहितं न सुवर्णं (ज्योतिः) तन्मैत्रम्। मै १, ८, ६ (तु. काठ ६,७)।
१४. वरुण्यं वा ऽ एतद्यन्मथितम् (आज्यम्)। अथैतन्मैत्रं यत्स्वयमुदितम्। माश ५, ३,२,६।
१५. वरुण्या वा ऽ एता ओषधयो याः कृष्टे जायन्ते ऽथैते मैत्रा यन्नाम्बाः। माश ५,३,३,८।
१६. वरुण्यो वा ऽ एष यो ऽग्निना शृतो ऽथैष मैत्रो य ऊष्मणा शृतः। माश ५, ३, २, ८।
१७. शार्गः सृजयः शयाण्डकस्ते मैत्राः। मै ३, १४, १४॥ [°त्र- अग्नि- ४८९; अश्व- १७; अहन्- ३५; आग्नेय- १८ द्र.]।

## मैत्री-

१. अन्यतएनीर्मैत्रीः। मै ३, १३, ९।
२. तिस्रो रोहिण्यो वशा मैत्र्यः। काठ ४९, २।
३. मैत्री वै सतूला (इषीका)। वारुणी परिशीर्णा। काठ २३, १।
४. वरुण्या वा ऽ एषा (शाखा) या परशुवृक्णाथैषा मैत्री (शाखा) या स्वयम्प्रशीर्णा। माश ५, ३, २, ५॥ [°त्री- अप्- २०८ द्र.]।

## मिथुन-

१. अर्द्धमु हैतदात्मनो यन्मिथुनम्। यदा वै सह मिथुनेन, अथ सर्वो ऽथ कृत्स्नः, कृत्स्नतायै। माश ८, ७, २, ३।
२. तद्यथा हैवेदं मानुषस्य मिथुनस्यान्तं गत्वा संविद इव भवति। माश १०, ५, २, ११।
३. तस्माद्यः कश्च मिथुनमुपप्रैति गन्धं चैव स रूपं कामयते। माश ९, ४, १, ४।
४. धेन्वा वै घृतं पयो ऽनडुहस्तण्डुलास्तन्मिथुनम्। मै ३, ६, १।
५. धेन्वै वा एतद्रेतो यदाज्यमनडुहस्तण्डुला मिथुनादेवास्मै चक्षुः प्रजनयति। तैसं २, २,९,४।
६. माता पिता पुत्रस्तदेव तन्मिथुनमुल्बं गर्भो जरायु तदेव तन्मिथुनम्। तैसं ६, ५, ६, ३।
७. मिथुन ९ वा अग्नीच्च पत्नीश्च। मै ४, ७, ४।
८. मिथुनं वा आपश्च पयश्च। मै १, ८, ३।
९. मिथुनं वै घृतं च सोमश्च। मै ४, ७, ४।
१०. मिथुनं वै दधि च पयश्च, यत् स ९ सृष्टं मण्डमिव मस्त्विव परीव ददृशे गर्भ एव सः। काठ ३६, १।
११. मिथुनं वै पशवः (स्वादु [ऐआ.])। ऐ ४,२१; ५,१६-१९; ऐआ १,३, ४।
१२. मिथुनं चक्षुः (प्राणापानौ [काठ ३६, २])। मै २,१,७; काठ १०,१; ३६,२।
१३. मिथुनमिव मरीचयो भूयासम्। ऐआ ५, १, १।
१४. यथा वै पुरुषः स्त्रियमुपेत्य (? °मुपैति), ततस्त्रिगुणान्मिथुनात् परिमथ्यमानात् पुरुषाद्रेतः सम्भवति। काठसंक १८:६-७।
१५. यद् वेदेन वेदिं संमार्ष्टि, मिथुनमेव करोति। काठ ३१,१२।
१६. यद्वेदो (?°दम्) वेद्या ९ स्तृणाति, मिथुनमेवावरुन्द्धे। क ४७, ११।
१७. वाग्वै सरस्वती पशवः पूषा मिथुनं वाक् च पशवश्च। काठ ३५, २०।

१८. व्यृद्धं वाऽएतन्मिथुनं यदन्यः पश्यति । माश ४, ६, ७, ९ ।

१९. स्त्री वै मेखला, पुमान् योक्त्रम् । मिथुनमेव यज्ञमुखे विपर्यूहति प्रजननाय । क ३६,१ । [°न- अग्नि- ६०६; अनडुह्- ११; अहोरात्र- २४; द्यावापृथिवी- १८; द्वन्द्व- २; पृषदाज्य- १; प्रजनन- ४; प्रजा- १६; प्रजाकाम- १; प्रजाति- १; प्राण- ५७; मधु- २६ द्र.] ।

मिथुन-त्व-

१. अतिरिक्त एव वा तन्न्यूनं दधति न्यूने वाऽतिरिक्तं मिथुनत्वाय प्रजननाय । जै १,३५६ ।

२. उपा ंशु यजति मिथुनत्वाय । तैसं ६, ६, ७, ३ ।

३. मिथुनत्वायैव सारस्वती ( मेषी ) । मै ४, ७, ८ ।

मिथुन-योनि- मिथुनयोनयः प्रजाः । काठ ३६, २ ।

√मिक्ष् इमं यज्ञं मिमिक्षतामितीमं यज्ञमवतामित्येतत् । माश ७, ५, १, १० ।

मुख-

१. मुखं वै वायव्यम् ( पात्रम् ) । मै ४, ५,७ ।

२. मुखं साम्नः ( प्रस्तोता ) । जै १, ८५ ॥ [°ख- अग्नि- १४१; १६५; ६०८; ६०९; आहवनीय- २८; उत्तरवेदि- १५; गायत्री-१०१; त्रिवृत्- ११;४१; प्रतीक-; ब्राह्मण-५६ द्र.] ।

मुखतस् त्रिवृत्- ४९; प्राण- २४६; ब्रह्मवर्चसितर- द्र. ।

मुख्य- या मुख्यास्ताः पुरस्तादुपदधात्स्या ऽस्य मुख्यो जायते य एवं वेद । काठ २१, १ ।

मुञ्ज-

१. अग्निया हि मुञ्जाः । माश १२, ८, ३, ६ ।

२. योनिर्मुञ्जाः । माश ६, ६, २, १५ ॥ [°ञ्ज- अग्नि- १३०; ६६६; ७५६; ऊर्ज्- ९ द्र.] ।

मुद्- ओषधि- ३४ द्र. ।

मुनि- शम इत्यरण्ये मुनयः । तैआ १०, ६२,१ ।

मुन्ययनयज्ञ- स एष सर्वकामस्य यज्ञः । कौ ४, १० ।

मुष्क- अप्सरस्- १ द्र. ।

मुष्कर-

१. एष वै प्रजनयिता यन्मुष्करः । माश ३, ७,२,८ ।

२. प्रजननं वै मुष्करः । माश ५, १, ३, १० ।

मुष्टि- राष्ट्रं मुष्टिः । तै ३, ९, ७, ५; माश १३, २, ९, ७; ।

मुसल- उलूखल- द्र. ।

मुहूर्त-

१. अथ यत्क्षुद्राः सन्त इमाँल्लोकानापूरयन्ति तस्मात् ( मुहूर्ताः ) लोकम्पृणा (इष्टकाः) । माश १०,४, २,१८ ।

२. चित्रः केतुर्दाता प्रदाता सविता प्रसविताभिशस्तानुमन्तेति एतेऽनुवाका मुहूर्तानां नामधेयानि । तै ३, १०, १०, ३ ।

३. लोकम्पृणाभिर् ( इष्टकाभिः ) मुहूर्तान् ( आप्नोति )। माश १०, ४, ३, १२ ।

४. स ( प्रजापतिः ) पञ्चदशाह्नो रूपाण्यपश्यदात्मनस्तन्वो मुहूर्ताँल्लोकम्पृणाः पञ्चदशैव रात्रेस्त
यन्मुहु त्रायन्ते तस्मान्मुहूर्ताः । माश १०, ४, २, १८ ।

**मूर्धन्-**

१. एष वै मूर्धा य एष ( सूर्यः ) तपति । माश १३, ४, १, १३ ।

२. मूर्धन्याकाशम् (प्रजापतिराविशयत् ) । शांआ ११, १ ।

३. मूर्धास्य विपतेद्य एनमुपवल्हेतेति । माश ११, ४, १, ९ ।

४. मूर्धा हृदये ( श्रितः ) । तै ३, १०, ८, ९ ।

५. यद्वै ब्रह्मचारिन् ! प्राणमत्यप्रचयः । मूर्धा ते व्यपतिष्यत् । तै ३, १०, ९, ५ (तु. माश ११
६,३,११; १४,६,६,१) ।

६. स यो ह तत्राश्नीयाद्वा भक्षयेद्वा मूर्धा हास्य विपतेत् । माश ३, ६,१,२३ । [°र्धन्- दि
६०; देवयजन- २; द्रोणकलश- १०; ११; प्रजापति- १५३; २२०; बृहस्पति- २८ द्र.] ।

**मूल** ( नक्षत्र- )- निर्ऋतिर्देवता, मूलं नक्षत्रम् । काठ ३९, १३ ॥ [°ल- निर्ऋति- २० द्र.] ।

**मूल-वर्हणी**- मूलमेषामवृक्षामेति । तन्मूलवर्हणी । तै १,५,२,८ ॥ [°णी- निर्ऋति- १५ द्र.]

**√मृ**

१. म्रियन्त इव वा एते ये मृताय कुर्वन्तीति । जै १, ३४५ ।

२. यदा वै ताम्यत्यथ म्रियते । जै ३, ७९ ।

**मृग**- चन्द्रमस्- ७५; महिष- ३ द्र. ।

**मृगयु**- पशुपति- ४ द्र. ।

**मृग-व्याध**- य उ एव मृगव्याधः स (रुद्रः) उ एव सः । ऐ ३,३३ ।

**मृगशीर्ष** ( नक्षत्र )-

१. मृगशीर्षं नक्षत्र ९ सोमो देवता । तैसं ४, ४, १०, १ ।

२. स (सोमः ) एत ९ सोमाय मृगशीर्षाय श्यामाकं चरुं पयसि निरपवत् । ततो वै स ओष-
धीना ९ राज्यमभ्यजयत् । तै ३, १, ४, ३ ।

३. सोमो राजा मृगशीर्षेण आगन् । तै ३, १, १, २ ॥ [°र्ष- प्रजापति- २७; २८९ द्र.] ।

**मृत्खन**-; **मृत्पात्र**- मृद्- द्र. ।

**मृत्यु**-

१. अथैत एव मृत्यवो यदग्निर्वायुरादित्यश्चन्द्रमाः । ते ह पुरुषं जायमानमेव मृत्युपाशैरभि-
दधति । जैउ ४, ७, १, १-२ ।

२. अपानान्मृत्युः । ऐआ २, ४, १; ऐउ १, १, ४ ।

३. ऊर्ध्वमूलमवाक्छाखं वृक्षं यो वेद सम्प्रति । न स जातु जनः श्रद्दध्यात् मृत्युर्मा मारया-
दिति । तैआ १, ११, ५ ।

४. एष एव मृत्युः । य एष ( सूर्यः ) तपति । माश २, ३, ३, ७ । (तु. माश १०,५,१,४) ।

५. एष वै मृत्युर्यत्संवत्सरः । एष हि मर्त्यानामहोरात्राभ्यामायुः क्षिणोत्यथ म्रियन्ते । माश १०, ४, ३, १ ।

६. एष ह वा अन्त्यो मृत्युर्यदहन् नंष्टूः शार्दूलस्तस्करः । जै १, ३०१-३०२ ।

७. परमेष्ठिना मृत्युः (=मृत्युमन्वाभवत्) । काठ ३५, १५ ।

८. मृत्युरग्निः । काठ २१, ७ ।

९. मृत्युरिति वा अहमेतम् ( शब्दस्थं पुरुषम् ) उपासे । शांआ ६, १४; कौउ ४, १४ ।

१०. मृत्युर्वै यमः । मै २. ५, ६; ३. ४, ६; ४, ४, २ ।

११. मृत्युर्वै सर्पनामानि ( मन्त्रविशेषाः ) मै ३, २, ६ ।

१२. मृत्युर्वै स्वप्नः'''तस्माद्यो म्रियते तमाहुर्दीर्घं स्वप्नमस्वाप्सीरिति । काठसंक ५०:४-५ ।

१३. मृत्युः शमिता । तां २५. १८, ४ ।

१४. मृत्योः पदं योपयन्तो यदैम द्राघीय आयुः । तैआ ६, १०, २ ।

१५. मृत्योर्वा एतद्रूपं यद् व्याघ्रः । मै ४, ४, ४ ।

१६. यद्ध वै किंचेदमस्मिन् लोक आत्मन्वत् तद्ध सर्वं मृत्युरेवाभिध्यादाय तिष्ठति । स यो ह स मृत्युस्संवत्सर एव सः । तस्य हर्तव एव मुखानि । जै १, २४६ ।

१७. यद् वीणायां गीयते यन्नृत्यते यद् वृथाचर्यते सा मृत्योः सेनास । जै २, ६९ ।

१८. यमस्य समिदसि मृत्योर्मा पाहि । काठ ६, ९ ।

१९. ये ते पाशा एकशतं मृत्यो मर्त्याय हन्तवे । ता ऽस्ते यज्ञस्य मायया सर्वानवयजामहे । काठ ३८, १३ ।

२०. यो मृत्योर्बिभीयात् तस्मा एतां प्राजापत्या ऽ शतकृष्णलां ( इष्टिम् ) निर्वपेत्'''स (प्रजापतिः) एवास्मिन् ( यजमाने ) आयुर्दधाति, ''' शतायुः पुरुषः शतेन्द्रियः । तैसं २, ३,२,१ ।

२१. शब्दे (संवत्सरो [जै.]) मृत्युः । जै २, ३५०; शांआ ६, २; कौउ ४, २ ।

२२. स एष एव मृत्युः । य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणे ऽक्षन्पुरुषस्तस्य हैतस्य हृदये पादावतिहतौ तौ हैतदाच्छिद्योत्क्रामति स यदोत्क्रामत्यथ हैतत्पुरुषो म्रियते । माश १०, ५, २,१३ ।

२३. स समुद्रादमुच्यत स मुच्युरभवत्तं वा एतं मुच्युं सन्तं मृत्युरित्याचक्षते परोक्षेण परोक्षप्रिया इव हि देवा भवन्ति प्रत्यक्षद्विषः । गो १. १, ७ ।

२४. स होवाच व्यासः पाराशर्यः विद्युद्वधमेवाहं मृत्युमैच्छमिति । तैआ १, ९, २ ।

[ °त्यु- अग्नि- २२०; ४४३; ६१०; ६११; ६६५; ७३९; ७६२; अजिर- १; अत्यत्-; अनन्त- १; अपान- ४२; अमृत- २०; अशनया- ३; अशनाया- २; अश्विन्- ३५; असित- ४; आदित्य- १४; १८७; ऋतु- ९०; छन्दस्- ६५; छाया- ३; तमस्- २; देवता- १२; धातृ- १७; परमेष्ठिन्- १३; पाप्मन्- १३; पुरुष- ३२; प्रजा- ४; प्रजापति- ३९; प्रवृ- १; २; प्राणापान- १४; बृहती- २; भ्रूणहत्या-; मनुष्य- २३ द्र.] ।

**मृत्यु-बन्धु-** यावन्तो वै मृत्युबन्धवस्तेषां यम आधिपत्यं परीयाय । तैसं ५, १, ८, १-२ ।

**मृत्यु-मुख-** एकपदामभ्यक्रन्दत् । ततो वयांस्यसृजत मृत्युमुखान्यु ऽ एव । जै ३,३८१ ।

**मृत्यु-संयुत-** पृथिवी- १६४ द्र. ।

मृद्- मृदं वस्वैः (प्रीणामि) । काठ ५३, १ ॥ [मृद्- पृथिवी- १७१; फेन- द्र.] ।

मृत्खन- मृत्खनः (खाताभूमिः, गर्त्तः) करुण्यतमः । तैआ ५, २, ८ ।

मृत्पात्र- पितृदेवल- १ द्र. ।

मृन्मय- ब्राह्मणो मृन्मयेन न पिबेदसुर्या वाचात्मानं नेत् स ९ सृजा इति तद्य एव ९ विद्वान् मृत्पात्रपो भवत्युज्जितमेव वाच उपैति । मै २, ५, ९ ।

मृध्- पाप्मन्- १; ९; १४ द्र. ।

मृष्ट- मृष्टोऽसि हव्यसूदनः । मै १,२,१२ ।

मेखला-

१. ऊर्ग्वै मेखला । क ३६, १ ।
२. तथोऽएवैष एतां ( मेखलाम् ) मध्यत आत्मन ऊर्जं धत्ते समार्प्ति तया समाप्नोति । माश ३, २,१,१० ।
३. मेखला पु ९ सो भवति, योक्त्र ९ स्त्रियाः । काठ २३,४; क ३६,१ ।
४. यच्छरमयी मेखला भवति (+तामेवोर्जमालभत । ऊर्ग्वै मेखला [काठ.]) । तैसं ६,१,३,३-४; काठ २३,४ ।
५. वज्रो वै मेखला । काठ २३,४ ।
६. सा ( मेखला) वै शाणी भवति । माश ३,२,१,११ ॥ [°ला- दीक्षित- २२ द्र.] ।

मेघ- मेघो हविर्धानं यज्ञस्य । तैआ २,१४,१ ।

मेदस्- मेदो वै मेधः । माश ३,८,४,६ ।

मेध-

१. पुरुषं वै देवाः पशुमालभन्त तस्मादालब्धान्मेध उदाक्रामत्सोऽश्वं प्राविशत्……तेऽश्वमालभन्त……ते गामालभन्त…स (मेधो देवैः) अनुगतो व्रीहिरभवत् । ऐ २,८ ।
२. मेधो वा आज्यम् । तै ३,९,१२,१ ।
३. सर्वेषां वाऽएष पशूनां मेधो यद् व्रीहियवौ । माश ३. ८, ३, १ ॥ [°ध- अन्न- १९९; पशु- २०५; पुरोडाश- १६; मेदस्- द्र. ] ।

मेधपति- यजमानो (+वै [कौ.]) मेधपतिः । ऐ २,६; कौ १०,४ ॥ [°ति- देवता- ५;२५ द्र.] ।

मेधा- आ मां मेधा सुरभिर्विश्वरूपा हिरण्यवर्णा जगती जगम्या । ऊर्जस्वती पयसा पिन्वमाना सा मां मेधा सुप्रतीका जुषताम् । तैआ १०, ४२,१ ॥ [°धा- अग्नि- ३८४; अप्सरा-; छन्दस्- १९; मनस्- ४४ द्र.] ।

मेधातिथि- इन्द्र- २८६; ३२७ द्र. ।

मैधातिथ- ( सामन्- )

१. एतेन वै मेधातिथिः काण्वो विभिन्दुकाद्व्यूध्नीर्गा उदसृजत पशूनामवरुद्ध्यै मैधातिथं क्रियते । तां १५,१०,११ ।
२. तदेतत्पशूनामुत्सृष्टिः साम……यद्‌ मेधातिथिरपश्यत् तस्मान्मैधातिथमित्याख्यायते । जै ३,२३६ ॥ [°थ- पशु- ६४ द्र.] ।

मेध्य,ध्या-

१. पृथिव्या वै मेध्यं चामेध्यं च व्युदक्रामत्। मै ४,१,१०; काठ ३१,८।

२. मेध्या वा आपः। माश १,१,१,१; ३,१,२,१० ॥ [°ध्य- उदीचीन- द्र.]।

मेध्य-त्व- सुश्वतः कार्यो मेध्यत्वाय। मै ४,१,९।

मेनका- मेनका च सहजन्या चाप्सरसौ। मै २, ८, १० ॥ [°का- इन्द्र- ३७०; द्यावापृथिवी- २७ द्र.]।

मेना- इन्द्र- ३७१ द्र.।

मेनि-

१. ता वा एता अङ्गिरसां जामयो यन्मेनयः। गो १,१,९।

२. मेनिर्ह्यदक्षिणः (यज्ञः)। मै २,४,५।

मेष-

१. मेष ९ सरस्वत्यै स्वाहा। मै ३,११,२।

२. मेषस्त्वा पचतैरवतु। तैसं ७,४,१२,१; काठ ४४,१।

३. स हि प्रत्यक्षं वरुणस्य पशुर्यन्मेषः। माश २,५,२,१६।

४. सारस्वतं मेषम् (आलभते)। तैसं १,८,२१,२; तै १,८,५,६ ॥ [°ष- इन्द्र-३२७;३३७ द्र]।

मेषी-

१. मेषी सारस्वती। मै ४,७,८ (तु. काठ ८,१)।

२. यत्र सरस्वत्या मेष्या हविषः प्रिया धामानि। काठ १८,२१।

३. सारस्वतीं मेषीम् (+आलभेत यो वाचो गृहीतः [मै.])। मै २,५,२; काठ १२,१२।

४. सारस्वती मेष्यधस्ताद्धन्वोः। मै ३,१३,२ ॥ [°षी- अतिरात्र- १४ द्र.]।

मेहन- तस्माद् छायामभि च श्रीवेदभि च मेहेत्। जै २, ३७०।

म्रोचत्- आदित्य- १८७ द्र.।

म्लेच्छ- तेऽसुरा आत्तवचसो हेऽलवो हेऽलव इति वदन्तः पराबभूवुः। तत्रैतामपि वाचमूदुः उपजिज्ञास्या ९ स म्लेच्छस्तस्मान्न ब्राह्मणो म्लेच्छेदसुर्या हैषा वाक्। माश ३,२,१,२३-२४।

## य

यकृत्- यकृत् सविता। माश १२, ९, १, १५ ॥ [°कृत्- भव- २ द्र.]।

यकन्- हरिमाणं यक्ना (प्रीणामि)। तैसं ५, ७, २३, १; काठ ५३,१३।

यक्ष-

१. यक्षमिव चक्षुषः प्रियो वो भूयासम्। मं १,७, १४।

२. स यो हैते ब्रह्मणो महती यक्षे वेद महद्धैव यक्षं भवति। माश ११, २, ३, ५। [°क्ष- ब्रह्मन्- ४३ द्र.]।

**यक्ष्म-** वरुणो वा एतं गृह्णाति यं ज्येमानं यक्ष्मो गृह्णाति। काठ १३, ६ ॥ [°क्ष्म- ओषधि- ५५;६९ द्र.]।

**यजत्र-** यजत्रमिति यज्ञियमित्येतत्। माश ६, ६, ३, ९ ॥ [°त्र- देवता- २२ द्र.]।

**यजमान-**

१. अन्तरा हविर्धानं च सदश्च यजमानस्य (लोकः)। मै ४, ६, ५।
२. अरण्ये तिस्रो (रात्रीर्यजमानः) वसति। जै २, १८२; तां १६, ६, ३।
३. आत्मा यजमानस्याप्रीः। क ४१, ७।
४. आत्मा वै यज्ञस्य यजमानोऽङ्गान्यृत्विजः। माश ९, ५, २, १६।
५. उत्तरो हि यजमानः। काठ २५, ५।
६. एतद् यजमानस्याऽऽयतनं यद् वेदिः। तैसं १, ७, ५, २-३।
७. एष वै कामो यजमानस्य यदनार्त उदृचं गच्छति। तैसं ३, ४, ३, ६।
८. एष वै यजमानो यत्सोमः (यद्यूपः [तै १, ३, ७, ३])। तै १, ३, ३, ५;७,३।
९. त्वङ्मा९ंस९ंस्नाय्वस्थि मज्जा। एतमेव तत्पञ्चधाविहितमात्मानं वरुणपाशान्मुञ्चति (यजमानः)। तै १, ५, ९, ७।
१०. द्व्यक्षरो वषट्कारो द्विपाद्यजमानः। तैसं २, ६, २, ६।
११. न यजमान रिष्यसि न सुन्वान न देवयो। काठ ११,१२।
१२. निषादेषु तिस्रो (रात्रीर्यजमानः) वसति। तां १६, ६, ७।
१३. 'प्र तद्विष्णुस्स्तवते वीर्येणे' ति त्रीन् प्रक्रमान् यजमानं प्राञ्चं प्रक्रमयति, विष्णुमेवैनं (यजमानम्)भूतमिमांल्लोकान् गमयति। काठ २५,८।
१४. यजमानः पञ्चमी (चितिः), प्रजा पुरीषम्। तैसं ५, ६, १०, २।
१५. यजमानः सुम्नयुः (स्रुचः [तै.])। तैसं २,५,७,३; तै ३,३,६,३; (तु. माश १,४,१,२१)।
१६. यजमानो वा एककपालः। मै १, १०, ७; काठ ३६, १।
१७. यजमानो वाऽएष निदानेन यद्यूपः। माश ३, ७, १, ११।
१८. यजमानो वै मामहानः (यज्ञः [ऐ.])। ऐ १, २८; माश ९,२,३,९ (तु. माश १३,२,२,१)।
१९. यजमानो वै यज्ञपतिः। मै १, ४, ६; काठ ३२, २; माश १,१,२,१२;२,२,८;७,१,११।
२०. यजमानो वै यूपः। काठ २९, ८; ऐ २, ३; माश १३, २,६, ९।
२१. यजमानो वै स्वे यज्ञऽइन्द्रः। माश ८, ५, ३, ८।
२२. यजमानो वै हव्यदातिः। माश १, ४, १, २४।
२३. यजमानो हविः (यूपः [मै.; काठ ६, ६; क ४१,४])। मै १, ८,७; काठ ६, ४; क ४, ३।
२४. यजमानो हि यज्ञपतिः (सूक्तम् [ऐ.])। ऐ ६, ९; माश ४, २, २, १०।
२५. यज्ञं यजमानः (अनु प्रतितिष्ठति)। तैसं ५, १, ३, १।
२६. यज्ञात्मा यजमानः। क ४१, ७।
२७. यज्ञो यजमानस्य (शर्म)। मै ३, ६, ६।
२८. यज्ञो वै यजमानः। जै १,२५९; ३,३०३।
२९. यद्यजते तद्यजमानः। माश ३, २, १, १७।

३०. यां वै काञ्च यज्ञ ऽ ऋत्विज ऽ आशिषमाशासते यजमानस्यैव सा । माश १, ९,१,२१ ।
३१. वृकौ यजमानः (ध्यायति) । मै २, ३,९; काठ १२, १० ।
३२. वैष्णवो (संवत्सरो [माश.]) यजमानः । काठ २३, ३; माश ११,२, ७,३२ (तु. क ३५,९) ।
३३. सं यज्ञपतिराशिषेत्याशिषैव यजमान ९ समर्धयति । क ४१, ६ ।
३४. सत्याः सन्तु यजमानस्य कामाः । तैसं ३, ४, २, २; ४, २,३,४; काठ ३८, १२ ।
३५. स ह सर्वतनूरेव यजमानो ऽ मुष्मिँल्लोके सम्भवति य एवं विद्वान्निष्क्रीत्या यजते । माश ११, १, ८, ६ ।
३६. स्वेष्वेवास्येषु (असुराः) जुह्वतश्चेरुस्ते ऽ तिमानेनैव पराबभूवुः ··· अथ देवाः । अन्यो ऽन्यस्मिन्नेव जुह्वतश्चेरुस्तेभ्यः प्रजापतिरात्मानं प्रददौ, यज्ञो हैषामास, यज्ञो हि देवानामन्नम् ··· तस्मादाहुः प्रजापतिर्यज्ञ इति ··· स (यजमानः) यद् व्रतमुपैति यथैव तत्प्रजापतिर्देवेभ्य आत्मानं प्रायच्छदेवमेवैष (यजमानः) एतद्देवेभ्य आत्मानं प्रयच्छति, हविर्ह्येष देवानां भवति । यज्ञेनैवैतद्देवेभ्य आत्मानं निष्क्रीणीते । माश ११, १, ८, १-६ ॥ [°न- अग्नि- ४२५;६१५; ६१६; अग्निष्ठा-; अध्वर्युपात्र-; अपान- १९; आग्नेय- ४३; आघार- ३; आत्मन्- २१; आहवनीय- २९; आहवनीयभाज्-; इन्दु- २; इन्द्र- १५०; १८७; २३५;२६४; उदान- ५; ऋच्- १४; ऐन्द्र- ३४; जुहू- १४; त्वष्टृ- ५; दाश्वस्-; द्विपाद्- २; द्वियजुस्- १; पङ्क्ति- २८; पञ्चदश- २६; पत्नी- ३; पशु- २५६-२५८; पुरोडाश- १७; प्रजा- ७८; ७९; प्रजापति- २९; २२४; प्रस्तर- २; ३; प्रस्तावप्रतिहार-; प्राण- १६१; मनस्- ४५; मांस- २; मेधपति- द्र.] ।

**यजमान-काम-** ब्रह्मसामन्- द्र ।

**यजमानच्छन्दस-** यजमानच्छन्दसं द्विपदा (ऋक्) । कौ १७, २ ॥ [°स- उष्णिह्- १५; पङ्क्ति- २७ द्र.] ।

**यजमानदेवत्य,त्या-**

१. तानि हैतानि (आज्यानि) यजमानदेवत्यान्येव । माश १, ६, १, २० ।
२. यजमानदेवत्या वपा । तै ३,९,१०,१ ।
३. यजमानदेवत्यो वै यूपः । तै ३, ९, ५, २ ॥ [°त्य,त्या- जुहू- १३ द्र.] ।

**यजमान-भाग-** यज्ञो (यजमानो) यजमानभागः । ऐ ७, २६[२] (तु. मै १, ४,६) ।

**यजमान-लोक-** पुरुष- ११९ द्र ।

**यजमानायतन-** आहवनीय- ३१ द्र. ।

**यजुस्-**

१. अथ य एष एतस्मिन्मण्डले पुरुषः सो ऽग्निस्तानि यजू ९ षि स यजुषां लोकः । माश १०, ५, २, १ ।
२. श्रद्धा वै तद्यजुः । माश १३, ८, २, ७ ।
३. अष्टौ (बृहतीसहस्राणि ८०००×३६=२८८००० अक्षराणि) यजुषाम् । माश १०,४,२,२४ ।
४. आज्याहुतयो ह वा ऽ एता देवानाम् । यद्यजू ९ षि । माश ११, ५, ६, ५ ।
५. एष (वायुः) हि यन्नेवेद ९ सर्वं जनयत्येतं यन्तमिदमनु प्रजायते तस्माद्वायुरेव यजुः ।

अयमेवाकाशो जूः । यदिदमन्तरिक्षमेत ऽ ह्याकाशमनु जवते तदेतद्यजुर्वायुश्चान्तरिक्षं च यच्च जूश्च तस्माद्यजुः । माश १०, ३, ५, १-२ ।

६. सत्पत्नी ( मनुपत्नी ) यजुर्वदन्ती प्रत्यपद्यत । तस्या द्यां वागातिष्ठत् । तस्या वदन्त्या यावन्तोऽसुरा उपाशृण्व ऽ स्ते पराऽ भवन् । क ४६, ४ ।

७. तद् ( ब्रह्म ) यजुरित्युपासीत, सर्वाणि हास्मै भूतानि श्रैष्ठ्याय युज्यन्ते । शांआ ४, ६; कौउ २, ६ ।

८. तस्माद्यजू ऽ षि निरुक्तानि सन्त्यनिरुक्तानि । माश ४, ६, ७, १७ ।

९. तस्य( यमस्य )पितरो विशः ··· यजू ऽ षि वेदः ··· यजुषामनुवाकं व्याचक्षाण इवानुद्रवेत् । माश १३, ४, ३, ६ ।

१०. तस्य ( यज्ञस्य ) या प्रिया तनूरासीत् तया ( स यज्ञः ) यजुः प्राविशत् , तस्माद्यजुषो नोच्चैः कीर्तयितव्यं यज्ञस्य प्रियां तन्वमुदूर्णोत्यब्रह्मवर्चसी भवति नग्नंभावुकः । काठ २३, २ ।

११. नीडं वा एतद्यज्ञस्य क्रियते यद्यजुषा क्रियते । काठ २९, १; क ४५, ३ ।

१२. मनो यजूंषि ( अनुदीक्षन्ताम् ) । जै २,५६ ।

१३. यजुरित्येष (पुरुषः) हीद ऽ सर्वं युनक्ति । माश १०, ५, २,२० ।

१४. यजुर्भिर्यजन्ति । काठसंक २७ : १ ।

१५. यजुर्भी रायस्पोषे समिषा मदेम । काठ २, ४ ।

१६. यजुर्भ्यो ऽधि विष्णुम् (प्रजापतिरसृजत ) । तै २, ३, २, ४ ।

१७. यजुषां वा एतद्रूपं यत् तार्प्याणि त्रिपीव्यन्ति । काठ १२, ४ ।

१८. यजुषा च वा आहुत्या च यज्ञः सन्ततो यद्यजुर्वदन्नाहुतिं जुहोति, यजुषा चैवाहुत्या च यज्ञ ऽ सन्तनोति । मै ४, ७, ७ ।

१९. यजुषा शस्त्राय ( गृह्यते ) । क ४५, ३ ।

२०. यजुषा ह वै देवा अग्रे यज्ञं तेनिरे ऽथ ऽर्चाथ साम्ना । माश ४, ६, ७, १३ ।

२१. यजुस्तस्माद् ( यज्ञात् ) अजायत । काठसंक १०० : २१ ।

२२. यजू ऽ षि विष्णुः ( स्वभागरूपेणाभजत ) । माश ४, ६, ७, ३ ।

२३. यजो ह वै नामैतद्यद्यजुरिति । माश ४, ६, ७, १३ ।

२४. यदेव ( दक्षिणनेत्रस्य ) ताम्रमिव बभ्रुरिव तद्यजुषाम् ( रूपम् ) । जैउ ४, ११, ३, १२ ।

२५. यद् यजू ऽ षि ( ऋषयोऽध्यगीषत ) घृताहुतयः ( ता अभवन् ) । तैआ २, ९, २ ।

२६. या वा अस्य ( यज्ञस्य ) प्रिया तनूरासीत् तया ( यज्ञः ) यजुरश्रयत । मै ३, ६, ५ ।

२७. व्रीहिमयमेवाग्रे पिण्डमधिश्रयति, तद्यजुषा ऽ रूपम् । माश ५, ५, ५, ९ ।

२८. स एष एव यजुः । एष हीदं सर्वं जरयतीव । जै ३,३७९ ।

२९. स ( प्रजापतिः ) यजूंष्येव हिङ्कारमकरोत् । जैउ १, ३, ३, ३ ।

३०. सुवरिति यजू ऽ षि । तैआ ७, ५, २; तैउ १, ५, २ ।

३१. स्तोमश्च मे यजुश्च मे ( यज्ञेन कल्पेताम् ) । तैसं ४, ७, ९, १ ॥ [°जुस्- अग्नि- १४५; १४६; अन्तरिक्ष- ९; २९; १३०; अन्तरिक्षलोक- १३; अन्न- ५२; ८५; अपान- ४३; आदित्य- १८; ११७; आदित्यस्थ-; आध्वर्यव- २; आशिस्- ३; उपांशु- ७; ऋच्- १४;

४८; काम- १६; १कृष्ण- १; तार्प्य- ४; ५; दक्षिण,णा- २८; नामन्- ३; प्राण- ९३; १८६; ब्रह्मन्- ६१; ८०;९०; भुवम् ५; मज्जन्- ४; मनस् २; २९ द्र.]।

**यजुर्निधन**- घृतश्चुन्निधन- २ द्र.।

**यजुर्वेद**-

१. इषे त्वोर्जे त्वा वायवस्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्म्मण इत्येवमादिं कृत्वा यजुर्वेदमधीयते। गो १, १, २९।
२. मनो वै यजुर्वेदः। माश ७, ३, १,४०।
३. यजुर्वेदे (सूर्य्यः) तिष्ठति मध्ये अह्नः। तै ३, १२,९, १।
४. यजुर्वेदो वायोः (उदैत्)। जै १, ३५७ (तु. माश ११,५,८, ३)॥ [°द- अन्तरिक्ष- १२६; अन्तरिक्षलोक- ३; क्षत्रिय- २२; भुवम् २; मनस्- ४६; महस्- ४ द्र.]।

**यजुष्टस्** आग्नीध्र- १ द्र.।

**यजुष्मत्->°ती** (इष्टका-)-

१. मज्जानो ज्योतिस्तद्धि यजुष्मतीना ऽ रूपम् माश १०, २, ६,१८।
२. यजुष्मतीभिरहान्यर्धमासान्मासानृतून् (आप्नोति)। माश १०, ४,३, १२।
३. यजुष्मत्यो ज्योतिस्तद्धयह्ना ऽ रूपम्। माश १०,२,६,१७॥ [°ती- अन्न- ३५; मनुष्य- २३ द्र.]।

**याजुष->याजुषी**- सर्वा गतिर्याजुषी हैव शश्वत्। तै ३, १२, ९, १।

**यज्ञ**-

१. अग्नीषोमीयः पशुस्त्रीणि सवनानि, वशानूबन्ध्या तेन पाङ्क्तः (यज्ञः)। क ४५, २।
२. अजातो वै पुरुषः, स वै यज्ञेनैव जायते। मै ३, ६, ७।
३. अजातो ह वै तावत्पुरुषो यावन्न यजते, स यज्ञेनैव जायते। जैउ ३, ३, ४, ८।
४. अथ त्रीणि वै यज्ञस्येन्द्रियाणि। अध्वर्युर्होता ब्रह्मा। तै १, ८, ६, ६।
५. अदक्षिणेन हि वा अयं यज्ञेन यजतेऽथ न वसीयान् भवति। मै १, ४, १३।
६. अन्तः खलु वा एष यज्ञस्य यद् दशममहः। तैसं ७, २, ८, ५।
७. अमुतः प्रदानाद्धि मनुष्या यज्ञमुपजीवन्ति। मै १, १०,६ (तु. मै १, ६,१३)।
८. अयं यज्ञो वर्धतां गोभिरश्वैः। काठ ३५, ३।
९. अयं वै (वाव [जैउ.]) यज्ञो यो ऽयं (वायुः) पवते। ऐ ५, ३३; माश १,९,२, २८; २,१, ४,२१; ३,४, ४, १३; ११, १, २, ३ (तु. मै १, ४, ९; ३, ६, ८; गो १, ३, २; ४, १; जैउ ३,४, २,१)।
१०. अत्रान्तं वा अनु यज्ञं रक्षा ऽसि जिघा ऽसन्ति। क ४१, ६।
११. असुरेषु वै यज्ञ आसीत्तं देवास्तूष्णी ऽ होमेनावृञ्जत। तैसं ६, ३, ७, २।
१२. अहुतो ऽयं यज्ञो अप्येतु देवान्। काठ ३५, ५; क ४८, ६ (तु. काठ ३४, १९)।
१३. आत्मा यज्ञस्याग्रायणः। काठ २७, ९।
१४. आत्मा वै यज्ञः। माश ६, २, १, ७।
१५. इन्द्रे ह वा अग्रे यज्ञ आस। जै २, १३९।
१६. इमं यज्ञं ऽ सप्ततन्तुं ···(दधातु)। मै १,७, १; काठ ३४, १९।
१७. इष्टो यज्ञो भृगुभिर्द्रविणोदा यतिभिराशीर्दा वसुभिराशीर्वा ऽ अथर्वभिः। क २९, ६।

१८. इष्ट्या वाग्रायणेन वा पशुना वा सोमेन वा पूर्णमासे वामावस्यायां वा यजेत । क ६, ६ ।
१९. उत्तरतउपचारो हि यज्ञः । माश ८, ६, १, १९ ।
२०. ऊर्ध्वा वा एते स्वर्गं लोकं रोहन्ति ये यजन्ते । जै १, १७३; ३, ३०४ ।
२१. ऋतेरक्षा वै यज्ञः । ऐ २, ७ ।
२२. एतच्छिरो यज्ञस्य यद्विपुवान् । कौ २६, १ ।
२३. एतद्ध वै यज्ञस्याच्युतं यद् वामदेव्यम् ( साम ) । जै २, ४२४ ।
२४. एतद्वै यज्ञस्य शिरो यन्मन्त्रवान्ब्रह्मौदनः । गो १, २, १६ ।
२५. एतद्वै यज्ञस्य समृद्धं यद्रूपसमृद्धं यत्कर्म क्रियमाणमृगभिवदति । ऐ १, ४;१३; १६; १७ ।
२६. एताभिर् ( भूर्भुवःस्वरिति व्याहृतिभिः ) एनं ( यज्ञम् ) भिषज्याथेति (प्रजापतिर्देवानुवाच) । जै १, ३५८ ।
२७. एतावानु वै यज्ञो यावत्येषा त्रयी विद्यैतया हि त्रय्या विद्यया यज्ञं तन्वते । काश ७,५,३,८ ।
२८. एतावान्वै तर्हि यज्ञ आसीदग्निहोत्रं दर्शपौर्णमासौ चातुर्मास्यानि । मै ३, ६, १० ।
२९. एतावान् वै सर्वो यज्ञो यावन्त एते पञ्च ऽर्त्विजो ( द्वावध्वर्यू , प्रस्तोता, उद्गाता प्रतिहर्ता ) भवन्ति । माश ४, ३, ५, ४ ।
३०. एतेन ( आग्रयणाख्येन ) वै देवाः यज्ञेनेष्ट्वोभयीनामोषधीनां याश्च मनुष्या उपजीवन्ति याश्च पशवः कृत्यामिव त्वद्विषमिव त्वदपजघ्नुस्तत आश्नन्मनुष्या आलिशन्त पशवः । माश २, ४, ३, ११ ।
३१. एते वै यज्ञा वागन्ता ये यज्ञायज्ञीयान्ताः । तां ८, ६, १३ ।
३२. एतैर्ह्यत्र ( यज्ञे ) उभयैरर्थो भवति यद्देवैश्च ब्राह्मणैश्च । माश ३, ३, ४, २० ।
३३. एष वै यज्ञो यदग्निः । माश २, १, ४, १९ ।
३४. एष ह वै यजमानस्यामुष्मिँल्लोकऽआत्मा भवति यद्यज्ञः । स ह सर्वतनूरेव यजमानोऽमुष्मिँल्लोके सम्भवति य एवं विद्वान्निष्क्रीत्या यजते । माश ११, १, ८, ६ ।
३५. एषा वै यज्ञस्य द्वार् यदन्तराग्नीध्रं च चात्वालं च । जै १,८४ ।
३६. किमु स यज्ञेन यजेत, यो गामिव यज्ञं न दुहीत, ( यज्ञः ) सुदोहतरो हि गोः । मै १, ४, ५ ( तु. काठ ३२,२ ) ।
३७. किमु स यज्ञेन यजेत, यो यज्ञस्य सम्भारान्न विद्यात् । मै ३, ६, ४ ।
३८. कुलायमिव ह्येतद्यज्ञे क्रियते यत्पैतुदारवाः परिधयो गुग्गुलूर्णास्तुकाः सुगंधितेजनानीति । ऐ १, २८ ।
३९. केशा वेदः ( यज्ञस्य ) । मै १, ४, ८ ।
४०. क्रूरमिव वा एतद्यज्ञे क्रियते यदग्ना अग्निं जुह्वति । मै ३, ९, ५ ।
४१. गातुं वित्त्वेति यज्ञं वित्त्वेत्येवैतदाह । माश १, ९,२, २८; ४,४,४,१३ ।
४२. गायत्री वै यज्ञस्य प्रमा, त्रिष्टुबभिमा, जगती परिमा, ऽनुष्टुबुन्मा एतानि वै छन्दाꣳसि यज्ञं वहन्ति । मै १, ४, ११ ।
४३. घृतेन त्वं ( जातवेदः ) तनुवो वर्धयस्व स्वाहाकृतꣳ हविरदन्तु देवाः । तैसं ३, १, ४, ५ ।

४४. चत्वारो वरा देया ब्रह्मण उद्गात्रे होत्रेऽध्वर्यवे, एते (ब्रह्मादयः) वै यज्ञस्य इन्द्राः। काठ ३५, १६।
४५. जागत एष यज्ञः। जै २, २८५।
४६. जाताय नमो जनिष्यमाणाय नम इति यज्ञायैव दक्षिणायै च नमस्करोति। काठसंक १२२ : ५; ६।
४७. तं (यज्ञं देवाः) विष्णा अविन्दन् दशमे। मै ४, ४, ७।
४८. तं (यज्ञम्) वेद्यामन्वविन्दन्। ऐ ३, ९।
४९. तदाहुर्यदूर्ध्वो यज्ञस्तायेत देवा एव जीवेयुर्न मनुष्याः। यदर्वाङ् तायेत मनुष्या एव जीवेयुर्न देवा इति। ऊर्ध्वश्च ह वै यज्ञस्तायतेऽर्वाङ् चाथो ह तिर्यङ्। सर्वा एव दिश इति ब्रूयात्। जै १,२५८।
५०. तद् यत् पृच्छेयुः का देवता संस्तुतो यज्ञो भवतीति, विद्युदिति ह ब्रूयात्। जै ३, ३४०।
५१. तद्यदेनेन (यज्ञेन विष्णुना) इमा ९ सर्वा ९ (पृथिवीम्) समविन्दन्त तस्माद्वेदिर्नाम। माश १, २, ५, ७।
५२. तद्वै सर्व एव यज्ञो नौः स्वर्ग्या। माश ४, २, ५, १०।
५३. तं (विश्वकर्माणम्) दिश्याभिर् (इष्टकाभिर्यज्ञः) उपैत्, ता उपाधत्त, ता दिशोऽभवन्। तैसं ५,७,५,४-५।
५४. तस्मादप्येतर्ह्येवमेवैतैर्वेदैर्यज्ञं तन्वते। यजुर्भिरेवाग्रेऽथर्ग्भिरथ सामभिः। माश ५,५,५,५।
५५. तस्य (यज्ञस्य) या प्रिया तनूरासीत्तया यजुः प्राविशत्। काठ २३,२।
५६. तस्य वा एतस्य यज्ञस्य मेघो हविर्धानं विद्युदग्निर्वर्षं ९ हविस्तनयित्नुर्वषट्कारो यदवस्फूर्जति सोऽनुवषट्कारो वायुरात्माऽमावास्या स्विष्टकृत्। तैआ २, १४,१।
५७. तान् (यज्ञान् प्रजापतिः) उदमिमीत। यावदग्निहोत्रमासीत्तावानग्निष्टोमो यावती पौर्णमासी तावानुक्थ्यो, यावत्यमावास्या तावानतिरात्रः। तैसं १,६,९,१।
५८. तासु (प्रजासु) एक एवर्धो यो यजते, स देवानां भोगाय भवति। तैसं ६,५,६,२।
५९. ते वै पञ्चान्यद् भूत्वा पञ्चान्यद् भूत्वा कल्पेतामाहावश्च हिंकारश्च प्रस्तावश्च प्रथमा च ऋगुद्गीथश्च मध्यमा च प्रतिहारश्चोत्तमा च निधनञ्च वषट्कारश्च ते यत्पञ्चान्यद् भूत्वा पञ्चान्यद् भूत्वा कल्पेतां तस्मादाहुः पाङ्क्तो यज्ञः। ऐ ३, २३; गो २, ३,२०।
६०. त्रयस्त्रि ९ शत् तन्तवो यान्वितन्वत इमं यज्ञ ९ स्वधया ये ददन्ते। काठ ३४,१९।
६१. त्रिवृत्प्रायणा हि यज्ञास्त्रिवृदुदयनाः। माश २, ३,४,१७।
६२. त्रिवृद्धि (त्र्यावृद्धि [तैआ.]) यज्ञः। माश १, १, ४, २३; २,५,१४; ३, २,१,३९; तैआ ५,४,२;११।
६३. त्रिषवणो यज्ञः। जै १,३००; २,२००; ४३१।
६४. त्रीणि ह वै यज्ञस्योदराणि गायत्री बृहत्यनुष्टुप्। जै १,३११।
६५. दश चमसा दश चमसाध्वर्यवो दश दश चमसानभिता आ दशमात् पुरुषादन्वाचष्टे समृद्धयै दशसमृद्धो ह्येष यज्ञः। मै ४,४,७।
६६. दश ते तनुवो यज्ञ यज्ञियाः। तै ३,७,५,११।

६७. दुहे यज्ञं सुदुघामिव धेनुम् । काठ ३१,१४ ।
६८. द्यावापृथिवी वै यज्ञस्य प्रतिष्ठा । काठ ३५,१८; क ४८,१६ ।
६९. द्यावापृथिव्योर्हि यज्ञ उपश्रितः । तैसं २, ६, ९, ५ ।
७०. द्विर्ह वै यजमानो जायते मिथुनादन्यज्जायते यज्ञादन्यत् । तद्यन् मिथुनाज्जायते तदस्मै लोकाय जायते । अथ यद्यज्ञाज्जायते तदमुष्मै लोकाय जायते । जै १, २५९ ।
७१. ध्रुवाया एव सर्वो यज्ञः प्रभवति । माश १, ३, २, २ ।
७२. नर्चा न यजुषा पङ्क्तिराप्यते ऽथ किं यज्ञस्य पाङ्क्तत्वमिति ? धानाः, करम्भः, परिवापः, पुरोडाशः, पयस्या तेन पङ्क्तिराप्यते, तद्यज्ञस्य पाङ्क्तत्वम् । तैसं ६,५, ११,४-५ ।
७३. न वै धानाभिर्न मन्थेन यज्ञो यदेव पुरोडाशस्तेन यज्ञः ( + क्रियते [काठ.] ) । मै १, १०, १७; काठ ३६, ११ ।
७४. नाऽदक्षिणेन यज्ञेन यजेत । काश २, २, १, १८ ।
७५. नाभिर्वा एषा यज्ञस्य यद्धोता । काठ २६, १ ।
७६. नासामा यज्ञो ऽस्ति । माश १, ४, १, १ ।
७७. पङ्क्तिप्रायणो वै यज्ञः पङ्क्त्युदयनः । तैसं २, ६, १०, ४ ।
७८. पञ्चसवनो वै यज्ञस्त्रीणि सवनान्यवभृथो अनूबन्ध्या सवनानां पञ्चमी । मै ४, ८, ४ ।
७९. परोऽक्षं यज्ञः । माश ३, १,३,२५ ।
८०. पवित्रे स्थो वैष्णव्यौ, इति यज्ञो वै विष्णुर्यज्ञिये स्थ इत्येवैतदाह । माश १, १,३,१ ।
८१. पुरुषो वै यज्ञस्तस्य शिर एव हविर्धानं मुखमाहवनीय उदरं सदः, अन्तरुक्थानि, बाहू मार्जालीयश्चाग्नीध्रीयश्च, या इमा देवतास्तेऽन्तःसदसं धिष्ण्याः, प्रतिष्ठे गार्हपत्यव्रतश्रपणाविति । गो २,५,४ (तु. कौ १७,७) ।
८२. पुरुषो वै यज्ञस्तेनेदं सर्वं मितम् । माश १०,२,१,२ ।
८३. प्रजापतिर्यज्ञानसृजताग्निहोत्रं चाग्निष्टोमं च, पौर्णमासीं चोक्थ्यं चामावास्यां चातिरात्रं च । तैसं १.६,९,१ ।
८४. प्रजास्सृष्ट्वा सो (प्रजापतिः) ऽकामयत यज्ञꣳ सृजेयेति स एतꣳ सप्तहोतारमपश्यत् तेन यज्ञमसृजत । काठ ९,१६ ।
८५. प्राणैरु यज्ञस्तायते । जै २,४३१ ।
८६ प्राणो धूमः (यज्ञस्य) । माश ६,५,३,८ ।
८७. ब्रह्मणा यज्ञस्यार्तं निष्क्रियते । क ३६,२ ।
८८. मनसा हि पुरुषो यज्ञमभिगच्छति । तैसं ५,१,३,२ ।
८९. मनो (+वै यज्ञस्य [ऐ.]) मैत्रावरुणः । ऐ २, ५;२६; २८; माश १२,८,२,२३ ।
९०. मृगधर्मा (पलायनशीलः) वै यज्ञः । तां ६,७,१० ।
९१. यजुषा च वा आहुत्या च यज्ञः सन्ततो यद्यजुर्वदन्नाहुतिं जुहोति, यजुषा चैवाहुत्या च यज्ञꣳ संतनोति । मै ४,७,७ ।
९२. यजुषा ह वै देवा अग्रे यज्ञं तेनिरेऽथर्चाथ साम्ना । माश ४,६,७,१३ ।
९३. यज्ञं यज्ञायज्ञियेनेडा वा इदं सर्वं...प्राप । मै ४,२,२ ।

९४. यज्ञं वावास्मै (इन्द्राय) तत् (वीर्यम्) प्रायच्छत् । काठ १२,३ ।
९५. यज्ञ ँ ह्येवेद ँ सर्वमनु । माश ३,६,३,१ ।
९६. यज्ञ एव सविता । गो १,१,३३: जैउ ४,१२,१,७ ।
९७. यज्ञमाहुर्भुवनस्य नाभिम् । तैसं ७,४,१८,२; काठ ४४,७ ;
९८. यज्ञस्य (चक्षुषा) देवाः (विपश्यन्ति) । तैसं २,२,९,३ ।
९९ यज्ञस्य शीर्षच्छिन्नस्य (रसो व्यक्षरत्स) पितॄनगच्छत् । माश १४,२,२,११ ।
१००. यज्ञस्याऽऽत्मा यजमानः श्रद्धा पत्नी शरीरमिध्ममुरो वेदिर्लोमानि बर्हिर्वेदः शिखा हृदयं यूपः काम आज्यं मन्युः पशुस्तपोऽग्निर्दमः शमयिता दक्षिणा वाग्घोता प्राण उद्गाता चक्षुरध्वर्युर्मनो ब्रह्मा श्रोत्रमग्नीद् यावद् ध्रियते सा दीक्षा यदश्नाति तद्धविर्यत् पिबति तदस्य सोमपानं यद्रमते तदुपसदो यत्संचरत्युपविशत्युत्तिष्ठते च स प्रवर्ग्यो यन्मुखं तदाहवनीयो या व्याहृतिराहुतिर्यदस्य विज्ञानं तज्जुहोति यत्सायंप्रातरत्ति तत्समिधं यत्प्रातर्मध्यन्दिन ँ सायं च तानि सवनानि ये अहोरात्रे ते दर्शपूर्णमासौ येऽर्धमासाश्च मासाश्च ते चातुर्मास्यानि य ऋतवस्ते पशुबन्धा ये संवत्सराश्च परिवत्सराश्च ते ऽहर्गणाः सर्ववेदसं वा एतत्सत्रं यन्मरणं तदवभृथः । एतद्वै जरामर्यमग्निहोत्र ँ सत्रम् । तैआ १०, ६४, १ ।
१०१. यज्ञस्यैतदतिरिच्यते यद् यूपस्यातिरिच्यते । क ४१, २ ।
१०२. यज्ञस्सोमो राजा । जै १, २५९ ।
१०३. यज्ञायज्ञीयं वाव यज्ञस्य ऊधः । तस्यैते स्तना गायत्रं (+ च [जै १, ३४०]) रथन्तरं च, बृहच्च वामदेव्यं च । जै १, १७३; ३०४ ।
१०४. यज्ञेन भ्रातृव्यमपनुदते । क ३९, ५ ।
१०५. यज्ञेनैव यज्ञ ँ सन्तनोति । तैसं ३, २, ६, ४ ।
१०६. यज्ञो दक्षिणायाम् (प्रतिष्ठितः) । काठ ३४,१६ ।
१०७. यज्ञो देवाञ्जिगाति । तैसं २, ५, ७, ४ ।
१०८. यज्ञो देवेभ्यो निलायत विष्णू रूपं कृत्वा स पृथिवीं प्राविशत् । तैसं ६, २, ४, २ ।
१०९. यज्ञो यदग्रे व्यभवत् स त्रेधा व्यभवत्, स वा ऋक्ष्वेव तृतीयेनाश्रयत, सामसु तृतीयेन, यजुःषु तृतीयेन । या वा अस्य प्रिया तनूरासीत् तया यजुरश्रयत । मै ३, ६,५ ।
११०. यज्ञो रथः (विकङ्कतः [माश.] ) । काठ २३, ६; माश १४, १, २, ५ ।
१११. यज्ञो वा अग्निः । जै २, २३० ।
११२. यज्ञो वा अवति (°तिः [जै.]) । जै १,७०; तां ६, ४, ५ ।
११३: यज्ञो वाव देवरथः । तस्य बहिष्पवमानमेव रथमुखं बृहद्रथन्तरे अश्वावाज्यानि योक्त्राणि अभीशू पवमानौ पक्षसी औशनकावे आणी नौधसकालेये बन्धुराधिष्ठानं वामदेव्यमुपस्थो यज्ञायज्ञीयमध्यास्थाता स एष पुरुषः । जै १, १२९-१३० ।
११४. यज्ञो वाव दैव्यो वाजी । जै १, ८३ ।
११५. यज्ञो (+ वै [तां ११, ४, ५]) विदद्वसुः । तां ११, ४, ५; १५, १०, ४ ।
११६. यज्ञो विष्णुः । मै ४, १,१२; गो २, ६, ७; तां १३,३,२; माश १, ९, ३, ९ ।

११७. यज्ञो वै देवानामात्मा (भुवनज्येष्ठः [कौ.]) । कौ २५,११; माश ९, ३,२,७ ।

११८. यज्ञो वै देवेभ्योऽपाक्रामत्स सुपर्णरूपं कृत्वाचरत्तं देवा एतैः (सौपर्णैः) सामभिराराभन्त । तां १४, ३, १० ।

११९. यज्ञो वै पवित्रम् (बृहन्विपश्चित् [माश.]) । काठसंक ७२:५; माश ३, ५,३,१२ ।

१२०. यज्ञो वै वसुः (विट् [माश १४, ३, १,९]) । माश १, ७, १, ९; १४ ।

१२१. यज्ञो वै विशो यज्ञे हि सर्वाणि भूतानि विष्टानि । माश ८, ७,३,२१ ।

१२२. यज्ञो वै विश्वा रूपाणि । यज्ञमेवैतेन सम्भरति । जै १,७४ ।

१२३. यज्ञो वै विष्णुः ( वैष्णुवारुणः [कौ १६,८]) । मै ४, १,३;६; काठसंक १३९ : ४; काश ३, २, ३,३; कौ ४, २; १६,८;१८, ८; १४; गो २,४, ६; जै २, ६८; ३, १२९; तां ९, ६, १०; ७,१०; तै १,२,५,१; माश १,१,२,१३; ३,२,१,३८; १३, १,८,८ ।

१२४. यज्ञो वै (+ हि [तै.]) श्रेष्ठतमं कर्म । काठ ३०, १०; क ४६,८; तै ३,२,१,४; माश १,७, १,५ (तु मै ४,१,१) ।

१२५. यज्ञो वै सुतर्मा नौः कृष्णाजिनं वै सुतर्मा नौर्वाग्वै सुतर्मा नौः । ऐ १,१३ ।

१२६. यज्ञो वै सुम्नम् (शुक्रः [कौ.; जै.]) । काठ २१, ८; कौ २, ४८२; जै १, ९३; ९४; माश ७, २,२,४;३,१,३४ ।

१२७. यज्ञो वै सूनृता (स्वाहाकारः [माश.]) । तैसं १,६,११,२; माश ३,१,३,२७; तैआ ५, २,६ ।

१२८. यज्ञो वै सोमाः शुक्राः । जै १,९३ ।

१२९. यज्ञो वै स्वरहर्देवाः सूर्य्यः । माश १, १,२,२१ ।

१३०. यज्ञो वोऽन्नम् (इति प्रजापतिर्देवानब्रवीत्) । माश २,४, २,१ ।

१३१. यत्कीटावपन्नेन जुहुयादप्रजा अपशुर्यजमानः स्यात् । क ४८,१६ ।

१३२. यत्पञ्चकपालो यज्ञमेवालभते । काठ ९,३ ।

१३३. यत्र वै यज्ञस्यातिरिक्तं क्रियते तद्यजमानस्यातिरिक्तमात्मन् (शरीरे) जायते, यद्नाप्तं वै यज्ञश् छिद्यते क्षोधुको यजमानो भवति । मै १, ४,११ ।

१३४. यत् संयद्वसुरित्याह यज्ञ ९ हि संयन्तीतीदं वस्विति । माश ८,६,१,१९ ।

१३५. यत्सोम ९ (यजति) यज्ञं तेन (यजति) । मै ३,७,१ ।

१३६. यथा वै शश एवं यज्ञः । यो वै शशमुत्सर्गं लिप्सते, नैनं स गृह्णाति । अथ य एनमनुत्सर्गं लिप्सते, स एवैनं गृह्णाति । जै २,३९५ ।

१३७. यद्यज्ञेऽभिरूपं तत्समृद्धम् । कौ ९,६; गो २,४,१८ ।

१३८. यद्येनं बहिष्पवमानेऽनुव्याहरेद् यज्ञस्य रेतः सिक्तम्...यद्येनमेकदेवत्य आज्येऽनुव्याहरेद् यज्ञस्य प्रेतिम्...यद्येनं द्विदेवत्य आज्येऽनुव्याहरेद् यज्ञस्य प्रतिष्ठाम् (पादौ)...यद्येनं माध्यन्दिनस्य पवमानस्य गायत्र्यामनुव्याहरेद् यज्ञस्यावाञ्चं प्राणम् (पायुम्)...यद्येनं बृहत्यामनुव्याहरेद् यज्ञस्य शिश्नम्...यद्येनं त्रिष्टुभ्यनुव्याहरेद् यज्ञस्य नाभिम्...यद्येनं पृष्ठेष्वनुव्याहरेद् यज्ञस्येन्द्रियं वीर्यम्...यद्येनमार्भवस्य पवमानस्य गायत्र्यामनुव्याहरेद् यज्ञस्य प्राणम्...यद्येनमुष्णिक्ककुभोरनुव्याहरेद् यज्ञस्य चक्षुषी...यद्येनमनुष्टुभ्यनुव्याहरेद् यज्ञस्य वाचम्...यद्येनं जगत्यामनुव्याहरेद् यज्ञस्य श्रोत्रम्...यद्येनं यज्ञायज्ञीयेऽनुव्याहरेद्

यज्ञस्य शिरः । पूर्णमेवाहमेतं साङ्गं सतनुं सर्वं यज्ञं वेद । जै १,२५४-२५६ ।
१३९. यद्वै यज्ञस्य दुरिष्टं तद्वरुणो गृह्णाति । तां १३.२,४; १५,१,३ ।
१४०. यद्वै यज्ञस्य न्यूनं प्रजननमस्य तदथ यदतिरिक्तं पशव्यमस्य तदथ यत्संकसुकऽश्रिया ऽस्य तदथ यत्सम्पन्नऽस्वर्ग्यमस्य तत् । माश ११,४,४,८ ।
१४१. यद्वै यज्ञस्यातिरिच्यते तद्वरुणो ( वरुणस्तद् [काठ., क.]) गृह्णाति । मै ४, ८, ५; काठ २९. ३; क ४५,४ ।
१४२. यद्वै यज्ञस्यान्यूनातिरिक्तं तच्छिवम्. ( तत्स्विष्टम् ) । माश ११, २,३,९[२] ।
१४३. यद्वैष्णव्या (जुहोति), यज्ञाय तेन (आह्रियते) । मै ३,९,१ ।
१४४. यद् व्यूहति, यज्ञस्य गोपीथाय (रक्षणाय) । मै २,३,१ ।
१४५. यवैर्वा आदित्या अङ्गिरसां यज्ञमयुवत । यद्यज्ञं यवैरयुवत तद् यवानां यवत्वम् । जै २,११७ ।
१४६. यूपो वै यज्ञस्य दुरिष्टमामुञ्चते । मै ३,९,४ ।
१४७. येन (मनसा) यज्ञस्तायते सप्तहोता । काठसंक १३४ : २ ।
१४८. यो वै विष्णुः स यज्ञः । माश ५,२,३,६ ।
१४९. रक्षाऽसि यज्ञं न हिऽस्युरिति । माश १, ८,१,१६ ।
१५०. रक्षोहणं वलगहनं वैष्णवीम् ( वाचं वद ) इति रक्षसामपहत्यै ··· रक्षोहणौ वलगहनौ पर्यूहामि वैष्णवी इति रक्षसामपहत्यै यद् वैष्णवी इति । यज्ञो वै विष्णुः । काठ २५,९ ।
१५१. रेतस्यैवापि सर्व आत्मा (यज्ञस्य) । जै १,२६७ ।
१५२. रेतो वै ( वाऽअत्र [माश.] ) यज्ञः । काश ४, ८, ४,१४; माश ७, ३,२, ९ ।
१५३. रोचनो नाम लोकस्तपसि विष्टो वसन्तो गोप्तारस्ते हि प्रथमे देवानामियुस्तस्मात्ते परार्ध्याः । यज्ञो ऽधिपतिर्, यत् सुवर्णस्य हिरण्यस्य रूपं तद् रूपं, सत्ये प्रतिष्ठितः । जै ३, ३४८ ।
१५४. वरुणः ( यज्ञस्य ) स्विष्टम् ( पाति ) । ऐ ३, ३८; ७, ५ ।
१५५. वरुणेन ( यज्ञस्य ) दुरिष्टं ( शमयति ) । तै १, २, ५, ३ ।
१५६. वरुणो वै यज्ञः क्रीतो विष्णुः प्रततः । मै ३, ७, ९ ।
१५७. वसुर्यज्ञो वसुमान् यज्ञः । काठ ३२, ४ ।
१५८. वाग्यज्ञस्य (रूपम्) । माश १२, ८, २, ४ ।
१५९. वाग्वै यज्ञः । ऐ ५, २४; माश १, १, २, २; ३,१,३, २७; २, २, ३; (तु. माश. १, १,४, ११;५, २, ७; ३, १, ४, २) ।
१६०. वाचा यज्ञः सन्ततः । मै १, ११, ९ ।
१६१. वाचा ह्यूर्ध्वो यज्ञस्तायते । जै १, ८२ ।
१६२. वाचि वै यज्ञः श्रितः । तैसं २, ६, ९, २ ।
१६३. वातो वै यज्ञः । माश ३, १, ३, २६ ।
१६४. विच्छेत्स्यन्ते वा अदक्षिणा यज्ञाः । जै २, ११६ ।
१६५. विराड् वै यज्ञः । माश १, १, १,२२; २, ३, १, १८; ४, ४,५, १९ ।

१६६. विष्णवे हि गृह्णाति यो यज्ञाय ( हविः ) गृह्णाति । माश ३, ४, १, १४ ।
१६७. विष्णुर्यज्ञः । तैसं २, ३, ११, २; ५, ५, १, ४; मै १, ६,८; २, १, ७; ३, ५; ३, १, १०; काठ ११, ८; गो २, १, १२; तै ३, ३, ७, ६ ( तु. मै ३,८,८; ४,५,४; ६,२;५; काठ २५, ८; ऐ १, १५ ) ।
१६८. विष्णुर्यज्ञेन (सहागच्छतु) । तैआ ३, ८, २ ।
१६९. विष्णुर्वै यज्ञस्य दुरिष्टं पाति । ऐ ३, ३८; ७, ५ ।
१७०. विष्णोः शंयोरहं देवयज्यया यज्ञेन प्रतिष्ठां गमेयम् । तैसं १, ६, ४, ३ ।
१७१. वैराजो यज्ञः । गो १, ४,२४; २, ६, १५; जै २, ४३१ ।
१७२. व्यृद्धं (+उ [माग.]) वा एतद्यज्ञस्य यदयजुष्केण क्रियते । तैसं ५,१,२,१; माश १३,१,२,१ ।
१७३. व्यृद्धं वै तद्यज्ञस्य यन्मानुषम् । माश १, ४, १,३५; ३, ३५; ८, १, २९; ३, २,२,१५; ३, ४, ३१ ।
१७४. व्रतेन यज्ञः सन्ततः । मै ३, ६, ६; ९ ।
१७५. शतोन्मानो वै यज्ञः । माश १२, ७, २, १३ ।
१७६. शिरो वा एतद्यज्ञस्य यद्धविर्धानम् । काठ २५, ८ ।
१७७. स ꣳ वत्सरः परमेष्ठी धृतव्रतो यज्ञं नः पातु रजसः परस्मात् । मै २, १३, २२ ।
१७८. संवत्सरसंमितो वै यज्ञः । पञ्च वाऽ ऋतवः संवत्सरस्य तं पञ्चभिराप्नोति तस्मात्पञ्च जुहोति । माश ३, १, ४, ५ ।
१७९. संवत्सरो वै यज्ञः । मै १, १०, ५; क ४८, १८ ।
१८०. स एतं त्रिवृतं सप्ततन्तुमेकविंशतिसंस्थं यज्ञमपश्यत् । गो १, १,१२ ।
१८१. स एष इलान्तो यज्ञस्सप्तनाभिः । तस्य त्रिवृदेव स्तोमो नाभिर्गायत्री नाभिः पुरोऽनुवाक्या नाभिर्याज्या नाभिर्वषट्कारो नाभिराहुतयो नाभिर्दक्षिणा नाभिः । जै १, २५० ।
१८२. स ( सोमः ) तायमानो जायते स यन्जायते तस्माद्यज्ञो यज्ञो ह वै नामैतद्यद्यज्ञ इति । माश ३, ९, ४, २३ ।
१८३. स ( प्रजापतिः ) देवानब्रवीद् । एतेन यूयं त्रयेण वेदेन यज्ञं तनुध्वमिति । ते देवा अनेन त्रयेण वेदेन यजमाना अप पाप्मानमघ्नत प्र स्वर्गं लोकमजानन् । जै १,३५८ ।
१८४. सप्त सुत्याः सप्त च पाकयज्ञाः हविर्यज्ञाः सप्ततथैकविंशतिः । सर्वे ते यज्ञा अङ्गिरसोऽपियन्ति नूतना यानृषयो सृजन्ति ये च सृष्टाः पुराणैः । गो १,५, २५ ।
१८५. समुद्रयोनिर्वै यज्ञः । काठ २९, ३ ।
१८६. सम्यगायुर्यज्ञो यज्ञपतौ दधातु । काठ ३०, ९ ।
१८७. स ( पुरुषः ) यज्ञः । गो १, १, ३९ ।
१८८. स यः स्तुतशस्त्रयोर्दोहमविद्वान् यजते तं यज्ञो दुहे, स इष्ट्वा पापीयान् भवति, य एनयोर्दोहं विद्वान् यजते, स यज्ञं दुहे, स इष्ट्वा वसीयान् भवति । तैसं ३, २, ७, ३ ।
१८९. सरस्वतीम ꣳ रुद्रैर्यज्ञमावीत् । मै ४, १३, ८ ।
१९०. सर्वेभ्यो हि कामेभ्यो यज्ञः प्रयुज्यते । तैसं २, ४, ११, २ ।
१९१. स वा एष यज्ञः पञ्चविधः । अग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुः सोमः ··· स एष

यज्ञानां सम्पन्नतमो यत्सोम एतस्मिन् ह्येताः पञ्चविधा अधिगम्यन्ते । यत्प्राक् सवनेभ्यः सैका विधा, त्रीणि सवनानि यदूर्ध्वं सा पञ्चमी । ऐआ २, ३, ३ ।

१९२. स वा एष (अश्वमेधः) वीर्यमेव यज्ञो यर्हि वा एतेन पुरेजिरे, सर्वमेव वीर्यवदास । जै.२,२६६।

१९३. स हैष यज्ञ उवाच । नग्नताया वै बिभेमीति का ते ऽनग्नतेत्यभित एव मा परिस्तृणीयुरिति तस्मादेतदग्निमभितः परिस्तृणन्ति तृष्णाया वै बिभेमीति का ते तृप्तिरिति ब्राह्मणस्यैव तृप्तिमनुतृप्येयमिति तस्मात्स ऽ स्थिते यज्ञे ब्राह्मणं तर्पयितवै ब्रूयाद्यज्ञमेवैतत्तर्पयति । माश १, ७, ३, २८ ।

१९४. सैषा त्रयी विद्या ( ऋक्सामयजूंषि ) यज्ञः । माश १, १, ४, ३ ।

१९५. स्फ्यश्च कपालानि चाग्निहोत्रहवणी च शूर्पं च कृष्णाजिनं च शम्या चोलूखलं च मुसलं च दृषच्चोपला चैतानि वै दश यज्ञायुधानि,य एवं वेद मुखतो ऽस्य यज्ञः कल्पते । तैसं १,६, ८, २-३ ।

१९६. स्रवति वै यज्ञो ऽस्र ऽ स्थितः । क ४६, ४ ।

१९७. स्वर्गो वै लोको यज्ञः । कौ १४, १ ।

१९८. हनू वा एते यज्ञस्य यदधिषवणे । काठ २५, ९ ।

१९९. हविष्पङ्क्तिर्वै यज्ञो नाराशंसपङ्क्तिः । काठ २९,१ ।

२००. हवी ऽषि ह वा ऽ आत्मा यज्ञस्य । माश १, ६, ३,३९ ।

२०१. ह्वलति वा एष यो यज्ञपथादेत्येति वा ऽ एष यज्ञपथाद्यद्यज्ञियान्यज्ञेन प्रसजत्यज्ञियान्वाऽएतदयज्ञेन प्रसजति शूद्रांस्त्वद्यांस्त्वत् । माश ५, ३, २, ४ ॥ [°ज्ञ- अक्षर- १; अक्षरपङ्क्ति- ३; अग्नि- ९९; १३९; १६४; २२१; २२२; २२५; ४३०; ४४५; ५८३; ७०४; अग्निष्टोम- १४; १८; अग्निहोत्र- ४५; अध्वर- १; ७; अध्वर्यु- ३; २१; २५;३२; अनस्- २; अनुष्टुभ्- ५६; अनृत- ३५; अन्तरिक्ष- ३०; अन्धस्- ३; अप्- १२; ८१; ८२; १०७; १०८; १२३; १२८; २१०; अमृत- २९; अर्यमन्- १४; असुर- २३; ५९; ६०; आकूत-; आघार- ५; ६; १आज्य- ६; ११; १७; आज्यभाग- २; आतिथ्य- ३; आत्मन्- २; आदित्य- १६१; २२७; ३६९; आयुस्- ३९-४१; ४९; आश्रावण-; आहवनीय- ३८; आहुति- ५; इन्द्र- ८२; १५१; १५२; १८८; २६३; ३५५; उक्थामद- ४; उखा- ५; १५; उत्तरवेदि- १३; उद्गातृचमस-; उपसद्- १०; उपांश्वन्तर्याम- ८; ऊतीक-; ऊर्ज्- ७;१५; ऋच्- १४;३२; ऋजीष- १; ऋत-५; १३;२४; एकहोतृ-; ऐन्द्र- ३५; ४०; ४६; ऐन्द्राग्न- ११; कृष्णाजिन- १५; १७; क्रतु- ४; गायत्र- २३; गायत्री- ६४; गो- १७; ४८; गोमत्-; गौरीवित- ३; घृतश्चुन्निधन- ३; चतुर्होतृ- १०; चात्वाल- ४; छन्दस्- १५; ६०;७२; ज्योतिस्- १६; तनूनपात्- १; तनूनप्तृ- १; तरस्- १; तार्प्य- ६; त्रयोवेद-; त्रिधातु- २; त्रिरात्र- ४; दक्षिणतस् ११; २दक्षिणा- १८; २०; २२-२४; दिव्- १४०; दिश्- ४६; देव- १५;२४;४१; ९९; १८९-१९९; २०७;२५८;२६३; देवता- २३;३५; देवयान- ८; देवरथ- ४; दैवी- ३; द्वादशरात्र- ३; द्वादशाह- ५; धेनु- ४;नमस्- ७; नराशंसपङ्क्ति-; पङ्क्ति- २८;२९; पञ्चदश- २७; पत्नी- ८; पयस्- २४; पवमान- १८; पवित्रपति-; पशु- ४९;१३८;१६७;१९८; २१७; पाङ्क्त- १३; पुरुष- ६०; ६२; ६६;७१;

पुरुषसंमित-; पुरोडाश- २; २७; प्रजा- ८०-८२; प्रजापति- ३८; ७८; १२१; १४७; १५३; २१७; २२५; २२६; २६४; २९०; प्रणीता- २; प्रभु- २; प्रवर्ग्य- ११; १४; १६; प्रस्तोतृ- १; प्राजापत्य- १७; प्राण- १०३;१४९; प्रातः सवन- १; प्रायश्चित्ति-; बहिष्पवमान- ११; ब्रह्मन्- ८०; १०१; ब्राह्मण- १२; भग- ७; भङ्ग-; भुज्यु-; भुवन- २; ३; भ्रातृव्य- १०; मख- ४; मघवत्-; मधु- १९; मनस्- ७४; मनु- १६; २१; महत्-; महस्- ५; महिमन्-; मित्र- ३; ३२; मृत्यु- १९; मेनि- २; मैत्रावरुण- १३; यजमान- २१; २५; २७; २८; ३०; ३६ द्र.]।

**यज्ञ-काम**- पङ्क्ति- २० द्र.।

**यज्ञ-क्रतु-**

१. एतं पुरुषमेधं पञ्चरात्रं यज्ञक्रतुमपश्यत्तमाहरत्तेनायजत। माश १३,६,१,१।

२. एते वै सर्वे यज्ञक्रतवो यदग्निष्टोम उक्थोऽतिरात्रः। जै ३,८॥ [°तु- ऋतु- ३ द्र.]।

**यज्ञ-क्रम**- अथातो यज्ञक्रमाः अग्न्याधेयमग्न्याधेयात्पूर्णाहुतिः, पूर्णाहुतेरग्निहोत्रमग्निहोत्राद्दर्शपूर्णमासौ, दर्शपूर्णमासाभ्यामाग्रयणमाग्रयणाच्चातुर्मास्यानि चातुर्मास्येभ्यः पशुबन्धः, पशुबन्धादग्निष्टोमोऽग्निष्टोमाद्राजसूयो राजसूयाद्वाजपेयो वाजपेयादश्वमेधोऽश्वमेधात्पुरुषमेधः, पुरुषमेधात्सर्वमेधः सर्वमेधाद्दक्षिणावन्तो दक्षिणावद्भ्योऽदक्षिणा अदक्षिणाः सहस्रदक्षिणे प्रत्यतिष्ठंस्ते वा एते यज्ञक्रमाः। गो १,५,७।

**यज्ञ-नामधेय**- मख इत्येतद्यज्ञनामधेयम्। गो २,२,५।

**यज्ञ-पति**- वत्सा उ वै यज्ञपतिं वर्धन्ति यस्य ह्येते भूयिष्ठा भवन्ति स हि यज्ञपतिर्वर्धते। माश १,८,१,२८॥ [°ति- यजमान- १९; २४; ३३ द्र.]।

**यज्ञ-पथ**- मित्राबृहस्पति- द्र.।

**यज्ञ-मुख-**

१. यज्ञमुखं वा अंशुश्च रश्मिश्च। काठ २१,११।

२. यज्ञमुखं वै धर्त्रो यज्ञमुखं चतुष्टोमः। तैसं ५, ३,४,४-५।

३. यज्ञमुखं वै वसवो यज्ञमुखं रुद्रा यज्ञमुखं चतुर्विंशः। तैसं ५, ३, ४, ३।

४. यज्ञमुख ऽ सामिधेन्यः। मै १,९,५।

५. यज्ञमुखे यज्ञमुखे वै यज्ञं रक्षा ऽसि जिघा ऽसन्ति। क ३०, १॥ [°ख- अग्नि- २२०; अग्निष्टोम- ३०; अग्निहोत्र- ४७; अग्नीध्- ६; उपांशु- १२; ग्रावन्- ७; जुहू- ७; त्रिवृत्- ३७; पवमान- २७; प्रयाज- ८; प्राची- २४; बहिष्पवमान- ८; मित्रावरुण- २३ द्र.]।

**यज्ञ-मुह्** (रक्षस्-)- त (देवा मनुष्याणां स्वर्गगमनवारणाय) एतान् यज्ञमुहो रक्षांसि प्रत्यौहंस्तद्यद् दीक्षितो मीयते यद् रुध्यते एते हैव तत् कुर्वन्ति, तद् बृहद्रथन्तरे एवातिनयतस्तान् यानेते (यज्ञमुहो रक्षांसि) घ्नन्त्यनेत्रान् हैव तान् घ्नन्ति। ये बृहद्रथन्तरे अवसृजन्ति तस्माद् बृहद्रथन्तरे नावसृज्ये। जै २,४२३।

**यज्ञ-रूप**- तम् (यज्ञरूपं प्रजापतिम्) एव तर्पयति, स एनं (आमयाविनम्) तृप्त आयुषाऽभि पवते। तैसं ३,२,३,४॥ [°प- घृत- ६ द्र.]।

यज्ञ-वाह्- छन्दस्- १४ द्र. ।

यज्ञ-विभ्रष्ट-

१. आयन्तीयं यज्ञविभ्रष्टाय ब्रह्मसाम कुर्यात् । तां ८,२,९ ।

२. स यो यज्ञविभ्रष्ट स्याच्छायन्तीयमस्य पृष्ठेषु ब्रह्मसाम कुर्युः । जै ३,२६४ ।

यज्ञ-हन्- दिव्- १५८; देव- २१९; २२० द्र. ।

यज्ञायज्ञीय (सामन्-)-

१. अतिशयं वै द्विपदां यज्ञायज्ञीयम् । तां ५,१,१९ ।

२. अथ यज्ञायज्ञीयं रेत सिक्तिरेव सा । जै १,३०६ ।

३. अथ यज्ञायज्ञीयं शिर एव तत् …स एषोऽपहतपाप्मा यज्ञ एव प्रत्यक्षम् । जै १,२५४ ।

४. अथ यज्ञायज्ञीयं प्रज्ञातमग्निष्टोमसाम । जै २,१९५ ।

५. एष ह वै स्वर्गो लोको यद् यज्ञायज्ञीयम् । जै २,४२५ ।

६. एषा वै प्रत्यक्षमनुष्टुब्यद्यज्ञायज्ञीयम् । तां १५,९,१५ ।

७. एषा वै शिशुमारी यज्ञपथेऽप्यस्ता यज्ञायज्ञीयं यद्गिरागिरेत्याहात्मानं तदुद्गाता गिरति । तां ८,६,९ ।

८. कथमिव यज्ञायज्ञीयङ्केयमित्याहुर्यथाऽनड्वान् प्रस्तावयमाण इत्थमिव चेत्थमिव चेति । तां ८,७,४ ।

९. चन्द्रमा वै यज्ञायज्ञियं यो हि कश्च यज्ञः संतिष्ठतऽएतमेव तस्याहुतीनां रसोऽप्येति तद्यदेतं यज्ञोयज्ञोऽप्येति तस्माच्चन्द्रमा यज्ञायज्ञियम् । माश ९,१,२,३९ ।

१०. ज्यैष्ठ्यं वै यज्ञायज्ञीयम् । जै २,२८३ ।

११. देवा वै ब्रह्म व्यभजन्त तस्य यो रसोऽत्यरिच्यत तद्यज्ञायज्ञीयमभवत् । तां ८,६,१ ।

१२. पन्था वै यज्ञायज्ञीयम् । तां ४,२,२१ ।

१३. पशवोऽन्नाद्यं यज्ञायज्ञीयम् । तां १५,९,१२ ।

१४. यज्ञायज्ञा वो अग्नये इति भवति । एष ह वै यज्ञोयज्ञो यद् यज्ञायज्ञीयम् । यज्ञंयज्ञं वहतीति ह वै यज्ञायज्ञीयस्य यज्ञायज्ञीयत्वम् । जै १, १७३ ।

१५. यज्ञायज्ञीयं वाव यज्ञस्योधः । तस्यैते स्तना गायत्रं (+च [जै १,३४०]) रथन्तरं च बृहच्च वामदेव्यं च । जै १, १७३; ३०४ ।

१६. यज्ञायज्ञीयं साम (प्रजापतिः पद्भ्यामेव प्रतिष्ठाया: असृजत) । जै १, ६९ ।

१७. यज्ञायज्ञीयस्य स्तोत्रे वरं दद्यात् । जै १, २९७ ।

१८. यज्ञेयज्ञे नो (अग्नेर्वैश्वानरस्य हरः) भविष्यतीति (देवाः) अब्रुवन् । तद् यज्ञायज्ञीयमभवत् । तद् यज्ञायज्ञीयस्य यज्ञायज्ञीयत्वम् । जै १, १७० ।

१९. योनिर्वै यज्ञायज्ञीयमेतस्माद्वै योनेः प्रजापतिर्यज्ञमसृजत यद्यज्ञं यज्ञमसृजत तस्माद्यज्ञायज्ञीयम् । तां ८, ६, ३ ।

२०. वयो वै यज्ञायज्ञीयम् । जै १, १७५ ।

२१. वागिति यज्ञायज्ञीयस्य निधनम् । जै २, १०१ ।

२२. वाग्वै यज्ञायज्ञीयम् । जै १, ३५२; २, १४५; २०२; २५३; २६०; २६४; ४१३; ३, २८९ (तु. तां ५, ३, ७; ११, ५, २८)।

२३. वाचो रसो यज्ञायज्ञीयम् । तां १८, ५, २१; ११, ३ ।

२४. विद्युद् यज्ञायज्ञीयस्य (ज्योतिः) । जै १, २९२; २, ४३३ ।

२५. स्वर्गो वै लोको यज्ञायज्ञियम् । माश ९, ४, ४, १० ॥ [°य- अग्नि- १६४; अत्यायुस्-; अनुष्टुभ्- ३८; अप्- १२८; आत्मन्- ३३; आदित्य- ४; तेजस्- १४; निधन- ११; पशु- १६६; पुच्छ- ३;४; पृथिवी- ५४; प्रतिष्ठा- ६; ब्रह्मन्- ७३;९१; महाव्रत- २०; यज्ञ- ९३; १०३ द्र.]।

यज्ञिय,या-

१. तन्न सर्व इवाभिप्रपद्येत ब्राह्मणो वैव राजन्यो वा वैश्यो वा ते हि यज्ञियाः । माश ३,१,१,९।

२. तस्मादेष ( विकङ्कतः ) यज्ञियो यज्ञपात्रीयो वृक्षः । माश २, २, ४, १० ।

३. वनस्पतयो हि यज्ञिया न हि मनुष्या यजेरन् यद्वनस्पतयो न स्युः । माश ३,२,२,९ ।

४. वहन्तीनां (अपाम् ) गृह्णाति, या एव मेध्या यज्ञियाः सदेवा आपस्तासामेव गृह्णाति । तैसं ६, ४, २, ३ ।

५. वाग्घि यज्ञिया । मै ३, ७, ५ ॥ [°य- अप्- ७९; आर्य-; गो- २७; देव- ११२ द्र.]।

यज्ञोपवीत- दक्षिणं बाहुमुद्धरतेऽवधत्ते सव्यमिति यज्ञोपवीतमू । एतदेव विपरीतं प्राचीनावीत ँसंवीतं मानुषम् । तैआ २, १, १ ।

यज्ञोपवीतिन्- प्रसृतो ह वै यज्ञोपवीतिनो यज्ञो ऽप्रसृतो ऽनुपवीतिनो यत्किञ्च ब्राह्मणो यज्ञोपवीत्यधीते यजत एव तत्, तस्माद् यज्ञोपवीत्येवाधीयीत याजयेद्यजेत वा यज्ञस्य प्रसृत्यै। तैआ २,१,१ ।

यण्व- यदात्मन् पशूनयच्छत् तद् यण्वस्य यण्वत्वम् । जै ३, ९१ ॥ [°ण्व- पशु- १६८ द्र.]।

यण्व-सन्तानि (सामन्-)- पशु- २६० द्र. ।

यति-

१. इन्द्रो यतीन्त्सालावृकेभ्यः प्रायच्छत्तान् दक्षिणत उत्तरवेद्या आदन् । तैसं ६,२, ७, ५।

२. इन्द्रो वै यतीन्त्सालावृकेयेभ्यः प्रायछत् , तेषां वा एष ब्रह्मचारी चमसाध्वर्युरासीद्यो ऽय ँ हरिणस्तस्य यः सोमपीथ आसीत्, स स्वजो ऽभवत्, तस्माद्धरिणः स्वजं खादति । मै ३,९,३ ।

३. यतीन्त्सालावृकेभ्यः ( इन्द्रः ) प्रादात् । ऐ ७, २८ ॥ [ °ति- इन्द्र- १५३-१५६; १८९; करीर- ५; खर्जूर- द्र. ]।

यद्वाहिष्ठीय (सामन्- )- ब्रह्मयशसं वा एतानि सामान्यृचा श्रोत्रीयाणि ब्रह्मयशसी भवति यद्वाहिष्ठीयेन तुष्टुवानः । तां १५, ५, २६ ।

यन्तृ- वायुर्वै यन्ता वायुना हीदं यतमन्तरिक्षं न समृच्छति । ऐ २, ४१ ॥ [°न्तृ- अपान- २२; ४४; ४५ द्र. ]।

यन्त्र- आशा- ४ द्र. ।

यम-

१. अयं वै यमो यो ऽयं (वायुः ) पवते । माश १४, २, २, ११ ।

२. एतेन वै यमी यमꣳ स्वर्गं लोकमगमयत् । स्वर्गस्य लोकस्यानुख्यात्यै स्वर्गात् लोकान्न च्यवते तुष्टुवानः । तां ११, १०, २२ ।

३. एतेन वै यमो ऽनरजय्यममुष्य लोकस्याधिपत्यमाश्नुत । तां ११, १०, २१ ।

४. एष वै यमो य एष ( सूर्यः ) तपत्येष हीदꣳ सर्वं यमयत्येतेनेदꣳ सर्वं यतम् । माश १४, १, ३, ४ ।

५. कुसीदं ( ऋणम् ) वा एतद्यमस्य यजमान आदत्ते यदोषधीभिर्वेदिꣳ स्तृणाति, यदनुपौष्य प्रयायाद् ग्रीवबद्धमेवैनममुष्मिँल्लोके ( यमभृत्याः ) नेनीयेरन् । तैसं ३, ३, ८, ३-४ ।

६. दण्डपाणये ( यमाय ) स्वाहा । ष ५. ४ ।

७ पृच्छामि त्वा पापकृतः । यत्र यातयते यमः । त्वन्नस्तद् ब्रह्मन् प्रब्रूहि । यदि चेत्थासतो गृहान् कश्यपादुदिताः सूर्याः पापान्निर्घ्नन्ति सर्वदा रोदस्योरन्तर्देशेषु । तत्र न्यस्यन्ते वासवैः । अपाण्यपादकेशासः तत्र ते ऽयोनिजा जनाः । मृत्वा पुनर्मृत्युमापद्यन्ते । अद्यमानाः स्वकर्मभिः । आशातिकाः क्रिमय इव । ततः पूयन्ते वासवैः । तैआ १, ८, ५–७ ।

८. यमः पन्थाः । तै २,५, ७, ३ ।

९. यमस्य पाटोरः । काठ ५३, ११ ।

१०. यमस्याश्वं प्रतिजगृहुषोऽर्धमिन्द्रियस्यापाक्रामत् । काठ ९, १२ ।

११. यमाय कृष्णः । मै ३, १४, ११ ।

१२. यमाय सोमꣳ सुनुत, यमाय जुहुता हविः । यमꣳ ह यज्ञो गच्छत्यग्निदूतो अरंकृतः । तैआ ६, ५, १ ।

१३. यमेन पितरः (अन्वाभूयन्त) । काठ ३५, १५ ।

१४. यमो अङ्गिरोभिः ···वावृधानः । मै ४, १४, १६ ।

१५. यमो दाधार पृथिवीं यमो विश्वमिदं जगत् । तैआ ६, ५, २ ।

१६. यमो ऽभिषुतः ( सोमः ) । तैसं ४, ४, ९, १; काठ ३४, १५ ।

१७. यमो ऽमुष्य लोकस्याधिपत्यमानशे ( °नश [ मै ३, २, ३] ) । मै २, ५, ११ ।

१८. यमो राजेति वा अहमेतमुपासे । शांआ ६,१५; कौउ ४, १५ ।

१९. यमो ऽस्या ( पृथिव्याः ) अधिपतिः । क ३१, ३ ।

२०. यस्य (आदित्यस्य) मनुश्च वैवस्वतो यमश्च, मनुरेवास्मिँल्लोके यमो ऽमुष्मिन् । मै १,६,१२ ।

२१. यावन्तो वै मृत्युबन्धवस्तेषां यम आधिपत्यं परीयाय । तैसं ५, १, ८, १-२ ।

२२. वैवस्वतꣳ संगमनं जनानाꣳ यमꣳ राजानꣳ हविषा दुवस्य । मै ४, १४, १६ ।

२३. स यमो देवानामिन्द्रियं वीर्यमयुवत तद्यमस्य यमत्वम् । तैसं २, १, ४, ३-४ ।

२४. स्वप्ने यमः । शांआ ६, २; कौउ ४, २ ॥ [ °म- अग्नि- ८९; १६९; २२४; अङ्गिरस्- १०; १७; अङ्गिरस्वत्- २; ३; अत्स्यत्-; अनुस्तरणी- २; अश्व- ४५; ७३; इन्द्र- २०९; ऋश्य-; गार्हपत्य- २; चन्द्रमस्- १९; त्रयोदशी-; पितृ- ३९; ९६; पितृलोक- १०; पृथिवी- १७२; १७३; १७८; प्रमृणा-; ब्रह्मन्- १३३; भरणी-; मनु- १९; ३०; मृत्यु- १० द्र. ] ।

**यम-देवत-** दक्षिण,णा- १२ द्र. ।

**यमदेवत्य-** यमदेवत्यो वा अयं (पृथिवी) लोकः। मै ३, २, ३॥ [°त्य- दक्षिण,णा- ४९ द्र.]।

**यम-नक्षत्र-** अनूराधा- १ द्र.। **यम-नेत्र-** दक्षिणासद्- १; ३ द्र.।

**यम-मुख-** पितृ- १०७ द्र.। **यम-राजन्-** दक्षिणतस् १२ द्र.।

**यम-राज्य-** अग्निष्टोम- ३२ द्र.।

**यम-लोक-** यमलोके मेऽप्यसदिति वै यजते यो यजते। माश ४, ३, ४, २७।

**यम-श्व-**

१. या (कालकाञ्जेष्वसुरेषु) उत्तमा आस्तां तौ यमश्वा अभवताम्। मै १, ६, ९।

२. स्कम्भो ऽसि, श्लेष्को ऽसीत्येतौ वै यमश्वा अहश्च रात्री च ता इदं मनुष्यान् वृञ्जानौ प्रत्यस्यमाना इतः। काठ ३७, १४।

**यमी-**

१. यम्याः पाटोरः। काठ ५३, १२।

२. यम्यास्त्रयोदशी। मै ३, १५, ५॥ [°मी- अग्नि- १६९; पृथिवी- ३३ द्र.]।

**याम-**

१. कर्णास्त्रयो यामाः। काठ ४९,५ (तु. मै ३, १३, ४)।

२. यामं शुक्रं हरितमालभेत। गो २, २, १।

**यमन->यमनी-** यन्त्री च यमनी च मित्रावरुणयोर्मित्रस्य धातुः। काठ २२, ५।

**यमुना-** एष वै स्वर्गो लोको यद् यमुना। जै २, ३००।

**ययु-** अश्व- ७४ द्र.।

**यव-**

१. अथ ये फेनास्ते यवाः। माश १२, ७, १, ४।

२. एकत्रि ँ्शतास्तुवत, प्रजा असृज्यन्त, यवाश्चायवाश्चाधिपतय आसन्। मै २, ८, ६।

३. एतद्वै वरुणस्य भागधेयं यद्यवाः। काठ १०, ४।

४. ततो देवेभ्यः सर्वा एवौषधय ईयुर्यवा हैवैभ्यो नेयुः। तद्वै देवा अस्पृण्वत। त एतैः सर्वाः सपत्नानामोषधीरयुवत यदयुवत तस्माद्यवा नाम। माश ३, ६, १, ८; ९।

५. तद् (प्रजापतेरक्षि) यवं प्राविशत्, तद्यवेऽरमत, तद्यवस्य यवत्वम्। तैसं ६,४,१०,५-६।

६. तस्य (अश्वस्य) अश्रु प्रास्कन्दत्ततो यवः समभवत्। माश ४, २, १, ११।

७. ता अस्य प्रजाः सृष्टा वरुणस्य यवमादन्। जै २, २३१।

८. निर्वरुणत्वायैव यवाः। मै ४, ४, ८; तां १८, ९,१७।

९. पूर्वपक्षा वै यवाः। माश ८, ४, २, ११।

१०. यद्यवा ग्राम्यं तेनान्नाद्यमवरुन्द्धे। मै ३, २, ५।

११. यद्वै प्रजा वरुणो (हेमन्तः) गृह्णाति शम्यं चैव यवं चापि न गृह्णाति। मै १, १०,१२।

१२. यवं ग्रीष्माय। तैसं ७, २, १०, २।

१३. यव यवयास्मद्द्वेषा ँ्सि। तैआ ६, ९, २।

१४. यवानामुत्तरवेदिः । जै २,११७ ।
१५. यवा रेवतयः । जै १, ३३३; २, ३४ ।
१६. यवेनौषधयः (अन्वाभूयन्त) । काठ ३५, १५ ।
१७. यवो वै पूर्व ऋतुमुखे पच्यते । मै १, ६, ५ ।
१८. यवोऽसि यवयास्मद् द्वेषो यवयारातीः । तैसं १, ३, १, १-२ (तु. मै १, २, ११; काठ २,१२; ३, ३; क २, १०) ।
१९. योऽसुराणां ( अर्धमासः =कृष्णपक्षः ) स यवायुवत हि तं देवाः । माश १, ७, २, २६ ।
२०. राष्ट्रं यवः । तै ३, ९, ७, २ ।
२१. वरुण्यो ( +ह वा ऽ अग्रे [माश २,५,२,१] ) यवः । माश २,५,२,१; ४,२,१,११ ।
२२. विड् वै यवः । माश १३, २, ९, ८ ।
२३. व्रीहयश्च मे यवाश्च मे ( यज्ञेन कल्पन्ताम् ) । तैसं ४, ७, ४, २ ।
२४. शुक्ला इव यवाश्शुक्लमिवान्तरिक्षम् । काठ १२, ४ ।
२५. स यः सर्वासामोषधीना ँ रस ऽ आसीत्तं यवेष्वदधुस्तस्माद्यत्रान्या ऽ ओषधयो म्लायन्ति तदेते मोदमाना वर्द्धन्ते । माश ३, ६, १, १० ।
२६. स यो देवानाम् ( अर्धमासः =शुक्लपक्षः ) आसीत् । स यवायुवत हि तेन देवाः । माश १, ७, २, २५ ।
२७. सा ( प्रजापतेर्विकङ्कते पतिता कनीनिका ) तस्मिन्नाध्रियत सा यवं प्राविशत्तस्मिन्नाध्रियत । काठ २७, ८ ॥ [ °व- अयस्मय-; ओषधि- १३; ११५; कनीनिका-; चतुश्चत्वारिंश- ६; दक्षिणतस् २६; पशु- ४१; प्रजापति- ७५; मास- १३ द्र.] ।

यवमय-

१. अथ यवमयं ( पिण्डमधिश्रयति ), तद्धा ऽ रूपम् । माश ५, ५,५,९ ।
२. वारुणं यवमयं चरुं ( निर्वपेत् ) यस्याहुते ऽग्निहोत्रे पूर्वो ऽग्निरनुगच्छेत् , तमो वा एतस्य यज्ञं युवते । मै १, ८, ८ ।
३. वारुणं यवमयं चरुं निर्वपति ( निर्वपेदग्नये वैश्वानराय [काठ.] ) । काठ १०, ४; तै १,७, २,६ ।
४. वारुणं यवमयं चरुमामयाविनं याजयेत् । मै २, १, २ ।
५. वारुणो यवमयश्चरुः । माश ५, २, ४, ११ ।
६. वारुणो यवमयो दशकपालः सूतस्य गृहे । मै ४, ३, ८; काठ १५, २; ३७, २ ।

यवागू-

१. वायव्यां यवागूम् ( निर्वपेत् ) । काठ ११, २ ।
२. वायव्यां यवागूं निर्वपेत् । क ४८, १५ ॥ [ °गू- अग्निहोत्र- ५१; ५२; प्रतिदुह्- ४ द्र.] ।

यवाष- तौ (त्रिष्टावरुत्री वा त्वष्टावरुत्री ) प्रापतताम् । तयोर्याः प्रोक्षणीराप आस ँ स्ताभिरनुविसृज्य शीर्षे अच्छिनत् । तौ वृषश्च यवाषश्चाभवताम् । तस्मात्तौ वर्षेषु शुष्यतः । अग्निर्हि हतौ । काठ ३०,१; क ४६, ४ ।

यविष्ठ-

१. एतद्धास्य (अग्नेः) प्रियं धाम यद्यविष्ठ इति यद्धै जात इद ँ सर्वमयुवत तस्माद्यविष्ठः। माश ७, ५, २, ३८।

२. यविष्ठो ह्यग्निस्तस्मादाह यविष्ठयेति। माश १,४,१,२६।

यव्य- मास- १८ द्र.।

यशस्-

१. अथ यशः (सामन्)। यशसा वै देवा यशोऽभवन्। यशोऽसामेति सत्रमासते। यश एव भवन्ति। जै ३, २५८।

२. केशा न शीर्षन् यशसे श्रियै शिखा। मै ३, ११, ९; तै २, ६, ४, ६।

३. तेषां (देवानाम्) सोम ँ राजानं यश आर्च्छत्। तैसं २, ३, ३, १।

४. यशो वै सोमः (सोमो राजा [ऐ.])। ऐ १, १३; माश ४, २, ४, ९।

५. यशो वै हिरण्यम्। ऐ ७, १८।

६. यशो हि सुरा। माश १२, ७, ३, १४।

७. वर्षा एव यशः। गो १, ५, १५।

८. वाग्वा अनुष्टुब् वागु वै यशः। जै १, २७२।

९. श्रीर्वै यशः। जै ३, २५८।

१०. सप्तदश (स्तोमः) एव यशः। गो १, ५, १५।

११. सामवेदो (°द एव [गो.]) यशः। गो १, ५, १५; माश १२, ३, ४, ९।

१२. सोमं यश आर्च्छत्, तस्मात्स यशस्वी स गिरिमगच्छत्तस्मात् स गिरौ। काठ १०, २।

१३. सोमो वै यशः। मै ४, ६, ५; तै २, २, ८, ८॥ [°शस्- अग्नि- ८०; अन्नाद्य- १७;२५; आदित्य- १३; १५४; उदीची- १६; उद्गातृ- ५; क्षत्र- ५३; ग्रीष्म- ९; चक्षुस्- १०; जगती- २६; दिव्- ९१; ९५; देव- ७६; २१३; पशु- १२९;२६८; प्राण- १३३ द्र.]।

यशस्वितम- स (सोमः) वै यशस्वितमः। मै २, १, ४।

याज्या-

१. आसीनो याज्यां यजति। माश १, ४, २,१९।

२. प्रत्तिर्वै याज्या पुण्यैव लक्ष्मीः। ऐ २, ४०।

३. प्रयच्छति (हविः) याज्यया। माश १, ७, २, १७।

४. यजू ँ षि याज्याः। काठ ११, १०।

५. वृष्टिर्वै याज्या विद्युदेव विद्युद्धीदं वृष्टिमन्नाद्यं संप्रयच्छति। ऐ २, ४१॥ [°ज्या- अन्तरिक्षलोक- १; अन्न- ६; अपान- १९; पृथिवी- ३४ द्र.]।

यातुधान- यातुधाना हेतिः (हरिकेशस्य सूर्यरश्मेः)। मै २, ८, १०।

याम-

१. अस्मिन्यामे वृषण्वसू ऽ इत्यस्मिन्कर्मणि वृषण्वसू ऽ इत्येतत्। माश ६,३, २, ३।

२. तत्त्वा यामि ब्रह्मणा वन्दमान इति तत्त्वा याचे ब्रह्मणा वन्दमान इत्येतत्तदाशास्ते । माश ९, ४, २, १७ ।

३. यत्प्रक्रमान् प्रक्रामति, यामं तेन दाधार, यदुपतिष्ठते क्षेमं तेन । काठ १९, १२ ।

यायावर- क्षेम्य- द्र. ।

याव-

१. एकत्रि ँ शता ऽस्तुवत, प्रजा असृज्यन्त, यावानां चायावानां चा ऽऽधिपत्यमासीत् । तैसं ४, ३, १०, ३ ।

२. मासा वै यावाः । तैसं ५, ३, ४, ५ ।

३. यावानां भागो ऽस्ययावानामाधिपत्यं प्रजाः स्पृताश्चतुश्चत्वारि ँ शः स्तोमः । तैसं ४, ३, ९, २ ॥ [°व- दक्षिणतस् २३ द्र.] ।

याविहोत्र- यवा च हि वा ऽअयवा यवेतीवाथ येनैतेषा ँ होता भवति तद्याविहोत्रमित्याचक्षते । माश १, ७, २, २६ ।

युक्ति- (अहीनस्य) तद्यच्चतुर्विंशे ऽहन्युज्यंते सा युक्तिः । ऐ ६, २३ ।

युञ्जान- प्रजापति- १५५ द्र. । युधाजित्- इन्द्र- १९० द्र. ।

युद्ध-

१. नाराजकस्य युद्धमस्ति । तै १, ५, ९, १ ।

२. युद्धं वै राजन्यस्य (+वीर्यम् [माश.]) । तै ३, ९, १४, ४; माश १३, १, ५, ६ ।

युवल (छन्दस्-)- वस्तो वयो युवलं छन्दः । मै २, ८, २; काठ १७, २ ।

युवन्-

१. प्राणो वै युवा सुवासाः । ऐ २, २ ।

२. सभेयो युवा (राष्ट्र आजायताम्) । तैसं ७, ५, १८, १; मै ३, १२, ६ ।

यूनर्वन्- साम वै यूनर्वा । तां ६, ४, ८ (तु. जै १, ७०) ।

यूप-

१. अमुष्मै (द्युलोकाय) यूपः (मीयते) । काठ २५, १०; क ४०, ३; ४१, ३ ।

२. अष्टाश्रिः (यूपः) कार्यः,…तस्मात् पर्णमयः,…तस्मात् खादिरः,…तस्माद् बैल्वो ब्रह्मवर्चसकामेन कार्यः । मै ३, ९, ३ (तु. माश ५, २, १, ५) ।

३. खलेवाली यूपो भवत्येतया हि त ँ रसमुत्कृषन्ति । तां १६, १३, ८ ।

४. खादिरो यूपो भवति । माश ३, ६, २, १२ ।

५. गर्तन्वान्यूपो ऽतीक्ष्णाग्रो भवति । माश ५, २, १, ७ ।

६. तं (देवाः) वै (यज्ञम्) यूपेनैवायोपयंस्तद्यूपस्य यूपत्वम् । ऐ २, १ ।

७. तस्माद्यूप ऽएव पशुमालभन्ते नऽर्ते यूपात्कदाचन । माश ३, ७, ३, २ ।

८. ते (देवाः) ऽकामयन्तेमं नो (स्वर्गम्) लोकमन्यो नानुप्रजानीयादिति, ते दिशो ऽयोपयन् यद्दिशो ऽयोपय ँ स्तद् यूपस्य यूपत्वम् । काठ २६, ६; क ४१, ४ ।

९. ते (देवाः) यूपेन योपयित्वा सुवर्गं लोकमायन्, तमृषयो यूपेनैवानु प्राजानन् । तद्यूपस्य यूपत्वम् । तैसं ६, ३, ४, ७ ।

१०. पशवे वै यूपमुच्छ्रयन्ति । माश ३, ७, २, ४ ।
११. बैल्वो वा खादिरो वा पालाशो वा रौहीतको वा सौम्यस्याध्वरस्य यूपः स्यात् । औदुम्बरो यूपो भवति । खादिरे बध्नाति, पालाशे बध्नाति, रौहीतके बध्नाति । काठसंक १३७:९-१२ ।
१२. यजमानेन यूपः संमितः । तैसं ६, ३, ४, ५ ।
१३. यज्ञेन वै देवाः स्वर्गं ँ लोकमाय ँ स्तेऽमन्यन्ताऽनेन वै नोऽन्ये लोकमन्वारोक्ष्यन्तीति, त ँ यूपेनायोपय ँ स्तद् यूपस्य यूपत्वम् । मै ३,९,४ ।
१४. यदनेन (यूपेन देवा यज्ञम्) अयोपयंस्तस्माद्यूपो नाम । माश १,६,२,१; ३,१,४,३;२,२,३ ।
१५. यूपस् (चतुर्द्धाविभक्तस्य वज्रस्य) तृतीयं (तृतीयोंऽशः) वा यावद्वा । माश १,२,४,१ ।
१६. यूप स्थाणुः । माश ३,६ २,५ ।
१७. यूपाद्वै देवाः स्वर्गं लोकमायन् । क ४१,२ ।
१८. वज्रो वा एष यद्यूपः । ऐ २,१;३; कौ १०,१; ष ४,४ (तु. मै ३,९,३; काठ २९, ८; क ४१, ३; माश ३,६,४,१९) ।
१९. वज्रो वै यूपशकलः । माश ३,८,१,५ ।
२०. वैष्णवो वै देवतया यूपः । तैसं ६,३,४,४ (तु. काठ ३४,१५; माश ३, ६,४,१) ।
२१. वैष्णवो हि ( वै [काठ.] ) यूपः । मै ३,९,२; काठ २६,३; क ४१,२; माश ३,६,४,१ ।
२२. शिखा (हृदयं [तैआ.] ) यूपः । मै ४,५,९; तैआ १०, ६४,१ ।
२३. सप्तदशारत्निर्यूपो भवति । तै १,३,७,२ ।
२४. सर्वदेवत्यो (+वै [मै.]) यूपः । मै ३.९,४; काठ २६,६; क ४१,४ ।
२५. स वा एष सर्वदेवत्यो यद् यूपः । तैसं ६,३,४, ७ ।
२६. स्तुप एवास्य (यज्ञस्य) यूपः । माश ३,५,३,४ ॥ [°प- आदित्य- ४३; १५४; आहुति- १८; गायत्र- २८; तेजस्- १७; नासिका- ४; यजमान- ८;१७;२०;२३; यजमानदेवत्य- ३; यज्ञ- १०१ द्र.]

**यूस्-**

१. ऊर्ग् वै रसो यूः । मै ३, १०,४ ।
२. रसो वा एष पशूनां यद् यूः । तैसं ६,३,११,१ ।

**योक्त्र-** दीक्षित- २२; मेखला- ३ द्र. ।

**योग->योग-क्षेम-**

१. यदोक्कं स योगः । यदास्ते स क्षेमः । योगक्षेमस्य क्लृप्त्यै । तै ३,३,३,३ ।
२. योगक्षेमो नः कल्पताम् । तैसं ७,५ १८,१ ॥ [°म- प्राणापान- २५; ब्रह्मन्- १३६ द्र.] ।

**योजन-** एतद् ध वै परमाणामध्वानामवमं यद्योजनमवमानां वा परमम् । जै २,११८ ।

**योनि-**

१. अन्धमिव वै तमो योनिः । जैउ ३,२,४,२ ।
२. परिमण्डला हि योनिः । माश ७,१,१,३७ ।
३. मा ँ सेन वाऽ उदरं च योनिश्च स ँ हिते । माश ८,६,२,१४ ।

४. योनिरेव वरुणः। माश १२,९,१,१७।
५. योनिर्वै वामदेव्यम्। जै ३,३०१।
६. संवत्सरो वात्र योनिश्चतुर्विंशस्तस्य चतुर्विंशतिरर्धमासास्तद्यत्तमाह योनिरिति संवत्सरो हि सर्वेषां भूतानां योनिः। माश ८,४,१,१८।
७. सुधीन् योनीन् (कृधि)। काठ १,१२; क १, १२ ॥ [°नि- उखा- १२; उत्तरवेदि- १७; उलूखल- ४; गायत्री- ११४; गार्हपत्य- २९; गो- ३१; चतुर्विंश- ९; दीक्षितविमित-; पुरोडाश- २४; पुष्करपर्ण- ६; पृथिवी- १८३; प्रजा- ८८; प्रजापति- १२१; २३३; मुञ्ज- २ द्र.]।

योयुवती- आपो वाव योयुवत्यो या अन्तरिक्ष्यास्ता हि पोप्लूयन्त इवापो वाव योयुवत्यो याः स्वेदते ता हि सरीसृप्यन्त इव। ऐआ १, ३, ५।

योषा-

१. अरत्निमात्राद्धि वृषा योषामुपशेते। माश ६, ३, १, ३०; ७, ५,१,६।
२. उपरिष्टाद्वै वृषा योषामधिद्रवति। काश ४, ८, ४, १७; माश ३,८,५,७।
३. एवमिव हि योषां प्रशंसन्ति पृथुश्रोणिर्विमृष्टान्तरांसा मध्ये संग्राह्येति। माश १, २, ५, १६।
४. तस्माद्यदा योषा रेतो धत्तेऽथ पयो धत्ते। माश ७, १, १, ४४।
५. दक्षिणतो वै वृषा योषामुपशेते। माश ६, ३, १, ३०; ७, ५, १,६।
६. न वै योषा कंचन हिनस्ति। माश ६, ३, १, ३९।
७. पश्चाद्वरीयसी पृथुश्रोणिरिति वै योषां प्रशंसन्ति। माश ३, ५, १, ११।
८. पश्चाद्वै परीत्य वृषा योषामधिद्रवति तस्यां रेतः सिञ्चति। माश २, ४, ४, २३।
९. पुरन्धिर्योषा (राष्ट्र आजायताम्)। तैसं ७, ५, १८, १; मै ३, १२, ६।
१०. पुरन्धिर्योषेत्याह। योषित्येव रूपं दधाति। तस्मात्स्त्री युवतिः प्रिया भावुका। तै ३, ८, १३, २।
११. योषाया (योषायै [माश.]) वा इमाः प्रजाः प्रजायन्ते। काश ४,९,४,२१; माश ३,९,४,२५।
१२. योषा वा ऽइयं वाग्यदेनं न युविता। माश ३, २, १, २२।
१३. योषा वै पत्नी। माश १, ३, १, १८।
१४. योषा वै वेदिः। माश १, ३, ३, ८।
१५. योषा वै सिनीवाली। एतदु वै योषायै समृद्धं रूपं यत् सुकपर्दा सुकुरीरा स्वौपशा। माश ६, ५, १, १०।
१६. योषा वै स्रुग्वृषा स्रुवः। माश १, ३, १, ९।
१७. योषा हि वाक् (,स्रुक्)। माश १, ४,४, ४[२]।
१८. व्यन्त्विति वै योषा, वेत्विति वृषा। माश १, ५, ३, १५।
[°षा- अग्नि- ६७१; दक्षिणतस् १३; पुरन्धि- द्र.]।

योषित्-

१. योषितः पश्चेव स्तनाव् उपोत्सर्पतः। जै ३,३२६।

२. रक्षा ऽँसि योषितमनुसचन्ते तद्धुत रक्षा ऽँस्येव रेत आदधति । माश ३,२,१,४० ।

**यौक्ताश्व** (सामन्-)-

१. तदु प्रजनिष्णु पशव्यं साम । ओ इ ज्वरेति निधनं भवति···अज्वरा हास्य पशवः प्रजनिष्णवो भवन्ति य एवं वेद । जै ३,२४ ।

२. यद् उ युक्ताश्वोऽपश्यत्तस्माद् यौक्ताश्वमित्याख्यायते । जै ३,२४ ।

३. युक्ताश्वो वा आङ्गिरसः शिशू जातौ विपर्य्यहरत्तस्मान्मन्त्रोऽपाक्रामत्स तपोऽतप्यत स एतद्यौक्ताश्वमपश्यत्तं मन्त्र उपावर्त्तत तद्वाव स तर्ह्यकामयत कामसनि साम यौक्ताश्वं काममेवैतेनावरुन्धे । तां ११,८,८ ।

**यौधाजय** (सामन्-)-

१. अथ यौधाजयं त्रिणिधनं सवनानां क्लृप्त्यै । जै २,१४ ।

२. इन्द्रो वै युधाजित्तस्यैतद्यौधाजयम् । तां ७,५,१४ ।

३. युधाजीवो वैश्वामित्रः प्रतिष्ठाकामस्तपोऽतप्यत । स एतत्सामापश्यत्···तदेतत् प्रतिष्ठा साम···यदु युधाजीवो वैश्वामित्रोऽपश्यत् तस्माद्वेव यौधाजयमित्याख्यायते । जै १,१२२ ।

४. युधा मर्त्या अजेष्मेति तस्माद्यौधाजयम् । तां ७,५,१५ ।

५. वज्रो वै यौधाजयम् । तां ७,५,१२ ॥ [°य- इन्द्र-३४३ द्र.] ।

**यौषित**- तदु हैव कुमारिकाः क्रीळन्तीर्जहुः । स एव यौषितो गिरिः । जै ३,२३९ ।

# र

**रक्षमाण**- रात्री रक्षमाणः । काठ ३७,१० ।

**रक्षस्**-

१. अग्नी रक्षा ऽँसि सेधति । मै ४,११,५; काठ २,१४ ।

२. अग्ने बाधस्व वि मृधो वि दुर्गहापामीवामप रक्षा ऽँसि सेध । मै ४,११,२; काठ २,१५ ।

३. अथोदकवतोत्तानेन पात्रेण (दधिमिश्रितं क्षीरम्) अपिदधाति । नेदेनदुपरिष्टान्नाष्ट्रा रक्षा ऽँस्यवमृशानिति वज्रो वाऽआपस्तद्वज्रेणैवैतन्नाष्ट्रा रक्षा ऽँस्यतोऽपहन्ति । माश १,७,१,२० ।

४. अन्यकृतानि हि रक्षा ऽँसि । तैसं ६,३,२,२ ।

५. अपहतं (अन्तरितं [तैसं.]) रक्षः । तैसं १,१,८,१; काठ १,५; क १,५ ।

६. अमूलं वाऽइदमुभयतः परिच्छिन्न ऽँरक्षोऽन्तरिक्षमनुचरति । माश ३,१,३,१३ ।

७. अवधूतं रक्षः । तैसं १,१,५,१; मै १,१,६; काठ १,५; क १,५ ।

८. असृग्भाजनानि ह वै रक्षांसि । कौ १०,४ ।

९. अस्ना रक्षः स ऽँसृजतात् । मै ४,१३,४ ।

१०. अस्ना रक्षांसि (प्रीणामि) । मै ३,१५,८ ।

११. अस्ना वै देवाः पशुभ्यो रक्षा ऽँसि निरवादयन्त, तुषैरोषधिभ्यः (°धीभ्यः [मै.]) । मै ३,१,७; काठ ३१,४; क ४७,४ ।

१२. अस्नैव रक्षा ऽसि निरवदयते । तैसं ६, ३,९,२ ।

१३. इदमहं रक्षसो ग्रीवा अपिकृन्तामि । तैसं १,२,५,१-२; ३.१,१; मै १, २, १०; काठ २, ५; क १,१८ ।

१४. इदमह ऽ रक्षोऽधमं तमो नयामि । तैसं ६,३,९,२ ।

१५. इदमहं रक्षोऽवबाधे । काठ ३, ६; क २,१३ ।

१६. एतं (अश्वम्) वै रक्षा ऽ सि नातरन् । क २९.८ ।

१७. ततो देवा सर्वं यज्ञ ऽ संवृज्याथ यत्पापिष्ठं यज्ञस्य भागधेयमासीत्तेनैनान् (रक्षांसि) निरभजन्नस्ना (रुधिरेण) पशोः फलीकरणैर्हविर्यज्ञात् सुनिर्भक्ता असन् । माश १,९,२,३५ ।

१८. तत् (रक्षः) सीसेनापजघान । तस्मात्सीसं मृदु सतजव ऽ हि । माश ५, ४,१,१० ।

१९. तरक्षुः श्वा कृष्णः कर्णो गर्दभस्ते रक्षसाम् । मै ३, १४, २१ ।

२०. तिर इवैतद्यद्रक्षांसि । ऐ २, ७ ।

२१. तुषैर्वै फलीकरणैर्देवा हविर्यज्ञेभ्यो रक्षांसि निरभजन्नस्ना महायज्ञात्स यदस्ना रक्षः संसृजता-दित्याह रक्षांस्येव तत्स्वेन भागधेयेन यज्ञान्निरवदयते । ऐ २, ७ ।

२२. ते यद्देवानामप्यल्पकं लोहितमसुरा अकुर्वं ऽ स्तद्रात्रीभी रक्षा ऽ स्यसुम्भन् । काठ १०, ७ ।

२३. देवान्ह वा ऽ अग्नी (गार्हपत्याहवनीयौ) आधास्यमानान् । तानसुररक्षसानि ररक्षुर्नाऽग्नि-र्जनिष्यते ना ऽग्नी आधास्यध्व ऽ इति तद्यदरक्षंस्तस्माद्रक्षांसि । माश २, १, ४, १५ ।

२४. देवान्ह वै यज्ञेन यजमानांस्तानसुररक्षसानि ररक्षुर्न यक्ष्यध्व इति तद्यदरक्षंस्तस्माद्रक्षा ऽ सि । माश १, १, १, १६ ।

२५. नास्य नक्तं रक्षा ऽ सीशते य एवं वेद । काठ ७, १० ।

२६. निर्दग्ध ऽ रक्षः । तैसं १, १, ७,१; मै १, १,८; काठ १, ७; क १,७ ।

२७. परापूत ऽ रक्षः । तैसं १, १, ५, २; मै १, १, ७; काठ १, ५; क १, ५ ।

२८. परिलिखति रक्षसामपहत्यै । तैसं ५, १, ३,४ ।

२९ परिलिखित ऽ रक्षः । तैसं १, २, ५, १; ३, १, १ ।

३०. प्रत्युष्ट ऽ (निष्टप्तं [क.]) रक्षः । तैसं १, १,२,१; मै १, १,४; काठ १,२; क १, २ ।

३१. यदाङ्क्ते रक्षसामन्तर्हित्यै । काठ २३, १ ।

३२. यद्वा ऽ उग्रं तन्नाष्ट्रा रक्षा ऽ सि नान्ववयन्ति । माश ३, ३,४,१४ ।

३३. रक्षसां हि स भागः (असृग्रूपः) । माश १, ९, २, ३५ ।

३४. रक्षसां भागधेयं वपायामुद्धृह्यमानायाम् । काठ ३४, १५ ।

३५. रक्षा ऽ सि प्रहेतिः (हरिकेशस्य सूर्यरश्मेः) । मै २,८,१० ।

३६. वज्रेणैव यज्ञस्य दक्षिणतो रक्षा ऽ स्यपहन्ति । तैसं ५, २, १०, १ (तु. क ४७, ८) ।

३७. वज्रेणैवैतत्पुरस्तान्नाष्ट्रा रक्षा ऽ स्यपघ्नन्प्रभिन्दन्नेति । काश १, १, ४, १८ ।

३८. विष्णूवरुणा अभिशस्तिपावा देवा यजन्त हविषा घृतेन । अपामीवा ऽ सेधत ऽ रक्षसश्चाथा धत्त ऽ यजमानाय श ऽ योः । मै ४, १४, ६ ।

३९. समूढ ५ रक्षः संदग्ध ५ रक्षः । तैसं १, ८, ७, २ ।

४०. साम हि नाष्ट्राणा ५ रक्षसामपहन्ता । माश ४, ४,५,६; १४, ३, १, १० ।

४१. सूर्यवतीर् ( ऋचः ) भवन्ति रक्षसामेवापहत्यै । जै ३, २९८ ।

४२. सूर्य्यो हि नाष्ट्राणा ५ रक्षसामपहन्ता । माश १, ३, ४,८ ।

४३. हत ५ रक्षोऽवधिष्म रक्षः । तैसं १,८,७,२ ॥ [°क्षस्- अग्नि- ४४;२२६;२५३;२९५;५१६; ५९२; ६२३; अप्- ३६; १७७; २१३; अपामार्ग- २; अपामार्गहोम-; अप्रतिरथ- ३; अमावस्या- १; असृज्- ३; आदित्य- ३८; १६७; १७२; १७४; आमयाविन्- १८; उलूक- १; कयाशुभीय- ४; कार्ष्मर्यमय-; कार्ष्मर्यमयी- २; काश-; कुबेर-; छन्दस्- ५६; दक्षिणतस् १; ४; ११; देव- २२१; नक्त-; पञ्चदश- २७; परिधि- ६; ८; पलाश- ३; प्रत्यञ्च्- ४;६; बृहद्रथन्तर- १४; ब्रह्मन्- ६७; ६९; ब्राह्मण- ५७; भूत- १३; भ्रातृव्य- ८; यज्ञ- १४९;१५०; योषित्- २ द्र. ] ।

**रक्षस्विन्-** पुरुषःपुरुषो हि रक्षस्वी । तैआ ५, ९, ४ ।

**रक्षो-भाष्-** अथ यदुच्चैः कीर्तयेदीश्वरो हास्य वाचो रक्षोभाषो जनितोः । ऐ २, ७ ।

**रक्षो-हन्-**

१. अग्नये रक्षोघ्ने पुरोडाशमष्टाकपालं निर्वपेद्य ५ रक्षा ५ सि सचेरन् । तैसं २,२,२,२-३ ।

२. अग्निर्वै देवानां रक्षोहा । मै २,१,११ ।

३. सत्राराडसि रक्षोहा । क २,६ ।

४. साम वै रक्षोहा । तैसं ६, ६, ३, १; तैआ ५,९,४ ।

५. हव्यवाहमभिमातिषाहं रक्षोहणं''' अग्निं ५ स्विष्टकृतमाहुवेम । काठ २,१५ ॥ [°हन्- अग्नि- २८;१२७; १७६; आमयाविन्- १; कार्ष्मर्य- १; नाक- ९ द्र.] ।

**रक्षोघ्नी-** आपो वै रक्षोघ्नीरपो रक्षा ५ सि न तरन्ति । मै ४, १,३ ॥ [°घ्नी- अप्- ८१; १०७ द्र. ] ।

**राक्षोघ्न-** कार्ष्मर्य- २ द्र. ।

**राक्षस-** क्वल- द्र. ।

**राक्षसी-** स यां वै दृप्तो वदति यामुन्मत्तः सा वै राक्षसी वाक् । ऐ २, ७ ।

**रजत,ता-**

१. अथ यदस्तमेति(आदित्यः), एतामेव तद्रजतां कुशीमनु संविशति । तै १,५,१०,७ ।

२. अवान्तरदिशा ( °दिशो [माश.] ) रजताः । तै ३, ९, ६,५; माश १३, २, १०, ३ ।

३. एतत् ( रजतम् ) रात्रिरूपम् । ऐ ७, १२ ।

४. यद् ( रुद्रस्य ) अश्रु्वशीयत, तद्रजत ५ हिरण्यमभवत् । तस्माद्रजत ५ हिरण्यमदक्षिण्यम-श्रुज ५ हि । तैसं १, ५, १, १-२ ।

५. रजतं स्वाराज्यम् ( छन्दः ) । शांआ ११, ७ ।

६. रजता ( कुशी ) रात्रिः ( अभवत् ) । तै १, ५, १०, ७ ।

७. रजतेन त्रपु [लोहम् [ गो.] ( संदध्यात् )] । गो १,१,१४; जैउ ३, ४,३, ३ ।
८. रजतो ह्रादुनेः ( रूपम् ) । माश १२, ८, ३, ११ ।
९. सुवर्णेन रजतम् ( संदध्यात् ) । गो १, १, १४; जैउ ३, ४, ३,३ ।
१०. सौर्यं चरुं निर्वपेद् गतश्रीस्तस्य हरितो रुक्मोऽपिधानस्स्याद् रजतोऽधस्तात् । काठ ११,४ । [°त- अन्तरिक्ष- ७१; १४३; १४४; अप्- २१२; अपराह्ण- ३; अहन्- १६; ऊर्ज्- २१; दिव्- ५३; द्युम्न- १; पितृ- १; पृथिवी- १८४ द्र.] ।

राजत- पितृ- १०२ द्र. ।

रजस्-
१. इमे वै लोका रजा ँसि । माश ६, ३, १,१८ ।
२. द्यौर्वै तृतीय ँ रजः । माश ६, ७, ४, ५ ।

रज्जु-
१. वरुण्या रज्जुः । माश १, ३, १, १४ ।
२. वरुण्या वा ऽ एषा यद्रज्जुः । माश ३, २, ४, १८; ७,४,१ ।
३. वरुण्या वै यज्ञे रज्जुः । माश ६, ४, ३, ८ ।

रज्जुदाल- प्रजापति- ६४ द्र. ।

रत्न- सोमारुद्रा धारयेथामसुर्यं प्र वामिष्टयो ऽरमश्नुवन्तु ··· दमे दमे सप्त रत्ना दधाना शं नो भूतं द्विपदे शं चतुष्पदे । मै ४,११,२ ॥ [°त्न- अग्नाविष्णु- ४ द्र.] ।

रत्नधा- यो रत्नधा वसुविद्यः सुदत्र इति यो धनानां दाता वसुवित्पणाय्य इत्येवैतदाह । माश १४, २, १, १५ ।

रत्निन्- क्षत्र- ३ द्र. ।

रथ-
१. तं वा एतं रसं सन्तं रथ इत्याचक्षते । गो १, २, २१ ।
२. तदिदास भुवनेषु ज्येष्ठमिति रथस्य हैतद्रूपम् । तस्मात्तमभिहायैव तिष्ठन्ति । जै २,१२ ।
३. तस्माद्रथः पर्युतो दर्शनीयतमो भवति । माश १३, २, ७, ८ ।
४. यदनो यद्रथं ददाति, शरीराणि तेन स्पृणोति । क ४४, ५ ।
५. रथमुष्णिहाभिः (प्रीणामि) । तैसं ५, ७, १४, १; काठ ५३, ४ ।
६. रथस् (चतुर्द्धा विभक्तस्य वज्रस्य) तृतीयं (तृतीयोंऽशः) वा यावद्वा । माश १,२,४,१ ।
७. वज्रो ( वीर्यं [काठ ३७, १२] ) वै रथः । तैसं ५, ४, ११, २; काठ २१, १२; ३७, १२; तै १, ३, ६, १; ३, १२, ५, ६; माश ५, १, ४, ३ (तु. काठ २९, ८) ।
८. वैश्वानराय रथम् । तैआ ३, १०, ४ ।
९. वैश्वानरो वै देवतया रथः । तै २, २, ५, ४ ।
१०. हंसः शुचिषद्वसुरन्तरिक्षसदिति, रथ ँ वा एतत् परिवदति । मै ४,४,५ ॥ [°थ- अशनया- १; आदित्य- ४७; दक्षिण,णा- ४२; यज्ञ- ११५ द्र.] ।

रथकार- तक्षरथकार- द्र. । रथगृत्स- अग्नि- ५०८ द्र. ।

रथचक्र- रथचक्र ँ वै वज्रं कृत्वा देवा असुरेभ्य उपप्रावर्तयन् । मै ३, ४, ७ ।

रथ-प्रोत– आदित्य– २३९ द्र. । रथ-स्वन– ग्रैष्म– २ द्र. ।

रथाऽक्ष– रथाक्षेण विमिमीते । मै ४, ७,९ ।

रथे-चित्र– ग्रैष्म– २ द्र. ।

रथे-ष्ठा– जिष्णू रथेष्ठाः ( आजायताम् ) । तैसं ७, ५, १८, १; मै ३, १२, ६ ।

रथौजस् – अग्नि– ५०८ द्र. ।

रथन्तर ( सामन्-)–

१. अथ रथन्तरम् । रेतः सिक्तिरेव सा । जै १, ३०५ ।
२. अन्नं वै रथन्तरम् । ऐ ८, १; जै २, १४९; १७० (तु. जै २, ४१६) ।
३. अभ्येव रथन्तरेण क्रन्दति । जै २, २ ।
४. अहर्वै बृहद् । रात्री रथन्तरम् । जै २,९८ ।
५. इयं वै पृथिवी रथन्तरम् । काठ ३३, २; ऐ ८, १ ।
६. उप वै रथन्तरम् । तां १६,५,१४ ।
७. ऊर्ध्वा वै रथन्तरस्य देवहूतिः ··· तद्यद् रथन्तरस्य ऋचैवापरिष्टुभ्योर्ध्वमिव प्रस्तौति तस्मादयमूर्ध्वो लोक ऊर्ध्वोऽयमग्निर्दीप्यत ऊर्ध्वा ओषधय ऊर्ध्वा वनस्पतयस्सर्वमेवोर्ध्वम् । जै १, २९६ ।
८. ओ वा हा रथन्तरम् । जै १,१३३ ।
९. चतुरक्षर ँ रथन्तरम् । तै २,१,५,७ ।
१०. तस्माद् रथन्तरस्य स्तोत्रे रथघोषं कुर्वन्ति । जै १, १४३; ३,११८ ।
११. तेजो रथन्तर ँ साम्नाम् । तां १५,१०,६ ।
१२. परिमितं वाव रथन्तरम् । तैसं ३,१,७,३ ।
१३. प्राच्यै दिशो रथन्तरं भा असृजन्त ( देवाः ) । तद् अग्नेर्घोषोऽन्वसृज्यत । जै ३,३५६ ।
१४. यत् तिर्यग् इव (गीयते). तद् रथन्तरस्य (रूपम् ) । जै ३, १८५ ।
१५. यद्रथन्तरं तच्छाक्वरम् । ऐ ४,१३ ।
१६. यद्वै रथन्तरं तद्वैरूपम् (साम) । ऐ ४,१३ ।
१७. यस्ते अग्नौ महिमा यस्ते अप्सु रथे यस्ते महिमा स्तनयित्नौ य उ ते वाते यस्ते महिमा तेन संभव रथन्तर । द्रविणस्वन् न एधि । जै १,१२८ ।
१८. रथन्तरं वै सम्राट् । तै १,४,४,९ ।
१९. रथन्तर ँ सामभिः पात्वस्मान् गायत्री छन्दसां विश्वरूपा । त्रिवृन्नो विष्ठया स्तोमो अह्ना ँ समुद्रो वात इदमोजः पिपर्तु । तैसं ४, ४,१२,१ ।
२०. रथन्तरं सामासृजत ( प्रजापतिः शीर्षत एव मुखतः ) । जै १,६८ ।
२१. रथन्तर ँ साम्नाम् (प्रतिष्ठा) । तां ९,३,४ ।
२२. रथन्तर ँ ह्रीयम् (पृथिवी) । माश १,७,२,१७ ।
२३. रथन्तर ँ ह्येतत्परोक्षं यच्छ्यैतम् (साम) । तां ७,१०,८ ।
२४. रथंतरं नाम मे सामाघोरश्चाक्रूरञ्च (सामवेद उवाच) । गो १,२,१८ ।
२५. रथन्तरमाजभारा वसिष्ठः । ऐआ ३,१,६ ।

२६. रथन्तरमुत्तराद् गायति। काठ २१,५; क ३१, २०।
२७. रथन्तरमेतत्परोक्षं यच्छक्वर्यः (यद्वैरूपम् [तां १२,२,५;९]) । तां १३,२,८।
२८. रथन्तरेण वै देवा ऊर्ध्वाः स्वर्गं लोकमायन्। जै १,१३५।
२९. रथन्तरेण वै दैव्यमाजिमुज्जयति, रथेन मानुषम्। जै २,१९३।
३०. रथम्मर्य्याः क्षेप्लातारीदिति तद्रथन्तरस्य रथन्तरत्वम्। तां ७, ६,४।
३१. रथा ह (असुरा रक्षांसि च) नामासुः। ते (देवाः स्वर्गं लोकं गत्वा) अब्रुवन्नतारिष्म वा इमान् रथानिति। तदेव रथन्तरस्य रथन्तरत्वम्। जै १,१३५।
३२. रसंतम ऽ ह वै तद्रथन्तरमित्याचक्षते परोऽक्षम्। माश ९,१,२,३६।
३३. वज्रो वै रथन्तरम्। जै २,१६९।
३४. वाग् (रात्री [जै २,९८]) रथन्तरम्। जै १,१२८; ३२९; ३, ३१६; तां ७,६,१७।
३५. वाग्वै रथन्तरम्। ऐ ४, २८; जै १, २३०; २, १; ३६८; ३, ११।
३६. विश्वायू रथन्तरम्। जै १, २९२; २, ४३३।
३७. श्यैतं ह वा अग्ने रथन्तरस्य प्रिया तनूरास। जै १, १४५।
३८. श्रीरेषा यद् रथन्तरम्। जै १, ३३० (तु. जै १, ३२८)।
३९. समुद्र एष यद् रथन्तरम्। जै १, ३३२।
४०. स (प्रजापतिः) रथन्तरमसृजत तद्रथस्य घोषो ऽन्वसृज्यत। तां ७, ८, ९।
४१. स राशिश्चतुश्चत्वारिंशो भवति, रथन्तरसामा। जै २, १६४॥ [°र- अग्नि- १११; ११८; २२७; २८२; ३४३; ६५३; अद्य; अन्न- ७९; अपान- २०; असुर- ६६; आयतन- १; ऋच्- ७; ११; ३०; ऐड- १; ओषधि- ४२; कालेय- १०; क्षत्र- ७८; गायत्र- ११;२०; गायत्रछन्दस्- १; गायत्री- ४२; ११४; गार्हपत्य- ३; गो- १९; तेजस्- ३३; त्रिष्टुभ्- ४२; दिव्- ५१; देवरथ- ३; पक्ष- ४; पशु- १४०; पृथिवी- १९; २५; ३५; ४२;५५; ८२; ११७; १७०; २१६; पृष्ठ- २०; प्रजनन- ६; प्रजापति- १५६; प्रतिष्ठा- ७; प्रस्ताव- १०; प्राची- ४;३५; प्राण- ९५; २७४; बृहत्- ९; १५; २०; २२; २४; ३८;४१;४४;४५;४८; बृहती- ५; ब्रह्मन्- ८१; ब्रह्मवर्चस- ६; भूत- ५ द्र.]।

राथन्तर-

१. आग्नेयमाज्यं भवति राथन्तरम्। जै ३, २०७।
२. नमस्ते राथन्तराय यस्ते दक्षिणः पक्षः। ऐआ ५,१,२।
३. ये वा अन्यतोदन्ताः पशवस्ते राथन्तरा ये उभयतोदन्तास्ते बार्हताः। जै १,१२८।
४. राथन्तरं पञ्चममहः। तैसं ७, २, ८, २॥ [°र- अग्नि- ६३३; उत्तरतस् ७; गो- २४; त्रिणव- १४; पृथिवी- १८६; बार्हत- १; बार्हती- द्र.]।

राथन्तरी- राथन्तरी वै रात्री। ऐ ५, ३०।

रभस्- व्यचिष्ठमन्नं रभसं दृशानमित्यवकाशवन्तमन्नैरन्नादं दीप्यमानमित्येतत्। माश ६,३,२,१९।

√रम् प्राण- १८८ द्र.।

रम्या तनू- प्राण- १६९ द्र.।

१४. राजा वै राजसूयेनेष्ट्वा भवति । माश ५, १,१,१२; ९, ३, ४, ८ ।
१५. राजा सङ्ग्रामं जित्वा निराजं निरजते । काठ २८, ३; क ४४, ३ ।
१६. राजा संग्रामं जित्वोदाजमुदजते । मै १, १०, १६; ४, ६, ८ ।
१७. राज्ञः परिष्कारश्शार्दूलाजिनं मणिहिरण्यं हस्ती निष्को ऽश्वतरीरथोऽश्वरथो रुक्मः कंसः । जै १, ३४१ ।
१८. राज्ञा मनुष्यान् ( अन्वाभवत् ) । काठ ५३, ४ ।
१९. विडसि···सा राजानं गर्भमधत्थाः । मै २, १३, १५ ।
२०. विशः खलु वै राज्ञः प्रदातोरीश्वराः । तैसं ३, १, ८, २ ।
२१. विशस्त्वा सर्वा वाञ्छन्तु ( राजन् ) मा त्वद्राष्ट्रमधि भ्रशत् । काठ १९, ११ ।
२२. विशि राजा प्रतिष्ठितः । काठ ३८, ४ ।
२३. स राजसूयेनेष्ट्वा राजेति नामाधत्त । गो १, ५, ८ ।
२४. सर्वे राजान एकमन्त्रा एकवचसः । जै ३, २२ ॥ [°जन्- इन्द्र- ३११; ऐन्द्र- १२; ग्रामणी- ३; चतुर्होतृ- ७; बाहुबलिन्-; ब्राह्मण- ६७; भरत- २; मनुष्य- ३०; महिमन्- ५ द्र.] ।

राजन ( सामन्-)-

१. तद्ध वै प्रत्यक्षं वामदेव्यं ( साम ) यद् राजनम् । जै २, १५ ।
२. परोक्षमिव ह खलु वा एतद् वामदेव्यं यद् राजनम् । जै २, ४११ ।
३. यथा ह वै वयस आशय एवं राजनस्य वामदेव्यम् ( साम ) । जै २, १५ ।
४. यद् राजनं भवति, प्रजानामेव तद्यजमाना राज्यं परियन्ति । तैसं ७, ५, ८, ३ ।
५. राजनेन वै प्रजापतिः प्रजानां राज्यं ऐश्वर्यं आधिपत्यमगच्छत् । जै २, ४११ । [°न- अन्न- ११४; आत्मन्- ६२; आदित्य- १५५; पञ्चविंश- ३; ४ द्र.] ।

राजन्य-

१. अतिव्याधी राजन्यः शूरः ( आजायते स्म ) । जै २, २६६ ।
२. आनुष्टुभो राजन्यः । मै ४, ४, १०; तां १८, ८, १४; तै १, ८, ८, २ ।
३. आमादिव वा एष यद् राजन्यो, बहु वा एषो ऽयज्ञियममेध्यं चरत्यत्यनन्नं जिनाति ब्राह्मणं, तस्माद् राजन्यस्याग्निहोत्रमहोतव्यम् । मै १, ८, ७ ।
४. आ ऽस्मिन् राष्ट्रे राजन्य इषव्यः शूरो महारथो जायताम् । तैसं ७, ५, १८, १ (तु. मै ३, १२, ६) ।
५. उरसो बाहुभ्यां पञ्चदशं निरमिमीत, तमिन्द्रो देवता ऽन्वसृज्यत, त्रिष्टुप् छन्दो, बृहत्साम, राजन्यो मनुष्याणामविः पशूनां, तस्मात्ते वीर्यावन्तो वीर्याद्ध्यसृज्यन्त । तैसं ७,१,१,४-५ ।
६. एष वै प्रजापतेः प्रत्यक्षतमां यद्राजन्यस्तस्मादेकः सन्बहूनामीष्टे यद्वेव चतुरक्षरः प्रजापतिश्चतुरक्षरो राजन्यः । माश ५, १, ५, १४ ।
७. ऐन्द्रावरुणो हि राजन्यो देवतया । मै २, ३, १ ।
८. ऐन्द्री ऽसूतवशामालभते राजन्याय बुभूषते । काठ १३, ४ ।

९. तासु ( उत्तरासु फल्गुनीषु ) राजन्यस्य ( अग्निम् ) आदध्यात्... दानं ह्येष ( राजन्यः ) प्रजानामुपजीवति । मै १, ६, ९ ।
१०. त्री ऽस्तृचाननु ब्रूयाद् राजन्यस्य, त्रयो वा अन्ये राजन्यात् पुरुषाः । ब्राह्मणो वैश्यः शूद्रस्तानेवास्मा अनुकान् करोति । तैसं २, ५, १०,१ ।
११. देवा वै राजन्याज् जायमानादबिभयुस्तमनुहाय दाम्ना अपौम्भन्नपोभ्भो वा एष जायते यो राजन्यो यद्वा एषोऽनपोभ्धो जायेत न किञ्चन स्यात्, सर्वा इमाः प्रजा अधिपादमद्यात् । काठ ११, ४ (तु. तैसं २, ४, १३, १; मै २, १, १२) ।
१२ मध्याधिदेवने राजन्यस्य जुहुयाद्वारुण्य ऋचा, वरुणो वै देवानां राजा । मै १, ६,११ ।
१३ यदा वै राजन्यो वज्री भवति, अथ भूतिं गच्छति । मै २, ५, ८ ।
१४ यदा हि राजन्यः पृतना जयत्यथो भवति । मै १, ५, ८ ।
१५ यवागू राजन्यस्य ( व्रतम् ) । तैआ २, ८, १ ।
१६. यवागू राजन्यस्य व्रतं क्रूरेव वै यवागूः , क्रूर इव राजन्यः । तैसं ६, २, ५, २-३ ।
१७. राजन्यस्त्रिष्टुप्छन्दा ऐन्द्रो देवतया । तस्माद् बाहुभ्यां वीर्यं करोति बाहुभ्यां ह्येनमुरसो वीर्यादसृजत । जै १,६८ ।
१८. राजन्यस्य कार्यो लोक इष्टापूर्तेन श्रद्धया ब्रह्मण्यतया । जै १, २४४ ।
१९. राजन्यस्येन्द्रस्तोमः । जै २,१४७ ।
२०. राजन्येनाध्यक्षेण वैश्यं घ्नन्ति । काठ २७, ४ ।
२१. राजन्यो वै प्रजानामधिपतिः । काठ २८, १ ।
२२. वज्रो ऽस्य ( इन्द्रस्य ) वीर्यं वज्रमेवास्मिन् ( राजन्ये ) दधाति । काठ १३, ३ ।
२३. विशा खलु वै राजन्यो भद्रो भवति । मै १,६,५ ।
२४. विशेति राजन्यस्य ब्रूयात् । तैआ ५, ३, ८ ।
२५. वृषा वै राजन्यः । तां ६, १०,९ ।
२६. सौम्यो राजन्यः । तैसं २, १, २, ९ ॥ [°न्य- अन्त- ७; आग्नीध्र- १३; उरस्- ६; ऐन्द्र- ३६; ४१; ४२; ५७; ऐन्द्राबार्हस्पत्य- २; ओजस्- ५; औदुम्बर- ३; कृष्ण- १९; क्षत्र- १५; ४६; ग्रामणी- ३; ग्रीष्म- १५; त्रिवृत्- २०; त्रिष्टुभ्- १५; त्रैष्टुभ- १८; दीक्षित- ९; देव- २२१; धनुस्- १; न्यग्रोधतति-; पञ्चदश- १०;२०; परमेष्ठिन्- १०; पार्थुरश्म- २; फल्गुनी- १०; बाहु- ३; ६; बृहत्- ४४; ब्राह्मण- २; ४०;५३; मैत्र- १०; युद्ध- २ द्र.] ।

राज-पुत्र-

१. राजपुत्रो वीर्यवत्तमः । मै ४, ६, ६ ।
२. वीर्यं राजपुत्रः । काठ १४, ८ ॥ [°त्र- ककुभ्- ३; ब्रह्मन्- ७२ द्र.] ।

राज-यक्ष्म-

१. तस्मा (सोमाय) एतमादित्यं चरुं निरवपन्, तेनैवैनं पापात् स्रामादमुञ्चन् । तैसं २,३,५,३ ।
२. प्रजापतिर्वै सोमाय राज्ञे दुहितॄरददान्नक्षत्राणि, स रोहिण्यामेवावसन्नेतरासु, ता अनुपेयमानाः पुनरागच्छन्त स ( सोमं राजानं प्रजापतिः) राजयक्ष्मेणाग्राहयत्, स निरस्रवत्, तस्माद् राजयक्ष्मगृहीतो निःस्रवति । मै २, २, ७ ।

३२. रात्रीं पीवसा (प्रीणामि)। काठ ५३,१०।
३३. रात्र्या ( पर्यायेण ) त्वाव सर्वमवरुन्द्धे। जै १, २०७।
३४. वारुणी रात्रिः। तैसं २, १, ७, ३; मै १, ८, ८; तै १, ७, १०,१।
३५. शर्वरी वै नाम रात्रिः। जै १, २०९।
३६. सगरा रात्रिः। माश १,७,२,२६।
३७. स दर्भेण रजतं हिरण्यं प्रबध्य पुरस्ताद्धरेत्। तच्चन्द्रमसो रूपं क्रियते। रात्रेर्वा एतद्रूपम्। जै १, ६३ (तु. माश १२,४,४,७)।
३८. सोमो रात्रिः। माश ३,४,४,१५ ॥ [ °त्रि, त्री- अग्नि- २२८;२६७; अन्धस्- २; अपराह्ण- ३; अपान- २६; असुर- ११;६७; असुर्य- ३: अहन्- २;८; ९; १२; १३; १५;१६;२१; २५;२८;३४;४२;४५; आग्नेयी- ३; आदित्य- ३२२; ऊष्मन्- २; ऋत- २२; कृष्णा- ९; १७; २१; केश- २; क्षपा-; चित्रावसु- २; छन्दस्- ८०; दिव्- ८५; पशु- २८९; पान्त- २; पिपासा-; पिशङ्गिला- २; पुंस्- ६; पूर्वपक्ष- २; प्राजापत्य- १२; प्रायणीय- १; भ्रातृव्य- भाजिन्-; रजत- १; रथन्तर- ४; ३४; राथन्तरी- द्र.]।

राधस्- सोमो राधसाम् ( ईशे )। काठ २३,६।

राम- रामो हाल मार्गवेयो ऽनूचानः श्यापर्णीयः। ऐ ७,२७।

रामा- व्रतं चरेदग्निं चित्वा प्रथमं चित्वा न रामामुपेयाद् द्वितीयं चित्वा नान्येषा स्त्रियस्तृतीय चित्वा न काञ्चन, रेतो वा एतन्निधत्ते यदग्निं चिनुते, यदुपेयाद् रेतसा व्यृध्येत। काठ २२, ७ ॥ [°मा- अग्निचयन- ५ द्र.]।

रायस्पोष-

१. त ( देवाः ) अकामयन्त पशवो नः स्युरिति, 'सि हीरसि रायस्पोषवनिः स्वाहे' ति, तमेव तेन काममाश्नुवत। मै ३, ८, ५।
२. भूमा वै रायस्पोषः। माश ३, ५, २, १२।
३. यजुर्भी रायस्पोषे समिषा मदेम। काठ २, ४ ॥ [°ष- पशु- १७२ द्र.]।

रायोवाजीय ( सामन्- )- रायोवाजीयं वैश्याय ( कुर्यात् )। तां १३,४,१८ ॥ [°य- पशु- २१५ द्र.]।

राशि- रथन्तर- ४१ द्र.।

राष्ट्र-

१. अथैते रत्निनः, क्षत्रस्य वा एतान्यङ्गानि, यस्य वा एतान्योजस्वीनि भवन्ति, तद् राष्ट्रमोजस्वि भवति। मै ४, ३,८।
२. अभितः सौम्यमाग्नेयौ भवतस्तेजसैव ब्रह्मणोभयतो राष्ट्रं परिगृह्णाति। तैसं २, १, २,९।
३. अष्टौ वै वीरा राष्ट्रं समुद्यच्छन्ति राजभ्राता च राजपुत्रश्च पुरोहितश्च महिषी च सूतश्च ग्रामणी च क्षत्ता च संग्रहीता चैते वै वीरा राष्ट्रं समुद्यच्छन्त्येतेष्वेवाध्यभिषिच्यते। तां १९, १, ४।
४. असौ वा आदित्यो राष्ट्रम्। काठ ३७, ११।

५. यद्वै यज्ञस्य साम्ना क्रियते, राष्ट्रं यज्ञस्याशीर्गच्छति । तैसं १, ६, १०, ३-४ ।
६. राष्ट्रं विशं घातुकम् । तै ३, ९, ७, ४; ५ ।
७. राष्ट्रं विशमतिवदति । तैसं ५, ४, ७, ७ ।
८. राष्ट्रं वै वैश्वानरः । तैसं ५, ४, ७, ७ ।
९. राष्ट्रं ९ सप्तदशः ( स्तोमः ) । तै १, ८, ८, ५ ।
१०. राष्ट्रं ९ सान्नाय्यम् ( हविः ) । माश ११, २, ७, १७ ।
११. राष्ट्रं ९ हरिणः । माश १३, २, ९, ८ ।
१२. राष्ट्रमपुरोहितं पराभावुकम् । काठ २७, ८ ।
१३. राष्ट्रं मुष्टिः । तै ३, ९, ७, ५; माश १३,२,९,७ ।
१४. राष्ट्राणि वै विशः । ऐ ८, २६ ।
१५. वारुणं वै राष्ट्रम् । तैसं २, ३, १,४ ।
१६. श्रीर्वै राष्ट्रम् । माश ६, ७, ३, ७ ।
१७. सविता राष्ट्रं ९ राष्ट्रपतिः । तै २,५,७,४; माश ११,४,३,१४ ॥ [°ष्ट्र- अश्वमेध- २४;२६; क्षत्र- ३१;८१; ग्रावन्- १०; पर्ण- १०; पस- २; मध्य- ३ द्र.] ।

राष्ट्र-भृत्-

१. ऋतवो राष्ट्रभृतः । काठ ३७, ११ ।
२. यद् राष्ट्रभृद्भी राष्ट्रमाददत तद्राष्ट्रभृता ९ राष्ट्रभृत्त्वम् । तैसं ३, ४, ६, २ ।
३ राजानो वै राष्ट्रभृतस्ते हि राष्ट्राणि बिभ्रति । माश ९, ४, १, १ ।
४. वर्ष्म वै राष्ट्रभृतः । तैसं ३, ४, ८,७ ॥ [°भृत्- गन्धर्वाप्सरस्- ४ द्र.] ।

राष्ट्री-

१. राष्ट्री विशं घातुकः । माश १३, २, ९, ६; ७ ।
२. वाग्वै राष्ट्री । ऐ १, ९ ।

राष्ट्रीय- यो राष्ट्रीयो नेव प्रस्तिङ्नुयात् तमेतेन याजयेदैन्द्राबार्हस्पत्येन । परिततो हि वा एष पाप्मना ऽथैष न प्रस्तिङ्नोति, बृहस्पतये निरुप्यता, इन्द्राय क्रियते सर्वत एवैनं मुञ्चति, वज्रेणेमा दिशो ऽभिपर्यावर्तते । मै २,१,१२ ।

√रास् तदस्मै देवा रासन्तामिति तदस्मै देवा अनुमन्यन्तामिति ह्येवैतदाह । माश १,९,१,१९ ।

रासभ-

१. यत्तदरसदिवैष रासभः । माश ६, ३, १, २८ ।
२. यदरसदिव स रासभो ऽभवत् । माश ६, १, १, ११ ।
३. वैश्यं च शूद्रं चानु रासभः । माश ६, ४, ४, १२ ॥ [°भ- गर्दभ- १४ द्र.] ।

रास्ना- हिरो वै रास्ना । माश १, ३,१,१५ ।

रिप्र- तद्यदमेध्य ९ रिप्रं तत् । माश ३, १, २, ११ ॥ [°प्र- अप्- २४५ द्र.] ।

रिहत्- अग्नि- ४४३ द्र. ।

रुक्म-

१. त्रीणि वा एतानि सम्यञ्चि सन्धीयन्ते रुक्म आहवनीयो ऽसावादित्यः । जै २, २०३ ।

२. प्रजापतिस्तेजो वीर्यं रुक्मः । माश ६, ७, १,१ ।

३. रुक्मं होत्रे ( ददाति ) । तैसं १, ८, १८, १; तै १, ८, २, ३ ।

४. रुक्मो वै समुद्रः । माश ७, ४, २, ५ ।

५. रुक्मो होतुः । मै ४, ४, ८ ।

६. सत्यं रुक्मः । तैआ १, २५, १ ॥ [°क्म- अश्व- ५४; आदित्य- ४८; १८; ३५७ द्र.] ।

रुच्-

१. यच्छ्वेता रुच एव तद्रूपम् । काठ १३, १ ।

२. यत्सौरी, रुचं तया ( अवरुन्द्धे ) । मै २, ५,२ ।

३. यत्सौर्यो ( अतिग्राह्यो ग्रहः ), रुचं तेन ( अवरुन्द्धे ) । मै ४, ७, ३ ॥ [रुच्- अग्नि- २८६; ६५९; अमृत- ७; अमृतत्व- १; आदित्य- ६८; एकविंश- ३५; गो- ५६; चक्षुस्- २४; छन्दस्- ५३; प्राण- १८९ द्र.] ।

रुक्मत्- अग्नि- ३० द्र. ।

रुच- नमो रुचाय ब्राह्मये । काठसंक १०३ : ६ ।

रुजा( इषु- )- अथ यया विद्धः शयित्वा जीवति वा म्रियते वा सा द्वितीया तदिदमन्तरिक्षं सैषा रुजा नाम । माश ५, ३, ५, २९ ।

रुद्र-

१. अथ यत्र ( अग्निः ) संप्रज्वलितो भवत्यवरेणेव वर्षिमाणं तद्ध रुद्रो भवति । काश ३,१,१,१ ।

२. अथ वायोरेकादशपुरुषस्यैकादशस्त्रीकस्य । प्रभ्राजमानानां रुद्राणां ... वैद्युतानां रुद्राणाम् ... । प्रभ्राजमानीनां रुद्राणीनां ... वैद्युतीनां रुद्राणीनां ... । रूपाणि वो मिथुनम् । तैआ १, १७, १ ।

३. अथो ऽआरण्येष्वेव पशुषु रुद्रस्य हेतिं दधाति । माश १२, ७, ३, २० ।

४. अथोत्तरं भागमात्मनो ऽतिहरन्नपति रुद्रास्त्वा त्रैष्टुभेन च्छन्दसाऽऽरोहन्तु ... स्वाराज्यायेति, स्वाराज्यं ह वै राज्यादधितरामिव । शांआ १,७ ।

५. अर्हन् बिभर्षि सायकानि धन्व । अर्हन्निष्कं यजतं विश्वरूपम् । अर्हन्निदं दयसे विश्वमभ्भुवं । न वा ओजीयो रुद्र त्वदस्ति । तैआ ४, ५, ७ ।

६. अष्टौ ( मासः ) रुद्राः ( अबिभरुः ) । ते ऽन्तरिक्षमाजयं स्त्रिष्टुभं छन्दः । काठ २१, ५। क ३१, २० ।

७. आहुतिभागा वा अन्ये रुद्रा हविर्भागा अन्ये । तैसं ५, ५, ९, ३ ।

८. उच्छेषणभागो वै रुद्रः । तै १, ७, ८, ५ ।

९. उत्तरार्धे जुहोत्येषा ह्येतस्य देवस्य ( रुद्रस्य ) दिक् । माश १, ७, ३, २० ।

१०. एकादश रुद्रा एकादशाक्षरा त्रिष्टुप् । तैसं ३,४,९,७ ।

११. एकोल्मुकं हि रुद्राणां ... धूपायद्धि रुद्राणां ... पराञ्चमेव रुद्रं हरन्ति । मै १, १०, २० ।

१२. एतद्ध वा ऽअस्य ( रुद्रस्य ) जान्धितं प्रज्ञातमवसानं यच्चतुष्पथम् । माश २, ६,२, ७ ।

१३. एतस्य वै देवस्य ( रुद्रस्य ) आशयादर्कः समभवत्स्वेनैवैनम् ( रुद्रम् ) एतद्भागेन स्वेन रसेन प्रीणाति (यजमानः) । माश ९, १, १, ९ ।

१४. एष ( रुद्रः ) हि देवानां क्रूरतमः । मै ३, ८, १ ।

१५. कतमे रुद्रा इति दशेमे पुरुषे प्राणा आत्मैकादशस्ते यदस्मान्मर्त्याच्छरीरादुत्क्रामन्त्यथ रोदयन्ति । तद्यद्रोदयन्ति तस्माद्रुद्रा इति । माश ११, ६, ३,७ ।

१६. गवेधुकासक्तुभिर्जुहोति । यत्र वै सा देवता ( रुद्रः ) विस्रस्ताशयत्ततो गवेधुकाः समभवन्त्स्वेनैवैनम् (रुद्रम्) एतद्भागेन स्वेन रसेन प्रीणाति । माश ९, १, १, ८ ।

१७. गिरिर्वै रुद्रस्य योनिस्तत एषो ऽभ्यवचरति । काठ ३६, १४ ।

१८. घातुको ऽस्य ( यजमानस्य ) रुद्रः पशून् भवति । काठ ८, ६ ।

१९. घोरो वै रुद्रः । कौ १६, ७ ।

२०. चतुश्चत्वारिंशद्रुद्रा देवाः । जै १, ३५ ।

२१. त ५ ( प्रजापतिम् ) रुद्रो ऽभ्यायत्य विव्याध । माश १, ७, ४, ३ ।

२२. तद्यदुदितात्समभवंस्तस्माद्रुद्राः । सो ऽय ५ शतशीर्षा रुद्रः सहस्राक्षः शतेषुधिरधिज्यधन्वा प्रतिहितायी भीषयमाणोऽतिष्ठदन्नमिच्छमानस्तस्माद्देवा अबिभयुः । माश ९, १,१,६ ।

२३ तस्य ( अरुणकेतुकस्याग्नेः ) इन्द्रो वम्रिरूपेण धनुर्ज्यामच्छिनत् स्वयं तदिन्द्रधनुरित्यज्यम् । अभ्रवर्णेषु चक्षते । एतदेव शंयोर्बार्हस्पत्यस्य । एतद्रुद्रस्य धनुः । रुद्रस्य त्वेव धनुरार्त्निः । शिर उत्पिपेष । स प्रवर्ग्यो ऽभवत् । तस्माद्यः सप्रवर्ग्येण यज्ञेन यजते । रुद्रस्य स शिरः प्रतिदधाति । नैन ५ रुद्र आरुको भवति । तैआ १,५, २ ।

२४. तां ( इषुं रुद्रः ) व्यसृजत् तया पुरस्समरुजद्यत् समरुजत् तद्रुद्रस्य रुद्रत्वम् । काठ २५, १; क ३८, ४ ।

२५. तान् (पशून्) यत् प्राच उत्सृजेद्रुद्रायापिदध्यात् । तैसं ५, २, ५, ३ ।

२६. ताम्राश्वास्ताम्ररथाः। ताम्रवर्णास्तथासिताः। दण्डहस्ताः खादग्दतः । इतो रुद्राः पराङ्गताः । तैआ १ १२, ४ ।

२७. तिस्रो ऽरुणा दित्यौह्यस्ता रुद्राणाम् । काठ ४९, ५ ।

२८. दश पुरुषे प्राणा इति होवाच । आत्मैकादशः । ते यदोत्क्रामन्तो यन्त्यथ रोदयन्ति । तस्माद्रुद्रा इति । जै २, ७७ ।

२९. देवा वै यज्ञाद्रुद्रमन्तरायन्त्स आदित्यानन्वाक्रमत ते द्विदेवत्यान् प्रापद्यन्त । तैसं ६, ५, ६, २-३ ।

३०. देवा वै यज्ञाद्रुद्रमन्तरायन्त्स यज्ञमविध्यत् । तैसं २, ६,८, ३ ।

३१. पञ्चदशेन स्तोमेन त्रिष्टुभमभ्यक्रन्दत् । ततो रुद्रानसृजतेन्द्रमुखान् । जै ३,३८१ ।

३२. परि णो (वो [काठ., क.]) रुद्रस्य हेतिर्वृणक्तु । तैसं ४, ५, १०, ४; काठ १,१; क १,१ ।

३३. प्रकेतेन रुद्रेभ्यो रुद्रान् जिन्व । मै २, ८,८ ।

३४. प्रकेतो ऽसि रुद्रेभ्यस्त्वा रुद्रान् जिन्व । तैसं ४, ४, १, २; काठ ३७, १७ ।

३५. प्रजापतिर्वै रुद्रं यज्ञान्निरभजत् । गो २,१,२ ।

३६. भगस्थ भगस्य वो लप्सीयैष ते रुद्र भागस्तेनावसेन परो मूजवतो ऽतीहि कृत्तिवासाः पिनाकहस्तो ऽवततधन्वा । काठ ९, ७ ।

३७. यज्ञेन वै देवा दिवमुपोदक्रामन्नथ योऽयं देवः ( रुद्रः ) पशूनामीष्टे स इहाहीयत तस्मा-द्वास्तव्य इत्याहुर्वास्तौ हि तदहीयत । माश १, ७, ३, १ ।

३८. यदरोदीत् तद्रुद्रस्य रुद्रत्वम् । तैसं १, ५, १, १ (तु. माश ६, १, ३, १०) ।

३९. यदुद्दिशति तेन रुद्रᳪ शमयति । काठ ६, ५ ।

४०. यल्लोहितं परापतत् तद्रुद्र उपागृह्णात् सा रौद्री रोहिणी वशाऽभवत् । तैसं २, १, ७, २ ।

४१. ये (रुद्राः) अन्नेषु विविध्यन्ति पात्रेषु पिबतो जनान् ··· तेषाᳪ सहस्रयोजने ऽव धन्वानि तन्मसि । तैसं ४, ५, ११, १-२ ।

४२. यो एवेषुस्त्रिकाण्डा ( रुद्रस्य ) सो एवेषुस्त्रिकाण्डा । ऐ ३, ३३ ।

४३. रुद्रᳪ रोराभ्याम् ( प्रीणामि ) । मै ३, १५, ३ ।

४४. रुद्रं लोहितेन ( प्रीणामि ) । तैसं १, ४, ३६, १; तैआ ३, २१, १ ।

४५ रुद्रं वै देवा यज्ञान्निरभजन् स देवानायतयाभिपर्यावर्तत । काठ २१, ६; क ३१, २१ ।

४६. रुद्र आहुतः ( सोमः ) । तैसं ४, ४, ९, १-२ ।

४७. रुद्रः खलु वै वास्तोष्पतिः । तैसं ३, ४, १०, ३ ।

४८. रुद्रं तनिम्ना ( परितोषयामि ) । तैसं १, ४, ३६, १; तैआ ३, २१,१ ।

४९. रुद्र मृडानार्भव मृड धूर्ते ··· एतानि वै रुद्रस्य क्रूराणि नामानि । तैरेष ( रुद्रः ) प्रजा हिनस्त्यग्निहोत्रे भागधेयमिच्छमानः । काठ ६, ७; क ४, ६ ।

५०. रुद्र यत्ते क्रयी ( क्रिवि [काठ.] ) तस्मै हुतमसि । तैसं १, ८, १४, २; काठ १५, ६; तै १, ७, ८, ६ ।

५१. रुद्र यत्ते गिरिपरं नामेति, रुद्रमेवास्मात् ( यजमानात्? ) तेन निरवदयते ··· यमेष्टमसि स्वाहेति ··· मृत्युमेवास्मात्तेन निरवदयते । मै ४, ४, २ ।

५२. रुद्रस्य गां प्रतिजगृहुषश्चतुर्थमिन्द्रियस्यापाक्रामत् । काठ ९, १२ ।

५३. रुद्रस्य षष्ठी (विचलस्स्कन्धः [काठ ५३, ८]) । तैसं ५, ७, २२, १; काठ ५३, ११ ।

५४. रुद्रः स्विष्टकृत् । माश १३, ३, ४, ३ ।

५५. रुद्रा धातुश्च अनायतना हि । तैसं ७, १, ५, ४ ।

५६. रुद्राणां द्वितीया ( कीकसा ) । तैसं ५, ७, १७, १; मै ३, १५, ६; काठ ५३, ७ ।

५७. रुद्रा वृत्रहणा (:) पुरन्दरा (:) । काठसंक ६२ :२ ।

५८ रुद्रा वैराज्याय ( आदित्यमभ्यषिञ्चन्त ) । जै २, २५ ।

५९. रुद्रा वैराज्याय ( वरुणमभ्यषिञ्चन्त ) । जै ३, १५२; ३६८ ।

६०. रुद्राश्चतुर्दशाक्षरया चतुर्दश मासमुदजयन् । मै १, ११, १० ।

६१. रुद्रास्त्वा त्रैष्टुभेन छन्दसा संमृजन्तु । तां १, २, ७ ।

६२ रुद्रेभिर्देवेभिर्देवतया त्रैष्टुभेन त्वा छन्दसा युनज्मि ग्रीष्मेण । काठ ४१, ९ ।

६३. रुद्रेभ्यो रुरून् ( आलभते ) । मै ३, १४, ९ ।

६४. रुद्रो विचीयमानः ( सोमः ) । काठ ३४, १४ ।
६५. रुद्रो वै क्रूरो देवानाम् । तैसं ६, १, ७, ७-८ ।
६६. रुद्रो वै देवानां क्षोदिष्ठः । क ३७, ४ ।
६७. रुद्रो वै पुरुषः (स्विष्टकृत् [कौ.]) । कौ ३, ४; ६; जै ३,११३ ।
६८. रुद्रो ह वा एष देवानामशान्तः संश्चितो भवति तमेवैतच्छमयति । कौ १९, ४ ।
६९. रुद्रो हूयमानः । काठ ३४, १६ ।
७०. रोहिता रुद्राणाम् । मै ३, १३, ७ ।
७१. वसूनां भागो ऽसि रुद्राणामाधिपत्यं चतुष्पात् स्पृतं चतुर्विंश्शः स्तोमः । मै २, ८, ५; तै ४, ३, ९,१-२ ।
७२. वास्तव्यो वा ऽ एष देवः (रुद्रः) । माश ५, २, ४, १३; ३, ३, ७ ।
७३. शूलपाणये ( रुद्राय ) स्वाहा । ष ५, ११ ।
७४. श्येतः श्येताक्षो ऽरुणस्ते रुद्राय पशुपतये । मै ३, १३, ४ ।
७५. सकृदिव हि रुद्र उत्तरार्धादवद्यति । तैसं २, ६, ६, ६ ।
७६. सप्ताहानि रुद्रः पशूनामीशे (+रक्षा ऽसि पराचीनं घ्नन्ति [काठ.]) । काठ २५,१; क ३८,४ ।
७७. स प्रजापतिरेतच्छतरुद्रियमपश्यत्, तेनैनम् ( रुद्रम् ) अशमयत् । मै ३, ३, ४ ।
७८. स ( रुद्रः ) यज्ञमभ्यायम्याविध्यत् । गो २, १, २ (तु. तैसं २, ६, ८, ३) ।
७९. सरस्वती सह रुद्रैर्न आवीत् । तैसं ५, १, ११, ३; मै ३, १६, २; काठ ४६, २ ।
८०. सर्वो वै रुद्रः ··· । पुरुषो वै रुद्रः । तैआ १०, १६, १ ।
८१. सोमो रुद्रेभिरभि रक्षतु त्मना । तैसं २, १, ११, २; मै ४, १२, २; काठ १०,१२ ।
८२ सोमो रुद्रैः (व्युदक्रामत्) । मै २, २, ६; माश ३, ४, २, १ ।
८३. सो ऽरोदीत्, तद्वा अस्यैतन्नाम रुद्र इति । मै ४, २, १२ ॥ [°द्र- अग्नि- २२९; २३८; २६८; ३३४; ४३५; ४४६; ४५६; ५१५; ५५९; ६१२; ६३०; ६७०; ६७४; ६७५; ६७६; अग्निरूप-; अग्निहोत्र- ५३; अग्नीध्- १३; अन्तरिक्ष- १०; ११५; १४५; अन्तरिक्षाधिपति-; अन्न- १४८; अम्बिका- १; २; ३; ५; ६; अर्क- ६; असुर- ४०; आखु- १; २; आदित्य- २८१; ३२६; आहवनीय- २४; इन्द्र- ६३; ३५८; ३६५; उदच्,ञ्च्- ३;४;५;८;१२;१३; उदीची- १८; ओपधि- ४३;७२; गाणपत्य-; गिरि- २; गिरिपर-; गो- ३६;५७; ग्रीष्म- ९; चतुर्दश- १; २; चतुष्पथ- १; २; चन्द्रमस्- ८७; जराबोधीय- ४; तिष्य- २; ४; त्रिष्टुभ्- २६; ३१; ३३; ४०; ५२; त्रैष्टुभ- २०; २१; दक्षिण,णा- ५; ५०; दक्षिणतस् २८; २९; दिव्- ४८; ११४; देव- ९०; २२७; २२८; २२९; द्यावापृथिवी- २६; निर्ऋति- १९; पशु- १३; ६२; २७५; २७६;२७७; २७८; २७९; पशुपति- ३; ९; पशुश्रपण-; पृथुक-; प्रचेतस्- १; २; प्रजापति- ५८; ७८; प्रशु- १; प्रातःसवन- १; प्रैयङ्गव-; भुवन- १; भूमि- ४; मरुत्- ४१; महस्- ६; माध्यन्दिन- १९; २०; २१; मृगव्याध-; यज्ञ- १८९ द्र.] ।

रुद्र-वत्-

१. सोमाय त्वा रुद्रवते स्वाहा । मै ४, ९, ८ ।
२. सोमाय रुद्रवते श्यामाकं चरुम् ( निर्वपेत् ) । मै २, २, ६ ॥ [°वत्- चन्द्रमस्- ५९ द्र.] ।

रुद्रिय, या-

१. रुद्रियः स्विष्टकृत् ( यागः ) । माश १, ७, ३, २१ ।

२. स ऽ सोमो रुद्रियाभिस्तनूभिः ( अव्यात् ) । मै ४, १२, २; काठ १०, ३७ (तु. तै २, १, ११, २-३) ॥ [°या- अग्नि- ६५० द्र.] ।

रौद्र-

१. अवलिप्ता रौद्राः । मै ३, १३, ४ ।

२. तस्य ( रौद्रस्य गावेधुकस्य चरोः ) द्विरूपो गौर्दक्षिणा शितिबाहुर्वा शितिवालो वा । माश ५, ३, १, १० ।

३. वभ्रुररुणबभ्रुश्शुकबभ्रुस्ते रौद्राः । काठ ४९,१ ।

४. यो ऽश्रृतः (पुरोडाशः ) स रौद्रः । तैसं २, ६, ३, ४ ।

५. रुरू रौद्रः । मै ३, १४, २०; क ४७, ९ ।

६. रौद्रं गवि सत् ( पयः ) । मै १, ८, १० ।

७. रौद्रश्चरुरग्नये वैश्वानराय । तैसं ७, ५, २१, १ ।

८. रौद्रो गावेधुकश्चरुः ( गावीधुकश्चरुः [मै.] ) । मै २, ६, ३; माश ५ २,४,११; १३ ।

९. वास्तवमयं रौद्रं चरुं निर्वपेद्यत्र रुद्रः प्रजाः शमायेत । मै २,२,४ ॥ [°द्र- अक्षावाप- १; २; ३; अग्नि- ६७९; उदञ्च्- ११; पशु- २८४; प्रतिहर्तृ- ५ द्र.] ।

रौद्री-

१. यर्हि लोहिनीव श्रृता तर्हि रौद्री ··· यर्हि श्येनीव श्रृता तर्ह्याग्नेयी । मै ३, १०, १ ।

२. रौद्रीः प्रतीचीनम् ( ओषधयः ), ··· शुष्यन्ति प्रतीचीनम् । काठ ११, ५ ।

रुरु- रुद्र- ६३; रौद्र- ५ द्र. ।

रूप-

१. मणिना ( मण्या [काठ ३५, १५] ) रूपाणि ( अन्वाभवत् ) । काठ ३५, १५; ४३, ४ ।

२. योषित्येव रूपं दधाति । माश १३, १,९,६; तै ३,८,१३,२ ।

३. रूपं वायोः ( आदित्य आदत्त ) । जै २, २६ ।

४. रूप ऽ हिरण्यम् । मै ४, ८, २ ।

५. रूपाणि वो वृञ्जे शाक्वरेण छन्दसा । मै ४,२,११ ॥ [°प- अग्नि- ६९७; अन्न- ३८; आशा- ४; उदीची- २७; उपरिष्टात्; कुमारी- २; त्वष्टृ- ७;८;१०;१९; दिव्- १०७; नक्षत्र- १७; पशु- २८०; मतस्न-; रुद्र- २ द्र.] ।

रूर- अग्नि- २३० द्र. । रूरु- अग्नि- २३१ द्र. ।

रेतस्-

१. अथ यदेतत्पुरुषे रेतो भवत्यादित्यस्य तद्रूपं तस्मात्तस्मान्न बीभत्सेत । ऐआ २, ३,७ ।

२. अनुतुन्नाद्धि रेतो धीयते । तां १२, १०, ११ ।

३. अन्ततो हि रेतो धीयते । माश ९, ५, १, ५६ ।

४. अन्नस्य रेतो रेतः । ऐआ २,१,३ ।

५. अर्वाग्वै नाभे रेतः । माश ६, ७, १, ९ ।
६. अशिताद्वै रेतस् सिच्यते । जै २.८२ ।
७. उपा ऽ शु वै रेतः सिच्यते । माश ९, ३, १, २ (तु. ऐ २, ३८) ।
८. उभयतः परिगृहीतं वै रेतः प्रजायते । माश २, ३, १, ३२ ।
९. ऊरुणा हि रेतः सिच्यते । तैसं ६, ५, ८, ६ ।
१०. कामार्तो वै रेतः सिञ्चति । गो २, ६, १५ ।
११. तस्मात्सर्वेष्वृतुषु रेतो हितं, तस्मात्सर्वानृतून् रेतो ऽनु प्रजायते । मै ३, ७, ९ ।
१२. त्रिवृद्धि रेतः । तां ८, ७, १४ ।
१३. त्रीणि वाव रेता ऽ सि पिता, पुत्रः, पौत्रः । तैसं ५, ६, ८, ४ ।
१४. दक्षिणतो वा ऽ उदग्योनौ रेतः सिच्यते । माश ६, ४, २, १० ।
१५. दक्षिणतो हि रेतः सिच्यते । तां ८, ७, १०;१२,१०,१२ ।
१६. द्रप्सीव हि रेतः । माश ११, ४,१, १५ ।
१७. न वा ऋते प्राणाद्रेतसः सिद्धिरस्ति, यद्वा ऋते प्राणाद्रेतः सिच्येत्तत्पूयेन्न संभवेत् । शांआ ८, २ ।
१८. न वै जीर्णे रेतः परिषिच्यते । जै ३, १५५ ।
१९. पञ्चवि ऽ शं हि रेतः । माश ७, ३,१,४३ ।
२०. पश्चाद्वै (प्राचीनं [तैसं.]) रेतो धीयते । तैसं ३, २, ९, ७; ५,२, १०, ७; मै ३, ६,१ ।
२१. पुनर्मा प्रैत्विन्द्रियं । पुनरायुः पुनर्भगः पुनर्ब्राह्मणमैतु मा । पुनर्द्रविणमैतु मा । यन्मे ऽद्य रेतः पृथिवीमस्कान् । ... इदं तत् पुनराददे । दीर्घायुत्वाय वर्चसे । यन्मे रेतः प्रसिच्यते । यन्म आजायते पुनः । तेन माममृतं कुरु । तेन सुप्रजसं कुरु । तैआ १, ३०, १-३ ।
२२. पुरुषे ह वा अयमादितो गर्भो भवति । यदेतद्रेतस्तदेतत्सर्वेभ्यो ऽङ्गेभ्यस्तेजः सम्भूतमात्मन्येवात्मानं बिभर्ति तद्यदा स्त्रियां सिञ्चत्यथैनज्जनयति । ऐआ २, ५, १; ऐउ ४, १ ।
२३. यत्पर्जन्यः पृथिवी ऽ रेतसा ऽवति । मै ४, १२, ५; तैआ ६, ६, ३ ।
२४. यथा स्तेनो यथा भ्रूणहैवमेष यो ऽयोनौ रेतः सिञ्चति । तैआ २, ८, १ ।
२५. यदा वै स्त्रियै च पु ऽ सश्च संतप्यते ऽथ रेतः सिच्यते । माश ३, ५, ३, १६ ।
२६. यदुत्तानाः संमृज्यादप्रतिष्ठायुक ऽ रेतः स्यात्, यन्नीचीरप्रतिष्ठायुक ऽ रेतः स्यान्, तिरश्चीः संमार्ष्टि, तिर्यग्वै रेतः सिच्यते, प्रतिष्ठायुक ऽ रेतो भवति । मै ४, १, १२ ।
२७. यद्वै रेतसो योनिमतिरिच्यते ऽमुया तद्भवत्यथ यन्न्यूनं व्यृद्धं तदेतद्वै रेतसः समृद्धं यत्क्षमं बिलम् । माश ६,३, ३, २६ ।
२८. यस्मात्कुमारस्य रेतः सिक्तं न सम्भवति यस्मादस्य मध्यमे वयसि सम्भवति यस्मादस्य पुनरुत्तमे वयसि न सम्भवति । माश ११, ४, १, ७ ।
२९. रेतः पयः । माश १२, ४, १, ७ ।
३०. रेतः पुरुषस्य प्रथमं सम्भवतः सम्भवति । ऐ ३,२ ।
३१. रेत एव रेतस्यया ऽसिञ्चत् (प्रजापतिः) । जै १, ९९ ।
३२. रेतः सोमः । काठ ३७, ५; कौ १३, ७; तै २, ७;४,१ माश ३,३,२, १;४,२८; ४,३,११ ।

३३. रेतो वा अच्छिद्रम् (अन्नम् [गो.]) । ऐ २, ३८; गो १, ३, २३ ।
३४. रेतो वाजिनम् । तै १, ६, ३, १० ।
३५. रेतो वै रेतस्या ( रेवतयः [जै ३,१४४]) । जै १, ३१५ ।
३६. रेतो वै वृष्ण्यम् । माश ७, ३, १, ४६ ।
३७. रेतो वै सोमः । जै ३, २४; माश १, ९, २, ९; २, ५, १, ९; ३, ८, ५, २ ।
३८. रेतो ( + वै [काठ., क.] ) हिरण्यम् । मै ३,७, ५; काठ २४, ५; क ३७,६; तै ३,८,२,४ ।
३९. रेतो हृदये ( श्रितम् ) । तै ३, १०, ८, ७; शांआ ११, ६ ।
४०. वायु हि रेतः । माश १, ५, २, ७ (तु. माश १, ७, २, २१) ।
४१. वायुर्वै रेतसां विकर्ता । माश १३, ३, ८, १ ।
४२. वृषणौ स्था इति, रेत एवैतद्दधाति, न हि तस्य रेतो धीयते, यस्यैतौ न भवतः । मै ३, ९,५ ।
४३. शुक्रं वै रेतः । ऐ २, १४ ।
४४. संवत्सरे वै रेतांसि सिक्तानि प्रजायन्ते । काठसंक ५० : ११ ।
४५. संवत्सरे वै रेतो हितं प्रजायते । काठ ७, १५ ।
४६. सोमस्याहं देवयज्यया सुरेता रेतो धिषीय । तैसं १,६,४, ३-४ ।
४७. सोमो (सौर्यं [तै.]) रेतः । तैसं ७, ५, २५, २; तै ३, ९, १७, ५ ।
४८. सोमो ( + वै [मै.] ) रेतोऽदधात् । मै १, १०, ५; तै १, ६, २, २, ।
४९. हिंकृताद्धि रेतो धीयते । जै ३, ७०; तां ८, ७, १३ ॥ [°तस्- अग्नि- ६२३;६७६; अनिरुक्त- २; अप्- ८३; ८४; १२९;२३०; अपस्या- २; अश्व- १०३; १आज्य- १३;३५; ३६; आण्ड- २; इन्दु- ३; ऊष- १३; ऋषभ- ७; ओदन- ६; गायत्र- ३९; गायत्री- ११४; घृत- ३१; तनूनपात्- ५; दीक्षित- २५; नाभानेदिष्ठ- २; नाभिदघ्ना-; न्यून- ३; पत्नी- १०; पयस्- १८; पयस्या- ८; पात्नीवत- २; पुरोडाश- २४; प्रजा- ३५; ९१; ९२; प्रजाति- ३; प्रजापति- ९९१; प्राण- ४२; १६५; २२२; बृहत्- ४६; प्राणोदान- २; यज्ञ- १५२ द्र.] ।

रेतस्या- रेतस्या एवापि सर्व आत्मा ( यज्ञस्य ) । जै १,२६७ ॥ [°स्या- अप्- २०२; चन्द्रमस्- ९८; बृहती- १९; मनस्- ३०;५३ द्र.] ।

रेतस्वत्- > °स्वती- यद्रेतस्वती तेन सौमी । मै १,७,४; काठ ९,२ ।

रेतः-सिच् ( इष्टका- )-

१. इयं ( पृथिवी ) वाव प्रथमा रेतःसिक् । तैसं ५, ६, ८, ५ ।
२. पृष्ठ्यो वै रेतःसिचौ । माश ७,५,१,१३;८,६,२,७ ॥ [°सिच्- आण्ड- २ द्र.] ।

रेतः-सिक्ति- संवत्सरे संवत्सरे वै रेतःसिक्तिर्जायते । कौ १९, ९ ॥ [°क्ति- पात्नीवतग्रह-; यज्ञायज्ञीय- २; रथन्तर- १ द्र.] ।

रेतोधा-

१. वायुर्वै रेतोधाः । जै २, १९८ ।
२. सोमो रेतोधास्तस्याहं देवयज्यया सुरेतोधा रेतो धिषीय । काठ ५, ४ ।

३. सोमो वै रेतोधाः ( +प्रजननाय [मै ४,३,६] )। तैसं १, ७,४, ५; २, ४,४, ३;५,२,६, ४; मै २, १, ४; ५,१; ४, ३,६;७,८; काठ १०,११; ११,५ ॥ [ °धस्- अग्नि- ७६४ द्र. ] ।

रेभत्- रेभन्तो वै देवाश्चर्षयश्च स्वर्गं लोकमायन् । गो २, ६, १२ ।

रेवत्- पशु- २८१ द्र ।

रेवती-

१. अभ्यासो वै सिमानां रेवतयः । जै ३,१४९ ।

२. आप उ रेवतयः । जै ३, १५५ ।

३. ज्योती रेवती साम्नाम् । तां १३, ७, २ ।

४. पशवो रेवतीः (रेवतयः [जै.]) । काठ २६, ७; क ४१, ५;जै ३,१३१;२१३;२५० ।

५. पूषा देवता रेवती नक्षत्रम् । काठ ३९, १३ ।

६. यद्रेवत्यास्तत् सौर्यः । काठ २९, ७ ।

७. रेवतीना ᳪ रसो यद्वारवन्तीयम् । तां १३, १०, ५ ।

८. रेवतीना ᳪ सौर्यः ( अतिग्राह्यो ग्रहः ) । मै ४, ७, ३ ।

९. रेवतीर्निरमिमीत ( प्रजापतिः ) शान्त्यै । काठ १०,१० ।

१०. रेवत्य आपः । माश १, २, २, २ ।

११. रेवत्यः सर्वा देवताः । ऐ २,१६ ।

१२. रेवत्यामरवन्त । तै १, ५, २, ९ ।

१३. रेवत्यो मातरः । तां १३, ९, १७ ।

१४. वज्रो वै (वाग्वै [माश ]) रेवती । काठ १०, १० । माश ३, ८, १, १२ ।

१५. शैशिरेण ऋतुना देवास्त्रयस्त्रि ᳪ शे ऽमृत ᳪ स्तुतम् । सत्येन रेवतीः क्षत्रम् । मै ३,११,१२; काठ ३८, ११ ।

१६. स प्रजापतिः शक्वर्या अधि रेवतीं निरमिमीत शान्त्या अप्रदाहाय । तैसं २, २,८, ६ ।

१७. स ( प्रजापतिः ) रेवतीरसृजत तद्गवां घोषो ऽन्वसृज्यत । तां ७,८,१३ ।

१८. सा ( वाक् ) षष्ठमहः प्राप्य रेवती भवति, ययाम्नाद्यं प्रदीयते । जै २,१ । [ °ती- अप्- २७; १०९; १७९; २३१; कामदुघा- ५; गायत्री- ४३; ११०; जगती- ५९; त्वष्टृ- २७; पयस्- १७; पशु- ८५; १७३; १७४; २८२; पूषन्- २४; ४०, ४८; महानाम्नी- ७; यव- १५; रेतस्- ३५ द्र. ] ।

रैवत ( सामन्- )-

१. त ओमित्येतेनैवाक्षरेणास्यै ( ध्रुवायै ) दिशो रैवतं भा असृजन्त तत्पशुघोषो ऽन्वसृज्यत । तस्माद् रैवतस्य स्तोत्रे पशुघोषं कुर्वन्ति वत्सान् मातृभिः संवाशयन्ति । जै ३, ३५६ ।

२. तद् रैवतमसृजत तत्पशुघोषो ऽन्वसृज्यत'''तस्माद् रैवतस्य स्तोत्रे पशुघोषं कुर्वन्ति वत्सान् मातृभिस्संवाशयन्ति । जै १, १४३ ।

३. यदिन्द्राय रैवताय ( निर्वपति ), यदेव बृहस्पतेस्तेजस्तदेवावरुन्धे । तैसं २, ३, ७, ३ ।

४. यद् बृहत्तद् रैवतम् । ऐ ४, १३ । [°त- ध्रुवा- १८; पशु- १४० द्र. ] ।

**रेष्मन्**- रेष्माणं स्तूपेन (प्रीणामि) । मै ३, १५,२ ।

**रै**- पशवो वै रायो मघवानः । काठ ३२, २; क ४१ ४ ॥ [ रै- पशु- १७१ द्र.] ।

**रोचन**-

१. अथ रोचनो ( नाम लोकः ) यस्मिन्न् अशनाया । जै ३,३४७ ।

२. रोचनो ( लोकः ) यस्मिन्ननशया । जै १, ३३४ ।

३. रोचनो ह नामैष लोको यत्रैष ( सूर्यः ) एतत्तपति । माश ७, १,१, २४ ।

४. सवनानि वै त्रीणि रोचनानि । मै ३, २, ८; माश ८, ७, ३, २१ । [°न- नक्षत्र- ११; यज्ञ- १५३ द्र ] ।

**रोदस्**->°स्त्व- यदरोदीत् (प्रजापतिः) तदनयोः (द्यावापृथिव्योः) रोदस्त्वम् । तै २, २,९,४ ।

**रोदसी**- द्यावापृथिवी- २ द्र. ।

**रोमण्वत्**->**रौमण्वत**- स ( उक्ष्णो रन्ध्रः ) ह वाव रौमण्वतः । स एवोशना काव्यः । स ह स यमुनयैव प्रतीपं स्वर्गं लोकमारोहत् । जै ३, १५० ।

**रोर**- रुद्र ९ रोराभ्याम् (प्रीणामि) । मै ३. १५, ३ ।

**रोह**- स्वर्गो वै लोको रोहः । माश ७, ५, २, ३६ ।

**रोहिणी** ( नक्षत्र- )-

१. आत्मा वै प्रजा पशवो रोहिणी । माश ११,१, १, ७ ।

२. इन्द्रस्य रोहिणी । तै १, ५, १, ४ ।

३. तद्यथेमा अस्यां ( पृथिव्याम् ) वीरुधो रूढा एवमस्मिन् पशवो रोहन्ति य एवं विद्वान् रोहिण्यामग्निमाधत्ते । मै १, ६, ९ ।

४. तया ( रोहिण्या देवाः ) रोहमरोह९स्तद् रोहिण्या रोहिणीत्वम् । काठ ८, १ ।

५. ता अस्य ( प्रजापतेः ) प्रजाः सृष्टा एकरूपा उपस्तब्धास्तस्थू रोहिण्य इवैव तद्धै रोहिण्यै रोहिणीत्वम् । माश २, १, २, ६ ।

६. प्रजापतिर्देवता, रोहिणी नक्षत्रम् । काठ ३९, १३ ।

७. यमु हैव तत्पशवो मनुष्येषु काममरोहँस्तमु हैव पशुपु काम९रोहति य एवं विद्वान् रोहिण्यां ( अग्नी ) आधत्ते । माश २, १, २, ७ ।

८. रोहिणी नक्षत्रमिन्द्रो देवता । तैसं ४, ४, १०, २ ।

९. रोहिण्यां वै देवाः स्वरायन् । मै १, ६, ९ ।

१०. विराट् सृष्टा प्रजापतेः । ऊर्ध्वारोहद्रोहिणी । योनिरग्नेः प्रतिष्ठितिः । तै १, २,२, २७ ।

११. सा ( विराट् )तत ऊर्ध्वारोहत् । सा रोहिण्यभवत् । तद्रोहिण्यै रोहिणित्वम् । तै १,१,१०,६ ।

१२. सोमस्य वा एतन्नक्षत्रं यद् रोहिणी । मै १, ६, ९ ॥ [°णी- अग्नि- ५८२; ऋद्धि- ३; चान्द्रमस्- २४; पशुकाम- ५; प्रजापति- १९२; २२९; २३८; २३९; बृहस्पति- ३४; ब्रह्मन्- १३७; ब्राह्मण- ६२; राजयक्ष्म- ५ द्र.] ।

**रौहिण** ( पुरोडाश-)- रौहिणाभ्यां वै देवाः सुवर्गं लोकमायन् । तद् रौहिणयो रौहिणत्वम् ।

तैआ ५, ७,१२ ॥ [°ण- अग्नि- २५९; अहोरात्र- २३; चक्षुस्- ३४; द्यावापृथिवी- ७ द्र.]।

**रौहिणक** (सामन्- )-

१. अथ रौहिणकम्। एतेन वै प्रजापतिरेकशफानां पशूनां काममारोहत्। तद्यत्काममारोहत् तद् रौहिणकस्य रौहिणकत्वम्। जै २, १४।

२. एतेवैं देवाः स्वर्गं लोकमारोहन्। यदरोहंस्तस्माद् रौहिणकानि। जै २, ६१।

३. तत् (रौहिणकम्) त्रयोदशनिधनं भवति त्रयोदशस्य मास उपाप्त्यै। तद्वा अशीतिभिस्संपन्नम्। आशयन्त्येवैनमेतेन (साम्ना)। जै २, १४ ॥ [°क- पशु- २६५ द्र.]।

**रोहित्**- शार्दूलाय रोहित्। मै ३, १४, ११।

**रोहिदश्व**- रोहिदश्व !··· अग्ने त्वं तरा मृधः। तैसं ४, १, ९, ३।

**रोहित**-

१. एतद्वा आसां (गवाम्) बीज ९ यद्रोहित ९ रूपम्। मै ४, २,१४।

२. ये (पशवः) प्रथमे ऽसृज्यन्त ते रोहिताः। जै ३, २६३।

३. रोहितं वै नामैतच्छन्दो यत्पारुच्छेपमेतेन वा इन्द्रः सप्त स्वर्गाँल्लोकानरोहत्। ऐ ५, १०।

४. रोहिता इव वै व्रीहयो रोहित इवायं (पृथिवी) लोको, रोहित इवासौ (द्युलोकः)। काठ १२,४। [°त- अग्नि- ६७७; पशु- ३४; २०९; रुद्र- ७० द्र.]।

**रोहितक**- यत्र चमसं न्यौब्जत् ततो रोहितको ऽजायत···तस्माद् रोहीतके (?रोहितके) रोहितके स्वजः। मै ३, ९, ३।

**रोहित-कूल->रोहितकूलीय** (सामन्-)-

१. यदु (विश्वामित्रः) कूले रोहिताभ्यामुदजयत्तस्माद्रोहितकूलीये इत्याख्यायेते। जै ३, १८३।

२. रोहितकूलीयं भवत्याजिजित्यै। एतेन वै विश्वामित्रो रोहिताभ्यां ९रोहितकूल आजिमजयत्। तां १४, ३, ११-१२।

३. विश्वामित्रो भरतानां मनस्सत्यायात् सौदन्तिभिर्नाम जनतया ९ शं प्रास्यते मां मां यूयं वस्निकाअयायेमानि मह्यं यूयं पूरयाथ यदीमाविद ९ रोहितावश्मचितं कूलमुद्वहात इति स एते सामनी अपश्यत्ताभ्यां युक्त्वा प्रासेधत्स उदजयत्। तां १४, ३, १३।

**रोहित-रूप**- पशु- २८३ द्र.।

**रौरव** (सामन्- )-

१. अग्निर्वै रूरस्तस्यैतद्रौरवम्। तां ७,५,१०।

२. तदेतत् पशव्यं साम (यद् रौरवम्)। जै १, १२२.।

३. ते (असुराः) प्रत्युष्यमाणा अरवन्त यदरवन्त तस्माद्रौरवम्। तां ७, ५, ११।

४. ते (असुराः) ऽभितप्यमाना अरवन्त। यदभितप्यमाना अरवन्त तद् रौरवस्य रौरवत्वम्। तदाग्नेयं साम। जै ३, १८४।

५. यदग्नी रूरुरेतत्सामापश्यत् तद् रौरवस्य रौरवत्वम्। जै १,१२२।

६. यदु रूर इति वृभ्रो ऽपश्यत् तस्माद्देव रौरवमित्याख्यायेते। जै १, १२२।

७. रौरवेण वै देवा ऊर्ध्वा स्वर्गं लोकमारोहन् । जै १, १२३ ।

८. रौरवेणैषां ( असुराणाम् ) स्वमाणानां ( देवाः ) स्वमाददत । जै १, १२३ ॥ [°व- पशु- १७५ द्र. ] ।

## ल

**लक्ष्मन्-** तस्माद्यस्य दक्षिणतो (मुखे [माश ८,४,४,११]; सर्वतः [८,५,४,३]) लक्ष्म भवति त पुण्यलक्ष्मीक इत्याचक्षते । माश ८,४,४,११;५,४,३ ।

**लक्ष्मी-** आदित्य- ३४.१ द्र. ।

**लप्सुगिन्-** यल्लप्सुगी तत्पुरुषाणाम् (रूपम् ) । जै २,३७१ ।

**लप्सुदिन्-** लप्सुदी पुरुषस्य रूपम् । माश ६, २, २, १५ ।

**ललाट-** ललाटाद् एव सिंहो ऽजायत । जै २, २६७ ।

**ललाम-** ललामो भवति, मुखत एवास्मिन् ( यजमाने ) तेजो दधाति । तैसं २, १, १०, १-२ । [°म- अहन्- ४० द्र.] ।

**लव-** सोमाय लवानालभते । मै ३,१४, ५ ।

**लवण-** लवणेन सुवर्णं सन्दध्यात् । गो १,१,१४; जैउ ३, ४, ३, ३ ॥ [°ण- गो- ३३ द्र.] ।

**लाज-** आदित्य- ११२; नक्षत्र- १३ द्र. ।

**लातव्य-**

१. एतद्ध स्म वा आह कुशाम्बः स्वायवो ब्रह्मा लातव्यः क ऽ स्विदद्य शिशुमारी यज्ञपथे ऽप्यस्तारिष्यति । तां ८, ६, ८ ।

२. लातव्यो गोत्रो ब्रह्मणः पुत्रः ( ओङ्कारः ) । गो १, १, २५ ।

३. स्वाहा वै सत्यसम्भूता ब्रह्मणो दुहिता ब्रह्मप्रकृता लातव्यसगोत्रा त्रीण्यक्षराण्येकं पदं त्रयो वर्णाः शुक्लः पद्मः सुवर्ण इति । ष ४, ७ ।

**लामगायन-** स्वाहा वै सत्यसम्भूता ब्रह्मणा प्रकृता लामगायनसगोत्रा द्वे अक्षरे एकं पदं त्रयश्च वर्णाः शुक्लः पद्मः सुवर्ण इति । गो १, ३,१६ ।

**√लिख्** स यदाह 'द्यां मा लेखीः' दिवं मा हि ऽसीरित्येवैतदाह । काश ४,६, ४, ६; माश ३, ६, ४, १४ ।

**लोक-**

१. अग्निर्वै लोकानां प्रज्ञपयिता । जै २, २२३ ।

२. अथ यत् करज् जनद् वृधद् इति व्याहरत् त एवैते लोका अभवन् । जै ३,३८० ।

३. अन्तः स्वर्गो लोकानाम् । जै ३, ५४;१६४ ।

४. इदं ( पृथिवीलोकः ) प्रातस्सवनम्, इदं (अन्तरिक्षलोकः) माध्यन्दिनं सवनम्, अदस् ( द्युलोकः ) तृतीयसवनं तेनेमे लोका आप्यन्ते । जै ३, ५७ ।

५. इम ऽ उ लोकाः संवत्सरः । माश ८, २, १, १७ ।

६. इमे लोकाः सुरुचः । माश ७,४,१, १४ ।

७. इमे वै लोका आजिदोहानि । जै २, २५५ ।

८. इमे वै लोका ( पृथिवी, अन्तरिक्षम्, द्यौः ) देवास्साध्याः । मै ३, ७,१०; काठ २४, १० ।
९. इमे वै लोका विश्वा सद्मानि । माश ६, ७, ३, १० ।
१०. इमे वै लोका विष्णोर्विक्रमणं विष्णोर्विक्रान्तं विष्णोः क्रान्तम् । माश ५, ४, २, ६ ।
११. इमे वै लोकाः सतश्च योनिरसतश्च यच्च ह्यस्ति यच्च न तदेभ्य एव लोकेभ्यो जायते । माश ७,४, १, १४ ।
१२. इमे वै लोकास्सन्तनयः (स्वरसामानः [ऐ.]) । ऐ ४,१९; जै ३,११९ ।
१३. इमे वै लोकाः सरिरम् ( स्रुचः [तै.] ) । तै ३, ३, १, २; ९,२; माश ७, ५, २, ३४; ८, ६,३,२१ ।
१४. इमे वै लोकाः सर्पास्ते ह्यनेन सर्वेण सर्पन्ति यदिदं किं च । माश ७, ४, १,२५ ।
१५. इमे वै लोकाः स्वयमातृण्णाः । तैसं ५, ५, ५, ३; माश ७,४, २,८ ।
१६. उत्तर उत्तरो ज्यायान् भवत्येवमिव हीमे ( त्रयः ) लोकाः । तैसं २, ३,६, ३; ४, ११,५ ।
१७. उत्तर एषां लोकानां ज्यायान् । तां १६, १०, ३ ।
१८. उपोदको नाम लोको यस्मिन्नयमग्निर् ऋतधाम यस्मिन् वायुरपराजितो यस्मिन्नादित्यो ऽभिद्युर्यस्मिन् वरुणः प्रद्युर्यस्मिन् मृत्यू रोचनो यस्मिन्नशया विष्टप एव सप्तमो ब्रह्मलोको यस्मिन्नेतद् ब्रह्म । जै १, ३३४ ।
१९. एत ऽ उ वाव लोका यदहोरात्राण्यर्धमासा मासा ऋतवः संवत्सरः । माश १०, २,६,७ ।
२०. एता वै ( भूर्भुवः स्वरिति ) व्याहृतय इमे ( पृथिव्यादयः ) लोकाः । तै २, २, ४, ३ ।
२१. एवमिव वा एषु लोकेषु पितरो मनुष्या देवाः । क ४१, ४ ।
२२. छन्दांसि वै सर्वे लोकाः । जै १,३३२ ।
२३. तदाहुः किं तत्सहस्रमितीमे लोका इमे वेदा अथो वागिति ब्रूयात् । ऐ ६, १५ ।
२४. त्रय इमे लोकाः । तैसं २, ५,११, ५-६; क ४७, ६; जै १, १५६; तां १६, १६,४ ।
२५. त्रयो वा इमे लोकाः ( + वज्रा एते [जै १, ३०४] ) । मै १, ६, १२;४,८, ५; जै १,१३९; ३०४; माश १, २, ४, २०; शांआ २,१७ (तु. ऐआ १,१,२; तां ७,१,१) ।
२६. त्रयो वाव लोकाः । मनुष्यलोकः पितृलोको देवलोक इति । माश १४, ४, ३,२४ ।
२७. यावन्त इमे लोका ऊर्ध्वास्तावन्तस्तिर्यञ्चः । तां १८,६,३ ।
२८. वाग् वा इयं वितता यदिमे लोकाः । जै २,३८९ (तु. जै २,२५३; २६४) ।
२९. विषमा इव हीमे ( त्रयः ) लोकाः । तैसं २,१,३,१; काठ १३,३ ।
३०. विष्णुस्त्र्यक्षरेण त्रीन् लोकानुदजयत् । तैसं १, ७, ११, १ (तु. मै १, ११, १०; काठ १४,४) ।
३१. स (विष्णुः) इमाँल्लोकान्विचक्रमे ऽथो वेदानथो वाचम् । ऐ ६,१५ ।
३२. सप्त हस्तास इति,······सप्त इमे लोकाः । काठसंक २५ : २;३ ।
३३. स यद् भूर्भुव स्वरिति व्याहरत् त एवेमे त्रयो लोका अभवन्न् उपोदक ऋतधामा ऽपराजितः । अथ करज् जनद् वृधद् इति व्याहरत् त एवैतेऽपरे लोका अभवन्न् अधिदिवः

प्रदिवो रोचनः। विष्टप एव सप्तमो ब्रह्मलोको यस्मिन् एतत् सत्यं भाति । तमेषा देवता सत्यं भूत्वानुप्राविशत् । जै ३,३८४ ( तु. जै ३,८० ) ।

३४. स यः स वैश्वानरः । इमे स लोका इयमेव पृथिवी विश्वमग्निर्नरोऽन्तरिक्षमेव विश्वं वायुर्नरो द्यौरेव विश्वमादित्यो नरः । माश ९,३,१,३ ।

३५. स ह प्रजापतिरीक्षांचक्रे । कथं न्विमे ( त्रयः ) लोका ध्रुवाः प्रतिष्ठिताः स्युरिति स एभिश्चैव पर्वतैर्नदीभिश्चेमाम् ( पृथिवीम् ) अदृहद्वयोभिश्च मरीचिभिश्चान्तरिक्षं जीमूतैश्च नक्षत्रैश्च दिवम् । माश ११,८,१,२ ।

३६. सहस्रसंमिता हीमे लोकाः । काठ २१,६ ।

३७. सा वा एषा ( गायत्री ) सावित्री ( ऋक् ) एषां ( त्रयाणाम् ) लोकानां प्रतिपदेषां च वेदानाम् । काठसंक ५१:३ ।

३८. सुवर्विद इत्येवास्य लोकस्य रूपम् । ए इत्यन्तरिक्षस्य, सुवरित्यमुष्य । जै २,३८४ ।

३९. सैषा दैवी विराड् यदिमे ( त्रयः ) लोकाः । ······ तस्या एतस्यै चन्द्रमा एवापिधानम् । जै १,२४६ । [°क- अप्- १३४;१३५; असुर- ७; इन्द्र- २०; उखा- १; उपसद्- ३; ओम्- २२; चरु- २; तृच्- २; त्रिणव- १;८; त्रिरात्र- ३; त्रिवृत्- ४; त्र्यालिखिता- १; दिव्य- ८; दिश्- ८; देव-५१; देवपुर- १; द्यावापृथिवी- २०; प्रजापति- १८; १२२; प्रतिष्ठा- १; ब्रह्मन्- ११२; भूतेच्छद्- १; मण्डलेष्टका-; महानाम्नी- २; मित्र- ३३; मित्रगुप्त-; मुहूर्त- १; रजस्- १ द्र. ] ।

**लोकम्पृणा** ( इष्टका- )-

१. अयातयाम्नी लोकम्पृणा । तैसं ५,७,५,६ ।

२. आत्मा लोकम्पृणा । माश ८,७,२,८ ।

३. वाग्वै लोकम्पृणा । माश ८,७,२,७ । [°णा- अनुष्टुभ्- २५; आदित्य- ७०; इन्द्र- १५८; क्षत्र- २४; दिव्- ११७; दिश्- ३९; नक्षत्र- १; मुहूर्त- १;३ द्र.] ।

**लोपा-** संवत्सराय लोपा । काठ ४७,८ ।

**लोपाश-** अर्यम्णो लोपाशः । काठ ४७,११ ॥ [°श- आश्विन १६ द्र.] ।

**१लोमन्-**

१. न ललाटे लोमास्ति न पाण्योः । काठ ६,१; क ३,१२ ।

२. यानि लोमानि स सुगन्धितेजनः । काठ २५,६ ।

३. लोमशौ भवतो मेध्यत्वाय, यावन्तो हि पशवो लोम जगृहुस्ते मेधं प्रापुः । काठ ३६,६ ।

४. लोमानि हृदये ( श्रितानि ) । तै ३,१०,८,८ ।

५. लोमैव हिङ्कारः । जैउ १,१२,२,६ । [°मन्- अभिधान-; ओषधि- २७; ओषधिवनस्पति- १;२;४; चमसाध्वर्यु- २; छन्दस्- ४१; दूर्वा- ३; बर्हिस्- ९ द्र.] ।

**लोमश-** पुष्टि- ८; प्रजापति- २४० द्र. ।

**२लोमन्-** (सामन्-)-

१. तदु ( लोमसाम ) दीर्घमित्याहुः । तां १३,११,१२ ।

२. भरद्वाजस्य लोम ( साम ) भवति । तां १३,११,११ । [°मन्- पशु- १७५ द्र.] ।

लोह-

१. लोहेन सीसम् ( सन्दध्यात् ) । गो १,१,१४ ।

२. श्यामं च मे लोहं च मे ( यज्ञेन कल्पेताम् ) । तैसं ४,७,५,१ ॥ [°ह- औष्णिह- ३; रजत- ७ द्र. ] ।

लोहमय- > °मयी- दिश्- ४७ द्र. ।

लोहायस- त्रपु- १; दन्दशूक- १ द्र. ।

लोहित- दन्दशूक- १; रक्षस्- २२; रुद्र- ४४ द्र. ।

लोहिततूल- ( इन्द्रो वृत्रमहन्स्तस्य) यो वपाया उत्खिन्नायाः (सोमः समधावत् ) तानि लोहिततूलानि । तां ९,५,७ ।

लोहितायस- दन्दशूक- २ द्र. ।

# व

वंश- प्राण- १६५ द्र. ।

वक्षस्-

१. श्येनमस्य वक्षः कृणुतात् । मै ४, १३, ४ ।

२. श्येनस्यावद्यति, वक्षस एव तेनावद्यति । मै ३, १०, ३ ।

वक्त्र- चक्रवाक- ३ द्र. ।

वङ्क्रि- पर्शु- २; पशु- ३११ द्र. ।

वज्र-

१. अथ यत् पंचदशं गोर्बहिष्पवमानं स वज्रः । जै २, ४४२ ।

२. अथ वज्रम् । वज्र आङ्गिरसः पशुकामस्तपोऽतप्यत । स एतत्सामापश्यत्···ततो वै स पशूनवारुन्धत । जै ३, १५ ।

३. अरुणपिशङ्गोऽश्वो दक्षिणैतद्वै वज्रस्य रूपꣳ समृद्ध्यै । तैसं ६, ६, ११, ६ ।

४. अष्टाश्रिर्वै वज्रः । ऐ २, १ ।

५. आनुष्टुभो वा एष वज्रो यत्षोडशी ( शस्त्रम् ) । कौ १७, १ ।

६. इन्द्रो वै वृत्राय वज्रं प्राहरत् , तस्य ( वज्रस्य ) या विप्रुषा आसꣳस्ताः शर्करा अभवन् । मै १, ६, ३ ।

७. इन्द्रो ह यत्र वृत्राय वज्रं प्रजहार । स प्रहृतश्चतुर्धाऽभवत्तस्य स्फ्यस्तृतीयं वा यावद्वा यूपस्तृतीयं वा यावद्वा रथस्तृतीयं वा यावद्वाथ यत्र प्राहरत्तच्छकलोऽशीर्यत स पतित्वा शरोऽभवत्तस्माच्छरो नाम यदशीर्यतैवमु स चतुर्धा वज्रोऽभवत् । माश १, २, ४, १ (तु. तैसं ५,२,६,२; काठ २०,४; २५,४) ।

८. एतं त्रिःसमृद्धं वज्रम् ( देवाः ) अपश्यन्नाप इति तत्प्रथमं वज्ररूपं सरस्वतीति तद् द्वितीयं

वज्ररूपं पञ्चदशश्चं भवति तत्तृतीयं वज्ररूपमेतेन वै देवास्त्रिःसमृद्धेन वज्रेणैभ्यो लोकेभ्योऽसुराननुदन्त । कौ १२, २।

९. एवमेव वै वज्रः साधुर्यदारम्भणतोऽणीयान् प्रहरणतः स्थवीयान् । ष ३, ४।

१०. तदेतत् पशव्यं साम······यद्ध आङ्गिरसो ऽपश्यत्तस्मात् वज्रमित्याख्यायते । जै ३, १५।

११. त्रयो वा इमे लोका वज्रा एते । जै १, ३०४।

१२. त्रिवृद् (+वै [मै., जै.]) वज्रः । मै ३,६,७; काठ १९,६; २०,४;२३,४; क २६,१; कौ ३,२; जै १, १९५।

१३. दक्षिणत उद्यामो हि वज्रः । माश ८, ५, १, १३।

१४. द्वौ वै वज्रौ घोरोऽन्यः शिवोऽन्यो यः शुष्कः स घोरो य आर्द्रः स शिवो वज्रेण खलु वै वीर्यं क्रियते । मै ३, ९, ६ (तु. काठ २६, ७; क ४१, ५)।

१५. पुरो गुरुरिव हि वज्र आरम्भणतोऽणीयान् । जै ३,२९५ (तु. तां ८, ५, २; ष ३, ४)।

१६. प्राचीनप्रवणो वै वज्रः । काठसंक ५८ : ३ ।

१७. य ऽ वा अमुमिन्द्रो वृत्राय वज्रं प्राहरत्, स (वज्रः) त्रेधाऽभवद् यदग्रं तेजा आसीत्स स्फयोऽभवद् यन्मध्य ऽस रथो यज्जघन ऽस यूपः । मै ४, ७, ९ (तु. तैसं ५, २, ६, २; काठ २०,४; २५,४)।

१८. ललामः प्राशुङ्गो भवत्येतद्वै वज्रस्य रूपम् । तैसं २, १, ३, ६।

१९. वज्र ऽ स्फयः । मै ३, ७, ७।

२०. वज्रः कार्ष्मर्यः । तैसं ५, २, ७, ४।

२१. वज्र आज्यम् (इन्द्रः [जै.]) । तैसं २, ६, २, ४; जै २, ८७; १४०।

२२. वज्र एव वाक् । ऐ २, २१।

२३. वज्रमेवोपरिष्टाद्दधाति रक्षसामपहत्यै । काठ २०, १३।

२४. वज्रश्शकर्यः (शम्या [क.]) । क ४७, ५; जै १, २०४; तां १२, १३, १४।

२५. वज्रश्शर्कराः । काठ २०, ४; क ३१, ६ (तु. तैसं ५, २, ६, २)।

२६. वज्रः शासः । माश ३, ८, १, ५।

२७. वज्रः षोडशः (स्तोमः) । तैसं ५, ३, ५, २ (तु. तैसं ५, ३, ५,२; काठ २१, २)।

२८. वज्रस्तेन यत्त्रिष्टुब्वज्रस्तेन यद्वाक् । ऐ २,१६।

२९. वज्रेण हिङ्कारेण रेतो विछिन्द्यात् । जै १, १००।

३०. वज्रेणैव भ्रातृव्यमवक्रामति । क ३०, १।

३१. वज्रेणैवैतद्रक्षा ऽ सि नाष्ट्रा अपहन्ति । माश ७, ४,१, ३४ (तु. माश ३, ६,४, १५)।

३२. वज्रो वा अभीवर्तः । जै ३, २९४।

३३. वज्रो वा उष्णिक्ककुभौ ··· ककुभि पराक्रमतोष्णिहा प्राहरत् । जै ३, २९५।

३४. वज्रो वै भ्रातृव्याय षोडशी । जै १, १९०।

३५. वज्रो वै रेवती (शक्वरी [तैसं.]) । तैसं २, २,८,५; काठ १०, १०।

३६. वज्रो वै वषट्कारः (विकङ्कतः [माश ५, २,४,१८]) । ऐ ३, ८; कौ ३, ५; गो २,३,१; ५; माश १, ३,३, १४; (तु. तैसं २, ६, २, ५; ऐ ३, ६)।

३७. वज्रो वै वैश्वानरीयम् (सूक्तम्) । ऐ ३, १४।

३८. वज्रो वै शरः ( शराः [तैसं.] ) । तैसं ६,१,३,५; काठ २३, ४; क ३६, १; माश ३,१,३,१३; २, १, १३ ।

३९. वज्रो वै षोडशी । तैसं ६, ६,११,३; मै ४, ७,६; काठ ३७,१७; गो २, २,१३; जै २,३६४; तां १२, १३, १४; १९,६, ३ (तु. मै ३,२,१०; ऐ ४,१; जै १,१९५; २०१; ष ३,११ ) ।

४०. वज्रो वै सामिधेन्यः । कौ ३, २;३; ७, २ ।

४१. वज्रो वै स्फ्यः । तैसं २, १,५,७; मै २, १,९; ४,१, १०; ४,६; क ३९,१; ४७,८; तै १,७, १०,५; ३, २, ९,१०; १०, १; माश १, २, ५,२०; ३, ३,१,५; ५, ४, ४, १५ ।

४२. वज्रो वै (+स्वरुर्वज्रः [मै ३, ९,६] ) स्वधितिः । मै ३, ९, २; ९,३; काठ २६, ३; क ४१, १ ।

४३. वज्रो वै हिङ्कारः । कौ ३, २; ११,१; जै १, ३१५ ।

४४. वाग्धि (शाक्वरो [तैसं., तै.] ) वज्रः । तैसं ३, २, ९,३; ऐ ४, १; तै २, १, ५, ११ ।

४५. वीर्य्यं ( +वै [माश ७, ३, १, १९] ) वज्रः माश १, ३, ५, ७ ।

४६. संवत्सरो ( +हि माश ३, ४, ४, १५ ) वज्रः । माश ३, ४,४,१५;६,४, १९ ।

४७. सफ्यापग्रहणो (+वै [क] ) वज्रो दक्षिणाविसर्जनः । काठ २१, २; क ३१, १७ ।

४८. हिङ्कारेण वज्रेणाऽस्माल्लोकादसुराननुदत । जैउ २, ३, २, ३ ॥ [°ज्र– अप्– ८५; २३२; अपस्या–३; अपोनप्तृ–; अग्नि–१; अश्व– ८१; आज्य– ९;३७; आज्यभाग–३; इन्द्र– १५९; उपसद्–२०; उष्णिह्– ७; एकादशिनी– ७; ऐन्द्र– ४३; ओजस्– २८; कार्ष्मर्य– ५; क्षत्र– २५; ग्रावन्– ११; घृत– १०; ३२; तेजन–; तिल्वकी–; त्रिणव– २०; त्रिवृत्– १५; २७; त्रिष्टुभ्–५३; देवयजन– ३; धनुस्– १; निधन– १०; १२; पञ्चदश– १८; २१; पञ्चदशरात्र–; परशु–; पशु– १४१; २८५; २८६; पौर्णमास– ५; प्रवभ्र–; प्रातःसवन– १७; ब्रह्मन्– ८३; भान्त–; मरुत्वतीय– ६; महानाम्नी– ११; मेखला– ५; यूप– १८; यौधाजय– ५; रक्षस्– ३६; रथ– ७; रथन्तर– ३३; राजन्य– १३; २२ द्र.] ।

वज्रिन्– अश्वेन च रथेन च वज्री ( इन्द्रः ) । तैसं ४,४,८,१ ॥ [°ज्रिन्– अश्व– ८०;८२ द्र.] ।

वडवा– बडवा– द्र. ।

वत्स–

१. अयमेव वत्सो यो ऽयं ( वायुः ) पवते । माश १२, ४, १,११ ।

२. वायव्यं वत्सम् (+इव [काठ.]) आलभेत, वायुर्वा अनयोर् ( द्यावापृथिव्योः ) वत्सः । तैसं २, १, ४, ७-८; काठ १३, ५ ।

३. वायव्यः खलु वाव वत्सः । काठ ३४, १ ।

४. वायुर्देवत्यो वै वत्सः । तैआ ५,७, २ ॥ [°त्स– अग्नि– २५०; अहन्– १३; ग्रावन्– १२; दैव्य– ३; मनस्– ३१; यज्ञपति– द्र.] ।

वत्सतर–>°री–

१. वत्सतर्यः सारस्वत्यः । मै ३, १३, १२ ।

२. सारस्वतं चरुं ( निर्वपति ), वत्सतरी दक्षिणा । तैसं १, ८, १७, १ ॥ [°री- देव- २३०; मारुती- ३ द्र.] ।

वत्सापाकरण- यद् वत्सानपाकरोति सदोहविर्धाने एव संमिनोति । तैसं २, ५, ५, ५ ।

वत्सर- यत्ते रुद्रोपरि धनुस्तद् वातो अनु वातु ते, तस्मै ते रुद्र वत्सरेण नमस्करोमि । तैसं ५, ५, ७, ४ ।

वधक- नाभिर्वधकः । मै ३, २, ६ ॥ [°क- अन्तरिक्ष- १४१ द्र.] ।

वनस्पति-

१. अग्नेर्मेधोऽपाक्रामत्, स कृष्णो भूत्वा वनस्पतीन् प्राविशत् । मै ४, १, १३ ।
२. एष ( फलग्रहिर्वृक्षः ) वै वनस्पतीनां वीर्यवत्तमः । क २९,८ ।
३. ओषधयो वै वनस्पतयः । काठ २६, ३; क ४१, १ ।
४. गोधा कालका दार्वाघाटस्ते वनस्पतीनाम् । मै ३, १४, १६; काठ ४७, ५ ।
५. चरथं वनस्पतीनाम् (आदित्य आदत्त ) । जै २, २६ ।
६. चराचरा हि वनस्पतयः । मै २, ३, २ ।
७. तेजो ह वा ऽ एतद्वनस्पतीनां यद्बाह्याशकलस्तस्माद्यदा बाह्याशकलमपतक्ष्णुवन्त्यथ शुष्यन्ति । माश ३, ७, १, ८ ।
८. नवविꣳशत्याऽस्तुवत, वनस्पतयोऽसृज्यन्त, सोमोऽधिपतिरासीत् । तैसं ४, ३,१०, ३; काठ १७,५ ।
९. याम् ( दक्षिणाम् ) अप्रसृताय ददाति, वनस्पतयस्तया प्रथन्ते । मै ४,८, ३ ।
१०. यो वनस्पतीनां फलग्रहिः, स एषां वीर्यावान्, फलग्रहिर्वैणुर्वैष्णवी भवति, वीर्यस्यावरुद्ध्यै । तैसं ५, १, १, ५ ।
११. यो वृक्षः फलग्रहिस्तस्य कुर्यादेष वै वनस्पतीनां वीर्यवत्तमः । काठ १९, १ ।
१२. यो वै वनस्पतीनां फलग्रहितमः, स एषाꣳ वीर्यवत्तमो वेणुर्वै वनस्पतीनां फलग्रहितमः, स एषाꣳ वीर्यवत्तमः । मै ३, १, २; २, ४ ।
१३. वनस्पतयो वालाः । तैसं ७, ५, २५, १ ।
१४. वनस्पते शतवल्शो विरोह इत्याव्रश्चने जुहोति । वनस्पतिष्वेव भूमानं दधाति । तस्मादेत आव्रश्चनाद् भूयाꣳसो जायन्ते । क ४१, १ ।
१५. वाग्वै देवान् मनुष्यान् प्रविशन्त्यैत्तस्या यदत्यरिच्यत तद्वनस्पतीन् प्राविशत् । काठ २३,४ ।
१६. वायुगोपा वै वनस्पतयः । मै ३, ९, ४ ।
१७. वारुणा ( वैष्णवा [तैसं.] ) वनस्पतयः । तैसं ५,२,८,८; काठ २८,४; क ४४,४ (तु. तैसं ५, ६,९,३) ।
१८. संवत्सरे वनस्पतयः ( क्षुधमघ्नन् ) ⋯ ( तस्मात् ) संवत्सरे वनस्पतयः फलं गृह्णन्ति । तैसं २,५, ६, ६-७ ।
१९. सप्तविꣳशत्यास्तुवत, वनस्पतयो ऽसृज्यन्त, सोमो ऽधिपतिरासीत् । मै २, ८,६ ।
२०. सोमाय वनस्पतये श्यामाकं चरुम् ( निर्वपति ) । तैसं १, ८, १०, १; मै २, ६, ६ ।

२१. सोमो वै वनस्पतिः । मै १, १०, ९; ३, १०, ४; काश ४,८,३,२२; माश ३, ८,३, ३३ ।
२२. स्वधया वनस्पतीन् ( आदित्यो ऽस्तंयन् प्रविशति ) । जै १,७ ॥ [°ति- अग्नि- १४;२३२; अप्- १४०; उग्र- २; उदुम्बर- २; १६; उलूक- २; द्रु-; पयोभाजन-; पृथिवी- ७४; प्राण- १६६ द्र.] ।

वनिष्ठु- उद्र- द्र. ।

वन्दारु- वन्दारुष्टे तन्वं वन्दे ऽ अग्नऽ इति वन्दिता तेऽहं तन्वं वन्देऽग्नऽ इत्येतत् । माश ६,८,२,९ ।

वपन-

१. अथ देवा ऊर्ध्वं पृष्ठेभ्यो ऽपश्यन् । त उपपक्षावग्रे ऽवपन्त । अथ श्मश्रूणि । अथ केशान् । ततस्ते ऽभवन् । सुवर्गं लोकमायन् । यस्यैवं वपन्ति । भवत्यात्मना । अथो सुवर्गं लोकमेति । तै १, ५, ६, २ ।
२. अथैतन्मनुर्वप्त्रे मिथुनमपश्यत् । स श्मश्रूण्यग्रे ऽवपत । अथोपपक्षौ । अथ केशान् । ततो वै स प्राजायत । प्रजया पशुभिः । यस्यैवं वपन्ति । प्र प्रजया पशुभिर्मिथुनैर्जायते । तै १,५,६,३ ।
३. ते ऽसुरा ऊर्ध्वं पृष्ठेभ्यो नाऽपश्यन् । ते केशानग्रे ऽवपन्त । अथ श्मश्रूणि । अथोपपक्षौ । ततस्ते ऽवाञ्च आयन् । पराभवन् । यस्यैवं वपन्ति । अवाङेति । अथो परैव भवति । तै १, ५,६,१-२ ।

वपा-

१. अग्रं वा एतत्पशूनां यद्वपा । तैसं ६, ३, ९, ५ ।
२. तां यदवपंस्तद्वपायै वपात्वम् । जै २, २६१ ।
३. शुक्ला वपा । ऐ २,१४ ।
४. स्वर्गो वपा, यद्वपया प्रातस्सवने चरन्ति, स्वर्गस्य लोकस्य समष्ट्यै । काठ २६,७; क ४१,५।
५. हुत्वा वपामेवाग्रे ऽभिघारयति । माश ३, ८, २, २४ ॥ [°पा- आत्मन्- २२; २६; पशु- २४३; प्रातःसवन- १६; यजमानदेवत्या- २ द्र.] ।

वपा-श्रपणी- कार्ष्मर्यमय्यौ वपाश्रपण्यौ भवतः । माश ३,८,२,१७ ।

वपुस्- पशु- २८८ द्र. ।

वम्री- एताः ( वम्रयः ) शुष्कादार्द्रमुद्दिहन्ति, रस ५ ह्यस्या ( पृथिव्याः ) उपजीवन्ति । मै ४,५,९ । [ °म्री- उपदीका- १ द्र. ] ।

वयस् (पक्षिन्-, बल-, अन्न-)-

१. अथ यदश्रु संक्षरितमासीत्तानि वया ५ स्यभवन् । माश ६, १,२,२ ।
२. उदीच्यै दिशो वैराजं भा असृजन्त । तद्वयसां घोषोऽन्वसृज्यत । तस्माद् यथा वयांसि पुनरादायं वाचं वदन्त्येवं वैराजेन पुनरादायमिव स्तुवते । जै ३,३५६।
३. उरस एवास्य ( इन्द्रस्य ) हृदयात्त्विषिरस्रवत्स श्येनो ऽपाष्ठिहाभवद्वयसा ५ राजा । माश १२, ७, १, ६ ।
४. एतद्वै वयसामोजिष्ठं बलिष्ठं यच्छ्येनः । माश ३, ३, ४, १५ ।

५. दक्षिणमर्धं ९ वया ९ स्यनुपर्यावर्तन्ते । मै ३, २, १० ।

६. दिव्य ९ सुपर्णं वयसा बृहन्तमिति दिव्यो वा एष ( अग्निः ) सुपर्णो वयसो बृहन्धूमेन। माश ९, ४, ४, ३ ।

७. निर्णामौ हि वयसः पक्षयोर्भवतो वितृतीये वितृतीये हि वयसः पक्षयोर्निर्णामौ भवतोऽन्तरे वितृतीयेऽन्तरे हि वितृतीये वयसः पक्षयोर्निर्णामौ भवतः । माश १०,२,१,५ ।

८. पश्चाद्धि वया ९ सि प्रतितिष्ठन्ति । क ३१, १४ ।

९. पृथुं तिरश्चा वयसा बृहन्तमिति पृथुर्वाऽएष ( अग्निः ) तिर्यङ् वयसो बृहन्धूमेन। माश ६, ३, ३, १९ ।

१०. प्रतिष्ठा पुच्छं वयसाम् ···सर्वाणि वयांसि पुच्छेन प्रतितिष्ठन्ति पुच्छेनैव प्रतिष्ठायोत्पतन्ति। ऐआ १,४,२ ।

११. वया ९ सि पक्वगन्धेन ( प्रीणामि ) । काठ ५३, १३ ।

१२. वयांसि बहु किंच किंचिदिव भक्षयन्ति श्वेतमिव प्रस्रावयन्ति । कौ २,२ ।

१३. वयो वै वामदेव्यम् ( साम ) । जै १, १३९ ।

१४. शिश्नं वयसाम् ( आदित्य आदत्त ) । जै २, २६ ।

१५. श्येनो वै वयसां क्षेपिष्ठः । काठ २४, ७; क ३१, १९; ३७, ८; ष ३,८ ।

१६. सर्वा ( + ह [काठ.] )वा इयं ( पृथिवी ) वयोभ्यो नक्तं दृशे दीप्यते, तस्मादिमां ( पृथिवीम् ) वया ९ सि नक्तं नाध्यासते । तैसं ५, ६, ४, ४; काठ २२, ९ ।

१७. सव्यं पक्षं वयांस्यनुपरिप्लवन्ते । जै २, ४१६ ।

१८. स ( श्येनः ) हि वयसामाशिष्ठः । तां १३, १०, १४ ॥ [°यस्- अग्नि- ६८०; अन्तरिक्ष- ४७; ७९; अन्न- ३९; गन्धर्वाप्सरस्- ३; तार्क्ष्य- ३; दक्षिण,णा- ८; देव- १०३; धूम- ३; निर्ऋति- १३; पशु- १७७; प्राण- १९०; मृत्युमुख-; यज्ञायज्ञीय- २० द्र.] ।

**वयस्कृत्-** अग्नि- २३२ द्र. । **वयस्या-** पशु- १७६ द्र. ।

**वयोधस्-**

१. वयोधसाधीतायाधीतं जिन्व । मै २, ८, ८ ।

२. वयोधा इति श्रोत्रम् । तैसं ५, ३, ६, २ ।

**वयुनाविद्-** प्रजापति- २४१ द्र. ।

**वर-**

१. यद्वरं ददात्यात्मानं तेन स्पृणोति । आत्मा हि वरः । क ४४, ५ ।

२ वर इव वै स्वर्गो लोकः । जै २, ९९ ।

३. वरो न प्रतिगृह्यः । तैसं ७, १, ६, ५ ।

४. सर्वं वै वरः । माश २, २, १, ४; ५, २, ३, १; १३, ४, १, १० ॥ [°र- आत्मन्- ४३; आदित्य- ८९; पुत्र- १२; यज्ञायज्ञीय- १७ द्र.] ।

वर-सद्- एष (सूर्य्यः) वै वरसद् वरं वा एतत्सद्मनां यस्मिन्नेष आसन्नस्तपति । ऐ ४,२० ।

वरण (वृक्ष-)-

१. तस्माद्वरणो भिषज्य एतेन हि देवा आत्मानमत्रायन्त तस्माद् ब्राह्मणो वारणेन न पिबेद् वैश्वानरन्नेच्छमया इति । तां ५, ३,१०-११ ।

२. प्रजापतिः पशूनसृजत । ते ऽस्मात्सृष्टा अपाक्रामन् । तान् वारवन्तीयेनैव वरणशाखामाच्छिद्यावारयत । यदवारयत तद्वारवन्तीयस्य वारवन्तीयत्वम् । तस्माद्वरणं भिषज्यमाहुः । जै २, ४१३ ।

३. वरणो यज्ञावचरः स्यान्न त्वेनेन जुहुयात् । मै १,६,७ ।

४. वरणो वारयादिदं देवो वनस्पतिः । आर्त्यै निर्ऋत्यै द्वेषाच्च वनस्पतिः । तैआ ६, ९,२ ।

वारण- वारणं (शङ्कुम्) पश्चादघं मे वारयाताऽइति । माश १३,८,४,१ ।

वराह-

१. अग्नौ ह वै देवा घृतकुम्भं प्रवेशयांचक्रुस्ततो वराहः सम्बभूव तस्माद्वराहो मेदुरो घृताद्धि सम्भूतस्तस्माद्वराहे गावः संजानते स्वमेवैतद्रसमभिसंजानते । माश ५,४,३,१९ ।

२. आण्डाभ्यां वराहौ (अजायेताम्) । जै २,२६७ ।

३. तां (पृथिवीं प्रजापतिः) वराहो भूत्वाऽहरत् । तैसं ७,१,५,१ ।

४. तेऽब्रुवन् (देवपाणयो नामासुराः) यद्वा आमा९ (देवगवीनाम्) वरम् (पयः) अभूत्तदहा स्तेति, तद् वराहो भूत्वासुरेभ्योऽधि देवानागच्छत् । मै १,६,३ ।

५. पशूनां वा एष मन्युः । यद्वराहः । तै १,७,९,४ ।

६. स (इन्द्रः) तं (वराहं वाममोषं सप्तानां गिरीणां परस्तादसुराणां वित्तं वेद्यं बिभ्रतम्) अहन् । (इन्द्रो विष्णुमब्रवीत्) एतम् (हतम्) आहरेति । तमेभ्यो (देवेभ्यः) यज्ञ एव (विष्णुरूपः) यज्ञं (वराहाख्यम्) आहर । तैसं ६, २, ४, २-३ ॥ [°ह- अन्न- १७४; गो- ५९; पृथिवी- ३१; ९१; २१०; प्रजापति- ७२; मन्यु- ६ द्र.] ।

वरिवस्- अन्तरिक्ष- ३१; पशु- १४२ द्र. ।

वरिष्ठासंवत्- पृथिवी- ५६ द्र. ।

वरुण-

१. अथ यत्रैतत्प्रदीप्ततरो भवति । तर्हि हैष (अग्निः) भवति वरुणः । माश २, ३, २,१० ।

२. अथाधिद्युर् (नाम लोकः) यस्मिन् वरुणः । जै ३, ३४७ ।

३. अस्तभ्नाद् द्यामसुरो विश्ववेदा अमिमीत वरिमाणं पृथिव्याः । आसीदद्विश्वा भुवनानि सम्राड् विश्वेत्तानि वरुणस्य व्रतानि । क १,१९ ।

४. उरु ९ हि राजा वरुणश्चकार सूर्याय पन्थामन्वेतवा उ । क ३,११ ।

५. एष वै प्रत्यक्षं वरुणस्य पशुर्यन्मेषः । माश २,५,२,१६ ।

६. क्षत्रस्य राजा वरुणोऽधिराजः । नक्षत्राणां शतभिषग्वसिष्ठः । तै ३,१,२,७ ।

७. खलतेर्विक्लिधस्य शुक्लस्य पिङ्गाक्षस्य मूर्द्धन् जुहोति । एतद्वै वरुणस्य रूपम् । तै ३, ९,१५,३ (तु. माश १३,३,६,५) ।

८. तस्याम् (राजासन्द्याम्) एनम् वरुणम् (देवाः) अभ्यषिञ्चन्त। वसवो राज्याय रुद्रा वैराज्यायादित्या स्वाराज्याय विश्वेदेवास्साम्राज्याय मरुतस्सार्ववश्याय साध्याश्चाप्त्याश्च पारमेष्ठ्याय। जै ३, १५२।

९. तिग्मतेजो वरुण स ऽ शिशाधि। काठ ३६, १५।

१०. निषसाद धृतव्रतो वरुणः पस्त्यास्वासाम्राज्याय सुक्रतुः। मै २, ६, १२; काठ ७, १४।

११. प्रत्यस्तो वरुणस्य पाशः। तैसं १, २, ८, २।

१२. यच्च (आपः) वृत्वा ऽ तिष्ठंस्तद्वरणोऽभवत्तं वा एतं वरणं सन्तं वरुण इत्याचक्षते परोक्षेण। गो १, १, ७।

१३. यथा वरुणोऽह्वयस्समनमदेवं भद्रास्संनतयस्सं नमन्तु। काठ ४५, २०।

१४. यद्दशमे ऽहन् प्रवृज्यते। वरुणो भूत्वा विराजमेति। तैआ ५, १२, २।

१५. यद्वस्य (ईजानस्य) दुरिष्टं भवति वरुणो ऽस्य तद् गृह्णाति। माश ४,५,१, ६।

१६. यद्वै किं च वातो नाभिवाति तद् वरुणस्य। क ४७, ३।

१७. यद्वै प्रजा वरुणो गृह्णाति, शमीं च यवं च न गृह्णाति, हेमन्तो हि वरुणः। काठ ३६, ६।

१८. यद्वै यज्ञस्य दुरिष्टं तद्वरुणो गृह्णाति। तां १३, २, ४; १५, १, ३।

१९. यवमयो भवति''' स्वेनैव भागधेयेन वरुणं निरवदयते। काठ १०, ४।

२०. यस्ते राजन् वरुण गायत्रछन्दाः। पाशो ब्रह्मन् प्रतिष्ठितः ''' त्रिष्टुप्छन्दाः पाशो क्षत्रे प्रतिष्ठितः, जगच्छन्दाः पाशो विशि प्रतिष्ठितः, '''अनुष्टुप्छन्दाः पाशो दिक्षु प्रतिष्ठितस्तं त एतेनावयजे''' छन्दांसि वै वरुणस्य पाशाः। मै २, ३, ३ (तु. मै २,३,१)।

२१. यस्ते राजन् वरुण देवेषु पाशस्तं त एतदवयजे ''' यस्ते राजन् वरुणाग्ने द्विपात्सु चतुष्पात्सु पशुषु वनस्पतिष्वोषधीष्वप्सु पृथिव्यां पाशस्तं त एतदवयजे। काठ ११, ११।

२२. यो अपक्षीयते [एवापूर्यते [माश.] (अर्द्धमासः)] स वरुणः। तां २५,१०,१०; माश २,४, ४, १८।

२३. रात्री वरुणः। काठ २२, ६; क ३४, १।

२४. वनेषु व्यन्तरिक्षं ततान वाजमर्वत्सु पयो अघ्न्यासु हृत्सु क्रतुं वरुणो विक्ष्वग्निं दिवि सूर्यमदधात् सोममद्रौ। क १, १९।

२५. वरुण ऽ सुषुवाणमन्नाद्यं नोपानमत्, स एतां वारुणीं कृष्णां वशामपश्यत्, ता ऽ स्वायै देवताया आ ऽलभत ततो वै तमन्नाद्यमुपानमत्। तैसं २, १, ९,१।

२६. वरुण उपनद्धः (सोमः)। तैसं ४, ४, ९, १; काठ ३४, १४।

२७. वरुण एनं वरुणपाशेन गृह्णाति (+ यः पाप्मना गृहीतो भवति [तैसं २, ३, १३, २])। तैसं २, ३, ११, १।

२८. वरुण एव सविता। जैउ ४, १२, १, ३।

२९. वरुणः (उपसद्देवतारूपाया इषोः) पर्णानि। ऐ १, २५।

३०. वरुणस्त्वा धृतव्रतो धूपयतु। मै ४, ९, १।

३१. वरुणस्य दशमी (द्वादशी [मै.])। तैसं ५, ७, २१, १; मै ३, १५,४; ५; काठ ५३, ११।

३२. वरुणस्य विराट् (पत्नी)। तैआ ३,९,२।

३३. वरुणस्य वै सुषुवाणस्य भर्गोऽपाक्रामत्स त्रेधापतद् भृगुस्तृतीयमभवच्छ्रायन्तीयं तृतीयमपस्तृतीयं प्राविशत्। तां १८,९,१।

३४. वरुणस्य शुष्मे ...या देवी सयमगाद् ...वर्चसा संविदाना। काठ ३६,१५।

३५. वरुणस्य सुषुवाणस्य दशधेन्द्रियं वीर्यं परापतत् ...अग्निना देवेन प्रथमेऽहन्ननु प्रायुङ्क्त। सरस्वत्या वाचा द्वितीये। सवित्रा प्रसवेन तृतीये। पूष्णा पशुभिश्चतुर्थे। बृहस्पतिना ब्रह्मणा पञ्चमे। इन्द्रेण देवेन षष्ठे। वरुणेन स्वया देवतया सप्तमे। सोमेन राज्ञा ऽष्टमे। त्वष्ट्रा रूपेण नवमे। विष्णुना यज्ञेनाप्नोत् ... ... यज्ञो वै विष्णुः। यज्ञ एवान्ततः प्रतितिष्ठति। तै १, ८,१,१-२।

३६. वरुणः समीच्या (मा पुनातु)। काठसंक ९६: ६।

३७. वरुणः सम्राट् सम्राट्पतिः। तै २.५,७,३; माश ११,४,३,१०।

३८. वरुणः सम्राडासन्द्यामासाद्यमानः। काठ ३४,१४।

३९. वरुणः (श्रियः) साम्राज्यम् (आदत्त)। माश ११,४,३,३।

४०. वरुणः (यज्ञस्य) स्विष्टम् (पाति)। ऐ ३,३८; ७,५।

४१. वरुणाय धर्मपतये यवमयं चरुम् (निर्वपति)। तैसं १,८,१०,१।

४२. वरुणाय राज्ञे कृष्णः। तैसं ५,५,११,१; काठ ४७,१।

४३. वरुणाय राज्ञे त्रयो लोहितललामाः। काठ ४९,१०।

४४. वरुणाय रिशादसे त्रयोऽरुणललामाः। काठ ४९,१०।

४५. वरुणायारण्यो मेषः। मै ३, १४,११।

४६. वरुणेन हि वा एष पाप्मना गृहीतोऽथैतस्य ज्योगामयति। मै २,५,६; ४,३,७।

४७. वरुणो दशाक्षरया (दशाक्षरेण [तैसं.]) विराजमुदजयत्। तैसं १,७, ११, २; मै १, ११,१०; काठ १४,४।

४८. वरुणो (यज्ञस्य) दुरिष्टं (गृह्णाति)। क ४५,५।

४९. वरुणो वाऽआर्पयिता। माश ५,५,४,३१।

५०. वरुणो वा एतद्यज्ञस्य गृह्णाति यदार्छन्ति। मै १,८,३।

५१. वरुणो वा एष एतर्हि वरुणदेवत्यो यर्ह्युपनद्धः। मै ३,७,८।

५२. वरुणो ऽसि धृतव्रतः (°तोऽ च्छिन्नपत्रः [काठ., क.])। तैसं १,२,१०,२; काठ २, ७, क २,१।

५३. वरुणो ऽसि विश्वौजाः (सत्यधर्मा [तैसं.])। तैसं १,८,१६,२; मै २,६,१२; काठ १५, ८।

५४. वातो (व्यानो [माश.]) वरुणः। मै ४, ८, ५; माश १२,९,१,१६।

५५. विराड् वरुणस्य (+पत्नी [गो.])। मै १,९, २; काठ ९, १०; गो २, २,९।

५६. शिथिरा वै ताः प्रजा वरुणो ऽगृह्णात् ... ता (प्रजाः) अप्राणतीर् वरुणो ऽगृह्णात् ... यद्वै तद् वरुणगृहीताभ्यः (प्रजाभ्यः) कमभवत् तस्मात् कायः, प्रजापतिर्वै कः, ... यत् काय आत्मन एवैना (प्रजाः) वरुणान् मुञ्चति। मै १, १०, १०।

५७. श्रीर्वै वरुणः। कौ १८, ९।

५८. संवत्सरो (+ हि [माश ४, १,४, १० ]) वरुणः । माश ४, १, ४, १०; ४, ५, १८ ।
५९. स ( इन्द्रः ) एतं वरुणाय शतभिषजे भेषजेभ्यः पुरोडाशं दशकपालं निरवपत् कृष्णानां व्रीहीणाम्। तै ३, १, ५, ९ ।
६०. सत्यानृते वरुणः । तै १, ७, १०, ४ ।
६१. समुद्रो वै वरुणो दक्षिणा समुद्रो यद् वारुणो दक्षिणार्ध आलभ्यते यजमानस्य निर्वरुणत्वाय । मै ४, ७, ८ ।
६२. सर्वान् वा एतद् वरुणो गृह्णाति यद्दीक्षते ( °क्षिते [क.] ) मनुष्यान् पितॄन्, देवान्। काठ २६, २; क ४०, ५ ।
६३. सवो वै देवानां वरुणः । माश ५, ३,१,५ ।
६४. सोऽब्रवीद्( वरुणः ) यद्वो न कश्चनाऽवृत तदहम्परिहरिष्य इति । किमिति । अपध्वान्तं साम्नो वृणेऽपशव्यमिति । जैउ १, १६, ३, ८ ।
६५. स्कम्भोऽसि वरुणस्य राज्ञो वरुणस्य पाशः । काठ ३७, १३ ॥ [ °ण- अग्नि- २३३; ३८९; ५१५; ६६८; ६७०; ७३४; अघमर्षण- २; अनृत- ११; १२; अन्तरिक्ष- ८८; अन्नपति- २; अप्- ८;४७;११०; २२६; २२८; २३३; २३५; २३६; २६०;२६५; अपान- २०; ४६; अभिद्यु- १; अवस्थावन्- १; अश्व- ८४; ८५; ९३; अहन्- १२; आदित्य- १४७; ३२३; ३२४; ३६०; ३६१; आदित्यवत्-; इन्द्र- ८४; १९१; उखा- १३; उत्तर,रा- ५; ऋजीष- ३; ओजस्- २७; क्लोमन्- १; क्षत्र- १५; २५; ७७; चक्रवाक- ४; जुम्बक-; ज्येष्ठा- ३; दक्ष- ६; दशपेय- २; दिव्- १८; देव- ११; २३१; धर्म- ११; १२; धर्मन्- १; ४; धर्मपति-; ध्रुवा- ९; नाक-; पशु- ३२; २८९, पाप्मन्- १३; १६; पाश- ३; ६; प्रतीची- १९; प्राण- २४७; भृगु- १; ३; महिष- ४; मित्र- ४;१२;१५; ७७; ३२; यक्ष्म-; यज्ञ- १४१; १५५; १५६; यव- ३; ७; ११; योनि- ४; राजन्य- १२; रात्रि- २७ द्र. ] ।

**वरुण-गृहीत-**

१. एता वाऽअपां वरुणगृहीता याः स्यन्दमानानां न स्यन्दन्ते । माश ४, ४,५, १० ।
२. यो वरुणगृहीतः स्यात्, स एतं वारुणं कृष्णमेकशितिपादमालभेत । तैसं २, १, २, १ ।
३. वरुणगृहीता वै स्थावराः ( आपः ) । तैसं ६, ४, २,३ ।
४. वरुणगृहीतो वा एष यो भूतिकामः ··· वरुणगृहीतो वा एष यो ग्रामकामः । मै २, ३, १ । [°त- आमयाविन्- १९ द्र. ] ।

**वरुण-नेत्र-** उत्तरसद्- द्र. ।

**वरुण-पाश-** उदुत्तम ९ वरुणपाशम् ······ श्रथाय । अनागसो अदितये स्याम । मै १,२,१८ । [°श- अहोरात्र- १६; छन्दस्- २८ द्र. ] ।

**वरुण-प्रघास-**

१. अ ९ हसो वा एषावेष्टिर्यद्वरुणप्रघासा जग्धाद्धै वरुणो गृह्णाति तस्माद् वरुणप्रघासा यावद्धै कुमारेऽम्नो जात एनस्तावदेतस्मिन्नेनो भवति यो वरुणप्रघासैर्यजते । काठ ३६,५ ।
२. अयमेव दक्षिण उरुर्वरुणप्रघासाः । माश ११, ५, २ ।

३. तद्यन्न्वेव ( प्रजापतिना सृष्टाः प्रजाः ) वरुणस्य यवान् प्रादंस्तस्माद्वरुणप्रघासा नाम । माश २, ५, २, १ ।
४. यदादित्यो वरुणं राजानं वरुणप्रघासैरयजत । तद्वरुणप्रघासानां वरुणप्रघासत्वम् । तै १,४,१०,६ ।
५. यद्वरुणप्रघासैर्यजते वरुण एव तर्हि भवति वरुणस्यैव सायुज्य ँ सलोकतां जयति । माश २,६, ४,८ ।
६. वरुणप्रघासेषु वाव त्रि ँ शदाहुतयः । मै १, १०,१३ ।
७. वरुणप्रघासैर्वै प्रजापतिः । प्रजा वरुणपाशात्प्रामुञ्चत्ता अस्यानमीवा अकिल्बिषाः प्रजाः प्राजायन्त । माश २, ५,३, १ ॥ [°स- उक्थ्य- ५; माध्यन्दिन (सवन-) २२ द्र.] ।

**वरुण-मुख-** सप्तदशेन स्तोमेन जगतीमभ्यक्रन्दत् । तत आदित्यानसृजत वरुणमुखान् । जै ३,३८१ ।

**वरुण-राजन्-** इन्द्र- २९७ द्र. ।

**वरुण-वत्** यदयजुषा कण्डूयेत, वरुणवत् कण्डूयेतापि गर्भाः पामना जायेरन् । काठ २३,४ ।

**वरुण-सव-** राजसूय- २ द्र. ।

**वरुण-सामन्-**
१. एतेन वै वरुणो राज्यमाधिपत्यमगच्छद्राज्यमाधिपत्यं गच्छति वरुणसाम्ना तुष्टुवानः । तां १३, ९,२३ ।
२. तदेतच्छ्रीसवः साम···यद्‌ु वरुणो राजाऽपश्यत् तस्माद् वरुणसामेत्याख्यायते । जै ३,१५२ ।

**वरुण्य,ण्या-**
१. वरुण्यं वाऽएनत्स्त्री करोति यदन्यस्य सत्यन्येन चरति । माश २,५,२,२० ।
२. वरुण्या वाऽएता आपो भवन्ति याः स्यन्दमानानां न स्यन्दन्ते । माश ५, ३,४, १२ । [°ण्य- अवभृथ- ५; ग्रन्थि- २; पाश- ४; मैत्र- १४-१६; मैत्री- ४; यव- २१; रज्जु- १; २; ३ द्र.] ।

**वरुणानी-** अग्नि- ४९; २३४; अप्- ८६ द्र. ।

**वारुण-**
१. निर्वरुणत्वाय वारुणः (पशुः) । मै ४, ७,८ ।
२. पेत्वः (पशुः) वारुणः । मै ४,७,८ ।
३. यत्स्त्री (अनुडुही वहला) सती वहत्यधर्मेण, तदस्यै वारुण ँ रूपम् । माश ५,२,४,१३ ।
४. यद्यनो वा रथो वा दीयते, वारुण ँ हि तत् । मै ४,८,२ ।
५. यल्लोहितं (ज्योतिः) तद् वारुणम् । मै १,८,६; काठ ६,७ ।
६. वारुणं यवमयं चरुम् । वहिनीधेनुर्दक्षिणा । तैसं १,८,७,१ ।
७. वारुणं श्यामशितिकण्ठमालभेत यं ज्येमानं यक्ष्मो गृह्णाति । काठ १३,६ ।
८. वारुण एककपालः पुरोडाशो भवति । माश ४,४,५,१५ ।
९. वारुणः कृष्ण एकशितिपात् पेत्वः । काठ ४८,३ ।

१०. वारुणः पेत्वः । काठ ४८,१ ।
११. वारुणं कृष्णं वृष्णिमभिचरन्नालभेत । काठ १३,२ ।
१२. वारुणं दशकपाल ९ सूतस्य गृहे महानिरष्टो दक्षिणा । तैसं १,८,९,१ ।
१३. वारुणं दशकपालम् (पुरोडाशं निर्वपेत्) । तैसं २,३,११,१ ।
१४. वारुणं दशकपालं पुरोडाशं (श्रीरपश्यत्) । माश ११, ४, ३,५ ।
१५. वारुणमधिश्रितम् (पयः) । मै १,८,१० ।
१६. वारुणमश्वम् (प्रजापतिरालिप्सत) । माश ६,२,१,५ ।
१७. वारुणास्त्रयः कृष्णललामाः । काठ ४९, १० ।
१८. वारुणेन (दशकपालेन) एवैनं (आमयाविनम्) वरुणपाशान्मुञ्चति । तैसं २, ३, ११, २ ।
१९. वारुणो ऽग्निः । जै २, २३२ ।
२०. वारुणो दशकपालः (पुरोडाशः) । तां २१, १०, २३ ।
२१. वारुणो यवमयश्चरुर्हिरण्यं चाश्वश्च दक्षिणा । मै २, ६, ४ ।
२२. वारुणो यवमयो दशकपालः (पुरोडाशः) । मै २, ६, १३; काठ ३७, २ ।
२३. वारुणो राजन्यः । काठ २७, ४ ।
२४. वारुणो वा अग्निरुपनद्धः । तैसं ५, १, ५, ३ ।
२५. वारुणो वै सोमः । काठ २४, ६; क ३७, ७ ।
२६. सूतस्य गृहान् परेत्य वारुणं यवमयं चरुं निर्वपति । माश ५,३,१,२ ॥ [°ण– अग्नि– ६२६; अभि√चर् १३; अश्व– ४३; ७६; ८८; ९०;९९; कृष्ण– ६; १०; १९; २०; पाश– ५; पुरुष– १४; बभ्रु– ३;९; मांस–१३; मैत्र– ११;१२; यवमय– २-६; राष्ट्र– १५ द्र.] ।

**वारुणी–**

१. तिस्रः कृष्णा वशा वारुण्यः। काठ ४९, १ ।
२. निर्वरुणत्वाय वारुणी (आहुतिः) । मै १, १०, १० ।
३. यद्धेनुः सती दान्ता तेन वारुणी । मै ४, ३, ४ ।
४. वारुणी कृष्णे वशे । काठ ५०, १ ॥ [°णी– अप्– १४९; २४३; अवि– १३; आमिक्षा– ३; कृष्ण– ५; रात्रि– ३४ द्र.] ।

**वरूत्री–** होत्रा वै वरुत्रयः (°त्रीः [काठ.]) । तैसं ५, १,७, २; काठ १९,७; क ३०, ५ ॥ [°त्री– अहोरात्र– ९;२५ द्र.] ।

**वरूथ–** वरूथं पुरस्ताद् वर्षीयः पश्चाद्भूसीयः । तैसं २,६,१,५ ।

**वरेण्य–** अग्नि– २३५; अप्– ११०; चन्द्रमस्– ५२ द्र. ।

**वर्चस्–**

१. वर्चः सोमः । माश ५, २, ५, १०; ११ ।
२. वर्चो द्वाविंशः । संवत्सरो वाव वर्चो द्वावि ९ शस्तस्य द्वादशमासाः सप्तऽर्तवो द्वे ऽ अहोरात्रे संवत्सर एव वर्चो द्वावि ९ शस्तद्यत्तमाह वर्च इति संवत्सरो हि सर्वेषां भूतानां वर्चस्वितमः। माश ८, ४, १, १६ (तु. तैसं ४, ३, ८, १; मै २, ८, ४; काठ २०, १३) ।

३. वर्चो वै हिरण्यम् । मै ४, ४, २; ४; तै १, ८, ९, १ (तु. माश ३, २, ४, ९) ।
४. सूर्यस्य वर्चसा ( +वर्चस्वी भूयासम् [काठ.]) । काठ ५, ५; ३२, ५; तां १, ३, ५; ७, ३ ( तु. माश ५, ४, २, २ ) ।
५. हिरण्येन वर्चः । काठ ४३, ४ ॥ [ °र्चस्- अग्नि- ३१७; ४९३;६१८; अर्क- २; ओषधि- ११४; गो- ७२; चतुश्चत्वारिंश- ३; प्रजा- ५६ द्र. ] ।

वर्चस्वत्- अन्नवत्-; भ्राजस्वत्- द्र. ।

वर्चस्विन्- यद्वै वर्चस्वी कर्म चिकीर्षति शक्नोति वै तत्कर्तुम् । माश ५, २, ५, १२ ।

वर्ण- चत्वारो वै वर्णाः । ब्राह्मणो राजन्यो वैश्यः शूद्रः । माश ५,५,४,९ ॥ [°र्ण- आशा ( दिश् )- ४; उदीची- २७ द्र. ] ।

वर्तक- कुष्ठिका- १ द्र. ।

वर्तिका- शरदे वर्तिकाः ( आलभते ) । मै ३, १४, १; काठ ५०, ४ ॥ [°का- क्षिप्रश्येन- द्र.] ।

वर्ष,र्षा-

१. वर्षं हविः (सावित्री [गो.]) । गो १,१,३३; तैआ २,१४,१ ।
२. ओषधीर्वर्षाभ्यः ( प्रजापतिः प्रायच्छत् ) । तैसं ७,२,१०,२ ।
३. चक्षुर्वर्षाः (ऋतुरास) पर्जन्यो वर्षाः । जै २,५१ ।
४. तस्माद्वैश्यो वर्षास्वादधीत । विड्ढि वर्षाः । माश २, १,३,५ ।
५. ता (वर्षाः) उभयं कुर्वन्त्य् आ च तपन्ति वर्षन्ति च । जै ३, १ ।
६. यदा वै वर्षाः पिन्वन्तेऽथैनाः सर्वे देवा सर्वाणि भूतान्युपजीवन्ति । माश १४, ३, २,२२ ।
७. यद्वर्षति तद्वर्षाणाम् (रूपम्) । माश २,२,३,८ ।
८. वर्षा उत्तरः (पक्षः संवत्सरस्य) । तै ३, ११,१०,३ (तु. मै ४,९,१८) ।
९. वर्षाः (वर्षाभिः [तैसं.] ) पुच्छम् (संवत्सरस्य) । तैसं ५, ६,१०,१; तै ३, ११,१०,४, तैआ ४,१९,१ ।
१०. वर्षा वै सर्वऽ ऋतवः । माश २, २,३,७ ।
११. वर्षा ह त्वेव सर्वेषामृतूना ९ रूपम् । माश २,२,३,७ ।
१२. वर्षा ह्यस्य ( वैश्यस्य ) ऋतुः । तां ६, १, १० ॥ [°र्ष,र्षा- अधिपति- ७; अन्न- ७५; आदित्य- १६०; ३२५; इड्- ३; इष्- ३; उत्तर- ११; उद्गातृ- १९; उद्गीथ- १०; ११; कृष्ण- ७; ग्रीष्म- २३; तित्तिर-; पशुमत्- ५; पार्जन्य- २; मनुष्य- ३१; मरुत्- ३८; यशस्- ७ द्र.] ।

वर्षाशरद्-वर्षाशरदौ सारस्वताभ्याम् (अवरुन्धे) । माश १२, ८,२,३४ ।

वर्षाहू- वर्षाह्वां जुहोति, एषा वा ओषधीनां वृष्टिवनिस्तयैव वृष्टिमाच्यावयति । तैसं २,४, १०,२ ॥ [°हू- ऋतु- ८५ द्र.] ।

वर्ष्य- अन्नाद्य- १८; पशु- २९० द्र. ।

वार्षिक-

१. धर्ता दिवो विभासि रजसः पृथिव्या इत्याह । वार्षिकावेवास्मा ऋतू कल्पयति । तैआ ५,६,६ ।

२. नभश्च नभस्यश्च वार्षिका ऋतू । मै २, ८, १२ ।

३. पृषन्तस्त्रयो वार्षिकाः । काठ ५०, ३ । [°क- आदित्य- २३९ द्र. ] ।

वलभिद् ( यज्ञ- )- ते ( देवाः ) वलभिदैव वलमभिन्दन् । जै २, ९० ।

वल्मीक- सर्पाणां वल्मीको गृहाः । मै ४,१,१३; काठ ३१, १२ । [°क- उत्कर- २; ऊर्ज्- १३; क्लोमन्- ३; पृथिवी- ४१;४९;८४;८६;१८५;१९९; प्रजापति- २०२; प्राजापत्य- १९ द्र.] ।

वल्मीक-वपा- यद् वल्मीकवपा भवन्त्यस्याः (पृथिव्याः) एवैनं (यजमानम्) जीवे यज्ञिय आधत्ते ॥ काठ ८,२ ॥ [°पा- पृथिवी- ५७ द्र. ] ।

१वश- > वशिन्- > °नी- वशिनी नामासीयं दिक् ( ध्रुवा ) । तैसं ५,५,१०,२ ।

वश्य- तेन (द्रव्येण) अनुलिम्पेदवांशं (लिङ्गम् ) च नि त्वा नक्ष्य विश्पत इत्येतेनास्य वेशस्थाः ( वेश्याः) प्रव्रजिताः (पतिकुलान्निर्गताः स्वैराचारिण्यः) च वश्या भवन्ति । सा २,६,४ ।

२वश (मेदस्-, सूक्त-)-, वशा (गो-)-

१. अङ्गारमिश्राद् भस्मनस् तिस्रो वशा असृज्यन्त मैत्रावरुणी बार्हस्पत्या वैश्वदेवी । जै ३,२६४ ।

२. आदित्या ( अदितिदेवताका ) खलु वाव वशा देवतया । काठ ३४,१ ।

३. गायत्र्याश्शिरोऽच्छिनत् ( यज्ञस्य वै शिरोऽच्छिद्यत [काठ २९,४] ); ततो यो रसोऽस्रवत् सा वशाऽभवत् । काठ १३,८; २९,४ ।

४. तस्माद् बह्व्यो देवता बहूनि च्छन्दांसि वशे शस्यन्ते । शांआ २,११ ।

५. यदा न कश्चन रसः पर्यशिष्यत तत एषा मैत्रावरुणी वशा समभवत्तस्मादेषा न प्रजायते रसाद्धि रेतः सम्भवति रेतसः पशवस्तद्यदन्ततः समभवत्तस्मादन्ते यज्ञस्यानुवर्तते । माश ४, ५,१,९ ।

६. यद्वशमस्रवत्सा वशा ऽभवत्तस्मात्सा हविरिव । ऐ ३,२६ ( तु. काठ २९,४) ।

७. वशामनूबन्ध्यामालभते । माश २,४,४,१४ ।

८. वशामालभन्ते । तामालभ्य संज्ञपयन्ति संज्ञप्याह वपामुत्खिदेत्युत्खिद्य वपामनुमर्शं गर्भमैष्टवै ब्रूयात्स यदि न विन्दन्ति किमाद्रियेरन् यद्यु विन्दन्ति तत्र प्रायश्चित्तिः क्रियते । माश ४,५,२,१ ।

९. वैष्णवो वशायाम् । काठ ३४,१६ ।

१०. स वषट्कारो ऽभिहृत्य गायत्र्याः शिरोऽछिनत्, तस्याच् शीर्ष्णाच्छिन्नाद्यो रसोऽक्षरत् ता वशा अभव९स्तद् वशाना९वशात्वम् । मै २,५,७ ।

११. स वैष्णुवारुणीं वशामालभेत । काठ १३, ४ ॥ [°श,शा- अप्- २०४; आमिक्षा- ५; उक्षन्- १; उदर- ३; ऋषभ- १५; छन्दस्- १७; दिव्- १३६; द्यावापृथिवीया- ५; पृथिवी- ५९; मैत्रावरुण- १०;१४;१५; मैत्रावरुणी- ३;४ द्र.] ।

वषट्कार-

१. एत एव वषट्कारस्य प्रियतमे तनू यदोजश्च सहश्च । कौ ३,५ (तु. ऐ ३,८) ।

२. एष एव ( वै [माश ११,२,२,५] ) वषट्कारो य एष ( सूर्य्यः ) तपति । माश १,७,२,११ ।
३. त्रयो वै वषट्कारा वज्रो धामच्छद्रिक्तः । स यमेवोच्चैर्बलि वषट्करोति स वज्रः⋯अथ यः समः संततो ऽनिर्हाणर्चः स धामच्छत्⋯⋯अथ येनैव षडवराध्नोति स रिक्तः । ऐ ३,७.
४. देवेपुर्वा एषा यद्वषट्कारः । तां ८,१,२ ।
५. यद् वाचः क्रूरं तेन वषट्करोति । तैसं ३,४,८,५ ।
६. यो धाता स वषट्कारः । ऐ ३,४७ ।
७. वज्रो वा एष यद्वषट्कारो यं द्विष्यात्तं ध्यायेद्वषट्करिष्यंस्तस्मिन्नेव तं वज्रमास्थापयति । ऐ ३,६ ।
८. वषट्करोत्येतद्वै वाचः क्रूरम् । काठ ९,१६ ।
९. वषट्कारेणार्धः ( इन्द्रः ) । तैसं ४,४,८,१ ।
१०. वषट्कारो वै यज्ञस्य प्रतिष्ठा । तैसं ७,५,५,३ ।
११. वषट्कारो हैष परोऽक्षं यद्वेट्कारः । माश ९,३,३,१४ ।
१२. वैश्वानरो वषट्कारः । मै ४,६,७ ।
१३. स वै वौगिति करोति । वाग्वै वषट्कारो वाग्रेतो रेत एवैतत्सिञ्चति षडित्यृतवो वै षट् तद्दतुष्वेवैतद्रेतः सिच्यते तदृतवो रेतः सिक्तमिमाः प्रजाः प्रजनयन्ति तस्मादेवं वषट्करोति । माश १,७,२,२१ ।
१४. स्तनयित्नुर्वषट्कारः ( यज्ञस्य ) । तैआ २,१४,१ ॥ [°र- अन्न- ३९; खदिर- ५; गायत्री- ११५; देव- ८३; देवपात्र- २; धातृ- ७;२२; निमेष-; प्राण- १९०; प्राणापान- २६; ब्रह्मयज्ञ- १; वज्र- ३६ द्र.] ।

## वसतीवरी-

१. तदासु विश्वान्देवान्संवेशयत्येते वै वसतां वरं तस्माद्वसतीवर्यो नाम । माश ३,९, २,१६ ।
२. ते (देवाः) वा एतदेव यज्ञस्य श्वस्तनमपश्यन् यद् वसतीवरीः । मै ४,५,१ ।
३. पशवो (यज्ञो [तैसं ६,४,२,१]) वै वसतीवरीः । तैसं ६,४,२,१;२ ।
४. यज्ञस्य संततिर्वसतीवरीषु परिह्रियमाणासु । काठ ३४,१५ ।
५. वसतु नु इदमिति तद् वसतीवरीणां वसतीवरीत्वम् । तैसं ६,४,२,१ ॥ [°री- देवता- ९ द्र.] ।

## वसन्त (ऋतु-)-

१. ऊर्ग्वै वसन्तः । ऐ ४,२६ ।
२. तस्य (संवत्सरस्य) वसन्त एव द्वार ९ हेमन्तो द्वारं तं वाऽएत ९ संवत्सर ९ स्वर्गं लोकं प्रपद्यते । माश १,६,१,१९ ।
३. तस्य (संवत्सरस्य) वसन्तः शिरः । तै ३,११,१०,२ ।
४. धूम्राः (पशवः) वसन्ताय । मै ३,१३,१९ ।
५. प्राण एव वसन्तः⋯वायुरेव वसन्तः । जै २,५१ ।

६. यदेव पुरस्ताद्वाति तद्वसन्तस्य रूपम् । माश २,२,३,८ ।
७. वसन्त एव हेमन्तात्पुनरसुरेतस्माद्ध्येष पुनर्भवति । माश १,५,३,१४ ।
८. वसन्तः शिरः । मै ४,९,१८; तैआ ४,१९,१ ।
९. वसन्तः समिद्धोऽन्यानृतून्त्समिन्धे । माश १,३,४,७ ।
१०. वसन्ते प्रथमेन यजेत । जै २,२१२ ।
११. वसन्तो वै समित् । माश १,५,३,९ ।
१२. वसन्तो हिङ्कारः । ष ३,१ ।
१३. समिधो यजति, वसन्तमेवर्तूनामवरुन्धे । तैसं २,६,१,१ ।
१४. समिधो यजति वसन्तमेव वसन्ते वा इदं सर्वं समिध्यते । कौ ३,४ ।
१५. स (प्रजापतिः) वसन्तमेव हिङ्कारमकरोत् । जैउ १,३,२,७ ॥ [°न्त- अग्नि- ५८५; आग्नीध्र- १८; आग्नेय- ४२; आग्नेयी- १;१२; १आज्य- ३८; ऊर्जस्वत्-; ऋतु- ७५; ओषधि- ७७; कपिञ्जल- ३; ग्रीष्म- २३; तेजस्- ३३; प्राची- ३३; ब्राह्मण- २५;६८; भर्गस्- ४ द्र.]।

वसन्ता-शिशिर- वसन्ताशिशिरेऽग्निर्वीरुधः सहते । मै १,६,३ ।

वासन्तिक- मधुश्च माधवश्च वासन्तिका ऋतू । मै २,८,१२ ॥ [°क- अग्नि- ५०८; प्राची- ३५; मधु- ६; मधुमाधूची- द्र.] ।

वसा-

१. परमं वा एतदन्नाद्यं यद्वसा । माश १२,८,३,१२ ।
२. रस एष पशूनां यद्वसा । तैसं ६,३,११,१ ।
३. श्यां (शीनं [मै.]) वसया (प्रीणामि) । मै ३,१५,८; काठ ५३,१० ।

वसाति- इदमेवाद्य वसामेति, त एव वसातयः । जै ३, २३८ ।

वसिष्ठ (ऋषि-)-

१. यद्वै नु श्रेष्ठस्तेन वसिष्ठोऽथो यद्वस्तृतमो वसति तेनोऽएव (प्राणः) वसिष्ठः । माश ८,१,१,६ ।
२. येन वै श्रेष्ठस्तेन वसिष्ठः (हिङ्कारः) । गो २,३,९ ।
३. ये वै ब्राह्मणाः शुश्रुवांसस्ते वसिष्ठाः । जै २, २४२ ।
४. रथन्तरमाजभार वसिष्ठः । ऐआ ३,१,६ ।
५. वसिष्ठो वा एतं ( इन्द्रक्रतुम् ) पुत्रहतोऽपश्यत् स प्रजया पशुभिः प्राजायत । तां ४, ७,३; ८,२,४ ।
६. वसिष्ठो वै जितो हतपुत्रोऽकामयत बहु प्रजया पशुभिः प्रजायेयेति स एते (जनित्रे) सामनी अपश्यत् । ताभ्यामस्तुत । ततो वै स बहु प्रजया पशुभिः प्राजायत । जै १,१५०; ३,३६ ।
७. स एता जमदग्निर्विहव्या अपश्यत् ता उपाधत्त, ताभिर्वै स वसिष्ठस्येन्द्रियं वीर्यमवृङ्क्त । तैसं ५,४,११,३ ।
८. स वसिष्ठोऽकामयताग्रया मे मुख्या प्रजा स्यादिति स एतं त्रिवृतं स्तोममपश्यत्तमाहरत्तेनायजत । जै २, २१७ ॥ [°ष्ठ- अग्नि- १८६; ३४३; इन्द्र- २५२; कुरु-; गायत्री- ७;

जनित्र- ४; जमदग्नि- ९; त्रिवृत्- ४५; दक्षिणतस् ५; प्रजापति- ४०;१५६; प्राण- ५२; १९१;३०८; प्लव (सामन्-)- १; रयि- ५ द्र.]।

**वसिष्ठ-पुरोहित-** भरत- ३ द्र.।

**वसिष्ठ-यज्ञ-** दाक्षायणयज्ञ- ३ द्र.।

**वासिष्ठ** (सामन्-)- वसिष्ठो वा एतेन वैडवः स्तुत्वाञ्जसा स्वर्गं लोकमपश्यत् स्वर्गस्य लोकस्यानुख्यात्यै स्वर्गाल्लोकान्न च्यवते तुष्टुवानः। तां ११,८,१४॥ [°ष्ठ- ब्रह्मन्- १४० द्र.]।

**वसिष्ठा-** वाग्वै वसिष्ठा। माश १४,९,२,२; शांआ ९,२।

**वसीयस्-** ब्रह्मन्-९२ द्र.।

**वसु-**

१. अष्टौ देवा वसवः सोम्यासः। चतस्रो देवीरजराः श्रविष्ठाः। ते यज्ञं पान्तु रजसः पुरस्तात्। संवत्सरीणममृत ऽ स्वस्ति। तै ३, १, २, ६।

२. एष (सूर्यः) वै वसुरन्तरिक्षसत्। ४, २०।

३. उशिगिति वसून् (असृजत)। तैसं ५, ३, ६, १।

४. कतमे वसव इति। अग्निश्च पृथिवी च वायुश्चान्तरिक्षं चादित्याश्च द्यौश्च चन्द्रमाश्च नक्षत्राणि चैते वसव एते हीद ऽ सर्वं वासयन्ते ते यदिद ऽ सर्वं वासयन्ते तस्माद्वसव इति। माश ११, ६, ३, ६ (तु. जै २,७७)।

५. चतुरो वा एतं (अग्निम्) मासो वसवोऽबिभरुस्ते पृथिवीमाजयन् गायत्रीं छन्दः। काठ २१, ५; क ३१, २०।

६. चतुर्विंशतिर्वसवो देवाः। जै १, ३०।

७. जक्षिवा ऽ सः पपिवा ऽ सश्च विश्वे ऽस्मे धत्त वसवो वसूनि। काठ ४, १२।

८. तिस्रो रोहिण्यस्त्रियव्यस्ता वसूनाम्। काठ ४९, ५।

९. दक्षिणं भागमात्मनोऽतिहरन्नपति··· वसवस्त्वा गायत्रेण च्छन्दसाऽऽरोहन्तु··· राज्याय। शांआ १, ७।

१०. प्रजा वै पशवो वसु। तैसं ५, २, ४, ४।

११. भद्रा नः सन्तु वसवो वसुप्रदाः। काटसंक ६२ : २।

१२. यथा ह त्यद् वसवो गौर्यं चित्पदि षिताममुञ्चता यजत्राः। एवो ष्वस्मन्मुञ्चता व्य ऽ हः प्र तार्यग्ने प्रतरं न आयुः। काठ २, १५।

१३. यद्वै किञ्च विन्दते तद्वसु। काठ १०, ६।

१४. ये खलु वाव प्रातः पशवः उपाक्रियन्ते ते वसवः। काठ ३३, ७।

१५. राज्यसि प्राचीदिग्वसवस्ते देवा अधिपतयोऽग्निर्हेतीनां प्रतिधर्ता, त्रिवृत् त्वा स्तोमः···, आज्यमुक्थम्···, रथन्तर ऽ साम···। तैसं ४, ४, २, १; मै २, ८, ९।

१६. वसव एव भर्गः। गो १, ५, १५।

१७. वसवः प्रवृक्तः (प्रवर्ग्यः)। तैआ ५, ११, ४।

१८. वसु च मे वसतिश्च मे (यज्ञेन कल्पेताम्)। तैसं ४, ७, ५, २।

१९. वसुभिर्देवेभिर्देवतया गायत्रेण त्वा छन्दसा युनज्मि वसन्तेन। काठ ४१,९।
२०. वसूनसृजताग्निमुखान् (प्रजापतिः)। जै ३, ३८१।
२१. वसूना९रातौ स्याम। माश १, ५, १, १७।
२२. वसूना९ श्रविष्ठाः (नक्षत्रम्)। तै १, ५, १, ५।
२३. वसूनां गायत्री (पत्नी)। तैआ ३,९,१।
२४. वसूनां प्रथमा कीकसा। तैसं ५, ७, १७, १; काठ ५३, ७।
२५. वायुर्वै वसुरन्तरिक्षसत्। माश ६, ७, ३, ११।
२६. शितिभ्रुवो वसूनाम्। मै ३,१३, ७।
२७. श्रविष्ठा नक्षत्र९ वसवो देवता। तैसं ४, ४,१०,२;३; मै २, १३,२०॥ [°सु- अग्नि- ६३; १४७;२३५;२५७;२६०;२७०; ७१८;७२३;७२९; अग्निष्टोम- ३९; अन्तरिक्षसद्-; १आज्य- ३९; आदित्य- २८१;३०३;३२६; इडा- १०; इन्द्र- २०३; ३४९; इन्द्रघोष- १;२; उशिज्- २;३; ऋष्य-; कपिञ्जल- ४; गायत्र-४१-४४; गायत्री- ९;३२;५२;५९;११६;१२२; तण्डुल- २; तेजस्- ३३; त्रयोदश- ४;५; द्यावापृथिवी- २६;३२; पवित्र- ८; पशु- १७८;१७९; पितृ- १०३; पृथिवी- १८८;१८९; प्राची- १;६;२५;३४; प्राण- १२८; १३५; प्रातःसवन- १;७;१८;२१; यज्ञ- १२०;१५३; राज्य- ५;६; रुद्र- ७१ द्र.]।

वसु-क्र- इन्द्र- ४१; ब्रह्मन्- ९२ द्र.।

वसु-धेय- इन्द्र- १६० द्र.।

वसु-मत्- वसुमान् यज्ञो वसीयान् भूयासम्। तैसं १, ७, ६, ४॥ [°मत्- अग्नि- १९;१२७; २३६; ३८१ द्र.]।

वसुमती- वसुमतीमग्ने ते छायामुपस्थेषमिति साध्वीमग्ने ते छायामुपस्थेषमित्येवैतदाह। माश १,४,५,२।

वसु-वनि- अग्नि- २३६ द्र.।

वसोर्धारा-

१. अत्रैव सर्वो ऽग्निः संस्कृतः, स एषोत्र वसुस्तस्मै देवा एतां धारां प्रागृह्णंस्तयैनमप्रीणंस्तद्यदेतस्मै वसव ऽएतां धारां प्रागृह्णंस्तस्मादेनां वसोर्धारेत्याचक्षते। माश ९,३,२,१।
२. तद्यदेषा वसुमयी धारा तस्मादेनां वसोर्धारेत्याचक्षते। माश ९,३,२,४।
३. विद्युत्स्तनः (वसोर्धारायै)। माश ९,३,३,१५॥ [°रा- अग्नाविष्णु- २; अभ्र- ४; काम- १०; तेजस्- १० द्र.]।

वस्वी- वस्व्यै हिङ्कुरु…इति पुरस्तात् बहिःपवमानस्य वदेत्। मै ४ २,४।

वसुक- ताः प्रजाः प्रजाता न प्रत्यतिष्ठन्, ता वसुकोऽसि वेषश्रिरसि वस्यष्टिरसीत्येतेषु लोकेषु प्रत्यस्थापयत्। तैसं ५,२,६,२ (तु. तां १,१०,११)।

वहिष्ठ- द्वौ द्वौ वै युक्तानां वहिष्ठौ। जै २,२९३।

वह्नि-

१. वह्निना हि तत्र गच्छति यत्र जिगमिषति। जै २,९९।

२. वह्निरसि हव्यवाहनः । मै १,२,१२; काठ २,१३; क २,७ ।
३. वह्निर्होता । तैसं २,२,१०,५ ॥ [°ह्नि- अध्वर्यु- ७; अनडुह्- १२; उशिज्- ४ द्र.] ।

वाकोवाक्य-

१. यद्व वाऽ अयं वाकोवाक्यमधीते क्षीरौदनमा९सौदनौ हैव तौ । माश ११,५,७,५ ।
२. वाकोवाक्यमतीरोकाः । जै २,२५ ।

वाच्-

१. अथ बृहस्पतये वाचे नैवारं चरुं निर्वपति । माश ५,३,३,५ ।
२. अथ यत्स्फूर्जयन्वाचमिव वदन्दहति तदस्य ( अग्नेः ) सारस्वतं रूपम् । ऐ ३,४ ।
३. अथ हास्य पुत्र आह ज्येष्ठो 'मनः पूर्वरूपं वागुत्तररूपं, मनसा वा अग्रे संकल्पयत्यथ वाचा व्याहरति,······प्राणस्त्वेव संहितेति । ऐआ ३,१,१ ।
४. अदितिरस्युभयतःशीर्ष्णी ( वाक् ) इति, स यदेनया समान९सद्विपर्यासं वदति, यदपरं तत्पूर्वं करोति यत्पूर्वं तदपरं तेनोभयतःशीर्ष्णी ( वाक् ) । माश ३,२,४,१६ ।
५. अधरा हनुः पूर्वरूपम् । उत्तरा हनुरुत्तररूपम् । वाक् सन्धिः । जिह्वा सन्धानम् । तैआ ७,३,४; तैउ १,३,४ ।
६. अयातयाम्नी वाऽ इयं वाक् । माश ४,५,८,३ ।
७. इय९ वाक् सप्तमी प्राणानाम् । मै ३,१,९ ।
८. इय९ वाङ् मध्यतो वदति । मै ३,६,५ ।
९. उद्गातारो वै वाचे भागधेयं कुर्वन्ति । तां ६,७,५ ।
१०. ऋत्विजो यजमानश्च सुरभिमतीमृचमन्वाहुर्वाचमेव पुनते । काठसंक १९३ : २; ३ ।
११. एकहायना मनुष्या वाचं वदन्ति । तैसं ६,१,६,७ (तु. क ३७,२) ।
१२. एकाक्षरा वै वाक् । जै २,३९२; ४२२; ३,२९४; तां ४,३,३ ।
१३. एतद्ध वै वैराज्यं वाचो यत्तूष्णींनिषद्यम् । जै २,१ ।
१४. एतद्वै वाचो जितं यद्ददामीत्याह । ऐ ८९ ।
१५. एषा वै परमा वाग्या सप्तदशानां दुन्दुभीनाम् । माश ५,१,५,६ ।
१६. क्रतुरेकत्रि९श इति पुरस्ताद् । वाग्वा एकत्रि९शः । काठ २०,१३ ।
१७. खट् फट् जहि । छिन्धी भिन्धी हन्धी कट् । इति वाचः क्रूराणि । तैआ ४,२,१ ।
१८. गौरी मिमाय सलिलानि तक्षती । एकपदी द्विपदी सा चतुष्पदी । अष्टापदी नवपदी बभूवुषी । सहस्राक्षरा परमे व्योमन्निति । वाचो विशेषणम् । तैआ १,९,४ ।
१९. चतुरुत्तरा वै वाचो रोहाः । जै २,३६७ ।
२०. चतुष्पदां वाचमनुष्टुभं प्रतिष्ठितिम् । वाचा वदति य एवं वेद । जै ३,११० ।
२१. तदाहुः किं तत् 'सहस्रम्' इतीमे लोका इमे वेदा अथो वागिति ब्रूयात् । ऐ ६;१५ ।
२२. तदेतत्तुरीयं वाचो निरुक्तं यन्मनुष्या वदन्त्यथैतत्तुरीयं वाचो ऽनिरुक्तं यत्पशवो वदन्त्यथैतत्तुरीयं वाचो ऽनिरुक्तं यद्वया९सि वदन्त्यथैतत्तुरीयं वाचो ऽनिरुक्तं यदिदं क्षुद्र९ सरीसृपं वदति । माश ४,१,३,१६ ।
२३. तद् यां तां वाचं व्यसृजत सोऽग्निः । जै ३,३५० ।

२४. तस्य ( प्राणस्य ) वाक् तन्तिः । ऐआ २,१,६ ।
२५. तां वनस्पतयश्चतुर्द्धा वाचं विन्यदधुर्दुन्दुभौ वीणायामक्षे तूणवे तस्मादेषा वदिष्ठैषा वल्गुतमा वाग्या वनस्पतीनां देवाना ५ ह्येषा वागासीत् । तां ६,५,१३ ।
२६. त्रिषत्या वै वाक् । जै २,३६८ ।
२७. त्रेधा विहिता हि वाक् । ऋचो यजू ५ षि सामानि । माश ६,५,३,४ ।
२८. त्रेधा हीय ५ वाग्वदति शनैरुच्चैरथ सूच्चैः । मै ४ ६,४ ( तु काठ २७,३; क ४२,३ ) ।
२९. त्र्यावृद्धै वाक् । तां १०,४,६;९ ।
३०. दक्षिणे ऽक्षिणि वाचः । शांआ ६,२; कौउ ४,२ ।
३१. दित्यौही वयसः सोमक्रयणी, यद् दित्यौहीं वयसो ददाति वाचमेवावरुन्द्धे । मै १, ६,४ ।
३२. नमो वाचे प्राणपत्न्यै स्वाहा । ष २,९ ।
३३ निष्किरीयाः सत्रमासत ते तृतीयमहर्न प्राजान ५ स्तानेतत्साम गायमानान् वागुपाप्लवत् तेन तृतीयमहः प्राजान ५ स्ते ऽब्रुवन्नियं वाव नस्तृतीयमहरदीदृशदिति तृतीयस्यैवैपाह्नो-दृष्टिः । तां १२, ५, १४ ।
३४. प्रजाः संवत्सरे वाचं वदन्ति । मै ३,७,४ ( तु. माश ७,४,२,३८) ।
३५. प्राण्यापान्य पुरुषो वाचं वदति । काठ २७,३; क ४२,३ ।
३६. प्रादेशमात्र ५ हीदमभि वाग्वदति । माश ६,३,१,३३ ।
३७. भूरिति प्रथमां वितृण्णीमुपदध्याद् भुव इति द्वितीया ५ स्वरिति तृतीयाम् । एतद्वै वाचः सत्यम् । क ३५,२ ।
३८. मधुमतीं वाचमावदानि जनेषु । शांआ १, २ ।
३९. मध्यतो वाग्वदति । काठ २०,९ ।
४०. मनसैव वाग्धृता । क ३७,४ ।
४१. मनसो रेतो वाग्वाचो रेतः कर्म । ऐआ २,१,३ ।
४२. मनोर्वै श्रद्धादेवस्य यजमानस्यासुरघ्नी वाग्यज्ञायुधानि प्रविष्टासीत्, तस्या वदन्त्या यावन्तोऽसुरा उपाशृण्व ५ स्तावन्तस्तदहर्नाभवन् । मै ४,१,६ ।
४३. मुखं वा एतत्संवत्सरस्य यद्वाचोग्रम् । तां ४, २, १७ ।
४४. यत्रो ह वै वाचोऽन्तस्तत् स्वर्गो लोकः । जै २,२९८ ।
४५. यत्स्विदादित्यः प्रायणीय आदित्य उदयनीयस्तदस्या ( वाचः ) उभयतः शीर्षत्वम् । मै ३,७,५ ।
४६. यत्स्विद्वाचा दीयते तदस्या ( वाचः ) दक्षिणात्वम् । मै ३,७,५ ।
४७. यद्वाचो ऽनातं तन्मनुष्या उपजीवन्ति । तैसं ६,१,२,७ ।
४८. यद्वाचो मधुमत् तस्मिन् मा धाः । तैसं ३,१,१०,१ ।
४९. यद्वाव चिकित्सत इत्थमसा३दित्थमसा३दिति, तदस्याश्चित्वम् । मै ३,७,५ ।
५०. यद्वाव जवत इत्थमसा३दित्थमसा३दिति, तदस्या ( वाचः ) जूत्वम् । मै ३, ७,५ ।
५१. यद्वाव ध्यायतीत्यमसा३दित्थमसा३दिति, तदस्या ( वाचः ) धीत्वम् । मै ३,७,५ ।

५२. या वै मेध्या वाक् सा तपोजा । तैआ ५,६,७ ।
५३. युनज्मि वाच ँ सह सूर्येण (+ते [तैसं.]) । तैसं ३,१,६,२; तां १, २,१ ।
५४. रोहिणीस्त्र्यवयो वाचे । मै ३,१३,६ ।
५५. वाक् च वै वायुश्चैतं ( आदित्यम् ) देवतानामानशानौ । जै २,३८९ ।
५६. वाक् शंसः (प्रजननम् [जै.]) । ऐ २,४; ६,२७; ३२; गो २,६,८; जै २,३८८ ।
५७. वाक् सरस्वती । मै २,१,७; ३,५; ४, ३,९; ७,८; काठ ११, ८; माश ७, ५,१,३१; ११, २,४,९; १२, ९,१,१३ (तु. ऐ २,२४; ३,१;२; ६,७) ।
५८. वाक् सर्वं ऋत्विजः । गो २,३,८ ।
५९. वाक् सावित्री (संवत्सरः [तां.]) । गो १,१,३३; तां १०, १२,७; जैउ ४,१२,१,१५ ।
६०. वागष्टममहः । तैसं ७, २, ८, ४ ।
६१. वागाश्विनम् । जै २, ३६८; ३, ११ ।
६२. वागिति श्रोत्रम्, स्त्री । जैउ ४,११,१,११[२] ।
६३. वागु वै यशः । जै १, २७२ ।
६४. वागु सर्वं भेषजम् । माश ७, २, ४, २८ ।
६५. वागेव देवाः (स ँ स्तुप्छन्दः [माश ८, ५, २, ५]) । माश १४, ४, ३, १३ ।
६६. वागेवर्क् । जै २, ३९ ।
६७. वागेव सरस्वती । ऐ २, २४; ६, ७ ।
६८. वागेव सुपर्णी ( माया ) । माश ३, ६, २, २ ।
६९. वागेव सुब्रह्म । जै २, ७८ ।
७०. वागेव होता । गो १, ३, १०; २, ३, ८ ।
७१. वाग्घि वाजस्य प्रसवः । मै १, ११, ५ ।
७२. वाग्घि शस्त्रम् । ऐ ३, ४४ ।
७३. वाग्घुतः ( प्रवर्ग्यः ) । काठ ३४, १६; तैआ ५, ११, ४ ।
७४. वाग्घृदये ( श्रिता ) । तै ३, १०, ८, ४ ।
७५. वाग्घोता (+षड्ढोतॄणाम् [तै.]) । गो २,५, ४; तै ३, १२, ५, २; माश १, ५, १, २१; तैआ ३, ६, १; १०, ६४,१ ।
७६. वाग्घ्येषा ( पथ्या स्वस्तिः ) । माश ३, २, ३, १५ ।
७७. वाग्देवत्यं साम वाचो मनो देवता । जैउ १, १८, ४, १४ ।
७८. वाग् भूत्वा ( प्रजापतिः ) सर्वं व्यभवत् । जै १, ३१४ ।
७९. वाग् (+वै [माश.]) यज्ञस्य होता । ऐ २, ५;२८; माश १२, ८, २, २३; १४,६, १, ५ ।
८०. वाग्योनिः । ऐ २,३८ ।
८१. वाग् वा अभीवर्तः (अङ्गुरेकाक्षरः [जै १,११४]) । जै २, २२५ ।
८२. वाग्वा ऽएषा निदानेन यत्सहस्री ( गौः ) तस्या एतत् सहस्रं वाचः प्रजातम् । माश ४, ५,८, ४ ।

८३. वाग्वामभृत् । माश ७, ४, २, ३५ ।

८४. वाग्वायोः ( वातस्य [काठ., गो.]) (+पत्नी [मै. गो.]) । मै १, ९,२; काठ ९, १०; गो २, २, ९; तैआ ३,९,१ ।

८५. वाग् वाव चतुर्थे ऽहनीन्द्रः । इन्द्रियावान् भवति य एवं वेद । जै ३, ५७ ।

८६. वाग्वाव दीक्षितो वाग्दीक्षा वागिदं सर्वं क्षियति वाचि वावेदं सर्वं क्षितम् । जै २,५४ ।

८७. वाग्वाव शतपदी । प १, ४ ।

८८. वाग् वेदिः । मै १, ९, १; तैआ ३, १, १ ।

८९. वाग्वैरूपम् ( साम ) । तां १६,५,१६ ।

९०. वाग्वै वषट्कारो वाग्रेतः । माश १,७,२,२१ ।

९१. वाग्वै वाजस्य प्रसवः । तै १,३,२,५ ।

९२ वाग्वै वायुः । तै १,८,८,१; तां १८,८,७ ।

९३. वाग्वै विराट् । मै ३,२,१०; जै ३.६७; माश ३,५,१,३४ ।

९४. वाग्वै विश्वकर्मऽर्षिः । वाचा हीद ँ सर्वं कृतम् । माश ८,१,२,९ ।

९५. वाग्वै विश्वामित्रः (शबली [तां.]) । कौ १०,५; १५,१; २९,३; तां २१,३,१ ।

९६. वाग्वै समुद्रो न वै वाक् क्षीयते न समुद्रः क्षीयते । ऐ ५,१६ (तु. तां ७,७,९) ।

९७. वाग्वै सरमा (शर्म [ऐ.]) । मै ४,६,४; ऐ २,४० ।

९८. वाग्वै सरस्वती ( +पावीरवी [ऐ.]) । तैसं २, १, २, ६; २, ९, १; मै १, १०,५; ११, ९; २,३,९; ४,१; ५,२; ३,६,४; ९,५; १०,६; ४,४,७; काठ २३, २; २९,१; क ४५,२; ४८, १८; ऐ ३,३७; कौ ५, २; १२, ८; १४, ४; गो २,१, २०; जै १,७०; २,२९८; तां ६, ७, ७; १६,५,१६; तै १,३,४,५; ८,११,२; माश २ ५,४,६; ३,९,१,७ ।

९९. वाग्वै सरिरं छन्दः । माश ८,५,२,४ (तु. माश ७,५,२,५३) ।

१००. वाग्वै सिनीवाली (सार्पराज्ञी [कौ.]) । तैसं २,४,६,२; कौ २७,४; माश ६,५,१,९ ।

१०१. वाग्वै सीतासमरः, प्राणा वै सीतास्तासामय ँ समयः । माश ७,२,३,३ ।

१०२. वाग्वै सुब्रह्मण्या । ऐ ६,३; जै २,७८ ।

१०३. वाग्वै सोमक्रयणी (गौः) । मै १, ६,४; ३, ७,३; काठ २४, १; क ३७, २; माश ३, २, ४, १०; १५ ।

१०४. वाग्वै स्रुक् (हविष्कृत् [माश १,१,४,११]; होता [कौ.]) । कौ १३,९;१७,७; माश ६,३,१,८ ।

१०५. वाग्हृदये ( प्रतिष्ठिता ) । तै ३,१०,८,४; शांआ ११, ६ ।

१०६. वाङ् मे होता । ष २,६ ।

१०७. वाचं सरस्वतीं स्वाहाकारेण परिगृह्णीयात् । जै १,८२ ।

१०८. वाचं स्म सत्यवतीमुपेत । जै २,४१९ ।

१०९. वाच आत्मान ँ सन्तनु । काठ ३९ ८ ।

११०. वाचमष्टापदीमहमित्यष्टौ हि चतुरक्षराणि भवन्ति । नवस्रक्तिमिति बृहती सम्पद्यमाना नवस्रक्तिः । ऐआ २,३,६ ( तु. जै ३,८९ ) ।

१११. वाचं धेनुमुपासीत । तस्याश्चत्वार स्तनाः स्वाहाकारो वषट्कारो हन्तकारः स्वधाकारस्तस्यै

द्वौ स्तनौ देवा उपजीवन्ति स्वाहाकारं च वषट्कारं च हन्तकारं मनुष्याः स्वधाकारं पितरस्तस्याः प्राण ऋषभो मनो वत्सः । माश १४,८,९,१ ।

११२. वाचा वै वेदाः संधीयन्ते, वाचा छन्दांसि, वाचा मित्राणि संदधति, वाचा सर्वाणि भूतान्यथो वागेवेदं सर्वमिति । ऐआ ३,१,६ ।

११३. वाचा स्वादु चास्वादु च विजानाति । जै १,२६९ ।

११४. वाचा ह्यपूतममेध्यं वदन्ति, तेषामिन्द्रियं वीर्यं वाचोऽपक्रामति । जै २,२२२ ।

११५. वाचे पैङ्गराजः । काठ ७,३ ।

११६. वाचे सरस्वत्यै स्वाहा । तैआ ४,५,१;१५,१ ।

११७. वाचो वा एते व्यृध्यन्ते ये वात्यां धावयन्ति । जै २,२२५ ।

११८. वाचो वा एतौ (वाव तौ [ऐ.]) स्तनौ सत्यानृते वाव ते । ऐ ४, १; गो २,४,१९ ।

११९. वाचो विधृतिम् ( विधृतम् [मै.] ) अग्निं प्रयुजं स्वाहा । तैसं ४,१,९,१; मै २,७,७ ।

१२०. विधृतिरुपरिष्टाद् बृहस्पतेराधिपत्ये वाचं मे दाः । मै ४,९,३ ।

१२१. वैश्वदेवी वाक् । काठ २१,८ ।

१२२. शीर्ष्णो ह्ययमधिवाग्वदति । माश १,४,४,११ ।

१२३. श्रीर्वै वाचो ऽग्रम् । तां ६, ९, १२ ।

१२४. षड्वा अहानि वाग्विभज्यते, न वै षष्ठमहर्वागतिवदति, सर्वा वै षष्ठेऽहन्वागाप्यते । मै ३,७,६ ।

१२५. सप्तधा वै वागवदत् । ऐ २,१७ ।

१२६. सप्तधेयं वाग्वदति । काठ २४,४; क ३७,५ ।

१२७. सरस्वतीं (आमयाविनः) वाक् (गच्छति) । तैसं २,३,११,१ ।

१२८. सरस्वती वाचमदधात् । तै १,६,२,२ ।

१२९. सर्वां वाचं पुरुषो वदति । तां १३,१२,३ ।

१३०. स (प्रजापतिः) वाचमयच्छत्स संवत्सरस्य परस्ताद्व्याहरद् द्वादशकृत्वः । ऐ २,३३ ।

१३१. स (प्रजापतिः) वाचस्सत्यं निरमिमीत भूर्भुवस्स्वरिति । काठ ६,७ ।

१३२. सा ( वाक् ) ऊर्ध्वोदातनोद्यथापां धारा संततैवम् । तां २०,१४,२ ।

१३३. सा ( वाक् ) तृतीयमहः प्राप्य वैरूपा भवति, यदिदं तिर्यग्वाच एहि प्रेह्याहरोपाहराशय पाययेति । जै २,१ ।

१३४. सा ( वाक् ) प्रथममहः प्राप्य रथन्तरं भवति । इयमेव पृथिवी । जै २,१ ।

१३५. सा वा ऽ एषा वाक् त्रेधा विहिता । ऋचो यजू ँषि सामानि । माश १०,४,५,२ ।

१३६. सा वागब्रवीत् ( देवान् ) स्त्रीकामा वै गन्धर्वा, मयैव स्त्रिया भूतया पणध्वमिति…तथेति ( देवाः ) तया महानग्न्या भूतया ( वाचा ) सोमं राजानमक्रीणन् । ते ( देवाः ) वाच ँ स्त्रियमेकहायनीं कृत्वा तया (सोमम्) निरक्रीणन् । तैसं ६, १,६,५; ऐ १, २७ ।

१३७. सा वाग्दष्टा चतुर्धा व्यभवदेषु लोकेषु त्रीणि तुरीयाणि, पशुषु तुरीयम्……तस्या यदत्यरिच्यत तां ब्राह्मणे न्यदधुः । काठ १४,५ ।

१३८. सुप्राची ह्येषा ( वाक् ) प्रायणीये, सुप्रतीच्युदयनीये । मै ३,७,५ ।

१३९. सैषा वनस्पतिषु वाग्वदति या दुन्दुभौ या नाड्यां या तूणवे। क ३६,१।
१४०. स्तनयित्नुं वाचः ( आदित्य आदत्त )। जै २, २६।
१४१. स्वाहाकारं यजति, वाचमेवावरुन्धे। तैसं २, ६, १, २॥ [वाच्- अकार- १; अग्नि- १०४; १४३; १६५; १६६; २३७; २४५; ३४३; ६५५; ६६५; ६८१; ६८२; ७५२; अग्निहोत्री- ४; अज,जा- ५२; अतिरात्र- ११; अदाभ्य- ६; अदिति- ९; अनुमति- ८; अनुष्टुभ्- १; २३; ३८; ६०; ६२-६४; अनृत- १७; ३०; ३२; अन्तरिक्ष- १४६; अन्न- १२७;१७५; अन्नाद्य- १९;२४; अप्- २२४; अपान- ४७; अर्बुद- ३; अषाढा- ८; आगति-; आत्मन्- ७८; ७९; ८०; आदित्य- ३८१; आरम्भणीय- ३; इन्द्र- २८२; ३१५; ३६१; इन्द्राग्नि- २९; इन्द्रिय- १३; उक्थ- २२; उत्तरनाभि-; उत्तरवेदि- ८; उदयनीय-८; उदीची- १०; २०; उर्वशी-; ऋग्वेद- ६; ऋच्- ४८; ५०; ५७; ऋत- १७; ऋतु- १००; ऋषभ- १३; ऐन्द्रवायव- १; ९;१०; ऐन्द्री- ९;१०; काम- १७; क्रतु- ६; क्रौञ्च- ३; क्षत्र- ४०; क्षत्रिय- २१; क्षेम- २; गन्धर्व- ११; गायत्री- २९; ११७; गिर्- १; गो- ३५; गौरीवित- ११; चन्द्रमस्- ८९;९०; चित्त- ४; छन्दस्- ३१; ४५;१००; १०१; जिह्वा- ३; जुहू- १६; जू-२; ज्योतिस्- ३१; तपस्- २०; त्रिरात्र-११; त्वष्टृ- ३१; दधृषी-; दध्यञ्च्- ४; दर्शपूर्णमास- १५; दशस्तोभ-; दिव्- १६१; दुन्दुभि- २; देव- २३४; २३६; देवयान- ९; देवी- ९; दैवी- ५; द्वादशाह- २४; धियावसु-; धिषणा- ३; धी- २; ५;६; धेनु- १६; पङ्क्ति- ३; पथ्या- ५; पशु- २९३; पशुमत्- १; पावक- ३; पुरुष- ५८; ६६; पुष्टि- ३; पृथिवी- ४८; ६०; १९०; प्रक्ष-; प्रजापति- २८; ५२; १२८; १२९; १५४;१५८; १७३; २४२-२४४; प्रस्तोतृ- १; प्राण- ३५; ५६;५७; ६३; ६५; ११९; १९२; २५८; २६४-२७१; २७३-२७५; ३००; ३०८; प्राणापान- ८; २६; प्रायण- २; प्लुषि-; बृहत्- ३८; बृहती- ३२; ३५; बृहस्पति- १६; ४३; बेकुरा- १-२; ब्रह्मन्- ८३; ११५; १३८; १५८; १६१; ब्राह्मण- ६४; ७६; भर्गस्- ५; मति- ३; मधु- १४; मनस्- ४; ७; ९; १५; १९; ३४; ३७; ५०; ५४; ५७; ६२;६८;७१;७६-८०; ८६-८७; मनुष्य- २५; मनोता- १; मरुत्- १८; महिषी- २; मृन्मय-; यज्ञ- १५८-१६२; यज्ञायज्ञीय- २१-२३; यज्ञिया- ५; यशस्- ८; योषा- १२; १७; रक्षोभाष्-; रथन्तर- ३४;३५; रस- ७; राष्ट्री- २; रेतस्- ४०; रेवती- १४; लोक- २८; लोकम्पृणा- ३; वज्र- २२; २८; ४४; वनस्पति- १५; वषट्कार- ५; वसिष्ठा- द्र.]

वाक्पति-

१. अयं वाव वाक्पतिर्यो ऽयं ( वायुः ) पवते। काश ४, १, ३, १५।
२. वाक्पतिर्होता। तैआ ३, १, १॥ [°ति- प्रजापति- १५८ द्र.]।

वाक्पा- पुरोवसु- द्र.।

वाचस्पति-

१. बृहस्पतये वाचस्पतये नैवारं चरुम् ( निर्वपेत् )। मै २, ६, ६।
२. यो वै वाचो ऽध्यक्षः स वाचस्पतिः। मै २, २, ५।
३. वाचस्पतिर्होता। मै १, ९, १॥ [°ति- दशहोतृ- १०; पैङ्गराज-; प्रजापति- १५८; प्राण- १७१; ब्रह्मन्- ९४ द्र.]।

वाज-

१. अमृतो ऽन्नं वै वाजः । जै २, १९३ ।

२. वाज ऽहनुभ्याम् (प्रीणामि) । मै ३, १५, १; काठ ५३,२ ।

३. वाजं त्वा, सरिष्यन्तं त्वा वाजजित ऽसम्मार्ज्मीति यज्ञं त्वा वक्ष्यन्तं यज्ञिय ऽसम्मार्ज्मीत्येवैतदाह । माश १, ४, ४, १५ ।

४. वाजो वै स्वर्गो लोकः । गो २, ५, ८; तां १८, ७, १२ ।

५. वीर्य्यं वै वाजाः । माश ३, ३, ४, ७ ।

६. सर्वः सोमं पिपासति वाज ऽह गच्छति । मै १, ११,५ ।

७. सोमो वै वाजस्तस्य चन्द्रमास्तृतीयमयं यः ( वायुः ) पवते स तृतीयं येन यजन्ते स तृतीयम् । मै ४, ५, ४ ॥ [°ज– अन्न– १६; ४०; ४१; अर्वन्– ५; ओषधि– १८; पशु– २९५; प्रजा– ५६; मास– १४; वाच्– ७१ द्र.] ।

वाज-जित्-

१. त ( देवाः ) एतत् सामापश्यन् । तेनास्तुवत । ते वाजजिगीवा विश्वधनानीत्येवासुराणां यद्धनं ये पशवो यदन्नाद्यमासीत् तदवृञ्जत तदेव वाजजितो वाजजित्त्वम् । जै ३,२९९ ।

२. ते वाजिजिगीवेत्येवान्नाद्यमसुराणामवृञ्जत । तदेव वाजजितो वाजजित्त्वम् । जै ३, १५१ ।

३. वाजजिद्भवति सर्वस्याप्त्यै सर्वस्य जित्यै । तां १३, ९, २०; १५, ११, १२ ।

४. वाजं त्वा सरिष्यतं त्वा वाजजित ऽसम्मार्ज्मीति यज्ञं त्वा वक्ष्यन्तं यज्ञिय ऽसम्मार्ज्मीत्येवैतदाह । माश १, ४, ४,१५ ।

वाज-दावरी ( सामन्- )–

१. अन्नं वै वाजो ऽन्नं दावर्यः । जै ३, १४७ ।

२. वत्सा वाजदावर्य्यः । तां १३, ९, १७ ।

वाज-पति– एष (अग्निः) हि वाजानां पतिः । ऐ २, ५ ।

वाज-पेय ( यज्ञ- )–

१. अथैष वाजपेयः । वाजपेयेनान्नाद्यकामो यजेत । अन्नपेयो ह वा एष यद्वाजपेयः । जै २,१९२ ।

२. अन्नं वा ऽ एष उज्जयति यो वाजपेयेन यजते ऽन्नपेय ऽह वै नामैतद्यद्वाजपेयम् । माश ५, १, ३, ३ ।

३. प्रजापतिरकामयत वाजमाप्नुयां ऽस्वर्गं लोकमिति स एतं वाजपेयमपश्यद्वाजपेयो वा एष वाजमेवैतेन स्वर्गं लोकमाप्नोति । तां १८, ७, १ ।

४. यद् वाजपेय ऽस सम्राट् सवः । काठ ३७,६ (तु. तै २, ७, ६, १) ।

५. वाज ऽह्येतेन ( वाजपेयेन ) देवा ऐप्सन् । तै १, ३, २, ३ ।

६. वाजपेयो वा एष य एष ( सूर्यः ) तपति । गो २, ५, ८ ।

७. सप्तदश उ एवा ( एव ) वाजपेयः । जै १, २१ ।

८. सम्राड् वाजपेयेन ( इष्ट्वा भवति ) । माश ५, १,१, १३; ९, ३, ४, ८ ।

९. स वा एष ब्राह्मणस्य चैव राजन्यस्य च यज्ञः । तं वा एतं वाजपेय इत्याहुः । तै १, ३,२,३ ।

१०. स वाजपेयेनेष्ट्वा सम्राडिति नामाधत्त। गो १,५, ८।

११. सोमो वै वाजपेयः (+ तद् य एवं विद्वान्त्सोमं पिबति वाज ऽ ह गच्छति [मै.])। मै १, ११, ५; तै १, ३, २, ३ (तु. काठ १४, ५)।

१२. स्वाराज्यं गच्छति य एतेन (वाजपेयेन) यजते। मै १, ११, ५॥ [°य- अग्निहोत्र- २९; अन्न- ४०; देव- १११; प्राजापत्य- २४; बार्हस्पत्य- ६; ब्रह्मन्-१४ द्र.]।

**वाजपेय-याजिन्**- प्रजापति- २४५ द्र.। **वाजप्रसवीय**- अग्नि- ६४१ द्र.।

**वाजिन्-**

१. अग्निर्वायुः सूर्यः। ते वै वाजिनः। तै १, ६, ३, ९।

२. आदित्यो वाजी। तै १, ३, ६, ४।

३. एष (तार्क्ष्यः) वै वाजी देवजूतः। ऐ ४, २०।

४. कुवयः कुटरुर्दात्यौहस्ते वाजिनाम्। मै ३, १४, २०।

५. देवाश्वा वै वाजिनः (+अत्र देवाः साश्वा अभीष्टाः प्रीता भवन्ति [गो.])। कौ ५.२; गो२,१,२०।

६. पशवो वै वाजिनः। मै १, १०, ९; काठ ३६, ४; गो २, १, २०।

७. यत्सद्यो वाजान्त्समजयत्। तस्माद्वाजी नाम। तै ३, ९,२१,२।

८. यदा वै गौरश्वः पुरुषो ऽ न्नस्य सुहितो भवत्यथ स वाजी भवति। जै ३,२९९।

९. वाजिनां वाजिनम्। मै १, १०, १।

१०. वाज्येवैनं (सोमम्) पीत्वा भवति। तै १, ३, २, ४॥ [°जिन्- अग्नि- १७०; अर्वन्- ३; अश्व- २९;८६;८७; इन्द्र- १९१; उक्थ्य- ६; ऋतु- २९; छन्दस्- ४२; यज्ञ- ११४ द्र.]।

**वाजि-मर्त्त्**- इन्द्र- ३६२ द्र.।

**वाजिन-**

१. इन्द्रियं वै वीर्यं वाजिनम्। ऐ १, १३।

२. पशवो वै वाजिनम्। तै १, ६, ३, १०।

३. यो वाजिनं लोहित ऽ सः। काठ ३४, ११।

४. योषा पयस्या रेतो वाजिनम्। माश २,४,४,२१;५,१,१६॥ [°न- रेतस्-३४; वाजिन्-९ द्र.]।

**वाण** (महावीणा-)-

१. अन्तो वै वाणः (वाद्यानाम्)। तां ५,६,१२; १४,७,८।

२. वाणः शततन्तुर्भवति। तैसं ७,५,९,२ (तु. तां ५,६,१३)।

**वात-**

१. अयं वाव यः (वातः) पवते स यज्ञः, पाङ्क्तो यज्ञः। काठ ३२,६।

२. आ वात वाहि भेषजं वि वात वाहि यद्रपः। त्व ऽ विश्वभेषजो देवानां दूत ईयसे। तैआ ४,४२,१।

३. एष (वातः) हीद ऽ सर्वं व्यचः करोति। माश ९,४,१,१०।

४. तस्मादेषो ऽर्वाचीनमेव वातः पवते। माश ८,७,३,९।

५. द्वाविमौ वातौ वात आ सिन्धोरा परावतः। दक्षं ते अन्य आवातु, पराऽन्यो वातु यद्रपः। तैआ ४,४२,१-२।

६. पथ्यानां त्वा वातानां (+ यन्त्राय [तैसं.]) धर्त्राय गृह्णामि । तैसं १,६,१,२; काठ ३२,६ ।
७. मनसा संकल्पयति तत् प्राणमपिपद्यते, प्राणो वातं वातो देवेभ्य आचष्टे । माश ३,४, २,६ ।
८. यददो वात ते गृहे ऽमृतस्य निधिर्हितः । ततो नो देहि जीवसे । जै ३,२६६ ।
९. यदा वा अग्निं वात उपवाजयत्यथ स महद् दीप्यते । जै ३,८८; २०७ (तु. जै २, १३८) ।
१०. यदिदं सर्वं वाति तस्माद्वातः । जै २,५६ ।
११. युक्तो वातोऽन्तरिक्षेण ते सह । तां १,२,१ ।
१२. वातो मे प्राणः । काठ ३७,१५ ।
१३. वातो हि वायुः । माश ८,७,३,१२ ।
१४. समुद्रोऽसि नभस्वान् इत्याहैतद्वै वातस्य रूपम् । तैसं ५,४,९,४ ।
१५. हंसो वातस्य । मै ३, १४, १५ ॥ [°त- अग्नि- ६८३; अध्वर्यु- ३९; अन्तरिक्ष- ११५; १३६; अप्- १३८; आत्मन्- ८१; ८२; प्राण- १९२; २६२; २६६; २७६; २७७; मनस्- २०; यज्ञ- १६३; वरुण- १६; ५४; वाच्- ८४ द्र. ]।

वात-रशन- तस्य ( प्रजापतेः) यन्मांसमासीत् ततोऽरुणाः केतवो वातरशना ऋषय उदतिष्ठन् । तैआ १,२३,२ ।

वात-वत्- मरुत्- ३ द्र. ।

वात-होम-
१. प्राणा वै वातहोमाः । माश ९,४,२,१० ।
२. वायुर्वातहोमाः । माश ९,४,२,१ ।

वातापि- वातापयो हवनश्रुतः । मै १,९,१ ॥ [°पि- इन्द्र- ४२ द्र.] ।

वात्स (सामन्-)- वात्सेन (साम्ना) वत्सो ( अग्निम् ) व्यैत् ( प्राविशत् ) मेधातिथिना मेधातिथिस्तस्य ( वत्सस्य ) न लोम च नौषत्तद्वाव स तर्ह्यकामयत, कामसनि साम वात्सं काममेवैतेनावरुन्धे । तां १४,६,६ ।

वात्सप्र ( सामन्-)-
१. दैवमवसानं यद्वात्सप्रम् । माश ६,८,१,३ ।
२. प्रतितिष्ठति वात्सप्रेण तुष्टुवानः । तां १२,११,२४ ।
३. प्रतिष्ठा वै वात्सप्रम् । माश ६,७,४,१५ ।
४. यद्देव वत्सं स्पृशति तस्माद्वात्सप्रं सूक्तम् । कौ २,४ ।
५. वत्सप्रीर्भालन्दनः श्रद्धां नाविन्दत स तपोऽतप्यत स एतद्वात्सप्रमपश्यत्स श्रद्धामविन्दत श्रद्धां विन्दामहा इति वै सत्रमासते विन्दते श्रद्धाम् । तां १२,११,२५ ।
६. स हैष दाक्षायणहस्तः । यद्वात्सप्रं तस्मात्तं जातं कामयेत सर्वमायुरियादिति वात्सप्रेणैनमभिमृशेत्तदस्मै जातायायुष्यं करोति । माश ६,७,४,२ ॥ [°प्र- अहोरात्र- १९; रात्रि- २८ द्र.] ।

वानप्रस्थ- राजा सर्वस्वं दत्त्वा अरणी आदाय वानप्रस्थं गच्छेत् । काठसंक २६ : ७ ।

वाम- यं वै गां यमश्वं यं पुरुषं प्रशंसन्ति वाम इति तं प्रशंसन्ति । तां १३, ३, १९ ।
[°म- पशु- २१७; प्रजा- ५६; प्राण- १३६ द्र.] ।

वाम-देव- तं देवा अब्रुवन्नयं वै नः सर्वेषां वाम इति तस्माद्वामदेवस्तस्माद्वामदेव इत्याचक्षत एतमेव ( प्राणम् ) सन्तम् । ऐआ २,२,१ ॥ [°व- दक्षिणतस् ५; प्रजापति- १५९ द. ]।

वामदेव्य( सामन्-)-

१. अथ वामदेव्यं शिवं शान्तं सुव्वाणमनुवर्तता इति । जै २,१६४ ।
२. आत्मा वै व्रतस्य वामदेव्यम् । जै २,४११ ।
३. इदं वा वामदेव्यं यजमानलोको ऽमृतलोकः स्वर्गो लोकः । ऐ ३,४६ ।
४. क्लृप्तिर्वा एषा शान्तिर्वा एषा प्रतिष्ठा वा एषैव वाव यज्ञो यद्वामदेव्यम् । जै ३,११८ ।
५. तद्यानि ह वै स्तुतानि सामानि पश्चात्वं तेषां वामदेव्यम्, अथ यान्यस्तुतानि पुरस्त्वं तेषां यो वै ग्रामस्य श्रेष्ठी बलिष्ठो भवति तेन पश्चात्वेन तेन पुरस्त्वेन यन्ति । जै ३,११८ ।
६. तद्वा एतत्पशव्यं यद्वामदेव्यम् । जै १,१३८ ।
७. तद्वा एतत् पिता माता साम्नां यद्वामदेव्यम् । जै १,१४४ ।
८. तद् (वामदेव्यम्) यन्मध्यतः क्रियते शान्त्या एव निषिद्धयै । जै १,१४४ ।
९. तावब्रूतां ( मित्रावरुणौ ) वामं मर्त्या इदं देवेष्वाजनीति तस्माद्वामदेव्यम् ( साम )। तां ७,८,१ ।
१०. तासु वामदेव्यम् । स्तुतशस्त्रयोर्ह खलु वा एषा शान्तिर्यद् वामदेव्यम् । यद्ध वै किं च यज्ञस्य मिथ्योल्बणं क्रियते तदेतेनैव शमयित्वोत्तिष्ठन्ति । मत्यं वा एतद्यज्ञस्य यद्वामदेव्यम् । स यथा स्थूललोष्टं मत्येन शमयेदेवमेवैतद्वामदेव्येन सर्वाणि स्तुतशस्त्राणि शमयन्ति । जै ३,३०१ ।
११. यदब्रुवन् ( देवाः) इयद्वा वेदमासेदं वाव नो देवानां वाममिति वामदेव्यस्य तद्वामदेव्यत्वम्। जै १,१४४ ।
१२. यद्यन्तरिक्षे वामदेव्येन ( अनुविन्दाम ) तस्यौदुम्बरः सोमचमसो दक्षिणा । जै २,१५९ ।
१३. यद्वा इद९ सद् यद् भूतं यद्भवद् यद्भविष्यद्यदिमे अन्तरा द्यावापृथिवी तद् वामदेव्यम् । मै १,६,७ ।
१४. रूक्षितमिवैतद्यद्वामदेव्यं निर्धूतमिव । जै १,३३३ ।
१५. वामदेव्यं वामदेवानां (?वाव देवानाम्) मधु । जै १,१४४ ।
१६. वामदेव्यं वै साम्ना९सत् । तां ४,८,१० ।
१७. वामदेव्यं स्वारम् । प्राणो वै स्वरः । जै १,३०५ ।
१८. वामदेव्यमात्मा तद्धि अन्तरिक्षम् । जै २,४१५ ।
१९. वामदेव्यं मैत्रावरुणसाम भवति । माश १३,३,३,४ ।
२०. वामदेव्येन सामानि (अन्वाभवत्) । काठ ३५,१५ ।
२१. वायुर्वामदेव्यम् । जै १,३३५ (तु. जै १,२९२; २,४३३) ।
२२. विश्वेभिर्देवेभिः पृतना जयामि जागतेन छन्दसा सप्तदशेन स्तोमेन, वामदेव्येन साम्ना । तैसं ३,५,३,२ ।
२३. व्यानो (हिङ्कारो [जै १,१७३]) वामदेव्यम् । जै १,२२९ ।

२४. शान्तिर्वै (+भेषजं [कौ.]) वामदेव्यम् । कौ २७,२; २९,३;४; तै १, १,८,२ ।
२५. श्रोण्यां वामदेव्यं गायति । काठ २१,५; क ३१,२० ।
२६. सद्ध खलु वै वामदेव्यं स्तोत्राणां सदग्निर्देवतानां सद्विराट् छन्दसां सत् त्रयस्त्रिंश स्तोमानाम् । जै ३, ३०१ ।
२७. सद् वै वामदेव्य ँ साम्नाम् । तां १५,१२,२ ।
२८. समायुर्वामदेव्यम् । जै १,२९२; २,४३३ ।
२९. सर्वदेवत्यं वै वामदेव्यम् । तां ७,८,२ ॥ [°व्य– अन्तरिक्ष– २०;९१;९८;१३६; अप्– १०; ३७; आत्मन्– ३३;३४;८३; उद्गीथ– ९; ऋषभ–१४; तनू– २; दैर्घश्रवस– १; पशु– १०८; १२९;१८०; पृष्ठ– १३; प्रजनन– ६; प्रजापति– १३५; १५९; १७०; २५१; प्राजापत्य– ६; प्राण– १३६;२२३; यज्ञ– २३; योनि– ५; राजन– १-३; वयस्– १३ द्र.] ।

वाम-भृत्-

१. इयं ( पृथिवी ) वामभृत् । माश ७,४,२,३५ ।
२. देवासुरा संयत्ता आसन् । ते वामं वसु सं न्यदधत तद्देवा वामभृता ऽवृञ्जत, तद्वामभृतो वामभृत्त्वम् । तैसं ५,५,३,३ ।
३. वाग्वामभृत् । माश ७,४,२,३५ ।

वामन-

१. यद्वामनः ( अनड्वान् ), तेन वैष्णवः । मै ४,३,१ (तु. मै ३, १३,२; माश १३, २,२,९) ।
२. यावदिय ँ सलावृकी त्रिः परिक्रामति तावन्नो दत्तेति ( देवा असुरानब्रुवन् ), स इन्द्रः सलावृकी रूपं कृत्वेमां ( पृथिवीम् ) त्रिः सर्वतः पर्यक्रामत् , तदिमामविन्दन्त ( देवाः ) । तैसं ६, २, ४, ४ ।
३. वामनो ह विष्णुरास । माश १, २, ५, ५ ।
४. वैष्णवं वामनम् ( पशुम् ) आलभन्ते । तै १, २, ५, १ ।
५. स हि वैष्णवो यद्वामनः ( गौः ) । माश ५, २, ५, ४ ।
६. स ( वामनः=जीवात्मा ) हैष प्राणान् संगृह्यावधूय शरीरं प्राणैः सहोर्ध्व उत्क्रामति । एतेन ह वै प्रत्यूढानि मृत्युः शरीराणि हरति । जै ३, ३५१ ।

वाम्र ( सामन्-)- ( वाम्रम्) सामार्षेयेण प्रशस्तं यं वै गां यमश्वं यं पुरुषं प्रश ँ सन्ति वाम इति तं प्रश ँ सन्ति । तां १३, ३, १९ ।

वायु-

१. अग्निराजिदोहं वायुराजिदोहमसावादित्य आजिदोहम् । जै २, २५५ ।
२. अथ यच्छुनासीरीयेण यजते वायुरेव तद् भवति, वायोः सायुज्य ँ सलोकतां जयति । काश १, ६, ४, ९ ।
३. अथ वायोरेकादशपुरुषस्यैकादशस्त्रीकस्य प्रभ्राजमाना व्यवदाताः । याश्च वासुकिवैद्युताः । रजताः पुरुषाश्श्यामाः । कपिला अतिलोहिता ऊर्ध्वा अवपतन्ताश्च । वैद्युत इत्येकादश । तैआ १, ९, १-२ ।

४. अथ वायोरेकादशपुरुषस्यैकादशस्त्रीकस्य प्रभ्राजमानाना ऽ रुद्राणां···, व्यवजातानां (व्यवदातानां)···, वासुकिवैद्युतानां···; रजतानां···, परुषाणां··· श्यामानां··· कपिलानां··· अतिलोहितानां···, ऊर्ध्वानां···, अवपतन्तानां ··· वैद्युतानां ··· स्थाने स्वतेजसा भानि। काठसंक ११६, १-१३।

५. अयं वायुरन्तरिक्षस्य पृष्ठम्। जै ३, २५२।

६. अयं वायुरस्मिन्नन्तरिक्षे तिर्यङ् पवते। जै ३, ३१०।

७. अयं वायुर्यथर्तु पवते शीतो हेमन्तम्, उष्णो ग्रीष्मम्। जै ३, ३३३।

८. अयं वै वर्षस्येष्टे यो ऽयं (वायुः) पवते। माश १ ८, ३, १२।

९. अयं वै वायुर्मातरिश्वा यो ऽयं पवते। माश ६, ४, ३, ४।

१०. अयं वै वायुर्यो ऽयं पवत ऽएष वा इद ऽ सर्वं विविनक्ति यदिदं किञ्च विविच्यते। माश १, १,४,२२ (तु. माश २,६,३,७)।

११. अयं वै वायुर्यो ऽयं पवत ऽएष वाऽइद ऽ सर्वं प्रप्याययति यदिदं किंच वर्षत्येष वा ऽ एतासां (गवाम्) प्रप्याययिता। माश १, ७, १, ३।

१२. अयं वै वायुर्विश्वकर्मा यो ऽयं पवत ऽ एष हीद ऽ सर्वं करोति। माश ८,१,१,७; ६,१,१७।

१३. अयं वै समुद्रः यो ऽयं (वायुः) पवत ऽ एतस्माद्वै समुद्रात्सर्वे देवाः सर्वाणि भूतानि समुद्द्रवन्ति। माश १४, २, २, २।

१४. अयं वै सरिरः यो ऽयं (वायुः) पवत एतस्माद्वै सरिरात् सर्वे देवाः सर्वाणि भूतानि सहेरते। माश १४, २, २, ३।

१५. अयं वै सविता यो ऽयं (वायुः) पवते। माश १४, २,२, ९।

१६. अयं वै साधुः यो ऽयं (वायुः) पवतऽ एष हीमाँल्लोकान्त्सिद्धो ऽनुपवते। माश १४,१,२,२३।

१७. अयं (वायुः) सर्वतः पवते। तैसं ५,२,१०,७; तैआ ५,४,१३।

१८. अयमु वै यः (वायुः) पवते स यज्ञः। गो १,३,२;४,१।

१९. अयमेव योऽयं (वायुः) पवत एष एव संसवे संसवः। एतं हि सर्वे देवा अनुयन्ति। तस्माद् यामेष दिशं वाति तां दिशमोषधयो वनस्पतयो ऽनुप्रतिहते। जै १,३६१।

२०. अयमेव सुवो यो ऽयं (वायुः) पवते। माश १,३,२,५।

२१. अयम् (वायुः) उत्तराद् भूयिष्ठं पवते, सवितृप्रसूतो ह्येष (वायुः) पवते। काठ २३,८।

२२. अरण्यस्येव हि वायुः। क ४६,८।

२३. अर्ध ऽ ह प्रजापतेर्वायुरर्धं प्रजापतिः। माश ६,२,२,११।

२४. आतिर्वाहसो दर्विदा ते वायवे। मै ३,१४,१५।

२५. एष वै पृथग्वर्त्मा वैश्वानरः (यद्वायुः)। माश १०,६,१,७।

२६. एष (वायुः) हि सर्वेषां भूतानामाशिष्ठः। माश ८,४,१,९।

२७. तम् (वायुम्) एताः पञ्च देवताः परिम्रियन्ते विद्युद् वृष्टिश्चन्द्रमा आदित्यो अग्निः। ऐ ८, २८।

२८. तस्मादुत्तरतः पश्चादयं भूयिष्ठं पवमानः (वायुः) पवते सवितृप्रसूतो ह्येष एतत्पवते। ऐ १,७।

२९. तस्माद्यां दिशं वायुरेति तां दिशं वृष्टिरन्वेति। माश ८,२,३,५।
३०. तस्माद्वायुरेव साम। जैउ ३,१,१,१२।
३१. तिर्यङ् वायुः पवते। काठ २२,७ (तु. जै १,२४७)।
३२. त्वं ( वायो ) वै नः ( देवानाम् ) आशिष्ठो ऽसि। माश ४,१,३,३।
३३. त्वामापो अनु सर्वाश्चरन्ति जानतीः। ······त्वमग्निꣳ हव्यवाहꣳ समिन्त्से त्वं भर्ता मातरिश्वा प्रजानाम्। त्वं यज्ञस्त्वमु वेवासि सोमः। तव देवा हवमायन्ति सर्वे। त्वमेकोऽसि बहूननुप्रविष्टः। नमस्ते अस्तु सुहवो म एधि। तैआ ३,१४,३।
३४. न खलु वै किं चन वायुनानभिगतमस्ति। मै २,२,७।
३५. पवमानं ( वायुम् ) तु मध्यमम् ( मृत्युमाहुः )। तैआ १,८,४।
३६. पवित्रं वै वायुः। तै ३,२,५,११।
३७. पृथिवी पूर्वरूपम्। द्यौरुत्तररूपम्। आकाशः सन्धिः। वायुः सन्धानम्। तैआ ७,३, १-२; तैउ १,३,१-२।
३८. प्राणस्त्वाऽएष वैश्वानरस्य ( यद्वायुः )। माश १०,६,१,७।
३९. भुव इत्येव यजुर्वेदस्य ( प्रजापतिः ) रसमादत्त। तदिदमन्तरिक्षमभवत्। तस्य यो रसः प्राणेदत् स वायुरभवद्रसस्य रसः। जैउ १,१,१,४।
४०. य एवायं ( वायुः ) पवत एष एव स समुद्र एतं हि संद्रवन्तं सर्वाणि भूतान्यनुसंद्रवन्ति। जैउ १,८,१,४।
४१. यजुषां वायुर्देवतं तदेव ज्योतिस्त्रैष्टुभं छन्दो ऽन्तरिक्षं स्थानम्। गो १,१,२९।
४२. यत्पश्चाद्वाति ( वायुः )। पवमान एव भूत्वा पश्चाद्वाति। तै २,३,९,६।
४३. यत्पूयति, तत् प्रवाते विषजन्ति, वायुर्हि तस्य पवयिता स्वदयिता। तैसं ६, ४,७, २।
४४. यदिदं सर्वं युते तस्माद् वायुः। जै २, ५६।
४५. यद्ध वायुर्न पवेत प्रासाविदं तेजसा ( आदित्यः ) दहेदग्निर्वैश्वानरः प्रजा आददीत। जै २,३८९।
४६. यद्वियङ् वायुर्वाति तद्वियङ्ङग्निर्दहति। तैसं ५, ५, १, १-२।
४७. यद् वै सत्रिणां सत्रे विनश्यते तदेभ्यो वायुरपिरोहयति। जै ३, २२७।
४८. यस्माद्वायत्रमध्यो द्वितीयः ( त्रिरात्रः ) तस्मात्तिर्य्यङ् वायुः पवते। तां १०, ५, २।
४९. यो ऽयं वायुः पवत ऽएष सोमः। माश ७, ३, १, १।
५०. यो वा अग्नीनुपदीप्य वातेनोपवाजयति भूयो वै तद्दीप्यते···वायुरेव दीप्त्यै। जै २, १३८।
५१. रूपं वायोः (आदित्य आदत्त)। जै २,२६।
५२. वाग्वायोः ( +पत्नी [मै.] )। मै १, ९, २; तैआ ३, ९, १।
५३. वायव आरोहणवाहा अनड्वाहौ। काठ ५०, १।
५४. वायवे नियुत्वते पयो वा यवागूर्वा। काठ १५, २।
५५. वायुः पूयमानः (सोमः)। तैसं ४, ४, ९, १; माश १२, ६, १, २३।
५६. वायुः प्रजाभ्यः ···ज्योतिष्मतीं जुहोतु। तैसं ३, ३, १०,१।

५७. वायुरधिह्रियमाणः ( सोमः ) । काठ ३४, १४ ।
५८. वायुरन्तरिक्षस्य ( ककुप् ) । जै २, ८७ ।
५९. वायुरसि तिग्मतेजाः । काठ १, ९; क १, ९ ।
६०. वायुरस्यन्तरिक्षे श्रितः । दिवः प्रतिष्ठा । तै ३, ११, १, ९ ।
६१. वायुरस्यैडः ( वत्स त्वम् ) तैआ ४,८,२ ।
६२. वायुरावृत्तः ( सोमः ) । तैसं ४, ४, ९,२ ।
६३. वायुरिव श्लोकभूर्भूयासम् । ऐआ ५, १, १ ।
६४. वायुरेकपात्तस्याकाशं पादः । गो १, २, ८ ।
६५. वायुरेव यजुः (पवमानः [ऐआ.] ) । माश १०,३, ५, २; ऐआ २, १, १ ।
६६. वायुरेव सविता । गो १, १, ३३; जैउ ४, १२, १, ५ ।
६७. वायुरेव हिङ्कारः । जैउ १, १२, २,९; १८, ३, ९ ।
६८. वायुर्गोपाः । मै ३, ६, ९ ।
६९. वायुर्भूत्वा ( प्रजापतिः ) प्रजानां प्राणोऽभवत् । जै १,३१४ ।
७०. वायुर्वा इषिरः (उग्रः [माश.] ) । जै ३, २२७; माश ६, १, ३,१३ ।
७१. वायुर्वृष्टिं वहति । काठ १९, ५; क ३०, ३; ३१,१२ ।
७२. वायुर्वै क्षेपिष्ठा देवता । तैसं २, १, १, १; ३, ४, ३, २ ।
७३. वायुर्वै तूर्णिर्वायुर्हीदं सर्वं सद्यस्तरति यदिदं किंच । ऐ २, ३४ ।
७४. वायुर्वै तूर्णिर्हव्यवाड्वायुर्देवेभ्यो हव्यं वहति । ऐ २, ३४ ।
७५. वायुर्वै देवानामोजिष्ठः क्षेपिष्ठः । मै २, ५, १ ।
७६. वायुर्वै देवानामाशुः सारसारितमः । तै ३, ८, ७, १ (तु. माश १३, १, २,७) ।
७७. वायुर्वै देवानां पवित्रम् । तैसं २, १, १०, २; मै २, ५, ५; क ४७,४ ।
७८. वायुर्वै पयसः प्रदापयिता । तै ३,७,१,५ ।
७९. वायुर्वै मध्यमा विश्वज्योतिः ( इष्टका ) । माश ८,३,२,१ ।
८०. वायुर्वै विकर्णी ( इष्टका ) । माश ८,७,३,९ ।
८१. वायुर्वै वृष्ट्या ईशे । तैसं २,४,९,१ ।
८२. वायुर्वै शान्तिश्, शान्त्या एवाग्निर्दाहाय । जै २,१३८; ३,६६ (तु. तां ४,६,९) ।
८३. वायुर्वै स्तोता । तै ३,९,४,४; माश १३,२,६,२ ।
८४. वायुर्हिंकर्ता । तैसं ३,३,२,१ ।
८५. वायुर्हि विश्वे देवाः । मै ४,५,९ ।
८६. वायुः सक्षिः (श्वेतसिकद्रुकः [तैआ.] ) । तै १,३,६,४; तैआ १,१२,३ ।
८७. वायुः ह्रियमाणः ( प्रवर्ग्यः ) । तैआ ५,११,४ ।
८८. वायोः पक्षतिः (निपक्षतिः [मै.]) । मै ३,१५,४; काठ ५३,१२ ।
८९. वायोः पुच्छम् । मै ३,१५,६ ।
९०. वायोर्निष्ठ्या । तै १,५,१,३; ३,१,१,१० ।

९१. वायोर्यजुर्वेदः (अजायत)। माश ११,५,८,३।

९२. वायोर्वातपाः। काठ २३,१।

९३. शुक्रं (प्रवाते [मै.]) विषजन्ति। मै ४,५,८; काठ २७,३।

९४. शुक्रो हि वायुः। माश ६,२,२,७।

९५. श्वेतं॰ वायवा आलभेत। मै २,५,१।

९६. स एष वायुः पञ्चविधः प्राणोऽपानो व्यान उदानः समानः। ऐआ २,३,३।

९७. समुद्रोऽसि नभस्वानार्द्रदानुर् इत्येतानि वै वायो रूपाणि। मै ३,४,३।

९८. सर्वेषामु हैष देवानामात्मा यद्वायुः। माश ९, १, २,३८ (तु. माश १४,२,३,७)॥
[ °यु- अग्नि- ५२२; ६८५; ६८६; अग्निष्टोम- १०; अज- ४३; अजिर-; अध्वर्यु- ३९; अनिरुक्त- ६; अनुद्रष्टृ-; अनुवत्सर-; अन्तरिक्ष- ११; ३४; ३५; ५८; ७८; ९२; १२१; १३९; १४०; १५०-१५६; अन्न- १८५; अप्- १५०, २४०; २४२; अपराजिता- १; आकाश- ९; आत्मन्- ९२; आदित्य- २२३; ३०९; ३२७; आयुस्- १३; ४८; इन्द्र- ३०७; ३५६; ३६३; ३६४; उत्तरतस् १४; उद्गीथ- ४; उपश्रोतृ-; उशत्- २; ऊष्मन्- १; ५; ऋतधामन्- १; ऋतु- ९९; ऋषभ- ११; गन्धर्व- १९; गन्धर्वाप्सरस्- ३; गायत्री- ५१; गोमृग- ३; ग्रामकाम- ५; ग्रैष्म- २; चरत्-; जातवेदस्- ८; तथा; तनूनपात्- ४; तनूनप्तृ- २; तरुतृ-; तार्क्ष्य-; १; ५; तेजस्- १८; तेजस्काम- २; त्रिवृत्- ४३; त्रैष्टुभ- १८; दक्षिण,णा- १८; दक्षिणतस् २५; दिव्- ८९; दिश्- ६४; देव- २३७; देवता- ८; द्यावापृथिवी- ३०; द्युतान- ३; धाय्या- ६; नभस्पति-; नस्- २; नाचिकेत- ४; निकाय-; नियुत्- २; निष्टय- १; पञ्चहोतृ- ९; पवमान- १; ३-५; पवित्र- २; पशु- ३६; ८४; १०५; २५४; २९८; ३०१; ३०३; पशुपति- ८; पात्र- ४; पावक- ६; पुरुष- २०; पुरोहित- ८; प्रजापति- २६; २४६; २६०; २८२; प्रणी-; प्रतीची- ६; प्राण- १२;१३; १०९; ११६; १९४; २४८; २५७; २६२; २७९; २८१; २८२; ३०४; ३११; प्राणापान- १६; प्रेङ्ख- २; बलाका- १; बृहस्पति- २; ब्रह्मन्- ५; ४८; भुवस् ३; मनस्- ४६; ५९; महस्- ६; मारुत- १५; मित्र- २; यजुर्वेद- ४; यज्ञ- ९; यन्तृ-; यम- १; रुद्र- २; रेतस्- ४१; वत्स- १; वसु- ४; वाक्पति- १; वाच्- ५५; ९२; वात- १३; वातहोम- २; वामदेव्य- २१ द्र. ]।

वायव्य,व्या-

१. आती वाहसो दर्विदा ते वायव्याः। काठ ४७,३।

२. प्राणो वै वायव्या (ऋक्)। कौ १६,३;४।

३. वायव्यं वत्सं इव आलभेत, वायुर्वा अनयोर् (द्यावापृथिव्योः) वत्सः, स इम (द्यावापृथिव्यौ) आप्याययति। काठ १३,५।

४. वायव्यं गोमृगमालभेत यमजन्निवा॰ समभिश॰सेयुः। तैसं २, १,१०,२।

५. वायव्यमुपावसृष्टम् ( पयः ) । मै १,८,१० ।

६. वायव्यः श्वेतः पुछे (पुच्छे) । मै ३, १३, २ ( तु. मै ३, १३,१० ) ॥ [°व्य- अज- ४४; आज्यभाग- ४; आयुस्- १४; पयस्- २७; प्रतिदुह्- ४; भूतिकाम- ३; मुख- १; यवागू- १;२; वत्स- २ द्र.] ।

**वायु-गोप-** वनस्पति- १६ द्र. । **वायुदेवत्य-** वत्स- ४ द्र. ।

**वायु-प्रणेत्र-** पशु- ३०० द्र. ।

**वायुमत्->°मती-** वायुमती भवति समिद्ध्यै । तैसं ५,३,७,५ ।

**वायु-सवितृ-** पयस्- २९ द्र. ।

**वार्-**

१. अपकाम ँ स्यन्दमाना अवीवरत वो हि कम् । इन्द्रो वः शक्तिभिर्देवीस्तस्माद्वार्नाम वो हितम् । मै २,१३,१ ।

२. यदवृणोत्तस्माद्वाः । माश ६,१,१,९ ।

**वारवन्तीय (सामन्-)—**

१. अग्निर्वा इदं वैश्वानरो दहँस्तस्माद्देवा अबिभयुस्तं वरणशाखया ऽवारयन्त यदवारयन्त तस्माद्वारवन्तीयम् । तां ५,३,९ ।

२. अग्निर्वा एष वैश्वानरो यद्वारवन्तीयम् । जै ३,१५५ ।

३. अथ वारवन्तीयं, वारितैनं श्रीरुपतिष्ठाता इति । जै २,१९५ ।

४. अवारयन्त वारयन्तीयेन । मै ४,४,९ ।

५. केशिने वा एतद्दाल्भ्याय ( वारयन्तीयम् ) सामाविरभवत् । तां १३,१०,८ ।

६. तं ( अग्निं प्रजापतिः ) वारवन्तीयेनाऽऽवारयत तद् वारवन्तीयस्य वारयन्तीयत्वम् । तैसं ५,५,८,१ ।

७. यदनेन कर्मणावारुत्स्महि तन्नो वारवन्तीयेन वारितम् । जै २,१४५ ।

८. यदवारयन् तद्वारवन्तीयस्य वारवन्तीयत्वम् । तै १,५,१२,१ ।( तु. जै २,११२;३,१५५) ।

९. यदेवास्य ( अग्नेः ) क्रव्याद्यद्विश्वदाव्यं तच्छमयति य एवं विद्वान् वारवन्तीयं गायते । मै १,६,७ ।

१०. वारवन्तीयमग्निष्टोमसाम कार्यम् ( भवति [तां १८, ६,१६] ) इन्द्रियस्य वीर्यस्य परिगृहीत्यै । तां ९,५,९ ।

११. वारवन्तीयमग्निष्टोमसाम कार्यं यज्ञस्यैव छिद्रं वारयते । तां ९,६,११ ।

१२. वारयन्तीयं पशुकामः कुर्वीत··· । ( प्रजापतिः) तान् ( पशून् ) वारवन्तीयेनैवावारयत । यदवारयत तद् वारयन्तीयस्य वारयन्तीयत्वम् । जं १,१७२ ।

१३. स प्रजापतिर्वारवन्तीयमसृजत, तान् ( पशून् ) अवारयत । मै १,६,७ ।

१४. सो ( अग्निः ) ऽश्वो वारो भूत्वा पराङैत् । तं वारवन्तीयेनावारयत । तद्वारवन्तीयस्य वारवन्तीयत्वम् । तै १,१,८, ३ ॥ [°य- इन्द्रिय- ६; १९; जराबोधीय- ५; पशु- १८१; ३०४; पृथिवी- ६१; रेवती- ७; वरण- २ द्र.] ।

वार्श ( सामन्- )-

१. एतद् भेषजं प्रायश्चित्तिः साम ( यद् वार्शम् )। जै ३,९५।

२. तदेतद् दीप्तिर्ब्रह्मवर्चसं साम ( यद् वार्शम् )। जै ३,९६।

३. यद्दु वृशोऽपश्यत् तस्माद् वार्शमित्याख्यायते। जै ३,९६।

४. वृशो वैजानस्त्र्यरुणस्य त्रैधातवस्यैक्ष्वाकस्य पुरोहित आसीत्स ऐक्ष्वाकोऽधावयत् ब्राह्मणकुमारᳲ रथेन व्यच्छिनत्स पुरोहितमब्रवीत्तव मा पुरोधायामिदमीदृगुपागादिति तमेतेन साम्ना समैरयत्तद्वाव स तर्ह्यकामयत, कामसनि साम वार्शं, काममेवैतेनावरुन्धे। तां १३,३,१२।

वाल ( ओषधि-विशेष-)- वालेभ्यो ऽश्ववालाः। जै २,२६७॥ [°ल- वनस्पति- १३ द्र.]।

वालखिल्य-

१. प्रगाथा वै वालखिल्याः। ऐ ६,२८।

२. प्राणा वै वालखिल्याः प्राणानेवैतदुपदधाति ता यद्वालखिल्या नाम यद्वाऽ ऊर्वरयोरसम्भिन्नं भवति खिल इति वै तदाचक्षते वालमात्राद्दु हेमे प्राणा असम्भिन्नास्ते यद्वालमात्राद-सम्भिन्नास्तस्माद्वालखिल्याः। माश ८,३,४,१ (तु. कौ ३०,८)।

३. ये ( प्रजापतेः ) वालास्ते वालखिल्याः। तैआ १,२३,३।

४. सप्त वालखिल्याः पुरस्तादुपदधाति सप्त पश्चात्, सप्त वै शीर्षण्याः प्राणा द्वाववाञ्चौ। तैसं ५,३,२,५॥ [°ल्य- ऐन्द्री- ६; पशु- १५०; प्राण- १२७; २५३ द्र]।

वावाता (पत्नी-)- भुव इति वावाता। तै ३,९,४,५।

वाश- ते ( देवाः) वाश इत्येव वशमसुराणामवृञ्जत। तदेव वाशस्य वाशत्वम्। जै ३,२२०।

वासव- इन्द्र- २८ द्र.।

वासस्-

१. ओषधयो वै वासः। माश १,३,१,१४।

२. तद् (वासः) बृहस्पतयऽ उद्गायते ऽददात्। माश ४,३,४,२६।

३. तद्वै निष्पेष्टवै ब्रूयाद्यदेवास्य (वाससः) अत्रामेध्या (स्त्री) कृणत्ति वा वयति वा तदस्य (वाससः) मेध्यमसदिति। माश ३,१,२,१९।

४. तस्माद्दु सुवासा एव बुभूषेत्। माश ३,१,२,१६।

५. तस्य वाऽ एतस्य वाससः। अग्नेः पर्यासो भवति वायोरनुच्छादो नीविः पितृणाᳲ सर्पाणां प्रघातो विश्वेषां देवानां तन्तव आरोका नक्षत्राणामेवᳲ हि वाऽ एतत्सर्वे देवा अन्वायत्ताः। माश ३,१,२,१८।

६. त्वग्वि वासः। माश ४,३,४,२६।

७. दर्भमयं वासो भवति पवित्रत्वाय। काठ १४,७।

८. यद्वासो ददाति, दीर्घं तेनायुष्कुरुते। काठ २८,५; क ४४,५।

९. रूपं वा ऽ एतत्पुरुषस्य यद्वासः। माश १३,४,१,१५।

१०. शोभनं वासो भर्त्तव्यम्। काठसंक १३९:१।

११. सर्वदेवत्यं वै वासः। मै ३,६,६; ७,४; ८; ४,३,१;८;३; काठ २४,६; तै १,१,६,११; ३,७,३ (तु. काठ ८,८; २३,१)।

१२. सोमाय वासः । तैआ ३, १०, २ ।

१३. सौम्य ५ हि देवतया वासः । तै १, ६, १, ११; २, २, ५, २ ॥ [°सस्- नेष्टापोतृ- ३; ३; पोतृ-; बृहस्पति- ७ द्र.] ।

**वास्तव्य-** पशु- ३०५; रुद्र- ३७; ७२ द्र. ।

**वास्तु-**

१. अवीर्यं वै वास्तु । माश १, ७, ३, १७ ।

२. पेसुकं वै वास्तु पिस्यति ह प्रजया पशुभिर्यस्यैवं विदुषो ऽनुष्टुभौ भवतः । माश १,७,३,१८ ।

३. वास्तु हि तद्यज्ञस्य यद्धुतेषु हविःषु (अवशिष्येत) । माश १, ७, ३, ७ ।

४. वास्तोर्वै वास्तवं जातं, वास्तवमयं खलु वै रुद्रस्य । मै २,२,४ ॥ [°स्तु- अनुष्टुभ्- ६५ द्र.] ।

**वास्तोष्पति-** भद्रो नो वास्तोष्पतिरस्त्वमीवहा । काठसंक ६० : ८ ॥ [°ति- रुद्र- ४७ द्र.] ।

**वाहिष्ठीय-** अथ यद्वाहिष्ठीयम् । अग्निर्वै देवेभ्यो हव्यं नवमादह्नो दशममहरभ्यतिवोढुं नाकामयत । ते देवा अकामयन्ताति न इदमग्निर्हव्यं वहेदिति त एतत् सामापश्यन् । तेनैनमस्तुवन् । जै ३, २६९ ।

**वि-** अन्न- ४४ द्र. ।

**विंशति-** प्रजापतेर्विस्रस्तादाप आयंस्तास्त्वितास्त्वविशद्यदविशत्तस्माद्वि ५ शतिः । माश ७,५,२,४४ ।

**विंशति-रात्र** (यज्ञ-)- य एवं विद्वा ५ स एता (वि ५ शतिं रात्रीः) आसत उभयमेव संवृञ्जते ब्रह्म चान्नं च, ब्रह्मवर्चसिनो ऽन्नादा भवन्ति । तैसं ७, ३, ९, २ ।

**विकङ्कत-**

१. अग्नेः सृष्टस्य यतः विकङ्कतं भा आर्च्छत् (यद् वैकङ्कतः सम्भारो भवति [तै.], यद् वैकङ्कताः परिधयो भवन्ति [तैआ.]) । भा एवावरुन्धे । तै १,१,३,१२; तैआ ५, ४, ९ ।

२. प्रजापतिर्या प्रथमामाहुतिमजुहोत्स हुत्वा यत्र न्यमृष्ट ततो विकङ्कतः समभवत् । माश ६, ६, ३, १; १४, १, २,५ ।

३. प्रजापतिर्वा अजुहोत् सा यत्राऽऽहुतिः प्रत्यतिष्ठत् ततो विकङ्कत उदतिष्ठत् ततः प्रजा असृजत, यस्य वैकङ्कती ध्रुवा भवति । तैसं ३, ५, ७, ३ ।

४. प्रजापतेरक्ष्यश्वयत् तत् पराऽपतत् तद्विकङ्कतं प्राविशत् , तद् विकङ्कते नारमत । तैसं ६, ४, १०, ५ (तु. काठ २७, ८) ।

५. यत्ते सृष्टस्य यतः । विकङ्कतं भा आर्च्छज्जातवेदः । तै १, २, १, ७ ।

६. स (प्रजापतिः) हुत्वा न्यमृष्ट । ततो विकङ्कतः समभवत्तस्मादेष यज्ञियो यज्ञपात्रीयो वृक्षः । माश २, २, ४, १० ।

७. सैषा प्रथमाहुतिर्यद्विकङ्कतः । माश ६, ६, ३, १ ॥ [°त- अग्नि- ३१०; ३११; यज्ञ- ११०; वज्र- ३६ द्र.] ।

**वैकङ्कती-** यस्य वैकङ्कतत्यग्निहोत्रहवणी भवति । ··· प्रत्येवास्याहुतयस्तिष्ठन्ति । तैआ १०, १९,१ ॥ [°ती- भासू- २; ३ द्र.] ।

**विकर्ण** (सामन्-)- श्रोत्रं विकर्णम् । जै २, ३७ ।

**विकर्णी** ( इष्टका- )- एषा वै देवानां विक्रान्तिर्यद् विकर्णी । तैसं ५,३,७,५ (तु. काठ २१, ३; क ३१,१८) ॥ [°र्णी- आयुस्- १५; वायु- ८० द्र.] ।

**विखानस्-, > वैखानस-**

१. अथ ह वै वैखानसा इत्यृषिका इन्द्रस्य प्रिया आसुः । जै ३,१९० ।

२. ···तदिन्द्रो ह वै विखानाः, स यदिन्द्र एतत्सामापश्यत्तस्माद्वैखानसमित्याख्यायते । जै ३,१९० ।

३. तान् ( मृतान् वैखानसानृषीन् इन्द्रः ) एतेन ( वैखानसाख्येन ) साम्ना समैरयत् ( पुनः प्राणैस्तान् समयोजयदिति ) तद्वाव स तर्ह्यकामयत कामसनि साम वैखानसं काममेवैतेनावरुन्धे । तां १४,४,७ ।

४. ये नखाः ( प्रजापतेः ) ते वैखानसाः । तैआ १,२३,३ ।

**वि-घन** (क्रतु- )-

१. इन्द्रो ऽकामयत पाप्मानं भ्रातृव्यं विहन्यामिति स एतं विघनमपश्यत्तेन पाप्मानं भ्रातृव्यं व्यहन् वि पाप्मानं भ्रातृव्यं हते य एवं वेद । तां १९, १८, २ ।

२. तम् (विघनम् ) आहरत् (इन्द्रः) । तेनायजत । तेनैवासां (विशाम् ) त९स ९ स्तम्भं व्यहन् । तद्विघनस्य विघनत्वम् । तै २, ७, १८, १ ।

३. तेन ( विघनेन ) एनम् ( इन्द्रम् ) अयाजयत् ( प्रजापतिः ), स ( इन्द्रः ) हेष्ट्वैव सर्वा मृधो व्यहत, यद् व्यहत, तद्विघनस्य विघनत्वम् । जै २, १४१ ॥ [°न- इन्द्र- ५३ द्र.] ।

**वि-चक्षण-**

१. सोमो राजाऽसि विचक्षणः । शांआ ४,९; कौउ २, ९ ।

२. सोमो वै विचक्षणः । जै २, ६४ ॥ [°ण- अन्न- ४१; चक्षुस्- २५; प्राण- १९५ द्र.] ।

**विचक्षणा** ( आसन्दी- )- ( विचक्षणायाः) बृहद्रथन्तरे सामनी पूर्वौ पादौ श्येतनौधसे (सामनी) चापरौ ( पादौ ), ··· सा प्रज्ञा, प्रज्ञया हि विपश्यति । शांआ ३,५; कौउ १,५ ।

**वि-चृत्-** पितृ- १०६ द्र. ।

**वि-जिति** ( इष्टि- )- सा वा एषा विजितिर्नामेष्टिर्य एवं विद्वान् एतयेष्टया यजत उत्तमामेव विजितिं भ्रातृव्येण विजयते । तैसं २, ४, २, ४ ॥ [°ति- त्रिणव- १२ द्र.] ।

**वि-ज्ञा-** एता ( मनः, प्राणः, चक्षुः, श्रोत्रम्, वाक् ) इह विज्ञाः । वि ह वै ज्ञायते श्रेयान् भवति य एवं वेद । जै १, २६९ ।

**वि-ज्ञात-** ऋच्- १५; वित्त- १ द्र. । **वि-ज्ञाति-** ऋच्- १५ द्र. ।

**वि-ज्ञान-**

१. तस्य ( विज्ञानमयस्यात्मनः ) श्रद्धैव शिरः । ऋतं दक्षिणः पक्षः । सत्यमुत्तरः पक्षः । योग आत्मा । महः पुच्छं प्रतिष्ठा । तैआ ८,४,१; तैउ २,४,१ ।

२. विज्ञानं यज्ञं तनुते । कर्माणि तनुते ऽपि च । विज्ञानं देवाः सर्वे ब्रह्मज्येष्ठमुपासते । विज्ञानं ब्रह्म चेद् वेद । तस्माच्चेन्न प्रमाद्यति । शरीरे पाप्मनो हित्वा सर्वान्कामान्त्समश्नुते ।

तैआ ८,५,१; तैउ २, ५,१ ॥ [°न- ब्रह्मन्- १४१ द्र.]।

**वितस्ति-** हस्तो वितस्तिः। माश १०, २, २, ८।

**वित्त-** एतावान्खलु वै पुरुषो यावदस्य वित्तम्। तै १, ४, ७, ७ ॥ [°त्त- पशु- ६३; ६६; २११; २४७ द्र.]।

**विदद्वसु-** स्तोमो विदद्वसुः। जै १, १५३ ॥ [°सु- असुर- ६०; चक्षुष्या-; तृतीयसवन- ४२; प्रतीची- १; यज्ञ- ११५ द्र.]।

**विदन्वत्-, > वैदन्वत-**

१. यद्नु विदन्वान्भार्गवो ऽपश्यतस्माद्वैदन्वतानीत्याख्यायन्ते। जै ३,१६०।

२. विदन्वान्वै भार्गव इन्द्रस्य प्रत्यह ँ स्त ँ शुगार्च्छत् स तपो ऽतप्यत स एतानि वैदन्वतान्यपश्यत्तैः शुचमपाहतापशुच ँ हते वैदन्वतैस्तुष्टुवानः। तां १३, ११,१०। [°न्वत्- पशु- १९५ द्र.।

**विदाल-** विदान इति विद्वानित्येतत्। माश ६,४, २, ७।

**विद्या-**

१. विद्यया देवलोकः (जय्यः) देवलोको वै लोकाना ँ श्रेष्ठस्तस्माद्विद्यां प्रश ँ सन्ति। माश १४, ४, ३, २४।

२. विद्या ह वै ब्राह्मणमाजगाम। तवाऽहमस्मि त्वं मा पालयस्वाऽनर्हते मानिने नैव मा दाः। गोपाय मा श्रेयसे ते ऽहमस्मीति। विद्यया सह म्रियेत न विद्यामूषरे वपेद् ब्रह्मचारी धनदायी मेधावी श्रोत्रियः प्रियो विद्यया वा विद्यां यः प्राह तानि तीर्थानि षण्ममेति। सं ३ ॥ [°द्या- धिषणा- ४ द्र.]।

**विद्युत्-**

१. तपो विद्युत्। जै ३, ३७३।

२. तान् (देवान् प्रजापतिः) व्यद्यत् ([पाप्मनः सकाशात्] वियोजितवान्)। यद् व्यद्यत् तस्माद्विद्युत्। तै ३, १०, ९, १।

३. तेजो यो विद्युतो ऽशनिः पतति तत्तत्। जै ३, ३७३।

४. बलमिति विद्युति। तैआ ९, १०, २; तैउ ३, १०, २।

५. यर्ज्जभ्यते (अश्वो मेध्यः) तद्विद्योतते। तैसं ७, ५, २५, २।

६. या पुरस्ताद् विद्युदापतत्… या दक्षिणतः, या पश्चात्, योत्तरतः, योपरिष्टाद्विद्युदापतत्। तां त एतेनावयजे। तैआ ४, १४,१।

७. यो विद्युति (पुरुषः) स सर्वरूपः। सर्वाणि ह्येतस्मिन् रूपाणि। जैउ १, ८, ३, ६।

८. विद्युति सत्यम्। शांआ ६, २; कौउ ४, २।

९. विद्युत्सावित्री। जैउ ४, १२, १, ९।

१०. विद्युत्सूर्ये समाहिता। तैआ १, ८, २।

११. विद्युत्स्तनः (वसोर्धारायै)। माश ९, ३, ३, १५।

१२. विद्युदप्सु। जै २, ३३३; ४३३।

१३. विद्युदेव सविता । गो १, १, ३३ ।
१४. वीव वा इदमद्युतदिति । सैषा विद्युदभवत् । जै ३, ३८० ।
१५. वृष्टिर्वै विराट्, तस्या एते घोरे तन्वौ विद्युच्च ह्रादुनिश्च । माश १२, ८, ३, ११ ।
१६. शबलो भवति, विद्युतमेवास्मै ( यजमानाय ) जनयित्वा वर्षयति । तैसं २, १, ८, ५ ।
१७. सुवर्ण एव रुक्मो विद्युतो रूपम् । माश १२, ८,३,११ ॥ [°द्युत्- अग्नि- ६९२; अन्तरिक्ष- १३१; अप्- २४४; अशनि- ६; उदीची- ३; कनीनक-; दिव्- १४२; पर्जन्य- ७; २१; प्रजापति- २१२; २९५; बार्हती-; ब्रह्मन्- १४२; यज्ञ- ५०; यज्ञायज्ञीय- २४; याज्या- ५ द्र. ]।

**विद्युद्-वध-** मृत्यु- २४ द्र. ।

**वैद्युत-**

१. अग्निः पूर्वरूपम् । आदित्य उत्तररूपम् । आपः सन्धिः । वैद्युतः सन्धानम् । तैआ ७,३,२; तैउ १, ३, २ ।
२. शबला वैद्युताः । मै ३, १३, ११ ॥ [°त- अपान- १७; आदित्य- ३३६; नीहार- २ द्र.]।

**विद्वस्-** देव- २३८; नृचक्षस्- ३; पक्षिन्- द्र. ।

**वि-धर्मन् ( सामन्- )-** विधर्म्म भवति धर्म्मस्य विधृत्यै । तां १५, ५, ३१ ।

**वि-धा-** अप्- १११ द्र. ।

**वि-धातृ-** चन्द्रमस्- ३१ द्र. ।

**वि-धृति-**

१. तस्मात् ( द्वे तृणे ) तिरश्ची निदधाति तस्माद्वेव ( अनयोः ) विधृती नाम । माश १, ३, ४, १० ।
२. विधृतिमुपरिष्टात् । तैआ ५, ४, ७ ।

**वि-नुत्ति-**

१. अन्तस्थाकाम एवैनेन यजेत यद्विनुत्तिरिति । जै २, १०५ ।
२. यद् व्यनुदन्त तद्विनुत्तेर्विनुत्तित्वम् । जै २, १०४ ।

**विप्->विपश्चित्-** यज्ञ- ११९ द्र. ।

**वि-पाप-** अध्रिगु- २ द्र. ।

**विप्र-**

१. ये वै ब्राह्मणाः शुश्रुवा ९ सो ऽनूचानास्ते विप्राः । माश ३, ५, ३,१२ ।
२. विप्रा ह्येते यच्छुश्रुवा ९ सः । तैसं २,५,९, २ ॥ [°प्र- ऋषि- ८; १०; देव- २३९; ब्राह्मण- ४५ द्र. ]।

**विभा-वसु-** महि भ्राजन्ते अर्चयो विभावसविति महतो भ्राजन्ते ऽर्चयः प्रभूवसवित्येतत् । माश ७, ३,१,२९ ।

**विभीदक->वैभीदक-**

१. विभिरवै वैभीदक इध्मः । मै २,१,६ (तु. काठ ११,५) ।
२. वैभीदक इध्मो भिनत्त्येवैनम् । तैसं २,१,५,७-८ ।

**वि-भु**– अन्न– ७६ द्र.।

**वि-भू**– एष ( अग्निः ) हीद ऽ सर्वं विभूः । मै १,५,५ ॥ [°भू– प्रवाहण–; मात्रा– २ द्र.]।

**वि-भूति**– ऋतु– ८० द्र.।

**वि-मद्**– विमदेन वै देवा असुरान्व्यमदन् । कौ २२,६ ।

**वि-मान**– विमान एष दिवो मध्य आस्त इत्याह व्येवैतया मिमीते । तैसं ५,४,६,५ ॥ [°न– आदित्य– ३३० द्र. ]।

**वि-मुक्ति** (अहीनस्य)– अथ यत्पुरस्तादुदयनीयस्यातिरात्रस्य विमुच्यन्ते सा विमुक्तिः । ऐ ६,२३ । [ °क्ति– पायु– ५ द्र. ]।

**वि-मोक**– क्षेम– १ द्र.। **वि-यत्**– अहन्– १४ द्र.।

**वि-राज्**–

१. अथैतद्वामेऽक्षणि पुरुषरूपम् । एषास्य ( दक्षिणे ऽक्षणि वर्त्तमानस्येन्द्राख्यस्य पुरुषस्य ) पत्नी विराट् । माश १४,६,११,३ ।

२. अथैते दैवी च मानुषी च विराजौ । तयोरेष एतदादित्योऽध्यूढस्तपति । चतस्रो दिशश् चत्वारो ऽवान्तरदेशा द्वाविमौ लोकौ । एषा दैवी विराट् । अथ मानुषी । चत्वारोऽत्तारष् षडाद्याः । ब्राह्मणश्च राजन्यश्च वैश्यश्च शूद्रश्चैतेऽत्तारः । गौश्चाश्वश्चाजश्चाविश्च व्रीहिश्च-यवश्चैत आद्याः । जै १,२५२ ।

३. इयं ( पृथिवी ) वाव विराट् । क ४०,२ ।

४. एषा वै परमा विराड् यच्चत्वारि ऽ शत्त्रात्रयः पङ्क्तिर्वै परमा विराट् । तां २४,१०,२ ।

५. एषा वै स्तनवती विराड् यङ्कामङ्कामयते तमेतां दुग्धे । तां २०,१,५ ।

६. ओदनपचनो गार्हपत्य आहवनीयो मध्याधिदेवनमामन्त्रणम्, एषा वै विराट् पञ्चपदा,··· यस्य ह्येषावरुद्धा स मनुष्याणा ऽ श्रेष्ठो भवति । काठ ६,८ ।

७. चतुर्धा ह्येतस्याः ( विराजः ) दश दशाक्षराणि । मै १,११,१० ।

८. त ( देवाः ) एतं विराजं यज्ञमपश्यन् । तमाहरन् । तेनायजन्त । ततो वै ते विराजमन्ना-द्यमवारुन्धत । जै २,८५ ।

९. ता एतास्तिस्रो विराजो दैवी यज्ञिया मानुषी, सैषा दैवी विराड् यदिमे लोकाः । जै १,२४६ ।

१०. त्रयस्त्रिंशदक्षरा ( +वै [कौ. माश.] ) विराट् । तैसं २,५,१०, ३; कौ १४,२;१८,५; माश ३, ५,१,८ ।

११. त्रि ऽ शदक्षरा ( +वै [ऐ., माश.] ) विराट् । मै १,१०,८; काठ ३३, ३; ३६,२; ऐ ४,१६; ८,४; जै २,५९; ३,५; तां १०,३,१२; तै १,६,३,४; ३,८,१०,४; माश ३,५,१,७ ।

१२. त्रिपदा विराट् । मै ३,४,६; काठ २१,५; क ३१,२० ।

१३. त्रिर्वा इदं विराड् व्यक्रमत गार्हपत्यमाहवनीय ऽ सभ्यम् । मै १,६,११ ।

१४. दश च ह वै चतुर्विराजो ऽक्षराणि । गो १,५,२० ।

१५. दशदशिनी विराट् । कौ २,३; १७,३; १९,५;७ ।

१६. दशाक्षरा ( + वै [माश.]) विराट् । तैसं २, ६, १, २; काठसंक ५४:१; ऐ ६,२०; गो १,४, २४;२,१,१८;६,२;१५; जै १,१३२;१६५;२,१७०;३,२४२; तां ३,१३,३; माश १,१,१,२२।

१७. दशाक्षरा विराट् । अन्नं विराड् । य एवासौ ( आदित्यः ) तपत्येष एव विराट् । जै १,३४० ।

१८. दशालभ्यन्ते, दशाक्षरा विराड्, विराडेतान्येवेन्द्रियाणि वीर्याण्यात्मन्धित्वेय ९ (पृथिवी) विराडस्यामेव प्रतितिष्ठति । मै २,५,१० ।

१९. दित्यवाड् वयो विराट् छन्दः । तैसं ४,३,५,१; मै २,८,२ ।

२०. देवपात्रं वै विराट् । काठ २८,३; क ४४,३ ।

२१. पञ्चपदा वै विराट् । तस्या वा इयं ( पृथिवी ) पादः । अन्तरिक्षं पादः । द्यौः पादः । दिशः पादः । परोरजाः पादः । तैआ १,२५,३ ।

२२. पञ्चाविर्वयो विराट् छन्दः । काठ १७,२ ।

२३. पष्ठवाहो विराजे । मै ३,१३,१८ ।

२४. यद्वै विराजस्तेजस्तदाग्नेयः । काठ २९, ७ ।

२५. याश्चष्टिस ( स्तोत्रियाः ) सा विराट् । जै २,१११ ।

२६. विराजमभ्यक्रन्दत । ततो ऽप्सरसो ऽसृजत स्वष्टमुखाः । जै ३,३८१ ।

२७ विराज्यग्निश्चितव्यः । काठ २०,५ ।

२८. विराट् छन्दस्तद्वाग् वरुणो देवता । काठ ३९,४ ।

२९. विराडसि सपत्नहा । तैसं १, ३, २, १ ।

३०. विराड्वीयम् (पृथिवी ) । माश २,२,१,२० ।

३१. विराड् दिशां विष्णुपत्नी । काठ २२, १३ ।

३२. विराड् विरमणाद्विराजनाद्वा । दै ३, १२ ।

३३. संवत्सरो विराट् । तैसं ५, ६, ७, २; काठ २१, ५; क ३१,२० ।

३४. संपन्नमिव वा एतच्छन्दः पूर्णमिव प्रजननं यद्विराट् । जै २, ९५ ।

३५ सर्वदेवत्यं वा एतच्छन्दो यद्विराट् । माश १३,४,१,१३ ।

३६. सहस्राक्षरा वै परमा विराट् । तां २५, ९, ४ ।

३७. सा ( वाक् ) चतुर्थमहः प्राप्य विराड् भवति । तूष्णीं निपद्यम् । जै २, १ ।

३८. सा विराट् त्रयस्त्रिंशदक्षरा भवति । ऐ २, ३७ ।

३९. सा विराड् विक्रम्यातिष्ठद् ब्रह्मणा देवेषु । तैसं ७, ३, ९, १ ।

४०. स्त्रिया विराट् । काठ ३५, १५ ।

४१. स्रुग्वै विराट् । तैसं ५, २, ७, ५; काठ २०, ५; क ३१, ७ ।

४२. स्वर्गो वै लोको विराड् । काठ ३३,२ ॥ [°राज्- अक्षर- ७; अग्नि- ४१; २३७;६९२;६९४; अग्निष्टोम- ३४; अदिति- ५०; अनाधृष्ट, ष्टा- ३; अन्न- १७; ४२; ४३; अन्नाद्य- ८; १५, १६; २१; २४; अश्व- ९३; आग्नेय- ४१; आदित्य- ३३१; उपरव- ४; ऊधस्-; ऊर्ज्- ७; क्षत्र- ५८; गायत्री- १६; गो- २५;६०; चक्षुस्-६२; चन्द्रमस्-६१; छन्दस्-३९;९३;१०२; १०३; जमदग्नि- ७; ज्योतिष्मत्- ३; ज्योतिस्- ३२; त्रयस्त्रिंश- २५; दक्षिण,णा- ५१; दसन्- १; दिश्- ४२; दीक्षा- ४; ध्रुव- १०; नाभि- ७; पशु- १००; १५१; १८२;

पुरुष-मेध- ५; पुरुष-सम्पद्-; पृथिवी- २०; ६२; प्रजनन- १४; प्राण- ५; बृहत्- ३२; भूत- ९३; मांस- ९; यज्ञ- १६५; राज्य- २;७; रोहिणी- ११; वरुण- १४;३२; ४७;५५; वाच्- ९३; विद्युत्- १५ द्र. ]।

**वैराज** ( सामन्- )-

१. अन्नं वै वैराजम् । जै २, ३६४ ।

२. जनयत्येव वैराजेन। जै २, २ ।

३. वैराजः पुरुषो दश हस्त्या अङ्गुल्यो दश पद्या दश प्राणास्तत् त्रिंशत् , त्रिंशदक्षरा विराट् । काठ ३६, ७ ।

४. वैराजमसृजत । तदग्नेर्घोषोऽन्वसृज्यत…… तस्माद् वैराजस्य स्तोत्रेऽग्निं मन्थन्ति । जै १, १४३ ( तु. जै ३, ११८; तां ७,८,११ )

५. वैराजः सोमः । कौ ९, ६; माश ३, ३, २, १७; ९, ४, १९ ।

६. वैराजो वै षोडशी । जै १, १९५; २, ४३५।

७. शारदौ मासौ प्रयच्छेति । एतौ ते प्रयच्छानीत्यन्नमन्नमित्येव पतित्वास्या उदीच्यै दिशो वैराजं भा आदत्त । जै ३, ३६६ ।

८. सवितुर्वैराजम् । मै २, ३, ७; काठ १२, ५ ॥ [ °ज- अग्निहोत्र- २६; अन्न- ३८; अवि- ४; धातृ- १९; पशु- ३१३; पुरुष- ९१; ९२; प्रजापति- १५७; बृहत्- ४२; यज्ञ- १७१ द्र. ]

**वैराजी**- अप्- २४६ द्र. ।

**वैराज्य**- उदीची- ४; २३; प्लक्ष- ७; रुद्र- ५८; ५९; वाच्- १३ द्र. ।

**विरोचन**- प्रदर-; प्रह्लाद- द्र. ।

**विलम्बसौपर्ण** ( सामन्- )- यदन्तरात्मा पक्षौ विलम्बते तस्माद्विलम्बसौपर्णम् । तां १४, ९,२० ।

**वि-वर्त**- संवत्सरो वाव विवर्तोऽष्टाचत्वारिंशस्तस्य षड्विंशतिरर्धमासास्त्रयोदश मासाः सप्तऽर्तवो द्वे अहोरात्रे तद्यत्तमाह विवर्त इति संवत्सराद्धि सर्वाणि भूतानि विवर्तन्ते । माश ८,४, १, २५ ॥ [ °र्त- अष्टाचत्वारिंश- ४; उत्तरतस् १६; जगती- ४७ द्र.] ।

**विवल**- एकपदा वै विवलं छन्दः । माश ८, २, ४, १ ।

**विवस्वत्**-

१. यम् (मार्ताण्डम् ) उ ह तद्विचक्रुः ( देवा आदित्याः), स विवस्वानादित्यस्तस्येमाः प्रजाः । माश ३,१, ३, ४ ।

२. विवस्वन्नादित्यैष ते सोमपीथः । माश ४,३,५,१८ ॥ [°स्वत्- अङ्गिरस्-१०; आदित्य- ७१; मार्ताण्ड- ३; यम्- २० द्र. ] ।

**वि-वाह**-

१. तस्मादु समानादेव पुरुषाद् अत्ता ( भर्ता ) चाऽऽद्यः ( भार्या ) च जायेतेऽइदं हि चतुर्थे पुरुषे तृतीये सङ्गच्छामह ऽ इति विदेव्यं दीव्यमाना जात्याऽआसते । माश १,८,३,६ ।

२. नाभ्रात्रीमुपयच्छेत्तोकं ह्यस्य भवति । कु १११ : २५ ।

३. पाप्मना वा एषो ऽनुषक्तो यमुदके वा पात्रे वा विवाहे वा मीमांसन्ते । क ३८, ६ ।
४. यः सम्पन्नाय पुत्रीं दद्यात् सो ऽग्निष्टोमफलमवाप्नोति । लु १०७ : २; ३ ।
५. सा (सुकन्या) होवाच यस्मै मां पितादान्नैवाहं तं जीवन्तं हास्यामीति । माश ४,१,५,९ ।
[ °ह- गाथा- ३ द्र. ]

विश्-

१. अनिरुक्तेव हि विश् । माश ९,३,१,१५ ।
२. अपरजना ह वै विशो ऽदेवीः । गो २,६,१६ ।
३. अवीर्या वै स्त्री विशो मरुतः । माश २,५,२,३६ ।
४. अहुतादो वै विशः । माश २,५,२,२४ ।
५. एतानि वै विशि शिल्पानि गोऽश्वं हस्तिहिरण्यमजाविकं व्रीहियवास्तिलमाषास्सर्पिः क्षीरं रयिः पुष्टिः । जै १,२६३ ।
६. क्षत्राद् विडपक्रामभिव चरति । जै १,२८६ ।
७. तद्विश एवैतेन वीर्यमवरुन्द्धे । मै ४,४,२ ।
८. तस्माद् ब्रह्म च क्षत्रं च विशि प्रतिष्ठिते । माश ११,२,७,१६ ।
९. तस्माद्राष्ट्री विशमत्ति (विशं घातुकः [माश १३,२,९,६]) । माश १३,२,९,८ ।
१०. तस्या ( विशः ) राजा गर्भः । तां २,७,५ ।
११. भूमो वै विट् । माश ३,९,१,१७ ।
१२. यदाश्वत्था भवन्ति विश एवास्मिन् ( यजमाने ) वीर्यं वध्नाति । काठ ११, ६ ।
१३. विट् सप्तदशः ( स्तोमः ) । जै २,३२; १७७; ४१६ तां १८,१०,९ ।
१४. विट् सुरा (शस्त्रम् [ प १,४]) । माश १२,७,३,८ ।
१५. विट् सूक्तम् । ऐ २,३३; ३,१९ ।
१६. विड्ढु विश्वे देवाः । माश १०,४,१,९ ।
१७. विड् वशा, राजन्यो गर्भः, पशवो जरायु, राजा वत्सो, बलिः पीयूषः । काठ ३९,८ ।
१८. विड् वा उक्थानि । जै २,१४० ।
१९. विड् वै गर्भः । तै ३,९,७,३५; माश १३,९,९,६ ।
२०. विड् वै विश्वे देवाः । क ४६,३ ।
२१. विड् वै शाकुन्तिका । तै ३,९,७,३; माश १३,२,९,६ ।
२२. विड् वै सप्तदशः । जै २,१७१; तां २,७,५;१०,४ ।
२३. विड् वै हरिणी । तै ३,९,७,२ ।
२४. विशः सप्तदशः । ऐ ८, ४ ।
२५. विशोत्तरम् [ +पक्षम् [ तैसं. ] (अचितुत) ] । तैसं ५, ६,१०,१; मै ३,४,८ ।
२६. विशो ( + वै [माश ५, ५, १,१०] ) विश्वे देवाः । माश २, ४, ३,६; ३, ९,१, १६ ।
२७. विशो वै सूय्यः । माश १३, २, १०, २ ।
२८. विशो होत्राशंसिनः । ऐ ६, २१; गो २, ६, ३ ।
२९. स विशमसृजत यान्येतानि देवजातानि गणश आख्यायन्ते वसवो रुद्रा आदित्या विश्वे

देवा मरुत इति । माश १४, ४, २, २४ ।

३०. सा वै समृद्धा विड् या स्थावरा ऽ नपक्रमिणी । काश ७,२,२,१४ ।

३१. सूतमुखा वै विट् क्षत्रमुपतिष्ठते । मै ४, ३, ८ ।

३२. स्वरिति (प्रजापतिः) विशम् (अजनयत) । माश २, १, ४, १२ ॥ [विश्- अग्नि- ६८९; अन्न- १६; ४२; अश्वत्थ- १२-१४; अष्टाचत्वारिंश- १; आदित्य- १२८; ३२५; उक्थ- २३; ऋच्- ४३; ५१; एकविंश- ३५; क्षत्र- ४; ८; २३; २६; २८;४०; ४७;५०; क्षत्रिय- २;१२;२५; ग्रावन्- १०;१३; जगती- ४७; ५४;५५; तृतीयसवन- ३१; दिव्- १५२; देव- १४०; दैवी- २; नियुत्वती- २; पशु- ४०; पस्त्या-; पुष्टि- ५; प्रजा- ८; भूयसी-; मरुत्- ४८;४९; मारुत- १७; मारुती- १; २; यज्ञ- १२०; १२१; यव- २२; राजन्- ११; १३; १९-२१; राजन्य- २४; राष्ट्र- ६;७;१४; राष्ट्री- १ द्र.] ।

**विट्-पति-** पूषन्- २६ द्र ।

**विशोविशीय** (सामन्-)-

१. अग्निरकामयत विशोविशो ऽतिथिः स्यां विशोविश आतिथ्यमश्नुवीयेति स तपो ऽतप्यत स एतद्विशोविशीयमपश्यत्तेन विशोविशो ऽतिथिरभवत् विशोविश आतिथ्यमाश्नुत विशोविशोऽतिथिर्भवति विशोविश आतिथ्यमश्नुते विशोविशीयेन तुष्टुवानः । तां १४,११,३७ ।

२. तद्यदेनं (अग्निम्) विशोविशो व्यवहरन्ति तद् विशोविशीयस्य विशोविशीयत्वम् । जै १, १७२ ।

३. विशोविशीयेन विशोविशो राजानो ऽ भवन् । जै २, १०३ ॥ [°य- क्षत्र- १ द्र.] ।

**विश्-पति-** ज्येष्ठो विश्पतिः । तैसं २, ३, १,३ ।

**वैश्य-**

१. अग्निः सर्वा देवतास्तत्र वैश्यस्यापि । काठ १२,१ ।

२. अथ यदि दधि, वैश्यानां स भक्षो वैश्यांस्तेन भक्षेण जिन्विष्यसि वैश्यकल्पस्ते प्रजायामाजनिष्यते ऽन्यस्य बलिकृदन्यस्याऽऽद्यो यथाकामज्येयो यदा वै क्षत्रियाय पापं भवति वैश्यकल्पोऽस्य प्रजायामाजायत ईश्वरो हास्माद् द्वितीयो वा तृतीयो वा वैश्यतामभ्युपैतोः स वैश्यतया जिज्यूषितः । ऐ ७, २९ ।

३. आमिक्षा वैश्यस्य (पाकयज्ञस्य रूपं, पुष्ट्यै [तैसं.]) । तैसं ६,२,५,३; तैआ २,८,१ ।

४. एतद्वै वैश्यस्य समृद्धं यत् पशवः । तां १८,४,६ ।

५. तस्माद् बहुपशुर्वैश्वदेवो हि जागतो (वैश्यः) वर्षा ह्यस्य (वैश्यस्य) ऋतुस्तस्माद् ब्राह्मणस्य च राजन्यस्य चाद्यो ऽधरो हि सृष्टः । तां ६,१,१० ।

६. तस्माद्वैश्योऽद्यमानो (राजादिभिर्धनैरपह्रियमाणः) न क्षीयते, प्रजननाद्धि सृष्टः । तां ६, १,९ (तु. माश ७,५,२,२) ।

७. तस्माद्वैश्यो वर्षास्वादधीत । विड्ढि वर्षाः । माश २,१,३,५ ।

८. पुष्टिर्वैश्यस्य । काठ ३७,३ ।

९. पोषयिष्णुर्वैश्यो रयिमान् (आजायते स) । जै २,२६६ ।

१०. ब्राह्मणाच्च राजन्याच्च वैश्यो लोकी। इतरो न हि तथा लोकी यथा ब्राह्मणश्च राजन्यश्च। जै १,२४४।

११. मध्यतः सप्तदशं निरमिमीत, तं विश्वेदेवा देवता अन्वसृज्यन्त, जगती छन्दो, वैरूप९ साम, वैश्यो मनुष्याणां, गावः पशूनां, तस्मात् त आद्या अन्नधानाद्ध्यसृज्यन्त, तस्माद् भूया९सोऽन्येभ्यो भूयिष्ठा हि देवता अन्वसृज्यन्त। तैसं ७,१,१,५।

१२. मनोस्त्वा ग्रामण्यो व्रतेनादधे इति वैश्येन (अग्निः) आधेयः। काठ ८,४।

१३. यदा वै वैश्यं श्रद्धा विन्दति ब्राह्मणं वाव स तर्हीच्छति। सोऽस्मै ( ब्राह्मणाय ) ददाति। जै १,२६६।

१४. यदि वैश्यो ( यजेत ), वैश्वदेवम् ( अभिघारयेत )। मै ४,४,९।

१५. यो वैश्यः शूद्रो वा बहुपुष्टः स्यात्तस्य गवां गोष्ठादेकवि९शति९ शकान्याहृत्यैकवि९-शतिमाहुतीर्जुहुयात् (°वाम् साण्ड९ वत्सतरमपमयेत [ मै ४, २,७ ] )। मै ४,२,१०।

१६. वैश्यो जगतीछन्दा वैश्वदेवो देवतया। तस्मादु प्रजनिष्णुः। उदराद्ध्येनं प्रजननादसृजत (प्रजापतिः)। जै १,६९।

१७. वैश्यो वै पुष्यतीव। कौ २५,१५।

१८. वैश्यो वै शूद्राज्ज्यायान्। जै २,३२।

१९. वैश्वदेवो हि वैश्यः। काठ ३७,३; तै २,७,२,२।

२०. शरदि वैश्यस्य ( अग्निम् ) आदध्यात्। मै १,६,९।

२१. शरद्वै वैश्यस्यर्तुः। काठ ८,१; तै १,१,२,७।

२२. सप्तदशो वै वैश्यः। तैसं २,५,१०,२।

२३. स वा एष ( भूर्यज्ञक्रतुः ) वैश्यस्यैव यज्ञः। जै २, १४७॥ [°श्य- अग्नि- ३३२; अन्न- ९८; अश्वत्थ-१; असुर-६५; ऊरु- ३; ऋच्- ९; ग्रामणी- ७-९; ग्रामणीथ्य-; जगती- २८; जगती-छन्दस्- १; जन- ६; जागत- ६; १४; दीक्षित- ९; देव- १८१; न्यग्रोधतति-; पशु- २०३; पुष्टि- ९; प्रजापति- २५१; मारुत- १५; रायोवाजीय-; रासभ- ३ द्र.]

वैशी->°पुत्र- तस्माद्वैशीपुत्रं नाभिषिञ्चति। माश १३, २, ९, ८।

**विशाखा** (नक्षत्र-)-

१. नक्षत्राणामधिपत्नी विशाखे। श्रेष्ठाविन्द्राग्नी भुवनस्य गोपौ। तै ३, १, १, ११।

२. विशाखे नक्षत्रमिन्द्राग्नी देवता। तैसं ४, ४, १०, २ (तु. काठ ३९, १३)॥ [°खा- इन्द्राग्नि- १०; ४८; प्रजापति- २२ द्र.]।

**विशाल-**

१. तेऽब्रुवन् ( देवाः ) स्वर्गं लोकं गत्वा विशालं वाव नो भूत्वेदं साम स्वर्गं लोकमवाक्षीद् इति। तदेव विशालस्य विशालत्वम्। जै ३, २१९।

२. द्विपदा वै विशालं छन्दः। माश ८, २, ४, २।

३. वृष्णिर्वयो विशालं छन्दः। तैसं ४,३, ५, १; मै २, ८, ३; काठ १७, २॥ [°ल- पृथिवी- २१ द्र.]।

विश्व-

१. अहोरात्रे वै सर्वं विश्वम् । जै २, १९० ।

२. यद्वै विश्व ँ सर्वं तत् । माश ३, १, २,११ ॥ [°श्व- अन्न- १२५; परमेष्ठिन्- १३ द्र.] ।

विश्व-कर्मन्-

१. अथो विश्वकर्मणे । विश्वं वै तेषां कर्म्म कृतं सर्वं जितं भवति ये संवत्सरमासते । माश ४, ६, ४, ५ ।

२. असौ वै विश्वकर्म्मा योऽसौ ( सूर्य्यः ) तपति । कौ ५, ५; गो २,१, २३ ।

३. तां ( पृथिवीं ) विश्वकर्मा भूत्वा व्यमार्ट् (प्रजापतिः) । तैसं ७, १, ५, १ ।

४. या मध्ये, ताभिर्विश्वकर्मा (आर्ध्नोत्) । क ३१, ११ ।

५. विश्वा मे कर्म कृतानीति विश्वकर्मा ह्यभवत् । काठ ३६,१० ।

६. संवत्सरो विश्वकर्मेत्याहुः । काठ ३४,१ (तु. ऐ ४,२२) ॥ [°र्मन्- अग्नि- ६९५; अन्तरिक्ष- ९२;१५६; आदित्य- ३३३-३३५; इन्द्र- १८; १९३;२७६;३६६; त्रिष्टुभ्- ३; दक्षिण,णा- ७; दिव्- ३२; पङ्क्ति- ३; परमेष्ठिन्- १५; पृथिवी- ४३; प्रजापति- ९४; १३८; १६०; वाच्- ९४; वायु- १२ द्र. ] ।

वैश्वकर्मण-

१. बहुरूपा वैश्वकर्मणाः । मा २४, १७ ।

२. वैश्वकर्मण एककपालः [एककपालम् [तैसं.] (निर्वपति) ] । तैसं १, ८, ४, २; मै १, १०, १; काठ ९, ५; क ८,८ ।

३. वैश्वकर्मण एककपालः पुरोडाशो भवति विश्वं वा एतत्कर्म कृत ँ सर्वं जितं देवानामासीत्साकमेधैरीजानानां विजिग्यानानाम् । माश २, ५, ४, १० ।

४. वैश्वकर्मणं ( पयः ) उद्यतम् । मै १, ८, १० ।

५. वैश्वकर्मणो गृह्यते, विश्वान्येव तेन कर्माणि यजमाना अवरुन्धते । तैसं ७, ५, ४, १ । [°ण- पुरुष- ९३ द्र.] ।

वैश्वकर्मणी- तिस्रस्सिध्मा वशा वैश्वकर्मण्यः । काठ ४९,४ ।

विश्व-जित्-

१. इन्द्रो (+वै [जै २,१८०] ) विश्वजित् । जै २, ४२९ ।

२. एकाहो वै विश्वजित् । कौ २५, ११ ।

३. चक्रीवान्वा एष ( विश्वजित् ) यज्ञः कामाय । तां १६, १५, ४ ।

४. विश्वजिता (देवाः) विश्वमजयन् । तां २२, ८, ५ ।

५. विश्वजिता वै प्रजापतिः सर्वाः प्रजा असृजत्सर्वमुदजयत्तस्माद्विश्वजित् । कौ २५,१३ ।

६. विश्वजित् सर्वपृष्ठोऽतिरात्रो भवति सर्वस्याभिजित्यै । तैसं ७, २, २, २ ।

७. सर्वं (+वै [माश.] ) विश्वजित् । कौ २५, १४; माश १०, २, ५, १६ ।

८. स वा एष विश्वजिद् यः सहस्रसंवत्सरस्य प्रतिमा । गो १,५,१० ॥ [°जित्- अतिरात्र- १३; अहोरात्र- १; इन्द्र- ८;१६८; २५९; दिव्- ३२; प्रजापति- ४१; १३९ द्र.] ।

विश्व-ज्योतिस् ( इष्टका- )-

१. एता ह्येव देवताः ( अग्निः, वायुः, आदित्यः ) विश्वं ज्योतिः । माश ६,२,२,१६;५,३,३ ।

२. कीकसा विश्वज्योतिः । माश ७,५,१,३५ ।

३. पशवो वा उक्थानि पशवो विश्वं ज्योतिर्विश्व एव ज्योतौ पशुषु प्रतितिष्ठति । तां १६,१०,२ ।

४. प्रजा वै विश्वज्योतिः । प्रजा ह्येव विश्वं ज्योतिः । माश ६,५,३,५ ।

५. वायुर्वै मध्यमा विश्वज्योतिः । माश ८, ३, २, १ ॥ [°तिस्- अग्नि- २०९; प्रजा- ५७; प्राण- १९६ द्र.] ।

विश्व-देव-

१. एकविंशेन स्तोमेनानुष्टुभमध्यैत् । ततो विश्वान् देवान् असृजत । जै ३, ३ ६ ३ ( तु. जै ३,३८१ ) ।

२. तिस्रः पष्ठौह्यो विश्वेषां देवानाम् । काठ ४९,७ ।

३. पवमानो विश्वैर्देवैः (संहितः), विश्वेदेवाः स्वर्गेण लोकेन (संहिताः) । ऐआ ३,१, ६ ।

४. यद् ( देवाः ) विश्वान् देवानब्रुवन् युष्माकमायतनेनेति तस्माज्जगत्योऽनुशंस्यन्ते । जै १,२११ ।

५. विश्वान् देवान् देवताम् ( प्रजापतिरुदरादेव मध्याद् असृजत) । जै १,६९ ।

६. विश्वेभिर्देवेभिः पृतना जयामि जागतेन छन्दसा सप्तदशेन स्तोमेन, वामदेव्येन साम्ना । तैसं ३,५,३,२ ।

७. विश्वेभिर्देवेभिर्देवतयाऽऽनुष्टुभेन त्वा छन्दसा युनज्मि शरदा त्वर्तुना ( °र्तूनाम् [काठ.] ) हविषा दीक्षयामि । तैसं ७,१,१८,१-२; काठ ४१,९ ।

८. विश्वेभ्यस्त्वा देवेभ्यः प्रवृहामि जागतेन च्छन्दसा । काठ ३०,६ ।

९. विश्वेभ्यो देवेभ्य एनोमुग्भ्यः पुरोडाशं द्वादशकपालम् ( निर्वपति ) । मै ३, १५, ११ ( तु. तैसं ७,५,२२,१) ।

१०. विश्वेभ्यो देवेभ्यः पृषतान् (आलभते) । मै ३,१४,९ ।

११. विश्वेभ्यो देवेभ्यो जागतेभ्यः सप्तदशेभ्यो वैरूपेभ्यो वार्षिकेभ्यो द्वादशकपालः (पुरोडाशः) । तैसं ७,५,१४,१ ( तु. मै ३,१५,१०; काठ ४५,१० ) ।

१२. विश्वेभ्यो देवेभ्यो नमोऽनुष्टुभे नम एकवि ँ शाय नमो वैराजाय नमश्शरदे नम उदीच्यै दिशे नमस्समानाय नमश्चन्द्रमसे नमः । काठ ५१,४ ।

१३. विश्वेभ्यो देवेभ्यो वैरूपम् (सामापाक्रामत् ) । काठ १२, ५ ।

१४. विश्वे वै देवा देवानां यशस्वितमाः । माश १३,१,२,८; तै ३,८,७,२ ।

१५. विश्वे वै देवा देवानामयातयामानः । जै २,३२५ ।

१६. विश्वेषां त्वा देवानां क्रतुनाभिषिञ्चामि । मै २,६,११; ४,४,५ ।

१७. विश्वेषां देवाना ँ वैरूपं (अनुष्टुप् [जै २,१०१ ]) । मै २,३,७ ।

१८. विश्वेषां देवाना ँ षष्ठी ( द्वादशी [तैसं ५,७,२१,१] ) । तैसं ५,७,१७,१; काठ ५३,७ ।

१९. विश्वेषां देवानामोतवश्च तन्तवश्च । काठ २३,१ ।

२०. विश्वेषामहं देवानां देवयज्यया प्राणाना ँ सायुज्यं गमेयम् । काठ ५,१ ।

२१. विश्वेषां देवानां प्रथमा कीकसा। मै ३,१५,६।

२२. विश्वेषां देवानां प्राणोऽसीत्याह वीर्यमेवास्मिन् (आमयाविनि) एतेन दधाति। तैसं २, ३, ११, ३।

२३. सजूर्विश्वैर्देवैर्वैश्वानरैः। मै २,८,१।

२४. स (प्रजापतिः) विश्वान्देवानसृजत तान्दिक्षूपादधात्। माश ६,१,२,९।

२५. सो ऽगच्छद् (प्रजापतिः) यत्रैष आदित्यः। तत् तद् व् असृजतो एव विश्वान् देवान्। जै ३,३४३।

२६. स्वराडस्युदीची दिग्विश्वे ते देवा अधिपतयो, वरुणो हेतीनां प्रतिधर्तैकविꣳशस्त्वा स्तोमः···, निष्केवल्यमुक्थम्··· वैराजꣳसाम··· । तैसं ४, ४, २, २॥ [°व- अनुष्टुभ्- १९; आदित्य- १३४; १३६; आनुष्टुभ- ४; ५; ऋभु- १; करम्ब- ६; तृतीयसवन- ४; दिश्- ६५; द्यावापृथिवी- २३; धान्य- ३; पाङ्क्त- १६; पूतभृत्- १; प्रजापति- ६८; प्रतीची- १२; बृहस्पति- १७; २२; ब्राह्मण- ७०; मनुष्य- ३२ द्र.]।

**विश्वदेव-नेत्र-** विश्वदेवनेत्रेभ्यो देवेभ्यः पश्चात्सद्भ्यः स्वाहा। माश ५,२,४,५।

**विश्वदेव्य->°देव्यावत्-** बृहस्पतये त्वा विश्वदेव्यावते स्वाहा। तैआ ५,७,११।

**वैश्वदेव-**

१. अथ यदेनं (अग्निम्) एकं सन्तं बहुधा विहरन्ति तदस्य वैश्वदेवं रूपम्। ऐ ३,४।

२. त अब्रुवन्वैश्वदेवं साम्नो वृणीमहे प्रजननमिति। जैउ १, १६, ३, २।

३. पांचजन्यं वा एतदुक्थं यद्वैश्वदेवम् (शस्त्रम्)। ऐ ३,३१।

४. पिशङ्गा वैश्वदेवाः। मै ३, १३, १२।

५. प्रजापतिर्वैश्वदेवम्। कौ ५, १।

६. यत्सधूमं ज्योतिस्तद्वैश्वदेवम्। मै १, ८, ६।

७. यद्विश्वे देवाः समयजन्त तद्वैश्वदेवस्य (पर्वणः) वैश्वदेवत्वम्। तै १, ४, १०, ५।

८. वैश्यो जगतीच्छन्दा वैश्वदेवो देवतया। जै १, ६९।

९. वैश्वदेवं (पयः) हुतम्। मै १, ८, १०।

१०. वैश्वदेव उन्नीतः [उन्नीयमानः (काठ. [सोमः])]। तैसं ४,४,९, १; काठ ३४, १९।

११. वैश्वदेवं चरुं प्रथमजो वत्सो दक्षिणा। तैसं १, ८, १, २।

१२. वैश्वदेवं द्वादशकपालम् (पुरोडाशं निर्वपेत्)। तैसं २, २,११,३; काठ २२, ३ (तु. काठ ११,१)।

१३. वैश्वदेवं बहुरूपमालभेत ग्रामकामः······, बहुरूपो भवति बहुदेवत्यो ह्येषः। तैसं २, १, ६, ४-५।

१४. वैश्वदेवः स ऽसन्नः (प्रवर्ग्यः)। तैआ ५, ११, ३।

१५. वैश्वदेवा वै (हि [काठ.]) सजाताः। तैसं २, १, ६, ४; ३,९,२; काठ १२, ७।

१६. वैश्वदेवेन वै सो (प्रजापतिः) ऽसुरान् प्राणुदत वैश्वदेवेन प्रजा असृजत। काठ ३५, २०; क ४८, १८।

१७. वैश्वदेवेनाग्रायणः (ग्रहः सामन्वान्)। मै ४, ६, १।

१८. वैश्वदेवो द्वादशकपालः ( पुरोडाशः ) । तां २१, १०, २३ ।
१९. वैश्वदेवो वै होता । मै ३, १०, ४; ४, ६, ६; काठ २८, १; क ४४, ५ ।
२०. वैश्वदेवौ पिशङ्गौ तूपरौ । काठ ४८, ३ ।
२१. शिल्पास्त्रयो वैश्वदेवाः । काठ ४९, १० (तु. काठ ८, १) ॥ [°व- अग्नि- ६९९; ७३८; अग्निष्टोम- ५; अग्निहोत्र- ४; २५; अङ्ग- ११; अनिरुक्त- १०; अन्तरिक्ष- १५९; अन्न- १७८; अम्मृणावत्-; अश्व- ९६; खङ्ग-;, जागत- २०; २३; तण्डुल- १; तृतीय-सवन- ४६; पयस्- ३०; पवमान- १६; पशु- १८२; पशुकाम- ६; पिशङ्ग- २; ३; पिशङ्गी-, पुरुष- ७३; पूतभृत्- २; पृषत- १; प्रजनन-काम-; प्रजा- ९५; प्रातःसवन- १९; वैश्य- द्र.] ।

**वैश्वदेव-त्व-** अथो वैश्वदेवत्वायैव द्वादशकपालः (पुरोडाशः) । मै १, १०,५ (तु. तैसं २, ३,७,३-४; मै २, ३, ७; काठ १२, ५) ।

**वैश्वदेवी-**

१. अथ यां वीङ्खयन्निव प्रथयन्निव गायति सा वैश्वदेवी (आगा) । तया तृतीयसवनस्योद्गेयम् । जैउ १, १२, २, ४ ।
२. तिस्रश्शिल्पा वशा वैश्वदेव्यः । काठ ४९, ३ ।
३. पृषती क्षुद्रपृषती स्थूलपृषती ता वैश्वदेव्यः । काठ ४९,२ ।
४. शिल्पा वैश्वदेवी । मै ३,१३,६ ।
५. सा या बहुरूपा (गौः) साऽभवत् , तस्मात्सा वैश्वदेवी । काठ १३,७ ॥ [°वी- अप्-२४७; आमिक्षा- ६; ७; गो- ६२; पृषती- १; २; प्रजा- १३; ९४; ९६; वाच्- १२१ द्र.] ।

**विश्व-धामन्-** अङ्ग- ४; देवता- २४ द्र. ।

**विश्व-धायस्-** वृष्टिर्वै विश्वधायाः । तै ३,२,३,२ ॥ [°यस्- पृथिवी- ४४ द्र.] ।

**विश्व-भू-** अन्तरिक्ष- २१ द्र. ।

**विश्व-मनस्-** विश्वमनसं वा ऋषिमध्यायमुद्व्रजित ँ रक्षोऽगृह्णात् । तां १५,५,५० ।

**वैश्वमनस( सामन्- )-**

१. अप पाप्मान ँ हते वैश्वमनसेन तुष्टुवानः । तां १५,५,२० ।
२. तदु भ्रातृव्यहा साम हन्ति द्विषन्तं भ्रातृव्यम्, अप रक्षः पाप्मानं हते य एवं वेद । जै ३,२६७ ।

**विश्व-रूप,पा-**

१. तस्य ( विश्वरूपस्य ) त्रीणि शीर्षाण्यासन्त्सोमपान ँ सुरापानमन्नादनम् । तैसं २,५,१,१ ।
२. तस्य ( विश्वरूपस्य ) सोमपानमेवैकं मुखमास । सुरापाणमेकमन्यस्माऽ अशनायैकं तमिन्द्रो दिद्वेष तस्य तानि शीर्षाणि प्रचिच्छेद । माश १,६,३,२ ।
३. विश्वरूपो वै त्वाष्ट्र आसीत् त्रिशीर्षासुराणा ँ स्वस्रीयः, स सोममेकेन शीर्ष्णापिबत् सुरामेकेनाऽन्नमेकेनावयत् । मै २,४,१ ।
४. स (इन्द्रः) यत्र त्रिशीर्षाणं त्वाष्ट्रं विश्वरूपं जघान । माश १,२, ३,२ ॥ [°प- असुर- ६८; गो- ६४; त्वष्टृ- २६; पशु- २५४; ३०९; मेधा- द्र.] ।

**विश्व-वारा**- विश्ववारामित्याह विश्व ९ ह्येषा ऽवति । तैसं २, ५,९, ६ ।

**विश्व-वेदस्**- सगरो ऽसि विश्ववेदाः । मै १,२,१२ ॥ [°दस्- अग्नि- ४४०; तुथ- २ द्र.]।

**विश्व-व्यचस्**- समुद्रो ऽसि विश्वव्यचाः । मै १,२, १२; काठ २,१३ ॥ [°चस्- अन्तरिक्ष- २१; आदित्य- ७२ द्र] ।

**विश्व-सद्मन्**- इमे वै लोका विश्वा सद्मानि । माश ६, ७, ३, १० ।

**विश्व-सृज्**- एतेन ( सहस्रसंवत्सरसत्रेण ) विश्वसृज इदं विश्वमसृजन्त । यद्विश्वमसृजन्त । तस्माद्विश्वसृजः । तै ३, १२, ९, ८ (तु. तां २५,१८,२) ।

**वैश्वसृज**- कमग्निं चिनुते वैश्वसृजमग्निं चिन्वानः । शरीरं प्रत्यक्षेण । तैआ १, २३,११।

**विश्वाची**-

१. विश्वाचीरभिचष्ट घृताचीरिति स्रुचश्चैतद्वेदीश्चाह । माश ९, २, ३, १७ ।

२. वेदिरेव विश्वाची । माश ८, ६, १, १९ ।

**विश्वा-मित्र**-

१. जन्हुवृचीवन्तो (जह्नोः पुत्रा ऋचीवन्नामकाः ) राष्ट्र आहिंसन्त स विश्वामित्रो जाह्नवो राजैतम् ( चतूरात्रम् ) अपश्यत् स राष्ट्रमभवदराष्ट्रमितरे । तां २१, १२, २ ।

२. तस्येदं विश्वं मित्रमासीद्यदिदं किञ्च तस्माद्विश्वामित्रस्तस्माद्विश्वामित्र इत्याचक्षत एतम् ( प्राणम् ) एव सन्तम् । ऐआ २, २, १ ।

३. विश्वस्य ह वै मित्रं विश्वामित्र आस विश्वं हास्मै मित्रं भवति य एवं वेद । ऐ ६,२०;२१ ।

४. श्रोत्रं वै विश्वामित्र ऋषिर्यदेनेन सर्वतः शृणोत्यथो यदस्मै सर्वतो मित्रं भवति तस्माच्छ्रोत्रं विश्वामित्र ऋषिः । माश ८, १, २, ६ ॥ [°त्र- अनुष्टुभ्- २७; इन्द्र- २६६; क्षत्र- २; जमदग्नि- ९; दक्षिणतस् ५; वाच्- ९५ द्र.] ।

**वैश्वामित्र** ( सामन्- )- यदु विश्वामित्रो ऽपश्यत् तस्माद् वैश्वामित्रमित्याख्यायते । जै ३, २३९ ॥ [°त्र- इन्द्र- ३८२ द्र.] ।

**विश्वायुस्**- दिव्- ४०; पृथिवी- ६३; १९१; रथन्तर- ३६ द्र. ।

**विश्वा-राज्**-

१. विश्वाराडसि विश्वासां नाष्ट्राणा ९ हन्ता । तैसं १, ३, २, १ ।

२. विश्वाराडस्यरातीयतो हन्ता । क २, ५ ।

**विश्वा-साह्**- अग्नि- ७२ द्र. ।

**विश्वे-देव**-

१. अथैष स्वर्ग एव लोको विश्व एव देवाः । जै १, ३३५ (तु. जै ३,२९४) ।

२. अनन्ता विश्वे देवाः । माश १४, ६, १, ११ ।

३. एते वै विश्वे देवा यत्सर्वे देवाः । गो २, १, २० ।

४. एते वै सर्वे देवा यद्विश्वे देवाः । कौ ४, १४; ५, २ ।

५. ता ( दिशः ) उ एव विश्वे देवाः । जैउ २, १, २. ४; ११, ५ ।

६. तान् ( पशून् ) विश्वे देवाः सप्तदशेन स्तोमेन नाप्नुवन् । तै २, ७, १४, २ ।

७. द्वात्रिंशद्विश्वे देवाः । जै १, ३२ ।

८. प्राचीमातिष्ठ, जगती त्वा छन्दसामवतु, सप्तदशः स्तोमो वैरूप९ साम, विश्वेदेवा देवता, विड् द्रविणम् । मै २, ६, १० ।

९. यद् विश्वे देवाः समभरन् तस्मादभ्याताना वैश्वदेवाः । तैसं ३,४,६,१ ।

१०. विड् ( विड् वै [काठ., क.]) विश्वे देवाः । काठ २९,१०; क ४६,३; माश १०,४,१,९ ।

११. विशो ( +वै माश ५,५,१,१० ) विश्वे देवाः । माश २,४,३,६; ३,९,१,१६ ।

१२. विश्वे देवा उपरिष्टात् ( पर्यपश्यन् ) । जै २,१४२ ।

१३. विश्वेदेवा ऋतावृध ऋतुभिर्हवनश्रुतः । जुषन्तां युज्यं पयः । काठ १३,१५ ।

१४. विश्वे देवा जरदष्टिर्यथासत् । काठ ३६,१५ ।

१५. विश्वेदेवास् साम्राज्याय [ वरुणम् [जै ३,१५२], आदित्यम् [जै २, २५] ( अभ्यषिञ्चन्त ) ] ।

१६. विश्वे देवाः सूक्तवाचः (स्वरसामानः [जै २,४२९]) । तैसं ३,३,२,१-२ ।

१७. वीर्यं वै विश्वे देवाः । काठ २९,९; क ४६,२ ।

१८. श्रोत्रं विश्वे देवाः । माश ३,२,२,१३ ।

१९. सर्वं वै विश्वे देवाः । माश १,७,४,२२; ३,९,१,१३; ४,२,२,३ (तु. गो १,५,१५) ।

२०. सर्वमिदं विश्वे देवाः । माश ३,९,१,१४; ४,४,१,९;१८ ।

२१. स्तोका वै विश्वे देवाः । मै १,१०,६; काठ ३६,१ ॥ [°व- अधियो-; अनुष्टुभ्- ३८; अप्- ६५; अषाढा- २; अहभून-; इन्द्राग्नि- २१; उदीची- ४; उपगातृ- ४; उपद्रव- ५; उष्णिह्- १७; ऊर्ज्- २५; ऊर्ध्व,र्ध्वा- ४; ऋतु- २९; काम- १०; कालेय- ९; जगती- ५६; तृतीयसवन- ८; ४३; ४५; त्रयस्त्रिंश- १५; दशरात्र- १; देव- २०४; प्रजापति- ६५; १३९; प्राण- १३७; बल- २; मनुष्य- २४; रश्मि- ५; ८; १६ द्र.] ।

विष- यवमात्रं वै विषस्य न हिनस्ति । गो २, १, ३ ॥ [°ष- अलापु-; अलाबुपात्र-; ओषधि- ७२; ७९ द्र.] ।

विषु-वत्-

१. अथ यद्विषुवन्तमुपयन्ति । आदित्यमेव देवतां यजन्ते । माश १२,१,३,१४ ।

२. आत्मा वै संवत्सरस्य विषुवानङ्गानि पक्षौ ( +मासाः [माश.]) (दक्षिणः पक्ष उत्तरः पक्षश्च) । गो १,४,१८; माश १२,२,३,६ [तु. जै ३,३९१; तां ४,७,१] ।

३. एकविंशो विषुवान् (भवति [जै २,३८९]) । जै २,३८६ ।

४. श्रीर्वै विषुवान् । जैमि ३, ३२० ॥ [°वत्- अग्निष्टोम- ७; आदित्य- २९; एकविंश- २; जागत- १३; तेजस्- ११; दिव्- १५१; देवलोक- १३; द्वादशाह- १५; पञ्चम- २; बार्हत- ६; यज्ञ- २२ द्र.] ।

विष्टप- दशम- ९; ब्रध्न- ३; ब्रह्मन्- १४३ द्र.] ।

वि-ष्टम्भ- विष्टम्भोऽसि वृष्ट्यै त्वा । तैसं ३,५,२,२; ४,४,१,१; काठ १७,७; ३७,१७ । [°म्भ- अधिपति- ६; प्रजापति- १६१ द्र.] ।

वैष्टम्भ ( सामन्-)- अहर्वा एतत् ( तृतीयम् ) अम्लीयत तद्देवा वैष्टम्भैर्व्यष्टभ्नुव९ स्तद्वैष्टम्भस्य वैष्टम्भत्वम् । तां १२,३,१० ।

**विष्टार-पङ्क्ति-** दिशो वै विष्टारपङ्क्तिश्छन्दः । माश ८,५,२,४ ।

**विष्णु-**

१. अग्निर्मुखं प्रथमो देवताना ९ संगतानामुत्तमो विष्णुरासीत् । काठ ४,१६ ।
२. अथ यदन्तरेण ( अह्नो रात्रेश्च यो ऽन्तरालः कालः ) तद्विष्णुः । माश ३,४,४,१५ ।
३. अधीलोधकर्णाश्चयो विष्णव उरुक्रमाय । काठ ४९,६ ।
४. अन्तो विष्णुर्देवतानाम् । तां २१,४,६ ।
५. इमे वै लोका विष्णोर्विक्रमणं विष्णोर्विक्रान्तं विष्णोः क्रान्तम् । माश ५,४,२,६ ।
६. उरु विष्णो विक्रमस्वोरु क्षयाय नस्कृधि (नः कृधि [तैसं.]) । तैसं १,३,४,१; क २,९ ।
७. चक्रपाणये ( विष्णवे ) स्वाहा । ष ५,१० ।
८. जुष्टा विष्णव इति । जुष्टा सोमायेत्येवैतदाह । माश ३,२,४,१२ ।
९. तथैवैतद्यजमानो विष्णुर्भूत्वेमांल्लोकान् क्रमते । स यः स विष्णुर्यज्ञः सः । माश ६, ७, २,१०-११ ।
१०. तद्विष्णुं यश आच्छैत् । तम् ( विष्णुम् ) आलभत । तै २, ३, २, ४ ।
११. तस्माद्वेत ९ सोमं विष्णुं यजुर्भिर्बिभ्रत्येतानि ( यजूंषि ) हि सोऽभजत । काश ५, ८,४,२ ।
१२. तस्य ( विष्णोः ) उपपरासृत्य ( वम्र्यः ) ज्यामपिजक्षुस्तस्यां छिन्नायां धनुरार्त्न्यौ विष्फुरन्त्यौ विष्णोः शिरः प्रचिच्छिदतुः । माश १४,१,१,९ ।
१३. तृतीयं तव इति विष्णुम् (प्रजापतिरब्रवीत् ) । जै २,२४३ ।
१४. तृतीये विष्णुः ( अकल्पत् ) । तैसं ७,१,५,५ ।
१५. ते देवा एत ९ वामनं पशुमपश्य ९ स्त ९ वैष्णवमालभन्त, ततो वै विष्णुरिमाँल्लोकानुदजयत्, ततो देवा असुरानेभ्यो लोकेभ्यः प्राणुदन्त, ततो देवा अभवन् परासुराः । मै २,५,३ ।
१६. त्रिर्दिवः पृथिवीमेष ( विष्णुः ) एता ९ विचक्रमे । मै ४,१४,५ ।
१७. न्युप्तेन वै विष्णुरिमांल्लोकानुदजयत् । क ३८, ५ ।
१८. प्र तद्विष्णु स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः । यस्योरुषु त्रिषु विक्रमेणष्वधिक्षियन्ति भुवनानि विश्वा । क २,४ ।
१९. प्रादेशमात्रं भवत्येतावती हि विष्णोर्नासिः । काठ २०, ७; क ३१, ९ ।
२०. भद्रो विष्णुरुरुगायो वृषा हरिः । काठसंक ६१ : ४ ।
२१. मुखं वै देवानामग्निः; परोऽन्तो विष्णुः । काठ १९, ८ ।
२२. यच्छ्रोत्रं स विष्णुः । गो २, ४, ११ ।
२३. यज्ञो वै विष्णुः स देवेभ्य इमां विक्रान्तिं विचक्रमे यैषामियं विक्रान्तिरिदमेव प्रथमेन पदेन पस्पाराथेदमन्तरिक्षं द्वितीयेन दिवमुत्तमेनैताम्वेवैष एतस्मै विष्णुर्यज्ञो विक्रान्तिं विक्रमते । माश १, १, २, १३ (तु. माश १, ९, ३, ९ ) ।
२४. यदनु समसर्पंस्तत्संसृपां संसृप्त्वम् । तद्विष्णुनैव देवतया दशम्यामन्वविन्दन् । जै २,२०१ ।
२५. यदोदनपचने ऽधिश्रित्याथ गार्हपत्ये ऽथाहवनीये ऽधिश्रयत्येतद्वाव तत् त्रिर्विष्णुर्विक्रमते । मै ४, १, १२ ।

२६. यद्विष्णुक्रमान् क्रमते, विष्णुरेव भूत्वा यजमानश्छन्दोभिरिमाँल्लोकाननपजय्यमभिजयति। तैसं ५, २, १, १।
२७. यन्न्वेवात्र विष्णुमन्वविन्दंस्तस्माद्वेदिर्नाम। माश १, २, ५, १०।
२८. ये ऽणिष्ठास् (तण्डुलाः) तान् विष्णवे शिपिविष्टाय शृते चरुम् (कुर्यात्)। तैसं २, ५,५, २।
२९. यो वै विष्णुः सोमः सः। माश ३, ३, ४, २१; ६,३, १९।
३०. लप्सुदिनस्त्रयो विष्णव उरुगायाय। काठ ४९, ६।
३१. वरुणस्य सुषुवाणस्य दशधेन्द्रियं वीर्यं परापतत् ··· अग्निना देवेन प्रथमे ऽहन्ननु प्रायुङ्क्त। सरस्वत्या वाचा द्वितीये। सवित्रा प्रसवेन तृतीये। पूष्णा पशुभिश्चतुर्थे। बृहस्पतिना ब्रह्मणा पञ्चमे। इन्द्रेण देवेन षष्ठे। वरुणेन स्वया देवतया सप्तमे। सोमेन राज्ञा ऽष्टमे। त्वष्ट्रा रूपेण नवमे। विष्णुना यज्ञेनाप्नोत् ··· यज्ञ एवान्ततः प्रतितिष्ठति। तै १,८,१, १-२।
३२. वरुणेनासुरान् ग्राहयित्वा विष्णुना यज्ञेन प्राणुदत। काठ १३, ४।
३३. विष्णवे निखुर्यपाय स्वाहा, विष्णवे निभूयपाय स्वाहा। काठ ४३, ५।
३४. विष्णुं वै देवा आनयन् वामनं कृत्वा, यावदयं त्रिर्विक्रमते तदस्माकमिति, स वा इदमेवाग्रे व्यक्रमताऽथेदमथादः ( पृथिवीमन्तरिक्षं दिवम् )। मै ३, ८, ३।
३५. विष्णुरुपावह्रियमाणः ( सोमः )। तैसं ४, ४, ९, १।
३६. विष्णुरेव हव्यं रक्षते। क ४७, १।
३७. विष्णुर्न ईडित ईडितव्यैर्देवैर्दिश्यैः पातु। काठ ३५, २; क ४८, ३।
३८. विष्णुर्वा इमांल्लोकानुदजयत् स एभ्यो लोकेभ्यो ऽसुरान् प्राणुदतेमानेव लोकानुज्जयत्येभ्यो लोकेभ्यो भ्रातृव्यं प्रणुदते। काठ १३, ३।
३९. विष्णुर्वा यज्ञमभ्यष्टौत्। जै ३, २७४।
४०. विष्णुर्वै देवानां द्वारपः। ऐ १, ३०।
४१. विष्णुर्वै यज्ञो यज्ञ एवान्वैच्छन् ( देवाः )। त ँत्रिष्णा अविन्दन् दशमे। मै ४, ४,७।
४२. विष्णुर्हृदयम्। तैआ २, १९, २।
४३. विष्णुर्वैतर्हि यज्ञो यर्ह्यनिरुक्तः। क ३८, १।
४४. विष्णुस्त्वनम् ( उपसद्देवतारूपाया इषोः )। ऐ १, २५।
४५. विष्णुस्त्वा ऽनु विचक्रमे। तैसं ३, २, ६, १।
४६. विष्णुः सर्वा देवताः। ऐ १, १।
४७. विष्णो त्वं नो अन्तमः, शर्म यच्छ सहन्त्य। प्र ते धारा मधुश्चुत उत्सं दुह्रते अक्षितम्। तैसं ३, १, १०, ३-४।
४८. विष्णोरष्टमी ( °स्तण्डुलाः [तैसं.] )। तैसं ५,५,१,५; मै ३, १५,५।
४९. विष्णो हव्यं रक्षस्व। तैसं १,१,३,२।
५०. वीर्यं विष्णुः। तै १,७,२,२।
५१. व्यष्टभ्नाद्रोदसी विष्णवेते दाधर्थ पृथिवीमभितो मयूखैः। तैआ १,८,३।
५२. व्यस्कभ्नाद्रोदसी विष्णुरेते, दाधार पृथिवीमभितो मयूखैः। तैसं १,२,१३,२।

५३. श्रोणा नक्षत्र॰ विष्णुर्देवता। तैसं ४,४,१०,२; मै २,१३,२० (तु. तै १,५,१,४)।

५४. स ( विष्णुः ) इमाँल्लोकान्विचक्रमे ऽथो वेदानथो वाचम्। ऐ ६,१५।

५५. स यः स विष्णुर्यज्ञः स। स यः स यज्ञोऽसौ स आदित्यः। माश १४,१,१,६।

५६. स विष्णुस्त्रेधाऽऽत्मानं विन्यधत्त पृथिव्यां तृतीयमन्तरिक्षे तृतीयं दिवि तृतीयम्। तैसं २,४, १२,३।

५७. ह्रस्वो विष्णुः। जै ३, ३५४॥ [°ष्णु- अग्नि- ९१; १९३; १९४; २२२; २२३; ३०७; ४३०; ५२७; अनुष्टुभ्- ६४; अन्तरिक्ष- १५७; अन्न- १६८; अरणि- २; अवाची- १; आनुष्टुभ- ६; आयुस्- ४९; आशा- ५; इन्द्र- ७५; ७७; २१४; ३०१; ३७८; उत्तरात् ५; उन्नेतृ- ३; उलूखल- २; एकविंश- २६; ओजस्- १२; ओषधि- ८०; गर्भ- २०; चक्षुस्- ६३; √दीक्ष् ९; दीक्षातपस्-; देव- ७५; देवता- ४३; पंक्ति- १७; पर्वत- २; पशु- २६६; ३११; पृथिवी- १९३; प्रजापति- ७८; प्रतिमा- २; प्रतिष्ठा- ३; प्रवर्ग्य- १२; प्रातःसवन- १; मख- ५; यजमान- १३; यजुस्- १६; २२; यज्ञ- ११६; १२३; १४८; १६६-१७०; लोक- ३० द्र.]।

**विष्णु-क्रम**- एतद्वै देवा विष्णुर्भूत्वेमाँल्लोकानक्रमन्त यद्विष्णुर्भूत्वाक्रमन्त तस्माद् विष्णुक्रमाः। माश ६,७,२,१० ॥ [°म- अहन्- १४; अहोरात्र- ३१ द्र. ]।

**विष्णु-देवता->** °त्या- या सा द्वितीया ( ओङ्कारस्य ) मात्रा विष्णुदेवत्या कृष्णा वर्णेन यस्तां ध्यायते नित्यं स गच्छेद्वैष्णवं पदम्। गो १,१,२५।

**विष्णु-पत्नी**- शृण्वन्ति श्रोणाममृतस्य गोपाम्। ···महीं देवीं विष्णुपत्नीमजूर्याम्। तै ३, १, २,५-६ ॥ [°त्नी- विराज्- ३१ द्र.]।

**विष्णु-मुख**- विष्णुमुखा वै देवाश्छन्दोभिरेभ्यो लोकेभ्योऽसुरान् प्राणुदन्त। काठ ३२,५। [°ख- असुर- ६९; छन्दस्- १०४; विश्वदेव- २२ द्र.]।

**विष्णु-रूप**- उत्तरारणि- १ द्र.।

**विष्णु,ष्णू-वरुण**- विष्णूवरुणा अभिशस्तिपावा देवा यजन्त हविषा घृतेन। अपामीवा॰ सेधत॰ रक्षसश्चाथा धत्त॰ यजमानाय श॰ योः। मै ४,१४,६।

**वैष्णुवारुण**- यज्ञ- १२३ द्र.। **वैष्णुवारुणी**- वशा- ११ द्र.

वैष्णव-

१. अथ यद्वैष्णवः। त्रिकपालो वा पुरोडाशो भवति चरुर्वा। माश ५,२,५,४।

२. तद्यदेवेदं क्रीतो विशतीव तद्ध हास्य ( सोमस्य ) वैष्णवं रूपम्। कौ ८,२।

३. यत्त्रिकपालस्तेन वैष्णवः ( पुरोडाशः )। मै ३,६,१; काठ २४,८।

४. वैष्णवं वामनमालभेत स्पर्धमानो विष्णुरेव भूत्वेमाँल्लोकानभिजयति। तैसं २,१,३,१।

५. वैष्णवं वै (हि [मै.; माश.]) हविर्धानम्। मै ३,८,७; काठ २५,८; क ४०, १; माश ३, ५,३,१५।

६. वैष्णव ( सोमः ) आसन्नकर्मणि। काठ ३४,१५।

७. वैष्णवः पुरोडाशो भवति, त्रिकपालः कार्यस्स हि वैष्णवो यन्नवकपालस्तेनैव त्रिकपालस्त्रयो हि ते त्रिकपालाः। काठ २४,८।

८. वैष्णवं त्रिकपालं वामनो (+वही [तैसं १,८,८,१]) दक्षिणा। तैसं १,८,१७,१ (तु. मै २, ६,४ तां २१,१०,२३)।

९. वैष्णवं त्रिकपालम् (निर्वपेत्)। मै २,२,१३।

१०. वैष्णवं (पयः) प्रतिनीयमानम्। मै १,८,१०।

११. वैष्णवा हि देवतयोपरवाः। तैसं ६,२,११,१।

१२. वैष्णवो नवकपालो भवति,…ते वै त्रयस्त्रिकपालास्त्रिकपालो वैष्णवो देवतया। मै ३,७,९।

१३. वैष्णवो वै सोमः। काठ २६,२; क ४०,५।

१४. शुण्ठास्त्रयो वैष्णवाः। काठ ४९,६॥ [°व– अन्तरिक्ष– १३३; उलूखल– ५; तक्षरथकार–; पुरुष– ९४; यजमान– ३२; यूप– २०; २१; वनस्पति– १७; वामन– ४ द्र.]।

वैष्णवी–

१. बृहतीमिन्द्राय वाचं वद रक्षोहणं वलगहनं वैष्णवीम्। क २,५।

२. यद्वैष्णव्याऽऽहवनीये जुहोति, स्वर्गमेवैनं (यजमानम्) लोकं गमयति। क ४०,५।

३. रक्षोहणौ वलगहनौ वैष्णवी। तैसं १,३,२,२।

४. वैष्णव्या हविर्धानम् (उपचरति)। मै ४, ६, ५॥ [°वी– जराबोधीय– ५; जहका - २; यज्ञ– १४३; १५० द्र.]।

वि-ष्पर्धस्– दिव– ३९ द्र.। विष्वञ्च्– प्राण– १९७ द्र.।

वि-सर्पिन् (अग्नि-)– विसर्पिण उपदिश्यस्य स्थाने स्वतेजसा भानि। तैआ १,१८,१।

वि-हव्य (सूक्त-)– जमदग्नेश्च वा ऋषीणाञ्च सोमौ स ँ सुतावास्तां तत एतज्जमदग्निर्विहव्यमपश्यत्तमिन्द्र उपावर्त्तत यद्विहव्य ँ होता शंसतीन्द्रमेवैषां वृङ्क्ते। तां ९, ४, १४। [°व्य– जमदग्नि– ९ द्र.]।

विहव्या (इष्टका-)– स एता जमदग्निर्विहव्या अपश्यत्, ता उपाधत्त, ताभिर्वै स वसिष्ठस्येन्द्रियं वीर्यमवृङ्क्त। तैसं ५, ४, ११, ३।

वीङ्क– (सामन्-)– च्यवनो वै दाधीचोऽश्विनोः प्रिय आसीत्सोऽजीर्यत्तमेतेन साम्नाप्सु व्यैङ्कयतां तं पुनर्युवानमकुरुतां तद्वाव तौ (अश्विनौ) तर्ह्यकामयेतां कामसनि साम वीङ्कं काममेवैतेनावरुन्धे। तां १४, ६, १०।

वीणा–

१. यदा वै पुरुषः श्रियं गच्छति वीणास्मै वाद्यते। माश १३, १, ५, १।

२. वीणा वदन्ति, या पशुषु वाक्तां तेनावरुन्धते। काठ ३४, ५।

३. श्रिया (श्रियै [माश.]) वा एतद्रूपं यद्वीणा। तै ३, ९,१४,१; माश १३, १, ५,१।

वीतहव्य– वीतहव्यः श्रायसो ज्योग्निरुद्ध एतत्सामापश्यत्सोऽवगच्छत्प्रत्यतिष्ठदवगच्छति प्रतितिष्ठत्येतेन तुष्टुवानः। तां ९, १, ९।

वैतहव्य (सामन्-)– पान्तमा वो अन्धसः इति वैतहव्यम्। तां ९, २, १।

वीति- अन्न ऽ आयाहि वीतय ऽ इत्यवितव ऽ इत्येतत् । माश ६, ४,४, ९ ।

वीर-

१. अशा हि वीरः । माश ४, २, १,९ ।

२. न ह वै स वीरो यो ऽन्यस्य वीर्यमनु वीरः । स ह वाव वीरो य आत्मन एव वीर्यमनु वीरः । जै २, २८२ ।

३. शतदायो वीरः । मै १,७,५ ॥ [°र- अङ्गिरस्- ३५; पुत्र- ६; प्रजा-६२; प्राण-१२९ द्र.] ।

वीर्य-

१. इन्द्रियं (+वै [जै.]) वीर्य्यं ९ षोडशी । जै २,२२३; तां २१, ५, ६ ।

२. इन्द्रियं वै वीर्य्यं वाजिनम् । ऐ १, १३ ।

३. एतावद्वै पुरुषे वीर्य्यं (+यावदस्य प्राणा अभि [क.]) । काठ १९, १; क ३९, ५ ।

४. तत् (इन्द्रस्येन्द्रियं वीर्यम्) पशव ओषधीभ्यो ऽध्यात्मन्त्समनयन् तत् प्रत्यदुहन् तत् सान्नायस्य सान्नायत्वम् । यत् प्रत्यदुहन् तत्प्रतिधुषः प्रतिधुक्त्वम् । तैसं २, ५, ३, ३ ।

५. दक्षिणा पर्यावर्त्तते, स्वमेव वीर्यमनु पर्यावर्तते······ अथो आदित्यस्यैवा ऽऽवृतमनु पर्यावर्तते । तैसं ५, २, १,३ ।

६. पञ्चदशेन (स्तोमेन देवाः) ओजसा वीर्येण···ज्योतिरदधुः । जै १, ६६ ।

७. प्राणा वीर्यम् । काठ १३,७ ।

८. मासि मास्येव वीर्यं दधति । तैसं ७, ५, १, ६-७ ।

९. वज्रेण खलु वै वीर्यं क्रियते । मै ३, ९, ६ ।

१०. वीर्यं राजपुत्रः (षोडशी [माश.]) । काठ १४, ८; माश १२, २, २, ७ ।

११. वीर्यं ९ षोडशिनस्स्तोत्रेण (स्पृणोति) । काठ १४, ९ ।

१२. वीर्य्यं ९ (+वै [काठ १३, १]) संवत्सरः । काठ १०,४; १३,१ ॥ [°र्य- अग्नि- ६९९; अन्नाद्य- २०; २५; आयुस्- १६; इन्द्र- ३६७; इन्द्राग्नि- ३४; ३८; इन्द्रिय- ५;६; उष्णिह्- ८; ऋषभ- १६; ओजस्- १३; १६; २१; ओषधि- ८; ककुभ्- ११; कृषि- १; गायत्री- ११८; छन्दस्- १०५; त्रिष्टुभ्- ५४; द्वन्द्व- ३; निधन- १३; पञ्चदश- ३०; पुंस्- १०; पुरुष- ९६; पूषन्- २५; पृष्ठ- २२; प्रयाज- ८; प्राण- ११३; २८७; बृहस्पति- ४०; भर्गस्- १; मन्यु- ५; मरुत्- ५०; मित्रावरुण- ११; विश्- १२; विश्वेदेव- १७; विष्णु- ५० द्र.] ।

वीर्य-काम- पञ्चदशेन वीर्यकामः (यजेत) । जै २,१३६ ॥ [°म- इन्द्रियकाम-; गोष्टोम- द्र.] ।

वीर्य-वत्- द्वितीयवत्- द्र. ।

वीर्यवत्तर- तिष्ठन्वै वीर्यवत्तरः । माश ६, ६, २, १ ॥ [°र- ऊर्ध्व,र्ध्वा- १६; दक्षिण,णा- ३४ द्र.] ।

वीर्या-वत्- हेमन्तस्याहं देवयज्यया सहस्वान् वीर्यावान् भूयासम् । काठ ५,१४ ॥ [°वत्- इन्द्राग्नि- २७; वनस्पति- १० द्र.] ।

वीर्यावत्तम- ग्रीवा- ३ द्र. । वीर्यावत्तर- ऊर्ध्व,र्ध्वा- १६; दक्षिण,णा- ३४ द्र. ।

**वीरुध्**- वसन्ताशिशिरेऽग्निर्वीरुधः सहते। मै १,६,३ ॥ [°रुध्- ओषधि- ८ द्र.]।

**वृक**-

१. अथ यत्कर्णाभ्यामद्रवत्ततो वृकः समभवत्। माश ५,५,४,१०।

२. मूत्रादेवास्यौजो ऽस्रवत्। स वृको ऽभवदारण्यानां पशूनां जूतिः। माश १२, ७,१,८।

३. यत् कर्णाभ्यां ( सोमोऽमुच्यत ) तौ वृकौ ( अभवताम् )। काठ १२,१०।

४. यत् (इन्द्रस्य) कर्णाभ्यां (सोमो राजा इयाय) तौ वृकौ वैलूषौ ( अभवताम् )। जै २, १५७। [°क- प्रजापति- ४८; यजमान- ३१ द्र.]।

**वृक-लोमन्**- अथ यान्युपस्थे लोमानि यानि चाधस्तात्तानि वृकलोमानि। माश १२,९,१,६।

**वृक्ष**- श्रीर्वै वृक्षस्याग्रम्। तै ३,९,७,४ ॥ [°क्ष- ब्रह्महत्या- १ द्र.]।

**वृत्र**-

१. अथैतदेव वृत्रहत्यं यदामावास्यं ( हविः ) वृत्रं ह्यस्मा एतज्जघ्नुष आप्यायनमकुर्वन्। माश १,६,४,१२।

२. अपो वै वृत्रः पर्यशयत्, ततो या (आपः) अत्यमुच्यन्त ता जीवा यज्ञियाः। मै ४,५,१।

३. इन्द्रो वृत्राय वज्रमुदयच्छत सोऽब्रवीद्वीर्यं वा इदं मय्यस्ति तत् ते प्रदास्यामि मा मे प्रहारिति तदस्मै प्रायच्छत्··· (इन्द्रः) तस्मै द्वितीयं तस्मै तृतीयमुदयच्छत···, यज्ञं वावास्मै (इन्द्राय) तत् प्रायच्छत्। काठ १२,३।

४. इन्द्रो वै यद् वृत्रमहꣳस्तस्य यत्रयत्र न्यृद्धमासीत्ततो धूम उदायत, न्यृद्धाद्वा एष जातः। काठ २६,८।

५. इन्द्रो वै वृत्रमहꣳस्तस्य कनीनिका परापतत्, सा त्रिककुभमगच्छत्, तदाञ्जनं त्रैककुभमाङ्क्ते। मै ३,६,३।

६. इन्द्रो ह वा एष पुरा वृत्रस्य वधादास। स वृत्रं हत्वा महेन्द्रोऽभवत्। जै २,२३४।

७. एतैर्वै ( साकमेधैः ) देवाः वृत्रमघ्नन्नेतैर्वेव व्यजयन्त येयमेषां विजितिस्ताम्। माश २,५,३,१।

८. तथैवैतद्यजमानः पौर्णमासेनैव वृत्रं पाप्मानꣳहत्वापहतपाप्मैतत्कर्मारभते। माश ६,२, २,१९।

९. तद्यदेते त्रिदिवाः साकमेधा भवन्ति वृत्राद्वैतैः पाप्मनः प्रजा मुञ्चति। जै २,२३२।

१०. तं ( वृत्रम् ) द्वेधान्वभिनत् ( इन्द्रः ) तस्य यत्सौम्यं न्यक्तमास तं चन्द्रमसं चकाराथ यदस्यासुर्यमास तेनेमाः प्रजा उदरेणाविध्यत्। माश १, ६,३,१७।

११. मरुतो ह वै क्रीडिनो वृत्रंꣳहनिष्यन्तमिन्द्रमागतं तमभितः परिचिक्रीडुर्महयन्तः। माश २,५,३,२०।

१२. महान् घोष आसीत् ( वृत्रस्य वधसमये )। तां १३, ४,१।

१३. यदिमाँल्लोकानवृणोत् (स) तद् वृत्रस्य वृत्रत्वम्। तैसं २,५,२,१।

१४. यदिमाः प्रजा अशनमिछन्ते ऽस्माऽएवैतद् वृत्रायोदराय बलिꣳहरन्ति। माश १,६,३,१७।

१५. वृत्रं खलु वा एष हन्ति यः संग्रामं जयति। मै २,२,१०।

१६. वृत्रतुरः इति वृत्रꣳह्येता (आपः) अघ्नन्। माश ३,९,४,१६।

१७. वृत्रसेप जिघा ॅसति यस्संग्रामं जिगीषति । काठ १०,९।

१८. वृत्रस्यासि ( मित्रस्यासि [काठ.] ) कनीनिका । काठ २,१; क १,१३।

१९. वृत्रो वै सोम आसीत् । माश ३,४,३,१३; ९,४,२; ४,२,५,१५।

२०. वृत्रो ह वाऽ इद ॅसर्वं वृत्वा शिश्ये । यदिदमन्तरेण द्यावापृथिवी स यदिद ॅसर्वं वृत्वा शिश्ये तस्माद् वृत्रो नाम । माश १,१,३,४।

२१. शैशवेन वा इन्द्रो वृत्रं पर्याकारं शक्वरीभिरहन् । जै ३,१०२।

२२. स इषुमात्रमिषुमात्रं विष्वङ्ङवर्धत, स इमाँल्लोकानवृणोद्यदिमाँल्लोकानवृणोत्तद् वृत्रस्य वृत्रत्वम् । तैसं २,४,१२,२।

२३. स यद्वर्त्तमानः समभवत् । तस्माद् वृत्रः । माश १,६,३,९।

२४. स यो हैवमेतं वृत्रमन्नादं वेदान्नादो हैव भवति । माश १,६,३,१७।

२५. सोमो वृत्रः । काठ २४,९; २९,१; क ३८,२; ४५,२ (तु. मै ३,७, ८; काठ १२, ३; २७, ३; क ४२,३) ॥ [°त्र- अग्नि- ७०; १७३; ३०२; अग्नीषोम- ९; ११; अतिरात्र- १; अप्- १२६; १३३; १४६; १५९; अराति- ८; अहि- २; आज्य- ९; आञ्जन- ३; इन्द्र- ३२५; उदर- ५; ऊष्मन्- ६; कण्व- ३; गिरि- ४; ग्रीष्म- १०; चन्द्रमस्- ८; धूम- १; नानद- ३; पाप्मन्- १०; पूर्णमास- १; फाल्गुन- २; भ्रातृव्य- १; ८; मरुत्- २; १६; ३९;४५; महाहविस्- २ द्र.]।

वृत्र-तुर्-

१. वृत्रतूरिति ह्येतमाहुर्यः स्वाराज्यं गच्छति । मै २,५,८।

२. श्वात्राः स्थ वृत्रतुरः । तैसं १,४,१,१ ॥ [°तुर्- वृत्र- १६ द्र.]।

वृत्र-शङ्कु- दक्षिणतस् ३० द्र.।

वृत्र-हन्-

१. अग्नीषोमयोरहं देवयज्यया वृत्रहा भूयासम् । तैसं १,६,२,४।

२. अयं नो राजा वृत्रहा राजा भूत्वा वृत्रं वध्यात् । तैसं १,८,९,२।

३. उदीच्यां वृत्रहन् ( इन्द्र ) वृत्रहाऽसि । तैसं २,४,१४,१।

४. त्व ॅसोमासि सत्पतिस्त्वं राजोत वृत्रहा त्वं भद्रो असि क्रतुः । तैसं ४, ३, १३, १; काठ २,१४ ॥ [°हन्- अग्नि- १३८; अग्नीषोम- १७; इन्द्र- १९५; इन्द्राग्नि- १६; ४९; पाप्मन्- १७;मन्यु- ४ द्र.]।

वार्त्रघ्न-

१. वार्त्रघ्नं वा एतद्यदामावास्य ॅस यदेता ॅरात्रिं न पुरस्तान्न पश्चाद् ददृश एष वाव वृत्रो यच्चन्द्रमाः, सर्वमेवैनमेतद्घ्नन्ति नास्य किंचन परिशिनष्टि, सर्व ॅह वै पाप्मान ॅहन्ति, न ह पाप्मनः किंचन परिशिनष्टि य एवमेतद्वेद । काश २,६,२,१०।

२. वार्त्रघ्नं वै पौर्णमासम् (हविः) ॥ माश १,६,४,१२। [°घ्न- धनुस्- २ द्र.]।

वार्त्रघ्नी-

१. कर्णगृहीता ( गौः ) वार्त्रघ्नी स्यात् । तैसं ६,१,७,६ ।

२. यद् द्विरूपया ( क्रीणीयात् सोमम् ), वार्त्रघ्नी स्यात्, स वा ऽन्यं जिनीयात् तं वाऽन्यो जिनीयात् । तैसं ६,१,६,७ ।

३. या द्विरूपा ( गौः ) न तया क्रीणीयात् । वार्त्रघ्नी (ऐन्द्री) सा । काठ २४,१; क ३७,२ ।

४. या द्विरूपा (गौः) सा वार्त्रघ्नी । मै ३,७,४ ।

५. या रोहिणी ( गौः ) सा वार्त्रघ्नी यामिद ऽराजा संग्रामं जित्वोदाकुरुते । माश ३,३,१,१४ । [°घ्नी- पूर्णमास- ५ द्र.] ।

वृष- तयोर् (ब्राह्मणयोः) याः प्रोक्षणीराप आस ऽस्ताभिरनुविसृज्य शीर्षे अच्छिनत् । तौ वृषश्च यवाषश्चाभवताम् । तस्मात्तौ वर्षेषु शुष्यतः । अद्भिर्हि हतौ । काठ ३०,१; क ४६,४ ।

वृष-गण- छन्दांसि वृषगणाः । जै ३,१७४ ।

वृषणश्व- वृषणश्वस्य ह मेना भूत्वा मघवा कुल उवास । जै २,७९ ।

वृष-दंश- ऊलो हलीक्ष्णो वृषद ऽशस्ते धातुः । तैसं ५,५ १२, १ ।

वृषन्-

१. इन्द्रो वृषा, प्रजापतिर्वृषा, संवत्सरो ऽस्य वृषेत्याहुर्यमिमाः प्रजा अनुप्रजायन्ते । काठ ३४,१ ।

२. एष वै वृषा हरिर्य एष ( सूर्यः ) तपति । माश १४, ३, १, २६ ।

३. वृषणौ स्थ इति, न ह्यमुष्काः प्रजाः प्रजायन्ते । काठ २६, ७ ।

४. वृषा वै सोमः । जै ३, २४ ।

५. वृषासि ( हेऽश्व त्वम् ) । तां १, ७,१ ।

६. वृषा हिङ्कारः । गो १, ३, २३ ।

७. वृषा हि स्रुवः । माश १, ४, ४, ३ ।

८. वृषो ऽग्निः समिध्यते । माश १, ४, १, २९ ।

९. वृष्णा ऽश्वान् ( अन्वाभवत् ) । काठ ४३, ४ ।

१०. व्यन्त्विवति वै योषा, वेत्विति वृषा । माश १, ५, ३, १५ ।

११. समग्निरिध्यते वृषा । माश १, ४, १, २९ ।

१२. सोममाहुर्वृष्णो अश्वस्य रेतः । तैसं ७, ४, १८, २; काठ ४४, ७ ॥ [°षन्- अग्नि- ५०२; ६७१; ७००; अश्व- ९५; आण्ड- १; ३; आदित्य- ७३; इन्द्र- १७४; १९५; गर्दभ- १५; पर्जन्य- २०; मनस्- ८२; योषा- १; ८; १६; राजन्य- २५; रेतस्- ४२ द्र.] ।

वृषण्वत्- इन्द्र- ३७२ द्र. ।

वृषभ-

१. दक्षिणतो वृषभ एधि हव्यः ( इन्द्र ) । तैसं २, ४, १४, २ ।

२. वृषभेण गावः । काठ ३५, १५ ॥ [°भ- आदित्य- ३५४; गवयी- द्र.] ।

वृषाकपि-

१. तद्यत्कम्पयमानो रेतो वर्षति तस्माद् वृषाकपिः, तद् वृषाकपेर्वृषाकपित्वम् । गो २, ६,१२ ।

२. वैश्वदेवो वै वृषाकपिः । जै ३, १७१ ॥ [°पि- आत्मन्- ३५; ७४; आदित्य- १६३ द्र.]।

वृष्टि-

१. अग्नयो वा एष ओषधिभ्यो वर्षति यर्हि वर्षत्योषधयो रशनौषधीरेव नेदीयो वृष्ट्याः करोति, ताजक् प्रवर्षति । काठ २६,६; क ४१,४ ।

२. अर्वाचीनाग्रा हि वृष्टिः । तै ३, ३, १, ३ ।

३. आनुष्टुभी वै वृष्टिः । तां १२, ८, ८ ।

४. इतःप्रदाना वै वृष्टिरितो ह्यग्निर्वृष्टिं वनुते स एतैः ( घृत- ) स्तोकैरेतान्त्स्तोकान् वनुते तऽ एते स्तोका वर्षन्ति । माश ३, ८, २, २२ ।

५. उदीरयथा मरुतः समुद्रतो यूयं वृष्टिं वर्षयथा पुरीषिणः । तैसं २, ४, ८,२ ।

६. ऊर्ध्वमुन्मृज्याद्यदि कामयेत न वर्षेदिति । अमुत्रैव वृष्टिं परिगृह्णाति । अवाचीनमवमृज्याद्यदि कामयेत वर्षेदिति । क ४२, १ ।

७. ऋतुमृतुं वर्षति । काठ १९, ५; २८, २; क ३०, ३; ३१, १२ ।

८. एतद्वा अस्य ( वृषभस्य ) ककुह ऽ रूपं यद् वृष्टिः । तैसं ३, ३, ४,२ ।

९. एतौ (मित्रावरुणौ) वर्षस्येशाते ··· अग्निर्वा इतो वृष्टिमुदीरयति । धामच्छदिव भूत्वा वर्षति, मरुतः सृष्टां वृष्टिं नयन्ति । यदासा आदित्यो ऽर्वाङ् रश्मिभिः पर्यावर्ततेऽथ वर्षत्येता वै देवताः ( अग्निः, मरुतः, आदित्यः) वर्षस्येशते । काठ ११,१० (तु. तैसं २,४,१०,२)।

१०. कृष्णं वासः कृष्णतूषं परिधत्त एतद्वै वृष्ट्यै रूप ऽ सरूप एव भूत्वा पर्जन्यं वर्षयति । तैसं २, ४, ९, १ ।

११. कृष्ण इव खलु वै भूत्वा वर्षति । तैसं २, ४, ९, ४ ।

१२. तम् ( पाप्मानं प्रजापतिः ) अवृश्चत् । यदवृश्चत तस्माद्वृष्टिः । तै ३, १०, ९,१ ।

१३. तस्य वै प्रजापतेः सव्यं चक्षुरश्वयत्, ततो ये स्तोका अवापद्यन्त, तैरिद ऽ वर्षति । मै ४, ६, ३ ।

१४. तस्यैतद् (आरुणकेतुकचितः) व्रतम् । वर्षति न धावेत् । तैआ १, २६,६ ।

१५. तृप्तिरिति वृष्टौ । तैआ ९, १०, २; तैउ ३, १०, २ ।

१६. देवानां रेतो वर्षं वर्षस्य रेत ओषधयः । ऐआ २, १, ३ ।

१७. देवा वै सत्रमासत तेषां दिशो ऽदस्यन्त एतामार्द्रां पङ्क्तिमपश्यन्ना श्रावयेति पुरोवातमजनयन्नस्तु श्रौषडित्यभ्र ऽ समप्लावयन् यजेति विद्युतमजनयन् , ये यजामह इति प्रावर्षयन्नभ्यस्तनयन् वषट्कारेण, ततो वै तेभ्यो ( देवेभ्यः ) दिशः प्राप्यायन्त । तैसं १, ६, ११,३-४ ।

१८. पशुभ्य एव वर्षति यर्हि वर्षति । काठ २८, ६; क ४४, ६ (तु. मै ४, ६, ९) ।

१९. पुरोवात ऽ वै वात ऽ वर्षम् ( वृष्टिः ) अनुप्रतितिष्ठति, वर्षमन्वोषधयः । मै ३, १, ५ ।

२०. पुरोवातो वर्षन् जिन्वरावृत् स्वाहा, वातावद्···, उग्ररावृत्, स्तनयन्··· भीमरावृत्···, अनशान्यवस्फूर्जन् दिद्युत्··· त्वेषरावृत्···, अतिरात्रं पूर्तिरावृत्···, बहुहायमवृषादिति श्रुतरावृत्···, आतपति ··· विराडावृत् ···, अवस्फूर्जन् दिद्युत् ··· भूतरावृत् ··· । तैसं २, ४,७,१-२ ।

२१. पूर्णान् ग्रहान् गृह्णीयाद्यर्हि पर्जन्यो न वर्षेत्। काठ ३०, ३।

२२. मधुना संयौत्यपां वा एष ओषधीनां ऽरसो यन्मध्वद्भ्यः एवौषधीभ्यो वर्षत्यथो अद्भ्यः एवौषधीभ्यो वृष्टिं निनयति। तैसं २, ४, ९, ३।

२३. यत्र वै बहुवर्षी पर्जन्यो भवति कल्याणो वै तत्र बलीवर्दो ऽश्वतरो हस्ती निष्कः पुरुषः। रूपंरूपं चाव तत्र कल्याणमाजायते। जै १, २७४।

२४. यदा खलु वा असावादित्यो न्यङ् रश्मिभिः पर्यावर्तते ऽथ वर्षति। तैसं २, ४, १०, २।

२५. यदा स्तनयत्यथ वर्षति। तदिदमापो महत् सलिलमासीत्। जै ३, ३८०।

२६. यद्युख्ये ध्रियमाणे कामयेत वर्षेदिति, यास्सौरी रश्मिवतीस्ताभिस्तिसृभिस्तिस्रस्समिध आदध्यात्…यद्रश्मिवतीभिरादधाति, वृष्टिमेव निनयति, ताजक्प्रवर्षति। काठ २२, १२।

२७. यन्मेहति ( अश्वो मेध्यः ) तद्वर्षति। तैसं ७, ५, २५, २।

२८. या वा इत आहुतिरुद्यते, सा ऽमुतो (दिवः) वृष्टिं च्यावयति। काठ २५, ५; क ३९, २।

२९. या ह्यमुतो ( द्युलोकतः ) वृष्टिः प्रदीयते तामयं लोक उपजीवति। जै १, २९१।

३०. रस इव वै खलु वृष्टिः। तैसं २, १, ७, ३।

३१. वर्षतु ते द्यौः। तैसं १, १, ९, २; काठ १, ९; क १, ९।

३२. विष्टम्भ इति वृष्टिम् ( असृजत् )। तैसं ५, ३, ६, १।

३३. वृष्टिर्वै विराट् तस्या एते घोरे तन्वौ विद्युच्च ह्रादुनिश्च। माश १२, ८, ३, ११।

३४. वृष्टिर्वै वृष्ट्वा चन्द्रमसमनुप्रविशति। ऐ ८, २८।

३५. वृष्टिः सम्मार्जनानि। तै ३, ३, १, २।

३६. श्यात्र इव ह्येष वर्षिष्यन् भवति। काठ ११, १०।

३७. सर्वानृतून् वर्षति। तैसं ५, १, ५, २; ३, १, ३।

३८. सा ( अग्नेः क्रूरातनूर्वैश्वानरी ) ऽस्मै ( यजमानाय ) प्रीता वृष्टिं निनयति। काठ १०, ३।

३९. सूर्यस्य रश्मयो वृष्ट्या ईशते। तैसं ३, ३, ४, १।

४०. सूर्येण वा अमुष्मिँल्लोके वृष्टिर्धृता स एवास्मै (यजमानाय) वृष्टिं नियच्छति। तै १, ७, १, १।

४१. सृजा वृष्टिं दिव आऽद्भिः समुद्रं पृण। अब्जा असि प्रथमजा बलमसि समुद्रियम्। तैसं २, ४, ८, २।

४२. सौम्या (सौम्यया [तै.] ) आहुत्या दिवो वृष्टिं च्यावयितुमर्हति। काठ ११, १०; तै १, ६, ४, ५.

४३. सौम्यैवाहुत्या दिवो वृष्टिं निनयति। काठ ११, १०; २७, १।

४४. स्वधा वृष्टिः। जै ३, ३७३ ॥ [°ष्टि- अग्नि- १५९; १६०; अन्न-१८; अप्- ११२; आदित्य- ३९; ३०८; इडा- २५; करीर- ३; ७; कारीरी-; कृष्ण- ८; दिव्- ७५; १०५; १२२; १३६; १४२; १६२; दिव्य, व्या- ५; द्यावापृथिवी- १९; पर्जन्य- १; पुरोवात- २; प्रजापति- १६२; मरुत्- ५; २६; ३८; मित्र- १५; मित्रावरुण- १९; याज्या- ५; रश्मि- १७; रस- ६; वर्षाहू-; वायु- २९; ७१; ८१; विश्वधायस्-; विष्टम्भ- द्र.]।

वृष्टि-काम-

१. मैत्रावरुणीं द्विरूपामालभेत वृष्टिकामः। तैसं २, १, ७, ३।

२. वृष्टिकामश्चिन्वीत ।...पर्जन्यो वर्षुको भवति । तैब्रा १, २६, ५ ॥ [°म- कृष्ण- १६ द्र.]।

वृष्टि-मत्- सर्व ऋतवो वृष्टिमन्तः । मै ३, १, ५ ॥ [°मत्- दिव्- १०४; पर्जन्य- १४; १६ द्र.]।

वृष्टि-वनि- सूर्यस्य ह वा ऽ एको रश्मिर्वृष्टिवनिर्नाम येनेमाः सर्वाः प्रजा बिभर्ति । माश १४,२,१,२१ ।

वृष्टि-सनि- पुरोवातसनिरस्यभ्रसनिरसि विद्युत्सनिरसि स्तनयित्नुसनिरसि वृष्टिसनिरसि। तैसं ४,४, ६, २; काठ २२, ५ ।

वृष्णि- वृष्णिनावीः ( अन्वाभवत् ) । काठ ४३, ४ (तु. काठ ३५, १५) ॥ [°ष्णि- ऐन्द्र- ६; १७; ४४; उत्तरात् १८; रेतस्- ३६; विशाल- ३ द्र.] ।

वेट्कार- वषट्कार- ११ द्र. ।

वेणु ( वृक्ष- )-

१. या ९ वनस्पतिष्ववसत्ता ९ वेणा अवसत् ( अग्निः ) । मै ३, १, २ ।

२. वेणुर्वै वनस्पतीनां फलग्रहितमः, स एषां वीर्यवत्तमः । मै ३, १, २; २, ४ ।

३. स ( अग्निः ) वेणुं प्राविशत् । क २९,८ ॥ [°णु- अग्नि- १३१; १३६; ७५६; आग्नेय- २५; तेजस्- १८ द्र.] ।

वैणव(सामन्- )- स ( वेणुर्वै वैश्वामित्रः) एतत् सामापश्यत् । तेनास्तुत । ततो वै सो ऽग्रयो मुख्यो ब्रह्मवर्चस्यभवत् । ··· यद्वेणुर्वैश्वामित्रोऽपश्यत् तस्माद्वैणवमित्याख्यायते । जै १,२२० ।

वैणवी- वैणवी भवति, वीर्यस्यावरुद्ध्यै । तैसं ५, १, १, ५ ।

वेतस-

१. तस्माद्वेतसो वनस्पतीनामनुपजीवनीयतमो यातयामा हि सः । माश ९, १, २, २४ ।

२. ताः ( आपः ) प्रजापतिमब्रुवन् । यद्वै नः कमभूदवाक्तदगादिति सो ऽब्रवीदेष व एतस्य वनस्पतिर्वेत्त्विति वेत्तु संवेत्तु सो ऽह वै तं वेतस इत्याचक्षते परो ऽक्षम् । माश ९,१,२,२२। [°स- अप्- २४; ४५; अप्सुज- २ द्र.] ।

१वेद-

१. अथ ह दन्तालो धौम्यस्त्रयं वेदमाप्रपदं विदाञ्चकार । जै २, ५५ ।

२. अथो सर्वेषां वा एष वेदानां रसो यत् साम । गो २, ५, ७; माश १२, ८, ३, २३ ।

३. अनन्ता वै वेदाः ( इन्द्रो भरद्वाजमुवाच ) । तै ३, १०, ११, ३ ।

४. ऋग्भ्यः स्वाहा, यजुर्भ्यः स्वाहा, सामभ्यः स्वाहाऽङ्गिरोभ्यः स्वाहा, वेदेभ्यः स्वाहा, गाथाभ्यः स्वाहा, नाराश ९ सीभ्यः स्वाहा, रैभीभ्यः स्वाहा । तैसं ७, ५, ११, २ ।

५. ऋग्वेदो वै भर्गः । यजुर्वेदो महः । सामवेदो यशो ये ऽन्ये वेदास्तत्सर्वम् । माश १२, ३, ४, ९ ।

६. एतानि ह वै वेदानामन्तःश्लेषणानि यदेता ( भूर्भुवः स्वरिति ) व्याहृतयः । ऐ ५, ३२ ।

७. एतावान्वै सर्वो यज्ञो यावानेष त्रयो वेदः । माश ५, ५, ५, १० ।

८. एतेषां वेदानामेकं द्वौ त्रीन्त्सर्वान्वा ( अधीते ब्रह्मचारी ) । काठसंक ४७: ६ ।

९. एवमिमे सर्वे वेदा निर्मिताः सकल्पाः सरहस्याः सब्राह्मणाः सोपनिषत्काः सेतिहासाः सान्वाख्यानाः सपुराणाः सस्वराः ससंस्काराः सनिरुक्ताः सानुशासनाः सानुमार्जनाः सवाकोवाक्याः । गो १, २, १० ।

१०. चत्वारि शृङ्गा इति, वेदा वा एतदुक्ताः । काठसंक २५: १ ।

११. चत्वारो वा इमे वेदा ऋग्वेदो यजुर्वेदः सामवेदो ब्रह्मवेद इति । गो १, २, १६ ।

१२. चत्वारोऽस्यै ( स्वाहायै ) वेदाः शरीरं षडङ्गान्यङ्गानि । ष ४, ७ ।

१३. चत्वारो हीमे वेदाः । काठसंक ४ : ४ ।

१४. तदाहुः किं तत्सहस्रम् । इतीमे लोका इमे वेदा अथो वागिति ब्रूयात् । ऐ ६,१५ ।

१५. तस्मादप्येतर्ह्येवमेवैतैर्वेदैर्यज्ञं तन्वते । यजुर्भिरेवाग्रेऽथर्ग्भिरथ सामभिः । माश ५, ५, ५, ५ ।

१६. ते सर्वे त्रयो वेदाः । दश च सहस्राण्यष्टौ च शतान्यशीतीनाम् ( १०८००×८० = ८६४००० अक्षराणि ) अभवन् । माश १०, ४, २, २५ ।

१७. परिमिता वा ऋचः, परिमितानि सामानि, परिमितानि यजूंष्यथैतस्यैवान्तो नास्ति यद् ब्रह्म । तैसं ७,३,१, ४ ।

१८. भूर्भुवः स्वरित्येता वाव व्याहृतय इमे त्रयो वेदाः । ऐआ १, ३, २ ।

१९. वेदा एव सविता । गो १, १, ३३ ।

२०. वेदाश्छन्दांसि सवितुर्वरेण्यम् । गो १, १, ३२ ।

२१. स इमानि त्रीणि ज्योतींष्यभितताप । तेभ्यस्तप्तेभ्यस्त्रयो वेदाः अजायन्ताग्नेर्ऋग्वेदो वायोर्यजुर्वेदः सूर्यात्सामवेदः । माश ११, ५,८, ३ ।

२२. स ( प्रजापतिः ) ऐक्षत यमिमं त्रयं वेदमसृक्षि, हन्तास्मात्सृजा इति । जै ३, ३८० ।

२३. स ( प्रजापतिः ) देवानब्रवीदेतेन यूयं त्रयेण वेदेन यज्ञं तनुध्वमिति । ते देवा अनेन त्रयेण वेदेन यजमाना अप पाप्मानमघ्नत प्र स्वर्गं लोकमजानन् । जै १,३५८ ।

२४. स यां जायमानो वाचमवदत् , स एव त्रयो वेदोऽभवत् । जै ३, ३८० ।

२५. सा वा एषा ( गायत्री ) सावित्री ( ऋक् ) एषां (त्रयाणाम्) लोकानां प्रतिपदेषां च वेदानाम् । काठसंक ५१: ३ ।

२६. सोऽपहतपाप्मानन्तां श्रियमश्नुते य एवं वेद यश्चैवं विद्वानेवमेतां वेदानां मातरं सावित्रीं सम्पदमुपनिषदमुपास्ते । गो १, १, ३८ ॥ [°द- इन्द्र- ३४६; ऋच्- ३२; ऋत्विज्- ११; कृष्णाजिन- ४; गन्धर्व- १०; छन्दस्- २४; ब्रह्मन्- १२४; १४४; १४५; १५२; यजुस्- २१; यज्ञ- २७; वाच्- ११२ द्र.] ।

वेद-पुरुष- ब्रह्मन्- १४ द्र. ।

वेदाध्यायी- यमेवं विद्वानुपनयते सोऽवश्यं वेदाध्यायी भवति । काठसं १४२:३ ।

वेदान्त- वेदान्तविज्ञानसुनिश्चितार्थाः, संन्यासयोगाद्यतयः शुद्धसत्त्वाः । ते ब्रह्मलोके तु परान्तकाले परामृतात् परिमुच्यन्ति सर्वे । तैआ १०, १०, १ ।

वेदोपनिषद्- एष आदेशः। एष उपदेशः। एषा वेदोपनिषत्। एतदनुशासनम्। एवमुपासितव्यम्। एवमु चैतदुपास्यम्। तैआ ७, ११, ४; तैउ १, ११, ४।

२वेद ( दर्भ-मुष्टि- )-

१. ओषधयो वै वेदः। काठ ३२,६।
२. केशा वेदः। मै १, ४, ८; ४,१,९; काठ ३२,६।
३. पशवो वै वेद ओषधयो ह्येषः। मै १, ४, ८।
४. मौञ्जो वेदो भवति। तैआ ५, ४, ४।
५. यज्ञो वै देवेभ्यस्तिरोऽभवत् तं देवा वेदेन अविन्दँस्तद्वेदस्य वेदत्वम्। मै १, ४, ८।
६. यज्ञो वै देवेभ्यो ऽपाक्रामत् तं वेदेनान्वविन्द ँ स्तद्वेदस्य वेदत्वम्। काठ ३२, ६।
७. यद्वेदो (? वेदम्) वेद्या ँ स्तृणाति मिथुनमेवावरुन्द्धे। क ४७, ११।
८. योषा वै वेदिर्वृषा वेदः। माश १, ९, २, २१; २४।
९. वृषा वै वेदो योषा पत्नी। कौ ३, ९।
१०. वेदिर् (+वै [काठ.]) देवेभ्यो ऽपाक्रामत् तां वेदेनान्वविन्दँस्तद्वेदस्य वेदत्वम्। मै ४,१,१३; काठ ३१, १२।
११. वेदेन वेदिं विविदुः पृथिव्याम्। काठ ३१, १४।
१२. वेदेन वै देवा असुराणां वित्तं वेद्यमविन्दन्त तद्वेदस्य वेदत्वम्। तैसं १, ७, ४, ६।
१३. स्त्री वै वेदिः। पुमान् वेदो यद्वेदेन वेदिं संमार्ष्टि, मिथुनमेव करोति। काठ ३१, १२।
[°द- केश- ५; पुंस्- १२; प्रजापति- ११८; प्राजापत्य- १८ द्र.]।

वेदि-

१. अथो (वेदिः) उदक्प्रवणा। माश १, २, ५, १७।
२. इयमेव पृथिवी वेदिः। माश १२, ८, २, ३६।
३. उर्व्वरा वेदिर्भवत्येतत् (स्थानम्) वा अस्याः (पृथिव्याः) वीर्य्यवत्तमम्। तां १६, १३,६।
४. एतद्यजमानस्यायतनं यद् वेदिः। तैसं १, ७, ५, २-३।
५. एष वै यजमानस्य स्वो लोको यद्वेदिः। काठ २८,६; क ४४, ६।
६. चतुरङ्गुलं खेया (वेदिः)। तै ३, २, ९, ११।
७. तं (यज्ञम्) वेद्यामन्वविन्दन् यद्वेद्यामन्वविन्दंस्तद्वेदेर्वेदित्वम्। ऐ ३,९।
८. तद्वै देवा इमाम् (पृथिवीम्) अविन्दन्त, तद् वेद्या वेदित्वम्। मै ३, ८,३।
९. तस्मात्त्र्यङ्गुला वेदिः स्यात्। माश १, २, ५, ९।
१०. तस्याः (पृथिव्याः) एतत्परिमितं रूपं यदन्तर्वेद्यथैष भूमा ऽपरिमितो यो बहिर्वेदि। ऐ ८, ५।
११. देवक्षेत्रं (देवेषुः [मै.]) वै वेदिः। मै ३, ८, ६ काठ २८, १।
१२. प्राचीमुदीची ँ वेदिं प्रवणां कुर्यान्मेध्यानेनान् यज्ञियान् करोति। मै ४, १, १०।
१३. यज्ञस्य (सोमः) प्रमाभिमोन्मा प्रतिमा वेद्यां क्रियमाणायाम्। काठ ३४, १४।
१४. यद्वा असुराणां वित्तमासीत् तद्देवा वेद्या ऽविन्दन्त तद्वेद्या वेदित्वम्। काठ २५, ६।

१५. यद्वेदो (? °दम्) वेद्या ऽ स्तृणाति, मिथुनमेवावरुन्द्धे । क ४७, ११ ।
१६. यन्वेवात्र विष्णुमन्वविन्दंस्तस्माद्वेदिर्नाम । माश १, २, ५, १० ।
१७. या दक्षिणा वेदिर्या आद्याः प्रजास्तासा ऽ सा योनिः । काठ ३६, ७ ।
१८. येयमुत्तरा वेदिर्या अत्रीः प्रजास्तासामेषा योनिस्ता एतामनुप्रजायन्ते, येयं दक्षिणा वेदिर्या आद्याः प्रजास्तासामेषा योनिस्ता एनामनुप्रजायन्ते । मै १, १०, १३ ।
१९. वेदिमाहुः परमन्तं पृथिव्याः । तैसं ७, ४, १८, २ ।
२०. वेदिर्देवेभ्योऽपाक्रामत्, तां देवा वेदेनाविन्दन् । मै ४, १, १३ (तु. तै ३, ३, ९, १० ) ।
२१. वेदिर्वै देवलोकः (सलिकम् [माश ३, ६, २, ५]) । माश ८, ६, ३, ६ ।
२२. व्याममात्री ( वेदिः ) पश्चात्स्यादित्याहुः । एतावान्वै पुरुषः पुरुषसम्मिता हि त्र्यरत्निः प्राची । माश १, २, ५, १४ ।
२३. स विश्वाचीरभिचष्टे घृताचीरिति स्रुचश्चैतद्वेदीश्चाह । माश ९, २, ३, १७ ।
२४. सा वै (वेदिः) पश्चाद्वरीयसी स्यात् । मध्ये स ऽ ह्वारिता पुनः पुरस्तादुर्वी । माश १, २, ५, १६ ।
२५. सा वै ( वेदिः ) प्राक्प्रवणा स्यात् । माश १,२,५,१७ ॥ [°दि- अग्नि- ६७१; अदिति- १४; असुर- २५; आत्मन्- ४८; उत्कर- १; धा-; पुंस्- १२; पृथिवी- ३६; ६४;८७;८९;१३७; १७९; १९४; २०९; प्रतिष्ठा- ६; यज्ञ- ५१; योषा- १४; वाच्- ८८; विश्वाची- २; २वेद- १३ द्र. ] ।

वेधस्- इन्द्र- १९६ द्र. ।

वेन- अयं वै वेनो ऽस्माद्वा ऊर्ध्वा अन्ये प्राणा वेनन्त्यवाञ्चो ऽन्ये तस्माद्वेनः । ऐ १, २० ।
[°न- आत्मन्- ३५; आदित्य- ३६; इन्द्र- ४३ द्र. ] ।

वेश->वेशभगिनी- सरस्वत्यै वेशभगिन्यै स्वाहा । काठ ५, ४ ।
वेशभगीना- या सरस्वती वेशभगीना तस्यास्ते भक्तिवानो भूयास । मै १, ४,३ ।

वेष- वेषाय वामिति वेवेष्टीव हि यज्ञम् । माश १, १, २,१ ।

वेहत्- इन्द्र- ११७; ऋषभ- ३; ओषधि- ३८ द्र. ।
वैकुण्ठ- इन्द्र- ३६३ द्र. ।
वैखानस- विखानस्- द्र. ।
वैदन्वत- विदन्वत्- द्र. ।
वैद्युत- विद्युत्- द्र. ।

वैयश्व ( सामन्- )-
१. तदेतद् भ्रातृव्यहा गातुविन्नाथवित् साम··· यद् व्यश्वो ऽ पश्यत्तस्माद्वैयश्वमित्याख्यायते । जै ३, २२१ ।
२. व्यश्वो वा एतेनाङ्गिरसो ऽ असा स्वर्गं लोकमपश्यत् स्वर्गस्य लोकस्यानुख्यात्या एतत्पृष्ठानामन्ततः क्रियते । तां १४, १०, ९ ।

वैरूप ( सामन्- )-
१. अजा वैरूपम् । जै १, ३३३; २,३४ ।
२. आदित्यास्त्वा जागतेन छन्दसा सप्तदशेन स्तोमेन वैरूपेण साम्नाऽऽरोहन्तु तानन्वारोहामि स्वाराज्याय । ऐ ८, १२ (तु. ऐ ८,१७) ।
३. इदमेवान्तरिक्षं वैरूपम् । जै २, ३५७ ।

४. तद् (अज्ञस्साम) वेवाचक्षते वैरूपमिति । जै ३, २०९ ।

५. तद्वैरूपमसृजत (ता वैरूपं तृतीये ऽ ह्नन्नसृजन्त [ जै ३,११८]) तद् ग्रामघोषो ऽन्वसृज्यत… तस्माद्वैरूपस्य स्तोत्रे ग्रामघोषं कुर्वन्ति । जै १, १४३ ।

६. देवा वै तृतीयेनाह्ना स्वर्गं लोकमायंस्तानसुरा रक्षांस्यन्ववारयन्त ते विरूपा भवत विरूपा भवतेति भवन्त आयंस्ते यद्विरूपा भवत विरूपा भवतेति भवन्त आयंस्तद्वैरूपं सामाऽभवत्तद् वैरूपस्य वैरूपत्वम् । ऐ ५,१ ।

७. प्रतीच्यै दिशो वैरूपं भा असृजन्त । तद्वायोर्घोषोऽन्वसृज्यत । तस्माद्वैरूपस्य स्तोत्र आधवैराधून्वन्ति । जै ३, ३५६ ।

८. बृहदेतत्परोक्षं यद्वैरूपम् । तां १२, ८, ४ ।

९. यदिन्द्राय वैरूपाय (निर्वपति), यदेव सवितुस्तेजस्तदेवावरुन्धे । तैसं २, ३, ७, २-३ ।

१०. [°प- आदित्य- ३२५; गर्भ- ८; दिश्- ३७; पशु- १८३; प्रतीची- २८; रथन्तर- १६; २७; वाच्- ८९; विश्वेदेव- १३; १७ द्र. ] ।

**वैशीपुत्र-**, **वैश्य-** विश्-द्र. ।

**वैश्रवण-** चत्रं वैश्रवणः । ब्राह्मणा वय ९ स्मः । तैआ १, ३१, ३ ।

**वैश्वमनस-** विश्वमनस्- द्र. ।  **वैश्वसृज-** विश्वसृज्- द्र. ।

**वैश्वानर-**

१. अग्निर्वा एष वैश्वानरो यत् संवत्सरः । जै २, ३७९ ।

२. आत्मा वैश्वानरः (अग्नेः) । तैसं ५, ६,६, ३ ।

३. द्वादशकपालो वैश्वानरो भवति, द्वादश मासाः संवत्सरः । तैसं २,२,५, ६ ।

४. प्राणो वै पूर्वो वैश्वानरोऽपान उत्तरः । जै ३, ८ ।

५. यद्विश्वं भूतमवारयत तद्वैश्वानरयोर्वैश्वानरत्वम् । जै ३, ८ ।

६. वैश्वानरं द्वादशकपालं (+पुरोडाशं [माश.]) निर्वपति । तै १, ७,२,५; माश ५, २,५,१३ (तु. तैसं १,८,२०,१;२,२,५,१; मै ३,१५,१०;११) ।

७. वैश्वानरं द्वादशकपालं निर्वपति, हिरण्यं दक्षिणा । तैसं १, ८,८, १-२ ।

८. वैश्वानरो द्वादशकपालः (पुरोडाशः) । माश ६, ६, १, ५ ।

९. वैश्वानरो (सूर्यः) रश्मिभिर्मा पुनातु । तै १, ४, ८, ३ ।

१०. वैश्वानरो व्यात्तम् । तैसं ७, ५, २५, १ ।

११. शिर एव (शिरो वै [माश ९, ३, १, ७]) वैश्वानरः । माश ६, ६,१, ९ ।

१२. संवत्सरो (+वै [मै.]) वैश्वानरः । मै ३, ४, ४; माश ५, २,५,१५; ६, २,१,३६;६,१,५; ७,३,१,३५ ।

१३. स एषोऽग्निर्वैश्वानरो यत्पुरुषः । माश १०, ६, १, ११ । [°र- अग्नि- १६४; ३६६; ४५२; ७०१; ७०२; ७१२; ७१३; अप्- २३७; आकाश- ५; ७; आदित्य- ६१; ७८; १९२; २०९;३७०; आनुष्टुभ- ५; इडा- २६; काम- ११; क्षत्र- २६; दिव्- ६१;१३७; निदाघ- १; पायु- २; पितृ- १११; पृथिवी- ६४; ९०; १२०; भस्मन्- २; मारुत- ३;

रथ- ८;९; रयि- १; राष्ट्र- ८; लोक- ३४; वज्र- ३७; वषट्कार- १२; वायु- २५; ३८; वारवन्तीय- २; विश्वदेव- २३ द्र.] ।

**वैश्वानरोदयन-** वैश्वानरोदयना ह्यहीनास्सोमाः । जै २, ३५९ ।

**वैश्वामित्र-** विश्वामित्र- द्र. ।

**वैसर्जन** (हविस्-)-

१. अप्तुर्वैसर्जने । काठ ३४, १५ ।

२. उपसद्भिर्वै देवा इमांल्लोकान् व्यजयन् (अभ्यजयन् [क.]) । तान् वैसर्जनैरभिव्यसृजन्त यथा ग्रामस्संग्रामाद् विसृज्यते तद्वैसर्जनानां वैसर्जनत्वम् । काठ २६, २; क ४०, ५ ।

३. एतर्हि वा एष देवैस्तन्वं विसृजते, तद्वैसर्जनानां वैसर्जनत्वम् । काठ २६,२; क ४०, ५ ।

४. यद्वैसर्जनानि जुहोति । स यदिद ँ सर्वं विसृजते तस्माद्वैसर्जनानि नाम । काश ४,६,३,२; माश ३,६,३,२; ।

५. वैसर्जनानि जुहोति रक्षसामपहत्यै । तैसं ६, ३, २, २ ।

६. सुवर्गाय वा एतानि लोकाय हूयन्ते यद् वैसर्जनानि । तैसं ६, ३, २, १ ।

७. सोऽनृण इमांल्लोकानभिसृजमान एति, तद् वैसर्जनानां वैसर्जनत्वम् । काठ २६,२; क ४०,५ ।

८. सोमो वा एतद्राजा गृहं प्राप, तस्य वै तर्हि तदैश्वर्यं, यदा वै स ततः प्रच्यवतेऽथ स तत्तेभ्यो विसृजते, तद् वैसर्जनाना ँ वैसर्जनत्वम् । मै ३, ९, १ ।

**वौषट्**

१. असौ (आदित्यः) वाव वौ, ऋतवः षट् । ऐ ३, ६; गो २, ३, २ ।

२. वौषडिति वौगिति वा ऽ एष (अग्निः) षडितीद ँ षट्चितिकमस्त्वम् । माश १०, ४,१,३ ।

**व्यचस्-** आदित्य- ७३ द्र. ।

**व्यचस्वत्->°स्वती-** व्यचस्वती संवसाथामित्यवकाशवती संवसाथामित्येतत् । माश ६, ४, १, १० ।

**व्यचिष्ठ-** व्यचिष्ठमन्नैरभसं दृशानमित्यवकाशवन्तमन्नैरत्नादं दीप्यमानमित्येतत् । माश ६, ३, ३, १९ ।

**व्यच्यमान-** व्यच्यमान ँ सरिरस्य मध्य ऽ इतीमे वै लोकाः सरिरमुपजीव्यमानमेषु लोकेष्वित्येतत् । माश ७, ५, २,३४ ।

**व्यञ्जन-**

१. तस्य यानि व्यञ्जनानि तच्छरीरम् । ऐआ २,२, ४ ।

२. तानि नखानि रोमाणि व्यञ्जनानीति । शांआ ८, ११ ।

३. व्यञ्जनैरेव रात्रीराप्नुवन्ति स्वरैरहानि । ऐआ २, २, ४ ।

**व्यष्टि-** तां (ब्रह्मणः) व्यष्टिं व्यश्नुते य एवं वेद । शांआ ३, ७; कौउ १, ७ ।

**व्याघ्र-**

१. ऊवध्यादेवास्य मन्युरस्रवत्स व्याघ्रो ऽभवदारण्यानां पशूना ँ राजा । माश १२, ७, १,८ ।

२. पुरो व्याघ्रो जायते पश्चात् सिंहः। काठ २०, १०; क ३१, १२।

३. व्याघ्रेणारण्यान् पशून् (अन्वाभवत्)। काठ ४३, ४ (तु. काठ ३५, १५)।

४. व्याघ्रो वय इति दक्षिणे पक्षे, सिंहो वय इत्युत्तरे। काठ २०,१०॥ [°घ्र- अनाधृष्य- ५; क्षत्र- १६; प्रतिप्रस्थातृ- ३; मृत्यु- १५ द्र.]।

व्याघ्र-लोम- अथ यान्युरसि लोमानि यानि च निकक्षयोस्तानि व्याघ्रलोमानि। माश १२, ९,१, ६।

व्याधि- ऋतुसन्धि- द्र.।

व्यान-

१. अथ यः प्राणापानयोः सन्धिः, स व्यानः। छांउ १, ३, ३।

२. इन्द्रियं वै व्यानः। काठ २७,३; क ४२,३।

३. दक्षिणादिग्व्यानेत्यनुप्राणद्व्यानमेवास्मिँस्तदधात्। माश ११,८,३,६।

४. द्विर्ऋतुनेति (यजन्ति) उपरिष्टाद्व्यानमेव तद्यजमाने दधति। कौ १३,९।

५. निक्रीडित इव ह्ययं व्यानः। ष २, २।

६. व्यान उपा ँ शुसवनः (यज्ञस्य)। मै ४,५, ६; ९; माश ४, १, १, १।

७. व्यानं त उपा ँ शुसवनः पातु। मै ४, ८, ७।

८. व्यानः शस्त्रा (ऋक्)। माश १४, ६, १, १२।

९. व्यानस्त्रिष्टुप्। मै ३, ४, ४; काठ २१, १२।

१०. व्यानादपान ँ सन्तनु। काठ ३९, ८।

११. व्यानादमुं (द्यु-) लोकम् (प्रजापतिः प्रावृहत्)। कौ ६, १०।

१२. व्यानाय त्वेति तिर्यञ्चम्। ऐआ ५, १, ४।

१३. व्यानाय त्वेत्युपा ँ शुसवनम् (सादयति)। काठ २७, २।

१४. व्यानो वा उपा ँ शुसवनः। मै ४, ५, ४; ६,९।

१५. व्यानो ह्युपा ँ शुसवनोऽन्तरिक्ष ँ ह्येव व्यनन्नभिव्यनिति। माश ४, १, २, २७।

१६. सामानि वै ब्रह्मणो व्यानः। काठसंक ४ : २-३।

१७. सुवरि व्यानः। तैआ ७,५,३; तैउ १,५,३॥ [°न- अप्- १२२; आश्विन- ९; प्रतिहर्तृ- १; ६; प्राणापान- २८; बृहती- ३५; ब्रह्मन्- १६४; मनुष्य- ३३; वरुण- ५४; वामदेव्य- २३ द्र.]।

व्यास- मृत्यु- २४ द्र.।

व्याहृति-

१. अथ यद्यनुपस्मृतात् कुत इदमजनीति (यज्ञो भ्रेषं नीयात्), भूर्भुवस्स्वस्वाहा इत्याहवनीये जुहवाथ सैव तस्य सर्वस्य प्रायश्चित्तिः। जै १, ३५८।

२. अथैता अमृतव्याहृतीरभिव्याहरति भूर्भुवस्स्वः। जै १, ३२७।

३. एतानि ह वै वेदानामन्तःश्लेषणानि यदेता (भूर्भुवः स्वरिति) व्याहृतयः। ऐ ५,३२।

४. एताभिर् (भूर्भुवस्स्वरिति व्याहृतिभिः) एनं (यज्ञम्) भिषज्याथेति (प्रजापतिर्देवान् उवाच)। जै १, ३५८।

५. एता वै ( भूर्भुवःस्वरिति ) व्याहृतयः सर्वप्रायश्चित्तयः (+ ··· एता व्याहृतयो ऽक्षिता अदुग्धा अनन्ता अक्षराः [जै १, ३६३-३६४]) । जै १, ५३; ६०; जैउ ३, ४, ३, ३ ।
६. एवमेवैता ( भूर्भुवःस्वरिति ) व्याहृतयस्त्रय्यै विद्यायै संश्लेषिण्यः । कौ ६, १२ ।
७. ता एता व्याहृतयः । प्रेत्येति वागिति भूर्भुवःस्वरित्युदिति ( प्र, आ, वाक्, भूर्भुवःस्वः, उत् ) । जैउ २, ३, ३, ३ ।
८. तानि वा ऽएतानि ( भूर्भुवःस्वरिति ) पञ्चाक्षराणि तान्पञ्चर्तूनकुरुत, त इमे पञ्च ऽर्तवः । माश ११, १, ६, ५ ।
९. ता ( भूर्भुवः सुवर्मह इत्येताश्चतस्रो व्याहृतीः ) यो वेद । स वेद ब्रह्म । सर्वे ऽस्मै देवा बलिमावहन्ति । तैआ ७, ५, ३; तैउ १, ५, ३ ।
१०. ता वा एता पञ्च व्याहृतयो भवन्त्यो श्रावयास्तु श्रौषड्, यज, ये यजामहे, वौषड् इति । गो १, ५, २१; माश १, ५, २, १६ ।
११. त्रिर्वा इदं प्रजापतिः सत्यं व्याहरत् । भूर्भुवः स्वरिति । मै १, ६, ५ ।
१२. पञ्च वै जयाः । पञ्चभिर्वै व्याहृतिभिरिदं देवा अजयन् । जै २, ३५६ ।
१३. भूर्भुवः स्वः । इति पुरस्ताद्धोतोर्वदेदेतद्वै ब्रह्मैतत्सत्यमेतदृतं, न वा एतस्मादृते यज्ञोऽस्ति, तस्मादेव ९ वदितव्यम् । मै १, ८, ५ ।
१४. भूर्भुवः स्वरित्याहैतद्वै वाचः सत्यम् । तैआ २, ११, ७ ।
१५. यद् भूर्भुवः स्वरित्येतद् वै ब्रह्मैतद् यजुः । जै १, ८८ ।
१६. स ( प्रजापतिः ) भूरिति व्याहरत्सेयं पृथिव्यभवद् भुव इति तदिदमन्तरिक्षमभवत् स्वरिति सा ऽसौ द्यौरभवत् ··· । स वा ऽएकाक्षरद्व्यक्षराण्येव प्रथमं वदन् प्रजापतिरवदत्तस्मादेकाक्षरद्व्यक्षराण्येव प्रथमं वदन् कुमारो वदति । माश ११, १, ६, ३-४ ।
१७. सर्वासिर्वा एषा ( सैषा सर्वप्रायश्चित्तिर् [ऐ ५,३३] ) यदेता व्याहृतयः । ऐ ८, ७ ॥ [°ति- प्रजापति- १५४; ब्रह्मन्- ११३; महस्- ३; लोक- २०; वाच्- १३१; वेद- ६ द्र.] ।

व्युष्टि ( इष्टका- )-

१. अहर्व्युष्टिः । तै ३, ८, १६, ४ ।
२. ते देवा एता व्युष्टीरपश्यन्, ता उपादधत, ततो वा इदं व्यौच्छद्यस्यैता उपधीयन्ते व्येवास्मा उच्छत्यथो तम एवाप हते । तैसं ५, ३, ४, ७ ।
३. पञ्च व्युष्टीरनु पञ्च दोहाः ······ । मै २, १३, १० ।
४. व्युष्टिं रूपेण (प्रीणामि) तैसं ५, ७, १९,१; काठ ५३; ९ ।
५. व्युष्टिर्वा एष द्विरात्रो व्यवास्मै ( यजमानाय ) वासयति । तां १८, ११, ११ ।
६. व्युष्टिर्वै दिवा, व्येवास्मै वासयति । तां ८, १, १३ ॥ [°ष्टि- रात्रि- २९ द्र.] ।

व्यूह- दिश्- ११; ६६; यज्ञ- १४४ द्र. ।

व्योमन्-

१. इमे वै लोकाः परमं व्योम । माश ७, ५, २, १८; २० ।
२. एष उ ह वै व्योमा ये ऽर्वाञ्चः प्रजापतेर् देवाः । जै २, ८८ ।

३. व्योमा हि संवत्सरः । माश ८, ४, १, ११ ॥ [ °मन्- अन्न- ४५; दक्षिणतस् ३१; प्रजापति- १६३ द्र.] ।

**व्योम-सद्-** एष (सूर्य्यः) वै व्योमसद् व्योम वा एतत् सद्मानां यस्मिन्नेष आसन्नस्तपति । ऐ ४, २० ।

**व्रज (गोस्थान-)**- छन्दस्- ४३ द्र. ।

**व्रत-**

१. अग्निहोत्रं वाव व्रतम् । क ३६, ४ ।

२. अमानुष इव वा ऽ एतद्भवति यद् व्रतमुपैति । माश १, ९, ३,२३ ।

३. एतत्खलु वै व्रतस्य रूपं यत्सत्यम् । माश १२, ८, २, ४ ।

४. तदु हाषाढः सावयसो ऽनशनमेव व्रतं मेने । माश १, १, १, ७ ।

५. वीर्यं वै व्रतम् । माश १३, ४, १,१५ ।

६. श्रीर्वै व्रतम् । जै २, ४१४ ।

७. संवत्सर ऽ हि व्रतं नाति । तैसं २, ५, ४, ४; ५, ७,६, १ ।

८. संवत्सरो वै व्रतं तस्य वसन्त ऋतुर्मुखं ग्रीष्मश्च वर्षाश्च पक्षौ शरन्मध्य ऽ हेमन्तः पुच्छम् । तां २१, १५, २ ॥ [°त- अग्नि- १८७; ५३२; अन्न- ४५; ५५; ब्राह्मण- ५५; यज्ञ- १७४ द्र.] ।

**व्रत-चर्य-** ऋषि- ७ द्र. ।　　**व्रत-पति-** अग्नि- १८७ द्र. ।

**व्रत-भृत्-** अग्नि- १८७; ब्राह्मण- ५५ द्र. ।　　**व्रतोपायन-** अग्निहोत्र- ४९ द्र. ।

**व्रात-** विषम इव वै व्रातः । तां १७, १, ५; ११ ।

**व्रात्य,त्या-**

१. दिव्या वै व्रात्या व्रात्यामधावयन् बुधेन स्थपतिना, त एते व्रात्या आछिन्निमं वैव यो ऽयं (वायुः) पवत ईशानं वा देवम् । जै २,२२१ (तु. तां १७, १, १-३) ।

२. मुह्यन्तीव वा एते ये व्रात्यां धावयन्ति । जै २, २२१ ।

३. म्रियन्त इव वा एते ये व्रात्यां धावयन्ति । उत हि स्थविरतरस्यान्ते आहनस्यं वदन्ति । जै २, २२२ [ °त्य,त्या- ब्रह्मन्- ७२; वाच्- ११४; ११७ द्र.] ।

**व्रीहि-**

१. आनुपूका वा एते व्रीहयो य आनुजावरः । काठ ११, ४ ।

२. मज्जभ्य एवास्य भक्षः सोमपीथो ऽस्रवत्ते व्रीहयो ऽभवन् । माश १२, ७, १, ९ ।

३. व्रीहयः शाक्वर्यः । जै १, ३३३; २,३४ ।

४. व्रीहीञ्छरदे (प्रायच्छत्) । तैसं ७, २, १०, २ ।

५. स (मेधो देवैः) अनुगतो व्रीहिरभवत् । ऐ २, ८ ॥ [°हि- क्षत्र- १७; पशु- ७; ४१; यव- २३; रोहित- ४ द्र.] ।

**व्रीहि-पात्र-** अपि ह स्मैको व्रीहिपात्रः पक्षः कुलायालं भवति । जै २, २६६ ।

**व्रीहि-मय-**

१. यद् व्रीहिमयः पुरोडाशो भवत्यपिहित्या असुषिरत्वाय । मै ३,१०,२ ।

२. व्रीहिमयं (पिण्डमधिश्रयति) तत्साम्ना ऽ रूपम् । माश ५,५,५,९ ॥ [°य- यजुस्- २७ द्र.] ।

व्रीहि-यव-

१. तं (मेधं देवाः) खनन्त इवान्वीयुस्तमन्वविन्दंस्ताविमौ व्रीहियवौ । माश १, २,३,७ ।

२. पुरुष ऽ ह वै देवाः । अग्रे पशुमालेभिरे तस्यालब्धस्य मेधो ऽपचक्राम सो ऽश्वं प्रविवेश ते ऽश्वमालभन्त······ ते गामालभन्त······ ते ऽविमालभन्त ······ ते ऽजमालभन्त··· ताविमौ व्रीहियवौ । माश १, २, ३, ६; ७ ।

३. व्रीहियवौ ह वाव स (प्रजापतिः) तद् आत्मन् दधे । जै २, २२८ ।

४. सुकृष्टे व्रीहियवाः पच्यन्ते । काठ २५,४ ॥ [°व- पयस्-२१; प्रजापति- ७५; मेध- ३ द्र.] ।

## श

शयु- यद्ब्राह्मणोक्तो ऽश्रद्दधानो यजते शंयुमेव तस्य बार्हस्पत्यं यज्ञस्याशीर्गच्छति । तैसं २, ६, १०, १ ॥ [°यु- बार्हस्पत्य- १४;१५: रुद्र- २३ द्र.] ।

शंयोर्वाक- प्रतिष्ठा (+ वै [कौ.]) शंयोर्वाकः । कौ ३,८; माश ११,२,७, २९ ॥ [°क- बाहु- ५ द्र.] ।

√शंस् यद्वै वदति श ऽ सतीति वै तदाहुः । माश १, ८, २, १२ ।

शंस- वाच्- ५६ द्र. ।

शंस्य-

१. आहवनीयो वै शंस्यः । क ६, १ ।

२. शंस्य पशून्मे गोपाय । द्विपादो ये चतुष्पदः अष्टाशफाश्च य इहाग्ने । ये चैकशफा आशुगाः । तै १, २, १, २५-२६ ॥ [°स्य- धन- ३; पशु ३१४ द्र.] ।

शका- शका भौमी । काठ ४७, ८ ।

शकुन्तला- शकुन्तला नाडपित्यप्सरा भरतं दधे परःसहस्रानिन्द्रायाश्वान्मेध्यान्य आहरद्विजित्य पृथिवी ऽ सर्वामिति । माश १३, ५,४, १३ ।

शकुन्तिका- विश्- २१ द्र. ।

शकृत्-पिण्ड- शकृत्पिण्डेभ्यः कूश्माः (अजायन्त) । जै २, २६७ ।

शक्ति- कर्मन्- ३; पशु- १८४; पृथिवी- ६५ द्र. ।

शक्मन्- शक्मने शाक्वरायेति, वरुणाय तेनादित्येभ्यः (गृह्णाति) । मै ३, ७, १० ॥ [°क्मन्- पशु- ३१५ द्र.] ।

शक्वरी-

१. आपो वै शक्वर्यः । जै ३, १२ ।

२. इन्द्रः प्रजापतिमुपाधावद् वृत्र ऽ हनानीति तस्मा एतच्छन्दोभ्य इन्द्रियं वीर्यं निर्माय प्रायच्छदेतेन शक्नुहीति तच्छक्वरीणा ऽ शक्वरीत्वम् । तां १३, ४, १ ।

३. एताभिर्वा इन्द्रो वृत्रमशकद्धन्तुं तद्यदाभिर्वृत्रमशकद्धन्तुं तस्माच्छक्वर्यः । कौ २३,२ ।

४. एताभिर् (भुरिग्भिः शक्वरीभिः) वा इन्द्रो वृत्रमहन् क्षिप्रं वा एताभिः पाप्मानं ऽहन्ति क्षिप्रं वसीयान् भवति । तां १२, १३, २३ ।

५. एषा वै सप्तपदा शक्वरी, यद्वा एतया देवा अशिक्षन्, तदशक्नुवन् । तैसं २, ६, २, ६ ।

६. कुमारान् ह स्म वै मातरः पाययमाना आहुः। शक्वरीणां पुत्रका व्रतं पारयिष्णवो भवतेति। लु ११३ : ८
७. घोषी स ब्राह्मणो ऽसद् यो ऽ स्मान् ( शक्करीः ) वेदेति। जै ३,१०५।
८. तद्यदद्य स्तुत्वा श्वोऽ शक्नुवंस्तच्छक्वरीणां शक्वरीत्वम्। जै ३,१०४।
९. ताभ्य ( शक्करीभ्यः ) एतास्तृप्तीः प्रायच्छदेतानेकारान्। जै ३, १०९।
१०. ब्रह्म शक्कर्य्यः। तां १६, ५, १८।
११. यच्छक्वर्यास्तदैन्द्रः। काठ २९, ७।
१२. यत्सप्तमे ऽहन्प्रवृज्यते। धाता भूत्वा शक्वरीमेति। तैआ ५, १२, २।
१३. यदशक्नोत् (इन्द्रः ) तस्माच्छक्कर्यः। जै ३, १११।
१४. यदिमांल्लोकान्प्रजापतिः सृष्ट्वेदं सर्वमशक्नोद्यदिदं किंच तच्छक्कर्यो ऽभवंस्तच्छक्करीणां शक्करीत्वम्। ऐ ५, ७।
१५. वर्धयत्येव शक्करीभिः। जै २, २।
१६. शक्वर्यो वै हरितः सुपर्ण्यः। जै ३, ८४।
१७. श्रीः शक्कर्यः। तां १३, २, २।
१८. सप्तपदा वै तेषां ( छन्दसाम् ) परार्ध्या शक्करी। माश ३, ९, २, १७।
१९. सप्तपदा वै शक्कर्यः। जै १, १३१; २, १४५; ३, ८६; ९२।
२०. सप्तपदा शक्करी। तैसं ३, २, ९, २; मै १, ५, ६; ४, २, ११; ५, १;७; काठ ११, ३; काठसंक १६ : २; तां १९,७,६; तै २,१,५,११।
२१. स प्रजापतिः शक्कर्या अधि रेवतीं निरमिमीत शान्त्या अप्रदाहाय। तैसं २, २, ८, ६।
२२. स (प्रजापतिः ) शक्करीरसृजत तदपाङ् घोषो ऽन्वसृज्यत। तां ७, ८, १२।
२३. सा ( वाक् ) पञ्चममहः प्राप्य शक्करी भवति यथा प्रशिष्टः शक्नोति। जै २,१।
२४. हेमन्तेन ऋतुना देवास्त्रिणवे मरुतः स्तुतम्। बलेन शक्करीः सहः। मै ३, ११,१२॥ [°री- अप्- १४४; इन्द्र- २२०; २७४; ऐन्द्र- ६३; गार्हपत्य- ६; गो- १५; पशु- ११७; १८५; मरुत्- २३;२७; रथन्तर- २७; वज्र- २४;३५; वृत्र- २१; व्रीहि- ३ द्र.]।

शक्करी-त्व- अशकामेति तदासां (गवाम्) शक्करीत्वम्। मै ४,२,१२।

शाक्कर ( सामन्- )-
१. तच्छाक्वरमसृजत तदपां घोषोऽन्वसृज्यत…तस्माच् [छाक्वरस्य स्तोत्रे अप] उपनिधाय स्तुवन्ति। जै १,१४३; (तु. जै ३, ३५६ तां ७,८,१२)।
२. यदिन्द्राय शाक्कराय ( निर्वपति ), यदेव मरुतां तेजस्तदेवावरुन्धे। तैसं २,३, ७,३।
३. शाक्करस्य स्तोत्रे ऽप उपनिधाय स्तुवन्ति। जै ३, ११८।
४. शाक्करायेत्याह, शक्त्यै हि ते ताः समवायन्त। तैसं ६, २, २, ३।
५. हैमन्तिकौ मासौ प्रयच्छेति। एतौ ते प्रयच्छानीत्यन्नमन्नमित्येव पतित्वास्या ऊर्ध्वायै दिशश्शाक्करं भा आदत्त। जै ३, ३६६। [°र- ऊर्ध्व,धिषी- ८; पशु- ३१५;३१६; मैत्रावरुण- १६; रथन्तर- १५; रूप- ५; वज्र- ४४ द्र.]।

शङ्कु ( सामन्-)-
१. तद् ( शङ्कुसाम) उ सीदन्तीयमित्याहुः। तां ११, १०, १३।

२. शङ्कु भवत्यह्नो धृत्यै यद्वा अधृतं शङ्कुना तद्दाधार । तां ११,१०,११ ।

**शचिष्ठा**- एषा ह वै शचिष्ठावृद् यद् असावादित्यः । जै २, २५८ ।

**शचीपति**- क्रतु- २ द्र. ।

**शण**- यत्र वा प्रजापतिरजायत गर्भो भूत्वैतस्माद्यज्ञात्तस्य यन्नेदिष्ठमुल्बमासीत्ते शणास्तस्मात्ते पूतयो भवन्ति । माश ३, २, १, ११ ॥ [°ण- जरायु- द्र.] ।

**शण्ड**- शण्डाय त्वैष ते योनिर्वीरतां पाहि । तैसं १, ४, ८, १ ।

**शण्डामर्क**- देव- १६९ द्र. ।

**शत**-

१. एषा वाव यज्ञस्य मात्रा यच् छतम् । तां २०, १५, १२ ।

२. यच् छतं तदायुरिन्द्रियं वीर्यं तेजो यजमान एकशततमः । ऐआ १,२,२ ॥ [°त- आयुस्- ३८ द्र.] ।

**शत-कृष्णला** (इष्टि-)- यो मृत्योर्बिभीयात् तस्मा एतां प्राजापत्यां शतकृष्णलां (इष्टिम्) निर्वपेत् ··· स (प्रजापतिः) एवास्मिन् (यजमाने) आयुर्दधाति । तैसं २, ३, २, ११

**शत-क्रतु**- इन्द्र- ३४ द्र. ।

**शत-घ्नी**-

१. एता (सूर्मीं कर्णकवतीं) ह स्म वै देवा असुरेभ्यो वज्रं शतघ्नीमियद्भ्यस्त्वेत्यभ्यवसृजन्ति । काठ २१, ९ (तु. मै ३, ३, ९) ।

२. एषा (ऋक्) वै सूर्मी (ज्वलन्ती लोहमयी स्थूणा) कर्णकावत्येतया ह स्म वै असुराणां शततर्हांस्तृंहन्ति यदेतया (ऋचा) समिधमादधाति वज्रमेवैतच्छतघ्नीं यजमानो भ्रातृव्याय प्रहरति स्तृत्या अछम्बट्कारम् । तैसं १, ५,७,६; ५, ४,७, ४ ।

**शत-पदी**- ऋच्- ५; वाच्- ८७ द्र.

**शत-भिषज्** (नक्षत्र)-

१. यच्छतमभिषज्यन् तच्छतभिषक् । तै १, ५, २, ९ ।

२. वरुणो देवता, शतभिषङ् नक्षत्रम् । काठ ३९, १३ । [°षज्- इन्द्र- ८४; ३७५; वरुण- ६ द्र.

**शतरुद्रिय**-, °**द्रीय**-

१. अहोरात्रे (संवत्सरस्य) शतरुद्रीयम् । तै ३, ११, १०, ३ ।

२. तद्यदेतं शतशीर्षाणं रुद्रमेतेनाशमयंस्तस्माच्छतशीर्षरुद्रशमनीयं शतशीर्षरुद्रशमनीयं ह वै तच्छतरुद्रियमित्याचक्षते परोऽक्षम् । माश ९, १, १, ७ ।

३. ते देवा एतच्छतरुद्रियमपश्यन् । तेनैनम् (रुद्रम्) अशमयन् । क ३१, २१ ।

४. ते (देवाः) ऽब्रुवन् । अन्नमस्मै (रुद्राय) सम्भराम तेनैनं शमयामेति तस्मा एतदन्नं समभरञ्छान्तदेवत्यं तेनैनमशमयंस्तद्यदेतं देवमेतेनाशमयंस्तस्माच्छान्तदेवत्यं शान्तदेवत्यं ह वै तच्छतरुद्रियमित्याचक्षते परोऽक्षम् । माश ९, १, १, २ ।

५. त्वमग्ने रुद्र इति शतरुद्रीयस्य रूपम् । तै ३, ११, ९, ९ ।

६. प्रजापतिरेतच्छतरुद्रियम् अपश्यत् , तेनैनं ( रुद्रम् ) अशमयत् । मै ३, ३, ४ ।

**शतार्चिन्** (प्राण- )- तं (इमं पृथिवीलोकं) शतं वर्षाण्यभ्यार्चत् तस्माच्छतर्चिनस्तस्माच्छतर्चिन इत्याचक्षत एतमेव( प्राणं ) सन्तम् । ऐआ २, २, १ ।

**शत्रु**- आनुष्टुभ- ६; पाप्मन्- २२ द्र. ।

**शद** (यज्ञ-)-

१. यद्वेवैषैकैका स्तोत्रियावशीयते तस्माच्छदः । जै २, ८२ ।

२. स ( आदित्यः ) एतं (शदम्) यज्ञमपश्यत् , तमाहरत् , तेनायजत, ततो वै सोऽवशात्यैव सर्वं पाप्मानं, स्वर्गं लोकमभ्युदक्रामत् । जै २, ८२ ।

**शफ**- शफेभ्यः शल्यकाः ( अजायन्त ) । जै २, २६७ ; [°फ- धिष्ण्य- ७ द्र.] ।

**शबल**- अक्षावाप- २; अहन्- १५; विद्युत्- १६; वैद्युत- २ द्र. ।

**शबली**- कामदुघा- ९; वाच्- ९५ द्र. ।

**शब्द**- मृत्यु- २१ द्र.

**शम्** ताभ्यः श्रान्ताभ्यस्तप्ताभ्यः ( वृधदादिभ्यः पंचमहाव्याहृतिभ्यः ) शमित्यूर्ध्वमक्षरमुदक्रामत् स य इच्छेत् सर्वाभिरेताभिरावद्भिश्च परावद्भिश्च कुर्वीयेत्येतयैव तन्महाव्याहृत्या कुर्वीत । गो १, १, ११ ।

**शम**- मुनि- द्र. ।

**शमनीचामेढ्राणां स्तोम**- अथैष शमनीचामेढ्राणां स्तोमो ये ज्येष्ठाः सन्तो व्रात्यां प्रवसेयुस्त एतेन यजेरन् । तां १७,४,१ ।

**शमयितृ**- दम- २ द्र. ।

**शमितृ**-शमितोग्रो विशां पतिः । तै ३, १२, ९, ६ । [°तृ- अध्रिगु- २; मृत्यु- १३ द्र.] ।

**शमी**-

१. त ९ ( अग्निम् प्रजापतिः) शम्या समैन्धत् , तमशमयत् , तच्छम्याः शमीत्वम् । मै १,६,५।

२. तद्यदेत ९ ( अग्निम् ) शम्याशमयंस्तस्माच्छमी। माश ९, २, ३, ३७ ।

३. तस्य ( वरुणस्य ) जाया ९(अग्निः) समभवत्···, (अग्नेः) यद्रेता आसीत् सोऽश्वत्थ आरोहोऽभवद्यदुल्बं सा शमी, तस्मादेतौ यज्ञावचरौ पुण्यजन्मानौ हि । मै १, ६, १२ ।

४. तान् ( पशून् ) अयं देवो ( रुद्रो ) ऽभ्यमन्यत, त ९ शम्याशमयत् , तच्छम्याश्शमीत्वम् । काठ ३०, १०; क ४६, ८ ।

५. प्रजापतिरग्निमसृजत सो ऽबिभेत्प्र मा धक्ष्यतीति त ९ शम्याशमयत् । तच्छम्यै शमित्वम् । तै १, १, ३, ११ ।

६. यद्वै प्रजा वरुणो (=हेमन्तो) गृह्णाति शम्यं चैव यवं चापि न गृह्णाति । मै १, १०, १२; काठ ३६,५ ।

७. यया ते सृष्टस्याग्नेः । हेतिमशमयत्प्रजापतिः । तामिमामप्रदाहाय शमी ९ शान्त्यै हराम्यहम् । तै १, २, १, ६-७ ।

८. वनस्पतीन् वा उग्रो देव उदौषत्, त ऽ शम्या अध्यशमय ऽ स्तच् शम्याः शमीत्वम्। मै ४, १, १।

९. शमि शमयास्मदघा द्वेषा ऽ सि। तैआ ६, ९, २॥ [°मी- अग्नि- ५२; उखा- ११ द्र.]।

शमी-पर्ण- शमीपर्णानि भवन्ति शन्त्वाय। मै १, १०, १२; काठ ३६, ६।

शमी-पलाश- शं वै प्रजापतिः प्रजाभ्यः शमीपलाशैरकुरुत। माश २, ५, २, १२।

शमी-धान्य- व्रीहियवयोर्वा ऽ एतदुपजं यच्छमीधान्यम्। माश १, १, १, १०।

शमी-मय- शमीमयम् (शङ्कुम्) उत्तरतः, शं मे ऽसदिति। माश १३, ८, ४, १।

शमीमयी- शमीमयीम् (+ आदधाति [तैसं ५, १, ९, ६]) शान्त्यै। तैसं ५, ४, ७, ४; काठ २१, ९।

शम्भू- दिव्- १०० द्र.।

शम्या- जिह्वा- ६; वज्र- २४ द्र.।

शम्यापरास- एते ह वै स्वर्गस्य लोकस्य विक्रमा यत् शम्यापरासाः। जै २, २९८।

शयन- दीक्षित- १७ द्र.।

शर-

१. अङ्गिरसो वै स्वर्गं लोकं यन्तस्ते मेखलाः संन्यकिरन्। ततः शर उदतिष्ठत्। क ३६, १।

२. अथ (इन्द्रः) यत्र (वज्रं) प्राहरत्तच्छकलो ऽशीर्यत स पतित्वा शरो ऽभवत्तस्माच्छरो नाम यदशीर्यत। माश १, २, ४, १।

३. इन्द्रो वै वृत्राय वज्रं प्राहरत् तस्य यत् प्राशीर्यत स शरो ऽभवत् तच्छरस्य शरत्वम्। काठ २३, ४; क ३६, १।

४. ऊर्ग्वै शराः। तैसं ६, १, ३, २।

५. ये ऽन्तःशरा अशीर्यन्त ते शरा अभवन् तच्छराणा ऽ शरत्वम्। तैसं ६, १, ३, ५॥ [°र- ऊर्ज्- २०; वज्र- ३८ द्र.]।

शर-मय-

१. शरमयं बर्हिः, शृणात्येवैनम्। तैसं २, १, ५, ७।

२. शरमयं बर्हिश्शीर्त्यै। काठ ११, ५।

३. शृणादिति शरमयं बर्हिर्भवति। मै २, १, ६।

शरद् (ऋतु-)-

१. अन्नं वै शरद्। मै १, ६, ९।

२. यद्विद्योतते तच्छरदः (रूपम्)। माश २, २, ३, ८।

३. शरदुत्तरः [+पक्षः [तै.] (संवत्सरस्य)]। तै ३, ११, १०, ४; तैआ ४, १९, १।

४. शरदेव सर्वम्। गो १, ५, १५।

५. शरदोत्तरं पक्षम् (अचिनुत)। तैसं ५, ६, १०, १।

६. शरद्धविः। तैआ ३, १२, ३।

७. श्रोत्रं शरद्··· आदित्यश्शरद्। जै २, ५१।

१४. स्वधा वै शरद् । माश १३, ८, १, ४ ॥ [°रद्- अन्नवत्-; अम्बिका- ५; ६; अरुण- १; आयुस्- ३५; ओषधि- ४९;८१; ग्रीष्म- २३; पुच्छ- ५; ६; प्रतिहार- १;६; बर्हिस्- ६;१०; बार्हस्पत्य, त्या- ४;१६; ब्रह्मन्- १४७; मैत्रावरुण- १८; वर्तिका-; विश्वदेव- ७; वैश्य- २०; २१ द्र.] ।

शारद-

१. इषश्चोर्जश्च शारदा ऋतू । मै २, ८, १२ ।

२. पृश्नयस्त्रयश्शारदाः । काठ ५०, ३ ।

३. हृदे त्वा मनसे त्वेत्याह । शारदावेवास्मा ऋतू कल्पयति । तैआ ५, ६, ६ । [°द- ऋभु- ५ द्र.] ।

शरव्या-

१. कृकिलासश्शकुनिः पिप्पका ते शरव्यायै । काठ ४७,९ (तु. मै ३, १४, २१) ।

२. तिस्रो वै शरव्या दिव्या पार्थिवा समुद्रियाः । मै ४, ४, ३ ।

शारस्- पूषन्- ३८ द्र. ।

शरीर-

१. अङ्गानि च मेऽस्थानि च मे, परूꣳषि च मे शरीराणि च मे (यज्ञेन कल्पन्ताम्) । तैसं ४, ७, १, ३ ।

२. अथ यत्सर्वमस्मिन्नश्रयन्त तस्मादु शरीरम् । माश ६, १, १, ४ ।

३. अशरीरं वै रेतोऽशरीरा वपा यद्वै लोहितं यन्मांसं तच्छरीरम् । ऐ २, १४ ।

४. कमग्निं चिनुते वैश्वसृजमग्निं चिन्वानः । शरीरं प्रत्यक्षेण । तैआ १, २२, ११ ।

५. केन सुखदुःखे इति, शरीरेणेति । शांआ ३, ७; कौउ १, ७ ।

६. प्राण उदक्रामत्तत्प्राण उत्क्रान्तेऽपद्यत । तदशीर्यताशारीती ३ꣳ तच्छरीरमभवत्तच्छरीरस्य शरीरत्वम् । ऐआ २, १, ४ ।

७. यदनो वा रथꣳ वा (ददाति) शरीरं तेन (निष्क्रीणीते) । मै ४, ८, ३ ।

८. शरीरं हृदये (श्रितम्) । तै ३, १०, ८, ७ ।

९. यो वै प्रमीयतेऽग्निं तस्य शरीरं गच्छति, सोमं रसः । मै २, ३,५ ॥ [°र-अग्नि- ४३; ५३; अतिछन्दस्- ९; अन्न- १५९; पृथिवी- १२४; १२५; १६५; १९६; प्रजापति- २४८; प्राण- १५२; व्यञ्जन- १ द्र.] ।

शार्कर (शिशुमारर्षि-)-> शार्कर (सामन्)- स एतत् सामापश्यत्तेनापोऽनुसमाश्नुत तद्वाव स तर्ह्यकामयत कामसनि साम शार्करं काममेवैतेनावरुन्धे । तां १४, ५, १५ ।

शर्करा-

१. इन्द्रो वै वृत्राय वज्रं प्राहरत्, तस्य (वज्रस्य) या विप्रुषा आसꣳस्ताः शर्करा अभवन् । मै १, ६, ३ ।

२. तां (शिथिरां पृथिवीम्) प्रजापतिः शर्कराभिरदृꣳहत् । मै १, ६, ३ ।

३. तां (पृथिवीम्) शर्कराभिरदृꣳहत् शं वै नोऽभूदिति तच्छर्कराणाꣳ शर्करत्वम् । तै १,१,३,७ ।

४. यदशीर्यत ताः शर्कराः । काठ २०, ४; क ३१, ६ ।

५. ये ऽन्तःशरा अशीर्यन्त ताः शर्करा अभवन्, तच्छर्कराणा ऽ शर्करत्वम्। तैसं ५, २, ६, २।
६. शर्कराभिः स ऽ सृजति धृत्यै। तैआ ५, २, १३।
७. सिकताभ्यः शर्करामसृजत। माश ६, १, ३, ५॥ [°रा- अश्मन्- ५; वज्र- २५ द्र.]।

शर्मन्- अग्निर्वै शर्माण्यन्नाद्यानि यच्छति। ऐ २, ४१॥ [°र्मन्- चर्मन्- १; ब्रह्मन्- ९५; वाच्- ९७ द्र.]।

शर्यणावत्- शर्यणावद्ध नामैतत् कुरुक्षेत्रस्य जघनार्धे सरस्कम्। जै ३, ६४ (तु. ऋ १५ : ८)।

शर्व- शर्वं मतस्नाभ्याम् (प्रीणामि)। तैसं १, ४, ३६, १; तैआ ३, २१, १॥ [°र्व- अग्नि- २३८; ६१४; अग्निरूप-; अप्- ११६ द्र.]।

शर्वरी- रात्रि- ३५ द्र.।

शल्मलि (वृक्ष-)-
१. शल्मलिर्वनस्पतीनां वर्षिष्ठं वर्धते। माश १३, २, ७, ४।
२. शल्मलिर् वृद्ध्या (ऋद्ध्या [काठ.]) स्वावतु। तैसं ७, ४, १२, १; काठ ४४, १०।

शल्य-
१. यथानुभिद्य शल्यं निर्हरत्येवमेवास्य (आमयाविनः) एतन्मध्यतो यक्ष्मं निर्हरति ''' शल्यं निर्हृत्य समायत्य संनह्यति। काठ १२, १।
२. विकृत्य हि शल्यं मध्यतो निर्हरन्ति। मै २, ३, १।

शल्यक-
१. तस्या (गायत्र्याः) अनु विसृज्य कृशानुः सोमपालः सव्यस्य पदो नखमच्छिदत्तच्छल्यकोऽभवत्तस्मात्स नखमिव। ऐ ३, २६।
२. शफेभ्यः शल्यकाः (अजायन्त)। जै २, २६७।
३. ह्रियै शल्यकः। मै ३, १४, १६।

शवर्त- शवर्तानूवध्येन (प्रीणामि)। काठ ५३, १३।

शवस्- बल- ३ द्र.। शश- चन्द्रमस्- २१; यज्ञ- १३६ द्र.।

शस्त्र-
१. तद्यदेनच्छयति तस्माच्छस्त्रं नाम। माश ४, ३, २, ३।
२. ताञ्छस्त्रैः प्रशास्ति। तच्छस्त्राणां शस्त्रत्वम्। जै २, २४।
३. 'विश्वानि' इति शस्त्रम् (प्रजापतिरसृजत)। तां ६, ९, १५॥ [°स्त्र- क्षत्र- २८; देव- २६८; प्रजा- ५९; वाच्- ७२; विश्- १४ द्र.]।

शस्या (ऋच्-)- दिव्- ९७; व्यान- ८ द्र.।

शाकल (सामन्-)- एतेन वै शकलः पञ्चमेऽह्नि प्रत्यतिष्ठत् प्रतितिष्ठति शाकलेन तुष्टुवानः। तां १३, ३, १०॥ [°ल- प्राण- १३८ द्र.]।

शाक्त्य (सामन्-)- शाक्त्येन वै शाक्त्याः पशून् अवारुन्धत। तच् शाक्त्यस्य शाक्त्यत्वम्। जै १, २१५।

शाद्- शुक्लाः शादोऽभिपुणुयुः । सोमो वै राजा यदिमं लोकमाजगाम स शाल्वेव तदुवास। स एवास्य सैन्यङ्गः । जै १, ३५५ ।

शान्त- प्रतिषिक्तं पशुकामस्य तच्छान्तं मिथुनमापश्च मयश्च पयश्च । काठ ६,३ ।

शान्ति-

१. यत्स्थावराणां ( अपां ) गृह्णाति, शान्त्याऽ निर्मार्गाय । मै ४, ४, १ ।

२. शान्तिर्वै शैशवम् (साम)। जै ३, १०२ ॥ [°न्ति- अप्- १०; ४०; ७०; ११३; ११४; ११७;२१३;२४९; एकाह- ३; नाराशंसी-; प्राण- १५१; मित्र- २६; रेवती- ९; वायु- ८२; शमीमयी- द्र.]।

शाम्मद- ( <शम्मद्- )

१. शम्मद्वा एतेनाङ्गिरसोऽञ्जसा स्वर्गं लोकमपश्यत् स्वर्गस्य लोकस्यानुख्यात्यै स्वर्गाल्लोकान्न च्यवते तुष्टुवानः । तां १५, ५, ११ ।

२. ते ( देवाः ) अब्रुवञ्छं वै न इमे लोका अमादिषुरिति । तदेव शाम्मदस्य शाम्मदत्वम्। जै ३, १६४ ।

शारि- सरस्वत्यै शारिः (+ श्येता [तैसं.] ) पुरुषवाक् । तैसं ५, ५, १२, १; मै ३, १४, १४; काठ ४७, २ ।

शार्कर- शर्कर- द्र. ।

शार्ग- ब्रह्मणे शार्गः । काठ ४७, ९ ।

शार्दूल-

१. उरसो ऽधि शार्दूलः (अजायत)। जै २, २६७ ।

२. मृत्योर्वा एष वर्णः । यच्छार्दूलः । तै १, ७, ८, १ ।

३. यदक्षिभ्यां ( सोमो राजा इयाय ) तौ शार्दूलौ ( अभवताम् ) । जै २, १५७ ।

४. ( इन्द्रस्य ) यदक्षीभ्यां ( सोमोऽमुच्यत ) तौ शार्दूलौ ( अभवताम् )। काठ १२, १० । [°ल- इन्द्र- ३३४; ३३५; गौर- ३; प्रतिप्रस्थातृ- ३; रोहित- द्र.]।

शाला-

१. यथा शालायै पक्षसी मध्यमं व९शमभिसमायच्छन्ति । तै १, २, ३, १ ।

२. यथा वै शालैव९ संवत्सरस्तस्य यथा पक्षसी एवं पक्षसी, यथा मध्यमो व९श एवं दिवाकीर्त्य९ यथा वा इद९ शालायाः पक्षसी मध्यम९ व९शमभिसमागच्छन्त्येव९ वा एतत् संवत्सरस्य पक्षसी दिवाकीर्त्यमभिसन्तनोति । मै ४, ८, १० ।

शास- असि- १; वज्र- २६ द्र. ।

शिशुमार-

१. अनूकाच्छिशुमारः ( अजायत ) । जै २, २६७ ।

२. शिंशुमारो वै समुद्रमतिपारयितुमर्हति । जै ३, १९४ ।

३. सिन्धोः शिंशुमारः ( शिशु° [काठ.] ) । तैसं ५, ५,११,१; काठ ४७, १ ।

**शिक्य-** ऋतु- १६; दिश्- ३१; प्राण- १४६ द्र. ।

**शिखा-**

१. तस्मात् सत्रिणो द्वादशे मास्यपि शिखाः प्रवपन्ते । जै २,३७४ ।

२. तस्य ( विष्णोः ) इयमेव शिखा स्तुपः । माश १, ३, ३, ५ ।

३. शिखामनु प्रवपन्त ऋद्ध्या अथो रघीयांऽसः सुवर्गं लोकमयामेति । तैसं ७, ४, ९, १ । [°खा- यशस्- २; यूप- २२ द्र.] ।

**शिपि-** पशु- ११५ द्र. ।

**शिपिविष्ट-**

१. यज्ञो वै विष्णुः शिपिविष्टः । तां ९, ७, १०; काश ३, २, ३, ३ ।

२. यद्वै यज्ञस्यातिरिच्यते विष्णुं तच्छिपिविष्टमभ्यतिरिच्यते'''अतिरिक्तऽशिपिविष्टम् । काठ ३४, ४ ।

३. यमुपैत्सीत्तमपाराप्सीत्तच्छिपितमिव यज्ञस्य भवति तस्माच्छिपिविष्टायेति । माश ११, १, ४, ४ ।

४. शिपिविष्टः ( सोमः ) आसादितः । तैसं ४, ४,९, १ ।

५. शिपिविष्टः ( सोमः ) ऊरा आसाद्यमानः । काठ ३४, १४ । [°ष्ट- पशु- १८६; २६२; पशुष्ठा- १ द्र.] ।

**शिम्युट-** बृहस्पतये शिम्युटः । काठ ४७, ७ ।

**शिरस्-**

१. अथ यज्ञायज्ञीयम् । शिर एव तत् । अध्यूढं वा एतदन्येष्वङ्गेषु यच्छिरः । ''''''उपरि ॥ एतद् अन्येभ्योऽङ्गेभ्यो यच्छिरः । जै १,२५४ ।

२. अमेध्यमेतच्छिरो यदशिखम् । काठसं १४१ : ४ ।

३. असौ वा आदित्यो घर्मः, एष इन्द्रः, एष शिरः प्रजानाम् । काठ १०,८ ।

४. अर्वाग्बिलश्चमस ऊर्ध्वबुध्नः । इदं तच्छिरः । माश १४, ५, २, ५ ।

५. ऊर्ध्वं त्वेवोदसर्पत्तच्छिरोऽश्रयत, यच्छिरोऽश्रयत तच्छिरोऽभवत्तच्छिरसः शिरस्त्वम् । ऐआ २, १, ४ ।

६. चतुर्विधऽहि शिरः प्राणश्चक्षुः श्रोत्रऽवाक् । मै ३, २, ९ ।

७. तस्मादष्टाकपालं पुरुषस्य शिरः । तै ३, २, ७, ४ ।

८. तस्माद् इदं शिरो न मेद्यतोऽनुमेद्यति, न कृश्यतोऽनुकृश्यति । जै २, ४०७ (तु. तां ५, १,६; छु ९४:६;७) ।

९. त्रिधातु हि शिर इति । तै ३, ३, ७, ११ ।

१०. त्रिवृतं ह्येव शिरो भवति त्वगस्थि मज्जा मस्तिष्कम् । गो १, ५, ३ ।

११. त्रिवृद्धि शिरः । माश ८, ४, ४,४;६,२,६ ।

१२. त्रिवृद्ध्येव शिरो लोम त्वगस्थि । तां ५, १, ३ ।

१३. द्विकपालऽहि शिरः । माश १०, ५, ४, १२ ।

१४. नवकपालं वै शिरः। ऐआ १, ४, १।
१५. नवकपालो भवति। तस्मान्नवधा पुरुषस्य शिरो विष्यूतम्। काठ २४, ८; क ३८, १।
१६. नवधा शिरो विष्यूतम्। तैसं ६, २, १, ४।
१७. पुरस्तात् पुरुषस्य शिरो वर्षीयः पश्चात् क्रधीयः। काठ २५, ८; क ४०, १।
१८. प्रादेशमात्रमिव हि शिरः। माश ७, ५, १, २३; १४, १, २, १७।
१९. मध्ये संगृहीतमिव हि शिरः। माश १४, १, २, १७।
२०. यच्छ्रियꣳ समुदौहंस्तस्माच्छिरस्तस्मिन्नेतस्मिन् प्राणा अश्रयन्त तस्माद्वेवैतच्छिरः। माश ६, १, १, ४।
२१. शिर एव षष्ठी चितिः। माश ८, ७, ४, २१।
२२. शिर एवास्य त्रिवृत्। तस्मात्तत्त्रिविधं भवति त्वगस्थि मस्तिष्कः। माश १२, २, ४, ९।
२३. शिरस्सूक्तम्। जैउ ३, २, ४, ३।
२४. शिरो वा अग्रे सम्भवतः सम्भवति चतुर्द्धाविहितं वै शिरः प्राणश्चक्षुः श्रोत्रं वाग्। तां २२, ९, ४।
२५. शिरो हविर्धानम्। मै ३, ८, ८; ४, ५, ९।
२६. शिरो हि प्रथमं जायमानस्य जायते। माश ८, २, ४, १८; १०, १, २, ५।
२७. श्रीः वै शिरः। माश १, ४, ५, ५; २, १, २, ८; ४, २, ४, २०॥ [°रस्- अग्नि- ७०४; आघार- ४-६; आतिथ्य- ३; आदित्य- २५; ३०४; उखा- १५; उषस्- १; केश- १; ५; गायत्र- २; १४; ३२; ३३; गायत्री- २३; ४६; ११९; घर्म- ७; घर्मवत्-; त्रिवृत्- २१; पुरोडाश- २७; प्रवर्ग्य- ११;१२;१४;१६; प्राची- १९; प्राण- ५४;८०;२८९; यज्ञ- १७६; वसन्त- ३; ८ द्र.]।

शिल्प-

१. आत्मसंस्कृतिर्वाव शिल्पानि छन्दोमयं वा एतैर्यजमान आत्मानं संस्कुरुते। ऐ ६, २७।
२. आत्मसंस्कृतिर्वै शिल्पानि आत्मानमेवास्य तत्संस्कुर्वन्ति। गो २, ६, ७।
३. तौ वा एताविन्द्रस्तोमौ (अभिजिद्विश्वजितौ) वीर्य्यवन्तौ शिल्पं वा एतौ नाम स्तोमावास्ताम्। तां १६, ४, ८।
४. त्रिवृद्वै शिल्पं नृत्यं गीतं वादितमिति। कौ २९, ५।
५. प्राणाः शिल्पानि। कौ २५, १२; १३।
६. यद्वै प्रतिरूपं तच्छिल्पम्। माश ३, २, १, ५।
७. शिल्पैर्हि सर्वं कुर्वन्ति। काठसंक ८: ५।

शिव-

१. अग्ने त्वं नो अन्तम उत त्राता शिवो भवा वरूथ्यः। काठ ७, ८।
२. अग्ने··· पावकोऽस्मभ्यꣳ शिवो भव। मै २, १०, १।
३. शिवो भव प्रजाभ्यो मानुषीभ्यस्त्वमङ्गिरः। ईश्वरो वा एषो (अग्निः) ऽन्तरिक्षसद् (विद्युत् भूत्वा प्रजा हिꣳसितोर्यदाह 'शिवो भव प्रजाभ्यः' इति, प्रजाभ्य एवैनꣳ (अग्निम्) शिवमकः। मै ३, १, ६।

४. स ( परमात्मा ) ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमः स्वराट्। तैआ १०, ११, २।
[°व- अग्नि- २७५; ३१४; ७०५; ७२२; चन्द्रमस्- ६; जातवेदस्- २ द्र.]।

शिशिर-

१. उद्यता त्रयोदश्याहुतिरासीदथ शिशिरमसृज्यत, तस्मादेतदृतूनामशान्तं क्रूरमहुताद्धि समभवदहुतादसृज्यत। मै १, ८, २।

२. तामाहुतिमप्सु प्रासिञ्चत्। ततः शिशिरमजायत। तस्मात्तत् क्रूरतमम्। क ४, १।

३. या इमाः पुरुष आपस्त शिशिरः ···या अमूर्दिव्या आपस्त शिशिरः। जै २, ५१।

४. शिशिरं प्रतिष्ठानम्। मै ४, ९, १८।

५. शिशिरष् षष्ठः ( ऋतूनाम् )। ······अथैष परिचक्ष्यैव यच् छिशिरः कृशगुः कृशपुरुषः। तमनु षडहः प्रतितिष्ठति। जै २, ३५६।

६. शिशिराय विकरान् आलभते। काठ ५०, ४।

७. शिशिरे सौरीम् ( आलभते )। मै २, ५, २॥ [°र- अग्नि- ७०६; ऐन्द्रावार्हस्पत्य- ६; ओषधि- ८२; ग्रीष्म- २३; निदाघ- १; पिशङ्ग- १ द्र.]।

शैशिर (ऋतु-)-

१. अवलिप्तास्त्रयश्शैशिराः। काठ ५०, ३।

२. तपश्च तपस्यश्च शैशिरा ऋतू। मै २, ८, १२।

३. देवश्रूस्त्वं देव घर्म देवान् पाहीत्याह शैशिरावेवास्मा ऋतू कल्पयति। तैआ ५, ६, ७।
[°र- पशु- ११८; रेवती- १५ द्र.।

शिशु- अयं वाव शिशुर्योऽयं मध्यमः प्राणः। माश १४, ५, २, २॥ [°शु- मातृ- २ द्र.]।

शिशुमार- समुद्राय शिशुमारान् आलभते। मै ३, १४, २ (तु. मै ३, १४, ११)।

शिश्न-

१. वृत्तमिव हि शिश्नम्। माश ७, ५, १, ३८।

२. शिश्नं वै शोचिष्केश ९ शिश्न९ हीदं शिश्निनं भूयिष्ठ९ शोचयति। माश १, ४, ३, ९॥
[°श्न- उलूखल- ४; परिस्रुच्-; प्रजापति- ४७; बृहती- १; ३३; वयस्- १४ द्र. ]।

शीत- क्षेमो वै राष्ट्रस्य शीतम् (शीतो वातः [तै.])। माश १३, २, ९, ५; तै ३, ९, ७, २।

शीतरूर- इन्द्र- ३७७ द्र.।

शीर्ष- प्राणो ऽग्निः शीर्षम्। कौ ८,१॥ [°र्ष- प्रायणीयोदयनीय- १ द्र.]।

शीर्षतस्, शीर्षतो वा ऽअग्रे जायमानो जायते। माश ३,४,१,१९॥ [°तस् त्रिवृत्-४९ द्र.]।

शीर्षन्-

१. एकं वा अग्रे शीर्ष्णः कपाल९ संभवत्यथ द्वितीयमथ तृतीयमथ चतुर्थमथ पञ्चममथ षष्ठमथ सप्तममथाष्टमम्। मै ४, १, ८; काठ ३१, ६; क ४७, ६।

२. तस्माच् छीर्षन् प्राणो हितः। जै २, ४१५।

३. ता एताः शीर्षञ्छ्रियः श्रिताश्चक्षुः श्रोत्रं मनो वाक् प्राणः। ऐआ २, १, ४।

४. त्रीणि वा अस्य शीर्ष्णः कपालानि। शांआ २, २।

५. पुरुषः सर्वाण्यन्यानि शीर्ष्णोऽङ्गानि प्रत्यचति, शिर एव न। तैसं ७, ५, ८, २।

६. यस्माच्छीर्षण्येवाग्रे पलितो भवति । माश ११, ४, १, ६ ।

७. सर्वा उ ह वै देवताश्शीर्षन्नेव – इमे वै वसव इमे रुद्रा इम आदित्या इमे विश्वे देवाः । अयमेवायं ( पृथिवी- ) लोक इदमन्तरिक्षम् , अयमसौ ( द्यु- ) लोक इमा दिश श्रोत्रम् इदं रथन्तरम् , इदं वामदेव्यम्, इदं बृहद्, इदं यज्ञायज्ञीयम्, तदेच्छीर्ष्णा प्रतिपद्यमानस्य सर्वाभिर्देवताभिस्सर्वैरेभिर्लोकैस्सर्वैस्सामभिरनन्तरायं प्रतिपद्यते । जै २, १७ । [°र्षन्- अदिति- ५; आत्मन्- ८४; गायत्र- २; दिव्- १६६; निर्ऋति- ८; ९; प्राण- ५०; ३०० द्र.] ।

शीर्षण्य- प्राण- २९९ द्र. ।

शुक-

१. यामं शुकं हरितमालभेत । गो २,२,१ ।

२. शुकान् पित्तेन ( प्रीणामि ) । तैसं ५, ७, २३, १; काठ ५३, १३ ।

३. स ( शुकः ) उ वयसामन्नादतमः । ऐआ १, २, ४ ।

४. सरस्वते शुकः ( + श्येतः [तैसं.]; श्वेतः [काठ.] ) पुरुषवाक् । तैसं ५, ५,१२,१; मै ३,१४, १४; काठ ७, २ ।

शुक्त- वायु- ९३ द्र. ।

शुक्र-

१. अत्ता वै शुक्रः ( ग्रहः ) । माश ५, ४, ४, २० ।

२. अस्य ( अग्नेः ) एवैतानि ( घर्मः, अर्कः, शुक्रः, ज्योतिः, सूर्यः ) नामानि । माश ९, ४,२,२५ ।

३. एतौ ( शुक्रश्च शुचिश्च ) एव ग्रैष्मौ ( मासौ ) स यदेतयोर्बलिष्ठं तपति तेनो हैतौ शुक्रश्च शुचिश्च । माश ४, ३, १, १५ ।

४. तद्वाऽ एष एव शुक्रो य एष ( आदित्यः ) तपति तद्यदेष तपति तेनैष शुक्रः । माश ४, २, १, १ ।

५. द्वितीये (षष्ठे [तैसं ७, २, ८, ३]) ऽहञ्छुक्रो गृह्यते । तैसं ७, २, ८, १ ।

६. बृहद्रथन्तरयोस्त्वा स्तोमेन त्रिष्टुभो वर्तन्या शुक्रस्य वीर्येण । तैसं २, ३, १०, २ ।

७. यजमानदेवत्यो वै शुक्रः । काठ २७, ८ ।

८. यत् सप्तमेऽहञ्छुक्रो गृह्यते स्व एवैनमायतने गृह्णाति । तैसं ७, २,८, ४ ।

९. शुक्रं ९ हिरण्यम् । तै १, ७, ६, ३ ।

१०. शुक्रं ९ ह्येतच्छुक्रेण क्रीणाति यत्सोमं ९ हिरण्येन । माश ३, ३, ३, ६ ।

११. शुक्रः (निर्म्मलः) सोमः । तां ६, ६, ९; माश ३, ३, ३, ६ ।

१२. शुक्रो देवेषु रोचते । मै २, ७, ५ ।

१३. सत्यं वै शुक्रम् । माश ३,९,३,२५ ॥ [°क्र- अप्- २५०; अमृत- ३०; आदित्य- २६; ५३; १९०; २१७; २२२; चक्षुस्- २६; ज्योतिस्- १७; तेजस्- १९; त्रिष्टुभ्- १६; त्रैष्टुभ- ९; बृहती- ४१; मन्थिन्- १; ५; यज्ञ- १२६ द्र.] ।

शुक्र-पा- प्रजा- ३१ द्र. ।

शुक्र-पात्र-

१. शुक्रपात्रमेवानु मनुष्या जायन्ते। माश ४, ५, ५, ७।

२. शुक्रपात्रं प्रयुज्यतेऽन्नीरेव तत् प्रजा अनुप्रजायन्ते। काठ २८, १०; क ४५, १।
[°त्र- पुरुष- ६ द्र.]।

शुक्र-यजुस्- तेषां (शुक्रियाणां साम्नां) यो रसोऽत्यक्षरत्। तानि शुक्रयजूꣳष्यभवन्। तैआ ५,१०, १।

शुक्रामन्थिन्-

१. एतावान् वै यज्ञो यावच्छुक्रामन्थिनौ। काठ २७, ७।

२. चक्षुषी वा एते यज्ञस्य यच्छुक्रामन्थिनौ। काठ २७, ७।

३. शुक्रामन्थिनौ (अनु) पुरुषाः (प्रजायन्ते)। तैसं ६, ५, १०, १।

४. शुक्रामन्थिनौ वा अनु प्रजाः प्रजायन्ते। तैसं ६, ४,१०,४॥ [°न्थिन्- ऐन्द्र- ३१; चक्षुस्- ३१; ३५; ५३; ६५; निष्केवल्य- ३ द्र.]।

शुक्रिय- प्रजापतिं वै देवाः शुक्रं पयोऽदुह्रन्। तदेभ्यो न व्यभवत्। तदग्निर्व्यकरोत्। तानि शुक्रियाणि सामान्यभवन्। तैआ ५, १०, १॥ [°य- असुर्य- ३; पशु- १८७ द्र.]।

शुक्ल (वर्ण-)-

१. तद्यच्छुक्लं तद्वाचो रूपमृचोऽग्नेर्मृत्योः। जैउ १, ८, १, ८।

२. शुक्लꣳसाम। काठ २३, ३॥ [°क्ल- अहन्- १८; २५; ३६; आदित्य- ३००; ३१९; केश- २; यव- २४ द्र.]।

शुच्- अग्नि- ७०७; घर्म- १४ द्र.।

शुचि-

१. यच्छुचये, पूत एवास्मिन् रुचं दधाति। मै १, ६, ८।

२. यच् (अग्नेः) छुचि (रूपम्) तद्दिवि (न्यधत्त)। माश २, २, १, १४।

३. या वाजिन्नग्नेः शुचिः प्रिया तनूस्तामावह। मै १,६,२।

४. (अग्नेः) या शुचिर् (तनूरासीत्) अमुमादित्यं तया (प्राविशत्)। काठ ८, ९।

५. वीर्य्यं वै शुचि यद्वाऽअस्य (अग्नेः) एतदुज्ज्वलत्येतदस्य वीर्यꣳ शुचि। माश २,२,१,८।
[°चि- अग्नि- ६५२; आदित्य- ५४; आयुस्- ४२; शुक्र- ३ द्र.]।

शुचि-जिह्व- अग्नि- ७०८ द्र.।

शुचि-व्रत- अन्नं वै देवाश् शुचिव्रतमित्याचक्षते। जै ३, १७४।

शुद्ध (सामन्-)- इन्द्र- १६३ द्र.।　　शुद्धाशुद्धीय (सामन्-)- इन्द्र- १५५ द्र.।

शुन-

१. यद्वै समृद्धं तच्छुनम्। माश ७, २, २, ९।

२. या वै देवानाꣳ श्रीरासीत् साकमेधैरीजानानां तच्छुनम्। माश २, ६, ३, २।

**शुनस्कर्णस्तोम-** एतेन (यागेन) वै शुनस्कर्णो वाष्किहोऽयजत तस्माच्छुनस्कर्णस्तोम इत्याख्यायते। तां १७, १२,६।

**शुनासीर-**

१. शान्तिर्वै भेषजं शुनासीरौ। कौ ५, ८।

२. शुनासीरावृतुभिः संविदानौ। इन्द्रवन्तौ। तै २, ४, ५, ७।

३. संवत्सरो वै शुनासीरः। गो २,१,२६॥ [°र- इन्द्र- ३२;११४; इन्द्राशुनासीर- १; २ द्र.]।

**शुनासीरीय-** अथ यच्छुनासीरीयेण यजते, वायुरेव तद् भवति, वायोः सायुज्यꣳसलोकतां जयेति। काश १, ६, ४, ९।

**शुनासीर्य-**

१. अथ यस्माच्छुनासीर्येण यजेत। या वै देवानाꣳश्रीरासीत् साकमेधैरीजानानां विजिग्यानानां तच्छुनम्, अथ यः संवत्सरस्य प्रजितस्य रस आसीत्तत्सीरम्। माश २, ६, ३, २।

२. अथैष शुनासीर्यो, यद्वा इन्द्रस्य वृत्रं जघ्नुष इन्द्रियं वीर्यमासीत् तच्छुनम्। यत्संवत्सरस्य प्रजितस्य पयस्तत् सीरम्। जै २, २३४।

३. शुनासीर्यो द्वादशकपालः पुरोडाशो भवति। माश २,६, ३, ५।

४. संवत्सरमेव शुनासीर्येणाप्येति। जै २, २३४।

**शुन्ध्यु-** मार्जालीय- २ द्र.।

**शुल्क** ( सामन्-)- अथ शुल्कः। शुल्केन वै देवाश्शुल्कोऽभवन्। शुल्कोऽसामेति सत्रम् आसते। शुल्क एव भवन्ति। तच्छ्रीर्वै शुल्कः। जै ३, २५८।

**शुश्रुवस्-** नृचक्षस्- ४ द्र.।

**शुष्ण** ( दानव-)- शुष्णो दानवः प्रत्यङ् पतित्वा मनुष्याणामक्षीणि प्रविवेश स एष कनीनकः कुमारक इव परिभासते। माश ३, १, ३, ११।

**शूद्र-**

१. अग्निहोत्रमेव शूद्रो न दुह्यात्। क ४७, २।

२. अथ यद्यपः शूद्राणां स भक्षः शूद्रांस्तेन भक्षेण जिन्विष्यसि शूद्रकल्पस्ते प्रजायामाजनिष्यते- ऽन्यस्य प्रेष्यः कामोत्थाप्यो यथाकामवध्यो, यदा वै क्षत्रियाय पापं भवति शूद्रकल्पोऽस्य प्रजायामाजायत ईश्वरो हास्माद् द्वितीयो वा तृतीयो वा शूद्रतामभ्युपैतोः स शूद्रतया जिज्यूषितः। ऐ ७, २९।

३. अयज्ञियान्वा ऽ एतद्यज्ञेन प्रसजति शूद्रांस्त्वद्यांस्त्वत्। माश ५, ३, २, ४।

४. असतो वा एष सम्भूतः। यच्छूद्रः। तै ३, २, ३, ९।

५. असुर्यः शूद्रः। तै १, २, ६, ७।

६. आनुष्टुभः (+वै [जै १, २६३]) शूद्रः। जै १, १०२।

७. उत्थाता शूद्रो दक्षः कर्मकर्त्ता ( आजायते स्म )। जै २, २६६।

८. तपो वै शूद्रः। माश १३, ६, २,१०।

९. तस्मात्पुरस्तात्प्रत्यञ्चः शूद्रा अवस्यन्ति। तै ३, ३, ११,२।

१०. पत्त एकवि ँ शं निरमिमीत, तमनुष्टुप् छन्दो ऽन्वसृज्यत वैराज ँ साम, शूद्रो मनुष्याणामश्वः पशूनां, तस्मात्तौ भूतस ँ क्रामिणावश्वश्च शूद्रश्च, तस्माच्छूद्रो यज्ञे ऽनवक्लृप्तो, न हि देवता अन्वसृज्यत; तस्मात्पादावुपजीवतः पत्तो ह्यसृज्येताम्। तैसं ७, १, १, ५-६।

११. पद्भ्या ँ शूद्रो अजायत। तैआ ३, १२,६; काठसंक १०१ : ५।

१२. यच्छूद्रे यदर्ये एनश्चकृमा वयम्···, तस्यावयजनमसि (स्वाहा)। तैसं १, ८, ३, १-२; काठ ३८,५।

१३. (प्रजापतिः पद्भ्यामेव प्रतिष्ठायाः) शूद्रं मनुष्यम् (असृजत)। जै १, ६९।

१४. स पत्त एव प्रतिष्ठाया एकवि ँ शमसृजत तमनुष्टुप्छन्दोऽन्वसृज्यत न काचन देवता शूद्रो मनुष्यस्तस्माच्छूद्र उत बहुपशुरयज्ञियो विदेवो हि, न हि तं काचन देवतान्वसृज्यत तस्मात् पादावनेज्यन्नातिवर्द्धते पत्तो हि सृष्टः। तां ६, १,११ ॥ [°द्र- अनुष्टुप्छन्दस्- ३; अनृत- ७; असत्- ५; एकविंश- ७; करीर- २; ग्रामणी- ३; पशु- ३१७; ब्राह्मण- ६०; रासभ- ३; वैश्य- १५; १८ द्र.]।

**शूद्रार्य-** अहोरात्र- ३९ द्र.।

**शौद्र-** तद् यदार्येण वर्णेन शौद्रं वर्णं ज्यापयन्त्येतमेव (आदित्यं) तद् द्विषतो भ्रातृव्यस्य वृञ्जते। जै २, ४०५ ॥ [°द्र- पूषन्- ५० द्र.]।

**श्टङ्ग-** चत्वारि श्टङ्गा इति वेदा वा एतदुक्ताः। काठसंक २५ः १।

**श्टत-,श्रित-**

१. अथ यदेन ँ (इन्द्रं देवाः) श्टतेनैवाश्रयंस्तस्माच्छृतम्। माश १, ६, ४,८।

२. तदस्मै (इन्द्राय) श्टतमकुर्वन्निन्द्रियं वावास्मिन् वीर्यं तदश्रयन्, तच्छृतस्य श्टतत्वम्। तैसं २,५, ३, ४ ॥ [°त- माध्यन्दिन- २४ द्र.]।

**शेप-** शेपो वाजिनेन। मै ३,१५,९ ॥ [°प- गन्धर्व- ४; ग्रावन्- ३ द्र.]।

**शैशव** (सामन्-)-

१. तदेतच् चक्षुष्यं साम। जै ३, १०२।

२. शान्तिर्वै शैशवम्। जै ३, १०२।

३. शिशुर्वा आङ्गिरसो मन्त्रकृतां मन्त्रकृदासीत् स पितॄन् पुत्रका इत्यामन्त्रयत तं पितरोऽब्रुवन्नधर्मं करोषि यो नः पितॄन् सतः पुत्रका इत्यामन्त्रयस इति सो ऽब्रवीदहं वाव पिताऽस्मि यो मन्त्रकृदस्मीति ते देवेष्वपृच्छन्त ते देवा अब्रुवन्नेष वाव पिता यो मन्त्रकृदिति तद्वै स उदजयदुज्जयति शैशवेन तुष्टुवानः। तां १३,३, २४ ॥ [व- वृत्र- २१ द्र.]।

**शोचिस्-** ऊर्ध्वा शुक्रा शोची ँ ष्यग्नेरित्यूर्ध्वानि ह्येतस्य (अग्नेः) शुक्राणि शोची ँ ष्यर्ची ँ षि भवन्ति। माश ६, २, १, ३२।

**शोचिष्केश-** शोचन्तीव ह्येतस्य (अग्नेः) केशाः। माश १,४,१,३८ ॥ [°श- शिश्न- २ द्र.]।

**शोशुचान-** वि पाजसा पृथुना शोशुचान इति। वि पाजसा पृथुना दीप्यमान इत्येतत्। माश ६, ४, ४, २१।

**शौक्त-**

१. तद् यद् (अङ्गिरसः) शुचमपाघ्नत तच्छौक्तस्य शौक्तत्वम्। जै ३, ५३।

२ यद् उ शुक्तिराङ्गिरसो ऽपश्यत् तस्माच्छौक्तमित्याख्यायते। जै ३, ५३।

३. शुक्तिर्वा एतेनाङ्गिरसोऽञ्जसा स्वर्गं लोकमपश्यत् स्वर्गस्य लोकस्यानुख्यात्यै स्वर्गाल्लोकान्न च्यवते तुष्टुवानः। तां १२,५,१६।

**शौद्र**- शूद्र- द्र.।

**शौनकयज्ञ**- स एष (शौनकयज्ञः) तुस्तूर्षमाणस्य यज्ञः। कौ ४,७।

**श्नुष्टि**-

१. अथ ह वा अग्निर्वैश्वानर इत्थमेवास यथेमेऽङ्गाराः, सोऽकामयत श्नुष्टयो मे जायेरन्नर्चय इति, स एतत् सामापश्यत्''' ते ह वा अस्य श्नुष्टयो यदर्चयस्तेजो वा अस्य तद् ब्रह्मवर्चसमजायत। जै ३,१६५।

२. श्नुष्टिर्वा एतेनाङ्गिरसोऽञ्जसा स्वर्गं लोकमपश्यत् स्वर्गस्य लोकस्यानुख्यात्यै स्वर्गाल्लोकान्न च्यवते तुष्टुवानः। तां १३, ११,२२।

**श्नौष्ट** (सामन्)- अग्नि- २९७ द्र.।

**श्मशान**- अथास्मै श्मशानं कुर्वन्ति गृहान् वा प्रज्ञानं वा यो वै कश्च म्रियते स शवस्तस्माऽएतदन्नं करोति तस्माच्छवान्न ँ शवान्न ँ ह वै तच्छ्मशानमित्याचक्षते परोक्ष ँ श्मशा उ हैव नाम पितॄणामत्तारस्ते हाऽमुष्मिँल्लोकेऽकृतश्मशानस्य साधुकृत्यामुपदम्भयन्ति तेभ्य एतदन्नं करोति तस्माच्छ्मशान्न ँ ह वै तच्छमशानमित्याचक्षते परोऽक्षम्। माश १३, ८,१, १।

**श्मशान-चित्**-, °**चिति**- पितृलोक- १३ द्र.। **श्मश्रु**- आदित्य- ११०; केश- १ द्र.।

**श्याम**-

१. द्वे वै श्यामस्य पशोः रूपे शुक्लं चैव लोम कृष्णं च। माश ५,१,३,९; २,५.८।

२. श्याम इव पाप्मा। काठ १३, ६॥ [°म- अन्न- १८०; अन्नकाम- ४; अहन्- १५; दुश्चर्मन्-२; पौष्ण- ३; ४;७;१०;११ द्र.]।

**श्यामशवल**- श्यामशबलौ मतस्नाभ्याम्। तैसं ५,७, १९, ९; काठ ५३,९। [°ल- अहोरात्र- ३ द्र.]।

**श्यामाक**-

१. अथ सोमाय वनस्पतये श्यामाकं चरुं निर्वपति। माश ५,३,३,४।

२. इन्द्रस्त्वष्टुः सोममभीषहाऽपिबत् स विष्वङ् व्यार्च्छत्, स इन्द्रियेण सोमपीथेन व्यार्ध्यत स यदूर्ध्वमुदवमीत् ते श्यामाका अभवन्। तैसं २,३,२,६।

३. इन्द्रो वै त्वष्टुः सोममपिबदनुपहूयमानस्तस्योर्ध्वः सोमपीथोऽपतत्ते श्यामाका अभवन्। मैसं २,२,१३।

४. एते वै सोमस्यौषधीनां प्रत्यक्षतमां यच्छ्यामाकाः। माश ५, ३,३,४।

५. तस्य (यज्ञस्य) स्विष्मियाणस्य तेजोऽपाक्रामत्। तद्देवा ओषधीषु न्यमृजुः। ते श्यामाका अभवन्। स्मयाका वै नामैते। तत्स्मयाकानां ँ स्मयाकत्वम्। तैब्रा ५, १,३-४।

६. तासां (ओषधीनां) एष उद्धारो यच्छ्यामाकः। गो २, १,१७।

७. लोमभ्य एवास्य चित्तमस्रवत्। ते श्यामाका अभवन्। माश १२,७, १,९,

८. श्यामाकः (चरुः) भवत्येष वाव स सोमः। तैसं २, ३, २,७।

९. स (इन्द्रः) यत् परावमीत्त श्यामाका एष वाव स सोमपीथो यच्छ्यामाकः। काठ ११, १।

१०. सौम्य ँ श्यामाकं चरुं, वासो दक्षिणा। तैसं १,८,१,२।
११. सौम्यं श्यामाकं चरुं निर्वपति। तै १,६,१,११। [°क- नीवार- ३; मृगशीर्ष-२; वनस्पति- २० द्र.]।

श्यावाश्व (सामन्- )-

१. अथ श्यावाश्वं स्वर्ग्यं साम। जै २, १९५।
२. तदेतत् स्वर्ग्यं साम··· ···। यद्ध श्यावाश्व आर्चनानसोऽपश्यत् तस्माच् छ्यावाश्वम् इत्याख्यायते। जै १,१६४।
३. श्यावाश्वमार्चनानस ँ सत्रमासीनं धन्वोदवहन् स एतत्सामापश्यत्तेन वृष्टिमसृजत ततो वै स प्रत्यतिष्ठत् ततो गातुमविन्दत गातुविद्वा एतत्साम। तां ८, ५,९।

श्येत- सावित्रोऽष्टाकपालः (+क्षत्तुर्गृहे [मै.]) श्येतो दक्षिणा। मै २,६,५;१३; काठ १५,९।

श्यैत (सामन्- )-

१. इदम् (पृथिवी) एव श्यैतम्। रथन्तरस्यैषा तनूः। जै २,४३७।
२. ते (प्रजापतिनाऽभिव्याहृताः पशवः) श्येत्या अभवन् यच्छ्येत्या अभव ँ स्तस्माच्छ्यैतम्। तां ७,१०,१३।
३. पशुकाम एतेन (श्यैतेन साम्ना) स्तुवीत। तां ७,१०,१४।
४. श्यैतेन श्येती अकुरुत तच्छ्यैतस्य श्यैतत्वम् ···श्यैतेन श्येतीकुरुते। तैसं ५, ५, ८, १; तै १,१, ८, ३।
५. स ( प्रजापतिः ) अब्रवीच् छ्येती वा इमान् पशून् अकृषीति तदेव श्यैतस्य श्यैतत्वम्··· श्येतीकृता एनं पशव उपतिष्ठन्ते··· य एवं वेद। जै १, १४८। [°त- नौधस- १; २; पशु- १८७; पशुकाम- ७; रथन्तर- २३; ३७ द्र.]।

श्येन-

१. इन्द्रो वा एतेन साम्ना श्येनो भूत्वा असुरानपावपत्। तद्धेव श्येनस्य श्येनत्वम्। जै ३,१५८।
२. रस एवास्य (इन्द्रस्य) हृदयाद्विषिरस्रवत् स श्येनोऽपाष्ठिहाभवद्वयसा ँ राजा। माश १२,७,१,६।
३. तस्य (शुष्णस्यासुरस्य) इन्द्रश्श्येनो भूत्वास्यादमृतं निरमुष्णात् तस्मादेष (श्येनः) वयसां वीर्यवत्तम इन्द्रस्य ह्येषैका तनूरमृतमेष बिभर्त्ति य एवं वेद। काठ ३७, १४।
४. ते (देवाः) अब्रुवन् स्वर्गं लोकं गत्वा श्येनो वाव नो भूत्वेदं साम स्वर्गं लोकमवाक्षीदिति। तदेव श्येनस्य श्येनत्वम्। जै ३,१५८।
५. बाहुभ्याम् (प्रेङ्खम्) अधिरोहेदेवं श्येनो वयांस्यभिनिविशत एवं वृक्षं स उ वयसां वीर्यवत्तमः। ऐआ १,२,४।
६. यदाह श्येनोऽसीति सोमं वा एतदाहैष ह वा अग्निर्भूत्वाऽस्मिँल्लोके संश्यायति। तद्यत्संश्यायति तस्माच्छ्येनस्तच्छ्येनस्य श्येनत्वम्। गो १,५, १२।

७. श्येनाय त्वा सोमभृते (निर्वपामि)। तैसं १, २, १०, १; मै १,२, ६; काठ २,७; ३, १०; क २,१७।
८. श्येनेन पतत्रिणः (अन्वाभवत्)। काठ ३५,१५; ४३,४।
९. श्येनो वै वयसां प्रतिष्ठः श्येन एव भूत्वा सुवर्गं लोकं पतति। तैसं ५, ४, ११,१। [°न- गायत्रछन्दस्- ४; ६; गायत्री- ४४; गृध्र-; वक्षस्- १;२; वयस्- ४;१५; १८ द्र.]।

श्येन-चित्- श्येनचितं पक्षिणं चिन्वीत स्वर्गकामः। काठ २१,४।

श्यैनेय- श्यैनेयश् (ऋषभः) श्येतोऽयश्शृङ्गोऽसुराणाम्। काठ १३,४ (तु. मै २,५,९)।

श्रत् यद्वस्ता अवनिज्य स्नात्वा श्रदिव धत्ते, य एवाप्स्वग्निः स एवैनं तत्पावयति स स्वदयति।

श्रद्धा-

१. आपश्श्रद्धा, श्रद्ध वा अस्मै देवाश्श्रन्मनुष्या दधते यस्यैवं विद्वानपः प्रणयति। काठ ३१,३।
२. आपो हास्मै श्रद्धां संनमन्ते पुण्याय कर्मणे। ऐआ २, १, ७।
३. एतद्दीक्षायै (रूपं) यच्छ्रद्धा। माश १२, ८, २, ४।
४. श्रद्धां विन्दामहा इति सत्रमासते। जै ३, २४।
५. श्रद्धां मे सोमो राजानुदीक्षताम्। जै २, ६५।
६. श्रद्धा वै सूर्यस्य दुहिता। माश १२, ७, ३, ११।
७. सत्यं च मे श्रद्धा च मे (यज्ञेन कल्पताम्)। तैसं ४, ७, २, १।
८. स वा एषो ऽस्तंयन् (आदित्यः) ब्राह्मणमेव श्रद्धया प्रविशति। जै १,७। [°द्धा- अक्षिति- ४; अनृत- १५; अप्- ७१;११५;२५२; आदित्य- ३४०; काम- १९; कृत- ३; तेजस्- ६; देव- ४८;२४६; पत्नी- १६; पितृ- ११०; प्रज्ञा- २; मित्र- १६ द्र.]।
श्राद्ध- हस्तिछायायां (मघात्रयोदश्यो‌र्योगे) श्राद्धं दद्यात्। काठसंक ५६:२-३।

श्रम- संवत्सरपरिमितो ह्येवैष यच्छ्रमः। जै ३, ११७॥ [°म- सृपि- ७; दान- ४ द्र.]।

श्रवस्- धूम- ३ द्र.।

श्रविष्ठा (नक्षत्र-)-

१. यदशृणोत् तच्छ्रविष्ठाः। तै १, ५, २, ९।
२. वसवो देवता, श्रविष्ठा नक्षत्रम्। काठ ३९, १३। [°ष्ठा- वसु- १;२२;२७ द्र.]।

श्रव्या- मनुष्य- ३४ द्र.।

श्रायन्तीय (सामन्-)-

१. अश्रयन्वाव श्रायन्तीयेन। मै ४, ४, ९।
२. तदेतद् (श्रायन्तीयम्) वीरजननं पशव्यं साम। जै ३, २६४।
३. प्रजापतिः प्रजा असृजत स दुग्धो रिरिचानो ऽमन्यत स एतच्छ्रायन्तीयमपश्यत्तेनात्मानं समश्रीणात्प्रजया पशुभिरिन्द्रियेण। तां ९, ६, ७।
४. यच्छ्रायन्तीयं ब्रह्मसाम भवति पुनरेवात्मान ९ स ९ श्रीणाति। तां १८,११,१।
५. यच्छ्रायन्तीयं ब्रह्मसाम भवति श्रीणाति चैवैनं ९ (यज्ञविभ्रंष्टं) सच्च करोति। तां ८,२,११।
६. यद् (देवाः सूर्यं सप्तसु छन्दःसु) अश्रयन् तच्छ्रायन्तीयस्य श्रायन्तीयत्वम्। तै १, ५, १२, १।

७. श्रायन्तीयेन एनदश्रीणँस्तच्च छ्रायन्तीयस्य श्रायन्तीयत्वम्। जै ३, २६३ (तु. जै २, २५६)।
८. श्रीर्वै श्रायन्तीयम्। तां १५, ४, ५॥ [°य- दशपेय- २; भृगु- ३; मरुत्- ३३; यज्ञ-विभ्रष्ट- १;२; वरुण- ३३ द्र.]।

श्रित- श्रृत- द्र.।

श्री-

१. अन्त उ वा अन्नाद्यस्य श्रीः। जै २, १८३।
२. इयं (पृथिवी) वै श्रीः ऐ ८,५।
३. एकस्था (°स्ता ? [गो.]) वै श्रीः। कौ १८, ९; २९, ५; गो २, ६,१३।
४. गणा इव वै तं सचन्ते य श्रियमश्नुत इति। जै २, १०३।
५. तस्या (श्रियः) अग्निरन्नाद्यमादत्त। सोमो राज्यं वरुणः साम्राज्यं मित्रः क्षत्रमिन्द्रो बलं बृहस्पतिर्ब्रह्मवर्चसं सविता राष्ट्रं पूषा भगं सरस्वती पुष्टिं त्वष्टा रूपाणि। माश ११, ४, ३, ३।
६. तान्येकविंशानि भवन्ति। द्वादश मासा पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंशः। एष उ ह वै श्रीः। जै २,१७२।
७. तिस्र श्रियः। जै २, ३२७।
८. प्रजापतिः स्वर्गो लोकः। श्रीस्तत्। जै २, १९५।
९. बहिर्धेव वै श्रीः। जैउ १, १, ४, ६।
१०. श्रिया (सविता) श्रियम् (समदधात्)। गो १, १, ३४।
११. श्रियै पाप्मा (निवर्तते)। माश १०, २, ६, १९।
१२. श्रीर् उपबर्हणम्। जै २, २५।
१३. श्रीर् वा अग्निष्टोमः, श्रीर् होता। जै २,३७८।
१४. श्रीर्वा एकशफम् (अश्वाश्वतरगर्दभरूपम्)। तै ३, ९, ८, २।
१५. श्रीर्वै पिलिप्पिला। माश १३, २, ६, १६; तै ३, ९, ५, ३।
१६. श्रीर्वै राष्ट्रस्याग्रम्। माश १३,२,९,७।
१७. श्रीर्वै सोमः। मै १, ११,६; काठ १४, ६;२६, २; २७,१०; क ४०,५; माश ४, १,३, ९।
१८. श्रीर्वै स्वरः (स्वर्गो लोकः [जै.])। जै १, २२९; ३, ४७; माश ११, ४, २, १०।
१९. श्रीर्हि मनुष्यस्य सुवर्गो लोकः। तैसं ७, ४, ४, २।
२०. षड् वा ऋतवस्संवत्सरश्रीः। जै २,१४२।
२१. सविता (+वै [काठ.] श्रियः प्रसविता। मै २, ५, ४; काठ १३, ६॥ [श्री- अन्न- ६५; आदित्य- ३४१; आसन्दी- २; ऋभु- ५; केश- १; क्षत्र- २७;३८; त्विषि- २; देव- १९२; २४७; दैवी- ६; धर्म- १३; पशु- ३१८; पृष्ठ- ४;२४;२५; पृष्ठ्य- ७; प्राण- ३; बृहती- ३५; भद्र- १०; भार- २; मन्त्र- २; यशस्- २; रथन्तर- ३८; राज्य- ८; रात्रि- २६; राष्ट्र- १६; वरुण- ५७; विषुवत्- ४; वीणा- १; ३; व्रत- ६; श्रायन्तीय- ८ द्र.]।

श्री-काम- त्रयस्त्रिंश- १३ द्र.।

श्री-सव (सामन्-)- तदेतच्छ्रीसवः सामाश्नुते श्रियं गच्छति राज्यं य एवं वेद। जै ३,१५।

श्रुतकक्ष-,>श्रौतकक्ष (सामन्-)-

१. इन्द्राय मद्वने सुतमिति श्रौतकक्षं क्षत्रसाम प्र क्षत्रमेवैतेन भवति। तां ९, २, ७।

२. तदेतत् पशव्यं साम••• यद्वु श्रुतकक्षः काक्षिवतोऽपश्यत् तस्माच्छ्रौतकक्षम् इत्याख्यायते। जै १, २१७।

श्रुधीय, श्रुध्य- (सामन्-)-

१. अथ श्रुधीयं कीर्तिमत् साम। पुण्यैनं कीर्तिरुत्तस्थिवांसमनूत्तिष्ठादिति। जै २, १९५।

२. तद्यदत्र श्रुधीयं भवति, समेवैतेन यज्ञं निह्वयन्ते, तस्माच्छ्रोधित्येव प्रथमायां कुर्याच्छ्रोषेमेत्युत्तरयोः। अथो यस्मै जीवातुं कामयेत, तमेतेनैव निह्वयेव। जै ३, २७४।

३. प्रजापतिः पशूनसृजत ते ऽस्मात् सृष्टा अपाक्राम ९ स्तानेतेन साम्ना श्रुधिया एहियेत्यन्वह्वयत्त एनमुपावर्त्तन्त यदेतत्साम भवति पशूनामुपावृत्त्यै। तां १५,५,३५। [°ध्य- पशु- १८८ द्र.]।

श्रुष्टि- अन्न- ५५ द्र.।

श्रेयस्-

१. तदाहुः- कः श्रेयांसं विपुर्सं बोधयिष्यतीति (बोधयितुमर्हतीति [काठ.])। मै ३, ४, ५; काठ २२, २।

२. तस्मात् (भूलोकात्) असावेव (स्वर्गो) लोकः (श्रेयान्)। ऐ १, १३।

३. नमस्कृत्य हि श्रेया ९ समुपचरन्ति। काठ ३१, ११।

४. पापवस्यसं वा एतत् क्रियते यच्छ्रेयसा च पापीयसा (निकृष्टेन) च समानं कर्म कुर्वन्ति। तैसं ५, १, २, २।

५. यथा पापीयाञ्छ्रेयस आहृत्य नमस्यति। तैसं १, ५, ७, ४।

६. यो वै श्रेयसो ऽनुषेणो भवति न वै स रिष्यति। जै १, ३५९।

७. स यथा सूनायामन्नमाधाय श्रेयस उपहरेत्। जै २,७॥ [°यस्- क्षत्र-२७; पापीयस्-२ द्र.]।

श्रेष्ठ-

१. एक ९ श्रेष्ठ ९ यन्तं बहवः पश्चादनुयन्ति। मै ४, ६, ५।

२. तस्मादेतानि श्रेष्ठस्य भूयिष्ठानि— भूयिष्ठाः पशवो (गावः), ज्येष्ठा छाया, स्वपिति। जै २, ३७०।

३. यो वै श्रेष्ठमराधयित्वाथान्यानीप्सति, सर्वे वाव तस्य ते ऽराधिता भवन्त्यथ य श्रेष्ठं राधयित्वाथाप्यन्यान् नाद्रियते, सर्वे वाव तस्येष्टाः पूर्त्ता भवन्ति। जै २, ३७१।

४. सिम इति वै श्रेष्ठमाचक्षते। जै ३, १११।

श्रेष्ठ-तम- यज्ञ- १२४ द्र.।

श्रेष्ठ-रश्मि- एष वै श्रेष्ठो रश्मिर्यत्सूर्य्यः। माश १, ९, ३, १६।

श्रोणा- (श्रवणनक्षत्र-) यदश्लोणत्। तच्छ्रोणा। तै १, ५, २, ८; ९॥ [°णा- विष्णु-५३; विष्णुपत्नी- द्र.]।

श्रोणी- श्रोणी द्वियजुः (इष्टका)। माश ७,५,१,३५॥ [°णी- आदित्य-२१३; वामदेव्य-२५ द्र.]।

श्रोत्र-

१. वयोधा असि श्रोत्राय त्वा। तैसं ४, ४, १, ३।

२. विश्व ९ हि श्रोत्रम्। माश ७, ५, २, १२।

३. श्रोत्रं वै पर ९ रजो दिशो वै श्रोत्रं दिशः पर ९ रजः। माश ७, ५, २, २०।

४. श्रोत्रं वै सम्पच्छ्रोत्रं हीमे सर्वे वेदा अभिसम्पन्नाः। माश १४, ९, २, ४।

५. श्रोत्रं वै सम्राट् परमं ब्रह्म। माश १४,६,१०,१२।

६. श्रोत्रं ह वा उ सम्पद्। शांआ ९, २।

७. श्रोत्रं हृदये (श्रितम्)। तै ३, १०, ८, ६।

८. श्रोत्रं (+वै जै १,१०२) जगती। जै १,२६९; २,५८।

९. श्रोत्रमेव नवममहर्जागतम्। जै ३, ३१९।

१०. श्रोत्रं मे श्लोकय। तैसं ४, ३, ४, ४; क २५, १०।

११ श्रोत्राद्दिशः (निरभिद्यन्त)। ऐआ २,४,१; ऐउ १,१,४।

१२. श्रोत्राद् वाचं सन्तनु। काठ ३९,८।

१३. श्रोत्रे परिश्रवणे द्वे तस्मात् समानत्र सन् सर्वा अनुदिशश्शृणोत्यपि पराङ् यन् पश्चाद् वदतश्शृणोति। जै १, १०२।

१४. सर्वतः श्रोत्रेण शृणोति। तैसं ६, ४, ९, ४॥ [°त्र- अग्नि(ग्नी)ध्- १४; अन्तरिक्ष- ११३; अप्- २५३; अमावस्या- २; अश्विन्- ४२; आश्रुति-; आश्विन- ७; २२; उत्तरतस् २०; उत्तरात् ४; उद्गातृ- २१; उपनति-; चक्षुस्- ९; चन्द्रमस्- ६१; चातुर्मास्य- १३; जगती- १;२४;५८; जागत- ७; दिश्- १;३२;३३;६८; द्यावापृथिवी- ९; पङ्क्ति- ३१; पञ्चहोतृ- १०; पृथिवी- १९९; ब्रह्मन्- १४८; मृङ्ग-; वयोधस्- २; वाच्- ६२; विकर्ण-; विश्वामित्र- ४; विश्वेदेव- १८; विष्णु- २२ द्र.]।

श्रोत्र-पा- विदद्वसुः श्रोत्रपाः। तैसं ३, २,१०, २।

श्रोत्रिय्- श्रोत्रियस् स्त्रीकामतमः। काठ २३, ४; क ३६,१॥ [°य- ब्राह्मण- ३१ द्र.]।

श्लोक- स्वरश्च मे श्लोकश्च मे (यज्ञेन कल्पताम्)। तैसं ४, ७, १, १।

श्लोकाऽनुश्लोक- श्लोकानुश्लोकाभ्या९ (सामविशेषाभ्यां) हविर्द्धाने उपतिष्ठन्ते कीर्त्तिमेव तज्जयन्ति। तां ५, ४, १०।

श्वन्-

१. कालकाञ्जा वै नामासुरा आस ९स्त इष्टका अचिन्वत तदिन्द्र इष्टकामप्युपाधत्त तेषां मिथुनौ दिवमाक्रमेतां ततस्तमावृहत् ते ऽवाकीर्यन्त, ता एतौ दिव्यौ श्वानौ। काठ ८, १।

२. शुनो विशसनेन। काठ ५३, १३॥ [श्वन्- अनृत- ७ द्र.]।

श्वाविध्- द्यावापृथिव्या श्वावित्। काठ ४७, १०॥ [°विध्- भौमी- द्र.]।

श्वस्(:)

१. न श्वःश्वमुपासीत को हि मनुष्यस्य श्वो वेद। माश २, १, ३, ९।

२. श्वो बृहत् (साम)। तैसं ३, १, ७, २।

**श्वस्तन**- प्रजाः श्वस्तनं पशवः श्वस्तनं स्वर्गो लोकः श्वस्तनम् । जै २, ४२४; ३, १८ ।
[°न- अन्न- ७९ द्र] ।

**श्वात्र**- शिवा ह्यापस्तस्मादाह (हे आपो यूयं) श्वात्रा (शिवाः) स्थेति । माश ३,९,४,१६ ।

**श्वित्र**- स ( श्वित्र आङ्गिरसः ) एष श्वित्रो ऽ भवद् , एते ह वा अह्रयो यच्छ्वित्राः । जै ३, ७७ ।

**श्वेत, ता**-

१. या श्वेता ( गौः ) सा पोषयिष्णुः । मै ४, २, १४ ।

१. श्वेतां बार्हस्पत्याम् । तैसं २, १, २, ४ ।

२. सौरी ९ श्वेतामालभेत रुक्कामः । काठ १३, ८ ।

३. सौर्याः श्वेताः ( पशवः ) । मै ३, १३, १६ ॥ [°त,ता- आदित्य- २३४; ३४३; कृष्ण- २४; ग्रीष्म- २१; तेजस्काम- २; बार्हस्पत्या- १९; ब्रह्मन्- १४९; ब्रह्मवर्चसकाम- ३; भूतिकाम-; मैत्र- ५;६; रुच्- १; वायव्य- ६; वायु- ९५ द्र.] ।

# ष

**षकार**- णकार- द्र. ।

**षट्त्रिंश** (स्तोम)- उत्तरात् १२; नाक- ५ द्र. ।

**षट्त्रिंशद्रात्र** (यज्ञ)- य एवं विद्वा९सः षट्त्रिंशद्रात्रम् आसते, सुवर्गमेव लोकं प्रजानन्ति सुवर्गं लोकं यन्ति । तैसं ७,४,६,१ ।

**षट्पाद**- अग्नि- २६१ द्र. ।

**षडङ्ग**- तस्मात्कारणं ब्रूमो वर्णानामयमिदं भविष्यतीति षडङ्गविदस्तत्तथाऽधीमहे । गो १, १, २७॥
[°ङ्ग- १वेद- १२ द्र.] ।

**षडह**-

१. षडहो वा असात् । जै ३, १७४ ।

२. षडहो वा उ सर्वः संवत्सरः । कौ १९,१० ।

**षड्ढोतृ**[8]-तस्मै (ब्रह्मणे) षष्ठं ९ हूतः प्रत्यश्रृणोत् । स षड्ढूतो ऽभवत् षड्ढूतो ह वै नामैषः । तं वा एतं९ षड्ढूतं सन्तं षड्ढोतेत्याचक्षते परोक्षेण परोक्षप्रिया इव हि देवाः । तै २,२,११,२-३ ।
[°तृ- ऋतु- ४५; ४६; धातृ- ९; १०; पशुबन्ध- २; पशुयज्ञ-; वाच्- ७५ द्र.] ।

**षड्रात्र** (यज्ञ-)- षड्रात्रो भवति (यज्ञः) । तैसं ७, २, १, १ ।

**षण्डामर्क**- षण्डामर्कौ वा असुराणां पुरोहिता आस्ताम् । मै ४, ६, ३ ।

**षष्ठ** ( अहन् )-

१. अन्तः षष्ठमहः । कौ २३, ७; २६, ८ ।

---

[8]वाग्घोता, दीक्षा पत्नी, वातोऽध्वर्युः, आपोऽभिगरः, मनो हविः, तपसि जुहोमि । तैआ ३,६,१ । सूर्यं ते चक्षुः (प्राप्नोतु), वातं प्राणः, द्यां पृष्ठं, अन्तरिक्षमात्मा, अङ्गैर्यज्ञं, पृथिवीं९ शरीरैः (प्राप्नुहि) । तैआ ३,४,१ ।

२. आतिच्छन्दसं वै षष्ठमहः । कौ २३, ६; ८; २९, ५ ।

३. सर्वदेवत्यं षष्ठमहः । कौ २१, ४ ।

४. सर्वरूपं वै षष्ठमहः । कौ २१, ४; २३, ७ ।

५. स्वर्गो वै लोकः षष्ठमहः । ऐ ६, २६;३६; गो २, ६,१६ ॥ [षष्ठ- देवक्षेत्र- २; देवायतन-; पुरुष- ५३; प्राजापत्य- ६ द्र.] ।

षष्ठी-,चिति-

१. शिर एव षष्ठी चितिः । माश ८, ७, ४, २१ ।

२. स्वर्ग एव लोकः षष्ठी चितिः । माश ८, ७,४, १७ ।

षोडश-

१. अनुचर इव ह्येष स्तोमानां यत् षोडशः । जै २, २२० ।

२. स्वर्गो लोकः षोडशं स्तोमानाम् । जै २, २२० ।

३. हीना वा एते हीयन्ते ये व्रात्यां प्रवसन्ति न हि ब्रह्मचर्य्यंचरन्ति न कृषिं न वाणिज्यां षोडशो वा एतत्स्तोमः समाप्तुमर्हति । तां १७, १, २ ॥ [°श- अदिति- १७; इन्द्र- १५९; उत्तरात् १९; ओजस्- १४; ३०; मरुत्स्तोम- २; वज्र- २७ द्र.] ।

षोडशन्-,कला-

१. अष्टावेवास्य (प्रजापतेः) कलाः सावित्राण्यष्टौ वैश्वकर्मणान्यथ यदेतदन्तरेण कर्म क्रियते स एव सप्तदशः प्रजापतिः । माश १०,४,१,१६ ।

२. यो वै कला मनुष्याणामक्षरं तद्देवानाम् तद्वै लोमेति द्वेऽअक्षरे त्वगिति द्वेऽअसृगिति द्वे मेद इति द्वे मा ५ समिति द्वे स्नावेति द्वे मज्जेति द्वे ताः षोडश कला अथ य एतदन्तरेण प्राणः संचरति स एव सप्तदशः प्रजापतिः । माश १०, ४, १,१७ ।

षोडशकल-

१. षोडशकलं वा इदं सर्वम् । कौ ८,१; ११, ४; १७,१; २२,९; माश १३,२,२,१३ ।

२. षोडशकलः प्रजापतिः । माश ७,२,२,१७ ।

३. षोडशकला देवाः । षोडशकलमिदं सकृत् सर्वम् । जै १,२७ ॥ [°ल- चन्द्रमस्- ९३; पशु- ३२०; पुरुष- १०६;१०७; प्रजापति- २६१; ब्रह्मन्- १५०; १५१ द्र. ] ।

षोडश-धा[a] स (प्रजापतिः) षोडशधाऽऽत्मानं व्यकुरुत । जैउ १, १५, १,२ ॥ [°धा प्रजापति- ६१; २९३ द्र. ] ।

षोडशिन्-

१. अतिरिक्तो वै षोडशी (°शि स्तोत्राणाम् [जै.]) । जै १, ६७; तां ६,१,५ ।

२. अथ षोडशी यत् षोडशिनि कामः स म उपाप्तोऽसदिति । जै २, १९५ ।

३. अथो षोडशं वा एतत्स्तोत्रं षोडशं शस्त्रं तस्मात्षोडशीत्याख्यायते । कौ १७,१ ।

a. (१) भद्रम्, (२) समाप्तिः, (३) अभूतिः, (४) सम्भूतिः, (५) भूतम्, (६) सर्वम्, (७) रूपम्, (८) अपरिमितम्, (९) श्रीः, (१०) यशः, (११) नाम, (१२) अग्रम्, (१३) सजाताः, (१४) पयः, (१५) महीया, (१६) रसश्चेत्येवंविधाः द्र. ।

४. अपच्छिदिव वा एतद्यज्ञकाण्डं यत् षोडशी (साम)। तां १८,६,२३।
५. असौ वै षोडशी योऽसौ (सूर्यः) तपति। कौ १७,१।
६. आनुष्टुभः (+वै [कौ.]) षोडशी। मै ४,७,६; कौ १७, २; ३ जै १,१९२।
७. आनुष्टुभो वा एष वज्रो यत्षोडशी। कौ १७,१।
८. उक्थानां वा एष एको यत् षोडशी। जै ३,८३।
९. एकविंशायतनो वा एष यत् षोडशी। सप्त हि प्रातःसवने होत्रा वषट्कुर्वन्ति सप्त माध्यन्दिने सवने सप्त तृतीये सवने। तां १२,१३,८ (तु. जै १,२०३)।
१०. एकादशाक्षरा वै त्रिष्टुप् त्रैष्टुभमन्तरिक्षं चतस्रो दिशः एष एव वज्रः पञ्चदशस्तस्यासावेवादित्यः षोडशी वज्रस्य भर्त्ता। माश ८,५,१,१०।
११. त्रिवृद्वै षोडशी। कौ १७,३।
१२. पृष्ठीवहः खलु वा एतत् स्तोत्राणां यत् षोडशी…अक्षिवहः खलु वा एतत् स्तोत्राणां यत् षोडशी…जामिवहः खलु वा एतत्स्तोत्राणां यत् षोडशी। जै १, २०१।
१३. यद्वाव षोडश ९ स्तोत्र ९ षोडश ९ शस्त्रं तेन षोडशी। तैसं ६, ६,११,१।
१४. वृषण्वद्वै षोळशिनो रूपम्। ऐ ४,४।
१५. षोळश स्तोत्राणां षोडश शस्त्राणां षोळशभिरक्षरैरादत्ते षोळशभिः प्रणौति षोळशपदान्निविदं दधाति तत्षोळशिनः षोळशित्वम्। ऐ ४,१ (तु. गो २,४,१९)।
१६. षोडशमच्छावाकस्य…इन्द्रियं वै वीर्यं षोडशी। जै २,२२३।
१७. सर्वेभ्यो वा एष छन्दोभ्यः (लोकेभ्यः, सवनेभ्यः [ऐ ४,४]) सन्निर्मितो यत्षोळशी। ऐ ४,३;४।
१८. सूर्यराज्य ९ षोडशिना (अभिजयति)। मै १, ८, ६।
१९. स्वर्गे लोके षोडशिनस्स्तोत्रेण (प्रतितिष्ठति)। काठ १४, ९॥ [°शिन्- इन्द्र- १०; ४३; २०२; २०४; ऐन्द्र- ४४; ओजस्- ३०; प्राजापत्य- ११; वज्र- ३४; ३९; वीर्य- १; १०; ११; वैराज- ६ द्र.]।

**षोडशी-, कला-**तस्य (संवत्सरस्य प्रजायाः) रात्रय एव पञ्चदश कला ध्रुवैवास्य षोडशी कला। माश १४, ४, ३,२२।

**ष्ठीवन-** मेहन- द्र.।

## स

**संयत्-** अग्नि- ७०९; रात्रि- ३० द्र.।

**संयद्वसु-** संयद्वसुः श्रोत्रपाः श्रोत्रं मे पाहि। तैसं ३, २, १०, २॥ [°सु- उत्तरात् १; यज्ञ- १३४ द्र.]।

**संयाज्या-** प्रतिष्ठे वै संयाज्ये। कौ ७, ९।

**संयानी-**

१. ध्रुवो वा एषोऽग्नेर्यत् संयानीः। तैसं ५, ३, १०, २।
२. संयानीभिर्वै देवा इमाँल्लोकान्त्समयुस्तत् संयानीना ९ संयानित्वम्। तैसं ५, ३, १०,१।

संवत्सर-

१. अग्निः (+वाव [तै.]) संवत्सरः । तां १७, १३, १७; तै १, ४, १०, १ ।
२. अथ यत्त्रीणि शतानि स्तोत्रिया भवन्ति तावतीः संवत्सरस्य रात्रयः । जै २, १०९ ।
३. अथ ह वा एष महासुपर्ण एव यत्संवत्सरः । तस्य यान्पुरस्ताद्विषुवतः षण्मासानुपयन्ति सोऽन्यतरः पक्षोऽथ यान्षडुपरिष्टात्सोऽन्यतर आत्मा विषुवान् । माश १२, २, ३, ७ ।
४. अय ँ संवत्सरः सर्वेषां भूतानां प्राणैरप प्रसर्पति चोत्सर्पति च । तैआ १, १४, ८ ।
५. आदित्य एव संवच्चन्द्रमाः सरः । तमेष सरति तं पौर्णमास्यामाप्नोति । जै २,६० ।
६. आदित्य एव संवत्सरः, एतं हि सर्वा श्रीस्सर्वं यशस्सर्वे देवास्समेताः,··· तस्य यद् भाति तत् संवद् , यन्मध्ये कृष्णं मण्डलं, तत् सर इत्यधिदैवतम् । जै २,६० ।
७. इम ऽ उ लोकाः संवत्सरः । माश ८, २, १, १७ ।
८. एकवि ँ शो वै संवत्सरः पञ्चर्तवो द्वादशमासास् त्रय इमे लोका असा आदित्य एकवि ँ शः । काठ १२, ६ ।
९. एतद्ध वै संवत्सरस्य व्याप्तं यदृतवो यन्मासा यदृतुसन्धयः । जै २, ४२२ ।
१०. एतावान्वै संवत्सरो यदहोरात्रे । कौ १७, ५ ।
११. एतावान्वै संवत्सरो यदेष त्रयोदशो मासस्तदत्रैव सर्वः संवत्सर आप्तो भवति । कौ ५, ८; १९, २ ।
१२. किं नु ते मयि (संवत्सरे) इति । अयम्म आत्मा । स (आत्मा) मे त्वयि (संवत्सरे)। जैउ ३, ५, ५, ८ ।
१३. गोसत्रं वै संवत्सरः । तैसं ७, ५, १, १ ।
१४. चतुर्विंशत्यर्धमासस्संवत्सरः । जै २, ९१; १११; २२७; २७३; २८१; ३०८; ३, १७३ (तु. ऐ ८,४; जै ३,४१०;४१४) ।
१५. चतुर्वि ँ शो वै संवत्सरः । तां ४, १०; ५ ।
१६. तदाहुस्संवत्सर एव सामेति । जैउ १, ११, २, १ ।
१७. तस्मादाहुः संवत्सरः सर्वे कामा इति । माश १०, २, ४, १ ।
१८. तस्मादु संवत्सर ऽ एव स्त्री वा गौर्वा वडवा वा विजायते । माश ११, १, ६, २ ।
१९. तस्य (आदित्यस्य) यद् भाति तत् संवद् , यन्मध्ये कृष्णं मण्डलं तत् सर इत्यधिदेवतम् । अयमेव संवत्सरो योऽयं चक्षुषि पुरुषः । तस्य यच्छुक्लं तत् संवद् , यन्मध्ये कृष्णं मण्डलं तत् सरः···। त्रय्येव विद्या संवत् । तां हि सर्वे देवाः संवान्ताः । अहोरात्रे एव सरः । ते हीदं सर्वं सरतः ···इत्यधिदेवतम् । अथाध्यात्मम् । अन्नमेव संवत् । तद्धीदं सर्वं संवान्तम् । वागेव सरः । वाचा हि पुरुषः सरति । जै २, २८-२९ (तु. जै २, ६०) ।
२०. ता उभे स्तोम्याः संपद्यन्ते सप्त च शतान्येकविंशतिश्च, तावन्ति संवत्सरस्य अहोरात्राणि । जै २, २३८ ।
२१. तान् (देवांश्चासुरांश्च) गायत्र्यन्तरातिष्ठदोजो वीर्यमन्नाद्यं परिगृह्य संवत्सरो वावैनान् सोऽन्तरातिष्ठच्चतुर्वि ँ शतिर्गायत्र्या अक्षराणि, चतुर्वि ँ शतिस् संवत्सरस्यार्धमासाः । काठ १०, ७ ।

२२. त्रयोदश वै मासाः संवत्सरस्य । माश ३, ६, ४, २४ (तु. मै १, ११,८, काठ १४, ८) ।
२३. त्रीणि च शतानि स्तोत्रिया भवन्ति षष्टिश् च । तावतीस् संवत्सरस्य रात्रयः । जै २,३७७ ।
२४. त्रीणि च ह वै शतानि षष्टिश्च संवत्सरस्याहोत्राणि । गो १, ५, ५ ।
२५. त्रीणि वै षष्टि शतानि संवत्सरस्याह्नाम् । कौ ११, ७ ।
२६. त्रेधाविहितो वै संवत्सरः । कौ १९, ३ ।
२७. द्वादश मासाः स् संवत्सरः । मै १, ४,१४; ३,४,१०; ४, ६,७; काठसंक ५० : १२; जै १,
२८. २७; १३५; २०६; २, ८३; ९१ ।
२९. द्वादश वा वै त्रयोदश वा संवत्सरस्य मासाः । माश २, २, ३, २७; ५, ४,५, २३ ।
३०. द्वादश वा वै रात्रयः संवत्सरस्य प्रतिमा । मै १, ६, १२; ८, ६ (तु. काठ ७, १५; तै १, १,६,७; ९,१०) ।
३१. द्वादश वै संवत्सरस्य पौर्णमासीर् द्वादशाष्टका द्वादशामावस्याः । तदेवैतेन षट्त्रिंशेन स्तोमेन पर्वशः संवत्सरमारभन्ते । जै २, ४३७ ।
३२. द्वे रूपे संवत्सरस्य मासा अन्यद् , ऋतवो ऽन्यत् । काठ ३४, ७ ।
३३. नैवारश्चरुस्त्रयोदशो भवत्यस्ति मासस्त्रयोदशः । मै ३, ४, १० ।
३४. पञ्चदश सामिधेनीरन्वाह ''' तासां त्रीणि च शतानि षष्टिश्चाक्षराणि, तावतीः संवत्सरस्य रात्रयः । तैसं २, ५, ८, ३ ।
३५. पञ्चर्तवस्संवत्सरः । संवत्सरः प्रजापतिर्यज्ञः । जै २, २९१ ।
३६. पञ्च ऽर्तवः संवत्सरस्य । माश १, ५, २, १६; ३, १, ४, २० ।
३७. प्रायणीयेनातिरात्रेण त्रयोदशं मासमाप्नुवन्ति, उदयनीयेन संवत्सरं चतुर्दशम् । जै ३,३८६ ।
३८. मध्ये ह संवत्सरस्य स्वर्गो लोकः । माश ६, ७, ४, ११ ।
३९. महापुरुष इति यमवोचाम संवत्सर एव प्रध्वंसयन्नन्यानि भूतान्यैक्याभावयन्नन्यानि, तस्यैतस्यासावादित्यो रसः । ऐआ ३, २, ३ (तु. शांआ ८,३) ।
४०. यत् पराचीनं संवत्सरात् तदन्धन्तमः । जै १, १७९ ।
४१. यस्मादेषा समाना सती षडहविभक्तिर्नानारूपा तस्माद्विरूपः संवत्सरः । तां १०,६, ७ ।
४२. यावन्ति वै सामिधेनीनामक्षराणि तावन्ति संवत्सरस्याहानि । मै १, ७, ३ ।
४३. यो ह स मृत्युः (अभिव्यादाय तिष्ठति) संवत्सर एव सः । तस्यर्तव एव मुखानि । जै १,२४६ ।
४४. विरूपः ( नानारूपः ) संवत्सरः । तां १४, ९, ८ ।
४५. शान्तः संवत्सरः । तैसं ७, ५, २०, १ ।
४६. षष्टिश्च वै त्रीणि च शतानि संवत्सरस्याहानि । काठ ३३, २ ।
४७. संवत्सर (°रो वा [जै.]) इद९ सर्वम् । जै १,२७; माश ८, ७, १, १ ।
४८. संवत्सर एव सप्तदशस्यायतनं द्वादश मासाः पञ्चर्तव एतदेव सप्तदशस्यायतनम् । तां १०, १, ७ ।
४९. संवत्सर एव स्वर्गो लोकः । जै २, ४२९ ।
५०. संवत्सरः कृत्स्नमन्नाद्यं पचति । जै २, ३०७; ४१० ।
५१. संवत्सरमेव शुनासीर्येणाप्येति । जै २, २३४ ।

५२. संवत्सरमेवायतनं कृत्वा जयति संग्रामम् । काठ १०, ३ ।
५३. संवत्सरस्त्वा हन्तु ( चोर ! ) । तैआ ४, २६, १ ।
५४. संवत्सरस्य प्रतिमां यां ( रात्रिरूपाम् [अष्टकाम् ] ) त्वा रात्रि यजामहे । मं २, २, १८ ।
५५. संवत्सरस्य प्रतिष्ठा ( नक्षत्राणि ) । तै ३, ११, १, १३ ।
५६. संवत्सरस्य वा एते विधृत्यै गृह्यन्ते । मै ४, ६, ७ ।
५७. संवत्सरः सप्तदशः (साम [जै १, १३७]) । तां ६, २, २ ।
५८. संवत्सरः सुवर्गो ( स्वर्गो [मै., काठ. जै.] ) लोकः । तैसं ७,३,७,२; मै १, १०,१७; काठ ९, १६; १४, ८; ३३, ४; जै २, १०९; ११३; ११९; १६२; तां १८,२, ४; तै २; २,३,६; ३,९,२,२; माश ८, ४,१,२४; ६, १, ४ ।
५९. संवत्सरस्य या पत्नी ( उषोरूपा [अष्टका] ) सा नो अस्तु सुमङ्गली । मं २, २,१६ ।
६०. संवत्सरस्य षष्ठी । तैसं ५, ७, २१, १; काठ ५३, १२ ।
६१. संवत्सरः स्वगाकारः । तै २, १, ५, २ ।
६२. संवत्सराय निवक्षसः (आलभ्यन्ते) । तैसं ५,६,२३,१; काठ ५०, ३ ।
६३. संवत्सराय महतः सुपर्णान् ( आलभते ) । मै ३, १४, ६ ।
६४. संवत्सरेण वा अनाप्तमाप्यते । मै २, ५, २; काठ १०, ८ ।
६५. संवत्सरे संवत्सरे वै रेतःसिक्तं जायते । ऐ ४, १४ ।
६६. संवत्सरो भूत्वा ( प्रजापतिः ) नादस्यत् न ह दस्यति य एवं वेद । जै १, ३१४ ।
६७. संवत्सरो मृत्युः । जै २, ३५० ।
६८. संवत्सरो वा अग्निर्ऋतुस्थास्तस्य वसन्तः शिरो, ग्रीष्मो दक्षिणः पक्षो, वर्षाः पुच्छं शरदुत्तरः पक्षो हेमन्तो मध्यं, पूर्वपक्षाश्चितयो ऽपरपक्षाः पुरीषमहोरात्राणीष्टकाः । तैसं ५,७,६,|५-६ ।
६९. संवत्सरो वा अग्रं ज्यैष्ठ्यम् । जै २, ९७; २२७ ।
७०. संवत्सरो वा ऽऋतव्याः ( इष्टकाः ) । माश ८, ६, १, ४; ७, १, १ ।
७१. संवत्सरो वाव सम्भरणस्त्रयोविंशः । तस्य त्रयोदश मासाः सप्त ऽर्तवो द्वे अहोरात्रे संवत्सर एव सम्भरणस्त्रयोविंशस्तद्यत्तमाह सम्भरण इति संवत्सरो हि सर्वाणि भूतानि सम्भृतः । माश ८, ४, १, १७ ।
७२. संवत्सरो वाव ( वै [कौ.] ) होता । कौ २९, ८; गो २, ६, ६ ।
७३. संवत्सरो विषूवैः ( युक्तः ) । तैआ १, १२, ३ ।
७४. संवत्सरो वै चतुर्दशः । जै १, १३२ ।
७५. संवत्सरो वै परिक्षित् , संवत्सरो हीमाः प्रजाः परिक्षेति, संवत्सरं हीमाः प्रजाः परिक्षियन्ति । ऐ ६, ३२ ।
७६. संवत्सरो वै मासः । मासश एव तत् संवत्सरमाप्नुवन्ति । जै २,३७६ ।
७७. संवत्सरो वै यज्ञः प्रजापतिः । तस्यैतद् द्वारं यदमावास्या चन्द्रमा एव द्वारपिधानः । माश ११, १, १, १ ।
७८. संवत्सरो वै षष्ठी चितिर्ऋतवः पुरीषम् । तैसं ५, ६, १०, ३ ।
७९. संवत्सरो वै समस्तः सहस्रवांस्तोकवान्पुष्टिमान् । ऐ २, ४१ ।

८०. संवत्सरो वै समुद्रः (सरस्वान् [मै.]) । तैसं ७, ५, १, २-३; मै ४,२,७ ।
८१. संवत्सरो वै सर्वस्तोमः । जै २, २७९ ।
८२. संवत्सरो वै सर्वस्य शान्तिः । तां ९, ८, १३ ।
८३. संवत्सरो वै सविता (+द्वादश मासाः संवत्सरः । तस्माद् द्वादशकपालः [मै.]) । मै १, १०, ५; काठ ३५, २०; क ४८, १८ ।
८४. संवत्सरो वै सुमेकः । तैसं ५, ३, ११, ४; काठ २२, ६; क ३४,१ ।
८५. संवत्सरो वै सोमः पितृमान् । तै १, ६, ८, २; ९, ५ ।
८६. संवत्सरो वै सोमो राजा । कौ ७, १० ।
८७. संवत्सरो वै स्वर्गो लोकः । मै ४, ६, ७ ।
८८. संवत्सरोऽसि नक्षत्रेषु श्रितः । ऋतूनां प्रतिष्ठा । तै ३, ११,१, १४ ।
८९. संवत्सरो हि वा एतस्य लुब्धोऽथैतस्यामयति । काठ १२, ८ ।
९०. स एष (आदित्यः) संवत्सरसम्मानश्चक्षुर्मयश्श्रोत्रमयश्छन्दोमयो मनोमयो वाङ्मय आत्मा । ऐआ ३, २, ३ ।
९१. स ऐक्षत प्रजापतिः । सर्वं वाऽअत्सारिषं य इमा देवता असृक्षीति स सर्वत्सरोऽभवत् सर्वत्सरो ह वै नामैतद्यत्संवत्सर इति । माश ११, १, ६, १२ ।
९२. सद्यो वै देवानां संवत्सरः । तां १६, ६, ११ ।
९३. सप्तदश सामिधेनीः कार्याः पञ्च ऋतवो द्वादश मासा एष संवत्सरः । मै १,७, ३; ३,७,२ ।
९४. सप्तदशो वै संवत्सरः, पञ्चर्तवो द्वादश मासाः । काठ २३,८ (तु. माश ६, २, २, ८) ।
९५. सप्त ऽर्तवः संवत्सरः । माश ६, ६, १, १४; ७, ३,२, ९; ९, १,१, २६ ।
९६. समुद्रं खलु वा एते ऽनवारमपारं प्रस्नान्ति ये संवत्सरमुपयन्ति । काठ ३३, ५ ।
९७. सर्वं वा ऽऋतवः संवत्सरः । माश ४, ३, १, ४ ।
९८. सर्वं वै संवत्सरः । माश १, ६,१,१९; ७, २,२४; ८,२,२,७; १०,२,५,१६; ११,१,२,१२ ।
९९. स वै संवत्सर एव प्रजापतिः । माश १, ६, ३, ३५ ।
१००. स (एकहायनो गौः) हि संवत्सरस्य प्रतिमा । मै २, १, २ ।
१०१. सुमेकः संवत्सरः स्वेको ह वै नामैतद्यत्सुमेक इति । माश १, ७, २, २६ ॥ [°र- अग्नि- ७१०-७१४; अग्निष्टोम- ३५; अनिरुक्त- ६; अन्न- १८१; अन्नाद्य- २३; अप्- २५४; अब्द- १; अभ्रातृव्या-; अमावास्या- १५; आत्मन्- ८३; आदित्य- १९०; ३४७; ३७०; आयुस्- २४; इन्द्र- २०७; इन्द्राशुनासीर- २; ऊर्ध्व,र्ध्वा- ७; ऋतु- २; ३; १८; ३६; ३९; ५६; ६५; ९१; ९२; ऋभुमत्-; एकाष्टका- २; ओजस्- १६; कुमार- ६; ख्यातृ-; गर्भ- ३०; गायत्री- १२१; चन्द्रमस्- ८९; चित्रापूर्णमास-; तपस्- ३२; त्रयस्त्रिंश- २४; त्वष्टृ- ३२; दृति-; देव- ३३;२४९;२५०; देवयान- २; द्युम्न- १; धातृ- २३; नवाह-; नाक- ८; पञ्चहोतृ- ११; परिक्षित्- २; परिभू-; पाङ्क्त- १०; पार्थ- २; पितृ- १११; पुरुष- ५१; ६८; पुष्टि- १०; पूर्ण- २; पृथिवी- १२२; २००; पृष्ठ्य- ५; पौर्णमासी- ३; ६; प्रजनन- १४; प्रजा- ९८; प्रजापति- ४२; ४५; ४८; ४९; ७९; ८१; ९५; ११२; १६४; १७७; २०४; २५५; २५९; २६१; २६४-६८; २७५; २८६; प्रतूर्ति-; प्रवत्- ३; प्राची- २६;

प्राण- १९८; फल्गुनी- ४; ५; ८; फल्गुनीपूर्णमास- २; फल्गुनीपूर्णमास्य-; फाल्गुनी- १;२; बृहती- २४; ब्रध्न- ४; ब्रह्मवर्चस्- ११; भूत- १४; मास- १०; मृत्यु- ५; यजमान- ३२; यज्ञ- १७७-७९; रेतस्- ४४; ४५; वज्र- ४६; वरुण- ५८; वर्चस्- २; वर्ष, र्षा- ८; ९; वसन्त- २; वाच्- ३४; ५९; विराज्- ३३; विवर्त-; विश्वकर्मन्- ६; विषुवत्- २; वीर्य- १२; वैश्वानर- १;१२; व्योमन्- ३; व्रत- ७;८; शाला- २; शुनासीर- ३; षडह- २ द्र.]।

संवत्सर-वेला- तस्मात्संवत्सरवेलायां प्रजाः (शिशवः) वाचं प्र वदन्ति। माश ७,४,२,३८।

संवत्सर-श्रम- ते देवा एतं संवत्सरश्रममपश्यन्। जै ३, ११७।

संवर्ग (इष्टि-)- ता ऽ संवर्ग इतीष्टिमाहुर्यो भ्रातृव्यवान्त्स्यात् स स्पर्धमान एतयेष्ट्या यजेताग्नये संवर्गाय पुरोडाशमष्टाकपालं निर्वपेत्। तैसं २, ४, ३, ३।

संवित्- संविच्च मे ज्ञात्रं च मे ( यज्ञेन कल्पताम् )। तैसं ४, ७, ३, २।

संवेश- छन्दस्- ४४ द्र.।

संज्ञान (सामन्- )- अथ यस्मात्स ऽ ज्ञानानि नाम। एतैर्वै सामभिर्देवा इन्द्रमिन्द्रियाय वीर्याय समज्ञ्यन्। माश १२, ८, ३, २६ (तु. गो २,५,७)।

संसद्- एतद्ध वै संसदां संसत्त्वं यदेते स्तोमाश्च छन्दांसि च मध्यतः संसन्नाः। जै २, ३५०।

संसर्प- यदिमांल्लोकान् (वसिष्ठः) समसर्पत् तत् संसर्पस्य संसर्पत्वम्। जै २,२८९।

संसव- नाविद्विषाणयोः संसवो विद्यते। लु १०३ : ९ ॥ [°व- वायु- १९ द्र.]।

संसृप्-

१. तद्यदेनमेताभिर्देवताभिरनु समसर्पत्। तस्मात्स ऽ सृपो नाम। माश ५, ४, ५, ३।

२. वरुणस्य सुषुवाणस्य दशधेन्द्रियं वीर्यं परापतत्। तत्संसृद्भिरनुसमसर्पत् तत्स ऽ सृपा ऽ स ऽ सृप्त्वम्। तै १,८, १, १ ॥ [°सृप्- विष्णु- २४ द्र.]।

संस्कार- यस्य ( ब्राह्मणस्य ) गर्भाधानपुंसवनसीमन्तोन्नयनजातकर्मनामकरणनिष्क्रमणान्नप्राशन- गोदानचूडाकरणोपनयनाप्लवनाग्निहोत्रव्रतचर्य्यादीनि कृतानि भवन्ति स सान्तपनः। गो १, ३,२३।

संस्तुभ्- वागेव स ऽ स्तुप्छन्दः। माश ८, ५, २, ५।

संस्था- यास्सप्त संस्था या एवैतास्सप्त होत्राः प्राचीर्वषट्कुर्वन्ति ता एव ताः। जैउ १, ६, २,४।

संस्थित-यजुस्-

१. प्राणा वै संस्थितयजू ऽ षि। काठ २९, ३; क ४५, ४।

२. यत् (देवाः) समस्थापयँस्तस्मात्स ऽ स्थितयजू ऽ षि। माश ९, ५, १, २९।

संस्राव-भाग- आदित्य- ३२६ द्र.।

संहित,ता-

१. असौ वा आदित्यः स ऽ हित एष ह्यहोरात्रे संदधाति। माश ९, ४,१,८।

२. तद्देवाः संहितेन समदधुर्यत्समदधुस्तस्मात्संहितम्। तां ८, ४, ९।

३. तद् यद् (देवाः) उभयं धनं संहितमजयंस्तत् संहितस्य संहितत्वम् । जै १, १५७ ।
४. तस्यै वा एतस्यै संहितायै णकारो बलं, षकारः प्राण आत्मा । ······ आयुष्यमिति विद्यात् । ऐआ ३, २, ६ ।
५. यत् (देवाः) समदधुस्तद्धेव संहितस्य संहितत्वम् । जै १, १५८ ।
६. संहितं (+ भवति [तां.]) ह्यक्षरणिधनं प्रतिष्ठायै । जै १,१५७; तां १५,११,३ ।
७. स ९हितं भवति ह्यक्षरणिधनं प्रतिष्ठायै, प्रतिष्ठायैव सत्रमासते । तां ११, ५, ४ ।
८. स (संवत्सरः) छन्दोभिरात्मानं समदधाद्, यच्छन्दोभिरात्मानं समदधात् तस्मात् संहिता । ऐआ ३, २, ६ ।
९. स य एवमेतां संहितां वेद सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन, सर्वमायुरेति । शांआ ७, १२ ॥ [°त,ता- गो- ६४ द्र.] ।

**सक्तु-** देव- १०५; प्रजापति- १९६ द्र. ।

**सक्थि-** क्रौञ्च- द्र. ।

**सखि-**

१. सखा भक्षितः । काठ ३४, १६ ।
२. सखायः सप्तपदा अभूम । तै ३, ७, ७, ११ ॥ [°खि- प्राण- १९९ द्र.] ।

**सगर-** प्रजाभिस्सगरः ॥ काठ ३५, १५ ॥ [°र- प्रतीची- २९; विश्ववेदस्- द्र.] ।

**सगरा-** सगरा रात्रिः । माश १, ७, २, २६ ।

**सघा-** जगतीछन्दस्- ३ द्र. ।

**संकृति** (सामन्-)-

१. अहर्वा एतदम्लीयत तद्देवा देवस्थाने तिष्ठन्तः संकृतिना समस्कुर्व९स्तत् संकृतेः संकृतित्वम् । तां १५, ३, २९ ।
२. संकृति भवति स९स्कृत्यै । तां १५, ३, २८ ।
३. संकृतिना वै देवाः प्रजाः पशून् छ्रियम् अन्नाद्यं समकुर्वत । तत् संकृतिनस् संकृतित्वम् । जै ३, २५३ ।
४. संकृतिना समकुर्वन् । जै २, २५६ ।

**संक्रोश** (सामविशेष-)- अङ्गिरसां संक्रोशो भवति । एतेन वा अङ्गिरसां संक्रोशमानाः स्वर्गं लोकमायन् स्वर्गस्य लोकस्यानुख्यात्यै स्वर्गाल्लोकान्न च्यवते तुष्टुवानः । तां १२, ३, २३ ।

**संख्या-**

१. एकस्यां सीद, दशसु सीद, शते सीद, सहस्रे सीदायुते सीद, प्रयुते सीद, नियुते सीदार्बुदे सीद, न्यर्बुदे सीद, बद्वे सीद, समुद्रे सीद, मध्ये सीदान्ते सीद, परार्धे सीद । काठ ३९, ६ ।
२. एका च दश च शतं च सहस्रं च । अयुतं च प्रयुतं च । नियुतं चार्बुदं च । अर्बुदं च न्यर्बुदं च । समुद्रश्च मध्यं च अन्तश्च परार्धश्च । क २६, ९ ।
३. एका च शतं च सहस्रं च चायुतं च नियुतं च प्रयुतं चार्बुदं च समुद्रश्च मध्यं चान्तश्च परार्धश्च । तैसं ४, ४, ११, ३-४ ।
४. शताय स्वाहा; सहस्राय···; अयुताय···, नियुताय···, प्रयुताय···, अर्बुदाय···; न्यर्बुदाय समुद्राय···, मध्याय···, अन्ताय···, परार्धाय··· । तैसं ७, २, २०, १ ।

संख्यान- तदेतदनन्तं यत् संख्यानम् । जै २, ७३ ।

संगम- (आदित्यः) संगमं पितॄणाम् (आदत्त) । जै २, २६ ।

संगव- मैत्र- १७ द्र. । संग्रहीतृ- अश्विन्- ४४; आश्विन- ३ द्र. ।

संग्राम-

१. इन्द्रियेण वै मन्युना मनसा संग्रामं जयतीन्द्रमेव मन्युमन्तं मनस्वन्त ँ स्वेन भागधेयेनोपधावति, स एवास्मिन् (यजमाने) इन्द्रियं मन्युं मनो दधाति, जयति त ँ संग्रामम् । तैसं २, १, ३, २ ।

२. मृधो वा एष विहन्ति यः संग्रामं जयति, ··· अभिमातीर्वा एष हन्ति यः संग्रामं जयति । मै २, १, १० ।

३. यतरस्संयत्तयोरनायतनो भवति परा स जयते । काठ १०, ३ ।

४. यतरो वै संगृभाणयोरायतनवत्तरो भवति स जयति । मै २, १, २ ।

५. स (इन्द्रः) एवास्मिन् (यजमाने) इन्द्रियं मन्युं मनो दधाति, जयति तं संग्रामम् । तैसं २, २, ८, २-३ ॥ [°म- अग्नि ९; ३२; इन्द्र- ११०; १११; १९८; ३३०; मैत्र- ६; संवत्सर- ५२ द्र ] ।

सजन- एतद्ध वै सजनं यद् राजा । जै २, १८३ ।

सजात-

१. त (विश्वे देवाः) एवास्मै (यजमानाय) सजातान् प्रयच्छन्ति, ग्राम्येव भवति । तैसं २, १, ६, ४-५ ।

२. तिस्र आहुतीर्जुहोत्येतावन्तो (त्रयः) वै सजाता ये महान्तो, ये क्षुल्लका याः स्त्रियः । तैसं २,३, ९, ३ ।

३. पयस् सजाताः । काठ १२, १ ।

४. भूमा वै सजाताः । माश १, २, १, ७ ।

५ रस इव खलु वै सजाताः । तैसं २, १, ७, ६ ॥ [°त- प्राण- १३९; मारुत- १३; वैश्वदेव- १५ द्र.] ।

सजुष्- अथैवैतद्यजमान एताभिर्देवताभिः (ऋत्वादिभिः) सयुग्भूत्वैताः प्रजाः प्रजनयति तस्मादु सर्वास्वेव सजूः सजूरित्यनुवर्तते । माश ८, २, २, ७ ।

संज्ञपन-

१. घ्नन्ति वा एतत् पशुं यत् (संज्ञपयन्ति) । तैसं ६, ३, ११, १-२; माश १३, २, ८,२ ।

२. यत्पशुं संज्ञपयन्ति विशासति तत्तं घ्नन्ति । माश २,२,२,१; ११,१, २,१ (तु. ऐ २,६; ७; ७,१; कौ १०,४;५; गो १,३,१८; २,२,१ ॥ [°न- पशु- ८ द्र.] ।

संजय (सामन्-)-

१. ते देवा असुरान् संजयेन समजयन् यत्समजय ँ स्तस्मात्संजयं पशूनामवरुद्ध्यै संजयं क्रियते । तां १३, ६, ७ ।

२. यदिमान् लोकान् (देवाः) समजयंस्तत् संजयस्य संजयत्वम् । जै ३,१३२ ।

संज्ञा- ता उ एव संज्ञाः मनो वै रेतस्या, प्राणो गायत्री, चक्षुस् त्रिष्टुप्, श्रोत्रं जगती, वागनुष्टुप्...... ......एता उ ह संज्ञाः। सं ह वै तेन जानीते येन कामयते। जै १, २६९-२७०।

संज्ञान- संज्ञानं वः पश्चाद् ( उपदधाति ) इति। तैआ १, २०, १॥ [ °न- प्रतीची- ३० द्र.]।

संज्ञानी(इष्टि-)- यः समानैर्मिथो विप्रियः स्यात् तमेतया संज्ञान्या याजयेत्...इन्द्रमेवैनं (यजमानं) भूतं ज्यैष्ठ्याय समाना अभिसंजानते, वसिष्ठः समानानां भवति ( यजमानः )। तैसं २, २,११,६-७।

सत्-

१. प्राणा वै सत्। तैसं ७, ०, ९, ३।

२. प्राणो वै सन्। जै १, १०२॥ [सत्- अमृत- ४५; प्राण- ६०; लोक- ११; वामदेव्य- २६ द्र]।

सतोबृहती ( छन्दस्- )-

१. उक्षा वयः सतोबृहती छन्दः। तैसं ४, ३, ५, १।

२. तद् यत् समावदक्षराणि पदानि भवन्ति तत् सतोबृहतीनां सतोबृहतीत्वम्। सर्वतो ह वै बृहद् भवति य एवं वेद। जै ३,२८६।

३. पशवः सतोबृहती। ऐ ६, २८; गो २, ६, ८।

४. प्रजाः सतोबृहती। गो २, ६, ८।

५. प्राणाः सतोबृहती। ऐ ६, २८; गो २, ६, ८।

६. शिथिलमिव वा एतत् छन्दश्चराचरं यत् सतोबृहती। तां १७, १, १२।

७. शिथिलमिव वा एतच्छन्दो यत्सतोबृहती। तां १४, १०,३।

८. सतोबृहत्या वै देवा इमान् लोकान् व्याप्नुवन्निमानेवैताभिर्लोकान् व्याप्नोति। तां १६, ११, ९॥ [°ती- ऋषभ- ९; चन्द्रमस्- ३५ द्र.]।

सत्पति- अग्नि- ७२० द्र.।

सत्य-

१. अथो ह सत्यमेव विवदिषेत्। जै ३,७७।

२. अङ्गिरसत्यम् ( अन्वाभवत् )। काठ ३५, १५।

३. आपः सत्ये ( प्रतिष्ठिताः )। ऐ ३ ६; गो २ ३, २।

४. एतद्ध वै वाचः सत्यं यदो इ ज्वरेति, ज्वरेतीव ह वै वाचः सत्यं, सत्येन वै स तद् वाचः श्रद्धामुपहवमविन्दत। जै ३, २४।

५. एव ऽ ह वा ऽ अस्य जितमनपजय्यमेवं यशो भवति य एवं विद्वान्त्सत्यं वदति। माश ३, ४, २, ८।

६. किं तद्यत्सत्यमिति, यदन्यद्देवेभ्यश्च प्राणेभ्यश्च तत्सदथ यद्देवाश्च प्राणाश्च तद् यं, तदेतया वाचा ऽभिव्याह्रियते— सत्यमित्येतावदिदं सर्वम्। शांआ ३, ६; कौउ १, ६।

७. तत्सत्यं सदिति प्राणस्तीत्यन्नं यमित्यसावादित्यस्तदेतत्त्रिवृत् त्रिवृदिव वै चक्षुः शुक्लं कृष्णं कनीनिकेति। ऐआ २, १,५।

८. तदनुप्रविश्य (आत्मा) सच्च त्यच्चाभवत्। ··· यदिदं किं च तत्सत्यमित्याचक्षते। तैआ ८, ६,१; तैउ २,६,१।

९. तदेतत्त्र्यक्षर ऽसत्यमिति स इत्येकमक्षरं तीत्येकमक्षरममित्येकमक्षरं प्रथमोत्तमे अक्षरे सत्यं मध्यतो ऽनृतम्। माश १४, ८, ६, २।

१०. तदेतत्पुष्पं फलं वाचो यत्सत्यं, स हेश्वरो यशस्वी कल्याणकीर्तिर्भवितोः ··· तस्मात्काल एव दद्यात् काले न दद्यात्तत्सत्यानृते मिथुनीकरोति। ऐआ २, ३, ६।

११. तद्धास्य (शचिष्ठायाः [आदित्यस्य]) एतत् सत्यं पदं यदहः। तदेतदत्यायु नाम। जै २,२५८।

१२. तस्मादु हैतद्य आसक्ति सत्यं वदत्यैषावीरतर इवैव भवत्यनाढ्यतर इव, स ह त्वेवान्ततो भवति, देवा ह्येवान्ततो ऽभवन्। माश ९, ५, १, १६।

१३. तस्मै (प्राचीनयोग्याय) हैता ऽशोकतरां व्याहृतिमुवाच (उद्दालकः) यत्सत्यं तस्मादु सत्यमेव वदेत्। माश ११ ५, ३, १३।

१४. नामरूपे सत्यम्। माश १४, ४, ४, ३।

१५. श्रद्धा पत्नी (+सत्यं यजमानः [ऐ.]) । ऐ ७,१०; तैआ १०, ६४,१।

१६. स (ब्राह्मणः) सत्यमेव वदेत्, सत्यं चरेत्, सत्यं चिकीर्षेत्, सत्यमेव भवति। जै २,२५९।

१७. सत्यं वद। तैआ ७, ११, १; तैउ १, ११, १।

१८. सत्यं वदिष्यामि। तैआ ७, १, १; तैउ १, १, १।

१९. सत्यं वा एतद् यद्वर्षति। तै १, ७, ५, ३।

२०. सत्यं वै साम। मै १, ११, ७; काठ १४, ७।

२१. सत्यं वै सुकृतस्य लोकः। तै ३, ३, ६, ११।

२२. सत्य ऽवै हिरण्यम्। मै ४,३,१; ८; ५,१; ८,३; काठ २४,५; जै २, ११७; गो २,३,१७।

२३. सत्य ऽह होतैषामासीत्। यद्विश्वसृज आसत। तै ३, १२,९, ३।

२४. सत्यं च मे श्रद्धा च मे (यज्ञेन कल्पताम्)। तैसं ४, ७, २, १।

२५. सत्यं ब्रह्मणि (प्रतिष्ठितम्)। ऐ ३, ६; गो २, ३, २।

२६. सत्यस्यैव तत् सत्यं यत्पुष्कराणि। जै २, २००।

२७. सत्यान्न प्रमदितव्यम्। तैआ ७, ११, १; तैउ १,११, १।

२८. सत्येनैव जयति। मै ४, ३, ८।

२९. स यः सत्यं वदति यथाग्नि ऽसमिद्धं तं घृतेनाभिषिञ्चेदेव ऽहैनं स उद्दीपयति तस्य भूयो भूय एव तेजो भवति श्वःश्वः श्रेयान्भवत्यथ यो ऽनृतं वदति यथाग्नि ऽसमिद्धं तमुदकेनाभिषिञ्चेदेव ऽहैन ऽस जासयति तस्य कनीयःकनीय एव तेजो भवति। श्वःश्वः पापीयान्भवति तस्मादु सत्यमेव वदेत्। माश २, २, २, १९।

३०. स यावदस्य वशः स्यात्तावत् सत्यमेव विवदिषेत्। माश २,१,१,४।

३१. सव्ये ऽक्षिणि सत्यस्य। शांआ ६, २; कौउ ४, २।

३२. सेयं प्राची दिक् (आदित्याय) प्रायच्छन्मदुदयेत्यहश्च सत्यं च। जै २,२५॥ [सत्य- अग्नि- ८०; ३५९; अग्निहोत्र- ४२; अनृत- १५; १८; २२; ३३; अप्- ७१; ७२; १६७; २५२; अश्विन्- ३१; अहन्- ९; आदित्य- ३२; २२६; ३५६; इन्द्र- ३८५; ऋत- २; ५-१०;

२१; २६; चक्षुस्- ४; २६; ६८; तपस्- ३३; त्रयीविद्या- ५; दिव्- ४३; दीक्षा- १४; १८; दीक्षित- २७; देव- ३४; २५६; धर्म- १०; पृथिवी- ६६; ८०; प्रजापति- ७७; १५४; प्रज्ञा- २; प्राण- ३५; १३८; २५१; ब्रह्मन्- ३९; १५२; १५३; मित्र- १८; २१; ३१; यज्ञ- १५३; रात्रि- ९; रुक्म- ६; वाच्- १३१; विद्युत्- ८; व्रत- ६; शुक्र- १३; श्रद्धा- ७ द्र.]।

**सत्य-मय-** देव- २५५ द्र.। **सत्य-वत्->°वती-** वाच्- १०८ द्र.।

**सत्य-संहिता-** देव- २५५ द्र.। **सत्य-हविस्-** अध्वर्यु- ४१ द्र.।

**सत्याऽनृत-** वाचो वा एतौ स्तनौ, सत्यानृते वाव ते (द्वे अक्षरे)। गो २,४,१९॥ [°त- वाच- ११८ द्र.]।

**सत्याऽऽशिस्-** साम हि सत्याशीः। तां ११, १०,१०; १३, १२, ७; १५, ५,१३।

**सत्र-**

१. आत्मदक्षिणं ह खलु वै सत्रम्, लोमैव प्रथमाभ्यामुपसद्भ्यां स्पृण्वते त्वचं द्वितीयाभ्यां, मांसं तृतीयाभ्याम्, अस्थि चतुर्थीभ्यां, मज्जानं पञ्चमीभ्यां यदेवैषां तत्र किं चास्पृतं भवति, तदेव षष्ठीभ्यां स्पृण्वते, शुद्धाः पूता मेध्याः शुचयो भूत्वा देवलोकमपियन्ति। जै २, ३७४। [तु. तैसं ७, ४, ९, १; कौ १५, १; तां ९, ४, १९-२१]।

२. एतं वा एते गच्छन्ति य एष (आदित्यः) तपति ये सत्रमासते। काश ५, ७,३,१।

३. एष ह वै कुणपमत्ति यः सत्रे प्रतिगृह्णाति। तैसं ७, २, १०, २।

४. तद् यत् सद् अत्रायत तत् सत्रस्य सत्रत्वम्। जै ३, ३११।

५. प्रजापतिर्वावैष सन्त्सद्ध वै सत्रेण स्पृणोति प्राणा वै सत्, प्राणानेव स्पृणोति। तैसं ७,२,९,३।

६. इवस्तनं नो ऽसदिति वै सत्रमासते। जै ३, १७।

७. सद्वै सत्रिणस्स्पृण्वन्ति, तत् सत्रस्य सत्रत्वं, प्राणा वै सत्, प्राणानेव तत् स्पृण्वन्ति, सर्वासां वा एते प्रजानां प्राणैरासते ये सत्रमासते। काठ ३४, ८।

८. सर्वं वै सत्रम्। माश ४, ६, १, १५।

९. सर्वान् लोकानहीनेम। अथो सत्रेण (अभिजयति)। तै ३, १२, ५, ७।

१०. सुवर्गं वा एते लोकं यन्ति ये सत्रमुपयन्ति। तैसं ७, ४, ९, १॥ [°त्र- द्वादशाह- ११; श्रद्धा- ४ द्र.]।

**सत्रिन्-** शिखा- १ द्र.।

**सत्रिय-** कमग्निं चिनुते। सत्रियमग्निं चिन्वानः। संवत्सरं प्रत्यक्षेण। तैआ १, २२, १०।

**सत्राजित्-** यत् (देवा असुरान्) सत्राजयंस् तत् सत्राजितस् सत्राजित्त्वम्। जै २, ९२।

**सत्राराज्-** रक्षोहन्- ३ द्र.।

**सत्रासाहीय** (सामन्-)-

१. तद्यद् (इन्द्रः) सत्रा सर्वानसुरानसहत तत् सत्रासाहीयस्य सत्रासाहीयत्वम्। जै १, १८२।

२. यद्वा असुराणामसोढमासीत्तद्देवाः सत्रासाहीयेनासहन्त सत्रैनानसक्ष्महीति तत्सत्रासाहीयस्य सत्रासाहीयत्वम्। तां १२, ९, २१।

३. सत्रा भ्रातृव्यं सहते सत्रासाहीयेन तुष्टुवानः। तां १२,९,१२॥ [°य- जराबोधीय- ५ द्र.]।

सत्वत्- दक्षिण,णा- १६; भरत- ८ द्र.। सत्वन्- भरत- ५ द्र.।

सदस्-

१. उदरं वा एतद्यज्ञस्य यत् सदः। काठ २८, १।

२. उदरमेवास्य (यज्ञस्य) सदः। माश ३, ५,३, ५।

३. ऐन्द्रं हि देवतया सदः। तैसं ६, २, १०,५।

४. तस्मादुदीचीनवंशं सदो भवति। माश ३, ६, १, २३।

५. तस्य पृथिवी सदः। तै २, १, ५, १।

६. (सोमः) पृथिवी सदसि। काठ ३४, १४।

७. यदस्मिन्विश्वे देवा असीदंस्तस्मात्सदो नाम तऽ उऽएवास्मिन्नेते ब्राह्मणा विश्वगोत्राः सीदन्ति। माश ३, ५, ३, ५; ६,१, १॥ [°दस्- उदर- ७; ऐन्द्र- ८; ४७; ऐन्द्री- ५; जागत- ६; ७; पृथिवी- १०५;१३२;२०३;२०४; प्रजापति- १९५; मनुष्य- २७ द्र.]।

सदस्य- या (दक्षिणां) सदस्येभ्यो ददाति, सोमपीथं तया निष्क्रीणीते। मै ४, ८, ३। [°स्य- आकाश- ३; ऋतु- ९४; प्रजापति- १७७ द्र.]।

सदोविशीय- सदोविशीयेन वै देवा विशमसीदन्। जै २, १०३॥ [°य- पशु- १२० द्र.]।

सदोहविर्धान- अदितिस्सदोहविर्धानाभ्याम् (समागच्छतु)। काठ ९,१०॥ [°न- द्यावापृथिवी- १२; वत्सापाकरण- द्र.]।

सदानीरा- कोसलविदेह- द्र.।

सद्यःक्री (एकाहसोमयाग-)- अस्माभिः (अङ्गिरोभिः) एष प्रतिगृहीतो य एष (सूर्यः) तपतीति तस्मात्सद्यःक्रियो ऽश्वः श्वेतो दक्षिणा। माश ३, ५, १,१९॥ [°क्री- अङ्गिरस्- २० द्र.]।

सधमाद्- अनतिमानिन्य इत्येवैतदाह यदाह सधमाद इति। माश ५,३,५, १९।

सधस्थ- स्वर्गो वै लोकः सधस्थः। माश ९, ५, १, ४६॥ [°स्थ- प्रतिष्ठा- ४ द्र.]।

सनातन- पृणक्षि सानसिं क्रतुम् इति पृणक्षि सनातनं क्रतुमित्येतत्। माश ७, ३, १, ३२॥ [°न- इन्द्र- १९५ द्र.]।

सनि- पूषन्- ३२ द्र.। संतति- मनस्- ४१ द्र.।

संतनि (सामन्-)-

१. वाग्वा एषा प्रतता यद् द्वादशाहः। तां संतनिनैव संतन्वन्ति। प्राणा ह खलु वै संतनयः। प्राणैर्वाक्संतता। यद्यत्संतनि भवति प्राणानामेव संतत्यै, वाचं प्राणैस्संतनवाम। जै ३, ११९।

२. संतनि उपरिष्टात् (भवति)। जै ३, ९२।

३. संतनिना समतन्वन्। जै २, २५६; तां ४, ९, २७॥ [°नि- लोक- १२ द्र.]।

संधा- संधां च या संदधे ब्रह्मणैषः। तैआ ३, १४, २।

संधि (स्तोत्र-)-

१ एषा वा उक्थस्य सम्मा यद्रात्रिः (संधिस्तोत्रम्), त्रीण्युक्थानि, (अग्निरुषा अश्विनाविति) त्रिदेवत्यः संधिः। तां ९, १, २५-२६।

२. ते ( देवा ) एतद्राथन्तरं संधिमपश्यन् । तेनाहोरात्रे उपरिष्टात् समदधुः । यत् समदधुस्तत् संधेस् संधित्वम् । जै १, २०९ ॥ [°न्धि- अन्तरिक्ष- १६३-१६५ द्र.] ।

संध्या-

१. तदु ह वा एते ब्रह्मवादिनः पूर्वाभिमुखाः संध्यायां गायत्रियाभिमन्त्रिता आप ऊर्ध्वं विक्षिपन्ति, ता एता आपो वज्रीभूत्वा तानि रक्षांसि मन्देहारुणे द्वीपे प्रक्षिपन्ति, यत्प्रदक्षिणं प्रक्रमन्ति तेन पाप्मानमवधून्वन्ति, उद्यन्तमस्तं यन्तमादित्यमभिध्यायन् कुर्वन् ब्राह्मणो विद्वान् सकलं भद्रमश्नुते, स वादित्यो ब्रह्मेति ब्रह्मैव सन् ब्रह्माप्येति । तैआ २,२,१-२ ।

२. अथ (संध्यायाम्) यदपः प्रयुङ्क्ते ता विप्रुषो वज्रीभवन्ति ता विप्रुषो वज्रीभूत्वाऽसुरानपाघ्नन्ति । ष ४,५ ।

३. तस्माद् ब्राह्मणोऽहोरात्रस्य संयोगे संध्यामुपास्ते सज्योतिष्याज्योतिषो दर्शनात् सोऽस्याः कालः । ष ४,५ ।

४. ब्रह्मवादिनो वदन्ति कस्माद् ब्राह्मणः सायमासीनः संध्यामुपास्ते कस्मात्प्रातस्तिष्ठन् । ष ४,५ ।

५. यत्सायञ्च प्रातश्च संध्यामुपास्ते तया वीरस्थानम् ··· अविच्छिन्नं भवति । ष ४,५ ।

**सपत्न-** अभिमाति- ३; इन्द्राग्नि- १; पाप्मन्- १० द्र. ।

**सप्तऋषि-** दिव्- ३; प्राण- १३७ द्र. ।

**सप्तत्रिंश-** असाव् आदित्यस् सप्तत्रिंशः । जै ३,२५८ ।

**सप्त-दशन्-** दश हस्त्या अंगुलयस्, सप्त शीर्षन् प्राणाः । तत् सप्तदश । जै ३, ३१९ ॥

सप्तदश-

१. अथ उदरेण पापं कृत्वा मन्येत, सप्तदशेनाग्निष्टुता यजेत । जै २,१३५ ।

२. अष्टाविमे जत्रवोऽष्टाविम, ऊर्ध्वो जत्रुः सप्तदशः । जै २,५७ ।

३. आ श्रावयेति चतुरक्षरमस्तु श्रौषडिति चतुरक्षरं, यजेति द्व्यक्षरं, ये यजामहे इति पञ्चाक्षरं, द्व्यक्षरो वषट्कार एष वै सप्तदशः प्रजापतिर्यज्ञमन्वायत्तो य एवं वेद प्रति यज्ञेन तिष्ठति, न यज्ञाद् भ्रंशते । तैसं १,६,११,१ ।

४. उदरं वा एष स्तोमानां यत्सप्तदशः । तां ४,५,१५ ।

५. एष ह वै तीव्रो बहुलो यत् सप्तदशः । जै २,१५१ ।

६. प्रजातिः सप्तदशः । ऐ ८,४ ।

७. यत् सप्तदशो यदेवास्य (यजमानस्य) मध्यतोऽपूतं तत्तेनापहन्ति । तां १७,५,६ ।

८. यस्य सप्तदशमन्तर्यन्ति, प्रजां तस्यान्तर्यन्ति । तैसं ७,१,३,१-२ ।

९. व्योम सप्तदशः । तैसं ४,३,८,१; मै २,८,४ ।

१०. सप्तदश एव स्तोमो भवति प्रतिष्ठायै प्रजात्यै । तां १२,६,१३ ।

११. सप्तदशस्ते अग्न आत्मा । काठ ३९,२ ।

१२. सप्तदशेन पशुकामः प्रजननकामः ( यजेत् ) । जै २,१३६ ।

१३. सप्तदशो भवत्यन्नाद्यस्यावरुद्ध्या अथो प्रैव तेन जायते । तैसं ७,१,१०,४ ।

१४. सर्व्वः सप्तदशो भवति । तां १७, ९, ४ ॥ [°श- अन्न- ४६; ५६; १८६; आदित्य- ३२५; आर्भव- १; उदर- ६; १९; उरस्- २; एकविंश- २७; ३३; गायत्र- १८; जमदग्नि- १; दक्षिणतस् ३१; पक्ष- ३; ४; पशु- १९०; ३२७; पुरुष- ११२; ११३; प्रजनन- ८; प्रजापति- ५५; ६१; ८१; ११३; १७८; १७९; २५७; २७३; २७५, ब्राह्मणाच्छंसिन्- ५; भूमन्- २; माध्यन्दिन- २६; यशस्- १०; राष्ट्र- ९; विश्- १३; २२; २४; विश्वेदेव- ६; वैश्य- २२; संवत्सर- ४८; ५७; ९४ द्र.] ।

सप्तदश-स्तोम- तम् (सप्तदशस्तोमम्) उ प्रजापतिरित्याहुः । तां १०,१,९ ।

सप्तदशरात्र(यज्ञ-)- य एवं विद्वांसः सप्तदशरात्रम् आसतेऽन्नादा एव भवन्ति । तैसं ७,३,८,१ ।

सप्तन्-, धामन्- छन्दस्- ३० द्र. ।

सप्तम-, अहन्-

१. चतुर्विंश ँ सप्तममहः । तां १०, ५, ४ ।

२. ततिरेव सप्तममहः । कौ २६,८ ।

सप्तमी-,चिति- अमृत- १७; प्राण- ११२ द्र. ।

सप्तन्-, योनि- सप्त योनीरापृणस्व (सप्तयोनीँरापृ° [काठ.]) घृतेन । तैसं १,५,३,२-३;४,६,५,५; मै १, ६, २; काठ ७, १४ ॥ [°नि- चिति- ८ द्र.] ।

सप्तन्-, रश्मि- आदित्य- ३५४; ३५८; तमस्- ५ द्र. ।

सप्तरात्र-

१. य एवं विद्वान् सप्तरात्रेण यजते यावन्त एव ग्राम्याः पशवस्तानेवावरुन्धे । तैसं ७, २, २, १ ।

२. सप्तरात्रो भवति, सप्त ग्राम्याः पशवः, सप्तारण्याः, सप्त छन्दा ँ स्युभयस्यावरुद्ध्यै । तैसं ७, २, २, १ ।

सप्तर्षि-

१. अमी ह्युत्तराहि सप्तर्षय उद्यन्ति । माश २, १, २, ४ ।

२. यत्र सप्तर्षीन् ( यत्र सप्त ऋषीन् [मै.] ) पर एकमाहुः । मै २, १०, ३; काठ १८, १ ।

३. सप्तऽर्षीनु ह स्म वै पुरऽर्क्षा इत्याचक्षते । माश २, १, २, ४ ॥ [°र्षि- अग्नि- ७२५; ऋक्ष- १; धातृ- २४; प्राण- ५३; २६० द्र.] ।

सप्तविंशति- दश हस्त्या अंगुलयो दश पद्या, सप्त शीर्षन् प्राणाः तत् सप्तविंशतिः । जै ३,३१९ ।

सप्तहोतृ-

१. इन्द्रियं वै सप्तहोता । तै २, २, ८, २ ।

२. तस्मै ( ब्रह्मणे ) सप्तम ँ हूतः प्रत्यशृणोत् । स सप्तहूतोऽभवत् । सप्तहूतो ह वै नामैषः । तं वा एत ँ सप्तहूत ँ सन्तम् सप्तहोतेत्याचक्षते परोक्षेण । परोक्षप्रिया इव हि देवाः । तै २, ३, ११, २ ।

३. ते ( देवाः ) त्रयस्त्रि ँ शमेवायतनमचाय ँ स्तेनेद ँ समतन्वन् । काठ ९, १२ ।

४. ते वै सप्तहोतारो न्यसीदन्नर्यमगृहपतयो—महाहविर्होतासीत् , सत्यहविरध्वर्युर् , अचित्त-

पाजा अग्नीद्, अचित्तमना उपवक्ता, ऽनाधृष्यश्चाप्रतिधृष्यश्चाभिगरा, अयास्य उद्गाता… ते … ( त्रयस्त्रिंशेन ) इद ५ समतन्वन् । मै १, ९, ५ (तु. तैआ ३,५,१) ।

५. सप्तहोतारम् अनुयाजानामुपरिष्टाद् व्याचक्षीत । काठ ९, १४ ।

६. सप्तहोत्रा याजयेद्यो यज्ञस्य संस्थामनु पापीयान्स्याद्वि वा एष च्छिनत्ति यो यज्ञस्य संस्थामनु पापीयान् भवति । काठ ९, १४ ।

७. सप्तहोत्राऽर्यमगृहपतयो न्यसीदन् संतनवामेति, तेषां महाहविर्होतासीत् सत्यहविरध्वर्युरचित्तपाजा अग्निदचित्तमना उपवक्तानाधृष्यश्चाप्रतिधृष्यश्चाभिगरा अयास्य उद्गाता । काठ ९, १२ ।

८. सप्तहोत्रा वै देवाः स्वरायन् । मै १, ९, ५; काठ ९, १४ ।

९. सौम्यो ऽध्वरः सप्तहोता । मै १, ९, ५; काठ ९, १३ ।

१०. सौम्यो ऽध्वरः सप्तहोतुः ( निदानम् ) । तै २, २, ११, ६ ॥ [°तृ- अन्न- ५७; अर्यमन्- १; आत्मन्- ७८; आर्भव- ४; इन्द्र- ९६; त्रयस्त्रिंश- १२; यज्ञ- ८४ द्र.] ।

**सप्तहोत्रा-** दिश्- ३४ द्र. ।

**सप्ताह-** जमदग्नि- ६ द्र. ।

**सप्ति-**

१. आशुः सप्तिः ( आजायताम् ) । तैसं ७, ५, १८, १ ।

२. आशुः सप्तिरित्याह । अश्व एव जवं दधाति । तस्मात्पुराशुरश्वो ऽजायत । तै ३, ८, १३,२ ।

३. सप्तिरसि ( हे ऽश्व त्वं ) । तां १, ७, १ ॥ [°प्ति- अर्वन्- २; वायु- ८६ द्र.] ।

**सप्रथ-** सप्रथ सभां मे गोपाय । ये च सभ्याः सभासदः । तानिन्द्रियावतः कुरु । सर्वमायुरुपासताम् । तै १, २, १, २६ ।

**सफ** ( सामन्- )- सफेन वै देवा इमान् लोकान् समाप्नुवन् यत् समाप्नु ५ स्तत्सफस्य सफत्वम् । तां ११, ५, ६; १५, ११, ५ ।

**सब्द-** अहन्- ४४ द्र. ।

**सभ** (सामन्-)-

१. अथ सभम् । सभमविभं सुष्वाणायासद् इति । अथो सभं सुष्वावोऽनवाता इति । जै २,१९५ ।

२. सभेन वै देवा असुराणां तेजो बलमिन्द्रियं वीर्यं पशूनन्नाद्यं सभेन सभम् आत्मानमध्यकुर्वत । तत् सभस्य सभत्वम् । जै १,१६० ।

३. स (प्रजापतिः) अब्रवीत् सभो वै पशुभिरभूवम् इति । तद्वेव सभस्य सभत्वम् । जै १,१६०

**सभा-** निरिन्द्रिया स्त्री, पुमानिन्द्रियवान् तस्मात् पुमा ५ सः सभा ५ यन्ति, न स्त्रियः । मै ४,७,४ । [°भा- इन्द्रिय- ३१ द्र.] ।

**सभासाह-** एष वै ब्राह्मणानां सभासाहः सखा यत्सोमो राजा । ऐ १,१३ ।

**सभेय-** एष वै सभेयो युवा यः प्रथमवयसि ( °वयसी [माश.] ) तस्मात् प्रथमवयसि ( °वयसी [माश.] ) स्त्रीणां प्रियो युवा पुमान् भावुकः । माश १३, १,९, ८; काठसंक १२४, १२;१३; (तु. तै. ३, ८,१३,३ ) ।

समन्त (सामन्-)-

१. अथ समन्तम् । समन्ताः प्रजापशुभिरसामेति । जै २,१४ ।

२. इदमेवान्तरिक्षं समन्तमनयोरेव लोकयोः (द्यावापृथिव्योः) समन्तत्वाय । जै ३,१८६ ।

३. इन्द्राग्नी वा अकामयेतां, समन्तौ स्याव, समानीमृद्धिम् ऋध्नुयावेति । तावेतत् सामापश्यताम् । अर्धमन्योऽपश्यद् अर्धम् अन्यः । तस्यान्तौ समाहृत्य समधत्ताम् । यत् समधत्तां तत् समन्तस्य समन्तत्वम् । जै ३,१८६ ।

४. समन्तेन पशुकामः स्तुवीत । पुरोधाकामः समन्तेन स्तुवीत । तां १५, ४,७ । [°न्त- पशु- १२१ द्र. ] ।

समा-

१. समाभिरेवाग्निं (°रेवर्तून् [काठ.]) वर्धयत्यृतुभिः संवत्सरम् । तैसं ५,१,८,५-६; काठ २०,१ ।

२. समास्त्वा (अग्निम्) ऋतवो वर्धयन्त्विति, समाभिश्चैवैनमृतुभिश्च समिन्धे । मै ३, ४,६ ।

समान-

१. तं (संज्ञप्तं पशुम्) ऊर्ध्वा दिक्समानेत्यनुप्राणत्समानमेवास्मिँस्तददधात् । माश ११, ८, ३,६ ।

२. निरुक्तानिरुक्त इव ह्यय ५ समानः । ष १,२ ॥ [°न- अथर्वन्- ७; उद्गातृ- २१; दिश्- ३६ द्र. ] ।

समायुस्- वामदेव्य- २८ द्र.

समिध्-

१. एषा ते अग्ने समित् । तया समिध्यस्व । तैआ ४,१०,३ ।

२. त्रिःसप्त समिधः कृताः । काठसंक १०१: १० ।

३. यदेन ५ समयच्छत् तत्समिधः समित्त्वम् । तै २,१,३,८ ।

४. स प्रजापतिरब्रवीद् वार्यं वृणा अहं वा एतास् ( विषलिप्ता ओषधीः ) स्वदयिष्यामीति स एता ५ समिधमवृणीत, तस्मादेकैको प्रजापतिः । काठ ६,५ ।

५. समिदसि समेधिषीमहि । मै १,१०,१३; ४,८,५; काठ ४,१३ ॥ [ °मिध्- अग्नि- ५७२; अग्निहोत्र- १७; अस्थि- ४; उषस्- १४; गर्भ- ४; छन्दस्- ११२; त्वष्टृ- २०; पृथिवी- २०६; प्रजापति- २१०; प्राजापत्य- ७;१४; प्राण- १४०; वसन्त- ११;१३;१४ द्र. ]

समिष्ट-यजुस्-

१. अथ यस्मात् समिष्टयजुर्नाम । या वाऽ एतेन यज्ञेन देवता ह्वयति याभ्य एष यज्ञस्तायते सर्वा वै तत्ताः समिष्टा भवन्ति तद्यत्तासु सर्वासु समिष्टास्वथैतज्जुहोति तस्मात्समिष्ट-यजुर्नाम । माश १,९,२,२६ (तु. माश ४,४,४,३) ।

२. अन्तो हि यज्ञस्य समिष्टयजुः । माश ३,१,३,६ ।

३. ( देवाः ) यत्समयजंस्तस्मात्समिष्टयजू ५ षि । माश ९,५,१,२९ ।

४. समिष्टयजू ५ षि ह्येवान्तो यज्ञस्य । माश ४,४,५, २ [°जुस्- अन्न- ५६; पाद- ६ द्र.] ।

समुद्र-

१. अर्णवाय त्वा, सिन्धवे त्वा, समुद्राय त्वा सरसे त्वा । काठ ४०,४ ।

२. आपो वै समुद्रः। माश ३,८,४,११; ९,३,२७; १२,९,२,५।

३. एष वाव स समुद्रः। यच्चात्वालः। तै १,५,१०,१।

४. तद्यत् ( आपः ) समद्रवन्त तस्मात्समुद्र उच्यते। गो १,१,७।

५. तद्बस्तिमभिनत्। स समुद्रो ऽभवत्। तस्मात्समुद्रस्य ( जलं ) न पिबन्ति। प्रजननमिव हि मन्यन्ते। तै २,२,९,२-३।

६. तस्मादिमं लोकं ( पृथिवीं ) दक्षिणावृत्, सर्वतः समुद्रः पर्येति। माश ७, १, १,१३। [तु. माश ९,१,२,३]।

७. य एवायं (वायुः) पवत एष एव स समुद्रः। एतं हि संद्रवन्तं सर्वाणि भूतान्यनुसंद्रवन्ति। जैउ १,८,१,४।

८. योनिः समुद्रः। मै ३,२,५।

९. समुद्र इव हि कामोऽपरिमितः। काठ ९,१२।

१०. समुद्रमनु प्रजाः प्रजायन्ते। तैसं ५,२,६,१।

११. समुद्रः स्रोत्यानाम् ( अधिपतिः )। तैसं ३,४,५,१।

१२. समुद्रेणापः ( अन्वाभवन् )। काठ ३५,१५।

१३. समुद्रोऽवगतः (सोमः)। तैसं ४, ४,९,२ ॥ [°द्र- अधिपति- ७; अन्तरिक्ष- ८१; अप्- २५७; २५८; अवभृथ- ६; अश्व- ९७;९८; अहोरात्र- ३७; उदर- २०;२१; कश्यप- ४; काम- ४; चात्वाल- ३; छन्दोम- २०; तपस्- २७; तेजस्- ३४; दक्षिण,णा- ३२; दिव्- ३७; पशु- ३३३; पुरुष- ७५; पृथिवी- १०१; मनस्- ५५; ७०; मरुत्- ५; रथन्तर- ३९; रुक्म- ४; वरुण- ६१; वाच्- ९६; वायु- १३; विश्वव्यचस्-, शिशुमार- द्र. ]।

**समृतयज्ञ-** दर्शपूर्णमास- १८ द्र.।

**समृद्ध-**

१. यो वै ज्ञातो ऽनूचानः स समृद्धः। माश ३, ६, १, २९।

२. तद्वै समृद्धं यस्य कनीयांसो भार्याः ( पोष्याः ) असन्भूयांसः पशवः। माश २, ३,२,१८।

**सं-पद्-**

१. यत् प्रजापतिं ( देवाः ) अब्रुवंस्तव सम्पदेति तस्मादनुष्टुभं सम्पद्यते। जै १, २११।

२. यो ह वै सम्पदं वेद, सं हास्मै कामाः पद्यन्ते,। शांआ ९,२। [ °पद्- श्रोत्र- ४;६ द्र.]।

**सं-पात ( सूक्तविशेष)-**

१. एतैर्वै संपातैरेत ऋषय इमांल्लोकान्त्समपतंस्तद्यत्समपतंस्तस्मात् संपाताः। तत् संपातानां संपातत्वम्। गो २, ६, १।

२. तान् क्षिप्रं समपतद् यत्क्षिप्रं समपतत्तत्संपातानां संपातत्वम्। ऐ ६,१८।

३. तान्वा एतान्त्संपातान्विश्वामित्रः प्रथममपश्यत्तान्विश्वामित्रेण दृष्टान्वामदेवो ऽसृजत। ऐ ६, १८; गो २, ६, १।

४. वामदेवो वा इमांल्लोकानपश्यत्तान्त्संपातैः समपतत् यत्संपातैः समपतत्तत्संपातानां संपातत्वम्। ऐ ४, ३०।

५. संपातैर्वै देवाः स्वर्गं लोकं समपतन् । कौ २२, १ ।

**सं-भरण-** त्रयोविंश-; संवत्सर- ७१ द्र.

**सं-भार-**

१. तमेतावच्छः समभरन् यत्संभाराः । तै २, २, २,५-६ ।

२. यत् समभरँस्तत् संभाराणा ९ संभारत्वम् । काठ ९, १५ ।

३. स यद्वाऽइतश्चेतश्च संभरति । तत्संभाराणा ९ संभारत्वम् । माश २, १, १, १ ।

**सं√भू**

१. 'पृथिव्या संभव' इति, पृथिव्या संजानीष्वेत्येवैतदाह । माश ३, ६, ४, १४; काश ४, ६, ४, ६ । [√°भू प्राण- ८० द्र.] ।

**सं-भूति-** प्राण- ११० द्र. । **सं√भृ** आज्य- ४ द्र. ।

**सं-मार्जन-** अन्न- ५८; वृष्टि- ३५ द्र. ।

**सम्राज्-**

१. यदस्याः (पृथिव्याः) समभरन् । तत्सम्राजः सम्राट्त्वम् । तैआ ५, १, ६ ।

२. सम्राट् सम्भृतः (प्रवर्ग्यः) । तैआ ५, ११, १ ।

३. सम्राडसि भ्रातृव्यहा । तैसं १, ३, २, १ ।

४. सम्राडसि सपत्नहा । क २, ५ ।

५. तस्य यो रसो व्यक्षरत्तं पाणिभिः संममृजुस्तस्मात्सम्राट् । माश १४, १, १, ११ ।

६. स यदाह सम्राडसीति सोमं वा एतदाहैष ह वै वायुर्भूत्वान्तरिक्षलोके सम्राजति तद् यत् सम्राजति तस्मात्सम्राट् तत्सम्राजस्य सम्राट्त्वम् । गो १, ५, १३ ॥ [ °म्राज्- कृशानु-; घर्म- ४; प्रतीची- ३२; रथन्तर- १८; वाजपेय- ४;८;१० द्र. ] ।

**साम्राज्य-**

१. प्रजापतिः साम्राज्यम् । काठ २७, ६ ।

२. बृहती स्वर्गो लोकस् साम्राज्यम् । जै २, ३७९; ३८२ ।

३. साम्राज्यं वै साम । माश १२, ८,३,२३; गो २,५,७ ।

४. साम्राज्यं वै स्वर्गो लोकः । तां ४, ६, २४ । [°ज्य- अन्न- ५९; प्राची- १; ८; बृहती- ३९; बृहस्पति- ३०;४३; राज्य- १; वरुण- १०; विश्वेदेव- १५ द्र.] ।

**सरघ्-** ऋत्विज्- ६ द्र. । **सरघ,घा-** पृथिवी- ६७; ब्राह्मण- ४४ द्र. ।

**सरमा-** भूमि- ४; वाच्- ९७ द्र. ।

**सरस्वत्-**

१. द्वादशकपालः (पुरोडाशः) सरस्वते भवति । तैसं ३, ५, १, ५ ।

२. ये ते सरस्व ऊर्मयो मधुमन्तो घृतश्चुतः । तेषां ते सुम्नमीमहे । यस्य व्रतं पशवो यन्ति सर्वे यस्य व्रतमुपतिष्ठन्त आपः । तैसं ३, १, ११, ३ ।

३. सरस्वते सत्यवाचे चरुम् (निर्वपति) । तैसं १,८,१९,१ ।

४. सरस्वत्यै चरुं, सरस्वते चरुं, मिथुनौ गावौ दक्षिणा । तैसं १,८,१,२ ।

५. सरस्वतो निपक्षतिः । काठ ५३,१२ ।

६. स्वर्गो लोकः सरस्वान्। तां १६, ५, १५ [ °स्वत्- अमावास्या- २; प्रजनन- ३; मनस्- ५६; शुक- ४; संवत्सर- ८० द्र.]।

सरस्वती-

१. एका चेतत् सरस्वती नदीनां शुचिर्यती गिरिभ्या आ समुद्रात्। रायश्चेतन्ती भुवनस्य भूरेर्घृतं पयो दुदुहे नाहुषाय। मै ४,१४,७।
२. एषा वा अपां पृष्ठं यत्सरस्वती। तै १, ७, ५, ५।
३. दुहे कामान् सरस्वती। काठ ३८, ८।
४. प्रणो देवी सरस्वती वाजेभिर्वाजिनीवती। धीनामविन्यवतु। तैसं १,८,२२,१।
५. सरस्वतीं जिह्वाग्रेण (प्रीणामि)। तैसं ५ ७, ११, १; काठ ५३, १।
६. सरस्वतीं वाक् गच्छति। तैसं २,३,११,१।
७. सरस्वतीति तद् द्वितीयम् वज्ररूपम्। कौ १२, २।
८. सरस्वती (श्रियः) पुष्टिम् (आदत्त)। माश ११, ४, ३, ३।
९. सरस्वतीरापो ऽभिषेचनीयाः। जै २, २०१।
१०. सरस्वत्या अग्रजिह्वम्। मै ३, १५, १।
११. सरस्वत्याज्यभागा स्यात्। तैसं २, २, ९, १।
१२. सरस्वत्या निपक्षतिः। मै ३, १५, ५; काठ ५३, ११।
१३. सरस्वत्येहि। तैआ ५, ७, १।
१४. सरस्वत्यै पावकायै स्वाहा, सरस्वत्यै बृहत्यै स्वाहा। काठ ४३, ५।
१५. सरस्वत्यै सत्यवाचे चरुर्दण्ड उपानहौ शुष्कदृतिः सा दक्षिणा। मै २,६,१३॥ [°ती- अन्नाद्य- २४; २५; अमावास्या- २; अश्विन्- ३३; ४०; गो- ६६; घृताची- ५; जिह्वा- ५; दधि- १९; दशपेय- २; पुष्टि- ११; १२; पूषन्- ४७; ४९; प्रजनन- ३; बृहस्पति- ४३; भृगु- ३; मनुष्य- ३८; ३९; मेष- १; मेषी- २; यज्ञ- १८९; रुद्र- ७९; वाच्- ५७; ६७; ९८; १०७; ११६; १२७; १२८; १३२; वेशभगिनी-; वेशभगीना-; शारि-; सरस्वत्- ४ द्र.]। **सरस्वतीवत्**- परिवाप- ४ द्र.।

सारस्वत-

१. अथ यत् (अक्ष्योः) कृष्णं तत्सारस्वतम्। माश २१, ९, १, १२।
२. ऋक्सामे वै सारस्वतावुत्सौ। (सारस्वता उत्सौ [मै.])। मै १, ८, ८; तै १, ४, ४,९।
३. सारस्वतं (पयः) विष्यणम्। मै १, ८, १०।
४. सारस्वतो वाचि विसृष्टायाम्। काठ ३४, १४।
५. सारस्वतो विष्यन्दमानः (प्रवर्ग्यः)। तैआ ५,११,४॥ [°त- अन्तरिक्ष- ३६; अन्नाद्य- २६; कर्कन्धुसक्तु-; धेनु- २०; मेष- ४; वत्सतरी- २; वर्षाशरद्-; वाच्- २ द्र.]।

**सारस्वती**- फल्गूर् (फल्गुर् काठ ४९, २) लोहितोर्णी बलक्षी ताः सारस्वत्यः। मै ३, १३, ५॥ [°ती- अतिरात्र- १४; अप्- २६१; अवि- ३; मिथुनत्व- ३; मेषी- १; ३;४; वत्सतरी- १ द्र.]।

**सरिर** (=सलिल-)– अप्– ११५; लोक– १३; वाच्– ९९; वायु– १४ द्र.।

**सर्प-**

१. ककुभमभ्यक्रन्दत्। ततः सर्पान् असृजताङ्गिरसोमुखान्। जै ३,२८१।

२. ते देवाः सर्पेभ्य आश्रेषाभ्य आज्ये करम्भं निरवपन्। तान् (असुरान्) एताभिरेव देवताभिरुपानयन्। तै ३,१,४,७।

३. मण्डूको मूषिका तित्तिरस्ते सर्पाणाम्। मै ३,१४,१७।

४. रज्जुरिव हि सर्पाः कूपा इव हि सर्पाणामायतनानि। अस्ति वै मनुष्याणां च सर्पाणां च विभ्रातृव्यम्। माश ४,४,५,३।

५. सर्पाँल्लोहितगन्धेन (प्रीणामि)। तैसं ५,७,२३,१; काठ ५३,१३।

६. सर्पाणा ९ सप्तमी। तैसं ५,७,२२,१; मै ३,१५,५; काठ ५३,१२।

७. सर्पान् गुदाभिः (प्रीणामि)। मा २५, ७; मै ३, १५, ९; काठ ५३,७॥ [°र्प– अर्बुद– १; अलापु–; अलाबुपात्र–; आश्लेषा– १; उपवेष– ६; देव– १२२; प्रतीची– २४; लोक– १४; वल्मीक– द्र.]।

**सर्प-नाम** (मन्त्र-)– ते (देवाः) एतानि सर्पनामान्यपश्यन्। तैरुपातिष्ठन्त तैरस्माऽ इमांल्लोकानस्थापयंस्तैरनमयन्यदनमयंस्तस्मात्सर्पनामानि। माश ७,४,१,२६॥ [°म– मृत्यु– ११ द्र.]।

**सर्प-राजन्->सर्पराज्ञी-**

१. इयं (पृथिवी) वै सर्पराज्ञी अस्याम् एवतत् प्रतितिष्ठन्ति। इयं वै सर्पतां राज्ञी। न ह वा एनं सरीसृपं हिनस्ति य एवं वेद। जै ३, ३०४।

२. सर्पराज्ञ्या ऋग्भिः स्तुवन्ति। अर्बुदः सर्प एताभिर्मृतां त्वचमपाहत मृतामेवैताभिस्त्वचमपघ्नते। तां ९,८,७-८॥ [°ज्ञी– देव– १२२; पृथिवी– ६८ द्र.]।

**सार्पराज्ञ**– अन्न– ६० द्र.। **सार्पराज्ञी**– गो– २६; पृथिवी– ६८; वाच्– १०० द्र.।

**सर्पिस्-**

१. यत्सृप्तमिति तत्सर्पिषः सर्पिष्ट्वम्। काठ २४,७; क ३७,८।

२. यदसर्पत्तत्सर्पिः (+अभवत् [तैसं.])। तैसं २,३,१०,१; मै २,३,४ (तु. काठ ११,७)।

**सर्व-**

१. आपो वै सर्वो (शर्वः) ऽद्भ्यो हीद ९ सर्वं जायते। माश ६,१,३,११।

२. एतद् (ओमिति) व वा इदं सर्वमक्षरम्। जै २,१०।

३. एतावद्वाऽ इद ९ सर्वं यावदिमे च लोका दिशश्च। माश ६,५,२,२२।

४. एतावद्वाऽ इद ९ सर्वं यावद्ब्रह्म क्षत्रं विट्। माश ४,२,२,१४।

५. एतावद्वाऽ इद ९ सर्वं यावद्रूपं चैव नाम च। माश ११,२,३,६।

६. गायत्र्यश्चानुष्टुभश्च'''विराजश्च त्रिष्टुभश्च, तानि चत्वारि सम्पद्यन्ते, चतुष्टयं वा इदं सर्वम्। शांआ १,२।

७. गौरिद ९ सर्वम्। मै ४, २,३।

८. चतुष्टयं वा इदं सर्वम्। कौ २,१; ३,२; ७; १९,४; २८,७।

९. द्वयं वा इदं सर्वं स्नेहश्चैव तेजश्च, तदहोरात्राभ्यामाप्तं स्नेहतेजसोराप्त्यै। गो २,५,३।

१०. वागेवेदं सर्वमिति । ऐआ ३,१,६ ।
११. विश्वे देवा एव सर्वम् । गो १,५,१५ ।
१२. सप्तदशः सर्वो भवति । मै ४,४,७ ।
१३. सर्वं वाऽअक्षय्यम् । माश १,६,१, १९; ११,१,२,१२ ।
१४. सर्वं वाऽइदम् 'एति च प्रेति च' । माश १,४,१,५ ।
१५. सर्वं वै (+तद्यत् [कौ.] ) सहस्रम् । कौ ११,७; २५,१४; माश ४,६,१,१५; ६,४,२,७ ।
१६. सर्वं वै विश्वे देवाः । माश १,७,४,२२; ३,९,१, १३; ४, २, २, ३; ५,५,२,१० ।
१७. सर्वं हि सोमः । माश ५,५,४,११ ।
१८. सर्वान्वो वृञ्जेऽनाप्तेन छन्दसा । मै ४, २,११ ॥ [सर्व- अग्निरूप-; अनिरुक्त- ११; अनुष्टुभ्- १२ ; अप्- ६४ ; ९०; आयुस्- ५२ ; इडा- ७; एकविंश- ८; ओम् ८; चन्द्रमस्- ३२; दक्षिण,णा- ३३; दशहोतृ- ६; पाङ्क्त- ५; प्र ४; प्रजापति- ११३; ब्रह्मन्- ११४; ब्रह्मवेद-; मधु- २४; मनस्- ३१; वर- ४; विश्व- २; विश्वेदेव- २०; शरद्- ४; षोडशकल- १; संवत्सर- ४७;९७;९८; सत्य- ६; सत्र- ८ द्र. ] ।

**सर्व-जित्** ( यज्ञ-)-

१. यो वै सर्वं जयति विजयते सः । सर्वजित् सर्वमेव जयति । जै १,९५ ।
२. सर्वजिता वै देवाः सर्वमजयन् सर्वस्याप्त्यै सर्वस्य जित्यै सर्वमेवैतेनाप्नोति सर्वं जयति । तां १६,७,२ (तु. तां २२,८,४) ॥ [°जित्- इन्द्र- ४०० द्र. ] ।

**सर्व-ज्योतिस्** (यज्ञ-)-

१. अथैष सर्वज्योतिः सर्वस्याप्तिः सर्वस्य जितिः सर्वमेवैतेनाप्नोति सर्वं जयति । तां १६,९,१ ।
२. परमो वा एष यज्ञः (सर्वज्योतिः) । तां १६,९,२ ।

**सर्व-पृष्ठा** (इष्टि-)- इन्द्रियकाम- द्र. ।

**सर्व-मेध-**

१. परमो वाऽएष यज्ञक्रतूनां यत्सर्वमेधः । श १३,७,१,२ ।
२. पुरुषमेधात्सर्वमेधः । गो १,५,७ ।

**सर्व-राज्-** स (प्रजापतिः) सर्वमेधेनेष्ट्वा सर्वराडिति नामाधत्त । गो १,५,८ ।

**सर्व-रूप-** यो विभुति (पुरुषः) स सर्वरूपः । सर्वाणि ह्येतस्मिन् रूपाणि । जैउ १, ८,३६ ।

**सर्ववेदच्छन्दस-** सावित्री सर्ववेदच्छन्दसेन छन्दसा । शांआ ११,७ ।

**सर्ववेदसिन्-** यो वै सर्वं विन्दमानस्सर्वं न ददाति स सर्ववरादायी । अथ यस्सर्वं विन्दमानस्सर्वं ददाति स सर्ववेदसी । जै २,१८० ।

**सर्व-स्तोम** (अतिरात्र-)-

१. सर्वस्तोमेनातिरात्रेण बुभूषन्यजेत सर्वस्याप्त्यै सर्वस्य जित्यै सर्वमेवैतेनाप्नोति सर्वं जयति । तां २०,२,२ ।
२. सर्वं हि तद् यत् सर्वस्तोमः । जै २,२३४ ।
३. सर्वस्तोमोऽग्निष्टोमः । जै २,२७९ ।

**सर्व-स्वार-** त्रिवृदग्निष्टोमः सर्वस्वारो, यः कामयेताऽनामयताऽमुं लोकमियामिति स एतेन यजेत । तां १७,१२,१ ।

सर्वायुस्- बृहत्- ५३ द्र. ।

सलावृकी- (=साला°) एतयैवेन्द्रः सलावृक्या परिवृश्चति । तैआ १, ६, ३ ॥ [ °की- पृथिवी १०९ द्र. ] ।

सलिल-

१. पञ्चानां त्वा सलिलानां धर्त्रे गृह्णामि । काठ ३२,६ ।

२. सलिलः प्रप्लुतः (सोमः) । तैसं ४,४,९,२ ।

३. सलिलो निलिम्पा नाम स्थ, तेषां वो दक्षिणा गृहाः पितरो व इषवः । तैसं ५, ५,१०,३-४ ॥ [°ल- अप्- ९२;१२४; पशु- १६०; वेदि- २१ द्र.] ।

सवन-

१. अङ्गारान्पूर्वयोः सवनयोर्विहरन्ति । शुक्रवती हि ते । शलाकान् दीप्यमाना ९ स्तृतीयसवने । तेन तच्छुक्रवत् । क ४०,४ ।

२. त्रयो अस्य पादा इति, त्रीणि सवनानि । काठसंक २५: १ ।

३. त्रीणि वै सवनानि । मै ४,८,४ ।

४. द्वे सवने शुक्रवती, धीतमिव तृतीयसवनम् । काठ २३, १०; क ३७,१ ।

५. स यो गरगीर् मन्येताप्रतिगृह्यस्य प्रतिगृह्यानश्याश्नस्यान्नम् अशित्वा स एतेन यजेत् । एताभ्याम् एव त्रिवृद्भ्यां सवनाभ्याम् इतश् चोर्ध्वम् इतश् चार्वाञ्चं विश्वञ्च गरं व्यस्यते । जै २,८३ ।

६. सवनानि वाव ते (देवाः) पुरोऽकुर्वन् । क ४५, ७ ॥ [°न- इन्द्राग्नि- ५०; गायत्री- ४०; दक्षिण,णा- ३; पुरोडाश- ११; रोचन- ४ द्र.] ।

सवन-पङ्क्ति-

१. त्रीणि सवनान्यवभृथो, ऽनुबन्ध्या सवनानां पञ्चमी । मै ३,१०,५ ।

२. पशुरुपवसथे, त्रीणि सवनानि, पशुरनुबन्ध्य इत्येष वै यज्ञः सवनपङ्क्तिः । ऐ २,२४ ।

सवर्य- अश्व- ५८ द्र. ।

सवितृ-

१. अजा मल्हा गर्भिणी सवित्रे प्रसवित्रे । मै २,६,१३ ।

२. अथ यत्र ह तत्सविता सूर्यां प्रायच्छत्सोमाय राज्ञे । कौ १८,१ ।

३. असावादित्यो देवः सविता । माश ६,३,१,१८ ।

४. असौ वै सविता यो ऽसौ (सूर्यः) तपति । कौ ७, ६; गो २,१,२० ।

५. आ सव ९ सवितुः ( हुवे ) । काठ ४०,१४ ।

६. उष्णमेव सविता । गो १,१,३३ ।

७. एकचक्रेण सविता रथेनोर्जोभागं पृथिव्या यात्यापृणन् । मै २,७,१२ ।

८. एताभिर्वै (रात्रिभिः) सविता सर्वस्य प्रसवमगच्छत् । तां २४,१५,२ ।

९. एष वै सविता य एष (सूर्यः) तपति । माश ३,२,३,१८; ४,४,१,३; ५,३,१,७ ।

१०. तत्सवितुर्वरेण्यमित्याह प्रसूत्यै । तैसं १,५,८,४ ।

११. तद्ध सुपूतं यं देवः सवितापुनात् । माश ३,१,३,२२ ।

१२. तस्मात् ( सविता ) हिरण्यपाणिरिति स्तुतः । कौ ६,१३; गो २,१,२ ।
१३. तस्य ( सवितुः ) पाणी प्रचिच्छेद ( रुद्रः ) । (देवाः) तस्मै हिरण्मयौ ( पाणी ) प्रत्यदधुः ( प्रतिदधुः [कौ.] ) । कौ ६,१३; गो २,१,२ ।
१४. तस्यां देवः सविता धर्म ९ साविषत् । मै १,११,१ ।
१५. दातारमद्य सविता विदेय यो नो हस्ताय (नक्षत्राय) प्रसुवाति यज्ञम् । तै ३,१,१,९ ।
१६. देवस्य सवितुर्हस्तः (नक्षत्रम्) । तै १,५,१,३ ।
१७. देवो वः सविता (+उत् [काठ.]) पुनात्वच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः । काठ १, ५; क १,५ ।
१८. देवो वः सविता हिरण्यपाणिः प्रतिगृह्णातु । तैसं १,१,५,३ ।
१९. वायुरसि प्राणो नाम सवितुराधिपत्येऽपानं मे दाः । तैसं ३,३,५,१ ।
२०. संवत्सरस्य सवितुः, आदित्यस्य स्थाने स्वतेजसा भानि । तैआ १,१५,९ ।
२१. स ( सविता ) एत ९ सवित्रे हस्ताय पुरोडाशं द्वादशकपालं निरवपद् आशूनां ( षष्टिदिनैः शीघ्रं पच्यमानानां ) व्रीहीणाम् । ततो वै तस्मै ( सवित्रे ) श्रद्देवा अदधत । सविताभवत् । तै ३,१,४,११ ।
२२. सत्यसव ९ सवितारम् (वृणीमहे) । तैसं ३,४,११,२ ।
२३. स यदात्मना कुर्यान्न तन्मन्येताहमिदं करोमीति, सविता मेऽसावीदित्येव तन्मन्येत, यद्धि वै कल्याणं तदस्मै सविता प्रसवति नास्मै पापं सविता प्रसुवते यमेवं विद्वानुपनयते । काठसंक ४८-४९ : १;२ ।
२४. सविताऽधश ९ सात् (पातु) । तैसं १,६,३,१ ।
२५. सविता प्राजनयत् । तै १,६,२,२ ।
२६. सविता प्रासुवत् प्रजननाय । मै १,१०,५ ।
२७. सविता भूत्याम् ( अभिध्यातः ) । तैसं ४,४,९,१; काठ ३४,१४ ।
२८. सवितारं पुच्छेन ( प्रीणामि ) । तैसं ५,७,१५,१; काठ ५३,५ ।
२९. सविता ( श्रियः ) राष्ट्रम् ( आदत्त ) । माश ११,४,३,३ ।
३०. सविता वै देवानां प्रसविता । जै २,३७१; जैउ ३,४,४,३; माश १,१,२,१७ ।
३१. सविता वै प्रसविता । कौ ६,१४ ।
३२. सविता ऽसि सत्यसवः । तैसं १,८,१६,१; मै २,६,१२; ४,४,६ ।
३३. सविता सुमेधाः । तैसं २,४,५,२ ।
३४. सविता स्तोमैः ( सहागच्छतु ) । मै १,९,२;८; काठ ९,१०; क ४८,३; तैआ ३,८,१ ।
३५. सविता हिरण्यपाणिः । मै १,१,७ ।
३६. सवितुः पञ्चमी । तैसं ५,७,२२,१; काठ ५३,१२ ।
३७. सवित्रे त्वर्भुमते विभूमते वाजवते बृहस्पतिवते विश्वदेव्यावते स्वाहा । मै ४,९,८ ।
३८. सवित्रे द्वादशकपालः (चरुः) । काठ १५,९ ।
३९. सवित्रे प्रसवित्रे सतीनानामष्टाकपालं ( निर्वपेत् ) । मै २,६,६ ।
४०. सवित्रे सत्यप्रसवाय पुरोडाशं द्वादशकपालं तिसृधन्व ९ शुष्कदृतिर्दक्षिणा । तैसं १,८,१९,१ ।
४१. सवित्रे सत्यप्रसवाय पुरोडाशं द्वादशकपालमाशूनां व्रीहीणाम् । तैसं १,८,१०,१ ।

५६. स्तनयित्नुरेव सविता। जैउ ४,१२,१,९।

५७. हस्तो नक्षत्रं सविता देवता। तैसं ४,४,१०,२; मै २,१३,२० ॥ [°तृ- अग्नि- ११२; अभ्र- ३; अहन्- ३; आतिछन्दस- १; आदित्य- ३४; ८६; ३७७; आहुति- १४; उत्तरतस् ८; १४; उत्तरात् २; ८; ११; उदीची- २९; ३०; उपभृत्- ६; ऋभुमत्-; काम- २३; गायत्र- ९;२४;४५; चक्षुस्- ७२; चन्द्र- ४; दिश्- ७१; दीक्षा- ८; देव- २६४; ध्रुवा- ९; पङ्क्ति- ३२; पशु- १९१; पुच्छ- २; पुरुष- ५४; पृथिवी- ६९; प्रजापति- १६५; १८१; २३४; २८८; प्रतीची- ११; १२; ३१; प्रसव- २; ३; प्रसूति-; प्राण- ९५; २०२; ३०९; बृहस्पति- ५;२१;४२; ब्रह्मन्- ८४; मनस्- ३२;५८; यकृत्-; यज्ञ- ९६; रश्मि- १७; राष्ट्र- १७; वरुण- २८; वायु- १५;६६; विद्युत्- १३; १वेद- १९; वैराज- ८; वैरूप- ९; श्री- २१; संवत्सर- ८३ द्र.]।

**सवितृ-नेत्र-** पश्चात्सदः (देवाः) सवितृनेत्राः। तैसं १,८,७,१।

**सवितृ-प्रसूत-**

१. सवितृप्रसूतं वा इदमन्नमद्यते। कौ १२,८।

२. सवितृप्रसूताः पशवः प्रजायन्ते। क ४४,७ ॥ [°त- प्रजा- १०३; वायु- २८ द्र.]।

**सवितृ-मुख-** त्रयस्त्रिंश- १४ द्र.।

**सावित्र-**

१. अथ सावित्रः द्वादशकपालो वाष्टाकपालो वा पुरोडाशो भवति। माश २,५,१,१०।

२. अघोरामः (श्वेतकृष्णोदरः पशुः) सावित्रः। मै ४,७,८; काठ ४८,१।

३. एष वाव स सावित्रः। य एष (सूर्य्यः) तपति। तै ३,१०,९,१५।

४. शितिरन्ध्रोऽन्यतःशितिरन्ध्रः समन्तशितिरन्ध्रस्ते सावित्राः। मै ३,१३,२।

५. स यदेते देवते अन्तरेण तत्सर्वं सीव्यति। तस्मात् सावित्रः (वायुरूपोऽग्निः)। तै ३,१०,११,७।

६. सावित्रः पञ्चकपालः (पुरोडाशः)। तां २१,१०,२३।

७. सावित्रं द्वादशकपालम् (पुरोडाशं निर्वपति)। तैसं १,८,२,१;४,२।

८. सावित्रं द्वादशकपालं वाष्टाकपालं वा पुरोडाशं निर्वपति…तस्य श्येतोऽनड्वान् दक्षिणा… श्येत इव ह्येष (सविता) उद्यंश्चास्तं च यन् भवति। माश ५,३,१,७।

९. सावित्रमष्टाकपालं (पुरोडाशं निर्वपेत्)। काठ ११,२।

१०. सावित्रं (पयः) प्रणीयमानम्। मै १,८,१०।

११. सावित्रो द्वादशकपालः (पुरोडाशः)। मै १,१०,१; २,६,१३; काठ ९,४; क ८,७।

१२. सावित्रोऽष्टाकपालः (पुरोडाशः)। मै १,१०,१; काठ ९,४; १५,२; क ८,७।

१३. सावित्रोऽष्टाकपालो, गायत्रो हि देवानां सविता। काठ ३६,५। [°त्र- आदित्य- २०१; कृकवाकु-; क्षत्तृ- १;३;४; प्रसव- १; मनस्- ४१; श्येत- द्र.]।

**सावित्र-ग्रह-** तृतीयसवन- ४८; प्राण- २०४ द्र.।

सावित्री ( ऋच्- )-

१. एतां गायत्रीमेव सावित्रीम् ( ऋचम् ) अनुब्रूयात् ( उपनीयमानाय ब्रह्मचारिणे )। माश ११, ५, ४, १३।

२. नक्षत्राणि सावित्री। गो १,१,३३; जैउ ४,१२,१,१३।

३. यो वा एतां सावित्रीमेवं वेदा३ ऽपमृत्युं तरति सावित्र्या एव सलोकतां जयति। जैउ ४,१२, २, ६।

४ शीतं सावित्री। गो १,१,३३।

५. स्तनयित्नुः सावित्री। गो १, १, ३३।

६. स्त्री सावित्री। जैउ ४, १२, १, १७। [°त्री- अन्तरिक्ष- ३७; अग्नि- ६०; अप्- ७४; आकाश- १; उपभृत्- १२; छन्दस्- ५०; २दक्षिणा- १७; दिव्- १०९; पृथिवी- १३७; प्रजापति- १६६; ब्रह्मचारिन्- २; रात्रि- ३१; लोक- ३७; वर्ष,र्षा- १; वाच्- ५९; विद्युत्- ९; १वेद- २६; सर्ववेदछन्दस्- द्र.]।

सव्य-

१. सव्यो हस्तयोस्तपस्वितरः। तैसं ५, ३, ३, ३-४।

२. सव्यो हस्तयोः संभार्यतरः। तैसं ५, ३, ३, ५। [°व्य- असुर- ४२; ७३ द्र. ]।

सस्य-

१. द्विः संवत्सरस्य सस्यं पच्यते। तैसं ५, १, ७, ३; काठ १९, ७; क ३०, ५।

२. पक्वा सस्यम् ( अस्तु )। तैसं ७, ५, २०, १।

सह-चर (शिल्प-)- तान्येतानि सहचराणीत्याचक्षते नाभानेदिष्ठं वालखिल्या वृषाकपिमेवयामरुतम्। ऐ ६, ३०।

सह-जन्या- द्यावापृथिवी- २७ द्र.। सह-रक्षस्- असुर- ७५ द्र.।

सहस्-

१. एतौ ( सहश्च सहस्यश्च ) एव हैमन्तिकौ ( मासौ ) स यद्धेमन्त इमाः प्रजाः सहसेव स्वं वशमुपनयते तेनो हैतौ सहश्च सहस्यश्च। माश ४, ३, १, १८।

२. सहसः स्वजः ( उभयतःशिराः सर्पोऽभवत् )। ऐ ३,२६।

३. सहो ऽसि, सहस्वारातिम्। मै १, १, ११॥ [°हस्- अग्नि- २७३; इन्द्र- ३९९; इन्द्राग्नि- ५१; ओजस्- ७; बल- ४ द्र. ]।

सहस्वत्- हेमन्तस्याहं देवयज्यया सहस्वान् वीर्यावान् भूयासम्। काठ ४,१४॥ [°स्वत्- इन्द्र- २०६ द्र.]।

सहस्र-

१. परम ९ सहस्रम्। तां १६, ९, २।

२. यत् (प्रजापतिः) सहेत्यब्रवीत् तत्सहस्रस्य सहस्रत्वम्। जै २,२५४॥ [°स्र- अग्नि- ४६०; आयुस्- १७; पशु- १२१; पुरुष- ७६; वाच्- २१; भूमन्- ३; सर्व- १५ द्र. ]।

**सहस्र-जित्**- 'स पवस्व सहस्रजित्' इति। यो वै सर्वं जयति विजयते सः। सर्वजित् सर्वमेव जयति। जै १, ९५।

**सहस्रतमी**- प्रजापति- २९५ द्र.।

**सहस्र-योजन**- एतद्ध परमं दूरं यत्सहस्रयोजनम्। माश ९,१,१,२८॥ [°न-अग्नि-३६७ द्र.]।

**सहस्र-वत्**- आत्मन्- ३६; संवत्सर- ७९ द्र.।

**सहस्र-संमित, ता**- पृथिवी -२११; लोक- ३६ द्र.। **सहस्रिय**- अप्- १२० द्र.।

**साहस्र**- होता हि साहस्रः। माश ४, ५, ८, १२॥ [°स्र- गो- ७०; पशु- ३४१; प्रजापति- २९७ द्र.]। **साहस्री**- वाच्- ८२ द्र.।

**सहा-वत्**- तरुतृ- द्र.।

**सहोजस्** (अग्नि-)- सहोजसो दक्षिणदिश्यस्य स्थाने स्वतेजसा भानि। तैआ १, १८,१।

**सांवर्त** (सामन्-)-

१. देवानां वै यज्ञं रक्षांसि अजिघांसन् स तान्येतेन इन्द्रः संवर्त्तमुपावपद् यत् संवर्त्तमुपावपत् तस्मात् सांवर्त्तं, पाप्मा वाव स तानसचत तं सांवर्त्तेनापाघ्नताप पाप्मानं हते सांवर्त्तेन तुष्टुवानः। तां १४, १२, ७।

२. यद् उ संवर्त आङ्गिरसो ऽपश्यत्। सांवर्तम् इत्य् आख्यायते। जै ३, २३३।

३. स इन्द्रो ऽकामयत सार्धम् एवासुरान् संवृत्य हन्यामिति। स एतत् सामापश्यत्। तेनास्तुत। (इन्द्रो ऽसुरान्) सार्धं संवृत्याहन्। तद् व् एव सांवर्तस्य सांवर्तत्वम्। जै ३, २३३।

**साकमश्व** (सामन्-)-

१. अथ साकमश्वं स्वर्ग्यं साम, स्वर्गस्य लोकस्य समष्ट्यै। जै २, १९५।

२. तत् (साकमश्वम्) उ धुरां सामेत्याहुः। तां १४,९, १८।

३. तदेतत्तेजो ब्रह्मवर्चसं साम··· यदु साकमश्वो ऽपश्यत् तस्मात् साकमश्वम् इत्याख्यायते। जै ३, १०१।

४. ते (देवाः) ऽग्निं मुखं कृत्वा साकमश्वेन (अश्वरूपेणाग्निना) अभ्यक्रामन् यत्साकमश्वेनाभ्यक्रामंस्तस्मात् साकमश्वम्। तां ८, ८, ४।

५. ते (देवाः) अब्रुवन् स्वर्गं लोकं गत्वा साकं वा अश्वेन स्वर्गं लोकमगन्मेति। तदेव साकमश्वस्य साकमश्वत्वम्। जै १, १८२।

६. प्रजापतिः प्रजा असृजत ता न प्राजायन्त स एतत्सामापश्यत्। (प्रजापतिः) ता अश्वो भूत्वाभ्यजिघ्रत्ताः प्राजायन्त प्रजननं वा एतत् साम। तां २०, ४, ५।

७. यदग्निरश्वो भूत्वा प्रथमः प्रजिगाय तस्मात् साकमश्वम्। गो २, ४,११।

८. यदग्निरश्वो भूत्वाऽभ्यत्यद्रवत्तत्साकमश्वं सामाऽभवत्तत्साकमश्वस्य साकमश्वत्वम्। ऐ ३, ४९।

९. साकमश्वं भवत्युक्थानामभिजित्या अभिक्रान्त्यै। एतेन ह्यग्र उक्थान्यभ्यजयन्नेतेनाभ्यक्रामन्। तां ११, ११, ५; ६।

**साकमेध**-

१. तमेवं सर्वं संवत्सरं संवृज्य देवा असुराणां साकमिन्द्रेणैधन्त स यत्साकमिन्द्रेणैधन्त

तस्मात् साकमेधा नाम । काश १, ६, ४, ५ ।

२. ता अस्य प्रजा वृत्रात् पाप्मनो मुमुचानास्सर्वास्साकं समैधयन्त । यत्साकं समैधयन्त तत्साकमेधानां साकमेधत्वम् । जै २, २३२ ।

३. वार्त्रघ्ना वै साकमेधाः । काठ ३६, ८ ।

४. साकमेधा ऽ स् तृतीयसवनम् ( अकुर्वत ) । क ३६,४ ॥ [°ध- अतिरात्र- १; इन्द्र- ३३९; ऐन्द्र- ३८; पितृयज्ञ- ६; वृत्र- ७; ९ द्र. ] ।

साकंप्रस्थायीय- पशुकाम- ८ द्र.

साकंप्रस्थाय्य-

१. तद्यत्साकं संप्रतिष्ठन्ते साकं संप्रयजन्ते साकं भक्षयन्ते तस्मात्साकंप्रस्थाय्यः । कौ ४,९ ।

२. स एष (साकंप्रस्थाय्यः) श्रैष्ठ्यकामस्य पौरुषकामस्य यज्ञः । कौ ४,९ ।

सांग्रहणी (इष्टि-)-

१. वैश्वदेवीं सांग्रहणीं निर्वपेद् ग्रामकामः । तैसं २,३,९,२ ।

२. सांग्रहणी भवति, मनोग्रहणं वै संग्रहणं, मन एव सजातानां गृह्णाति । तैसं २, ३,९,२-३ ।

३. सांग्रहण्येष्ट्या यजते । इमां जनतां संगृह्णानीति । तै ३,८,१,१ ।

सादन- मांस- ८ द्र. ।

साधु- सुहूर् (सुभूर् [काश २,२,४,१६]) देवेभ्य इति, साधु देवेभ्य इत्येवैतदाह । माश १,३,१,११ । [°धु- अन्तरिक्ष- २७; वायु- १६ द्र.] ।

साध्य (देव-)-

१. अतिरिक्तमेतद्यूपस्य यदूर्ध्वं चषालात् तेषां (साध्यानां देवानां) तद् भागधेयं तानेव तेन प्रीणाति । तैसं ६,३,४,९ ।

२. इमे वाव लोका देवाः साध्याः, सिद्ध ऽ ह्यस्यै (पृथिव्यै), सिद्धमस्मै (अन्तरिक्षाय), सिद्धममुष्मै ( दिवे ) । काठ २४,१०; क ३८,३ ।

३. तिस्रस्तुर्यौह्यस्साध्यानाम् । काठ ९,७ ।

४. त्रयोदशारत्निस्साध्यैर्देवैस्संमितः । काठ २६,४; क ४१,२ ।

५. भद्राः साध्या अभिभवः सूरचक्षसः । काठसंक ६२ : ५ ।

६. यद्वै यज्ञस्यातिरिच्यते साध्या ऽ स्तद् देवानभ्यतिरिच्यते । क ४१,२ ।

७. यो वै देवान्त्साध्यान् वेद, सिध्यति ह वा अस्मै, यत्र कामयेत, इह मे सिध्येदितीमे वै लोका देवाः साध्याः । मै ३,७,१० (तु. काठ २४, १०; क ३८,३) ।

८. षट्त्रिंशत् साध्या देवाः । जै १,३३ ।

९. साध्यानां पञ्चमी ( अस्तु ) । तैसं ५,७,१७,१; काठ ५३,७ ।

१०. साध्या वै नाम देवा आस ऽ स्ते ऽवच्छिद्य तृतीयसवनं माध्यन्दिनेन सवनेन सह स्वर्गं लोकमायन् । तां ८, ३, ५; ४, ९ ।

११. साध्या वै नाम देवा आसन् पूर्वे देवेभ्यः । तेषां न किंचन स्वमासीत् । ते ऽग्निं मथित्वाग्नौ जुह्वत आसत । तस्माद् बन्धोः पशवो ऽजायन्त । तस्मादाग्नेयाः सर्वे पशव उच्यन्ते ।

क ४१, ५।

१२. साध्या वै नाम देवेभ्यो देवाः पूर्वं आस ९ स्त एतत् ( शतसंवत्सरं ) सत्रायणमुपाय ९ स्तेनाध्नुंव ९ स्ते सगवः सपुरुषाः सर्व्व एव सह स्वर्गं लोकमायन् । तां २५, ८, २ ॥ [°ध्य– आप्त्य– १; ४-८; कुलङ्ग– १; छन्दस्–४६; त्रयस्त्रिंश– १४; प्राण– १४१; बृहती– १६ द्र. ]।

साध्र ( सामन् -)–

१. यद् उ सध्रिर् वैरूपोऽपश्यत् तस्मात् साध्रम् इत्य् आख्यायते । जै ३, २७२ ।

२. यद् व् एवैषाम् ( देवानां ) एतेन साम्ना कृतंकृतमसिध्यत् तस्मात् साध्रम् इत्य् आख्यायते । जै ३, २७२ ।

३. साध्रं भवति सिद्ध्यै । तां १५, ५, २८ ।

सानग ( ऋषि- )– प्राची– १५ द्र. ।

सानसि– पृणक्षि सानसिं क्रतुमिति पृणक्षि सनातनं क्रतुमित्येतत् । माश ७, ३, १, ३२ ।

सांतपन– सं वा एनं ( वृत्रं ) तदतपन् ( मरुतः ) तस्मात् साम्तपनाः । मै १,१०,१४; काठ ३६,८ ॥ [°न– संस्कार– द्र.] ।

सांतपनीया ( इष्टि- )– उरः सांतपनीयोरसा हि समिव तप्यते । माश ११, ५, २, ४ ।

सांनाय (हविस्-)–

१. नासोमयाजी संनयेद् , अनागतं वा एतस्य पयो योऽसोमयाजी । तैसं २, ५, ५, १ ।

२. इन्द्रो वै वृत्रमहन् , स विष्वङ् वीर्येण व्यार्छत् , तदिदं सर्वं प्राविशदप ओषधीर्वनस्पती- ९ स्तेन देवा अश्राम्य ९ स्तत् सांनाय्यस्य सांनाय्यत्वम् । मै १, १०, ५ ।

३. तत् ( इन्द्रस्येन्द्रियं वीर्यं ) पशव ओषधीभ्यो ऽध्यात्मन्त्समनयन् ···यत् समनयन्तत् सांनाय्यस्य सांनाय्यत्वम् । तैसं २, ५, ३, ३ ।

४. तम् ( चन्द्रमसं ) ओषधिभ्यश्च वनस्पतिभ्यश्च गोभ्यश्च पशुभ्यश्चादित्याच्च ब्रह्मणश्च च ब्राह्मणाः संनयन्ते तत्सांनाय्यस्य सांनाय्यत्वम् । ष ४, ६ ।

५. तस्मादप्यसोमयाजी समेव नयेत् । माश १, ६, ४, ११ ।

६. तस्य ह त्वै सोमपीथः संततो य एवं विद्वान्सांनाय्यं पिबति । मै ४, १, ३ ।

७. ब्रह्मवादिनो वदन्ति, किंदेवत्य ९ सांनाय्यमिति ? वैश्वदेवमिति ब्रूयाद्विश्वे हि तद् देवा भागधेयमभि समगच्छन्तेत्यथो खल्वैन्द्रमित्येव ब्रूयादिन्द्रं वाव ते तद् भिषज्यन्तोऽभि समगच्छन्तेति । तैसं २, ५, ३, ७ ।

८. सोमः खलु वै सांनाय्यम् । तै ३, २, ३, ११ ।

९. सोमो वै देवानां परोक्ष ९ सांनायम् । काठ ३१, २; क ४७, २ ॥ [°य्य– आमावास्य– २; ऐन्द्र– ९; पयस्– १४; पूर्णमास– २; राष्ट्र– १० द्र.] ।

सामन्–

१. अनुष्टुभो वा अन्यानि सामान्यन्नम् । अनुष्टुबेवान्येषां साम्नामन्नम् । जै २, ३८४ ।

२. अपहतपाप्मैतत् साम्नो यदूर्ध्वं प्रस्तावात् स्वर्ग एषु लोकः······प्रस्तुत एव पुरादेस स

एवैको नारकः। जै १,३२५।

३. अर्चिः ( आदित्यस्य ) सामानि। माश १०, ५, १, ५।

४. उच्चैर्ऋचा साम्ना च क्रियते। काठ २९, १; क ४५, ३ (तु. मै ३,६,५)।

५. ऋक् च वा इदमग्रे साम चास्तां सैव नाम ऋगासीदमो नाम साम। ऐ ३, २३।

६. ऋचं साम्नाभिलिप्तां गायति। तस्माल् लोम्ना त्वचा मांसेन पुरुषोऽभिलिप्तो जायते। जै १,२५९।

७. एतं ह तं हीदं सर्वं समेतम्। तस्मादेष एव साम। जै ३, ३७९।

८. एतदु ह वाव साम यद्वाक्। जैउ २, ५, ३, ४।

९. ( वागिति ) एतदेषा ९ ( नाम्नां ) सामैतद्धि सर्वैर्नामभिः समम्। माश १४, ४, ४, १।

१०. एतद्ध साम्न आयतनं, प्रियं धाम यत् स्वरः। जै १,११२।

११. एतद् वै साम्नः स्वं यत् स्वरः। जै १, ११२।

१२. एतद्वै साम्नो ऽन्नाद्यं यत् स्वरः। जै १, ११२।

१३. एष (प्राणः) उऽएव साम। वाग्वै सामैष सा चामश्चेति तत्साम्नः सामत्वं यद्वेव समः प्लुषिणा समो मशकेन समो नागेन सम एभिस्त्रिभिर्लोकैः समोऽनेन सर्वेण तस्माद्वेव साम। माश १४,४,१,२४।

१४. एष साम्नो ( वर्णो ) यत् कृष्णं ( कृष्णाजिनस्य )। तैसं ६,१,३,१।

१५. गायन्ति हि साम। काश ५,५,३,४; माश ४,४,५,६।

१६. चत्वारि ( बृहतीसहस्राणि—४०००×३६=१४४००० अक्षराणि ) साम्नाम्। माश १०, ४, २, २४।

१७. चत्वार्येह वैव सामानि—राथन्तरं बार्हतं राथन्तरबार्हतं बार्हतराथन्तरम्। जै १,३०८।

१८. चत्वार्यु ह वै सामानि स्वारनिधनवद् ऐळम् ऋक्समम्। जै १,३००।

१९. तत् ( ब्रह्म ) सामेत्युपासीत, सर्वाणि हास्मै भूतानि श्रैष्ठ्याय संनमन्ते। शांआ ४, ६; कौउ २, ६।

२०. तद्यत् समेत्य साम प्राजनयतां तत्साम्नस्सामत्वम्। जैउ १, १६,२,२।

२१. तद्यत्सा चाऽमश्च तत्सामाऽभवत् तत्साम्नस्सामत्वम्। जैउ १,१७,१,५।

२२. तद्यदेतत्सर्वं वाचमेवाऽभिसमयति तस्माद्वागेव साम। जैउ १,१३,१,६।

२३. तद्यासौ मात्रा पूर्वरूपोत्तररूपे अन्तरेण सन्धिविज्ञपनी साम तद्भवति, सामैवाहं संहितां मन्य इति। ऐआ ३,१,५।

२४. तस्मिन्नेतानि घोराणि सामान्यवकल्पयन्ति—जमदग्नेस्सतहं विद्रथं चक्षूंषीति। जै २, १६९-१७०।

२५. तस्य ( साम्नः ) वै स्वर एव स्वम्। माश १४,४,१,२७।

२६. तानि वा एतानि त्रीणि साम्न उद्गीतमनुगीतमागीतम्। तद्यथेदं वयमागायोद्गायाम एतदुद्गीतम्। अथ यद्यथागीतं तदनुगीतम्। अथ यत्किंचेति साम्नस्तदागीतम्। जैउ १, १७,३,१४।

२७. ता वा एता देवता अमावास्यां रात्रिं संयन्ति। चन्द्रमा अमावास्यां रात्रिमादित्यं प्रविशत्यादित्यो ऽग्निम्। तद्यत्संयन्ति तस्मात्साम। जैउ १,११,१,६;७।

२८. ते ( देवाः ) सामश्वेवाश्रयन्त । तैसं २,५,७,१ ।
२९. देवलोको वै साम । तैसं ७,५,१,५;४,१ ।
३०. द्वे उ ह वाव सामनी स्तोभवच्चैवास्तोभवच्च, तयोर्यत् स्तोभवत् तत् क्षत्रम्, अथ यदस्तोभवत् तद् ब्रह्म । जै १,१२४ ।
३१. धर्म इन्द्रो राजेत्याह तस्य देवा विशः······सामानि वेदः ······साम्नां दशतं ( =दशतिं ) ब्रूयात् । माश १३,४,३,१४ ।
३२. न वाऽअहिङ्कृत्य साम गीयते । माश १,४,१,१ ।
३३. प्राणो वावामो वाक् सा तत्साम । जैउ ४,११,२,३ ।
३४. बन्धुमत्साम । जैउ ३,२,१,७ ।
३५. (दक्षिणनेत्रस्य) यत्कृष्णं (रूपं) तत्साम्नाम् । जैउ ४,११,३,१२ ।
३६. यत् सामानि (ऋषयोऽध्यगीषत) सोमाहुतयः (ता अभवन्) तैआ २, ९,२ ।
३७. यथा सामर्चा समनमदेवं भद्रास्संनतयस्संनमन्तु । काठ ४५, २० ।
३८. यद् भ वै शिवं शान्तं वाचस्तत् साम । सामन् वदतीति वा आहुः । साधु वदन्तम् । जै ३, ५२ ।
३९. यद्धिरण्यं दीयते चन्द्रं गीयता इति वै सामाहुः, साम्नां तद्रूपम् । मै २,४,५ ।
४०. यद्वै तत्सा चामश्च समवदतां ( समभवताम् [ऐ.] ) तत्सामाभवत्तत्साम्नः सामत्वम् । ऐ ३,२३; गो २,३,२० ।
४१. यो वै भवति यः श्रेष्ठतामश्नुते स सामन्भवत्यसामन्य इति हि निन्दन्ति । ऐ ३,२३ । (तु. गो २,३,२०) ।
४२. रथन्तरेण सामानि (अन्वाभवत्) । काठ ४३,४ ।
४३. लोका वै सामानि । काठ ३३, ७ ।
४४ वत्सा हि सामानि अग्नीनाम् । काठसंक १०: ३ ।
४५. वल्गुतमं सामोपगीतं भवति । ष्ठ १११ : १३ ।
४६. वाग्वाव साम्नः प्रतिष्ठा । जैउ १,१२,५,३ ।
४७. श्रोत्रं वाव साम्नश्श्रुतिः । जैउ १,१२,५,६ ।
४८. समा उ ह वा अस्मि ९ श्छन्दा ९ सि साम्यादिति तत्साम्नः सामत्वम् । सा १,१,५ ।
४९. सर्वेषां वाऽएष वेदाना ९ रसो यत्साम । माश १२,८,३,२३; गो २,५,७ ।
५०. सा त्वममस्योऽहम्, अमोऽहमस्मि सा त्वम् । ता एहि संरभावहै पु ९ से पुत्राय कर्तवे । काठ ३५,१८ ।
५१. साम बृहत् । जै १,१२८ ।
५२. साम वै सहस्रवर्तनि । ष १,४ ।
५३. साम वै स्तोत्रिय ऋगनुरूपः । जै ३,२१ ।
५४. साम हि सत्याशीः । तां ११,१०,१०; १३,१२,७ ।
५५. (प्रजापतिः) सामान्युद्गीथम् (अकरोत्) । जैउ १,३,३,३ ।
५६. (तमेतं पुरुषं) सामेत छन्दोगाः (उपासते), एतस्मिन् हीद ९ सर्वं समानम् । माश १०, ५, २,२० ।

५७. साम्ना ऽ हिरण्यानि ( रूपम् )। काठ १२,४।
५८. साम्ना तनूपाः (इन्द्रः) तैसं ४,४,८,१।
५९. साम्ना (देवाः सोमं) समानयन्। तत्साम्नः सामत्वम्। तै २,२,८,७।
६०. साम्नो वा एष वर्णो यद्धिरण्यम्। तैसं २,४,११,६।
६१. सैन्द्रं वा एतत्साम यदेतत्साम भवति सैन्द्रत्वाय। तां १५,५,२४।
६२. सैव नामर्गासीत्। अमो नाम साम। गो २,३,२०।
६३. सोमदेवत्यं वै साम। काठ २९,२; क ४५,३।
६४. सोमाहुतयो ह वाऽएता देवानाम् यत्सामानि। माश ११,५,६,६।
६५. स्वरिति सामभ्यो ऽक्षरत् स्वः स्वर्गलोको ऽभवत्। प १,५।
६६. स्वरिति सामानि (अधीते)। काठसंक ४७ : ६ ॥ [°मन्- अग्न्याधेय- १; अध्वर्यु- ४२; अन्न- ४९; १३१; १८९; अन्नाद्य- २७; असुर- १५; अहन्- ४५; आदित्य- २२९; ३८०; इन्द्र- २१४; उच्चैस् २; उदीची- ३२; उद्गीथ- १४; ऋच्- ६;७;१५; २१;२४; ३२; ४८; ४९; ५५; ५६; ओषधि- ७८; क्षत्र- २८; ३१; गायत्र- ८; गो- ५१; चक्षुस्- २०; ज्योतिस्- २२; दिव्- ५९; ७७; १७०; देव- २६८; निधन- ४;१३; प्रजापति- १८२; २९३; प्रस्ताव- ६; ८; प्रस्तोतृ- २; ३; प्राण- ६०; ६१; ९०; १११; १४२, १७३; २०३; ३०३; बृहत्- ४; बृहती- २९; भुवस् ३; मनस्- ४९; महाव्रत- २; १८; १४२; १७२; मांस- १२; यूनर्वन्-; रक्षस्- ४०; रक्षोहन्- ४; राष्ट्र- ५; वामदेव्य- ७;३६;२७; वायु- ३०; व्यान- १६; व्रीहिमय- २;२७; शुक्ल- २; संवत्सर- १६; ५७; सत्- १; सत्य- २०; सत्याशिस्-; साम्राज्य- ३ द्र.]।

**साम-तस्** आहवनीय- १ द्र.।

**सामदेवत्य-** सामदेवत्यो वै सोमः (सौम्यः [तैसं.]) । तैसं ६,६,७,१; मै ४,७,२।

**साम-निधन-** अथ यन्मधुश्चुन्निधनं तत्सामनिधनम्। जै १,२२५।

**साम-राजन्** ( सामन्- )- साम्राज्यमाधिपत्यं गच्छति सामराज्ञा तुष्टुवानः। तां १५,३,३५।

**सामरूप्य-** सर्वं तेजः सामरूप्य ऽह शश्वत्। तै ३,१२,९,२।

**साम-वेद-**

१. अग्न आयाहि वीतये गृणानो हव्यदातये। नि होता सत्सि बर्हिषीत्येवमादिं कृत्वा सामवेदमधीयते। गो १,१,२९।
२. सामवेदेऽथ खिलश्रुतिः ब्रह्मचर्य्येण चैतस्मादथर्वाङ्गिरसो ह यो वेद स वेद सर्वमिति। गो १,१,२९।
३. सामवेदेनास्तमये महीयते। तै ३,१२,९,१।
४. सूर्यात्सामवेदः ( अजायत )। माश ११, ५, ८, ३।
५. स्वरिति सामवेदः। ऐआ १, ३, २।
६. स्वः इति सामवेदात् (उदैत्)। जै १,३५७।
७. स्वर्गो लोकः सामवेदः। ष १, ५॥ [°द-आदित्य- ३७९; दिव्- १७९; प्राण- १०२; ब्राह्मण- ७५; यशस्- ११ द्र.]।

सामिधेनी (ऋच्-)- ।

१. ऋपेऋंषेर्वा एता निर्मिता यत् सामिधेन्यः । तैसं २, ५, ७, ५ ।

२. एता हि वा ऽ इद ५ सर्वं ५ समिन्धत ऽ एताभिरिद ५ सर्वं समिद्धं तस्मात्सामिधेन्यो नाम । माश ११, ३, ७, ६ ।

३. पञ्चदश सामिधेनीरन्वाह, पञ्चदश वा अर्धमासस्य रात्रयोऽर्धमासश संवत्सर आप्यते, तासां त्रीणि च शतानि षष्टिश्चाक्षराणि, तावतीः संवत्सरस्य रात्रयः । तैसं २, ५,८,३ ।

४. समिन्धे सामिधेनीभिर्होता तस्मात् सामिधेन्यो नाम । माश १, ३, ५, १ ॥ [°नी- अनूक- १; यज्ञमुख- ४; वज्र- ४०; संवत्सर- ९३ द्र.]

सांमद- मत्स्य- ३ द्र. ।

सायम्

१. एष ह वा अह्नो जघनार्धो यत् सायम् एष उ वै रात्रेः पूर्वार्धो यत् सायम् । जै १,१९६ ।

२. मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायं चरुम् ( निर्वपति ) । तैसं १, ८, ४, १ ।

३. समागादिती ३ तत् सायमभवत् । ऐआ २, १, ५ ॥ [°यम् अपान- ४६ द्र. ] ।

सार्ववश्य- मरुत्- २४; २५ द्र. ।

सार्वसेनि-यज्ञ- स एष प्रजानिकामस्य यज्ञः । कौ ४, ६ ।

सालावृक- तं ( प्रतर्दनं ) हेन्द्र उवाच ···मामेव विजानीह्येतदेवाहं मनुष्याय हिततमं मन्ये यन्मां विजानीयात्त्रिशीर्षाणं त्वाष्ट्रमहनमरुर्मुखान् यतीन् सालावृकेभ्यः प्रायच्छं बह्वीः संधा अतिक्रम्य दिवि प्रह्लादीयानतृणमहमन्तरिक्षे पौलोमान् पृथिव्यां कालखञ्जांस्तस्य मे तत्र न लोम चनामीयत स यो मां ( इन्द्रं ) वेद न ह वै तस्य केनचन कर्मणा लोको मीयते न स्तेयेन न भ्रूणहत्यया न मातृवधेन न पितृवधेन नास्य पापं चकृषो मुखान्नीलं व्येतीति- कौउ ३, १ (तु. शांआ ५, १) ॥ [°क- इन्द्र- १५३; ३३६ द्र.] । =सला° द्र. ।

सालावृकेय- इन्द्र- १५४-१५६; १८९; खर्जूर- द्र. ।

सावित्र- प्रमृ सवितृ- द्र. ।

सिंह-

१. तस्य ( इन्द्रस्य ) नस्तो ( सोमः ) ऽमुच्यत तौ सिंहा अभवताम् । काठ १२, १० ।

२. लोहितादेवास्य सहोऽस्रवत्स सिंहोऽभवदारण्यानां पशूनामीशः । माश १२, ७, १,८ ।

३. स यन्नस्तो ऽद्रवत् । ततः सिंहः समभवत् । माश ५, ५. ४, १० ॥ [°ह- अध्वर्यु- ४३; छदिस्- ३; मारुत- २०; ललाट-; व्याघ्र- २;४ द्र. ] ।

सिंह-लोम- केशाश्च श्मश्रूणि च सिंहलोमानि । माश १२, ९, १, ६ ।

सिंही-

१. तस्य (इन्द्रस्य) यन् नस्त (सोमो राजा) इयाय ताव् एव सिंह्याव् अभवताम् । जै २, १५६-१५७ ॥

२. सिंह्यसि सपत्नसाही । क २,३ ॥ [°ही-उत्तरवेदि- ४;८;१८ द्र.] ।

सिंही-रूप- देवाश्च वा असुराश्च संयत्ता आसन्, तान् यदस्याः (पृथिव्याः) तेजो यज्ञिय-मासीत् तत् सिंहीरूपमिव महिषीरूपमिव भूत्वाऽन्तराऽतिष्ठत् । काठ २५,६: क ३९,२ ।

सिकता-

१. अलंकारो न्वेव सिकता भ्राजन्तऽइव हि सिकताः । माश ३,५,१,३६ ।

२. इष्टका वा एता वैश्वानरीरपरिमिता यत् सिकताः । क ३१,३ ।

३. द्वे हि सिकते शुक्ला च कृष्णा च । माश ७,३,१,४३ ।

४. योनिर्वै सिकता रेता ऊषाः । मै ३,२,३ ।

५. रेतः सिकताः । माश ७,१,१,११ ।

६. सा ( मृत् ) अतप्यत सा सिकता असृजत । माश ६,१,३,४ ॥ [°ता- अग्नि- २८९; २९६; ७३७; ७५३; अप्- २६२; शर्करा- ७ द्र.] ।

सिध्म- तारका- २ द्र. ।

सिनीवाली-

१. कुवयिः कुटरुर्दात्यौहस्ते सिनीवाल्यै । काठ ४७,७ ।

२. त्रयोऽनड्वाहस्सिनीवाल्यै । काठ ४९,८ ।

३. प्र सिनीवाली जनयति । तैसं ३,४,९,१ ।

४. या पूर्वाऽमावास्या सा सिनीवाली । मै ४,३,५; काठ १३,५; ऐ ७, ११ गो २, १, १०; ष ४, ६ ।

५. या सुपाणिः स्वङ्गुरिः सुषूमा बहुसूवरी । तस्यै विश्पत्न्यै हविः सिनीवाल्यै जुहोतन । तैसं ३,१,११,४ ।

६. सिनीवालि पृथुष्टुके या देवानामसि स्वसा । जुषस्व हव्यमाहुतं प्रजां देवि दिदिड्ढि नः । तैसं ३, १, ११, ३-४ ।

७. सिनीवालि या सुपाणिः । तैसं ३, ३, ११, ५ ।

८. सिनीवाली सुकपर्दा सुकुरीरा स्वौपशा सा···ओखां दधातु हस्तयोः । तैसं ४, १, ५, ३ । [°ली- अमावस्या- ४; अमावास्या- ३; गो-५४; जगती- २२;५१;६१; योषा- १५ द्र.] ।

सिन्धु-

१. तद्यदेतैरिदं सर्वं सितं तस्मात्सिन्धवः । जैउ १, ९, २, ९ ।

२. समुद्रं न सिन्धव उक्थशुष्मा उरुव्यचसं गिर आ विशन्ति । काठ ३८, ७ ।

३. (सोमः) सिन्धुरवभृथमवप्रयन् । तैसं ४,४,९,२ ॥ [°न्धु- प्राण- २०४; शिंशुमार- ३ द्र.] ।

सिन्धु-क्षित्- सिन्धुक्षिद् वै भारतो राजा ज्योगपरुद्धश्चरन् सो ऽकामयताव स्व ओकसि गच्छेयमिति सिन्धुं हैव चचार, सा ऽस्य सिन्धुक्षित्ता । जै ३, ८२ ।

सैन्धुक्षित ( सामन्- )-

१. स ( सिन्धुक्षित् ) एतत्सामापश्यत्तेनास्तुत ततो वै सो ऽव स्व ओकस्यगच्छत् । जै १,१७८ ।

२. सिन्धुक्षिद्वै राजन्यर्षिर्ज्योपरुद्धश्चरन् स एतत्सैन्धुक्षितमपश्यत् सो ऽवागच्छत् प्रत्यतिष्ठदव-गच्छति प्रतितिष्ठति सैन्धुक्षितेन तुष्टुवानः । तां १२, १२, ६ ।

सिमा ( शाकर-सामन्- )-

१. ता ऊर्ध्वाः सीम्नो ऽभ्यसृजत यदूर्ध्वाः सीम्नोऽभ्यसृजत तत्सिमा अभवँस्तत्सिमानां सिमात्वम् । ऐ ५, ७ ।

२. ताः सीमानमेवोर्ध्वा उदीर्यासृज्यन्त, तद्धेवासां सिमात्वम् । जै ३, १०४ ।

३. मध्यो हि सिमाः । तां १३, ५, ३ ।

४. यत् सीमानमभिनत्तस्मात् सिमाः, अथो हैनाः सीमत एव ससृजे, सिम इति वै श्रेष्ठमाचक्षते । जै ३, १११ ।

५. स ( प्रजापतिः ) तपोऽतप्यत, स तपस्तप्त्वात्मन् सिमसिमायद् अवापश्यत्, तत् सिमानां सिमात्वम् । जै ३, १०४ ।

६. ( इन्द्रो वृत्रस्य ) सीमानमभिनत्तत्सिमाः । तां १३, ४, १ ॥ [°मा- पशु- १९१; रेवती- १ द्र.] ।

सीता- बीजाय वा ऽ एषा योनिष्क्रियते यत्सीता यथा ह वाऽअयोनौ रेतः सिञ्चेदेवं तद्यदकृष्टे वपति । माश ७, २, २, ५ ॥ [°ता- प्रजापति- २९६; प्राण- १४२ द्र.] ।

सीता-समर- वाच्- १०१ द्र. ।

सीदन्तीय ( शङ्कु-सामन्- )-

१. एतेन ( सीदन्तीयेन ) वै प्रजापतिरूर्ध्व इमान् लोकानसीदत्, यदसीदत्तत् सीदन्तीयस्य सीदन्तीयत्वम् । ऊर्ध्व इमान् सीदति सीदन्तीयेन तुष्टुवानः । तां ११, १०, १२ ।

२. तद् ( शङ्कुसाम ) उ सीदन्तीयमित्याहुः । तां ११,१०,१२ ।

३. यद् उ देवा एतेन साम्ना स्वर्गे लोके ऽसीदन्, तस्मात् सीदन्तीयम् इत्याख्यायते । जै ३, ३० ।

सीमन्- मध्यं वै सीमा । माश ७, ४, १, १४ ।

सीर- सेर ँ हैतद्यत्सीरमिरामेवास्मिन्नेतद्दधाति । माश ७, २, २, २ ।

सीर-पति- इन्द्र- ३४ द्र. ।

सीस-

१. यत् कुमारो जायमानो वा जातो वा सीसवं करोति तद् एव सीसम् अभवत् । तस्माद् तद् दुर्गन्धितमम् । जै ३, ३३५ ।

२. क्लीबात् सीसेन तोक्मानि क्रीणाति । काठ १२, ११ ।

३. तत् ( रक्षः ) सीसेनापजघान ( इन्द्रः ) । तस्मात्सीसं मृदु सृतजव ँ हि, सर्वेण हि वीर्येणापजघान, तस्माद्धिरण्यरूप ँ सन्न कियच्चनार्हति सृतजव ँ हि··· तथो ऽ एवैष एतन्नाष्ट्रा रक्षा ँ स्यतो ऽपहन्ति । माश ५, ४, १, १० ॥

४. तद्दक्षिणतः प्रतिवेशतः केशवात् पुरुषात् सीसेन परिस्रुतं क्रीणाति न वा ऽ एष स्त्री न पुमान् यत् केशवः पुरुषः ··· नैतदयो न हिरण्यं यत्सीसं, नैष सोमो न सुरा यत्परिस्रुत् । माश ५, १, २, १४ ।

५. नाभ्या एवास्य शूषो ऽस्रवत् । तत्सीसमभवन्नायो न हिरण्यम् । माश १२, ७,१,७ ॥ [°स- अनृत- ५; काकुभ- २; क्लीब-; त्रपु- २;३; नमुचि- ४; लोह- १ द्र.] ।

सु-कन्या- तौ ( अश्विनौ ) हैनां ( सुकन्यां ) एत्योचतुः कुमारि, स्थविरो वा अयमसर्वो नालं

पतित्वनायावयोर्जायैधीति । नेति होवाच ( सुकन्या ) । यस्मा एव मा पितादात्, तस्य-जाया भविष्यामीति । जै ३, १२३ (तु. माश ४,१,५,९) ।

**सु-कीर्त्ति-** देवयोनिर्वै सुकीर्त्तिः । ऐ ६, २९; गो २,६,८; १२ ।

**सु-क्रतु-** रश्मि- ९ द्र. ।

**सुकृत-** तद् ( ब्रह्म ) आत्मानं स्वयमकुरुत । तस्मात्तत्सुकृतमुच्यते । तैआ ८, ७,१; तैउ २,७,१ । [°त- कृष्णाजिन- ५; पुण्य- ३; पुरुष- ६९; सत्य- २१ द्र.] ।

**सु-क्षिति-** अग्नि- ३४५; दिव्- ४३; पृथिवी- १५ द्र. ।     **सुख-** क- १;९ द्र. ।

**सुगन्धि-तेजन**( तृणविशेष- )-

१. यत् पूयितसुपश्लिष्ट ९ स सुगन्धितेजनः । मै ३, ८, ५ ।

२. यां ( रात्रिम् अग्निः ) ओषधीषु ( अवसत् ), ता ९ सुगन्धितेजने ( अवसत् ) । तैसं ६, २, ८, ४ ।

३. यत् स्नाव ( अग्नेरासीत् ) तत्सुगन्धितेजनम् अभवत् । तां २४, १३, ५ ॥ [°न-अग्नि- ४६९; लोमन्- २ द्र.] ।

**सु-चरित-** ऋजुकर्म्म ९ सत्य ९ सुचरितम् । तै ३, ३, ७,१० ॥ [°त- अग्नि- ५६४ द्र.] ।

**सु-ज्ञान** ( सामन्- )- सुज्ञानो ऽसीति ह स्माहुस्तदेव सुज्ञानस्य सुज्ञानत्वम् । जै ३,३१ ॥ [°न-भ्रातृव्यहन्- द्र.] ।

**सु-तर्मन्-** यज्ञ- १२५ द्र. ।

**सुत्य, त्या-**

१. अग्निष्टोमो ऽत्यग्निष्टोम उक्थ्यः षोडशिमांस्ततः । वाजपेयोऽतिरात्रश्चाप्तोर्यामात्र सप्तम इत्येते सुत्याः । गो १, ५, २३ ।

२. ( प्रायश्चित्तार्थं वेदभागमध्येतुः पुरुषस्य ) आसन ९ सुत्या । तैआ २, १७, २ ।

**सु-त्रामन्-** य एवोपवादी यो ऽभिदासति तत एन ९ सुत्रामा त्रायते । मै ४,३,९ ॥ [मन्- इन्द्र-२१७ द्र.] ।

**सु-दत्र-** रत्नधा- द्र. ।     **सु-दिति-** आदित्य- ३८२ द्र. ।

**सु-धा-** धातृ- ६ द्र. ।     **सु-नीति-** इन्द्र- ९८ द्र. ।

**सु-पर्ण-**

१. एकविंशतिर्ह्रीमानि प्रत्यञ्चि सुपर्णस्य पत्त्राणि भवन्ति । ऐआ १, ४, २ ।

२. एकेन ह वै पत्रेण सुपर्णस्योत्तरः पक्षो ज्यायान् । ऐआ १, ४, २ ।

३. वयो ( पक्षी ) वै सुपर्णः । कौ १८, ४ ।

४. वाग्वै माता, प्राणः पुत्रः ······ एकः सुपर्णः ससुद्रमाविवेश ··· तं ( प्राणं ) माता ( वाक् ) रेळिह, स (प्राणः) उ रेळिह मातरम् ( वाचम् ) । ऐआ ३, १, ६ ।

५. वाग्वै माता ( गौः ), प्राणो ( सुपर्णः ) वत्सः । शांआ ७, १९ ।

६. वीर्यं वै सुपर्णो गरुत्मान् । माश ६, ७, २, ६ ।

७. सुपर्णेन वया ऽसि ( अन्वाभवत् )। काठ ३५, १५।

८. सुपर्णो ऽसि गरुत्मान्, त्रिवृत्ते शिरो, गायत्रं चक्षुः स्तोम आत्मा, साम ते तनूर्वामदेव्यं, बृहद्रथन्तरे पक्षौ, यज्ञायज्ञियं पुच्छं छन्दा ऽस्यङ्गानि धिष्णियाः शफा यजू ऽषि नाम। तैसं ४, १, १०, ५।

९. सोमं वै राजानं यत् सुपर्ण आजहार, तस्य यत् पर्णमपतत् स एव पर्णो ऽभवत्। स एवास्य संम्यङ्गः। जै १, ३५५॥ [°र्ण- त्रिष्टुप्-छन्दस्- २; २दक्षिणा- १८; पङ्क्ति- ४; पार्जन्य- ३; पुरुष- ५९; प्रजापति- १६५; प्राण- २०६; संवत्सर- ६३ द्र. ]।

सुपर्ण-रूप- यज्ञ- ११८ द्र.।

सु-पर्णी (माया-)- असौ ( द्यौः ) सुपर्णी। तैसं ६, १, ६, १। [°र्णी- छन्दस्- १००; दिव्- ११०; वाच्- ६८; शक्करी- १६ द्र. ]।

सौपर्ण ( सामन्- )- सौपर्णं भवति स्वर्गस्य लोकस्य समष्ट्यै। तां १४,३,९॥ [°र्ण- छन्दस्- १००; यज्ञ- ११८ द्र. ]।

सु-पुत्रा- अदिति- १२ द्र.। सुप्रतीची-, सुप्राची- वाच्- १३८ द्र.।

सु-ब्रह्मण्या- (निगद-)

१. एतस्याम् ( सुब्रह्मण्यायाम् ) एवैतत्सर्वं यद् ऋक् साम यजुः। तेनास्य सुब्रह्मण्या स्तोत्रवती शस्त्रवती भवति। जै २,८०।

२. तदाहुः किं सुब्रह्मण्यायै सुब्रह्मण्यात्वमिति वागेवेति ब्रूयाद्वाग्वै ब्रह्म च सुब्रह्म चेति। ऐ ६, ३।

३. ब्रह्म वै सुब्रह्मण्या। कौ २७,६; जै ३,३०७।

४. ब्रह्मश्रीर्वै नामैतत्साम यत्सुब्रह्मण्या। प १,२॥ [°ण्या- ब्रह्मन्- १०; ५०; ११६; वाच्- १०२ द्र. ]।

सु-ब्रह्मन्- असावादित्यः सुब्रह्म। ष १,१॥ [°ह्मन्- वाच्- ६९ द्र. ]।

सु-भू- सोमो वै सुभूः। काठ २७,१; क ४२,१।

सु-भूत- पुरुषो वै सुभूतम्। जै २,२७।

सु-मित्र-,>सौमित्र (सामन्-)-

१. तद्वाव तौ (इन्द्रश्च सुमित्रः कुत्सश्च ) तर्ह्यकामयेतां कामसनि साम सौमित्रं काममेवैतेनावरुन्धे। तां १३, ६, ९।

२. स ( सुमित्रः ) एतानि सौमित्राणि सामान्यपश्यत्। जै १, १६३।

३. सुमित्रः सन् क्रूरमकरित्येनं ( कुत्सं ) वागभ्यवदत्स ऽशुगार्छत्स तपो ऽतप्यत स एतत्सौमित्रमपश्यत्तेन शुचमपाहताप शुच ऽहते सौमित्रेण तुष्टुवानः। तां १३, ६, १०। [°त्र- बृहदुक्थ- १ द्र. ।]

सुमेक- संवत्सर- ८४; १०१ द्र.।

सुम्न- सुम्ने स्थः सुम्ने मा धत्तमिति साध्व्यौ स्थः साध्वौ मा धत्तमित्येवैतदाह। माश १,८,३,२७॥ [°म्न- ५१; यज्ञ- १२६ द्र. ]।

सुम्नयु- यजमान- १५ द्र. ।

सु-यम- सुयमे मे भूयास्तम् इति……सुभरे मे भूयास्तम् । भर्तुं वा ९ शकेयमित्येवैतदाह ।
माश १,४,५,१ ।

सुरभि- प्राण- १४३ द्र. ।

सुरा-

१. अनृतं पाप्मा तमः सुरा । माश ५,१,२,१०; ५,२८ ।
२. अन्नं ( वै [मै., काठ.] ) सुरा । मै २,३,९; काठ १२,११; तै १,३,३,५ ।
३. अपां च वाऽ एष ओषधीनां च रसो यत्सुरा । माश १२,८,१,४ ।
४. अभिमाद्यन्निव हि सुरां पीत्वा वदति । माश १,६,३,४; ५,५,४,५ ।
५. तदुतैतद्राष्ट्रीयाय ब्राह्मणं ब्रूयात् तद्य एव ९ विद्वान्त्सुरां पिबति न हैनं हूणात्येषा वै प्रजापतेर्वीर्यवती तनूः । मै २,४,२ ।
६. तस्मात्सुरां पीत्वा रौद्रमनाः । माश १२,७,३,२० ।
७. तस्माद् ब्राह्मणः सुरां न पिबेत्, पाप्मनात्मानं नेत्स ९ सृजा इति । मै २,४,२ ।
८. ( त्वष्ट्रानुपहूत इन्द्रः सोमं पीत्वा त्रिर्निरष्ठीवत्, ततः ) यदधस्तात् सा सुरा । मै २,४,१ ।
९. पुमान् वै सोमः स्त्री सुरा । तै १,३,३,४ ।
१०. ब्राह्मणस्य मूर्धन् सादयेत् तेन ( सुरा ) मेध्या, ऽन्नं वै सुरा, मेध्यमन्नं, तेन ( सुरा ) मेध्या काठ १२,११ ( तु. मै २,३,९ ) ।
११. यदन्नस्य ( शमलमासीत् ) सा सुरा ( अभवत् ) । तै १,३,२,६;३,३,६ (तु.काठ १४,६) ।
१२. सुत्वरीव सुरा समृद्ध्यै । काठ १२,११ ।
१३. सुरा त्वमसि शुष्मिणी । मै २,३,८ ।
१४. स्फिगीभ्यामेवास्य भामो ऽस्रवत्सा सुराभवदन्नस्य रसः । माश १२,७,१,७ ॥ [°रा- अनृत- ५; अयस्पात्र-; कलविङ्क- १; क्षत्र- ८३; क्षत्रिय- १८; देव- ४२; पाप्मन्- ६; ११; प्रजापति- १९९;२२१; ब्राह्मण- ३;४३; मनुष्य- १८; यशस्- ६; विश्- १४ द्र.] ।

सुरा-ग्रह- पत्नी- ४; मनुष्यलोक- ३ द्र. । सुरा-पान- कलविङ्क- १ द्र. ।

सुरा-वत्- सुरावान्वाऽ एष बर्हिषद्यज्ञो यत्सौत्रामणी । माश १२,८,१,२ ।

सुरोपयाम- पाप्मन्- ११ द्र. ।

सु-रुच्- लोक- ६ द्र. । सु-रूप- अन्न- ४९; पशु- १९२ द्र. । सुरूप-कृत्नु- प्राण- २६१ द्र. ।

सुवर् स्वर् द्र. ।

सु-वर्ण-

१. तस्मात् सुवर्णं ९ हिरण्यं भार्यम् । सुवर्ण एव भवति । ऐनं प्रियं गच्छति नाप्रियम् । तै २,२,४,६ ।
२. पशवो वै वसु सुवर्णम् । असुवर्णम् इति वा आहुर् अपशुम् । जै ३,८४ ।
३. यत् तृतीयम् उल्वम् अपालुम्पंस्तद् धरितम् अभवत् । तस्मात् तत् त्रिविमित्तमम् । जै ३,३३५ ॥ [°र्ण- अहन्- १६; ४३; आदित्य- १२३; गायत्र- ४६; गो- ७२; देव- २५७; यज्ञ- १५३; रजत-९; लवण-; विद्युत्- १७ द्र. ] ।

सु-वीर- पशु- ४४ द्र. सु-शर्मन्- प्राण- २०५ द्र.

सु-शस्ति-

१. ये वोढारस्ते सुशस्तयः। माश ६,४,३,९।

२. ऊर्जो नपाज्जातवेदः सुशस्तिभिरिति। ऊर्जो नपाज्जातवेदः सुष्टुतिभिरित्येतत्। माश ७,३,१.३१।

सु-श्रवस्- पर्ण- ३; ब्रह्मवर्चस- ५ द्र।

सौश्रवस (सामन्-)-

१. तदेतद् भेषजं प्रायश्चित्तिः साम, ··· यद्दु सुश्रवा स्यौरायणो ऽपश्यत्, तस्मात्सौश्रवसमित्याख्यायते। जै ३, २०२।

२. तं (छिन्नशिरसं सौश्रवसं) एतेन साम्ना (इन्द्रः) समैरयत् (सञ्जातावयवमकरोदिति) स तद्वकामयत कामसनि साम सौश्रवसं काममेवैतेनावरुन्धे। तां १४, ६, ८।

३. यद्दु सुश्रवा स्यौरायणो ऽपश्यत् तस्मात् सौश्रवसमित्याख्यायते। जै ३, २०२।

सु-षद्- पृथुर्भव सुषदस्त्वमग्नेः पुरीषवाहण इति। पृथुर्भव सुशीमस्त्वमग्नेः पशव्यवाहन इत्येतत्। माश ६,४,४,३।

सु-षुम्ण- सुषुम्ण इति सुयज्ञिय इत्येतत्। माश ९,४,१,९।

सु-षेण- तस्य (पर्जन्यस्य) सेनजिच्च सुषेणश्च सेनानीग्रामण्याविति हैमन्तिकौ तावृतू। माश ८,६,१,२०।

सु-संदृश्- प्राण- २०६ द्र.। सुहृ- साधु- द्र. सूकर- इन्द्र- ११६ द्र।

सूक्त-

१. आत्मा सूक्तम्। कौ १४,४; १५,३; १६,४; २३,८।

२. तान् होता सूक्तैः सूते तत्सूक्तानां सूक्तत्वम्। जै २,२४।

३. सूक्तं बतावोचतेति तत्सूक्तमभवत्। ऐ २,२,२॥ [°क्त- गृह- ६; दिव्- ११०; पशु- १९३;२३७; भूमन्- ४; यजमान- २४; विश्- १५; शिरस्- २३ द्र.]।

सूक्त-वाक-

१. प्रतिष्ठा वै सूक्तवाकः। कौ ३,८।

२. संस्था सूक्तवाकः। माश ११,२,७,२८। [°क- बाहु- ५ द्र.]।

सूक्त-वाच्- विश्वेदेव- १६ द्र.।

सूची- विश्- २७ द्र.।

सूत-

१. वारुणो यवमयो दशकपालः सूतस्य गृहे। मै २, ६, ५।

२. सवो वै सूतः। माश ५,३,१,५॥ [°त- ग्रामणी- ३; वारुण- १२; २६ द्र.]।

सूत-मुख- विश्- ३१ द्र.।

**सूत-वशा**- तस्या अनुमृश्य (इन्द्रः) योनिमाऽच्छिनत् सा सूतवशाऽभवत् । तैसं ६, १,३,६ । [°शा- ऐन्द्री- २; राजन्य- ८ द्र.] ।

**सूद-दोहस्**- 'ता अस्य सूददोहसः' इत्येतदन्तः सूददोहाः । ऐआ ५, २, ५ ॥ [°हस्- अन्न- ५०; अप्- ११२; १२१; अमृतत्व-२; त्वच्- २; धाय्या-८; प्राण- १०२; रस-१ द्र.] ।

**सूनु**- प्रजा- ६० द्र. **सू-नृता**- यज्ञ- १२७ द्र. ।

**सूर**-

१. अन्तो वै सूरः । तां १५,४,२;११,१४ ।
२. सजूः सूर एतशेन······ घृतेन स्वाहा । मै २,१२,३; काठ २२,५ ।
३. सजूः सूर एतशेनेति, सूर्यमेव प्रीणाति । मै ३, ४, ४ ।

**सूर्मी**- शतघ्नी- १;२ द्र. ।

**सूर्य**-

१. अथ सूर्यमुदीक्षते । सैषा गतिरेषा प्रतिष्ठा । माश १,९,३,१५ ।
२. अधिद्यौर्नामास्यमृतेन विष्टा······विश्वे ते देवा गोप्तारः, सूर्योऽधिपतिः । मै २, ८, १४ ।
३ अयुक्त सप्त शुन्ध्युवस्सूरो रथस्य नप्त्यः ताभिर्याति स्वयुक्तिभिः सप्त । त्वा हरितो रथे वहन्ति देव सूर्य । शोचिष्केश विचक्षण । काठ ९, १९ ।
४. अर्वाङ् सूर्यस्तपति । काठ २९,७ ।
५. असौ वाऽआदित्यो बृहज्ज्योतिः । माश ६,३,१,१५ ।
६. असौ ( सूर्यः ) वाव मर्चयति (गच्छति) इव । ऐ ४,१० ।
७. असौ (सूर्यः) वाव स्वर्दृक्तेन सूर्य नातिशंसति । ऐ ४,१० ।
८. असौ वै सूर्यो योऽसौ तपति । कौ ५,८; गो २,१,२६ (तु. माश २, ६,३,८)
९. असौ वै होता यो ऽसौ (सूर्यः) तपति । गो २,६,६ ।
१०. अस्माभिः (अङ्गिरोभिः) एष प्रतिगृहीतो य एष (सूर्यः) तपतीति तस्मात्सद्यःक्रियोऽश्वः श्वेतो दक्षिणा । माश ३,५,१,१९ ।
११. आरोगो भ्राजः पटरः पतङ्गः । स्वर्णरो ज्योतिषीमान् विभासः (एते सप्त सूर्याः) । ते अस्मै सर्वे दिवमातपन्ति······कश्यपोऽष्टमः······यस्मिन् सूर्या अर्पिताः सप्त साकम्······ ते अस्मै सर्वे कश्यपाज्ज्योतिर्लभन्ते । तैआ १,७,१ ।
१२. एतं ( सूर्यं ) महाव्रते छन्दोगाः (मीमांसन्ते) ऐआ ३,२,३; शांआ ८,४ ।
१३. एतद्वाऽ अनपराद्धं नक्षत्रं यत्सूर्यः । माश २,१,२,१९ ।
१४. एतद्वै 'ज्योतिरुत्तमं' य एष (सूर्यः) तपति । सैषानार्ता देवता । जै २,६८ ।
१५. एष वाव स परोरजा इति होवाच य एष (सूर्यः) तपति । तै ३,१०,९,४ ।
१६. एष वै श्रेष्ठो रश्मिः यत्सूर्यः । माश १,१,३,१६ ।
१७. एष वै स्वाहाकारो य एष (सूर्यः) तपति । माश १४,१,३, २६ ।
१८. एष (सूर्यः) वै होता वेदिषद् । ऐ ४,२० ।
१९. एष स्वर्गो लोकः । तै ३, ८, १०, ३; १७, २; २०, २ ।

२०. चक्षुर्मित्रस्य वरुणस्याग्नेः······सूर्य आत्मा जगतस्तस्थुषश्च। तैसं १, ४,४३,१।
२१. ज्योतिरेष य एष ( सूर्यः ) तपति। कौ २५,३;९।
२२. तं सर्वाणि भूतानि सोऽर्यस्सोऽर्य इत्यायन्। तत् सोर्यस्य सोर्यत्वम्। सोर्यो ह वै नामैष तं सूर्य इति परोक्षमाचक्षते। जै ३, ३५७।
२३. तद्वाऽएतदेव पुरश्चरणम्। य एष तपति। माश ४,६,७,२१।
२४. तं (इन्द्रं) देवा अब्रुवन् सुवीर्य्योऽसर्य्या यथा गोपायत इति। तत्सूर्यस्य सूर्य्यत्वम्। तै २, २,१०,४।
२५. ता ९(वृष्टिं) सूर्यो रश्मिभिर्वर्षति। मै २,४,८।
२६. ते (देवाः) सूर्यं काष्ठां कृत्वाजिमधावन्। तां ९, १, ३५।
२७. तेषाम् (नक्षत्राणाम्) एष (सूर्यः) उद्यन्नेव वीर्य्यं क्षत्रमादत्त। माश २, १, २, १८।
२८. परमेष्ठी त्वा सादयतु दिवः पृष्ठे व्यचस्वतीं प्रथस्वतीं भास्वती ९ रश्मिवतीमा या दिवं भास्यापृथिवीमो३र्वन्तरिक्षं, दिव ९ मह······ सूर्यस्त्वाभिपातु। मै २, ८, १४।
२९. बार्हतो वा एष य एष (सूर्यः) तपति। कौ १५, ४; २५, ४; गो २, ३, २०।
३०. य आदित्यः स्वर एव सः। जैउ ३, ६, ५, १।
३१. य उदगान्महतोऽर्णवाद्विभ्राजमानः सरिरस्य मध्यात्। स मा वृषभो लोहिताक्षः सूर्यो विपश्चिन्मनसा पुनातु। तैआ ४, ४२, ५।
३२. या वाजिन्नग्नेः प्रिया तनूः सूर्ये शुक्रा शुचिमती तामावह। काठ ७, १३; क ६, ३।
३३. षड् वा ऋतवस्संवत्सरश्रीः। स एष (सूर्यः) ऋतुषु च संवत्सरे चैतस्यां श्रियामध्यूढ-स्तपति। जै २, १४२।
३४. स (सूर्य्यः) उद्यन्नेवामूं (दिवं) अभिद्रवत्यस्तंयन्निमां (पृथिवीं) अभिद्रवति। माश १, ७, २, ११।
३५. स (सूर्यः) एवास्मिन् (यजमाने) ब्रह्मवर्चसं दधाति। तैसं २, ३, २,३।
३६. स एष (सूर्यः) मृत्युः। माश १०, ५, १, ४।
३७. स एष वाव द्वादशाहो य एष (सूर्यः) तपत्येष इन्द्रः, एष प्रजापतिर्, एष एवेदं सर्वम् इत्युपासितव्यम्। एष एवेदं सर्वमित्युपासितव्यम्। जै ३, ३८६।
३८. सप्त त्वा हरितो रथे वहन्ति देव सूर्य, शोचिःकेशं पुरुप्रिय। तरणिर्विश्वदर्शतो ज्योति-ष्कृदसि सूर्य विश्वमाभासि रोचनम्। मै ४, १०, ६।
३९. स यदाह स्वरोऽसीति सोमं वा एतदाहैष ह वै सूर्यो भूत्वाऽमुष्मिंल्लोके स्वरति तद्यत्-स्वरति तस्मात्स्वरस्तत्स्वरस्य स्वरत्वम्। गो १, ५, १४।
४०. सूर्य इवाप्रतिधृष्यः··· भूयासम्। ऐआ ५, १, १।
४१. सूर्य एतशः। तैसं ५, ६, ४, १।
४२. सूर्यः प्रजनयिता। क ४, ४।
४३. सूर्यस्य हरसा श्राय। तैआ ४, २, ६।
४४. सूर्यस्य हरसे त्वा··· (मध्वानक्तु)। मै ४, ९, ३; तैआ ४, ५, १।
४५. सूर्याय च प्रातः (जुहोमि) प्रजापतये च। काठ ६, ६।

४६. सूर्याय पुरोडाशमेककपालं ( निर्वपति )। ऐ ३, ४८।
४७. सूर्येण दिवम् ( अन्वाभवत् )। काठ ४३, ४।
४८. सूर्येण स्वराट् ( दाधार )। तैसं ४, ४, ८, १।
४९. सूर्यो मे चक्षुः। काठ ३७, १५।
५०. सूर्यो ऽह्नोभिरनु त्वावतु। काठ ३७, ९।
५१. सूर्यो मा दिव्याभ्यो नाष्ट्राभ्यः पातु। तां १, ३, २।
५२. सूर्यो वै प्रजानां चक्षुः। माश १३, ३, ८, ४।
५३. स्वर्गो वै लोकः सूर्यो ज्योतिरुत्तमम्। माश १२, ९,२, ८।
५४. स्वर्भानुर्ह वा ऽ आसुरः। सूर्यं तमसा विव्याध। स तमसा विद्धो न व्यरोचत तस्य सोमारुद्रावेवैतत्तमो ऽपाहता १ स एषो ऽपहतपाप्मा तपति। माश ५, ३,२,२। (तु. गो २, ३, १९)॥ [°र्य- अग्नि- २१;२६५;३०६;३१७;५०६;७०९;७३०;७५५; अनडुह्- १४; अप्- १५५; २४२; २६०; अर्क- २-४; अश्व- १०१; असुर्य- ४; आदित्य- ५७; आरोग-; इन्द्र- २३१; ३९९; उद्गातृ- २२; उपस्- १५; ऋच्- ४५; एतश- १; ओषधि- ११४; गर्भ- ३; गोजा-; गोपा- १; ग्रह- ३; चक्षु-; चक्षुस्- ३८; ७३-७५; ७७; चतुःस्रक्ति-; चन्द्रमस्- ११; १००; जागत- १२; जातवेदस्- १; ज्योतिस्- ५; तन्त्रायिन्-; तेजस्- ७; ३५; त्रैष्टुभ- १६; दिव्- १६; ३४; ८३; १२८; १५८; १७३-१७५; दिवस्पुत्र-; दिविक्षित्-; दिविपद्-; दूरोह-; देव- २६०; २७१; धातृ- २२; नाक- ११; निविद्- १; नृषद्- १; परिवत्सर- ५; पवित्र- ३; पशु- ३४२; पितृ- ३५; पुरोरुच्- २; पूषन्- ३; प्रजापति- ३३; प्रस्ताव- २; बार्हत- ५; बृहत्- ११; बृहती- ४१; ब्रह्मणस्पति- ३; ब्राह्मण- ७७; भर्तृ-; भ्राजस्- ३; भ्राजस्वत्- १; २; मख- १; मरीचि- ४; ५; मरुत्- ४३; महावीर- १; मूर्धन्- १; मृत्यु- ४; यज्ञ- १२९; यम- ४; रक्षस्- ४२; वरसद्-; वरुण- ४; वर्चस्- ४; वषट्कार- २; वसु- २; वाच्- ५३; वाजपेय- ६; विद्युत्- १०; विश्वकर्मन्- २; विष्णु- ५१; वृष्टि- ३९;४०; वृष्टिवनि-; व्योमसद्-; श्रद्धा- ६; सवितृ- ४;९;१७; सामवेद- ४; सावित्र- ३; सूर- ३ द्र.]।

**सूर्य-राज्य-** षोडशिन्- १८ द्र.।   **सूर्य-वती-** रक्षस्- ४१ द्र.।

**सूर्य-वर्चस्-** अग्नि- ५३३ द्र.।   **सूर्याऽग्नि-** चक्षुस्- ७६ द्र.।

**सूर्या-चन्द्रमस्-**

१. एतौ ( सूर्याचन्द्रमसौ ) ह वाऽआसां प्रजानां चक्षुषी, स यद्धैतौ नोदियातां, नहैवेह स्वौ चन पाणी निर्जानीयुः। माश ४, २, १, २।
२. प्रशास्ताभ्या १ सूर्याचन्द्रमसौ। काठ ५३, ९।
३. सूर्याचन्द्रमसोर् द्वेष ( दुराशः ) यज्ञः। जै २, ९९।
४. सूर्याचन्द्रमसौ वृकाभ्याम् ( वृक्याभ्याम् [तैसं.] )। तैसं ५, ७,१९,१ काठ ५२, ९।

**सूर्या-** अथ यत्र ह तत्सविता सूर्यां प्रायच्छत्सोमाय राज्ञे। कौ १८, १। [°र्या- प्रजापति- १६६ द्र.]।

सौरी-

१. तिस्रश्श्वेता वशास्सौर्यः । काठ ४९, १ ।

२. यास्सौरी रश्मिवतीस्ताभिस्तिसृभिस्तिस्रस्समिध आदध्यात्… यद्रश्मिवतीभिरादधाति, वृष्टिमेव नियति, ताजक् प्रवर्षति। काठ २२,१२ ।

३. सौरीभिरादधाति, चक्षुरस्मिन् (यजमाने) दधाति । मै २, ३, ६ ।

४. सौरीनेव श्वेता वशा अनूबन्ध्या भवन्ति । काठ ५०,२ ॥ [°री– आग्नेयी– ५; ग्रीष्म– २४; बलाका– २; ब्रह्मवर्चसकाम– ३; रुच्– २; शिशिर– ७; श्वेत– २ द्र. ] ।

सौर्य,र्या-

१. सौर्य एककपालः (+पुरोडाशो भवति [माश.]) । काठ १५, २; माश २, ६,३, ८ ।

२. सौर्य एककपालः षट्कपालः पुरोडाशो धाना मन्थः । मै १, १०, १ ।

३. सौर्यमेककपालम् (पुरोडाशं निर्वपेत्) । मै १, ८, ९; २, ४,८; काठ ११, १० ।

४. सौर्यमेककपालं द्वादशगव ऽसीरं दक्षिणा । तैसं १, ८, ७, १ ।

५. सौर्यं बहुरूपमालभेत । तैसं २, १, १०, ३ ।

६. सौर्या वै स्रुक् । जै २, २०२ ।

७. सौर्यो बलक्षः पेत्वः काठ ४८, २ ॥ [°र्य– अश्व– ९६; उद्गातृ– २२; निविद्– ८; पयस्– ३२; प्रत्यञ्च्– ७; ब्रह्मवर्चसकाम– १;४; महानाम्नी– १२; रजत– १०; रुच्– ३; रेतस्– ४७; रेवती– ८; श्वेत– ३ द्र.] । **सौर्ययाम**– कृष्ण– द्र. ।

सृमर- अरण्याय सृमरः । मै ३, १४, २०; काठ ४७, ६ ।

सेना- ऽग्नीको भवत्यैन्द्रो विजित्यै ऽग्नीकेन वै देवसदनेन देवा असुरानजयन् । तस्माद्या अप्येतर्हि ऽग्नीका सेना भवति जयत्येव । जै २, ३१८ ॥ [°ना– इन्द्र– ४०१; इन्द्राणी– ९;१२;१३ द्र. ] ।

सेन-जित्- सुषेण- द्र. । **सेना-नी**- अग्नि– १८२; आग्नेय– १० द्र. ।

सोम-

१. अनयोर् (द्यावापृथिव्योः) गर्भस्सोमो राजा । काठ २४, ९ ।

२. अपाश्च खलु वै नपाश्चापा ऽसोमस्य रसस्येशाते । मै ४, ५, २ ।

३. अभिषिक्तो हि सोमः । काठ ३७, ५ ।

४. अरुणया पिङ्गाक्ष्या (गवा सोमं) क्रीणात्येतद् वै सोमस्य रूपम् । तैसं ६,१, ६, ७-८ ।

५. आदित्यः (अदितेः पृथिव्या उत्पन्नः) सोमः । काठ २६, २ ।

६ आपः सोमः सुतः । माश ७, १,१,२२ ।

७. इन्द्रः सोमस्य योनिः । मै ३, ७, ८ ।

८. इन्द्रियाय वै कं ब्राह्मणः सोमं पिबति । काठ २६, १; क ४०, ४ ।

९. उत्तमं वा ऽएतद्धविर्यत्सोमः । माश १२, ८, २, १२ ।

१०. ऊर्ध्वं सोमो वनस्पतिः । काठ ३६, ३ ।

११. ऋत्विजो वा अस्य (सोमस्य) सखायः । तैसं ६, २, २, ५ ।

१२. एकादशभिः (सोमं) क्रीणाति, दश वै पशोः प्राणा आत्मैकादशः । मै ३, ७, ७ ।

१३. एतत्खलु वा एतर्हि हविर्यत् सोमः । मै ४, ५, ३ ।
१४. एष उच्छिष्टः सोमो गृह्यते । काठ २८, ६; क ४४,६ ।
१५. एष वा ऽ उत्तमः पवियॆत्सोमः । माश ३, ९, ४, ५ ।
१६. ओषधयो वै सोमः । मै ३, ७, ४ ।
१७. औषधो हि सोमो राजौषधिभिस्तं भिषज्यन्ति यं भिषज्यन्ति सोममेव राजानं क्रीयमाणमनु यानि कानि च भेषजानि तानि सर्वाण्यग्निष्टोममपियन्ति । ऐ ३, ४० ।
१८. क्रूरमिव खलु वा एष करोति यः सोमेन यजते । तैसं ६, ४, ८, १-२ ।
१९. गिरिषु हि सोमः । माश ३, ३, ४, ७ ।
२०. घ्नन्ति (+ खलु [तै.]) वा एतत् सोम ँ यदभिषुण्वन्ति । तैसं ६,६,७,१; मै ४,५,६;७,२;७; काठ २६, १; २९, १; क ४०, ४; ४५, ३; तै २, २, ८, १ (तु. माश ३,३,२,६) ।
२१. चत्वार्यक्षराणि सोमं चादायापतत् ( गायत्री ) । काठ २३, १० ।
२२. चन्द्रमा वै सोमो राजा, यद्राजानं यक्ष्मो ऽ गृह्णात्, तद्राजयक्ष्मस्य जन्म, स तृणमिवाशुष्यत् । काठ ११, ३ ।
२३. त ँ सोममाह्रियमाणं गन्धर्वो विश्वावसुः पर्यमुष्णात्, स तिस्रो रात्रीः परिमुषितो ऽवसत् । तैसं ६, १, ६, ५ ।
२४. तस्मात्सोम ँ सर्व्वेभ्यो देवेभ्यो जुह्वति तस्मादाहुः सोमः सर्वा देवता इति । माश १,६,३,२१ ।
२५. तस्य ( सोमस्य ) वा एष भागो यदकृष्टपच्यम् । मै ४, ३, २ ।
२६. तस्य ( सोमाख्यस्य चन्द्रमोवाय्वोषधिरूपस्य ) वाजस्य सत्य ँ वाजिनमन्न ँ वाजिनं दक्षिणा वाजिनम् । मै ४, ५, ४ ।
२७. तस्य ( नमुचेः ) शीर्षश्छिन्ने लोहितमिश्रः सोमो ऽतिष्ठत् । माश १२, ७, ३, ४ ।
२८. तां दीक्षोपसद्भिस्तानूनप्त्रैराप्यायनेन सोमं कुर्वन्ति । काश ४,४,३,११; माश ३,४,३,१३ ।
२९. तासां ( प्रजापतेर्दुहितॄणां ) रोहिणीमेवोपैत् (सोमः), तं यक्ष्म आर्च्छत् । तैसं २,३,५,१-२ ।
३०. तिरोअह्न्या हि सोमा भवन्ति । कौ १८, ५; ३०, ११ ।
३१. तिस्रो रात्रीः क्रीतः सोमो वसति । तैसं ६, १, ६,११ ।
३२. ते( देवाः )सोमेन राज्ञा रक्षा ँ स्यपहत्याप्तुमात्मानं कृत्वा सुवर्गं लोकमायन् । तैसं ६,३,२,१ ।
३३. त्वं न सोम विश्वतो रक्षा राजन्नघायतः । न रिष्येत् त्वावतः सखा । तैसं २, ३, १४,१; काठ २, १४ ।
३४. दशभिः ( गोभिः सोमं ) क्रीणाति । मै ३, ७, ७; क ३७, ३ ।
३५. दशभिर्वत्सतरैः सोमं क्रीणाति । तैसं १, ८, १८, १; तै १,८,२,१ ।
३६. देवो वै सोमो, दिवि हि सोमो, वृत्रो वै सोम आसीत् तस्यैतच्छरीरं यद् गिरयो यदश्मानस्तदेषोशाना ( °दैषौशान्या [काश.] ) नामौषधिर्जायत ऽ इति ह स्माह श्वेतकेतुरौद्दालकिस्तामेतदाहृत्याभिषुण्वन्तीति । काश ४,४,३,११; माश ३,४,३,१३ ।
३७. ( हे सोम ) पञ्चमुखोऽसि ······ (१) ब्राह्मणस्त एकं मुखं ··· (२) राजा त एकं मुखं··· (३) श्येनस्त एकं मुखं ···(४) अग्निष्ट एकं मुखं··· (५) त्वै ··· पञ्चमुखं (त्वयि पञ्चमं मुखं [कौउ.]) तेन मुखेन सर्वाणि भूतान्यत्सि । शांआ ४, ९; कौउ २,९ ।

३८. पय एव सोमः । काठ २७, ४ ।
३९. पशवो वै सोमः । तैसं ६, १, ९, ७; ४, ४, १ ।
४०. प्रच्यवस्व भुवस्पत ऽ इति भुवनाना ँ ह्येष ( सोमः ) पतिः । माश ३, ३, ४, १४ ।
४१. ब्राह्मणानां स ( सोमः ) भक्षः । ऐ ७, २९ ।
४२. यत्र वा अदश्छन्दा ँ सि सोममाहर ँ स्तानि तमसा न प्राजान ँ स्ततो गाय ३ य्यजामादायोदपतत्, सा वा एभ्यः प्रारोचयत्, ततो वै छन्दा ँ सि सोममाहरन्। मै ३, ७, ७ ।
४३. यत् सोमं पितृमन्तं यजति सोमपा ँ स्तत् पितॄन् यजति । मै १, १०,१८; काठ ३६, १३ ।
४४. यदब्रवीत् सो वै म एषेति, तस्मात् सोमो नाम । काश ४, ९, ४, १८ ।
४५. यदि सोमं न विन्देयुः पूतीकानभिषुणुयुर्यदि न पूतीकानर्ज्जुनानि । तां ९, ५, ३ ।
४६. यदु सोमो राजापश्यत्तस्मात् सोमसामेत्याख्यायते । जै ३, १५ ।
४७. यद् द्वादशे ऽ हन् प्रवृज्यते सोमो भूत्वा सुत्यामेति । तैआ ५,१२, ३ ।
४८. यातयामा वा एतस्य देवताश्च ब्रह्म च यः सोमेन यजते । क ४५, ५ ।
४९. रसः सोमः । माश ७, ३, १, ३ ।
५०. राजा वै सोमः । माश १४, १, ३, १२ ।
५१. रोहिण्या पिङ्गलयैकहायन्या सोमं क्रीणीयात् । तैसं ७, १, ६, २ ।
५२. शोभन ँ ह्येतस्य ( सोमस्य ) वासः । माश ३, ३, २, ३ ।
५३. शीर्ष्णा हि सोमं क्रीतं हरन्ति । मै ३,७,८ ।
५४. स (सोमः) एतत् (सोम) सामापश्यत् तेनास्तुत ततो वै स सर्वेषां देवानां राज्यायासूयत । जै ३,१५ ।
५५. स एष यज्ञानां संपन्नतमो यत्सोम एतस्मिन्ह्येताः पञ्चविधा अधिगम्यन्ते यत्प्राक्सवनेभ्यः सैका विधा, त्रीणि सवनानि, यदूर्ध्वं सा पञ्चमी । ऐआ २,३,३ ।
५६. सत्यं श्रीर्ज्योतिः सोमः । माश ५,१,२,१०; ५,२८ ।
५७. स (सोमः) प्रजापता अनाथत, सोऽब्रवीत्—'सर्वेष्वेव (नक्षत्रेषु) समावद् वसाथ त्वातो मोक्ष्यामी'ति तं वैश्वदेवेन चरुणामावस्यां रात्रीमयाजयत् तेनैनं यक्ष्मादमुञ्चत्। काठ ११,३ ।
५८. स यत्पशुमालभते रसमेवास्मिन्नेतद्दधाति अथ यत् सवनैः पुरोडाशैः प्रचरति मेधमेवास्मिन्नेतद् दधाति तथो हास्यैष सोम एव भवति । माश ४, २, ५,१५-१६ ।
५९. स यदाह स्वरो ऽसीति सोमं वा एतदाहैष ह वै सूर्यो भूत्वाऽमुष्मिंल्लोके स्वरति तद्यत्स्वरति तस्मात्स्वरस्तत्स्वरस्य स्वरत्वम् । गो १,५,१४ ।
६०. सर्वदेवत्यो वै सोमः । काठ २७,१; क ४२ १ ।
६१. स (सोमः) वै यशस्वितमः । मै २,१,४ ।
६२. स सोमो ऽब्रवीन्मम वा अकृष्टपच्यमिति । मै २,२,४ ।
६३. सुवाङ्नभ्राडङ्गारे बम्भारा इत्येते वै देवाना ँ सोमरक्षयः, एतेभ्यो वा अधि छन्दा ँ सि सोममाहरन् । मै ३,७,७ ।
६४. सोऽब्रवीद् (सोमः) वल्गु साम्नो वृणे प्रियमिति । जैउ १,१६,२,१० ।
६५. सोमं यजति रेत एव तद् दधाति । तैसं २,६,१०,३ ।

६६. ...सोमः...इन्द्रस्य युज्यः सखा । तैसं १,८,२१,१ ।
६७. सोम उन्नेता । जै ३, ३७४ ।
६८. सोम एव सम्रृत इति । गो २,२,२४ ।
६९. सोम वीरुधां पते । तै ३,११,४,१ ।
७०. सोमः (उपसद्देवतारूपाया इषोः) शल्यः । ऐ १,२५ ।
७१. सोमस्य तृतीया । तैसं ५,७,२१,१ । काठ ५३,११ ।
७२. सोमस्य त्वा द्युम्नेनाभिषिञ्चामीति । माश ५,४,२,२ ।
७३. सोमस्य राज्ञः कुलङ्गः । तैसं ५,५,११,१ ।
७४. सोमस्य वा अभिपूयमाणस्य प्रिया तनूरुदक्रामत् तत्सुवर्णꣳ हिरण्यमभवत् । तै १,४,७,४-५
७५. सोमस्य वा एताः प्रियास्तन्वो यत्सामानि । काठसंक ११ : २-३ ।
७६. सोमस्य समिदसि परस्पा स एधि । क ४,८ ।
७७. सोमः सर्वा देवताः । ऐ २,३ ।
७८. सोमः स्वस्त्या (सह मा पुनातु) । तै १,४,८,६; काठसंक ९६: ६ ।
७९. सोमाय पितृमत आज्यम् । क ८,९ ।
८०. सोमाय पितृमते पुरोडाशꣳ षट्कपालं निर्वपति । तैसं १,८,५,१ ।
८१. सोमाय राज्ञे कुलुङ्गः । काठ ४७,१ ।
८२. सोमाय राज्ञे त्रयस्सारङ्गाः । काठ ४९,९ ।
८३. सोमाय स्वराज्ञेऽनोवाहा अनड्वाहौ । काठ ५०, १ ।
८४. सोमाय हꣳसानालभते । मै ३,१४,३ ।
८५. सोमायोदेहि...... । सा बभ्रुः पिङ्गाक्ष्युदैत्......सैषा सोमक्रयणी । जै २,२५० ।
८६. सोमेन प्रतीचीं ( देवा दिशं प्राजानन् ) । तैसं ६, १,५,२; ऐ १, ७ ।
८७. सोमोऽन्नम् । काठ १३,१२ ।
८८. सोमोऽभिकीर्यमाणः (प्रवर्ग्यः) । तैआ ५,११,४ ।
८९. सोमो राजा राजपतिः । तै २, ५, ७, ३ ।
९०. सोमो (श्रियः) राज्यम् (आदत्त) । माश ११,४,३,३ ।
९१. सोमो रुद्रैरभिरक्षतु त्मना । मै ४, १२, २; काठ १०, १२ ।
९२. सोमो वनस्पतीनाम् ( सुवताम् ) । तै १, ८, १०, १ ।
९३. सोमो वा अकृष्टपच्यस्य राजा । तै १, ६, १, ११ ।
९४. सोमो विश्ववनिः । तैसं २, ४, ५, २ ।
९५. सोमो वै देवानां चित्रम् । सोमो वै देवानां चित्रेण बहुर्भवति प्रजायते । जै १,९१ ।
९६. सोमो वै देवानां जनिमा । जै ३, १७४ ।
९७. सोमो वै वाजस्तस्य चन्द्रमास्तृतीयमयꣳ यः ( वायुः ) पवते स तृतीयꣳ येन यजन्ते स तृतीयम् । मै ४, ५, ४ ।
९८. सोमो ह वै राजा बृहस्पतिꣳ स्वं पुरोहितं जिज्यौ तस्मा उ ह पुनर्ददौ, तां प्रायश्चित्तिं चक्रे, तस्मिन् पुनर्दद्रुष्येनः पर्येव शिशिषे यदीन्नूनं ब्रह्माभिदध्यं ज्यानाय, स यदेव तदेनो

ऽकरोत्तदेवास्यैतत्पवित्रेण पवयन्ति, स पूत एव मेध्यो देवाना९ हविर्भवति। काश ५, १, २, ३ (तु. माश ४,१,३,४-५)।

९९. सोमो हि यशः। तै २, २, ८, ८।

१००. स्वा वै म ऽ एषेति तस्मात्सोमो नाम। माश ३,९,४,२२ ॥ [°म- अकृष्टपच्य-; अग्नि-६०६; ७०९; ७६४; अदाभ्य- ४; अदिति- १९; अद्रि- ४; अन्तरिक्षदेवत्य- २; अन्तर्यामपात्र- ४; अन्धस्- २; अन्न- ५१; ६१;६२; ७८;११६; अन्नाद्य- ९;१७; अप्- ३९;१३१; अप्सरस्- ११; अमृत- २१; २८; ३३; अमृतत्व- ३; अरुणदूर्वा-; अर्जुन- १; ३; अश्व- ८५; १०३; अश्विन्- १; २; आदित्य- १६४; आमयाविन्- २०; आशीविष-; इन्दु- २; ३; इन्द्र- ११९; ३२४; ३३५; ३६४; इन्द्रिय- ८; उत्तरतस् १५; उदर- २; उदीचीनदश-; उद्गीथ- ४; ऊर्ज्- १०; ऊर्ध्व,र्ध्वा- ९; ऋतु- ३०;७९; ऐन्द्र- २६; ओषधि- २४;२५;३५; ११६-११८; कपिञ्जल- ५; किल्विषस्पृत्-; कुलङ्ग- २; क्लैब्य- २; क्षत्र- २९; क्षेत्रपति-; गन्ध- ४; ५; गय- २; गायत्री- ६१; ६९; ८१; १०५; गो- ६८; ग्रावन्- २; घृत- १०; चक्षुस्- ६३; चतुर्होतृ- ३२; चतुष्पद्-; चन्द्र- ३; चन्द्रमस्- १४; १८; २९; ४८; ५९;६४; ७२; १०१; छन्दस्- २; २१; ज्योतिस्- २६; दक्षिण,णा- २९; ५२; दक्षिणार्ध- १; दधि- २०; दिश्- ७४; ७५; दीक्षा- ७; २०; देव- ८; ४२;१४२; २७०;२७२;२७९; द्यावापृथिवी- २४; द्युम्न- ३; धिष्ण्य- ३; नक्षत्र- ९; न्यग्रोध- ८; न्यग्रोधतति-; पयस्- ४;८;९;१७;३१; पर्ण-५;११; पलाश- ६; पवमान-३५; पशु- १२२;१९९;२०६;३४३; पशुकाम- ४; पितृ- ४९;५०;१२४; पितृदेवत्य- ६; पितृमत्- २;३; पितृलोक- ८; ९; पुष्टिवर्धन-; पूर्णमास- ७; पृथिवी- ७०; प्रजनन- १४; प्रजा- ५२;१०४; प्रजापति- १६६; १९९;२०५;३००; प्रतीची- ८; १५;३४; प्राजापत्य- १९; प्राण- १०३;२०८;२२६; फाल्गुन- २; बभ्रु- २;१०; ब्रह्मन्- ७०; ब्रह्मवर्चस- ६; १२; ब्राह्मण- १४; ५१; ६१;७४; ७९;८०; भद्रा-; भ्राज्-; मित्र- ४; मृगशीर्ष- २;३; यजमान- ८; यज्ञ- १०२; १२८; १३५; यशस्- ३;४; १२; १३; रयि- ४; रस- ३; राजयक्ष्म- २; ७; रात्रि- ३८; राधस्-; रुद्र- ८१; ८२; रुद्रवत्- १; २; रुद्रिय,या- २; रेतस्- ३२;३७; ४६-४८; रेतोधा- २; ३; रोहिणी- १२; लव-; वनस्पति- ८;१९-२१; वर्चस्- १; वाच्- १३६; वाज- ६; वाजपेय- ११; वाजिन्- १०; वायु- ४९; वारुणा- २५; वासस्- १२; विचक्षण- १;२; विष्णु- ८;११;२९; वृत्र- १९;२५; वृत्रहन्- ४; वृषन्- ४; १२; वैराज- ५; वैष्णव- २; १३; शाद्-; शुक्र- १०; ११; श्यामाक- १; ३; ४; ८; श्येन- ६; श्रद्धा- ५; श्री- १७; संवत्सर- ८५; ८६; सभासाह-; सम्राज्- ६; सर्व- १७; सवितृ- २; सान्नाय- ८; ९; सामदेवत्य-; सुभू-; सुरा- ९ द्र. ]।

सोम-क्रयण- स्वान भ्राजाङ्घारे (स्वानभ्राडङ्घारे [काठ.]) बम्भारे हस्त सुहस्त कृशानवेते (कृशान एते [काठ.]) वः सोमक्रयणास्तान् रक्षध्वं मा वो दभन्। काठ २,६; क १,१९।

सोमक्रयणी (गो-)-

१. अधिकर्णी सोमक्रयणी भवति··· अधिकर्ण्या सोमं क्रीणन्ति। जै १, १९९।

२. यारुणा बभ्रुलोम्नी श्वेतोपकाशा शुन्ध्यदक्षी तत् सोमक्रयण्या रूपम्। मै ३,७,४।

३. वाग्वा एषा यत् सोमक्रयणी। तैसं ६, १, ७, ४।

४. सा बभ्रुः पिङ्गाक्षी (गौः) उदैत्······ सैषा सोमक्रयणी। जै २,२५०।

५. सा या बभ्रुः ) पिङ्गाक्षी (गौः) सा सोमक्रयणी। माश ३, ३, १, १४ ॥ [°णी- इडा- ६; पूषन्- ३०; वाच्- ३१;१०३ द्र.]।

**सोम-ग्रह**- देवलोक- १०; पत्नी- ४ द्र.।

**सोमदेवत्य**- सोमदेवत्यं वै साम। काठ २९, २; क ४५, ३।

**सोम-नेत्र**- ये देवा उपरिषदो ऽवस्वद्भन्तः। सोमनेत्रा रक्षोहणस्ते नोऽवन्तु। मै २, ६, ३।

**सोम-पा**-

१. ईश्वरा ब्राह्मणाः सोमपाश्चक्षुषापहन्तोः। मै ४, ८, २।

२. सोमपावा एते ब्राह्मणास्तेषां तेजस्वीनि चक्षूंषि। काठ २८,४; क ४४,४॥ [°पा- ब्रह्मन्- ६४ द्र.]।

**सोम-पान**- कपिञ्जल- ५ द्र.।

**सोम-पीथ**-

१. सोमपीथ इव ह वा अस्य स भवति य एवं विद्वान् स्त्रियै मुखमुपजिघ्रति। जै १,२२०।

२. सोमो नानुपहूतेन पेयः (पातवै [काठ.]), सोमपीथेन (+ह [मै.]) व्यर्धुको भवति। मै २, ४,१; काठ ११,१॥ [°थ- अन्नाद्य- ६; आश्विन- १५; इन्द्रिय- ७; १०; करीर- ६; ब्राह्मण- ६९; श्यामाक- ९; सदस्य-; सान्नाय्य- ६ द्र.]।

**सोम-प्रतीक**- पितृ- १२२ द्र.। **सोम-भृत्**- गायत्री- ४४; श्येन- ७ द्र.।

**सोम-याजिन्**- संवत्सरे संवत्सरे सोमयाजी (अश्नाति)। माश १०, १, ५, ४।

**सोम-रस**- ऊर्ग्वै सोमरसः। क ४२,२।

**सोम-राजन्**- आग्नेय- २१; ब्राह्मण- ७८ द्र.। **सोम-राज्य**- उक्थ्य- १२ द्र.।

**सोम-राज्ञी**- ओषधि- ७१ द्र.।

**सोम-वामिन्**-

१. तस्माद् उ ह सोमवामिनं वा सोमातिपवितं वा न परिचक्षीत। इन्द्रो ह्य् अपि तथास। जै २,१५७।

२. स यो वाऽअलं भूत्यै सन्भूतिं न प्राप्नोति यो वालं पशुभ्यः सन्पशून्न विन्दते स सोमवामी। माश १२,७,२,२।

**सोम-विक्रयिन्**-

१. अस्मे ज्योतिः, सोमविक्रयिणि तमः। तैसं १,२,७,१; ६,१,१०,४।

२. सोमविक्रयी क्षोधुकः। तैसं ६,१,९,२; क ३७,३।

३. सोमविक्रयी न पुष्यति। काठ २४,६; क ३७,७।

**सोम-सामन्**- यथा वा इमा अन्या ओषधय एवं सोम आसीत् स तपोऽतप्यत, स एतत् सोमसामापश्यत्तेन राज्यमाधिपत्यमगच्छद्यशोऽभवद्राज्यमाधिपत्यङ्गच्छति यशो भवति सोमसाम्ना तुष्टुवानः। तां ११, ३,९॥ [°मन्- क्षत्र- ४२ द्र.]।

**सोमांऽशु**- एते सोमांशवः प्राणोंऽशुर्यमेतमभिषुण्वन्ति तृप्तोंऽशुरापो रसोंऽशुर्व्रीहिर्वृषोंऽशुर्यवः

शुक्रोंऽशुः पयो जीवोंऽशुः पशुरमृतोंऽशुर्हिरण्यमृगंशुर्यजुरंशुः सामांशुरित्येते वा उ दश सोमांशवो यदा वा एते सर्वे संगच्छन्तेऽथ सोमोऽथ सुतः । कौ १३, ४ ।

सोमा-पूषन्- सोमापूषणा जनना रयीणां जनना दिवो, जनना पृथिव्याः जातौ विश्वस्य भुवनस्य गोपौ । तैसं १,८,२२,५-६ ।

सौमापौष्ण-

१. सौमापौष्ण एकादशकपालः । मै २,६,४ ।

२. सौमापौष्णं चरुं निर्वपति । तैसं १,८,८,१ ।

३. सौमापौष्णं त्रैतमालभेत पशुकामः…सोमो वै रेतोधाः, पूषा पशूनां प्रजनयिता । तैसं २,१,१,६ ।

४. सौमापौष्णाश्श्यामललामास्तूपराः । काठ ४९, ३ । [ °ष्ण- गार्मुत- १; ३; दुश्चर्मन्- २ द्र.] ।

सोमा-रुद्र-

१. सोमारुद्रा धारयेथाम् असुर्यं प्र वामिष्टयोऽरमश्नुवन्तु… दमेदमे सप्त रत्ना दधाना… मै ४,११,२ ।

२ सोमारुद्रा वि वृहतं विषूचीममीवा या नो गयमाविवेश । तैसं १, ८,२२,५; मै ४,११,२; काठ ११,१२ ॥ [ °द्र- भेषज- ३ द्र.] ।

सोमारौद्र- सोमारौद्रं चरुं निर्वपेज्ज्योगामयावी । तैसं २, २,१०,४ । [ °द्र- अभि√चर् १४; प्रजाकाम- ३; ब्रह्मवर्चसकाम- १ द्र. ] ।

सौमारौद्र- सौमारौद्रं घृते चरुं निर्वपेच्छुक्लानां व्रीहीणां ब्रह्मवर्चसकामः, स्वर्भानुर्वा आसुरः सूर्यं तमसाऽविध्यत् त९सौमारौद्रा अभिषज्यतां, तस्य वा एतेनैव तमोऽपाहतामेतेनास्मि९स्तेजोऽधत्ताम् । मै २, १,५ ।

सोमाऽऽहुति-

१. एषा केवली यत्सोमाहुतिः । माश १,७,२,१० ।

२. एषो ह परमाहुतिर्यत्सोमाहुतिः । माश ६,६,३,७ ।

३. सोमाहुतयो ह वाऽएता देवानां यत्सामानि । माश ११,५,६,६ ।

सोमेन्द्र- (प्रजापतिः) तस्मा (इन्द्राय) एतं९सोमेन्द्र९श्यामाकं चरुं निरवपत्, तेनैवास्मिन्निन्द्रिय९सोमपीथमदधात् । तैसं २,३,२,६ ।

सौमेन्द्र- सौमेन्द्रा बभ्रुललामास्तूपराः । काठ ४९,५ ।

सोम्य- पितृ- २६ द्र. । सौमायन- बुध- २ द्र. ।

सौमी- अप्- ६७; ओषधि- १२०; पावमानी- ३; प्रजा- १०५; रेतस्वती- द्र. ।

सौम्य-

१. अर्धमेव कृत्स्ना देवयज्या यत्सौम्योऽध्वरः । कौ १०,६ ।

२. तस्माद्ब्राह्मणस्तद्दक्षिणः सौम्योऽध्वरः स्यात् । माश ४,३,४,३ ।

३. पवित्रं वै सौम्यः । तैसं ६,६,७,२ ।

४. बभ्रवः सौम्याः । मै ३,१३,१० ।

५. यच्छ्यामाकास्तेन सौम्यः । काठ १०,२ ।
६. यत्पूतीकैर्वा पर्णवल्कैर्वाऽऽतञ्च्यात् सौम्यं तत् । तैसं २,५,३,५ ।
७. यद्वाऽआर्द्रं यज्ञस्य तत्सौम्यम् । माश ३,२,३,१० ।
८. रोहितो धूम्ररोहितः कर्कन्धुरोहितस्ते सौम्याः । मै ३,१३,३ ।
९. सर्वेभ्यो हि कामेभ्यस्सौम्योऽध्वरः प्रयुज्यते । काठ १२,३ ।
१०. स हि सौम्यो यद्बभ्रुः (गौः) । माश ५,२,५,१२ ।
११. सौम्यं दुग्धम् (पयः) । मै १,८,१० ।
१२. सौम्यश्चतुष्कपालः (पुरोडाशः) । तां २१,१०,२३ ।
१३. सौम्यश्चरुः । तैसं ७,५,२१,१; मै १,१०,१ ।
१४. सौम्यश्श्यामाकश्चरुर्बभ्रुः पिङ्गलो दक्षिणा । काठ १५,१ ।
१५. सौम्या ओषधयः । माश १२,१,१,२ ।
१६. सौम्यास्त्रयः पिशङ्गाः । काठ ४९, ९ ।
१७. सौम्यास्त्रयश्शितिङ्गाः । काठ ४९, ५ ।
१८. सौम्यो हि ब्राह्मणः । तै २, ७, ३, १ ।
१९. स्वर्गाय (+लोकाय [मै.]) कं सौम्योऽध्वर इज्यते । मै १, ९, ५; काठ ९, १३ । [°म्य- अन्न- १९०; आग्नेय- ३५; ४४; ४५; आत्मन्- ८०; ऋषभ- १९; करीर- ७; चन्द्रमस्- ६६; पुरुष- ११८; प्रजा- १०६; बभ्रु- ६; ११; १२; ब्रह्मवर्चस- ८; ब्राह्मण- ८१; मधु- २५; राजन्य- २६; राज्य- ९; वासस्- १३; वृष्टि- ४३; श्यामाक- १०;११; सप्तहोतृ- ९; १० द्र. ] ।

**सौत्रामणी** (इष्टि-)-

१. (सौत्रामण्या) ज्योगामयाविनं याजयेत् । मै २, ४, १ ।
२. तावश्विनौ च सरस्वती च इन्द्रियं वीर्यं नमुचेराहृत्य तदस्मिन्पुनरदधुस्तं पाप्मनोऽत्रायन्त सुत्रातं बतैनं पाप्मनोऽत्रास्महीति तद्वाव सौत्रामण्यभवत्, तत् सौत्रामण्यै सौत्रामणीत्वम् । माश १२,७,१,१४ ।
३. ते देवा अब्रुवन् । सुत्रातं बतैनमत्रासतामिति तस्मात्सौत्रामणी नाम । माश ५,५,४, १२ ।
४. देवसृष्टो वाऽ एषेष्टिर्यत्सौत्रामणी । माश ५, ५, ४, १४ ।
५. पवित्रं वै सौत्रामणी । माश १२, ८, १, ८ ।
६. यदधस्तात् (सोमोऽमुच्यत) सा सौत्रामणी । काठ १२,१० ।
७. सोमेनातिपुपुवानं (सौत्रामण्या) याजयेद्, इन्द्रियेण वा एष वीर्येण व्यृध्यते यं सोमोऽतिपवते, यावदेवेन्द्रियं वीर्यं तदस्मिन्नाप्त्वा दधाति । मै २, ४, १ ।
८. सोमो वै सौत्रामणी । माश १२,७,२,१२ ॥ [°णी- ऐन्द्र- ३९; पशुबन्ध- १; ब्राह्मणयज्ञ-, भ्रातृव्यवत्- ३; सुरावत्- द्र.] ।

**सौपर्ण-** सुपर्ण- द्र. ।

**सौभर** (सामन्-)-

१. ता (प्रजाः) अब्रुवन् सुभृतन्नोऽभार्षीरिति तस्मात्सौभरम् । तां ८, ८, १६ ।

२. यः स्वर्गकामः स्याद्यः प्रतिष्ठाकामः सौभरेण स्तुवीत प्र स्वर्गं लोकं जानाति प्रतितिष्ठति। तां ८, ८, १३ ।

३. यो वृष्टिकामः स्याद्योऽन्नाद्यकामो यः स्वर्गकामः सौभरेण स्तुवीत । तां ८, ८, १८ ।

४. स (प्रजापतिः) अब्रवीत् सुभृतं वा इमाः प्रजा अभार्षम् इति । तदेव सौभरस्य सौभरत्वम् । जै १,१८७ ।

५. सर्वे वै कामाः ( सर्वकामसाधनं ) सौभरम् । तां ८, ८, २० ।

६. सौभरं प्रजाकामः कुर्वीत, ··· सौभरम् अन्नाद्यकामः कुर्वीत, सौभरं वृष्टिकामः कुर्वीत, सौभरम् ऊर्द्धहणकामः कुर्वीत,··· सौभरं स्वर्गकामः कुर्वीत। जै १, १८६ ॥ [°र- बृहत्- २६; २८; ५४ द्र.] ।

**सौमापौष्ण-**; सौमारौद्र- सोम- द्र. । **सौमित्र-** सुमित्र- द्र. । **सौमी-** सोम- द्र. ।

**सौमेध** ( सामन्- )-

१. ते ( देवाः ) अब्रुवन् सुमेध्या वा अभूमेति । तदेव सौमेधस्य सौमेधत्वम् । जै १, २२७ ।

२. योगेयोगे तवस्तरमिति सौमेध ९ रात्रिषाम रात्रेरेव समृद्धयै । तां ९, २, २० ।

**सौमेन्द्र-**, सौम्य- सोम- द्र. । **सौरी-**, सौर्य- प्रभृ. सूर्य- द्र. । **सौश्रवस-** सुश्रवस्- द्र. ।

**सौहविष** (सामन्-)-

१. ते ( देवाः) अब्रुवन् सुहविषो वा अभूमेति । तदेव सौहविषस्य सौहविषत्वम् । जै ३,१९६ ।

२. यज्ञायज्ञीयनिधन ९ सौहविषं भवति। तां १५,११,१० ।

३. सौहविषं भवति । सुहविर्वा आङ्गिरसोऽञ्जसा स्वर्गं लोकमपश्यत् स्वर्गस्य लोकस्यानुख्यात्यै स्वर्गाल्लोकान्न च्यवते तुष्टुवानः । तां १४,५,२५ ।

**सौहार्द्य-** तनूधस्- द्र. ।

**स्कन्न-भाग-** एते (भूपतिः, भुवनपतिः, भूतानां पतिः) वै देवा स्कन्नभागाः । क ३९,५ ।

**स्कन्नाऽऽहुति-** अथ यस्याज्यमुत्पूतं स्कन्दति सा स्कन्नानामाहुतिः । ष ४,१ ।

**स्तन-**

१. यद्( अन्नाद्यम् ) अभ्यस्तनयत् तत् स्तनयो स्तनत्वम् । जै २,२२८ ।

२. यद्( अश्वो मेध्यः ) विधूनुते तत् स्तनयति । तैसं ७, ५, २५, २ ॥ [°न- इन्द्र- ४०७; उपरव- ४; ऋतुपात्र- ३; ४; पुरुष- ४१ द्र.] ।

**स्तनयित्नु-**

१. स्तनयित्नुं निर्बाधेन । तैसं ५,७,१२,१; मै ३,१५,२; काठ ५३,२ ।

२. स्तनयित्नौ शब्दः । शांआ ६,२; कौउ ४.२ ॥ [°त्नु- अग्नि- ७६५; अशनि- २; उद्गीथ- १७; दिव्- १५५; बृहत्- ५२; वषट्कार- १४; वाच्- १४०; सवितृ- ५६; सावित्री- ५ द्र.] ।

**स्तव-** प्राणा वै स्तवः । कौ ८, ३ ।

**स्तावा** (अप्सरस्-)- दक्षिणा वै स्तावा दक्षिणाभिर्हि यज्ञ स्तूयतेऽथो यो वै कश्च दक्षिणां ददाति स्तूयतऽएव सः । माश ९,४,१,११ ।

**स्तुप**- प्रस्तर- १; शिखा- २ द्र.। **स्तूप**- रेष्मन्- द्र.।

**स्तेन**- मा व स्तेन ईशत माघश॑ंस इति मा वो नाष्ट्रा रक्षा॑ंसीशतेत्येवैतदाह। माश १,७,१,७।

**स्तोक**- द्रप्स- २; विश्वेदेव- ३१ द्र.। **स्तोतृ**- वायु- ८३ द्र.।

**स्तोत्र**- 'आशवः' इति स्तोत्रम् (असृजत् प्रजापतिः) तां ६,९,१५ (तु. जै १,९४)।
[°त्र- आत्मन्- ३७; क्षत्र- २९; देव- ३८; बृहस्पति- २३ द्र.]।

**स्तोत्रिय**- आत्मन्- ३७; ४८; पृथिवी- ७९; प्राण- २१०; मनस्- ५७; सामन्- ५३ द्र.।

**स्तोत्रियाऽनुरूप**- आत्मन्- ३८ द्र.। **स्तोभ**- अन्न- ८०; अहोरात्र- ४४ द्र.।

**स्तोम**-

१. अयुज स्तोमा वीर्यावत्तराः। जै ३,३००।
२. एते ह वै शिवाश्शान्ताः पथ्या स्तोमा ये ज्योतिर्गौरायुरिति। जै २,३४०।
३. किं नवमेनेति त्रिवृत ॅ स्तोममिति। तैसं ७,३,२,२।
४. छन्दांसि वै सर्वे स्तोमाः। जै १,३३२।
५. त्रिवृता स्तोमान् (अन्वाभवत्)। काठ ४३,४।
६. त्रिवृत्पञ्चदशः सप्तदश एकविंश एते वै स्तोमानां वीर्य्यवत्तमाः। तां ६,३,१५।
७. देवा वा आदित्यस्य स्वर्गाल्लोकादवपातादबिभयुस्तमेतैः स्तोमैः सप्तदशैरद ॅँ हन्यदेते स्तोमा भवन्त्यादित्यस्य धृत्यै। तां ४,५,९।
८. यस्य वा अग्निहोत्रे स्तोमो युज्यते स्वर्गमस्मै भवति, अयज्ञो वा एष यत्र स्तोमो न युज्यते। मै १,५,५।
९. वीरजननं वै स्तोमः। तां २१,९,३।
१०. वीर्यं वै स्तोमाः। तां २,५,४; ११,२।
११. स (प्रजापतिः) इन्द्रम् अब्रवीत् कथं न्व् अहम् इतः पुनरन्वाभवेयम् इति। किं खलु वै तेऽस्तीत्य् अब्रवीत्, स्तो न्वै म इमौ प्राणापानाव् इति। यत् स्तोम इत्य् अब्रवीत् तत् स्तोमस्य स्तोमत्वम्। स्तुवत एनं स्वा 'अयं न श्रेष्ठ इति' य एवं वेद। जै २,४०९ (तु. जै ३,३३४)।
१२. सप्तदशेन स्तोमाः। काठ ३५,१५।
१३. सप्त स्तोमाः। माश ९,५,२,८।
१४. सर्वं हीदं स्तोमा एव। जै २,३१४; ३२५।
१५. सोऽयं त्रिवृत् स्तोमश् चतुष्टोमं चतुर्दशं षोडशम् अष्टादशं नववशं पञ्चविंशं षट्त्रिंशम् इत्य् एतान् मृगस्तोमान् प्राजनयत्। जै ३,३२४.
१६. स्तोमा देवाः। जै १,९०।
१७. स्तोमा वै त्रयः स्वर्गा लोकाः। ऐ ४,१८।
१८. स्तोमा वै परमाः स्वर्गा लोकाः। ऐ ४,१८।
१९. स्तोमेन वै देवा अस्मिँल्लोक आर्ध्नुवन्। तैसं ५,२,१, ६॥ [°म- अन्न- ५२; अश्व- ३७; १०४; आत्मन्- ९२; आदित्य- ३४०; इन्द्र- २७०; ऋच्- १९; एकविंश- २१; गायत्री-

मात्र-; चतुष्टोम- ३; छन्दस्- ७९; ११६; तरस्- २; ३; त्रयस्त्रिंश- १; त्रिवृत्- १; ३१; देव- २०७; पशु- ३४४; प्राण- १४३; यजुस्- ३१; विदद्वसु-; सवितृ- ३४ द्र.]।

**स्तोम-पुरोग-** असुर- ८१ द्र.। **स्तोम-पुरोगव-** असुर- ८० द्र.।

**स्तोम-भाग-**

१. आदित्य स्तोमभागाः। माश ८,५,४,२।

२. प्रजापतिः प्रजा असृजत ताः स्तोमभागैर् एवासृजत, यदेत उपधीयन्ते, प्रजननाय। काठ २१,२।

३. बृहस्पतिर्वा एतां यज्ञस्य प्रतिष्ठामपश्यद्यत् स्तोमभागाः। तैसं ५,३,५,५।

४. यज्ञेन वै प्रजापतिः प्रजा असृजत, ताः स्तोमभागैरेवासृजत। तैसं ५,३,५,४।

५. स्तोमो वा एतेषां भागस्तत् स्तोमभागानाꣳ स्तोमभागत्वम्। काठ ३७,१७; गो २,२,१३।

६. हृदयꣳ(+वै [माश ८, ६,२,१५]) स्तोमभागाः। माश ८, ५, ४, ३॥ [°ग- तेजस्- २७ द्र.]।

**स्त्री-**

१. अतिरिक्तं वै पुंसो न्यूनं स्त्रियै। ऐआ १,४,२।

२ अनृतꣳस्त्री, अनृतꣳवा एषा करोति या पत्युः क्रीता सत्यथान्यैश्चरति, अनृतमेव निरवदाय ऋतꣳ(°दायर्तँ [काठ.]) सत्यमुपैति। मै १,१०,११; काठ ३६,५।

३. अवाचीनꣳ हि नाभ्याः स्त्रिया वीर्यवत्। मै ४,८,१।

४. अवीर्या वै स्त्री। माश २,५,२,३६।

५. उत्तरतआयतना हि स्त्री। माश ८,४,४,११।

६. उत्तरतो हि स्त्री पुमाꣳसमुपशेते। माश १,१,१,२०; २,५,२,१७; ४,४,२,१६।

७. उत्तानायाꣳ स्त्रियां पुमान् रेतस्सिञ्चत्यसा (°त्यसाव् [क.] द्यौः) अस्यां (पृथिव्यां) रेतस्सिञ्चतीयं (पृथिवी) प्रजनयति। काठ २०,६; क ३१,८।

८. ऋत्वियात् स्त्रियः प्रजां विन्दते काममाविजनितोः संभवन्ति, वारेवृतꣳह्यासां, (स्त्रियः) तृतीयं ब्रह्महत्यायै प्रत्यगृह्णन्तसा मलवद्वासा अभवत्। तैसं २,५,१,५।

९. एतद्वै पत्न्यै व्रतोपनयनम् (यद्योक्त्रेण संनहनम्)। तै ३,३,३,२।

१०. एवमेव हि स्त्री प्रथितेव। काठ २५,५।

११. करीराणि न स्त्रियै दद्यान्न शूद्रायासोमपीथ इव ह्येषः। काठ ११,१०।

१२. कर्म वाऽइन्द्रियं वीर्यं तदेतदुत्सन्नꣳ स्त्रीषु। माश १०,७,२,११।

१३. कल्याण्यः स्त्रियः पतिव्रताः······। जै २,२६६।

१४. तत् (रेतः) स्त्रिया आत्मभूयं गच्छति यथा स्वमङ्गं तथा। तस्मादेनां न हिनस्ति। सास्यैतमात्मानमत्रगतं भावयति सा भावयित्री भावयितव्या भवति। ऐ २,५; ऐउ ४, २।

१५. तद्वाऽएतत्स्त्रीणां कर्म यदूर्णासूत्रम्। माश १२,७,२,११।

१६. तस्मात्स्त्रियः पुꣳसोऽनुवर्त्मानो भावुकाः। माश १३,२,२,४।

१७. तस्मात्स्त्र्यन्तर्वत्नी हरिणी सती श्यावा भवति। तै २,३,८,१।

१८. तस्मादप्येतर्हि मोघसꣳहिता एव योषाः। माश ३,२,४,६।

१९. तस्मादिमा मानुष्यस्त्रियस्तिर इवैव पुꣳसो जिघत्सन्ति। माश १,९,२,१२।

२०. तस्माद् स्त्री दुर्हृदिनी वीव ग्लायति । जै ३,२३ ।
२१. तस्माद् स्त्री पु ऽसोपमन्त्रिता निपलाशमिवैव वदति । माश ३,२,१,२० ।
२२. तस्माद् स्त्री पु ऽसोपमन्त्रितारकादिवैवाग्रे ऽसूयति । माश ३,२,१,१९ ।
२३. तस्माद् स्त्री पुमा ऽस ऽस ऽस्कृते तिष्ठन्तमभ्यैति । माश ३,२,१,२२ ।
२४. तस्माद् स्त्री पुमा ऽस ऽ ह्वयत ऽएवोत्तमम् । माश ३,२,१,२१ ।
२५. तस्माद् स्त्र्यनुरात्रम्पत्याविच्छते । ऐ ३,२२ ।
२६. तस्माद्दक्षिणं भागं पुंसः स्त्र्यधिशेते । शांआ २,४ ।
२७. तस्माद्य एव नृत्यति यो गायति तस्मिन्नेवैता (स्त्रियः) निमिश्लतमा इव । माश ३, २,४,६ ।
२८. ता (स्त्रियः) अब्रुवन् वरं वृणामहा ऋत्वियात् प्रजां विन्दामहै, काममाविजनितोः सम्भवामेति, तस्मादृत्वियात्स्त्रियः प्रजां विन्दन्ते, काममाविजनितोः संभवन्ति, वारेवृत ऽ ह्यासाम् । तैसं २,५,१,५ ।
२९. दक्षिणतः पुमान् स्त्रियमुपशये । काठ २०,६; क ३१,८ ।
३०. नक्त ऽ स्त्री चन्द्रतरं वदति । काठ ३०,१ ।
३१. न विष्वञ्चं वियुयात् यद् विष्वञ्चं वियुयात् स्त्र्यस्य जायेत । तैसं २,६,५,४-५ ।
३२. न वै स्त्रियं घ्नन्ति । माश ११,४,३,२ ।
३३. न वै स्त्रैण ऽ सख्यमस्ति । माश ११,५,१,९ ।
३४. नैका (स्त्री) द्वौ पती विन्दते । तैसं ६,६,४,३ ।
३५. पतयो ह्येव स्त्रियै प्रतिष्ठा । माश २,६,२,१४ ।
३६. पुमा ऽसः सभां यन्ति, न स्त्रियः । मै ४,७,४ ।
३७. पुमान् वा असौ (द्यौः), स्त्रीयं (पृथिवी), यदा वा असौ वर्षत्यथेयं प्रजायते । जै १, ३३० ।
३८. यत्स्थाली ऽ रिञ्चन्ति न दारुमयं तस्मात्पुमान्दायादः स्त्र्यदायादथ यत्स्थालीं परास्यन्ति न दारुमयं तस्मात्स्त्रियं जातां परास्यन्ति न पुमा ऽ समथ स्त्रिय एवातिरिच्यन्ते । मै ४, ६, ४ (तु. काठ २०,९) ।
३९. यद्यपि बह्व्य इव स्त्रियः सार्धं यन्ति य एव तास्वपि कुमारक इव पुमान् भवति स एव तत्र प्रथम एत्यनूच्य इतराः । माश १,३,१,९ ।
४०. यद् वृष्ट्या यदन्या तेन स्त्री । ष १,२ ।
४१. यस्तूष्णी ऽ स्त्रियमुपैति मेध्यतरस्तेन भवति, हिंकृत्योपेयादेवमिव हि पशव उपयन्ति मेध्यत्वाय । मै १,८,७ ।
४२. स यदि स्त्रियं पश्येत् समृद्धं कर्मेति विद्यात् । शांआ ९,८ ।
४३. स होवाचोपेथ स्त्रिया ३ इत्युपेमो हीति, कस्मै कामायेति, प्रजायै संतत्या अव्यवच्छेदायेति । जै ३,२७० ।
४४. सुलापा वै दर्शनीयेन स्त्रियः । जै १,१६२ ।
४५. स्त्रियः पुंसो ऽतिरिक्तास्तस्मादुतैको बह्वीर्जाया विन्दते, नैका बहून् पतीन् । काठ २९, ८ ।
४६. स्त्रियः पु ऽसोऽतिरिच्यन्ते । मै ४,७,९ ।
४७. स्त्रियं जातां परास्यन्त्युत पुमा ऽस ऽ हरन्ति । तैसं ६,५,१०,३ ।

४८. स्त्रियो निरिन्द्रिया अदायादीः, अपि पापात् पुंस उपस्तितरं वदन्ति । तैसं ६,५,८,२-३ ।
४९. स्त्र्यस्खलतिर्भावुका । काठ २८,८; क ४४,८ ।
५०. स्त्र्यनुपेयमाना पुनर्गच्छति । काठ ११, ३ ॥ [स्त्री- २अक्ष-; अग्नि- ६३४; ७६५; अग्निचित्- १; अग्नीध्- १०; अनृत- ७; अमावास्या- १८; गायत्- १; त्रिष्टुभ्- ४२; दर्वि- १; निर्ऋति- १२; पुंस्- ३-६; ९; ११; १२; बृहत्- २०; वरुण्य- १; श्री- १०; संवत्सर- १८; सावित्री- ६; सोमपीथ- १ द्र.] ।

स्त्रीकामतम- श्रोत्रिय- द्र. । स्थाणु- यूप- १६ द्र. । स्थाली- पत्नी- १२ द्र. ।

स्थित- अन्तो वै स्थितम् । ऐ ५,१३;२० ।

स्थूर्- स्थूर् यवाचितमच्छावाकाय जै २,२०२ ॥ [स्थूर्- क्षेम- ३ द्र.] ।

स्थूल-हृदय- पशुपति- ६ द्र. ।

स्नुषा- तद्यथैवादः स्नुषा श्वशुराल्लज्जमाना निलीयमानैति । ऐ ३,२२ ।

स्पर (अहन्-)- स्परेर्वै देवा आदित्याय स्वर्गं लोकमस्पृण्वन् यदस्पृण्वंस्तत् स्पराणां स्परत्वम् । काठ ३३,६ (तु. तै १, २,४,३) ।

स्पर्श- अग्नि- २८७; पृथिवी- १४२ द्र. । स्पर्शरूप- अस्थि- ५ द्र. ।

स्पार्ह- आदित्य- ८०; क्षत्र- २५ द्र. ।

स्फ्य-

१. खादिर स्फ्यः । माश ३,६,२,१२ ।
२. तस्य (चतुर्धा विभक्तस्य वज्रस्य) स्फ्यस्तृतीयं (तृतीयोंऽशः) वा यावद्वा । माश १, २, ४,१
३. स यत्स्फ्यमादत्ते । यथैव तदिन्द्रो वृत्राय वज्रमुदयच्छदेवमेवैष एतं पाप्मने द्विषते भ्रातृव्याय वज्रमुद्यच्छति तस्माद्वै स्फ्यमादत्ते । माश १,२,४,३ ।
४. स्फ्येन परिलिखति । मै ४,७,९ ॥ [स्फ्य- वज्र- १९; ४१ द्र.] ।

स्योन-

१. स्योनः स्योनमिति शिवः शिवमित्येवैतदाह । माश ३,३,३,१० ।
२. स्योनामासीद सुषदामासीदेति शिवा शग्मामासीदेत्येवैतदाह । माश ५,४,४,४ ।

स्रक्ति- दिश्- ३६; ५३ द्र. । स्रज्- उद्गातृ- २४; २५; सौर्या- ६ द्र. ।

स्रुच्-

१. अरत्निमात्री स्रुग् भवति । काठ ६,१; क ३,१२ ।
२. आज्येन वै वज्रेण देवा वृत्रमघ्नन् स्रुग्भ्याम् बाहुभ्याम् । काठ २४,९ ।
३. घृतं वै देवा वज्रं कृत्वा सोममघ्नन्त्स्रुचौ बाहू । मै ३,८,२ ।
४. युजौ ह वाऽएते यज्ञस्य यत्स्रुचौ । माश १,८, ३, २७ ॥ [स्रुच्- गो- २६; घृताची- ४; चिति- १; २; बाहु- ९; भूर्ज-; यजमान- १५; योषा- १६; १७; वाच्- १०४; विराज्- ४१; विश्वाची- १ द्र.] ।

स्रुव-

१. वषट्कारेण स्रुवम् (युनक्ति) । मै ४,१,११; काठ ३१,१३ ।

२. स पालाशे वा स्रुवे वैकङ्कते वा । अपामार्गतण्डुलानादत्ते । माश ५,२, ४, १५ ॥ [°व- आदित्य- २७; औदुम्बर- ४; प्राण- ९६; १०४; योषा- १६; वायु- २०; वृषन्- ७ द्र.] ।

स्रोत्य- समुद्रः स्रोत्यानाम् (अधिपतिः) । तैसं ३,४,५,१ ।

स्व-

१. न हि स्वः स्व ँ हिनस्ति । तैसं ५,१,७,१; मै ३, १, ८; क ३०, ५ ।

२. स्वो वै स्वाय नाथिताय सुहृदयतमः । काठ ११,६ ॥ [स्व- ऊर्ज्- १२ द्र.] ।

स्वगा-कार- पूषन्- ३१; संवत्सर- ६१ द्र. ।

स्वज- इन्द्रो वै यतीन्त्सालावृकेयेभ्यः प्रायछत् तेषा ँ वा एष ब्रह्मचारी चमसाध्वर्युरासीद्योऽय ँ हरिणस्तस्य यः सोमपीथ आसीत्, स स्वजोऽभवत्, तस्माद्धरिणः स्वजं खादति······तस्माद्रो-हीतके रोहितके स्वजः । मै ३,९,३ ॥ [°ज- प्रतीची- १५; सहस्- २ द्र.] ।

स्वतवस्- स स्वतवद्भयः स्यात् स्वय ँ हि ते तं भागमकल्पयन्त (तं वै स्वतवोभ्य इति कुर्यात् । स्वय ँ हि त एतं भागमकुर्वत [माश.]) । काश १,४,३,१२; माश २,५,१,१४ ।

स्वधा- स्वधा पितॄणाम् । काठ २६,२; क ४०,५ ॥ [°धा- ऊर्ज्- २१; पितृ- १; ६२;१०२;१२८; रस- ८; वनस्पति- २२; वृष्टि- ४४; शरद्- १४ द्र.] ।

स्वधा-कार- पितृ- १२६; १२७ द्र. ।

स्वधिति-

१. वज्रः स्वधितिः । मै ३,९,६ ।

२. स्वधिते मैन ँ हि ँ सीः । तैसं १, २, १, १; काठ २, १; क १,१३; २,९ ॥ [°ति- वज्र- ४२ द्र. ।

स्वप्न-

१. तमो वा अन्धं स्वप्नः । काठसंक ८ : २ ।

२. तं (सुप्तं) नायतं ( न सहसा भृशं ) बोधयेदित्याहुर्दुर्भिषज्य ँ हास्मै भवति यमेष ( आत्मा ) न प्रतिपद्यते । माश १४, ७,१,१५ ।

३. तस्माद् ह स्वपन्तं धुरेव न बोधयेत् । माश १०, ५, २, १२ ।

४. तस्माद् हैतत्सुषुपुषः श्लेष्मणमिव मुखं भवति । माश १०,५,२,१२ ।

५. तौ ( योऽयं दक्षिणेऽक्षन्पुरुषो यश्च सव्येऽक्षन्पुरुषः ) हृदयस्याकाशं प्रत्यवेत्य । मिथुनीभव-तस्तौ यदा मिथुनस्यान्तं गच्छतोऽथ हैतत्पुरुषः स्वपिति । माश १०,५,२,११ ।

६. यदा स्वपिति प्राणमेव चक्षुरप्येति । जै २,५० ।

७. सगरो वज्रिणो नाम स्थ, तेषां वः पश्चाद् गृहाः, स्वप्नो व इषवः । तैसं ५,५,१०,४ ।

८. सुप्त्वोदकमाचामेत् । पाप्मानमेव तद्धते । जै २, ३७० ॥ [°प्न- २अक्ष-; अजगर- १; प्राण- २५०; प्राणापान- ३०; मृत्यु- १२; यम- २४ द्र.] ।

स्वयमातृण्णा (इष्टका-)-

१. इय ँ वै (पृथिवी) प्रथमा स्वयमातृण्णा, ऽन्तरिक्षं द्वितीया, ऽसौ (द्यौः) तृतीया । मै ३,२,६ ।

२. प्राणो वै प्रथमा स्वयमातृण्णा । व्यानो द्वितीयाऽपानस्तृतीया । तैसं ५, ५, ५, २ ॥ [°ण्णा- अन्तरिक्ष- ३३; अन्न- ५३; आयुस्- २५; दिव्- ४१; पृथिवी- ७१; प्राण- २११; लोक- १५ द्र.] ।

स्वयं-भू-

१. असौ वा आदित्यः स्वयंभूः श्रेष्ठो रश्मिः। मै ४,६,६।

२. यो भूतिकामः स्याद् य (अग्निः) उखायै संभवेत्स एव तस्य स्याद्।
अतो ह्येष संभवति, एष वै स्वयंभूर्नाम (अग्निः) भवत्येव। तैसं ५,१,९,४।

स्वर्, सुवर्

१. (प्रजापतिर्देवानब्रवीत्) अथ यदि सामतः (यज्ञोऽरेषं नीयात्) स्वस्स्वाहेति आहवनीये जुहवाथ। सैव तत्र प्रायश्चित्तिः। जै १,३५८।

२. अन्तो वै स्वः। ऐ ५,२०।

३. इमे वै लोकाः स्वः। काठ २६,२; क ४०,५।

४. उपक्षरन्ति मधुनो घृतस्य कुल्याः पूर्णास्सदमक्षीयमाणाः। तदग्निर्वैश्वकर्मणस्स्वर्देवेषु नो दधत्। काठ ४०,१३।

५. ज्योतिश्च मे सुवश्च मे (यज्ञेन कल्पताम्)। तैसं ४,७,१,१।

६. दिवस्स्वस्संततु। काठ ३९,८।

७. दिवो नाकस्य पृष्ठात् सुवर्ज्योतिरगामहम्। तैसं ४,६,५,१-२।

८. देवा वै स्वः। माश १, ९, ३, १४।

९. सप्तहोत्रा वै देवा स्वरायन्। मै १,९,५; काठ ९,१४।

१०. सुवरसि, सुवर्मे यच्छ, दिवं यच्छ। तैसं ५,७,६,२।

११. सुवरित्यसौ (द्यु-) लोकः। तैआ ७, ५, १; तैउ १,५,१।

१२. सुवरुदचं गतः (सोमः)। तैसं ४,४,९,२।

१३. स्वरिति व्याहृतिः। तदसौ लोकः, आदित्यो देवता, त्रिष्टुप् छन्दः, पञ्चदशस्तोमो, बृहत् सामादित्या देवता, चन्द्रमाश्च नक्षत्राणि च। जै ३, ८७।

१४. स्वरिति सामभ्योऽक्षरत् स्वः स्वर्गलोकोऽभवत्। ष १, ५।

१५. स्वर्गोलोक स्वर्। जै ३,६९ ॥ [स्वर्,सुवर् अमृत- ४२; ४६; आदित्य- ३८४; दिव्- ३१; १४४;१६९;१७७-१८०; पशु- ३४५; यजुस्-३०; यज्ञ- १२९; रोहिणी- ९; ज्योतिस्- ३६; विश्- ३२; व्यान- १७; सामन्- ६५; ६६; सामवेद- ५; ६ द्र.]।

स्वर-

१. अनन्तो वै स्वरः। तां १७,१२,३।

२. (देवाश्चर्षयश्च) तैर् (स्वरैर्) एनम् (आदित्यम्) अस्पृण्वन् यदस्पृण्वंस्तत् स्वराणां स्वरत्वम्। जै २, ३८६।

३. न्यूनो वै स्वरः। जै १, ३५६।

४. य आदित्यस्स्वर एव सः। जैउ ३,६,५,१।

५. यः कश्च गेष्णः स स्वरः। ऐआ २, ३, ६ ॥ [°र- अन्तरिक्ष- ९१; अहन्- ४२; आत्मन्- ३९; आदित्य- ९८; दिव्- ८१; देव- २७६; पशु- १२३; प्रजापति- १८२; प्राण-१०५; २१२; ब्रह्मवर्चस- ७; श्री- १८; सामन्- १०; ११; १२; सोम- ५९ द्र.]।

स्वर-रूप- मज्जन्- २ द्र.।

स्वर-वत्- तस्माद्यज्ञे स्वरवन्तं दिदृक्षन्तऽएव । माश १४,४,१,२७ ।

स्वर-सामन्-

१. इमान्वै लोकान्स्वरसामभिरस्पृण्वंस्तत्स्वरसाम्नां ( अहर्विशेषाणां ) स्वरसामत्वम् । ऐ ४ १९ ।

२. एतैर्ह वा अत्रय आदित्यं तमसाऽपस्पृण्वत तद्यदपस्पृण्वत तस्मात्स्वरसामानः । कौ २४,३ ।

३. त्रयः स्वरसामानो विश्वजिन्महाव्रतश्चातिरात्रश्च । ष ३,१२ ।

४. सप्तदशाः स्वरसामानो भवन्ति······प्रजापतिर्वै सप्तदशः । जै २,३८६ ।

५. स्वर्गो वै लोकः स्वरसाम । कौ १२,५ ।

६. स्वभानुर्वा आसुर आदित्यं तमसाऽविध्यत्तं देवाः स्वरैरस्पृण्वन् यत् स्वरसामानो भवन्त्यादित्यस्य स्पृत्यै तां ४, ५, २ ॥ [°मन्- अन्न- ८२; अप्- ७; ७४; पशु- १२३; पृष्ठ्य- ३; प्रजापति- १८३; प्राण- १४७; लोक- १२; विश्वेदेव- १६ द्र.] ।

स्वरान्त- स्वरान्तेन वै त्रियहेण प्रजापतिर्देवानसृजत । जै ३,३११ ।

स्वार-

१. तदेतदेकमेव साम स्वारमेव । य एवायं ( वायुः ) पवते तत्···स्वारं प्राणमुपजीवन्ति । जै १, ३०० ।

२. स्वारमन्त्यं भवति । जै १, ३०९ ॥ [°र- अग्नि- ७६१; आग्नेय- १३; प्राण- २०९; वामदेव्य- १७ द्र. ] ।

स्व-राज्-

१. इयं (पृथिवी) विराडसौ (द्यौः) स्वराट् । मै ३, २,६ ।

२. स्वराड् वै तच्छन्दो यत्किञ्च चतुस्त्रिंशदक्षरम् । कौ १७, १ ।

३. स्वराडस्यभिमातिहा । तैसं १, ३,२,१; क २,५ ॥ [ °राज्- अश्वमेध- ३०; उदीची- ३५; दिव्- ३५;४२;४४; देवलोक- २४; सूर्य- ४८ द्र.] ।

स्वाराज्य-

१. अथ यस्सप्तममह स्वाराज्यं स लोकः । जै २,३४८ ।

२. अथैतत्स्वाराज्यं यदनुष्टुप् । जै २, ९४ ।

३. एषो ह वै छन्दसां स्वाराज्यं लोकमानशे यदनुष्टुप् । जै २, ८६ ।

४. तद्वै स्वाराज्यं यस्यान्यो न व्यवेष्टि निविन्न प्रतिराजा । काश ७, २, २, १९ ॥ [°ज्य- अतिरात्र- १६; आदित्य- ९; १३७; १३८; एकविंश- २७; चतुस्त्रिंशिन्-; छन्दस्- ४७; दिव्- ७; प्रजापति- १६८; प्रतीची- ७; प्लक्ष- ७; बृहत्- ९; बृहती- १७; रुद्र- ४; वाजपेय- १२; वृत्रतुर्- १ द्र.] ।

स्वरु- एतस्माद् ( यूपात् ) वा ऽएषो ( शकलः ) ऽपछिद्यते तस्यैतत्स्वमेवारुर्भवति तस्मात्स्वरुर्नाम ॥ माश ३,७,१,२४ ॥ [°रु- वज्र- ४२ द्र. ] ।

स्वर्ग,सुवर्ग (लोकः )-

१. अग्निष्टोमसंमितो वै स्वर्गो लोकः । काठ ३३,४ ।

२. अतिरात्रेण वै देवाः ऊर्ध्वा स्वर्गं लोकमायन् । जै २,११० ।

३. अथ यत्परं भाः (सूर्यस्य) प्रजापतिर्वा स स्वर्गो वा लोकः। माश १,९,३,१० ।

४. अथ हैवंविदेव सुवर्गः। स हि सुवर्गच्छति। जै १,१८ ।

५. अनन्तं स्वर्गं लोकं जयति। जै १,२९३ ।

६. अन्तः स्वर्गो लोकानाम्। जै १, २२४ ।

७. अपरिमितो वै स्वर्गो लोकः। ऐ ६, २३; गो २,६,५; तै ३, ८, ६, २ (तु. तां १७,१२,३)।

८. अमृत ँ सुवर्गो लोकः। तै १, ३, ७, ७ ।

९. अवस्तात्प्रपदनो ह स्वर्गो लोकः। माश ८,६,१,२३ ।

१०. अष्टाचक्रा नवद्वारा देवानां पूर् अयोध्या। तस्यां हिरण्ययः कोशः स्वर्गो ज्योतिषाऽऽवृतः। तैआ १,२७,२-३ ।

११. असमायी वै स्वर्गो लोकः कश्चिद्वै स्वर्गे लोके शमयतीति (?समेतीति)। गो २, ६, १६ । (तु. ऐ ६, २६; ३६)।

१२. असंमितः ह्यसौ (स्वर्गो) लोकः। तां ९,८,१४ (तु. जै १,३४६)।

१३. असौ वै (स्वर्गो) लोको महा ँ सि। तस्यादित्या अधिपतयः। तै ३,८,१८,२ ।

१४. अहोरात्रयोर्हं वै परस्तात् स्वर्गो लोकः। जै २, ११० ।

१५. आहवनीयः स्वर्गो लोकः। मै १,१०,७ ।

१६. इमानेव (त्रीन्) लोका ँ स्तीर्त्वा सगृहः सपशुः सुवर्गं लोकमेति। तैसं ३, ५, ४, ३ ।

१७. इयवद्भिर् (सामभिर्) वै देवा स्वर्गं लोकमगच्छन्। जै २,११९ ।

१८. उपरीव (+हि [तैसं.]) सुवर्गो लोकः। तैसं २,६,५,३-४; तै ३,२,१,५; २, ९; ३, १२ ।

१९. ऊर्ध्वा वा एते स्वर्गं लोकं रोहन्ति ये यजन्ते। जै १,१७३ ।

२०. ऊर्ध्वा वै देवा स्वर्गं लोकमुदक्रामन्। जै ३,४० ।

२१. ऊर्ध्वो वै स्वर्गो लोकः। जै १,१११; २,१०९; १६२; २०४; ३२०; ३३३।

२२. एकधा वै सुवर्गो लोकः। तैसं ५,२,३,७।

२३. एकवृद्वै स्वर्गो लोकः। माश १३,२,१,५ ।

२४. एष वै स्वर्गो लोको यत्र पशु ँ संज्ञपयन्ति। माश १३,५,२,२ ।

२५. किंकामा आध्व इतीमगुपरिश्येनं स्वर्गं लोकं जिगीषाम, यस्मिन्नेतेऽथर्वाण इति। जै ३,२७० ।

२६. चतुश्चत्वारि ँ शदाश्वीनानि सरस्वत्या विनशनात् प्लक्षः प्रास्रवणस्तावदितः स्वर्गो लोकः सरस्वतीसंमितेनाध्वना स्वर्गं लोकं यन्ति। तां २५,१०,१६ ।

२७. जीवग्रहो वा एष यददाभ्योऽनभिषुतस्य गृह्णाति, जीवन्तमेवैन ँ स्वर्गं लोकं गमयति। तैसं ६,६,९,२-३ ।

२८. त आदित्या एतं पञ्चहोतारमपश्य ँ स्तं मनसानूद्द्रुत्याजुहवुस्तत आदित्यास्स्वर्गं लोकमायन्नपाङ्गिरसोऽभ्र ँ शन्त। काठ ९,१६ ।

२९. त (देवाः) एनं (ऋचामध्येतारं) तृप्तास्तर्पयन्ति योगक्षेमेण प्राणेन रेतसा सर्वात्मना सर्वाभिः पुण्याभिः संपद्भिर्घृतकुल्या मधुकुल्याः पितॄन्त्स्वधा अभिवहन्ति। माश ११,५,६,७

३०. तथा ह यजमानः, सर्वमायुरस्मिंल्लोक एत्याप्नोत्यमृतत्वमक्षितिं स्वर्गे लोके। कौ १३, ५; ९; १४,४।

३१. तदाहुः कियदित स्वर्गो लोक इति । यावत्सहस्रं गौर्गवि अधि प्रतिष्ठिता तावदिति ब्रूयात् । अथो यावत् सहस्रं प्राणैः सं प्राणन्तीत्य्, अथो यावत् सहस्रमाश्वीनानीत्यथो यावत् सहस्रं योजनानीत्यथो यावत् सहस्रमह्वयानीति । जै २, २५१ ।

३२. ता (इष्टकाः) एनं (यजमानं) कामदुघा अमुत्रामुष्मिँल्लोक उपतिष्ठन्ते । तैसं ५,४, २, ४ ।

३३. ताभ्याम् (चक्षूरूपाभ्यां दर्शपूर्णमासाभ्यां) सुवर्गं लोकमनु पश्यति । तैसं २,५,६,१ ।

३४. ता वा एताः पञ्च (इष्टयः) स्वर्गस्य लोकस्य द्वारः । अपाद्या अनुवित्तयो नाम । तपः प्रथमाꣳ रक्षति । श्रद्धा द्वितीयाम् । सत्यं तृतीयाम् । मनश्चतुर्थीम् । चरणं पञ्चमीम् । तै ३, १२, ४,७ ।

३५. ता वा एताः सप्त (इष्टयः) स्वर्गस्य लोकस्य द्वारः । दिवः श्येनयोऽनुवित्तयो नाम । आशा प्रथमाꣳ रक्षति । कामो द्वितीयाम् । ब्रह्म तृतीयाम् । यज्ञश्चतुर्थीम् । आपः पञ्चमीम् । अग्निर्बलिमान् षष्ठीम् । अनुवित्तिः सप्तमीम् । तै ३,१२,२,९ ।

३६. तिर इव वै सुवर्गो लोकः । तैसं २,५,११,६-७ ।

३७. ते देवा अनेन त्रयेण वेदेन यजमाना अप पाप्मानमघ्नत प्र स्वर्गं लोकमजानन् । जै १, ३५८ ।

३८. दश स्वर्गा लोकाः । गो २,६,२ ।

३९. देवा वा असुरैर्विजिग्याना ऊर्ध्वाः स्वर्गं लोकमायन् । ऐ ३, ४२ ।

४०. देवा वै यज्ञेन श्रमेण तपसाहुतिभिः स्वर्गं लोकमजयन् । ऐ २,१३ ।

४१. द्वादश मासास्संवत्सरस्स्वर्गो लोकः । काठ ३६,११ ।

४२. द्वादशाहेन वै देवा ऊर्ध्वा स्वर्गं लोकम् आयन् । जै ३,३०० ।

४३. नव वै स्वर्गा लोकाश्चतस्रो दिशश्चत्वारो ऽन्तर्देशा ऊर्ध्वा नवमी । काठ ३३,४ ।

४४. नव स्वर्गा लोकाः । ऐ ४,१६; तै १,२,२,१ ।

४५. नाकः षट्त्रिꣳशः......सुवर्गस्य लोकस्य समष्ट्यै । तैसं ५,३,३,५ ।

४६. पराङिव हि (वै [माश.]) सुवर्गो (स्वर्गो [माश.]) लोकः । तैसं ५,१, ८, ५; ६, ३, ४, १; माश १३,१,३,३ (तु. जै २,५; तां ९,८,६) ।

४७. परो वा अस्माल्लोकात्स्वर्गो लोकः । ऐ ६,२०; गो २, ६,२ ।

४८ पशुना वै देवाः सुवर्गं लोकमायन् । तैसं ६,३,१०,२ ।

४९. प्रतिकूलमिव हीतः सुवर्गो (स्वर्गो [तां.]) लोकः । तैसं ७, ५, ७, ४; काठ ३३, ७; तां ६, ७,१० (तु. जै १, ८५; ३, २९४) ।

५०. प्रतीपमिव वै स्वर्गो लोकः । जै २,२९८ ।

५१. प्राङ् ह वा उदङ् स्वर्गो लोकः । जै २,२९८ ।

५२. मधुनामुष्मिन् (स्वर्गे) लोक उपतिष्ठते । तां १३,४,१० ।

५३. माध्यन्दिनाद्वै सवनाद्देवाः स्वर्गं लोकमायꣳस्तेषामेत आक्रमास्संक्रमा यद्दक्षिणा, यद्दक्षिणा

५४. ददाति सेतुमेव कीर्त्वा स्वर्गं लोकमेति । काठ २८, ४ ।

५५. मुखत एव यजमानं प्रीणाति, अथो हविर्भूतमेवैनꣳ (यजमानं) स्वर्गं लोकं गमयति । क ३९,५ ।

५६. य (आनयः) ऊर्ध्वाश्रीयन्ते, तेऽमुष्मै (स्वर्गाय) लोकाय । काठ २१,४ ।

५७. य एवं वेद, ज्योतिषा भासा सुवर्गं लोकमेति । तैसं ७,२,९,२-३ ।

५८. य एवं वेद सशरीर एव स्वर्गं लोकमेति । तै ३,११,७,३ ।

५९. यत् कूर्ममुपदधाति, यथा क्षेत्रविदञ्जसा नयति, एवमेवैनं कूर्मः सुवर्गं लोकमञ्जसा नयति । तैसं ५,२,८,५ ।

६०. यदु ह वाऽएवंवित् तप तप्यतऽआ मैथुनात्सर्वं ँ हास्य तत्स्वर्गं लोकमभिसंभवति । माश १०,४,४,४ ।

६१. यदूर्ध्वस्तिष्ठन् हिरण्यशल्कैः प्रोक्षति तेनैवैनम् (अग्निम्) ऊर्ध्वं चिनुते स्वर्गस्य लोकस्य समष्ट्यै । काठ २१,४ ।

६२. यद्ददाति स्वर्गमेवैनं लोकं गमयति । क ४४,४ ।

६३. यत्र ह वै वाचो ऽन्तस्तत् स्वर्गो लोकः । जै २,२९८ ।

६४. यस्य वा अग्निहोत्रे स्तोमो युज्यते स्वर्गम् अस्मै भवति । मै १,५,५ ।

६५. यावद्वै सहस्रं गाव उत्तराधरा इत्याहुस्तावदस्मात् लोकात् स्वर्गो लोक इति तस्मादाहुः सहस्रयाजी वा इमान् लोकान् प्राप्नोति । तां १६,८, ६ ।

६६. यावद्वै सहस्रं तावदितोऽसौ (स्वर्गः) लोकः । मै ३,३,४; ४,५,३ ।

६७. यावन्त्यु ह वै बृहत्या अक्षराण्युष्णिक्ककुभोश्च तावदितः स्वर्गो लोकः । जै १,१३६ ।

६८. विश्वेदेवाः स्वर्गेण लोकेन (संहिताः) । ऐआ ३,१,६ ।

६९ सकृदिव हि सुवर्गो लोकः । तै १,६,३,६ ।

७०. सकृद्धीतोऽसौ (स्वर्गः) पराङ् लोकः । तां ६,८,१५ ।

७१. स (आदित्यः) एतं (शदं) यज्ञमपश्यत् । तमाहरत् । तेनायजत । ततो वै सोऽत्रशात्यैव सर्वं पाप्मानं स्वर्गं लोकमुदक्रामत् । स एषोऽपहतपाप्मा तपति । जै २, ८२ ।

७२. सन्तत इव वै स्वर्गो लोकः । जै १,८५ ।

७३. स यथा क्षिप्राश्वेन चतुर्युजा यत्र जिगमिषेत् तद्गच्छेदेवमेवैतेन स्वर्गं लोकं गच्छति । जै २, ११३ ।

७४. सहस्रसंमितः (°तो वै [माश.]) सुवर्गो लोकः । तैसं ७,१,५,७; तै ३,९, ४, ६; १२,५, ८; माश १३,१,३,१ ।

७५. सहस्राश्वीने वा इतः स्वर्गो लोकः । ऐ २,१७ ।

७६. सात्माऽन्तरिक्ष ँ रोहति, सप्राणोऽमुष्मिँल्लोके प्रतितिष्ठत्यव्यर्धुकः प्राणापानाभ्यां भवति य एवं वेद । तैसं ५,३,६,३ ।

७७. सो (अगस्त्यः) ऽकामयताहमपि प्रजा अस्मिन् लोके विधाय स्वर्गं लोकमनुगच्छेयमिति । स एतं षोडशं स्तोममपश्यत् । तमाहरत् । तेनायजत । स्वर्गो लोकः षोडश स्तोमानाम् । जै २,२२० ।

७८. (देवाः) सोमैः (सोमयागैः) अमुं (स्वर्गं लोकमभ्यजयन्) । तां १७,१३,१८; १८,२, १४ ।

७९. स्वर्गो वै सामानि । काठ ३३,७ ।

८०. स्वर्गो लोको देवो देवता भवति । गो १,४,८ ।

८१. स्वाहाकारं यजति, सुवर्ग एव लोके प्रतितिष्ठति । तैसं २,६,१,३ ।

८२. हित्वा शरीरꣳ सुतयया स्वर्गं लोकमेति । काठ ३४,७ ।

८३. हिरण्यज्योतिषैव सुवर्गं लोकमेति । तैसं ५,४,२, ४ ॥ [°र्ग- अक्षर्या-; अग्नि- १७७; २४२; अग्निचयन- १४; अग्निहोत्र- ६६; अङ्गिरस्- ३; अध्वर्यु- २; अनृत- २४; अपरिपर-; अभय- २; अमृत- १४; ४४; अमृतत्व- ७; अश्व- ६१; अहन्- ११; १७; आदित्य- ४१; ५८; १९४; २७२; ३३०; आहवनीय- ३३; ४१; आहुति- १८; उत्तरात् १२; उदीची- १७; ऊर्ध्व,र्ध्वा- २३; २४; ऋक्सामन्- १; ऋत- १२;२८; ऋतु- ३६; ऋषि- ७; एकविंश- १६; ओम् १०;१३; औशनकाव- १; काष्ठा- २; क्रोश- २; क्षत्र- ६९; गायत्री-४; १७; २८; ४७; ११३; १२०; चन्द्रमस्- १७; चषाल-; छन्दस्- ४७; ५८; ६१; ६२; ११४; ज्योतिस्- १८; २४; त्रिरात्र- ७; त्रिवृत्- ५०; २दक्षिणा- ११; दर्शपूर्णमास- २१; दशम- ९; १०; दशरात्र- ११ ; दान- ४; दिव्- १३८; दिश्- ४९; ७६; दूरोहण- २; देव- ९;५६;११३;१६४;१९५; नरक- २; नाक- १०;१२; निविद्- ८; नौधस- १;२; पत्नी-११; पशु- १२४; पाप्मन्- ७; पारुच्छेप- १; पुण्यकृत्-; पृथिवी- ७२;१०६; पृष्ठ- १४; १७;२९; पृष्ठ्य- ८; प्रजा- ५१; प्रजापति- १८४;१८५; प्रतिमा-२; प्रत्न- २; प्राञ्च्- ४; प्रायणीय- ७; बार्हत- ८; बृहत्- २७;३३;५५; बृहती- २१;२३; २६; २८; बृहद्भास्- १६; ब्रह्म- ५; ब्रह्मन्- ६५; ९६; १६२; मध्यन्दिन- ३; मनुष्य- १३; महस्- ७; माध्यन्दिन- २७; २८; यज्ञ- १९७; यज्ञायज्ञि,ज्ञीय- ५; २५; यमुना-; रथन्तर- २८; रोह-; लोक- ३; वपा- ४; वर- २; वसन्त- २; वाच्- ४४; वाज- ४; वामदेव्य- ३; विश्वेदेव- १; शम्यापरास-; श्येन- ९; श्री- १८; १९; श्रेयस्- २; षष्ठ- ५; षष्ठीचिति- २; षोडशिन्- १९; संवत्सर- ३८; ५८; सधस्थ-; सरस्वत्- ६; साकमश्व- १; साध्य- १२; सामन्- २; सामवेद- ७; साम्राज्य- ४; सूर्य- ५३; सौम्य- १९; स्तोम- १७;१८; स्वर् १५; स्वरसामन्- ५ द्र.] ।

**स्वर्ग-काम-, सुवर्ग-काम-**

१. आयुष्टोममाहरेत स्वर्गकामः । जै ३, ९ ।

२. स्वर्गकामो यजेत । तां १६, १५, ५ ॥ [°म- अर्यमन्- ३; दाक्षायण- २; दिव्- १५३; पञ्चहोतृ- ७; प्रतृण्ण- ४; श्येनचित्- २ द्र.] ।

**स्वर्ग-याणी-** प्रेङ्ख- ४ द्र. । **स्वर्ग-लोक-** देवता- १२; बृहती- २१; महाव्रतीय-१; स्वर् १४द्र.

**स्वर्ग्य,र्ग्या-**

१. अश्व श्वेतो दक्षिणा भवति, स्वर्ग्यो वा अश्वः । जै २,११८ ।

२. स्वर्ग्यम् (पयः) उद्वासितम् । मै १, ८, १० ॥ [°र्ग्य,र्ग्या- ज्योतिष्टोम- १०; पशु- ३४६; बृहद्रथन्तर- ८; माध्यन्दिन- ८; यज्ञ- ५२; श्यावाश्व- १ द्र.] ।

**स्वर्-ज्योतिस्-** ऋतधामन्- २ द्र. । **स्वर्-णिधन-** देवक्षेत्र- १ द्र. ।

**स्वर्-दृश्-** असौ (सूर्यः) वाव स्वर्दृक्तेन सूर्यं नातिशंसति । ऐ ४,१० ।

**स्वर्-भानु-** हस्ती वै भूत्वा स्वर्भानुर् असुमादित्यं छाययाऽभ्यभवत् । काठसंक ५६ : १ ॥ [°नु- आदित्य- ३८८; सूर्य- ५४ द्र.] ।

**स्वर्-विद्-** अग्नि- ३६७ द्र. ।

**स्वस्ति**- सोम- ७८ द्र. ।

**स्वस्त्ययन**- जातवेदसे सुनवाम सोममिति जातवेदस्यां (ऋचं) पुरस्तात्सूक्तस्य शंसति, स्वस्त्ययनं वै जातवेदस्या (ऋचः) । ऐ ४,३० ॥ [°न- जातवेदस्या- २; तार्क्ष्य- ६ द्र.]।

**स्वाती** ( नक्षत्र- )- स्वाती नक्षत्रं वायुर्देवता । तैसं ४, ४,१०, २ ।

**स्वादु**- प्रजा- ६२; मिथुन- ११ द्र. ।

**स्वाध्याय**-

१. अथातः स्वाध्यायप्रशंसा । प्रिये स्वाध्यायप्रवचने भवतो युक्तमना भवत्यपराधीनोऽहरहरर्थान्त्साधयते सुखं स्वपिति परमचिकित्सक आत्मनो भवतीन्द्रियसंयमश्चैकारामता च प्रज्ञा वृद्धिर्यशो लोकपक्तिः । माश ११, ५, ७, १ ।

२. एव ऽ हैव तदब्राह्मणो भवति यदहः स्वाध्यायं नाधीते तस्मात्स्वाध्यायोऽध्येतव्यस्तस्मादप्यृचं वा यजुर्वा साम वा गाथां वा कुंब्यां वाभिव्याहरेद् व्रतस्याव्यवच्छेदाय । माश ११, ५, ७, १० ।

३. ग्रामे मनसा स्वाध्यायमधीयीत दिवा नक्तं वा इति ह स्माह शौच आह्नेयः । उतारण्येऽबल उत वाचोत तिष्ठन्नुत व्रजन्नुतासीन उत शयानोऽधीयीतैव स्वाध्यायं तपस्वी पुण्यो भवति य एवं विद्वान्त्स्वाध्यायमधीते । तैआ २, १२, १-३ ।

४. तस्मात् स्वाध्यायोऽध्येतव्यो यंयं क्रतुमधीते तेनतेनास्येष्टं भवत्यग्नेर्वायोरादित्यस्य सायुज्यं गच्छति । तैआ २, १५, ७ ।

५. दर्भाणां महदुपस्तीर्योपस्थं कृत्वा प्राङासीनः स्वाध्यायम् अधीयीत । तैआ २, ११, ३ ।

६. द्विजोऽधीते स्वाध्यायं शक्तितोऽन्वहम् । माश ११, ५,७, ४ ।

७. मध्यन्दिने प्रबलमधीयीत । तैआ २, १३, १ ।

८. य एवं विद्वान् महारात्र उषस्युदिते व्रज ऽ स्तिष्ठन्नासीनः शयानोऽरण्ये ग्रामे वा यावत्तरसं ऽ स्वाध्यायमधीते सर्वा ऽ ल्लोकान् जयति । तैआ २, १५, ३ ।

९. यदि ह वा अप्यभ्यक्तः । अलंकृतः सुहितः सुखे शयने शयानः स्वाध्यायमधीत ऽआ हैव स नखाग्रेभ्यस्तप्यते य एवं विद्वान्त्स्वाध्यायमधीते । माश ११,५,७,४ ।

१०. स य एवं विद्वाननुशासनानि विद्या वाकोवाक्यमितिहासपुराणं गाथा नाराश ऽ सीरित्यहरहः स्वाध्यायमधीते मध्वाहुतिभिरेव तद्देवाँस्तर्पयति । माश ११, ५, ६, ८ ।

११. स्वाध्यायान्मा प्रमदः । तैआ ७, ११, १; तैउ १, ११, १ ॥ [°य- तपस्- २५ द्र.] ।

**स्वाध्याय-प्रवचन**- स्वाध्यप्रवचनाभ्यां न प्रमदितव्यम् । तैआ ७, ११, १; तैउ १, ११, १ ।

**स्वाप्यय**- एष ( योऽयं दक्षिणेऽक्षन्पुरुषो मृत्युनामा सः ) उ एव प्राणः । एष हीमाः सर्वाः प्रजाः प्रणयति तस्यैते प्राणाः स्वाः स यदा स्वपित्यथैनमेते प्राणाः स्वा अपियन्ति तस्मात्स्वाप्ययः स्वाप्ययो ह वै त ऽ स्वप्न इत्याचक्षते परोऽक्षम् । माश १०, ५, २, १४ ।

**स्वार**- स्वर- द्र. । **स्वाराज्य**- स्वराज्- द्र. । **स्वावश्य**- अङ्गिरस्- १२ द्र. ।

**स्वाशिर्**-

१. आपो वै स्वाशिरः । जै २, २५५ ।

२. अन्नं वा अर्कोऽन्नाद्यस्यावरुद्ध्यै प्राणा वै स्वाशिरः प्राणानामवरुद्ध्यै । तां १४, ११,९ ।

३. यद् उ स्वाशिरो ऽप्सरसो ऽपश्यंस्तस्मात् स्वाशिरामर्कं इत्याख्यायते.। जै ३, २२६।
[°शिर्- ओषधि- १२१; प्राण- १४५ द्र. ]।

**स्वासस्था-** स्वासस्थां देवेभ्यः इति स्वासदां देवेभ्य इत्येवैतदाह। माश १,३,३,११।

**स्वाहा**

१. तत् स्वाहेत्यजुहोत्……स्वा ह्येनं वागैद्द। काठ ६,१; क ३,१२।

२. स प्रजापतिर्विदांचकार स्वो वै मा महिमाहेति स स्वाहेत्येवाजुहोत्तस्मादु स्वाहेत्येव हूयते। माश २,२,४,६।

३. स यत्स्वाहास्वाहेत्याह स्वीकुरुत एवैनमेतदात्मन्येवैनमेतत्कुरुत आत्मनि यज्ञं कृत्वा दीक्षा इति। काश ४,१,३,१८॥ [°हा लातव्य- ३; लामगायन- द्र.]।

**स्वाहा-कार-**

१. अनिरुक्तो वै स्वाहाकारः। माश २,२,१,३।

२. त ऽस्वा वागभ्यवदज्जुहुधीति, स इत एवोन्मृज्याजुहोत् स्वाहा इति स्वाह्येन ऽवागभ्यवदत् तत् स्वाहाकारस्य जन्म, तस्मादग्निहोत्रे स्वाहाकारः। मै १,८,१।

३. तस्यै (वाचे) द्वौ स्तनौ देवा उपजीवन्ति स्वाहाकारं च वषट्कारं च। माश १४,८,९,१।

४. स्वाहाकारं यजति, हेमन्तमेवावरुन्धे, तस्मात् स्वाहाकृता हेमन् पशवोऽवसीदन्ति। तैसं २,६,१,१।

५. हेमन्तो वाऽऋतूना ऽस्वाहाकारो हेमन्तो हीमाः प्रजाः स्वं वशमुपनयते। माश १,५,४,५।
[°र- अन्त- ६; अन्न-६५; पूषन्-३१; यज्ञ-१२७; वाच्-१४१; सूर्य-१७; स्वर्ग-८२ द्र.]।

**स्वाहा-कृति-** प्रतिष्ठा- ७; प्राण- १४५ द्र.।

**स्वाहाकृति-मत्-** स्वाहाकृतिमन्तं यजति हेमन्तमेव हेमन्ते वा इदं सर्वं स्वाहाकृतम्। कौ ३,४।

**स्विष्ट-** यज्ञ- १४२ द्र.।

**स्विष्ट-कृत्-**

१. अन्तरा ऽसमेवास्य स्विष्टकृत्। माश ११,२,६,६।

२. अयमेवावाङ् प्राणः स्विष्टकृत्। माश ११,१,६,३०।

३. एतर्हि वै सर्वा देवता यर्हि स्विष्टकृत् ……एष खलु वाव प्रत्यक्षं यज्ञो यत् स्विष्टकृत्। काठ ३२,१।

४. ते (देवाः) ऽब्रुवन्त्स्विष्टं वै न इदं भविष्यति यदिम ऽराधयिष्याम इति तत् स्विष्टकृतः स्विष्टकृत्त्वम्। तैसं २,६,८,३।

५. वास्तु वाऽएतद्यज्ञस्य यत्स्विष्टकृत्। माश १,७,३,१७।

६. वास्तु स्विष्टकृत्। माश १, ७, ३, १८॥ [°कृत्- अग्नि- २४३; ४९६; अमावास्या- ४; उत्तर,रा- ६; क्षत्र- ३०; तपस्- १७; तृतीयसवन- १६; प्रतिष्ठा- ८; रुद्र- ५४; ६७; रुद्रिय- १ द्र.]।

**स्वेद्-** तद्यदब्रवीन्महद्वै यक्षं सुवेदमविदामह इति तस्मात्सुवेदोऽभवत्तं वा एतं सुवेदं सन्तं स्वेद इत्याचक्षते। गो १,१,१।

# ह

**हंस-** आदित्य- ७५; १९३; कुञ्च्- ३; छन्दस्- २; ब्राह्मण- ४६; रथ- १०; वात- १५; सोम- ८४ द्र.।

**हंस-साचि-** अदित्यै ह ँससाचिः। काठ ४७, १०।

**हनु-**

१. असन्तृण्णे हि हनू। तैसं ६, २, ११, ३।

२. हनू अधिषवणे। मै ३, ८, ८; ४, ५, ४; ९॥ [°नु- अधिषवण- ४; वाज- २ द्र.]।

**हन्त** आदित्य- ३८९ द्र.। **हन्त-कार-** मनुष्य- ४० द्र.।

**हय-** (हे ऽश्व त्वं) हयो ऽसि। तां १, ७, १॥ [°य- देव- २७७ द्र.]।

**हरस्-** वीर्यं वै हर इन्द्रो ऽसुराणा ँ सपत्नाना ँ समवृङ्क्त। माश ४,५, ३,४॥ [°रस्- अग्नि- २८१; अर्चिस्- ३; सूर्य- ४३; ४४ द्र.]।

**हरि-**

१. पूर्वपक्षापरपक्षौ वा इन्द्रस्य हरी ताभ्या ँ हीद ँ सर्वं हरति। प १, १।

२. भद्रः सोमः पवमानो वृषा हरिः। काठसंक ६०:३।

३. युक्ता ह्यस्य (इन्द्रस्य) हरयश्शता दशेति सहस्रं हैत आदित्यस्य रश्मयः। ते ऽस्य युक्तास्तैरिदं सर्वं हरति। तद्यदेतैरिदं सर्वं हरति। तस्माद्धरयः। जैउ १, १४, ३, ५।

४. युञ्जन्त्यस्य काम्या हरी विपक्षसा रथे। शोणा धृष्णू नृवाहसा। तैसं ७, ४, २०,२।

५. हरि ँ हरन्तमनुयन्ति देवाः। तैआ ३, १५, १॥ [°रि- अहोरात्र- २६; इन्द्र- ५५; ८१; २१३; ३१३; ४१०; ऋक्साम- ६; दर्शपूर्णमास- ७; द्यावापृथिवी- ३; धाना- ७; प्राण- २१३; विष्णु- २; वृषन्- २० द्र.]।

**हरि-केश-**

१. अयं पुरो हरिकेशः सूर्यरश्मिस्तस्य रथकृत्सश्च रथौजाश्च सेनानीग्रामण्यौ, पुञ्जिकस्थला च कृतस्थला चा ऽप्सरसौ, यातुधाना हेती, रक्षा ँ सि प्रहेतिः। मै २, ८, १०।

२. यद्धरिकेश इत्याह हरिरिव ह्यग्निः। माश ८, ६, १, १६॥ [°श- आदित्य- ७६ द्र.]।

**हरि-वत्-**

१. इन्द्राय त्वा हरिवते एष ते योनिः। मै १, ३, ३४।

२. हरिवद्धै त्रिष्टुभो रूपम्। जै ३, २३॥ [°वत्- इन्द्र- ४१२ द्र.।

**हरि-वर्ण-** हरिवर्णो वा एतत्पशुकामः सामापश्यत्तेन सहस्रं पशूनसृजत यदेतत्साम भवति पशूनां पुष्ट्यै। तां ८, ९, ४।

**हरि-श्री-** पशु- १९४ द्र.।

**हरिश्री-निधन** (सामन्-)- हरिश्रीनिधनं भवति'''पशूनामवरुध्यै श्रियञ्च हरश्चोपैति तुष्टुवानः। तां १५,३,९-१०।

**हरिण-**

१. राष्ट्र ँ हरिणः। माश १३, २, ९, ८।

२. हरिणो मारुतः। काठ ४७, ९ ॥ [ण- स्रज- द्र.]

हरित्- दिश्- ५०; प्रजा- ५८; शक्वरी- १६ द्र. ।

हरित-

१. तां (गां) देवा अदुह्र हरितेन (सुवर्णमयेन) पात्रेण यज्ञं चाऽमृतं च। मै ४, २, १३।

२. तां (गां) देवा अदुह्र हरितेन (हिरण्मयेन) पात्रेणामृतम्। मै ४, २, १।

३. यदग्ने रेतोऽसिच्यत, तद्धरितम् (अभवत्)। काठ ८,५ ॥ [°त- द्युम्न- १; सुवर्ण- ३ द्र.]।

हरिणी (सूची-)-

१. ऊर्ध्वा हरिण्यः। तै ३, ९, ६, ५; माश १३, २, १०, ३।

२. दिवो (रूपं) हरिण्यः। तै ३,९,६,५ ॥ [°णी- दिव्- ४४;१८२; विश्- २३ द्र. ।

हर्म्य- हृदयानि उ वै हर्म्याणि। हृदयो ह वै क्रुध्यति। जै ३, ३६४।

हविस्-

१. अन्नं हि हविः। माश २,६,२,६।

२. तस्मात्तादक्षिणेन हविषा यजेत। माश १,२,३,४।

३. न हि हविरनभिघृतमस्ति। मै १,१०,२०।

४. नादक्षिणं हविः स्यादिति ह्याहुः। माश ११,१,२,१; ४,४ (तु. काठ ३७,१२)।

५. हविः पर्यग्निकृतः (सोमः)। काठ ३४,१५।

६. हविरुपावहृतः (सोमः)। काठ ३४,१५।

७. हविर्वा एतद्यदग्निहोत्रम्। काठ ६, ४ ॥ [°विस्- अशनापिपासा-; आधार- ४; आत्मन्- ४०; ऐन्द्रावैष्णव- १; दीक्षित- ३२; देव- ५८; १३६; प्राण- २२०; मनस्- ६०; मास- १७; यजमान- २३; यज्ञ- २००; वर्ष- १; शरद्- ६; सोम- १२ द्र.]।

हविर्-धान-

१. अथ यदस्मिन्त्सोमो भवति हविर्वै देवानां सोमस्तस्माद्धविर्धानं नाम। माश ३, ५,३, २।

२. एतद्वै देवानां निष्केवल्यं यद्धविर्धानम्। माश ३, ६, १, २३।

३. तस्य (पुरुषस्य) शिर एव हविर्धाने। कौ १७, ७।

४. (सोमः) द्यौर् हविर्धाने। काठ ३४,१४।

५. शिर एवास्य (यज्ञस्य) हविर्धानम्। माश ३, ५,३,२।

६. हविर्वै हविर्धाने। क ४०,१ ॥ [°न- इन्द्र- २०१; गायत्र- १३; २९; दिव्- ७६;१०३; १२९; १८३; द्यावापृथिवी- १५; नाराशंस- ६; पृथिवी- १६; मनस्- ७७; मेघ-; यज्ञ- १७६; वैष्णव- ५; वैष्णवी- ४; शिरस्- २५; सदोहविर्धान- द्र.]।

हविर्धानिन्- दर्शपूर्णमासयाजिन्- १ द्र.।

हविर्-यज्ञ-

१. अकृत्स्नैव (अकृत्स्ना [गो.]) वा एषा देवयज्या यद्धविर्यज्ञः। कौ १०, ६; गो २,२,१७।

२. अग्न्याधेयमग्निहोत्रं पौर्णमास्यमावास्ये। नवेष्टिश्चातुर्मास्यानि पशुबन्धोऽत्र सप्तम इत्येते हविर्यज्ञाः। गो १,५,२३।

३. चत्वारो ह्येते हविर्यज्ञस्यर्त्विजः। ब्रह्मा होताऽध्वर्युरग्नीत्। तै ३, ३,८, ७-८ ॥ [°ज्ञ- आज्या-हुति-; पृथिवी- २२३ द्र.]।

**हविष्-कृत्** ( सामन्- )- हविष्मा ऽ श्च वै हविष्कृच्चाङ्गिरसावास्तां द्वितीये ऽहनि हविष्मान-राध्नोन्नवमे ऽहनि हविष्कृत् । तां ११, १०, ९ ॥ [°कृत्- पशु- १९६; वाच्- १०४ द्र.] ।

**हाविष्कृत** ( सामन् )- हाविष्कृतं भवति प्रतिष्ठायै । तां १५, ५, १७ ।

**हविष्-पङ्क्ति-**

१. इन्द्रस्य पुरोडाशः । हर्योर्धानाः, पूष्णः करम्भः, सरस्वत्यै दधि, मित्रावरुणयोः पयस्या । पञ्चपदा पङ्क्तिः सैतया हविष्पङ्क्त्यानेकाकिनी गायत्री प्रातःसवनं वहति । माश ४,२,५,२२ ।

२. धानाः करंभः परिवापः पुरोडाशः पयस्येत्येष वै यज्ञो हविष्पंक्तिः । ऐ २,२४ (तु. कौ १३,२) ।

३. पञ्चैतानि हवी ऽ षि तेन हविष्पङ्क्तिः । काठ २९,१; क ४५, २ ॥ [°पङ्क्ति- पशु- १९४; प्राण- ४ द्र.] ।

**हविष्-पात्र-** अर्धमास- ९ द्र. ।

**हविष्-मत्-** अर्धमास- ९; देव- १२६; पशु- १९६; हविष्कृत्- द्र. ।

**हविष्य-** यो व ऊर्मिर्हविष्य इति यो ऊर्मिर्यज्ञिय इत्येवैतदाह । माश ३,९,३,२५ ।

**हव्य-दाति-** यजमान- २२ द्र. । **हव्य-वाह्-** अग्नि- ४४७; वायु- ७४ द्र. ।

**हव्य-वाहन-** अग्नि- ४४; ७६८ द्र. ।

**हस्त-**

१. हस्तो विसृष्टौ । काठ ३४,१५ ।

२. सविता देवता, हस्तो नक्षत्रम् । काठ ३९, १३ ॥ [°स्त- अग्नि- ४२२; कर्मन्- ५; ६; प्रजापति- ३०२; प्राण- ३०१; वितस्ति-; सवितृ- १५; १६; ४३ द्र.] ।

**हस्तिन्-**

१. (देवा आदित्याः) तं ( मार्तण्डं ) विचक्रुर्यथायं पुरुषो विकृतस्तस्य यानि मा ऽ सानि संकृत्य संन्यासुस्ततो हस्ती समभवत्तस्मादाहुर्न हस्तिनं प्रतिगृह्णीयात्पुरुषाजानो हि हस्तीति । माश ३, १, ३, ४ ।

२. तस्य यन्मृतमासीत् तदपाकृन्तन् स हस्त्यभवत् । काठ ११, ६ ।

३. महस्तवानो अद्रिव इति हस्तिनो हैतद् रूपम् । तस्मात्ते पार्श्वत इवाधिरोहन्ति । जै २,१२ ।

४. हिमवतो हस्ती । तैसं ५,५,११,१; काठ ४७,१ (तु. मै ३,१४,११; तैआ ३,१०,३) । [°स्तिन्- पुरुष- ८१ द्र.] ।

**हस्ति-च्छाया** (मघात्रयोदश्योर्योग-)- हस्ती वै भूत्वा स्वर्भानुरमुमादित्यं छाययाभ्यभवत् ··· एतद्वै देवपितॄणामायतनं यद् हस्तिच्छाया तस्माद् हस्तिच्छायायां श्राद्धं दद्याद् यः कामये-ताक्षय्यमपरिमितमनन्तं भूयः स्यात् । काठसंक ५६ : १-३ ।

**हायन-** प्रतिष्ठा वा ऽएता ओषधयो यद्धायनाः ( संवत्सरपक्वा व्रीहयः ) । माश ५,३,३,६ ।

**हारायण-** (सामन्-)-

१. इन्द्रस्तेजस्कामो हरस्कामस्तपोऽतप्यत स एतद्धारायणमपश्यत्तेन तेजो हरोऽवारुन्ध तेजस्वी हरस्वी भवति हारायणेन तुष्टुवानः । तां १४,९,३४ ।

२. यद् उ हारायण आङ्गिरसोऽपश्यत् तस्माद् धारायणम् इत्याख्यायते । जै ३,२१७ ।

३. (देवा असुराणां) यद् धरोऽहरंस् तद् धारायणस्य हारायणत्वम् । जै ३,२१७ ।

हारियोजन (ग्रह-)-

१. अतिरिक्त एष सोमानां यद्धारियोजनः । काठ २८,९; क ४४,९।

२. इन्द्रो ( +वै [काठ., क.]) वृत्र ५ हत्वा तस्य (+यत् [मै.] ) क्लोम्नो (क्लोम्णो [क.] ) हृदयात् सोम ५ समलिञ्चत्, स हारियोजनोऽभवत्। मै ४, ७, ४; काठ २८,९; क ४४,९।

३. तयोर् (ऋक्सामाख्ययोरिन्द्रस्य हर्योः) एतद् भागधेयं यद् हारियोजनः। क ४४,९।

४. तस्मात् (द्रोणकलशात्) सोमः समस्रवत् स हारियोजनो ऽभवत्। तैसं ६,५,९,१।
[°न- छन्दस्- ४८; द्रोणकलश- ३ द्र.]।

हारियोजनी-

१. एता वा इन्द्रस्य पृश्नयः कामदुघा यद्धारियोजनीरिति। तैसं ६,५,९,२।

२. पशवो ( +वै [तैसं.]) हारियोजनीः। तैसं ६,५,९,३; क ४४,९।

हारिवर्ण (सामन्-)-

१. अङ्गिरसः स्वर्गं लोकं यतो रक्षा ५ स्यन्वसचन्त तान्येतेन हरिवर्णोऽपाहन्त यदेतत्साम भवति रक्षसामपहत्यै। तां ८,९,५।

२. अप शुच ५ हते हारिवर्णस्य निधनेन, श्रियञ्च हरश्चोपैति तुष्टुवानः। तां १२, ६, १०।

३. हारिवर्णम् ब्रह्मसाम रक्षोगृहीतः कुर्वीत······यद्ध हरिवर्ण आङ्गिरसोऽपश्यत् तस्माद् हारिवर्णम् इत्याख्यायते। जै १,१८३।

हार्दि- मनस्- ६१ द्र.।

हिं-कार-

१. अन्नं वै हिंकारः। हुमिति वा अन्नाद्यं प्रदीयते। जै ३, ९३।

२. एष वै साम्ना ५ रसो यद्धिङ्कारः। तां ६, ८, ७।

३. एष वै स्तोमस्य योगो यद्धिङ्कारः। तां ६, ८, ६।

४. तदेतद्यज्ञस्याग्रे यद्धिङ्कारः। गो २, ३, ९।

५. तस्या एतस्यै ( वहिष्पवमानीरूपायै यज्ञियायै विराजे ) हिंकार एवापिधानम्। हिंकारेण ह्येव देवेभ्यो ऽन्ततो ऽन्नाद्यं प्रदीयते। जै १, २४६।

६. तेभ्यः (पशुभ्यः प्रजापतिः ) हिङ्कारमप्रायच्छत्। जैउ १, ३, १, ५।

७. शुक्रमेव हिङ्कारः। जैउ १, ११, २, १।

८. श्रीर्वा एषा प्रजापतिस्साम्नो यद्धिङ्कारः। जैउ ३, ३, २, २।

९. श्रीर्वै साम्नो हिङ्कारः। जैउ १, १, ४, ६।

१०. हिंकारेण वै ज्योतिषा देवास्त्रिवृते ब्रह्मवर्चसाय ज्योतिरदधुः। जै १, ६६।

११. हिङ्कारो वै गायत्रस्य प्रतिहारः। तां ७, १, ४।

१२. हिङ्कृत्य गायति तत्र हि सर्वं कृत्स्न ५ साम भवति। माश ९, १, २, ३४॥ [°र- अन्न- ५४; अमृतत्व- २; अहोरात्र- १०; आदित्य- ३०६; आश्विन- २५; ऊर्ज्- ११; गायत्र- १७; गो- ७१; चन्द्रमस्- ३३; त्रयीविद्या- ६; नाभि- ९; पुरोवात- ३; प्रजा- १०८; प्रजापति- १६९; प्राची- १०; प्राण- २१४; २२५; ब्रह्मन्- ९७; मनस्- ८४; यजुस्- २९; रश्मि- १२; रेतस्- ४९; लोमन्- ५; वज्र- २९; ४३; ४८; वसन्त- १२; १५; वसिष्ठ- ३; वामदेव्य- २३; वायु- ६७; ८४; वृषन्- ६ द्र.]।

**हिङ्कार-वत्**- प्रजापति- ३०३ द्र.। **हित**- प्राण- २१५ द्र.।

**हिम**- यद्वै शीतस्य प्रशीतं तद्धिमस्य जरायु। माश ९, १, २, २६।

**हिम-वत्**- हस्तिन्- ४ द्र.।

**हिमा**- शत ऽहिमा इति शतं वर्षाणि जीव्यासमित्येवैतदाह। माश १,९, ३, १९।

**हिर**- राला- द्र.।

**हिरण्मय**-

१. अथ पुरुषमुपदधाति, स प्रजापतिः, सोऽग्निः, स यजमानः, स हिरण्मयो भवति। माश ७, ४, १, १५।

२. स (पुरुषः) इरामयो यद्वीरामयस्तस्माद्धिरण्मयः। ऐआ २,१,३॥ [°य- पुरुष- १२० द्र.]।

**हिरण्य**-

१. अग्नये वैश्वानराय द्वादशकपालो हिरण्यं दक्षिणा। काठ १५, ३।

२. अग्नीषोमीय एकादशकपालः (पुरोडाशः), हिरण्यं दक्षिणा। मै २, ६, १।

३. अङ्गिरसः सुवर्गं लोकं यन्तो या यज्ञस्य निष्कृतिरासीत् तामृषिभ्यः प्रत्यौहन्, तद्धिरण्यमभवत्। तैसं ५, ४, २, ३।

४. अद्भ्यो हिरण्यं पुनन्ति। तैसं ६, १, ७, १।

५. अयसो हिरण्यं (असृजत प्रजापतिः) तस्मादयो बहु ध्मातऽहिरण्यसंकाशमिवैव भवति। माश ६, १, ३, ५।

६. आग्नेयमष्टाकपालं निर्वपति, हिरण्यं दक्षिणा। तैसं १, ८, १७, १।

७. आग्नेयमष्टाकपालं निर्वपेत्, सावित्रं चरुं, वायव्यां यवागूं प्रतिधुग्वा, भौममेककपालं यस्य हिरण्यं नश्येद् यो वा हिरण्यऽ विन्देत्··· एते वा प्रदातारः। मै २,२,७ (तु॰ काठ ११,२)।

८. आग्नेयमष्टाकपालं निर्वपेत्, सावित्रं द्वादशकपालं, भूम्यै चरुं यः कामयेत हिरण्यं विन्देय, हिरण्यं मोपनमेदिति। तैसं २, ३, २, ३-४।

९. तद्यदस्य (प्रजापतेः) एतस्याऽरम्यायां तन्वां देवा अरमन्त तस्माद्धिरम्यऽ हि रम्यऽ ह वै तद्धिरण्यमित्याचक्षते परोऽक्षम्। माश ७, ४, १, १६।

१०. तस्मिन् (अग्नौ) यद्धिरण्यं प्रास्यन्ति, कल्याणतरं भवति। जै ३,३३४।

११. मेध्यऽहिरण्यम्। काठ २०,८; क ३१, १०।

१२. यदा हिरण्यं विन्देताऽथैतामेव निर्वपेत्, या एवास्मै देवता हिरण्यं ददति ता एव भागिनीः करोत्यात्मनोऽहिऽसायै। काठ ११,२।

१३. यदूर्ध्वस्तिष्ठन् हिरण्यशल्कैः प्रोक्षति, तेनैवैनम् (अग्निम्) ऊर्ध्वं चिनुते, स्वर्गस्य लोकस्य समष्ट्यै। काठ २१, ४।

१४. वि वा एष इन्द्रियेण वीर्येणर्ध्यते यो हिरण्यं विन्दत एतामेव (पूर्वोक्तामेवेष्टिं) निर्वपेद्धिरण्यं वित्त्वा, नेन्द्रियेण वीर्येण व्यृध्यत एतामेव निर्वपेद्यस्य हिरण्यं नश्येत्। तैसं २, ३, २, ४-५।

१५. सोमस्य वा अभिषूयमाणस्य प्रिया तनूरुदक्रामत् तत्सुवर्णं ९ हिरण्यमभवत् । तै १,४,७,४-५।
१६. हिरण्यं देय ९सशुक्रत्वाय । मै २, ५, १ ।
१७. हिरण्येन वर्चो ९ सि (अन्वाभवत्) । काठ ३५, १५ ।
१८. हिरण्यैश्चन्द्री वेत्वाज्यस्य होतर्यज । मै ४,१३,२ ॥ [°ण्य- अग्नि- ३९;१४८; २२४; २९१; २९४;२९५; ५१०; ७७०; अग्निज,जा- १; अग्निरेतस-; अग्नीध्- ८; अग्नीषोमीय- ६; अप्- ३; २३३; अपराह्न- ३; अमृत- ८; ९; अयस्- ४; अश्व- २०; असुर- १; अहन्- ४३; आग्नेय- ३; १०; आत्मन्- ४१; आदित्य- १२३; आयुस्- ३; १६; १९; ४३; इन्द्र- २८९; ऋत- ५; क्षत्र- ४९; गन्ध- १; चन्द्र- ३; ५; ज्योतिस्- १०; १७; ३८; तेजस्- २०;३६; देव- १०५; धन- २; पवित्र- ४; पुष्करपर्ण- ४; प्राण- २१७; यशस्- ५; रूप- ४; रेतस्- ३८; वर्चस्- ३; ५; वारुण- २१; शुक्र- ९; १०; सत्य- २२; सामन्- ५७; ६० द्र.]।

**हिरण्य-कशिपु-** दिव्- ८६ द्र. ।

**हिरण्य-गर्भ-** हिरण्यगर्भः समवर्तताग्र इति पुरुष ९ हिरण्मयमुपदधाति । यजमानलोकमेवैतेन दाधार । क ३१, ७ ॥ [°र्भ- प्रजापति- १६९ द्र. ।

**हिरण्य-ज्योतिस्-** स्वर्ग- द्र. ।

**हिरण्य-पाणि-** सवितृ- १२; ३५ द्र. ।

**हिरण्य-शल्क-** यद्धिरण्यशल्कैः प्रोक्षति, ज्योतिषैवास्मै संवत्सरं विवासयति । काठ २१, ६ ।

**हिरण्याऽक्ष-** उलूक- द्र. ।

**हिरा-** हिराभिः स्रवन्तीः । मै ३, १५, ७ ।

**हुताऽद्-** ब्राह्मण- ११ द्र. ।

**हुम् वग्** हुम् बगिति श्रीकामस्य । बगिति ह श्रियस्पणायन्ति । जैउ ३, ३,३, ३ ।

**हुस्वो** पशुकाम- ९ द्र. ।

**हुम्भा** ब्रह्मवर्चसकाम- ५ द्र.

**हूति-** प्रतिश्रुति- द्र. ।

**हूयमान-** प्रजापतिर्हूयमानः (प्रवर्ग्यः) । तैआ ५, ११, ४ ।

**हृद्-** क्रतु- १०; ११; देव- २१० द्र. ।

**हृदय-**

१. अपिकक्षे हृदयम् । तस्मादपिकक्षे हृदयमनूर्च भवति, तस्मादनस्थक ९ हृदयम् । काठ २१, ५; क ३१, २० (तु. मै ३, ३, ५ ) ।
२. आत्मा वै मनो हृदयम् । माश ३, ८, ३, ८ ।
३. तदेतत् त्र्यक्षर ९ हृदयमिति हृ इत्येकमक्षरमभिहरन्त्यस्मै स्वाश्चान्ये च य एवं वेद द इत्येकमक्षरं ददन्त्यस्मै स्वाश्चान्ये च य एवं वेद यमित्येकमक्षरमेति स्वर्गं लोकं य एवं वेद। माश १४, ८, ४, १ ।
४. तस्मादिदं गुहेव हृदयम् । माश ११, २, ६, ५ ।
५. निकक्षे निकक्षे हि हृदयं, दक्षिणे निकक्षेऽतो हि हृदयं नेदीयः । माश ९, १, २, ४० ।
६. परिमण्डल ९ हृदयम् । माश ९, १, २, ४० ।
७. प्रजानां रेतो हृदयं, हृदयस्य रेतो मनः । ऐआ २, १, ३ ।
मध्यतो वा आत्मनो हृदयम् । जै १, ७० ।

९. यदेतद्धृदयं मनश्चैतत्संज्ञानमाज्ञानं विज्ञानं प्रज्ञानं मेधा दृष्टिर्धृतिर्मतिर्मनीषा जूतिः स्मृतिः संकल्पः क्रतुरसुः कामो वश इति सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानि भवन्ति । ऐआ २, ६, १ ।

१०. श्लक्ष्ण ऽ हृदयम् । माश ९, १, २, ४० ।

११. हिता नाम नाड्यो द्वासप्ततिः सहस्राणि हृदयात्पुरीततमभिप्रतिष्ठन्ते ताभिः प्रत्यवसृप्य पुरीतति शेते । माश १४, ५, १, २१ ।

१२. हृदयमेव मेथ्युपदोहनी (+ प्राणो रज्जुः । प्राणेनैव वाक् च मनश्चाभिहिते । रज्ज्वा वै वत्सं च मातरं चाभिदधाति [जै.]) । काश ३, १, ४, २; जै १, १९ ।

१३. हृदयं प्रेतिः । जै १, १४ ॥ [°य- अग्नि- ५५; अग्निषोमीय- १२; अन्तरिक्ष- १३१; अपान- २३; आत्मन्- ४४;९३; आदित्य- ७७; उदान- ८; चक्षुस्- २७; पुत्र- ७; पृथिवी- २२४; प्रजापति- ३२; प्राण- २१६; २२८; ब्रह्मन्- १६३; १६५; मनस्- १२; ६४; ९०; ९१; मूर्धन्- ४; यूप- २२; रेतस्- ३९; वाच्- १०५; विष्णु- ४२; शरीर- ८; श्रोत्र- ७; स्तोमभाग- ६; हर्म्य- द्र.] ।

हेक् उपहूत ऽ हेगिति तच्छरीरमुपह्वयते । माश १, ८, १, २३ ।

हेति- रुद्रस्य हेतिं दधाति । माश १२, ७, ३, २० ॥ [°ति- अग्नि- ६४५;७७१; रुद्र- ३२ द्र.] ।

हेमन् (हेमन्त-)-

१. एतौ (शमी च यवश्च) हेमन्न शुष्यतः । काठ ३६, ६ ।

५. हेमन्तो होता तस्माद्धेमन्वषट्कृताः पशवः सीदन्ति । माश ११,२,७,३२ ॥

२. हेमन्नुपरि शीतो ऽभ्र उष्णमभिगम्यते । तस्मादु हेमन्नुष्णाः कूप्या अप उदाहरन्ति । जै १, १६७ ।

हेमन्त (ऋतु-)-

१. मनो हेमन्तः चन्द्रमा हेमन्तः । जै २, ५१ ।

२. यद् वृष्ट्वोद्गृह्णाति तद्धेमन्तस्य (रूपम्) । माश २, २, ३, ८ ।

३. स (हेमन्तः) शीततम इव । जै ३, १ ।

४. हेमन्तः पञ्चमः (ऋतूनाम्) ··· । स एष श्रेष्ठ ऋतूनां यद्धेमन्तः पीवगुः पीवत्सः । तमनु पश्चाहः प्रतितिष्ठन्नेति । जै २, ३५६ ।

५. हेमन्ताय ककरान् (आलभते) । मै ३, १४, १; काठ १०,४ ।

६. हेमन्तेन मध्यम् (अचिनुत) । तैसं ५, ६, १०, १; मै ३, ४, ८ ।

७. हेमन्तो मध्यम् । मै ४, ९, १८; तै ३, ११, १०, ४; तैआ ४, १९, १ ।

८. हेमन्तो हि वरुणः । मै १, १०, १२ ॥ [°न्त- अन्त- ६; ऐन्द्रावैष्णव- ५; ग्रीष्म- २३; निधन- १४; १५; पृषत्-; वसन्त- २; शक्वरी- २४; सहस्वत्-; स्वाहाकार- ४; ५; स्वाहाकृतिमत्-; हेमन्- २ द्र.] ।

हैमन्तिक-

१. पृश्निसक्थावाग्नयो हैमन्तिकाः । काठ ५०, ३ ।

२. बृहस्पतये पाङ्क्ताय त्रिणवाय शाक्वराय हैमन्तिकाय चरुः । तैसं ७, ५, १४, १ ।

३. विश्वासां भुवां पत इत्याह । हैमन्तिकावेवास्मा ऋतू कल्पयति । तैआ ५, ६, ७ ।
४. सहश्च सहस्यश्च हैमन्तिका ऋतू । मै २, ८, १२ ॥ [°न्त- शाक्कर- ५; सहस्- १; सुषेण- द्र.] ।

होतृ-

१. अग्निरेव होताऽऽसीत् । जै ३,२७४ ।
२. ज्यैष्ठ्यं होता । जै २,३७८ ।
३. नाभिर्वा एषा यज्ञस्य यद्धोता । काठ २६, १; क ४०, ४ ।
४. मध्यं वा एतद्यज्ञस्य यद्धोता । तै ३, ३, ८, १० ।
५ यद्वा स तत्र यथाभाजनं देवता अमुमावहामुमावहेत्यावाहयति । तदेव होतुर्होतृत्वम् । ऐ १, २ ।
६. शस्त्राणि होता ( स्पाशयेत ) । काठ ३५, १६ ।
७. होतर्धर्ममभिष्टुहि । तैआ ४, ४, १ ॥ [°तृ- अग्नि- १४४; १८८; २४५; २४६; २५५; ५१२; आग्नेय- २५; आत्मन्- ३२; ४०; ८४; उत्तरतस् ३; कीर्ति-; क्षत्र- ३०; गो- ३६; जगती- ६२; जागत- १७; धेनु- १०; पुरुष- ६९; पृथिवी- ७३; १३८; १६९; प्रत्यञ्च्- ८; प्राची- १६; प्राण- १६३; २१७; भर्गस्- ७; मनस्- ६०; महाहविस्- १; माध्यन्दिन- ९; रुक्म- ३; ५; वह्नि- ३; वाक्पति- २; वाच्- ७०; ७५; ७९; १०४; १०६; वाचस्पति- ३; वैश्वदेव- १९; श्री- १३; संवत्सर- ७२; साहस्र-; सूर्य- ९; १८; हेमन्- २ द्र.] ।

**होतृ-चमस-** आत्मन्- ४५ द्र. । **होतृत्व-** ऋच्- २० द्र. ।

**होतृ-षदन-** कृष्णाजिन- ६ द्र. । **होत्रक-** अङ्ग- ५ द्र. ।

होत्रा-

१. सप्त होत्राः । मै ३, ७, ६; ४, ८, ८ ।
२. होत्रा वा ऋत्विजः । काठ २८,५; क ४४, ५ ॥ [°त्रा- अङ्ग- ३; ऋतु- २३; ऋत्विज्- ३; गन्धर्व- ९; रश्मि- १५; वरुत्री- द्र.] ।

**होत्रा-शंसिन्-** अङ्ग- ५; अप्- ८०; ऋतु- ३३; विश्- २८ द्र. ।

**ह्रदुनि-** दूषीकाभिर्ह्रदुनिम् । काठ ५३, १० ।

**ह्रादुनि-** ह्रादुनीर् दूषिकाभिः । मै ३, १५, ८ ॥ [°नि- रजत- ८ द्र.] ।

# अथ
# परिशिष्टम्



**अक्षि-**

१. अक्षिभ्यामपाष्ठिहौ ( अजायेताम् ) । जै २,२६७ ।
२. द्वे अक्ष्यौ समानं पश्यतः । जै १,२५४ ।

**अग्नि-**

१. अग्निरभिजित् । जै २,३००; ४२९ ।
२. अग्निर् एव प्रायणम् । जै ३,३०९ ।
३. अग्निर्वा एष वैश्वानरो यत्पृष्ठ्यष्षडहः । जै ३,१५४ ।
४. अग्निर्वै देवानामयातयामा । जै २,३२५ ।
५. अथ यद् अनड्वान् अग्नीधे भवति, वहति वा अनड्वान्, वहत्यग्निर्देवेभ्यो हविः । जै २,२०३ ।
६. अथो ह्यस्य ( इन्द्रस्य ) अग्निरेव सखितम इवास देवेषु । जै २,१३४ ।
७. यस्यैयस्यै देवतायै जुह्वत्यग्नावेव जुह्वति । जै ३,१७१ ।
८. रथन्तरस्य स्तोत्रा अग्नीन् मन्थन्ति । जै ३,३५६ ।
९. वारुणोऽग्निः । जै २,२३२ ।
१०. वैराजस्य स्तोत्रेऽग्निं मन्थन्ति । जै ३,११८ ।
११. स य एष पुरस्ताज्योतिस् ( आदित्यः ) सोऽग्निः । जै २,४४२ ।
१२. सो ( प्रजापतिः ) ऽग्निमब्रवीदेतान्मे ( पशून् ) वारयस्वेति । तान्स जराबोधीयेन नावारयत । स ( प्रजापतिः ) इन्द्रमब्रवीदेतान्मे वारयस्वेति तान्स सत्रासाहीयेन नावारयत । स ईशानं देवमब्रवीदेतान्मे वारयस्वेति । तान्स मार्गीयवेण नैवावारयत । स विष्णुमब्रवीदेतान्मे वारयस्वेति । तान्स वैष्णवीषु वारवन्तीयेनैवावारयत । जै २,११२ ।
१३. सोऽग्निरात्मन एवाध्येतमग्निष्टुतमतनुत । तेनैनम् ( इन्द्रम् ) अयाजयत् । तस्य सद्यस्सर्वं पाप्मानं निरदहत् । स यथाहिरहित्वच्छ्यै निर्मुच्येत यथा मुञ्जादिषीकां विवृहेदेवमेव सर्वस्मात्पाप्मनो निरमुच्यत । स एषोऽपहतपाप्मा तपत्येष ( सूर्यः ) ह वा इन्द्रः । जै २,१३४ ।

**अग्नि-योनि-** आपोऽग्नियोनयः । जै ३,१५५ ।

**अग्निष्टोम-यज्ञ-** अग्निष्टोमयज्ञा वा आदित्या उक्थ्ययज्ञा अङ्गिरसः । जै २,१२१ ।

**अग्निष्टोम-सामन्-** अथ यदेकविंशमग्निष्टोमसाम भवति, पद्भ्यामेव तेन पाप्मानमपघ्नते । जै २,१३५ ।

**अग्नीध्->आग्नीध्र-** स ( अग्निः ) आग्नीध्रमकरोत् । जै ३,३७४ ।

**अग्नी-षोम-** अग्नीषोमावसुर्यौ । जै २,१५५ ।

आग्नेय-

१. आग्नेयमाज्यं भवति । जै ३,१४० ।

२. आग्नेयमाज्यं भवति राथन्तरम् । जै ३,२०७ ।

अङ्गिरस्-

१. उष्णिहमभ्यक्रन्दत् । ततो ऽङ्गिरसोऽसृजताथर्वमुखान् । जै ३,३८१ ।

२. तद् ये ह वा एत आदित्यस्योदञ्चो रश्मयस्त आदित्या, ये दक्षिणास्ते ऽङ्गिरसः । जै २,३६६ ।

३. द्युत्तरेण वा आदित्या स्वर्गं लोकमायंश्चतुरुत्तरेणाङ्गिरसः । जै २,२९० ।

अजा- आग्नेयी वा अजाग्नेयं हिरण्यम् । जै २,१३८ ।

अञ्जस् ( सामन्-)- त एतत् सामापश्यन् ( देवाः ), तेनास्तुवत । ततो वै तेऽञ्जसा स्वर्गं लोकम् आरोहन् । तद् एवाञ्जसोऽञ्जस्त्वम् । तद्वैवाचक्षते वैरूपमिति । जै ३,२०९ ।

अति-ग्राह्य- यं (अतिग्राह्यं) प्रथमं गृह्णातीममेव तेन लोकमभिजयति, यं द्वितीयमन्तरिक्षं तेन, यं तृतीयममुमेव लोकमभिजयति । तैसं ३,३,६,१ ।

अधि-द्यु- अधिद्युर् नाम लोको यस्मिन् त्रिष्ट, आदित्या गोप्तारो, वरुणोऽधिपतिर्, नीलं रूपं यत् पर्जन्यस्य वर्षिष्यतः कृष्णं तनू नीलं, यद् वा कार्तस्वरस्य मणेर्, अनृते प्रतिष्ठितः । जै ३,३४८ ।

अनृच- अथ यदनृचे देवतासु प्रातःसवनं गायति तेन स्वर्गं लोकमेति । जैउ १,४,२,५ ।

अनृत- उत त्वैनम् ( ब्राह्मणम् ) अमृतस्य (?अनृतस्य) कामो विन्देज्जीवनकाम्या वा, स्त्रीकाम्या वा, नर्मकाम्या वा, सख्यकाम्या वा । रात्र्यां वा हैनं ( ?हैनद्=अनृतम् ) छायायां वा वदेत् । तथा हैनं तन्न दृणीते । स्वे ह्येनद् ( अनृतम् ) आयतने वदति । जै २,२५९ (तु. जै ३, २७०) ।

अन्त-

१. अन्तो नवमम् अहः । जै ३,२४५ ।

२. परिपरीति भवत्यन्तस्य रूपम् । जै ३,६० ।

अन्तरिक्ष-

१. अन्तरेव वा इदमुभयम् (द्यावापृथिवी) अभूदिति । तदन्तरिक्षस्यान्तरिक्षत्वम् । जै २,२४४ ।

२. उक्थ्य इवायम् (अन्तरिक्षम्) । जै २,३१७ ।

३. लेलेव वा अन्तरिक्षम् । जै ३,४५ ।

अन्धीगु->आन्धीगव ( सामन्- )- अन्नं वा आन्धीगवम् । जै २, १९५ ।

अन्न-

१. अन्नं वा ऋषभः । यदा वा अश्नात्य् अथर्षभ्यति । जै ३, १४९ ।

२. अन्नम् (+उ वा [जै २,२५५]) आपः । जै ३,११५ ।

३. अन्नं तद् अमृतम् । जै ३,३७३ ।

४. अन्नं दशास्तोभम् । जै २,३९० ।

५. मध्यतो वा अन्नमशितं धिनोति । जै २,३४९ ।

६. यज्ञ उ देवानामन्नम् । जै १,११६ ।

अन्नाद्य-

१. इलान्देन वै ( साम्ना ) प्रजापतिः प्रजाभ्य इरामन्नाद्यं प्रायच्छत् । जै २,४१२ ।

२. ऊवध्याद्दुर्वास् तन्तिसन्तदूलः श्यामाको लोहितकमित्येतत् क्षुद्रमन्नाद्यमुपजज्ञे । जै २,२६७ ।

३. एकं वावेदमन्नाद्यमक्षिति सामैव । जैउ १,३,१,३ ।

४. तदेतद् ( वाजजित् ) अन्नाद्यस्यावरुद्धिस्साम । जै ३,१५१ ।

५. तद् एतद् यथर्त्वन्नाद्यं पच्यते । जै ३,१ ।

अप्-

१. अप्सु वै वरुण आदित्यवान् । तैआ ५,७,११ ।

२. सर्वाणि भूतानि अप्स्वन्ततः प्रतिष्ठितानि । जै ३,३५६ ।

अप-चिति ( यज्ञ- ) - तेन ( अपचितिना ) हैनं ( दर्भं शातानीकिं ) याजयांचक्रतुः । स हैषु ( पाञ्चालेषु ) तथामात्रमपचितिं जगाम । जै २,१०० ।

अपाष्ठि-ह- ( इन्द्रस्य ) यदुपपक्षाभ्यां ( सोमो राजा श्याय ) तावपाष्ठिहौ (अभवताम् ) । तस्मादेते वयसां वीर्यवत्तराः । इन्द्रो ह्येतेषामाजानम् । जै २,१५७ ।

अप्तोर्याम ( यज्ञ- )-

१. यदाप्त्वात्मन्ययच्छत्तस्मादप्तोर्यामः । जै २,११० ।

२. यद्वेवाप्तश इव सोमस्य प्रभावयन् नन्वेतस्मादप्तोर्यामः । जै २,११० ।

अभि-जित्-

१. अयं वै (पृथिवी-) लोकोऽभिजित् ॥ जै २,३००

२. तद् यदिमान् लोकान् ( देवाः ) अभ्यजयंस्तदभिजितोऽभिजित्त्वम् । जै २,१७८ ।

अभि-प्लव- ( देवाः ) यदभ्यप्लवन्त तद् अभिप्लवस्याऽभिप्लवत्वम् । जै २,४४२ ।

अभि-भू (यज्ञ-)- यदभ्यभवंस्तदभिभुवोऽभिभूत्वम् । जै २,१०४ ।

अभीक->आभीक- तद् वा आभीकम् इति कवत् प्राजापत्यं सामाह्वो रूपेण समृद्धम् । जै ३,२८४ ।

अभी-वर्त-

१. अभीवर्तेन वै देवा इमान् लोकानभ्यवर्तन्त । यदभ्यवर्तन्त तदभीवर्तस्याभीवर्तत्वम् । जै २, ३८० ।

२. ते देवा अकामयन्ताभीमान् असुरान् भवेमेति । त एतम् अभीवर्तम् अपश्यन् । तेनासुरान् अभ्यवर्तन्त । यदभ्यवर्तन्त तद् अभीवर्तस्याभीवर्तत्वम् । जै ३,२९४ ।

अभीशु->आभीशव ( सामन्- )- ते ( देवाः ) ऽब्रुवन् स्वर्गं लोकं गत्वा अभीशू वाव न इमे सामनी यज्ञस्याभूतामिति । तदेवाभीशवयोराभीशवत्वम् । त एते स्वर्ग्ये सामनी । जै ३,६८ ।

अ-भ्रातृव्य- इमं देवा असपत्न९सुवध्वमितीमं देवा अभ्रातृव्य९सुवध्वमित्येवैतदाह । माश ५,४,२,३ ।

**अ-मांसाशिन्-**

१. अमा ऽ साश्यनुब्रूते तपस्व्यनुब्रवाऽइति। माश १४,१,१,२९ ।

२. तस्माद् व् अमांसाशी प्रायु नाश्नीयात् । जै ३,२३६ ।

**अमात्** षडहो वा अमात् । जै ३,१७४ ।

**अ-यक्ष्म-** अयक्ष्मं च मेऽनामयच्च मे । तैसं ४,७,३,२ ।

**अ-यज्ञ-** अयज्ञो वा एषः । योऽपत्नीकः । तै २,२,२,६ ।

**अ-रिष्ट-** अरिष्टेनारिष्टतामगमयन् । जै २,२५६ ।

**अवका-** अवकास्वधि मन्थन्त्यनतिदाहाय । जै ३,७० ।

**अ-व्यथा-** अनार्त्यै त्वेत्येवैतदाह यदाहाव्यथायै त्वेति । माश ५,४,३,७ ।

**अश्व-**

१. अथो आहुराश्वेन वै देवा अश्वा भूत्वा स्वर्गं लोकमायन्निति । जै ३,१४ ।

२. तस्माद् अश्वोऽध्वानं धावन् समश्नुते । समय्य् एकं पदं भवति । तस्माद् अश्व एकैकं पादमुदंकन् तिष्ठति । जै २,२७२ ।

**अश्व्य-** एवा हीन्द्रा इत्यश्व्याः पशवः । जै ३,१०९ ।

**आश्व ( सामन्- )-**

१. ( प्रजापतिः ) ता ( प्रजाः ) आश्वेनाश्वो भूत्वासृजत । यदाश्वेनाश्वो भूत्वासृजत तदाश्वस्याश्वत्वम् । जै ३,१४ ।

२. स एते सामनी अपश्यत् । ताभ्याम् एनद् यथा शंकुभ्यां चर्म विहन्यात् । एवमेवाभ्यामेतदहर् व्यहन् । आश्वेन ( साम्ना ) पुरस्ताद्, आक्षारेण ( साम्ना ) उपरिष्टात् ।…… ऽह्न एव धृत्यै । जै ३,१६ ।

**अष्टका-** द्वादशाष्टकाः ( संवत्सरस्य ) । जै २,४३७ ।

**अष्ट-रात्र-** ( प्रजापतिः ) यदस्माल्लोकादमुं लोकमाष्ट, तदष्टरात्राणामष्टरात्रत्वम् । जै २,३११ ।

**असित-मुख-** अक्षरपंक्तिमभ्यक्रन्दत् । ततोऽसुरान् असृजतासितमुखान् । जै ३,३८१ ।

**असुर-** औध्वंसद्मनेन वै देवा असुरान् एभ्यो लोकेभ्यो नुत्वा स्व आयतने सत्रमासत । जै ३,११ ।

**अ-स्वाहाकृत-** अहुतमिवैतद्यदस्वाहाकृतम् । माश ४,५,२,१७ ।

**अहन्-**

१. अथ यदादित्योऽहर् इत्येष ह्येवाहः । जै ३,३७५ ।

२. असौ वा आदित्योऽहः । जै ३,३२० ।

३. ते देवा अब्रुवन् न हार्षीद् वा अयमिति । तदहरभवत् । जै ३,३५७ ।

४. यदहम् इति तान्य् अहान्य् अभवन् । जै ३,३८० ।

**अहोरात्र-** अहोरात्रे वै प्रहितौ प्रहिते इव ह्येते चरतः । जै २,३८५ ।

**आक्षार-** आश्व- (परि.) द्र. ।

**आजीक-** तद् यद् अत्राजीकं भवत्य् उज्जित्या एव । उज्जयति य एवं वेद । तद् वा आजीकम् इति कवत् प्राजापत्यं सामाह्नो रूपेण समृद्धम् । जै ३,२८३ ।

आत्मन्-

१. यन् मध्यममहः स आत्मा। जै २,२४६।

२. शिरश्चात्मा ( मध्यदेहः ) च संहितौ। जै २,४१५।

आदित्य-

१. अथ यदादित्यो दशेत्येष ह्येवासु दशसु दिक्षु तपति। जै ३,३७५।

२. असौ वा आदित्योऽनन्तः। जै २,२३४।

३. आदित्याः पश्चात्। जै २,१४२।

४. एतमादित्या आदित्यमेवाश्वं श्वेतं भूतमश्वाभिधान्यभिहितमानयन्। जै २,११६।

५. एतस्य ( आदित्यस्य ) वा एते लोकतां गच्छन्त्येतमभ्यारोहन्ति। तदाहुः—श्रेयांसं वा एतेऽभ्यारोहन्ति य एतमादित्यमिति। जै २,३४३।

६. तमाददानमादितादितेति वाचोऽवदन्। तद् आदित्यस्यादित्यत्वम्। जै ३,३५६।

७. ते हैत आदित्याश्चाङ्गिरसश्च सलोकाः। जै २,१२०।

८. ये ह वा एत आदित्यस्य रश्मय एतानि ह वा एतस्य शृङ्गाणि। जै २,१४५।

९. ( आदित्यस्य ) रश्मयः क्रीडयः। मै १,१०,१६।

१०. स वशमेव दिव आदत्त, क्षत्रं नक्षत्राणाम्, आत्मानमन्तरिक्षस्य, रूपं वायोर्, आशां मनुष्याणां, चक्षुः पशूनाम्, उर्जमपां, रसमोषधीनां, चरथं वनस्पतीनां, शिभं वयसाम्, अर्चिमग्नेर्, हृदयं पृथिव्यै, गन्धं हिरण्यस्य, स्तनयित्नुं वाचस्, संगमं पितॄणां, भां चन्द्रमसः। तद् यद् एतेषां भूतानाम् आदत्त तद् आदित्यस्यादित्यत्वम्। जै ३,३५८।

आयुस्- यदायुषैवायुवत तदायुष आयुष्ट्वम्। जै २,४४२।

आशु ( सामन्- )- देवासुरा अस्पर्धन्त। ते देवा भृगुम् उपाधावन्, जयामासुरान् इति। स एतत् भृगुस् सामापश्यत्। तेनास्तुत। ततो वै देवा असुरान् अजयन्। ते ( देवाः ) ऽब्रुवन् आशु वावेदं भृगोर् अभूद् इति। तद् व् एवाशोर् आशुत्वम्। ...... तद्धेवाचक्षत आशु भार्गवमिति। जै ३, २११।

इन्द्र-

१. अथो हास्य ( इन्द्रस्य ) अग्निरेव सखितम इवास देवेषु। जै २,१३४।

२. इन्द्रो वै देवानामयातयामा। जै २,३२५।

३. तैर् ( त्वाष्ट्रीसामभिः ) इन्द्रमजनयन्। जै ३,१९।

४. पुरो इन्द्राय देवा श्रैष्ठ्याय नातिष्ठन्त। स प्रजापतिमुपाधावत्, प्र म इमा यच्छेति। तस्मा एते द्वे प्रायच्छत्, पौर्णमासीं चामावास्यां च। अस्मिन्नेवाष्टकामधत्त। जै ३,३।

इन्द्र-स्तोम ( यज्ञ )- स ( इन्द्रः ) एतं (इन्द्रस्तोमं) यज्ञमपश्यत्। तमाहरत्। तेनायजत। ततो वै स सर्वेषां देवानां श्रेष्ठतामगच्छत्। जै २,१३९।

इन्द्राग्नी- इन्द्राग्नी एवातः पराचीनमार्त्विज्यं कुरुतः। जै ३,१४२।

ऐन्द्र ( सामन्- )- यदैन्द्रं तत् त्रिष्टुभो रूपम्। जै ३,२०६।

ऐन्द्री- ऐन्द्रीं वाचं बृहतीं विश्वरूपाम्......। जै २,४१८।

**इळा**- भेषजं ह खलु वै तिस्र इळाः। एतद्ध वै शिवं शान्तं वाचो यत् तिस्र इळाः। जै ३,१३४।

**इलान्द** ( सामन्- )- इलान्देन वै प्रजापतिः प्रजाभ्य इराम् अन्नाद्यं प्रायच्छत्। जै २,४१२।

**इषोवृधीय** ( सामन्- )- ता ( प्रजाः ) अस्येषा समक्ता अवर्धन्त। तदेवेषोवृधीयस्येषोवृधीयत्वम्। जै ३,१४८।

**उक्थ्य**- स एष एवोक्थ्यम्। एष हीदं सर्वमुत्थापयतीव। तस्मादेष एवोक्थम्। जै ३,३७९।

**उक्ष्णोरन्ध्र->औक्ष्णोरन्ध्र** (सामन्-)- उक्ष्णोरन्ध्रः काव्योऽपश्यत्तस्मादौक्ष्णोरन्ध्रमित्याख्यायते। जै ३,१५०।

**उत्तर-वेदि**- एतदेनां ( उत्तरवेदिं ) तत्पूर्वामग्नेराहुतिरश्नुते। जै २,११६।

**उदयन**- आदित्य उदयनम्। जै ३,३०९।

**उदल->औदल**- अथौदलम् ( साम ) उदलो वै दैवरातोऽकामयताग्रो मुख्यो ब्रह्मवर्चसी स्याम् इति। स एतत् सामापश्यत्। तेनास्तुत ततो वै सोऽग्र्यो मुख्यो ब्रह्मवर्चस्य् अभवत् जै ३,२२८।

**उदीची**- उदीचीमावृत्य दोग्धि मनुष्यलोकमेव तेन जयति। तै २,१,८,१; ३,२,१,३।

**उद्गीथ**- स यद् उद् इत्येतेन हीदं सर्वं उत्तब्धम्। अथ यद् गीत्येष हीदं सर्वं गिरति। अथ यत् थ इत्य् अन्नमेवास्यैतत्। तस्माद् एष एवोद्गीथः। जै ३,३७९।

**उद्वत्**- यद् ( देवाः ) ऊर्ध्वा स्वर्गं लोकमुदक्रामंस्तदुद्वत उद्वत्त्वम्। जै ३,१६४।

**उपोदक**- उपोदको नाम लोकोऽन्ने विष्टो, मनुष्या गोसारो अग्निर् अधिपतिर् यद् अर्चिषो रूपं, तद् रूपम्, अप्सु प्रतिष्ठितः। जै ३,४४८।

**ऊम**- ऋतवो वा ऊमाः। जै २,१४४।

**ऊवध्य**- ऊवध्यादुर्वारु तन्तिसन्तदूलः श्यामाको लोहितकमित्येतत्क्षुद्रमन्नाद्यमुपजज्ञे। जै २,२६७।

**ऋत्विज्**- एता उ ह वै यजमानस्य विशो यदृत्विजः। जै २,१४८।

**कुलाय** ( क्रतु- )- इन्द्राग्न्योः कुलायः। जै २,१२२।

**गो-सव** ( एकाह-यज्ञविशेष- )- तस्य ( गोसवस्य ) व्रतम्। ······अनुडुहो ह लोकं जयति।··· स हैष स्थविरयज्ञ एव। तेन हैतेनोत्तरवयस्ये यजेत। जै २,११३।

**दिश्**- दिशो वै श्रोत्रम्। जै २,५४।

**दुर्ग**- अहं दुर्गादाहर्तेति सो ( विष्णुरिन्द्रम् ) ऽब्रवीत्। तैसं ६,२,४,२-३।

**दृति**- उन्नम्भय पृथिवीं भिन्द्धीदं दिव्यं नभः। उद्नो दिव्यस्य नो देहीशानो विसृजा दृतिम्। तैसं २,४,८,२।

**देव**-

१. ओ श्रावयेति ते देवाः पुरोवात॒ससृजिरे, ऽस्तु श्रौषडित्यभ्राणि समप्लावयन्, यजेति विद्युतं, ये यजामहे इति स्तनयित्नुं, वषट्कारेणैव प्रावर्षयन्। माश १,५,२,१८।

२. त ( देवाः ) एतामार्द्रां पङ्क्तिमपश्यन्नाश्रावयेति पुरोवातमजनयन्नस्तु श्रौषडित्यभ्र॒ सम-

प्लावयन्। यजेति विद्युतमजनयन् ये यजामह इति प्रावर्षयन्नभ्यस्तनयन् वषट्कारेण···
एष वै छन्दस्यः प्रजापतिः। तैसं १,६,११,३-४।

३. देवा वसव्या देवाश्शर्मण्या देवास्सपीतय इत्येता वै देवता वर्षस्येशते। काठ ११,१०।

४. सर्वेषां वै देवानां प्रातरनुवाकः। मै ४,५,३।

देव-विशा-

१. देवविशा वै मरुतः। मै ३,७,१।

२. देवविशा ( आदित्याः ) मनुष्यविशाया ईशे। काठ ११,६।

द्वादशाह- स एष वाव द्वादशाहो य एष ( सूर्यः ) तपत्येष इन्द्रः, एष प्रजापतिर्, एष एवेदं सर्वमित्युपासितव्यम्। जै ३,३८६।

नव-रात्र- बहु वा एतस्मिन्नवरात्रेण किंच किंच वारणं क्रियते शान्त्या एव। ऐ ५,२१।

पर्जन्य-

१. तौ ( अनड्वाहौ ) यदि कृष्णौ स्यातामन्यतरो वा कृष्णस्तत्र विद्याद्वर्षिष्यत्यैषमः पर्जन्यो वृष्टिमान्भविष्यतीत्येतदु विज्ञानम्। माश ३,३,४,११।

२. बृहतः स्तोत्रे दुन्दुभीनुद्वादयन्ति वर्षुकः पर्जन्यो भवति। जै १,१४३।

पुरुष-

१. पुरुषो ( स्वीयेन ) मा ९ सेन प्रतितिष्ठत्यस्थ्ना पशवः। काठ २८,१।

२. पुरुषो वै प्रजापतेर्नेदिष्ठम्। माश २,५,१,१।

प्राण- यदा वै प्राणस्तिर्यङ् भवत्यथ प्रमीयते। क ३५.७।

ब्रह्मन्- अथ ब्रह्म वदन्ति। परिमिता वा ऋचः, परिमितानि सामानि, परिमितानि यजू९ष्यथै-तस्यैवान्तो नास्ति यद् ब्रह्म। तैसं ७,३,१,४।

मित्रा-वरुण- एतौ ( मित्रावरुणौ ) वर्षस्येशाते। काठ ११,१०।

मोघ-हासिन्- न मोघहासिना भव्यम्। काठ २५,६; क ३९,४।

यज्ञ- एते वै यज्ञा वागन्ता ये यज्ञायज्ञीयान्ताः। तां ८,६,१३।

रशना- तस्मात् स्त्रियः पुंसोऽतिरिच्यन्तेऽथ द्वे एकस्य रशने द्वे एकस्य तस्मात्स्त्रियं जातां परास्यन्ति न पुमांसम्। मै ४,७,९।

शरद्- शरद्वै रुद्रस्य योनिः, स्वसाम्बिका, एतां वैषोऽन्वभ्यवचरति तस्माच्छरदि भूयिष्ठं हन्ति। मै १,१०,२०।

शुक्र- ······यत् ते शुक्र! शुक्रं धाम, शुक्रा तनूश्शुक्रं ज्योतिरजस्रं यत्तेऽनाधृष्टं नामानाधृष्यं, तेन त्वादधे, वर्चो मे यच्छ। काठ ७,१४।

साम-गा- पुनरादायं वै सामगाः स्तुवते। कौ १८,९।

# शोध-पत्रम्

| पृष्ठे | पङ्क्तौ | एतत् | > | एवम् |
|---|---|---|---|---|
| ९ | १२ | °ह्व्ह्वा° | | °ह्वा° |
| १७ | १६ | °वाग्मिन् | | °वास्मिन् |
| २१ | २६ | रुद्रोः | | रुद्रो |
| २४ | ३१ | तिम° | | तिग्म° |
| ३९ | १७ | अग्नि-रेतस् | | अग्निरेतस् |
| ६४ | १४ | अब्रव° | | अब्रुव° |
| ८२ | १८ | ऽधा° | | ऽदधा° |
| ८५ | २१ | गाहर्पत्यः | | गार्हपत्यः |
| ११३ | ९ | वरुणाय | | वरुणस्य |
| ११७ | १३ | १, | | २, |
| १२७ | २९ | वित्तः | | वियत्तः |
| १४८ | ३ | परै° | | परे° |
| १५६ | ८ | ह्रुर्व° | | ह्रूर्व° |
| १८९ | २२ | ६१ : २ | | ६१ : १० |
| २०८ | २६ | च नामीयते | | चनामीयत |
| ,, | २७-३१ | ३८९-३९३ | | २८९–२९३ |
| २०९ | १ | २,२० | | जै २,२० |
| २३७ | ३१ | उगाता | | उद्गाता |
| २६० | १६ | उपश्लेषगा | | उपाश्लेषगा |
| २६१ | १६ | सार्द्धिः | | सर्द्धिः |
| २६५ | २८ | अनुचान- | | अनूचान- |
| ३०७ | १२ | गात्रस्य | | गायत्रस्य |
| ४०९ | २३ | दुश्चातादू | | दुश्चरितादू |
| ५०३ | ३१ | १७ | | १०७ |
| ५३५ | १८ | २,१०३ | | २,११३ |
| ५४३ | २९ | २,२ | | २,३ |
| ५५० | ३१ | दभर्मुष्टिः | | दर्भमुष्टिः |
| ५६८ | ३४ | प्राणे | | प्राणो |
| ६०८ | २९ | ३,१,२ | | ३,१,६ |
| ६१३ | ३४ | नार्मैष | | नामैष |
| ६८७ | १३ | अश्वमध | | अश्वमेध |
| ७४३ | २७ | शाकु° | | शाकु° |
| ७५० | ३४ | सप्तदशान | | सप्तदशेन |
| ७९२ | ७-९ | १;२;३; | | २;३;४; |
| ८१७ | १-२ | ५६. ५७. | | ४२. ४३. |
| ८२७ | १९ | °श्रेह्° | | °श्रेतह्° |

भान्त- वज्रो वै भान्तो वज्रः पञ्चदशो ऽथो चन्द्रमा वै भान्तः पञ्चदशः स च पञ्चदशाहान्यापूर्यते पञ्चदशापक्षीयते तद्यत्तमाह भान्त इति । माश ८,४,१,१० ॥ [°न्त- ओजस्- १४ द्र.]।

भाम- मन्युश्च मे भामश्च मे ( यज्ञेन कल्पेताम् )। तैसं ४,७,२,१ ।

भार-

१. राष्ट्रं वै भारः । तै ३,९,७,१ ।

२. श्रीर्वै राष्ट्रस्य भारः । माश १३,२,९,३ ।

भारत-, भारती-, भारती-वत्- भरत- द्र. ।

भार्गव- प्रवद्भार्गवं भवति । प्रवता (साम्ना) वै देवाः स्वर्गं लोकं प्रायन्नुद्वतोदायन् । तां १४, ३,२३; २४ ।

भास्-

१. यद् वैकङ्कताः परिधयो भवन्ति । भा एवावरुन्धे । तैआ ५,४,९ ।

२. यद् वैकङ्कती (अग्निर्भवति) । भा एवावरुन्धे । तैआ ५,२,५ ।

३. वैकङ्कतीमादधाति, भा एवावरुन्धे । तैसं ५,१,९,६; ४,७,४ ।

४. श्रीर्वै भाः । जैउ १,१,४,१ ॥ [भास्- अन्तरिक्ष- १२०; आदित्य- ६७ द्र.] ।

भास ( सामन्-)-

१. भासं भवति भाति तुष्टुवानः । तां १४,११,१२ ।

२. स्वर्भानुर्वा आसुर आदित्यं तमसाविध्यत् स न व्यरोचत तस्यात्रिर्भासेन तमोऽपाहन् स व्यरोचत यद्वै तद्भा अभवत्तद्भासस्य भासत्वम् । तां १४,११,१४ ।

भिद्- पृथिवी- १५६ द्र. ।

भिषज्- अपूतो ह्येषोऽमेध्यो यो भिषक् । तैसं ६,४,९,२ ॥ [°षज्- प्रतिहर्तृ- १ द्र. ]।

भिषज्या- अश्विन्- २७ द्र. ।

भीमा- इन्द्र- २०९ द्र. ।

भुज्- प्राण- १३२ द्र. ।

भुजिष्या- अन्न- ९३ द्र. ।

भुज्यु- यज्ञो वै भुज्युर्यज्ञो हि सर्वाणि भूतानि भुनक्ति । माश ९,४,१,११ ॥ [°ज्यु-२दक्षिणा-१८ द्र.]।

भुरण्यु-

१. भुरण्युमिति भर्तारमित्येतत् । माश ७,५,२,१९ ।

२. भुरण्युरिति भर्तेत्येतत् । माश ८,६,३,२० ।

भुरिज्- भरणाद् भुरिगुच्यते । दै ३,२१ ।

भुव->भुवपति- अग्नि- ४२७ द्र. ।

भुवन-

१. इमे वै लोका भुवनं तेषामेषोऽधिपतिर्यो रुद्र इति । काठसंक १४१ : ५ ।

२. यज्ञो वै भुवनम् । तै ३,३,७,५ ।

३. यज्ञो वै भुवनस्य नाभिः । तै ३,९,५,५ ।

४. स (प्रजापतिः) उ वाव भुवनस्य गोपाः । जै ३,१,२,११ ।

भुवन-पति-

१. चत्वारो वै देवाना९ होतार आसन् । भूपतिर्भुवनपतिर्भूतानां पतिर्भूतः । काठ २५,७; क ३९,५ ।

२. भुवनपतये स्वाहेति दक्षिणा । काठ २५, ७ ॥ [°ति- अग्नि- ४२७; अन्तरिक्ष- ६६ द्र. ] ।

भुवस् (>र्, :)

१. भुव इति प्रजाम् (प्रजापतिरजनयत) । माश २,१,४,१२ ।

२. भुव इति यजुर्वेदात् ( उदैत् ) । जै १, ३५७ (तु. ऐआ १, ३, २ ) ।

३. भुव इति वायुः सामानि । तैआ ७,५,२; तैउ १,५,२ ।

४. भुव इति व्याहृतिः । तदिदमन्तरिक्षं वायुर्देवता जगती छन्दस् सप्तदश स्तोमो वामदेव्यं साम रुद्रा देवतापश्च प्राणभृच्च । जै ३, ८७ ।

५. भुवर् इति यजूंषि (अधीते) । काठसंक ४७ : ५.

६. भुवस् त्वमसीत्येताम् (अन्तरिक्षं प्रजापतिरब्रवीत्) । जै ३, १०६ ॥ [°वस् अग्नि- २१५; अन्तरिक्ष- १२५; १६६; अन्तरिक्ष-लोक- १२; अपान- ४; आग्नीध्र- १; क्षत्र- ८०; दर्शपूर्णमास- १ द्र. ] ।

भुवस्पति- प्रच्यवस्व भुवस्पत ऽ इति भुवनाना९ह्येष (सोमः) पतिः । माश ३, ३, ४, १४ ।

भूत-

१. त्रयस्त्रि९शता ऽस्तुवत भूतान्यशाम्यन्, प्रजापतिः परमेष्ठ्यधिपतिरासीत् । तैसं ४, ३,१०, ३; मै २, ८, ६ ।

२. देवा वै ( ह्येव [मै.]) भूताः । मै ३, ८, ५; काठ २५, ६; क ३९, ४ ।

३. पञ्चभिरस्तुवत, भूतान्यसृज्यन्त, भूतानां पतिरधिपतिरासीत् । तैसं ४,३,१०,१; मै २,८,६ ।

४. प्रजापतिर्विराजमपश्यत्तया भूतं च भव्यं चासृजत । तैसं ३, ३, ५, २ ।

५. भूतं वाव रथन्तरम् । तैसं ३, १, ७, २-३ ।

६. भूत९ह प्रस्तोतैषाम् ( विश्वसृजाम् ) आसीत् । तै ३, १२, ९, ३ ।

७. भूतं च मे भविष्यच्च ( भूतिश्च [तैसं ४, ७,५,२] ) मे ( यज्ञेन कल्पेताम् ) । तैसं ४, ७,२, २;५,२ ।

८. भूतानां पतये स्वाहेति प्रत्यक् । काठ २५, ७ ।

९. भूतानां पतिर्गृहपतिरासीदुषाः पत्नी । माश ६, १, ३, ७ ।

१०. भूतेभ्यस्त्वेति स्रुचमुद्गृह्णाति, य एव देवा भूतास्तेषां तद् भागधेयं तानेव तेन प्रीणाति । तैसं ६, २, ८, ३ ।

११. भूतो वै प्रजापतिः । क ४८, १५ ।

१२. यज्ज्योतिषि प्रवृणक्ति भूतं तेनावरुन्द्धे । क ३०, ८ ।

१३. रक्षांसि वै भूतं संसचन्ते । भूत एवैष देवानां यो ऽग्निमाधत्ते । काठसंक १२ : ९-१० ।

१४. यः स भूतानां पतिः संवत्सरः सः । माश ६,१,३,८ ।

१५. स एनं (इन्द्रम्) वज्रो (शक्करीरूपः) भूत्या ऐन्ध, सो (इन्द्रः) ऽभवत्, सोऽबिभेद् भूतः (वज्रः) प्र मा धक्ष्यतीति। तैसं २, २, ८, ६॥ [°त- अग्नि- १४०; ४२७; ऊम- २; दिव्- २४; पृथिवी- ४७; प्रजा- ५४; प्रजापति- ११९;१५०; भवत्-; भविष्यत्- २; भव्य- द्र.]।

भूत-यज्ञ- यद् भूतेभ्यो बलिं हरति, तद् भूतयज्ञः सन्तिष्ठते। तैआ २,१०,४।

भूत-वत्- तेषां (देवानाम्) या एव घोरतमास्तन्व आसंस्ता एकधा समभरंस्ताः संभृता एष देवो (रुद्रः) ऽभवत्तदस्यैतद्भूतवन्नाम भवति वै स यो ऽस्यैतदेवं नाम वेद। ऐ ३,३३।

भूतेछद्-

१. इमे वै लोका भूतेछदः। गो २,६,१४।

२. तद्यदेतान् (असुरान्) इमे देवाः सर्वेभ्योऽछादयंस्तस्माद् भूतेछदस्तद् भूतेछदां भूतेछदत्वम् (?°छत्त्वम्)। गो २,६,१४।

३. तेषां वै देवा असुराणां भूतेछद्भिरेव भूतं छादयित्वाऽथैनानत्यायन्। ऐ ६,३६।

भूति-

१. त (आदित्याः) एवैनं (यजमानम्) भूतिं गमयन्ति, भवत्येव। तैसं २,३,१,१।

२. भूत्यै न प्रमदितव्यम्। तैआ ७,११,१; तैउ १,११,१।

३. योऽयम् (अग्निः) इदानीं स भूतिः। मै ३, ८, ६।

४. स (अग्निर्जातवेदाः) एवैनं (यजमानम्) भूतिं गमयति, भवत्येव। तैसं २,२,३,३।

५. स एष प्राणः स एष भूतिश्चाभूतिश्च। तं भूतिरिति देवा उपासाञ्चक्रिरे, ते बभूवुः ऐआ २, १, ८।

६. स यद् भूरिति निधनं करोति··· ···एनत् तद् भूतिमेव गमयति। जै १,१०१। [°ति- घृत- २६; दिश्- ३९; पयस्- १३; प्राण- ८९ भूत- ७ द्र.]।

भूति-काम- वायव्यं श्वेतमालभेत भूतिकामः। तैसं २, १, १, १॥ [°म- आदित्य- १४४; ऐन्द्री- २ द्र.]।

भूपति- पृथिवी- १८; प्राञ्च्- ७; भुवनपति- १ द्र.।

भूमन्-

१. पुष्टिर्वै भूमा। तै ३,९,८,३।

२. भूमा वै प्रजापतिः सप्तदश स्तोमानाम्। जै २,२१८।

३. भूमा वै सहस्रम्। माश ३, ३, ३, ८।

४. भूमा सूक्तम्। जै ३, २४१।

५. महेन्द्रस्याऽहं देवयज्यया जेहमानं भूमानं गमेयम्। काठ ५,१।

६. श्रीर्वै भूमा। माश ३,१,१,१२॥ [°मन्- अजावि- १; पशु- २४९ द्र.]।

भूमि-

१. अभूद् (+अभूदिव [तां.]) वा इदमिति। तद् भूमेर् (भूम्यै [तै.]) भूमित्वम्। जै २, २४४; तां २०,१४,२; तै १,१,३,७।

२. अभूद्वाऽइयं प्रतिष्ठेति । तद् भूमिरभवत् । माश ६,१,१,१५;३,७ ।

३. कर्णिनी वै भूमिरिति । जै १,१२६ ।

४. जाया भूमिः पतिर्व्योम । मिथुनं ता अतुर्यथाः । पुत्रो बृहस्पती रुद्रः । सरमा इति स्त्री-पुमम् । तैआ १,१०,१ ।

५. पद्भ्यां (पुरुषस्य) भूमिः (समवर्तत) । काठसंक १०१ : ९; तैआ ३,१२,६ ।

६. भूमिर् भूत्वा (प्रजापतिः) भूतं भव्यमभवन् । जै १,३१४ ।

७. मनोरश्वाऽसि भूरिपुत्रा (हे भूमे त्वं)। तैआ ४,५,४ ।

८. यदभवत्तद् भूमिः । काठ ८, २ ।

९. वसवः पितरो भूम्यधिपतयः । काठसंक १४१ : १४ ।

१०. स भूरिति व्याहरत् । स भूमिमसृजत । अग्निहोत्रं दर्शपूर्णमासौ यजूꣳषि । तै २,२,४,२ ।

११. सहस्रवृदियं भूमिः । परं व्योम सहस्रवृत् । तैआ १, १०,१ ॥ [°मि - अन्तरिक्ष- १२७; आखु- ३; निर्ऋति- १८; २२; पृथिवी- ५१; १५७ द्र.] ।

भूमि-दुन्दुभि- भूमिदुन्दुभिमाघ्नन्ति, यैवेमां (पृथिवीम्) वाक् प्रविष्टा तामेवावरुन्धते । अथो इमाम (पृथिवीम्) एव जयन्ति । तैसं ७, ५, ९,३ ।

भौम- भौममेककपालम् (पुरोडाशं निर्वपेत्) । काठ ११,२ ॥ [°म- वृष्ण- ६ द्र.] ।

भौमी- श्वाविद् भौमी । मै ३,१४,१४ ।

भूयस्- बहु- २ द्र. ।

भूयसी- विड् वै भूयसी । मै ४,२,६ ।

भूयोहविष्करण- पशवो भूयोहविष्करणम् । तैसं २,६,७,६ ।

भूर्

१. प्रजापतिर्यदग्रे व्याहरत् स भूरित्येव व्याहरत् । स इमाम् (पृथिवीम्) असृजत जै १,१०१ ।

२. भूरिति वा ऋचः (अधीते)। काठसंक ४७: ५; तैआ ७,५,२; तैउ १,५,२ ।

३. भूरिति वै प्रजापतिः । आत्मानमजनयत । माश २,१,४,१३ ।

४. भूरिति व्याहरेद् भूतो वै प्रजापतिर्भूतिमेवोपैति । काठ ३५,१७ ।

५. भूरिति व्याहृतिः । तदयं (पृथिवी-) लोकोऽग्निर्देवता गायत्री छन्दस्त्रिवृत् स्तोमो, रथन्तरं साम, वसवो देवता, वनस्पतयश्चौषधयश्च । जै ३, ८७ । ॥ [भूर् अग्नि- ५९८; ऋग्वेद-५; ७; ऋच्- ३९; गार्हपत्य- २५; पृथिवी- ९६; १५७-१६०; प्रजापति- २९४; प्राण-२३५; प्राणपा-; भूति- ६; ब्रह्मन्- ११८; भूमि- ९ द्र.] ।

भूर्भुवःस्वर्

१. एता वै व्याहृतयः सर्वप्रायश्चित्तयः । जैउ ३,४,३,३ ।

२. भूर्भुवस्स्वरिति सा त्रयी विद्या । जैउ २,३,३,७ ।

भूर्ज- भूर्जो वै नामैष वृक्षः, कार्या एतस्य स्रुचः । मै १,१०,१२ ।